* श्रीकृष्णचैतन्यः शरणम् *

सवृत्तिकं

# श्रीश्रीहरिनामामृत-व्याकरणम्

## द्वितीय-खण्डम्

'अमृता' 'बालतोषणी' 'तद्धितोद्दीपनी'
टीकात्रयोपेतम्
कारकादितद्धितान्तम्

श्रीमन्माध्वगौड़ीय वैष्णव सम्प्रदायाचार्य वर्येण वेद-षड्दर्शनेतिहास-पुराण-
शब्दानुशासन-ज्योतिष-काव्यालङ्कार-सङ्गीत-छन्दः-शास्त्रादि-
पारावारपारीणेन महामहोपाध्यायाध्यापकनिकरैः
परमबृहत्तमसिद्धसङ्घैश्च निषेवितपदपङ्कजेन
वैष्णवसिद्धान्त राज्यरक्षणैक सेनापतिना
श्रीश्रील-सनातन-रूपानुगवरेण
परमहंसकुल मुकुट मणिना

**श्रीश्रील-श्रीजीवगोस्वामि-चरणेन**

विरचितम्



*प्रकाशक*
डालमिया जैन ट्रस्ट
नई दिल्ली



*प्रकाशन तिथि*
दीपमालिका, संवत् २०३१



*मूल्य*
प्रथम-खण्ड : ८) रु०
द्वितीय-खण्ड : १२) रु०
दोनों खण्ड एकसाथ : २०) रु०



*प्रथम संस्करण*
ग्यारह सौ प्रति




*मुद्रक*
हरीनाथ सारस्वत
श्री प्रेम हरी प्रेस, वृन्दावन ।

# शुद्धिपत्रम् (उत्तरार्द्धस्य)

| पृ० | प० | अशुद्धः | शुद्धः |
|---|---|---|---|
| ४६० | २-४ | वहु | बहु |
| ४६३ | २ | वहुचचनं | बहुवचनं |
| ४६७ | २ | मन्जाः | मञ्चाः |
| ४६८ | ४ | तद् रूपस्यार्थाक्रये | तद् रूपस्यार्थाधिक्रये |
| ४७८ | ६ | शतृ प्रत्ययनोक्तौ | शतृप्रत्ययेनोक्तौ |
| ४८० | २ | हरणं मेव | हरणमेव |
| ४८१ | ८ | ययं | यूयं |
| ५१० | १८ | णितर | पितर |
| ५१४ | ३ | थथा | यथा |
| ५२० | ४ | इत्यत्र इत्यत्र | इत्यत्र |
| ५२५ | २ | मानच्च | मानाच्च |
| ५२५ | ६ | मन्थे | मन्ये |
| ५७२ | २ | द्व | द्र |
| ५८० | २ | तत्रार्थे | तादर्थ्ये |
| ५८० | ३ | व | ब |
| ५८५ | ७ | न् | त |
| ६०७ | ४ | द्वत्यहे | द्वयहे |
| ६४८ | ५ | निषधः | निषेधः |
| ६५६ | ६ | वरनत्वे | करणत्वे |
| ६६८ | ८ | प्रत्यङ | प्रत्याङ् |
| ७०४ | ५ | अम्य | अभ्य |
| ७०८ | ६ | पृ | पॄ |
| ७१८ | ७ | वेण्य | वेण्व |
| ७३१ | ६ | तृति | तृषि |
| ७४६ | ४ | भरा | महा |
| ७४८ | ५ | जु | डु |
| ७५८ | २ | पाश्वँन | पार्श्वेन |
| ७६० | ५ | मुङ्क्त | भुङ्क्ते |
| ८४१ | ६ | जातो | जातौ |
| ८४५ | ३ | राजपुध्वा | राजयुद्वा |
| ८४७ | २ | उरजिजं | सरसिजं |

| पृ० | प० | अशुद्धः | शुद्धः |
|---|---|---|---|
| ८५७ | ५ | घस्य | घस्या |
| ८७१ | ४ | ब्वा | द्वा |
| ८६७ | २ | साथ | सार्थे |
| १२६० | २ | त्रिश्र | त्रिप्र |
| १३९४ | २ | उराष्ट्र | उष्ट्र |
| १४८८ | ८ | भूल्यं | मूल्यं |
| १४९६ | ७ | शीतकादश्च | शीतकादयश्च |
| ४८९ | २७ | कृदविहितो | कृदभिहितो |
| ४८१ | २७ | हृनिव्यन्ति | हृनिष्यन्ति |
| ४९३ | ८ | विये | विशे |
| ५६१ | ९ | मुख्यन | मुख्येन |
| ५६२ | १९ | हताशः | हताशं |
| ५७८ | ५ | पल | फल |
| ५९० | १९ | भायेन | भावेन |
| ५८७ | ४ | विष्विति | बिष्णवति |
| ६०१ | ५ | रन्जेश्च | रञ्जेश्च |
| ६०५ | ५ | दरीन्मुखोथेतन | दरीमुखोत्थेन |
| ८४५ | १४ | ब्राक्तण: | ब्राह्मणः |
| ११17 | १९ | भाभीक्ष्ण्यं | आभीक्ष्ण्यं |
| १११८ | १५ | द्वभ्यां | द्वाभ्यां |
| ११२१ | ११ | पाटः | पाठः |
| ११२६ | १० | यथस्वम् | यथास्वम् |
| १५६२ | १० | मणिबेदे | मणिभेदे |
| १५६८ | १३ | व्यावर्त्तयति | व्याबर्त्तयति |

विशेष—पाण्डुलिपि में 'व' 'ब' का भेद न रहने से कहीं कहीं अशुद्धि रह गयी है।



* श्रीश्रीराधाकृष्णाभ्यां नमः *

# ।। श्रीश्रीहरिनामामृतव्याकरणम् ।।

## अथ कारक प्रकरणम्

**यः कर्त्ता कर्मकरणं सम्प्रदानमशेषतः ।**
**अपादानाधिकरणे तत्सम्बन्धोभवेदिह ।।**

---

* श्रीश्रीकृष्णचैतन्यचन्द्राय नमः *

## "अमृतास्वादनी"

**आचार्यसूत्रनिर्यासं निष्कृष्य सुगमीकृतम् ।**
**कारकादि च येनामुं श्रीमज्जीवं समाश्रये ।।**

द्वितीय प्रकरणे स्वादयो विष्णुभक्तय उक्ताः, तृतीये च तिवादयः। तत्र परपदानि कर्त्तरीत्यादिना तिवादि विष्णुभक्तीनामर्थाः सामान्यतो दर्शिताः। अतः साकाङ्क्षतया तासामर्था विशेषेण दर्शयिष्यन्त इह चतुर्थप्रकरणे। तत्रच कारकानि उपपद विष्णुभक्तीः, अच्युताद्यर्थान् परपदात्मपदविषयांश्च विष्णुभक्त्यर्थभेदान् निरूपयिष्यन् कारकस्येव मुख्यत्वात् तत्संज्ञकं चतुर्थ प्रकरणमारभमाणो ग्रन्थकारः कृष्णस्य कर्त्रादि षट् कारक रूपत्व प्रसिद्धत्वात् कारकादिनिरूपणं खलु कृष्ण सम्बन्ध्येव भवेदिति सूचयन् श्लेषेणाशीरूपमङ्गलमाचरति—यःकर्त्तेति।

यः कारकाख्यः पदार्थः अशेषतः अशेषेण सम्पूर्णतयेत्यर्थः ( तस्योपपद विष्णुभक्त्यादिपर्यन्तव्याप्तेः ) कर्त्तृ कर्मकरणसम्प्रदानापादानाधिकरणात्मकः, तस्य सम्बन्ध इह चतुर्थ प्रकरणे भवेदिति सम्भावनायां विधिः। एतेन षट् कारकाणां संज्ञा तत् सम्बन्धश्चोद्दिष्टः।

अथ भगवत् पक्षेः—यः श्रीकृष्णः अशेषतः अशेषप्रकारेण नानास्वरूपेणेत्यर्थः, विश्वस्य कर्त्ता कर्म करणं सम्प्रदानमपादानमधिकरणञ्च भवति तस्य सम्बन्ध इह अस्मिन् मल्लक्षणे जने भवेत्। प्रार्थनायां विधिः। यद्वा इह जगति तस्यैव सम्वन्धो भवेत् भवितुमर्हति, नतु जड़ायाः प्रकृत्या इत्यर्थः। अत्र अर्हशक्तयोरिति विधिः। श्रीकृष्णेनैव सहस्वस्वाम्यादि सम्वन्धेन भवितव्यं जगज्जीवानां परमश्रेयस्करत्वात्तेषाम्। नतु मायया सह, तस्याः खलु स्वरूपावरणेन क्लेशदातृत्वादिति भावः।

श्रीकृष्णस्यहि षट् कारकत्वं यथा श्रीमद्भागवतेः—

यस्मिन् यतो यर्हियेन च यस्य यस्माद्,
यस्मै यथा यदुत यस्त्वपरः परो वा।

अथ विष्णुभक्त्यर्थाः । तत्र कारकाणि च निरूप्यन्ते ।

भावः करोति विकरोति पृथक् स्वभावः,
सञ्चोदित स्तदखिलं भवतः स्वरूपम् ॥
इति सप्तमे श्रीप्रह्लादोक्तिः ।

यत्र येन यतो यस्य यस्मै यद्-यद् यथा यदा ।
स्यादिदं भगवान् साक्षात् प्रधान पुरुषेश्वरः ॥
इति दशमेऽपि श्रीशुकोक्तिः ।

एतच्च श्रुत्यादिवचनैरपि स्थिरीक्रियते,—

—सऐक्षत्लोकानुत्सृजै "स इदंसर्वमसृजत," "तत्सृष्ट्वा तदेवानुप्राविशत्" "महा विष्णु जंगत् कर्त्ता" इत्यादिभ्यः कृष्णस्य ( परब्रह्मणः ) कर्त्तृत्वम् । "सर्वं खल्विदं ब्रह्म "इत्यस्मात् तथा "खं वायु मग्नि सलिलं महीञ्च + + हरेः शरीरं यत् किञ्च भूतं प्रणमेदनन्यः" इत्यस्माच्च कर्मत्वम् । "जन्माद्यस्य यतः", "यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति", "विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्" इत्यादिभ्यः अपादानत्वकरणत्वे । "कायेन वाचा मनसेन्द्रियै र्वा + + + करोति यद् यद् सकलं परस्मै नारायणायेति समर्पयेत् तत्", "यत् करोषि यदश्नासि यज्जुहोषि ददासि यत् यत्तपस्यसि कौन्तेय तत् कुरुष्वं मदर्पणम्" इत्यादिभ्यः सम्प्रदानत्वम् । "यत् (यत्र) प्रयन्त्यभिसंविशन्ति तद् (ब्रह्म) विजिज्ञासस्व", "मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव" इत्यादिभ्योऽधिकरणत्वं सिद्धम् ।

इत्थञ्च श्रीमद्भागवतोपनिषदादयो यस्य कर्त्रादिनिखिल कारकत्वं संकीर्त्तयन्ति तस्मिन्नेव श्रीकृष्णे स्व-स्वाम्यादिसम्बन्धः प्रवर्त्तनीयो नतु मायायाम्, तस्याः स्वातन्त्र्याभावादिति भावः ।

अथ विष्णुभक्ति निरूपणानन्तरं विष्णुभक्तीनामर्थाः कथ्यन्ते । तत्र तदर्थेषु कारकानि च निरूप्यन्ते । अत एतेन कारकानि तावत् विष्णुभक्तीनामेवार्थविशेषा इति ज्ञाप्यते । तथापि विशेषेण तन्नामोक्ति गो-वलीवर्दवज्ज्ञेया ।

## "बालतोषणी"

हस्तामलकवत्त्वं श्रीमद्भागवतस्य यः ।
दर्शयामास जीवेभ्यस्तं श्रीजीवप्रभुं भजे ॥
श्रीजीवचरणाब्जान्तमाश्रित्य परमादरात् ।
कारकं विष्णुभक्त्यर्थं व्याख्यायते सुहृन्मुदे ॥

द्वितीय तृतीय प्रकरणयो र्विष्णुभक्त्या उक्तास्तासामर्थान् परपदानि कर्तरीति आत्मपदान्येव कर्मणीति च । आख्यात प्रकरणे उक्तं कर्त्तादिषु वाच्येषु कृत् प्रत्ययाश्च वक्ष्यते ।

अतो विष्णुभक्तयर्थेषु कर्त्रादि कारकाणि च आनुषङ्गिकतया उपपदविष्णुभक्तिश्च अच्युतादय उक्ता एव तेषामर्थांश्च परपदात्मपदयोर्विषय विशेषांश्च निरूपयितुं चतुर्थं विष्णुभक्त्यर्थं प्रकरणमारभमाणो विष्णोः कर्त्रादिरूपत्वेन कर्त्रादि निरुपणस्य तत्सम्बन्धित्वं सूचयति यः कर्तेति। अशेषतः अपरिच्छिन्नलीलत्वात् य कृष्णो महाविष्णुरूपत्वेन कर्त्ता भवति विराड्रूपेण कर्म भवति ब्रह्म विष्णु रुद्र गुणावताररूपेण करणं भवति यज्ञपुरुषरूपेण सम्प्रदानं भवति गर्भदोशायि शेष रूपाभ्यां अपादानाधिकरणे भवतः तस्य श्रीकृष्णस्य सम्बन्धः षट्कारकरूपत्वेनान्वय इह संसारे भवेत्।

व्याकरण पक्षे। यः कारकशब्दः अशेषत उपपदविष्णुभक्त्यादि पर्यन्तव्यापकत्वात् वक्षमानलक्षणैः कर्तृकर्मकरणसम्प्रदानापादानाधिकरण वाचको भवति तस्य कारकस्य सम्बन्धः षट् कारकरूपत्वेनान्वय इह चतुर्थ पादे भवेत् अथवा अशेषतः अशेषस्य विश्वस्य यः कर्त्तादि सर्वंविष्णुमयं जगदित्युक्तेः विश्वमशेषं कृत्स्नमिति तस्य विष्णोः सम्बन्ध इह प्रकरणे भवेत् स्यादव कर्त्रादि निरूपयिष्यमाणत्वात्। भवेदिति सम्भावनायां विधिः। कर्त्रादिः वंक्षते।

विष्णोः कर्त्तादि रूपत्वेन कर्त्रादिशब्दा अपि तद्वाचिन एवेति। सतन्त्रं तत् प्रयोजकश्च इत्यादौ कर्त्तादि शब्दानां भगवन्नामता। अथ च यः कर्तेत्यादिना कारकाणां संज्ञाः सम्बन्धश्च उट्टङ्कितः। विष्णुभक्त्यार्थानां कारकाणाञ्च निरूपणमारभते अथेति। विष्णुभक्तोनामर्थाः अभिधेयाः अत्र विष्णुभक्त्यर्थेषु कारकाणि च कर्त्तादि रूपाणि निरूप्यन्ते प्रकाश्यन्ते चकारादुपपदविष्णुभक्तयः कालादय निरूप्यन्ते यद्यपि कारकाणि विष्णुभक्त्यर्था एव तथापि पृथगुपादानं सामान्यविशेषन्यायेन, यथा गामानय वलीवर्द्द्ञ्चेति तत्र प्रथमतो विष्णुभक्त्यर्थान् निरूपयति।



## अथ कारकप्रकरणम् ।

**१. एकद्वि वहुत्वेष्वेकद्विवहुवचनानि ।**

**कृष्णः कृष्णौ कृष्णाः । भवति भवतः भवन्ति ।**

**२. युष्मदो गौरवे त्वेकत्वे द्वित्वे वहुवचनम् ।**

**हे पित र्यूयं वदत । हे पितरौ यूयं पश्यत ।**

---

**अमृता०**—१. एकेति । स्वरूपे त्वप्रत्ययः । एकत्वे द्वित्वे वहुत्वे च वाच्ये प्रकृतेरुत्तरं यथाक्रमंमेकवचनं द्विवचनं वहुवचनञ्च योज्य मित्यर्थः । कृष्ण इत्यादौ क्रमेणान्वयः; कृष्णो भवति, कृष्णौ भवतः कृष्णा भवन्तीति ।

**अमृता०**—२. युष्मद इति । गौरवे सम्मानेऽर्थे तु युष्मच्छब्दस्य एकत्वे द्वित्वे च वहुवचनं स्यात् । तुशब्दोऽगौरवार्थ व्यावर्त्तकः; तत्रार्थे यथासंख्यमेकत्वादिकं पूर्वेण हि सिद्धम् । नचात्र गौरवे वहुवचनविधानेन पूर्वसिद्ध मेकत्वं द्वित्वञ्च वध्यत इति वाच्यम्, एवकारेणहि नियमादिह च तद् रहितान्न तद्वाध प्रसङ्गः । अतश्च पक्षे त्वं मे गुरुरित्याद्युदाहृतं काशिका सुपद्मकलापादिषु । तथाहि प्रयोगा भूरिशः । श्रीगीतायां विश्वरूप दर्शने—त्वमादिदेवः पुरुषः पुराणस्त्वमस्य विश्वस्य परं निधानमित्यर्जुन स्तुतौ । श्रीभागवतेऽपि—त्वमस्य लोकस्य विभो रिरक्षिषु रित्यादि श्रीवसुदेव स्तुतौ । एवञ्च सर्वत्र प्रयोगवाहुल्यदर्शनात् सामान्यसिद्धमेक वचनादिकं गौरवेऽप्यनिवार्यमिति दिक् ।

---

### ।। अथ कारक प्रकरणम् ।।

**बाल०**—एक । एकद्वि वहुनां भावः एकद्वि वहुत्वं तस्मिन् वाच्ये एकद्वि वहु वचनानि एकवचनद्विवचनवहुवचनानि भवन्ति । एकद्विवहुत्वेष्विति वहुवचनं चिन्त्यं । भावप्रत्ययान्तस्य एकवचनार्हत्वात् । एकशेषे तु सति वहुवचनं भवति किन्तु कृष्णः कृष्णौ कृष्णा इत्यादौ प्रत्येकमेकद्विवहुवचनानि स्युः अथवा स्वरूपमात्रे वाच्ये त्वप्रत्ययः एकद्विवहव एकद्विवहुत्वाः तेषु एकस्मिन् द्वयोर्वहुषु वाच्येष्वित्यर्थः । कृष्णः इत्यादिनां भवतीत्यादिभिः सह क्रमेण सम्बन्धः ।।१।।

**बाल०**—युष्म । गोरवेऽर्थे युष्मदुत्तरे एकत्वे द्वित्वे च वहुवचनं भवति । युयं वदतेति एकत्वे वहुवचनं । युयं पश्यतीति द्वित्वे वहुवचनं । अगौरवे तु हे अवैष्णव त्वं दूरीभव ।।२।।

३. द्विवर्जं तदादिमात्राच्च ।

स कुत्र तवगुरुरित्यत्राह तत्र ते विराजन्ते ।

४. पूज्यवाचिभ्यस्त्वादराधिक्ये ।

यथा गुरवः समादिशन्तीत्यादि ।

५. अस्मद स्त्वगौरवेऽपि ।

अहं ब्रवीमि, आवां ब्रूव इत्युभयत्रापि वयं ब्रूमः ।

---

**अमृता०**—३. द्विवर्जेति । तदादयः सप्त, तत्र द्विशब्दं वर्जयित्वा षण्णां गौरवार्थे एकत्वे द्वित्वे च वहु वचनं स्यात् । मात्रग्रहणं स्वार्थेऽस्वार्थे च वहुवचन प्राप्त्यर्थम् । अन्यथा गौणार्थे कृष्णनामत्व निषेधाद स्वार्थे सूत्रस्याप्रवृत्तिः स्यात् । अतो द्विशब्दवर्जनं तत्र सङ्गच्छते; द्वावतिक्रान्तः अतिद्वि रित्यस्य गोरवे वहुत्व प्रसङ्गात् । एवं वैष्णवद्वय-मुद्दिश्य—इमान् भोजयेत्यादि च । पक्षे स विराजत इत्यपि यथाप्राप्तमेकत्वं ज्ञेयम् ।

**अमृता०**—४. पूज्येति । आदरस्य सम्मानस्य आधिक्ये विवक्षिते पूज्यवाचिभ्य उत्तरे एकत्वे द्वित्वे च वहुवचनं भवति । गुरुशब्दस्याचार्य वाचित्वात् पूज्यत्वं प्रसिद्धम् । पूज्यश्च सदैवादरणीयः, तत्रादरसामान्ये तु वहुत्वं न विवक्षितम्, अतएवाह—आदराधिक्य इति । एवञ्च तत्र भवन्तो विदाङ्कुर्वन्तु, जीवत्सु तातपादेषु इत्यादि । सामान्यप्राप्त-मेकत्वादिकमपि स्यादेव—गुरु रादिशतीति ।

**अमृता०**—५ अस्मद इति । गौरव विरहेऽपि अस्मच्छब्दादुत्तरमेकत्वे द्वित्वे च वहु वचनं भवति । अपि शब्दोऽत्र द्विधा समुच्चयोऽर्थो वोध्यः । तेन गौरवे च वहु-वचनञ्चेति द्योतनाद् गौरवेऽगौरवे चास्मद एकत्वे द्वित्वे वहुवचनञ्च स्यादिति फलितार्थः ।

---

**बाल०**—द्विवर्ज । द्विशब्दस्तदादिगणे पठितस्तस्य वर्जनं यत्र तादृशात्तदादिमात्राच्च उत्तरे गौरवेऽर्थे एकत्वे द्वित्वे वहुवचनं भवति । मात्र ग्रहणात् स्वार्थास्वार्थयो भवतीति ज्ञेयं । ननु तदादेरिति कृतेऽपि तदेव लभ्यते नाम्नो ग्रहणेन तदन्तस्यापि ग्रहणत्वात् तथापि मात्रपदं स्पष्टतार्थं । इत्यत्र प्रश्ने आहेति शिष्य उत्तरमिति शेषः । उत्तरं तत्र ते समयानुभूतस्तव गुरूरिदानीं कुत्र वर्तते इत्यत्र यत्र त्वयानुभूता मम गुरव इदानीं तत्रैव ते विराजन्ते इत्यन्वयः । ननु द्विशब्दस्य नित्य द्विवचनान्तत्वेन वहुवचन प्राप्तिरेव नास्ति किं तद्वर्जनेन उच्यते । द्वावतिक्रान्त अतिद्विरित्यत्र गौरवे विवक्षिते वहुवचनं स्यात् ।।३।।

**बाल०**—पूज्य । आदर स्याधिक्यं आदराधिक्यं तस्मिन्नर्थे पूजावाचिभ्य उत्तरे एकत्वे द्वित्वे वहुवचनं भवति । गुरव इति गुरुशब्दस्याचार्यादिवाचित्वात् पूज्य वाचिता । समादिशन्तीति आज्ञां कुर्वन्तीत्यर्थः ।।४।।

**बाल०**—अस्म । आदराधिक्ये अगौरवे अनादरेऽपि अर्थे अस्मद् उत्तरे एकत्वे द्वित्वे च वहुवचनं भवति । अहं ब्रवीमि आवां ब्रूव इत्यत्र वयं ब्रूम इति । यदा तु आदरा-धिक्या गौरवयोर्विविक्षा न क्रियते तदा अहं ब्रवीमि आवां ब्रूव इति भवति ।

सविशेषणत्वे तु न,—वैष्णवोऽहं ब्रवीमि । व्यभिचरति च,—साबाला वयमप्रगल्भमनसः सा स्त्री वयं कातरा इत्यादि ।

**६. जात्याख्यायामेकवचने वहुवचनं वा ।**

सम्पूज्या तुलसी, सम्पूज्यास्तुलस्यः । गौरयं गावइमे । जात्याख्यायामिति किम्—भारद्वाजस्य प्रतिकृति र्भारद्वाजः । नत्वत्र जाति राख्यायते, किं तर्हि ? प्रतिकृतिरिति । एवं जयादित्यादीनामपि ।

---

ततोऽगौरवे अहं ब्रवीमि आवां ब्रूव इत्यत्र क्रमादेकत्वं द्वित्वञ्च सिध्यति; तथा गौरवे च—गौडभूमिं दृष्टवानहं धन्या वयमद्य भृशमिति सिध्यत्येव । सविशेषणत्व इति—विशेषण पदेनान्वितस्य अस्मदः अगौरवे न वहुत्वमित्यर्थः ( एकत्वे द्वित्वे ) । वैष्णवोऽहमिति—वैष्णवपदमिह अस्मच्छब्दस्य वैशिष्ट्य बोधकत्वाद् विशेषणम् ।

सा वालेति—अवशिष्टानि पादानि यथाः— सापीनोन्नतिमत् पयोधरयुगं धत्ते सखेदा वयम्; संक्रान्ता जघनस्थलेन गुरुणागन्तुं न शक्ता वयम्, दोषैरन्यजनाश्रयैरपटवो जाता स्म इत्यद्भुतमित्यमरशतके । नायिकामुद्दिश्य कस्यचिदनुरागिन उक्तिरियम् । अर्थस्तु सुगमः । सर्वत्र वयमिति अस्मद एकत्वे वहु वचनं प्रयुक्तम् । अप्रगल्भमनस इत्यादि विशेषणैरन्वितत्वेऽपि नैकत्वे वहुत्वनिषेधः, अथात् सूत्रस्यैव प्रवृत्तिरित्यर्थः । एवञ्च वयंतत्त्वान्वेषान् मधुकर ! हतास्त्वं खलु कृतीति शाकुन्तले । एते वयममीदाराः कन्येयं कुलजीवितमिति कुमारसम्भवे । तथा—वयं वर्णाश्रमरक्षणोदिता इतिभारवौ च । तदत्रप्रणिधानदृष्ट्या विवेच्यम्—यदास्मदः समानाधिकरणविशेषणपदेनान्वयः स्यात् तदैव वहुत्वनिषेधः, यदा खलु विशेष्य लिङ्गसंख्यानिरपेक्षेणविधेय विशेषणेन तस्यान्वय स्तदा तु न निषेध इत्येव व्यभिचारस्य निदानं ज्ञेयमिति ।

**अमृता०**—६. जातीति । नित्यत्वे सति अनेकसमवेतत्वं जातित्वम्, आख्या कथनं प्रत्यायनमिति यावत् । जाते राख्या जात्याख्या, तस्यां गम्यमानायाम् एकस्मिन्नर्थे वहुवचनं वा स्यात् । एकत्वे वहुत्वसमवेतत्वात् जातौ एकत्वमेवप्राप्तमत इदमुच्यते । व्यक्तिसमन्विता हि जातिरिति दर्शयति—गौरयमिति । केवल व्यक्तित्वे तु न सा—विष्णुमित्र एष इति । भारद्वाजस्येति—भरद्वारजस्य गोत्रापत्य—मित्यर्थे विदादेः केशवण—भारद्वाज , तत "इवार्थे कः प्रतिकृतौ संज्ञायाञ्च" इति कप्रत्ययः, मनुष्ये तस्य स्मरहरो वक्ष्यते ।

---

स वि । सविशेषणत्वे सति अस्ददुत्तरे एकत्वे द्वित्वे च वहुवचनं न भवति क्वचित् व्यभिचरति चेति निषेध इति शेषः । कोऽपि व्यभिचार लक्षणमाह उक्तान्यथाचारो व्यभिचार इति वयमिति अहमित्यत्र ।।५।।

**बाल०**—जात्या । जातेराख्या उक्तिस्तस्यां सत्यां एकवचने वहुवचनं वा भवति । जात्याख्यामिति जातौ तात्पर्ये सतीत्यर्थं । एकवचने इति विषयसप्तमी एकत्वे इति वा

**एवं फल्गुन्योः प्रोष्ठपदयोश्च द्वितारयोरपि वहुवचनं ज्ञेयं वा। कदा पूर्वाः फल्गुन्यः पूर्वे फल्गुन्यौ वेत्यादि। तथा तिष्य एकः पुनर्वसू द्वौ, तथापि द्वन्द्वे द्विवचनम्—तिष्यपुनर्वसू इत्यादि।**

---

नत्वत्रेति—अत्र भरद्वाजशब्दस्य गोत्रप्रत्ययान्तत्वेन जातित्वमस्त्येव, "गोत्रश्च चरणैः सह" इति तल्लक्षणात्। अतो जाति प्रत्यायनं विवक्षितञ्चेत्तर्हि वहुत्वमिह स्यात् किन्तु तदिह न विवक्षितम्; विवक्षितं हि प्रतिकृति प्रत्यायनम्। तस्माज् जात्यर्थ-विरहान्नात्र वहुवचनमित्याशयः। एक वचन इति किम्—इह न—धात्री तुलस्यौ। जयादित्यो वामनश्च काशिका वृत्तिकृत्, तयोश्च मतमेवमेव।

एवमिति—पूर्वोत्तरशब्दयोः प्रत्येक पूर्वत्वेऽपि फल्गुन्योस्तारकयो र्द्विद्रव्यत्वम्, तथैव प्रोष्ठपदयोः ( भाद्रपदयोः )। यथा हि—"प्रोष्ठा गौः भद्राश्च गौः, तस्येव पाद आसां ताः प्रोष्ठ पदाः भाद्रपदाश्च। पूर्वे प्रोष्ठपदे द्वे, उत्तरे तु भाद्रपदे द्वे, समुदायश्चासां चतुः संख्य इति वहुवचनम्। कदा पूर्वे प्रोष्ठपदे कदा उत्तरे प्रोष्ठपदे इति तारकयो र्द्वित्वाद् द्विवचनमित्यमर टीकायां भरतः। एवञ्च पूर्वफल्गुनीत्यस्य। अतस्तत्र वहुवचनप्राप्तये वचनमिदम्।

इत्यादिपदेन—कदा उत्तरे फल्गुन्यौ, उत्तराः। फाल्गुन्यो वाः, कदा पूव प्रोष्ठपदे, पूर्वाः प्रोष्टपदा वा; कदा उत्तरे प्रोष्ठपदे, उत्तराः प्रोष्ठपदा वा। द्वितारयोरिति किम्—फल्गुन्यौ कन्यके। अत्र 'ऋतु नक्षत्राभ्याञ्चे'ति तत्र जातार्थे केशवणः, फल्गुन्याषाढाभ्या-मिति तस्य लक्ष्म्यां महाहरः। फल्गुन्योः प्रोष्ठपदयोरेव नान्यासाम्—कदा पूर्वाषाढा, उत्तराषाढा। अत्र पूर्वाषाढोत्तराषाढा तारकयोः प्रत्येकस्य द्विवचनाभावान्न वहुवचनम्। तिष्यः पुष्यान्यनाम नक्षत्रम्, पुनर्वसू यमकौ इति हेमः। तथापीति—इतरेतर द्वन्द्वस्य उद्भूतावयवसंख्यत्वादिह वस्तुत्रय वोधने वहुवचनमेव युक्तं तथापिनित्यं द्विवचनं भवतीत्यर्थः। वहुवचने प्राप्त एवात्र द्विवचनं प्रयुज्यते; तेन नेह—तिष्यपुनर्वसु इदम्। सर्वेऽपि रामकृष्णा विभाषयैकवचनमिति वक्ष्यमाण परिभाषात एकवचनमेव विवक्षित-मत्र।

---

पाठः। आख्यायामिति किमिति। जातेरित्येवास्त्विति शेषः। भारद्वाजस्येति भरद्वाजस्या-पत्यमित्यर्थे केशवणः वृष्णीन्द्रः भारद्वाज तस्यप्रतिकृतिरित्यर्थे क प्रत्ययः तस्य स्मरहरः तद्यथा इवार्थे कः प्रतिकृतौ संज्ञायाञ्च इत्यनेन कः। मनुष्ये तस्य स्मरहर इत्यनेन कस्य स्मर हरः। एकवचने इति किं धात्री तुलस्यौ। जातीति किं व्यक्तिपरत्वे पूज्या तुलसी। भारद्वाजः यदि गोत्रं चरणैः सहेत्यापत्यप्रत्ययान्तत्वेन जातिवाचित्वमस्त्येव तथापि नत्वत्र जातिराख्यायते न जातौ तात्पर्यमित्यर्थ। किन्तर्हि प्रतिकृतीति प्रतिकृत्यर्थे विहितस्य प्रत्ययस्याख्यानमेतदिति। एवं व्यक्तार्थमेतत्। फल्गन्यादीनां पूर्वोत्तरे पूर्वत्वे द्वि द्वि नक्षत्र वाचित्वं तथा सति कदा फल्गुन्यः कदा फल्गुन्यौ इत्यादिकमुदाहरणं सङ्गतं। अर्थस्तु कदा पूर्वोत्तराः फल्गुन्य भविष्यन्ति कदा पूर्वत्तरे फल्गुन्यौ भविष्यत। इत्यादिकं मनोहितं। गोस्वामीपादेन तु यदुक्तं तत्त नास्माकं सम्यक्हृदयङ्गमं पूर्वोत्तरयोः प्रत्येकं पूर्वत्वे

## ७. प्रथमा नाममात्रार्थे ।

यन्नाम यद्वाचि तन्मात्रे वाच्ये नाम्नः प्रथमा विष्णुभक्ति र्भवति । वक्ष्यमाण सम्बन्धनिरपेक्षत्वं तन्मात्रत्वम् । ततः स्वभावसिद्धत्वाल्लिङ्गञ्च नामविशेषार्थ एवः । वाच्यलिङ्गानाञ्च तादृश एव स्वभावः । तत्र लिङ्गं विना यथा—उच्चै र्नीचैः ।

---

**अमृता०**—७. प्रथमेति । मात्रं कार्त्स्नेऽवधारणे इत्यमरशासनादिह मात्रशब्द-स्यावधारणमर्थः । नाम्नएवार्थो नाममात्रार्थः तस्मिन् गम्यमाने नाम्न उत्तरे प्रथमा विष्णुभक्तिः स्यात् । नाममात्रार्थश्च अर्थान्तरापेक्षाराहित्यम्, अर्थात् कर्त्तृ कर्मादिरूप विभक्त्यर्थसम्पर्कवर्जितत्वम् । तदेव स्पष्टयति—वक्ष्यमाणेत्यादिना । वक्ष्यमाणा ये सम्बन्धाः (षष्ठीनिष्ठ सामान्यरूपः कर्त्तृकर्मादि विशेषरूपाश्च) तेषु अपेक्षाराहित्यमित्यर्थः ।

अस्माच्छब्दादयमर्थो वोद्धव्य इतीश्वरसङ्केतितं, लाक्षणिकं वा शब्दस्याभिधेयमात्रं यदा विवक्ष्यते तदा नाम्नः प्रथमा विभक्तिः प्रवर्त्तते इति सरलार्थः । तदर्थं ज्ञानञ्च व्याकरणादितो भवेत्; यथोक्तं प्राचीनैः—शक्तिग्रहो व्याकरणोपमानकोषाप्तवाक्याद् व्यवहारतश्च वाक्यस्य शेषाद् विवृते र्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः ।। इति ।।

ननु कृष्ण इत्यादौ पुंस्त्वादिरूपार्थाधिक्यस्य प्रतीते स्तन्मात्रत्वस्य व्यभिचार इति चेत्तत्राह—स्वभावसिद्धत्वादिति । लिङ्ग्यते ज्ञायतेऽनेनेति लिङ्गं चिह्नमित्यर्थः । तच्च लिङ्गमीश्वरपरिभाषितो धर्म इति तस्य स्वभावसिद्धत्ता । ततश्च लिङ्गानां प्रकृति वाच्यत्वमेव न्याय्यम् । केचित्तु—"नामार्थलिङ्गपरिमाणवचनमात्रे प्रथमा" इत्याचार्य सूत्रतः प्रथमाया एव पुंस्त्वाद्यर्थ इति मन्यन्ते । तत्रापि लिङ्गादीनां प्रथमार्थद्योत्यत्वं

---

फल्गुन्यादेरेकैकनक्षत्र वाचित्वात् । किम्वा । पूर्वेत्युपलक्षणं । उत्तरस्यापि गुणीभूतत्वेन स्वीकृतत्वमिति गुढाभिसन्धिरिति । अथवा पूर्वोत्तरयोरेकैकं पूर्वत्वेऽपि प्रत्येकं फल्गुनादे-र्द्वितारकावाचित्वं उद्भूतावयवशङ्क्यतिरोहितावयवशङ्क्यत्वेन शास्त्रान्तरे स्वीकृतत्वात् इति न कश्चिद्दोषास्पदः इति । द्वि तारयोरिति किम् फल्गुन्योर्जाते गोप्यौ फल्गुन्यौ नत्वत्र तारे उच्यते किन्तु तत्रजाते इति । तथेति । तथापीति वहुत्वेऽपित्यर्थ ।

कचित् द्वन्द्वसमास व्यक्तिगर्णनया, कचित् शङ्क्यागणनया । अत्र पुनर्गणव्यक्ति गणनया न शङ्क्यगणनयेति इत्यादीत्यादि शब्देन पुष्यपुनर्वसु इत्यपि ।।६।।

**बाल०**—प्रथ । नाममात्रस्यार्थः नाममात्रार्थः । अर्थशब्दोऽभिधेयवचनः नाम-मात्राभिधेये वाच्ये इत्यर्थं । यन्नामेति । यस्याभिधेयस्य नामशब्दः यद्वाचि यस्याभिधेयस्य वाचकः तन्मात्रे तदभिधेयमात्रे वाच्ये तस्मान्नामः प्रथमा विष्णुभक्तिः स्यात् यथा परम बृहत्तम सर्वाकर्षक तमालस्यामलत्विट् यशोदारतनन्धयः कृष्णशब्दस्याभिधेय इत्यत्र वाच्य-वाचकतालक्षणसम्बन्धे प्रथमैवेति । यन्नाम यद्वाचि तन्मात्रे वाच्ये इति फलितार्थं कथनं नत्वक्षरार्थकथनं । कर्मादौ द्वितीयादि विधानमेव वक्ष्यते । तथापि मात्रपदं स्पष्टतार्थं कृतं । नामार्थमात्र इति पाठः सभ्यः । तथासति तन्मात्रे वाच्ये इति यदुक्तं तद् सुसंगतं

लिङ्गं स्त्रीपुंनपुंसकशब्दवाच्यम्। तच्च संस्त्यान प्रसरौ लिङ्गमिति भाष्ये लक्षितम्। तच्च संस्त्यानं संहतिः, एकीभावादपचयो लक्ष्यते। प्रसरो विस्तारः, तस्मादुपचयः। अयमर्थः,—स्तनादिचिह्नैः प्रसिद्धेषु स्त्रीपुंनपुंसकेषु अपचयोपचय द्विसाम्यरूपो यो धर्मक्रमो दृश्यते, तंक्रममवलम्ब्य वहुलमीश्वरपरिभाषितो वस्तुनो धर्मविशेषो लिङ्गमिति।

---

मन्तव्यं न तु वाच्यत्वम्। किञ्च गोकुलादिशब्दाज्जाता प्रथमा स्त्रीपुंसौ चाभिदध्यात्, लिङ्गं प्रति प्रकृतेश्चेदौदासीन्यं स्यात्। तस्मान्नाम्न एव विशेषोऽर्थो लिङ्गमिति वक्तुं समीचीनम्।

तदेव द्रढयति—वाच्यलिङ्गानाञ्चेति। वाच्यस्य अभिधेयस्य लिङ्गं येषां ते वाच्यलिङ्गाः, त्रिष्वेव लिङ्गेषु व्यवहार्य शब्दा इत्यर्थः। सुन्दरादि शब्दानां वाच्यलिङ्गानां यदि लिङ्गात्मको विशेषार्थः स्वाभाविको न स्यात् तर्हि एकएव शब्दो यथावसरं लिङ्गत्रयं कथं व्यनक्ति? तस्माद् लिङ्गं नाम्नो हि विशेषार्थ इत्याकृतिः। उक्तञ्च प्राचीनैः—स्वार्थो द्रव्यञ्च लिङ्गञ्च संख्या कर्मादिरेव च। अमी पञ्चैव लिङ्गार्था स्त्रयः केषाञ्चिदग्रिमाः॥ इति॥ तत्र लिङ्गार्थाः प्रातिपदिकार्थाः। तत्र स्वार्थोजाति गुणक्रियारूपं विशेषणम्, द्रव्यं विशेष्यम्, लिङ्गं पुंस्त्वादि रूपम्, संख्या एकत्वादि, कर्मादि प्रथमार्हमुक्त कारकमात्रम्; तच्च तिवादिप्रत्ययै वाच्यम्, प्रथमया तु तद् द्योत्यमिति वक्ष्यते। एते सर्वे लिङ्गार्थाः (नामार्थाः)।

अथ लिङ्गात्मकार्थविशेषरहिताश्च केचनशब्दाः सामान्यमर्थं द्योतयन्तीत्याह—नत्रीलिङ्गं विनेति। अलिङ्गोऽव्ययसंज्ञ इत्युक्तमेव प्राक्। अथ लिङ्गस्य स्वरूपं विवृणोति—स्त्रीपुमित्यादि। स्त्रीलिङ्गशब्देन पुलिङ्गशब्देन नपुंसक लिङ्गशब्देन च वाच्यं प्रकाश्यमित्यर्थः। तच्च पुनर्भाष्यकृतलक्षणेन स्फुटीकरोति—संस्त्यानेति। अर्थश्चास्य स्वयमेव मूले विवृतः।

सुन्दरा दारा इति—दारशब्दः पुलिङ्गो नित्यवहुवचनत्वेन परिभाषितः, सपुनर्भार्यायामुपचर्यते। एवं देवताशब्दःस्त्रीलिङ्गे परिभाषितोऽपि पुंदेवे, तथा दैवत शब्दो नपुंसके परिभाषितोऽपि देवसामान्ये उपचर्यते।

---

भवति। वक्ष्यमाणेत्यादिकञ्च यद्वक्ष्यते तदपि सुसङ्गतं भवति। नहि नाममात्रं वक्ष्यमाणसम्बन्ध निरपेक्षं भवति किन्तु नाममात्रार्थमेव। अथवा, मात्रं केवलं च तत् अर्थञ्चेति मात्रार्थं नाम्नः मात्रार्थं नाममात्रार्थमिति कृते दोषकथनं नास्ति इति। ननु कृष्ण इत्यादौ पुंस्त्वाद्यपि प्रतोयते तर्हि कथं तन्मात्रात्वमिति चेत्तत्राह वक्ष्यमाणेति। वक्ष्यमाण कर्मादि सम्बन्धे निरपेक्षत्वमपेक्षा शून्यत्वं। वक्ष्यमाण सम्बन्धेत्यत्र श्यामराम—समासश्चिन्त्यः, वक्ष्यमाणे त्यस्य व्यावर्तकत्वाभावात्। तस्मात् वक्षमाणानां षष्ठ्युपयुक्त कारकोपपदविष्णुभक्तीनां सम्बन्धः वक्ष्यमाणसम्बन्धस्तस्मिन्नपेक्षाराहित्यमिति। ततो हेतोः स्वभाव सिद्धत्वात् लिङ्गञ्च नामविशेषार्थ एवेति तन्मात्रत्वाविरोधः।

तच्चोपचारान्नाम्नि प्रवर्त्तते। तदात्मकं यथा—स्त्री पुमान् नपुंसकम्। वापी तड़ागः कुण्डम्। क्वचिन्नाम्नि च परिभाषितं लिङ्गं वस्तुन्यु-पचर्यते—सुन्दरा दाराः, सुन्दरी देवता, सुन्दरं दैवतम्।

अथ तत्र परिमाणात्मकं यथा—खारी द्रोणः आढकम्। तत् परिमितञ्च-खारी द्रोणः आढकम्; उपचारेणाभेदात्। यथा मञ्चे स्थिता जना

---

अथ परिमाणञ्च विशेषणरूपत्वात्स्वार्थं एवेति प्राचीनोक्त पञ्चान्तर्गतम्। तत्र खार्यादि लक्षणम्—अष्टमुष्ठि र्भवेत् कुञ्चिः कुञ्चयोऽष्टौ च पुष्कलम्। पुष्कलानि च चत्वारि आढ़कः परिकीर्त्तितः। चतुराढे भवेद् द्रोणः खारी द्रोण चतुष्टयम्। इति। तत्परिमित-ञ्चेति—खार्यादि परिमितं धान्यादि; उपचारेण परिमाण-परिमेययोरभेद विवक्षतेत्यर्थः। तदाद्रव्यत्वाद् विशेष्यम्। स चाभेदारापो लक्षणयैव वृत्त्या ज्ञेयः। एवञ्च नाममात्रार्थः अभिधा-लक्षणयोरन्यतरेण द्योत्यत इति लब्धम्। संख्या च न नामातिरिक्तेति दर्शयति—संख्यात्मकमिति।

ननु एक द्वौ वहव इत्यत्र प्रकृत्या हि तत्तद् वचन प्रतीतेः किमत्र विभक्ति साफल्य-मितिशङ्कायामाचष्टे—प्रकृत्यर्थसदृशेति। प्रकृत्यर्थतुल्येन प्रत्ययेनानुवादमात्रं क्रियते, विभक्ति विना शब्दप्रयोगनिषाधात्, यथा "नापदं शास्त्रे प्रयुञ्जीत" इति भाष्यम्।

---

केषाञ्चिन्नाम्नामलिङ्गत्वमप्यस्तीति विशेषशब्दोपादानं कृतं एतत् प्राचोनैरप्युक्तं। तद्यथा। स्वार्थ द्रव्यञ्च लिङ्गञ्च सङ्ख्यांकर्मादिरेक्च। अमी पञ्चैव लिङ्गार्थास्त्रयः केशाञ्चिदग्रिमाः। सार्थं गुणादिक विशेषणं, द्रव्यं विशेष्यं, लिङ्ग पुंस्त्वादि, संङ्ख्या एकत्वादि, कर्म क्रिया। इति पञ्च प्रातिपदिकार्था। सुन्दरः कृष्णः, सुन्दरी राधा, सुन्दरं गोकुलमित्यादौ एकस्य नाम्नो नानालिङ्गत्वात् कथं तन्मात्रत्वमिति चेत्तत्राह वाच्येति। वाच्यलिङ्गानां शब्दानां तादृशे नामविशेषस्यार्थे स्वभावो वर्तते तत् सिद्धं लिङ्गञ्च तत्रैव वर्तते। लिङ्ग विनेत्यादौ नामेति गम्यं। उच्चैरिति नीचैरिति चाव्यं। ननु किन्ता-वल्लिङ्ग तत्राह लिङ्गमिति। स्त्रीति। स्त्री पुंनपुंसकशब्दानां वाच्यमिति विग्रहः। तदेव भाष्यकारमतेन स्पष्टयति तच्चेति। तच्च लिङ्गं भाष्ये लक्षितं भाष्ये तस्य लक्षणं कृत-मित्यर्थः। लक्षणमेवाह संस्त्यानेति।

संस्त्यानञ्च प्रसरश्च तौलिङ्ग लिङ्गमिति लिगि गतौ लिङ्ग्यते ज्ञायतोऽनेनेति करणे घञ्-प्रत्ययः। संस्त्यानमिति ष्टै स्त्यै शब्दसंघातयो भावे अनः। संस्त्यानं संहति-रिति संहतिर्मिलनं योनिरूपस्याङ्गस्येत्यर्थः। एकीभावात् शरीरे मिलनात् अपचयः संकोचः। प्रसर इति प्रपूर्वात् सृगतावित्यस्मात् भावे अल्। तस्मात् विस्तारात् उपचयः असङ्कोचः लक्ष्यत् इति शेषः। सेफरूपस्याङ्गस्येत्यर्थः। स्तनादिचिह्नैरिति स्त्रिया-श्चिह्न स्तनादि। पुंसः श्मश्र्वादि नपुंसकस्य स्तनश्मश्र्वाद्यवयवरूपं। तत्तद्रूपैचिह्नैः प्रसिद्धेषु व्यक्तिषु स्त्र्यादिषु। अपचयेति अपचयरूपः उपचयरूपः। तत्र द्विसाम्येति द्वयो-रपचयोपचययोः साम्यरूप इति तथाहि किमपि नपुंसकं स्त्रीचिह्नधारि किमपि पुंस

 

मज्ञाः। संख्यात्मकं यथा—एकः द्वौबहवः। अत्र प्रकृत्यर्थसदृश प्रत्यये-नानूद्यते मात्रम् केवलाप्रयोगित्वात्।
कृष्णौ कृष्णा इत्यादौ द्वित्वाद्यर्थाधिक्येऽपि प्रथमान्तः पातात्। नारी यादवः दृष्टकृष्ण इत्यादौ स्त्री प्रत्ययादिनार्थाधिक्येऽपि पुनर्नामत्व प्राप्तेः।

---

ननु यदि नाममात्रार्थे प्रथमा क्रियते तर्हि कृष्णौ कृष्णा इत्यादौ कथं प्रथमा प्रयुज्यते, द्वित्वाद्यर्थाधिक्यादिति चेत्तत्राह—प्रथमान्तःपातादिति। द्वित्व बहुत्वरूपं संख्या बोधकत्वन्तु न नाममात्रातिरिक्तत्वम्, यतो द्वित्वादि संख्या प्रथमाया अन्तर्भुक्ता, प्रथमायाएवावान्तरभेदविवक्षायामौंजसोर्विधानात्। तस्माद् द्वित्वादि संख्याया न हि नाममात्रातिरिक्तत्वमिति भावः।

ननु च नारी यादव इत्यादौ स्त्री प्रत्ययादिनार्थाधिक्यान्नहि नाममात्रार्थता, अतश्चात्र प्रथमा नार्हतीति शङ्कायांसमाधत्ते—पुनर्नामत्वप्राप्तेरिति। तत्र नृ-नरयो र्नारी ईपा सिद्धः। यादव इति—यदोरपत्यमित्यर्थे केशव णः ( तद्धितः। ) आदि सर्वेश्वरस्य वृष्णीन्द्रः, उद्धयस्य गोविन्दश्च वक्ष्यते। दृष्टकृष्ण इति—दृष्टः कृष्णो येन सः, पीताम्बर-समासे अन्य पदार्थ बोधः। सर्वत्र पदसंस्कारार्थमन्तरङ्गस्वादे महाहरः। अत्र स्त्री प्रत्ययेन तद्धित प्रत्ययेन तथा पीताम्बरसमासशक्त्या चार्थाधिक्यबोधितेऽपि तत्तदर्था-धिक्ये एवाभिनव पृथक् शब्दतया ते व्यपदिश्यन्ते न तु प्राचीन शब्दतया। ततएव

---

चिह्नधारीत्येवं योयोधर्मक्रमो दृश्यते तं क्रममवलम्बय आश्रित्य लक्षीकृत्येत्यर्थ बहुलं यथा स्यात् तथा ईश्वरेण सर्व कर्त्ता परिभाषितो निरूपितो वस्तुनः पदार्थस्य धर्मविशेष स्वभावविशेषं लिंगं। धर्माः पुण्य यम न्याय स्वभावाचार सोमपा इति नानार्थवर्गः ननु यदि वस्तुनो धर्मो विशेषो लिंगमित्युक्तं तदा कथं नाम्नः स्त्रीत्वादीति चेत्तत्राह तच्चेति। तल्लिंगं उपचारात् आरोपात् तदात्मकं।

लिंगात्मकं। स्त्रीपुमान् नपुंसकमित्येषां क्रमेण व्याप्यादिभिः सम्बन्धः वापी दीर्घिका तडागः पद्मयुक्त जलाशयः कुण्डं प्रसिद्धं। क्वचिदिति। सुन्दरा दारा इत्यादौ दार देवता दैवत् शब्देषु लिंगात्मकत्वात् बहुलमिश्वरपरिभाषितं निरूपितं पुंस्त्वादिकं तत्तच्छब्दवाच्ये वस्तुनि च उपचर्यते। दारशब्दः श्रीवाचक पुंलिंगो नित्यबहुवचनान्तश्च। देवतादिशब्द इन्द्रादि वाचकः स्त्रीलिंग देवतो शब्दापि तदवाचको नपुंसकलिंगः अथेति तत्र लिंगात्मके परिमाणात्मकं यथोदाहृयते खार्यादय परिमाणः विशेषाः। यथोक्तं। अष्ट मुष्टिर् भवेत् कुञ्चि कुञ्चयोऽष्टौ च पुष्कलं। पुष्कलानि च चत्वारि आढकः परि-कीर्त्तितः। चतुराढे भवेत् द्रोण खारी द्रोणचतुष्टयं इति। तैः खार्यादिभिः परिमितश्च तत्तल्लिङ्गात्मकं खारी द्रोण आढकं स्यादीति। तत्परिमित इति पदार्थ विशेषणम्। उप-चारेणेति। खार्यादि परिमिते पदार्थे खार्यादित्वोपचार इति अव्यापारे व्यापारवत्त्वा-रोप उपचार इति।

## ८. सम्वोधने च ।

सम्वोधनमामन्त्रणम्, तच्च नाम्ना नामिनः आभिमुख्य भावनम् । तच्च हेशब्दादि द्योत्यम्, क्वचित्तद्विनाभावेऽपि गम्यश्च । तद्रूपस्यार्थाक्ये

---

पुनर्नामत्वसिद्धे स्तत्तदर्थ द्योतनाय तत्तदुत्तर स्यादेव प्रथमा, केवलाप्रयोगित्वादिति विशदः ।

**अमृता०**—८. सम्वोधन इति । सम्वोधनरूपार्थे च नाम्नः प्रथमा स्यात् । किन्तावत् सम्वोधनमित्याकाङ्क्षायामाह—आमन्त्रणमिति । तच्चेति—तच्च आमन्त्रणं नाम्ना नामिनः नामवतः नामवाच्यस्येति यावत्, आभिमुख्यभावनं साम्मुख्यसम्पादनम् । हे शब्दादिदद्योत्यमित्यत्र आदि शब्देन अङ्ग ननु प्रभृतिश्च ज्ञेयः । तद्विनाभावेऽपीति—विनाया भावः सत्ता, तस्य हे शब्दादिं विनापि सम्वोधनं गम्यं प्रतीयमानं भवतीति शेषः । तद्रूपस्य सम्वोधनरूपस्यार्थस्य आधिक्ये अर्थान्नाम मात्रार्थातिरिक्तार्थे नाम्नः प्रथमा विष्णुभक्ति र्भवतीत्यर्थः ।

कृष्णनाम्नइति—कृष्णइति नाम यस्य स कृष्णनामा तस्य । किन्च क्वचिदव्यययोगे च प्रथमेष्यते,—यथा दशरथ इत्युदाहृत इतिभट्टिः । विषवृक्षोऽपि सम्वर्द्ध्य स्वयं

---

यथेति मञ्चस्थितेषु मञ्चत्वोपचार इति । मञ्चः काष्ठादिनिर्मितउन्नतप्रदेशविशेषः । ननु कृष्णः कृष्णौ इत्यादौ यथा स्वादयः संख्या वाचकाः तथा एकद्वावित्यादौ न प्रकृत्यैव संख्याया उक्तत्वादतः कथमत्र स्वादय इति चेत्तत्राह अत्रेति । अत्र एषु एकादिषु शब्देषु प्रकृत्यर्थः एकत्यादिः तत् सदृशप्रत्ययनेन स्वादिना अनूद्यतेमात्रः केवलमनुवादः क्रियत इत्यर्थः सदृशशब्दोदृशप्रत्ययानां व्यावर्तकः तेन एकावित्यादौ द्विवचनादेः संख्यावाचकत्वं विद्यतः एव अत्र प्रथमायाः वाचकत्वमन्याभिप्रायेणोक्त स्वमते तु प्रथमाया द्योतकत्वं उक्तान्नाममात्रार्थे द्योत्ये इति वक्ष्यमाणत्वादिति । नन्वनुवादार्थमेव कथमुक्तार्थाः स्वादयः क्रियन्ते यत उक्त उक्तार्थानामप्रयोग इत चेत्तत्राह केवलेति । केवलानां नाम्नां धातुनाञ्चाप्रयोगित्वात् । तथा च भाष्ये । नापदं शास्त्रे प्रयुञ्जीतेति पदत्वार्थ स्वादयः क्रियन्त इति भावः ननु यदि नाममात्रार्थ एव क्रियते तदा कथ कृष्णौ कृष्णा इत्याद्यौ प्रथमा द्वित्याद्यर्थाधिक्यात् इति चेत्तत्राह कृष्णविति । द्वित्याद्यर्थाधिक्येऽपीति प्रथमेति शेषः । अत्र हेतुः प्रथमेति । प्रथमाया अन्तर्मध्ये पातात् पतनात् औजसोरिति शेषः । अन्यथा प्रथमान्तः पतनमनर्थकं स्यात् । तस्माद् द्वित्वसंख्यादे र्नामार्थमात्राविरोध इति भावः । ननु नार्यादिशब्देषु कथ प्रथमा नामार्थमात्राभिधायकत्वाभावादिति चेत्तत्राह नारीति । अर्थाधिक्येऽपीति प्रथमेति शेषः तत्र हेतुः पुनरिति । नारीति नृनरयोर्नारी ईवन्तः साधुरिति तद्धितप्रकरणे वक्ष्यते । यादव इति यदोरपत्यमित्यर्थे केशवणः आदि सर्वेश्वरस्य वृष्णीन्द्रो नृसिंहे इत्यनेन वृष्णीन्द्रः । उद्धवस्य गोविन्दो ननु धातोर्नच स्त्रीप्रत्यय इत्यनेन गोविन्दः ओ अव् । दृष्टकृष्णो येनेति पीताम्बर समासः ॥७॥

**बाल०**—सम्वो । तच्चेति आमन्त्रणमित्यर्थ । नाम्ना नामिनो नामवाच्यस्य आभिमुख्यभावनं सान्मुख्यसम्पादनं भवतीति शेषः । तच्चेति सम्वोधन मित्यर्थः । हे

नाम्नः प्रथमा स्यात् । कृष्णनाम्नस्तवाभिमुख्यं भवत्वित्यर्थे हे कृष्ण, गम्यत्वेऽपि कृष्ण ।

**९. सम्वन्धे तदाश्रयात् षष्ठी ।**

सम्वन्धो भेदेन विवक्षितयो र्द्वयो र्योगः । स च द्विनिष्ठ एव । तस्मिन् सम्वन्धे गम्ये यस्मादितरत्र सम्वन्धः प्रवर्त्तते तस्मात् षष्ठी स्यात् । तत् प्रवृत्तिश्च विवक्षावशात् । इतरतस्तु यथास्वं प्रथमादयः । प्रथमा त्वेकयैव षष्ठ्या द्वयोरपि सम्वन्धस्योक्तत्वेन नाममात्रार्थाविशेषात् ।

---

छेत्तुमसाम्प्रतमिति चाग्रे वक्ष्यते । कृष्णेति मङ्गलं नामेत्यादै । तु समासे (एकपदत्वे) विभक्ति लोपः ।

**अमृता०**—९. सम्बन्धइति । सम्वन्धेऽर्थे सम्वन्धस्य आश्रयात् षष्ठी भवति । एष सम्वन्धः सामान्यरूपो हि बोध्यः, सम्वन्ध विशेषेतु कर्त्रादिकारकं भवेदिति वक्ष्यमाणानानुरोधात् । तच्च विवृणोति—सम्वन्धो भेदेनेत्यादिना । भेदरूपेण विवक्षितयो र्वक्तुमिष्टयो र्द्वयोः शब्दयो र्योगः सम्वन्ध उच्यते । द्विनिष्ठो वस्तुद्वय वृत्तिकः, तत्र एकः सम्वन्धस्याश्रयः अपरस्तु विषय इति । इतरत इति सम्वन्धस्य विषयात् प्रथमादय इत्यर्थः ।

ननु सम्वन्धात्मकस्यार्थस्याभिधानेन नाममात्रार्थदचोतनाभावात् सम्वन्धविषये कथं प्रथमा प्रवर्त्तते ? तत्राह—प्रथमात्विति । द्वयोरपि वस्तुनो र्योगरूपः सम्वन्धः एकयैव षष्ठ्या विभक्त्याभिधीयते, अतः सम्वन्धाश्रयादन्यस्मिन् सम्वन्धस्य विषयबाचि नाम्नि तन्नाममात्रस्यार्थोऽवशिष्यते, इति तद् वाच्ये प्रथमैव युक्तेतिभावः । अथ रामस्य पुस्तकं देहीत्यादौ सम्बन्धस्य विषये द्वितीयादयस्तु क्रियायाः सम्बन्धविशेषविवक्षायां कारका दचोतका इत्यग्रे व्यक्तीभावि ।

सम्वन्धप्रवृत्तिश्च विवक्षावशादिति यदुक्तं तन्निदर्शणेन स्पष्टी करोति—एवमिति । अत्रभक्तात् प्रवर्त्तमानेन सम्वन्धेन कृष्णसम्वन्ध इत्युक्तं भवति । श्यामो राम इति—

---

शब्दादिभद्योत्यं वोध्यं आदिशब्देन अङ्ग-ननु प्रभृतीनां ग्रहणं । तद्विनाभावे हे शब्दाद्य भावेऽपि हे शब्दादिकं गम्यं असाक्षात् प्रतीयमानम् । तद्रूपस्य सम्वोधनरूपस्य । कृष्णनाम्न इति नाम यस्येति पीतांबर । अभिमु ख्यंसान्मामुख्यम् ।।८।।

**बाल०**—सम्व । संवन्धं लक्ष्यति संवन्ध इति । भेदेन भिन्नतया विवक्षितयोर्वक्तुमिष्टयोः । द्विनिष्ठ इति द्वयो र्निष्ठा यस्येति विग्रह निष्ठा प्रवृत्तिः स्थितिः इति यावत् । यस्मादिति । भदेन विवक्षितयोर्द्वयोर्मध्ये यस्मादितरत्र अपरस्मिन् संवन्धः प्रवर्तते तस्मात् संवन्धाश्रयात् षष्ठी स्यादिति तत् प्रवृत्तिः संबन्ध प्रवृत्तिः । इतरतस्त्विति यस्मान्नाम्नः षष्ठी स्यात् तस्मादयरस्मादिति । यथास्वमिति यथायोग्यमित्यर्थः । ननु कथमत्र प्रथमा संवन्धरूपस्यार्थस्य विद्यमानत्वेन नामार्थ मात्राभिधायित्वाभावादिति चेत् तत्राह प्रथमा त्विति । नामेति । नाममात्रार्थस्य अवशेषात् अवशिष्टत्वात् । तत् प्रवृत्तिश्च विवक्षा

यथा कृष्णस्य भक्तः। कृष्णात् प्रवर्त्तमानेन सम्बन्धेन भक्तसम्बन्ध इत्यर्थः। एवं भक्तस्य कृष्णः। तथा कृष्णस्य सौन्दर्यमित्यादि। भेदेन विवक्षितयोरिति किम्—श्यामो रामः। अन्ये चाहुः—

भेद्यभेदकयोः श्लिष्टिः सम्बन्धोऽन्योन्यमिष्यते।
द्विष्ठो यद्यपि सम्बन्धः षष्ठ्युत्पत्तिस्तु भेदकादिति॥

---

अत्र योगस्तु समासे अस्त्येव, किन्तु न स भेदेन। य एवरामः सएव श्याम इत्यभेदविवक्षायामेकाधिकरणत्वेन विशेष्यविशेषणभावस्येष्टत्वात्। भेदेन विवक्षितश्चेत्तर्हि रामस्य श्यामो वर्ण इत्येवं प्रयुज्यते।

स्वमतमुक्त्वा तत् पोषकतया प्राचीनकारिकामुट्टङ्कयति—भेद्येति। भेद्यं विशेष्यं, भेदकं विशेषणम्, तयोः परस्परं श्लिष्टि र्योगः सम्बन्ध इत्यर्थः। अतएव भेदेन विवक्षितयो र्द्वयो र्योग इत्युक्त्या सहैकार्थतावसीयतेऽस्य। सम्बन्धो यद्यपि द्विष्ठो द्विनिष्ठः (योगस्यैकाश्रयत्वासम्भवात्) तथापि भेदकादर्थाद् विशेषणादेव षष्ठीविभक्तेरुत्पत्तिः स्यात्, भेद्यस्तु तदन्यविभक्तिविषयक इति स्वयमेव विवृतम्। तत्र हेतुश्च पूर्वमेवोक्तः—एकयैव षष्ठ्या द्वयोरपि सम्बन्धस्योक्तत्वेन नाममात्रावशेषात् प्रथमेति। एषा तु व्यवस्था यदा सम्बन्धविशेषो नविवक्षतेऽर्थात् सम्बन्ध सामान्यं विवक्ष्यते तदैव ज्ञेया। कर्त्रादि सम्बन्धविशेषे विवक्षिते तु षष्ठीवर्ज भवन्त्येव सर्वा विष्णुभक्तयः। यथा—कृष्णस्य भक्तं पश्य, भक्तेन सम्पादितो नामयज्ञ इत्याद्युन्नेयम्। एतदभिप्रायेणहि—इतरतस्तु यथास्वं प्रथमादय इत्युक्तौ आदिपदं निवेशितम्।

किञ्च शब्दप्रकरणे समानाधिकरण-व्यधिकरण भेदेनविशेषणस्य द्वैविध्यमुपपादितम्। तत्र समानाधिकरणमभ्युदाहृतम्, इह तु विशेष्य-विशेषणयो भिन्नाधारत्वे व्यधिकरणत्वं ज्ञेयम्। तत एवोभयत्र विष्णुभक्तेरसाम्यम्। तथाहि कृष्णस्यभक्त इत्यादौ कृष्णशब्दोत्तर षष्ठ्या सम्बन्धसामान्यमुच्यते, सम्बन्धेन च तेन भक्तो विशिष्यते—नहि साधारणो भक्तः किन्तु कृष्णस्येति शिवदुर्गादिभक्तेभ्योऽयं व्यावृत्यत इति विभाव्यम्।

---

वशादित्युक्तं तत् फलमाह एवमिति। श्यामोराम इति नात्र भेदो विवक्षितः किन्तु य एव राम स एव श्याम इति विशेषण विशेष्यभावः। ननु कथमिदं प्रत्युदाहृतं यथा कृष्णस्य भक्त इत्यादौ सम्बन्धाश्रयात् षष्ठी इतरतस्तु प्रथमादयः सम्भवन्ति तथात्र न विशेषण-विशेष्यत्वेन द्वयोरेकविष्णुभक्तिविषयत्वात् तथा चोक्तं। विशेष्यस्येव यल्लिंगं विभक्तिवचने च ये तथेव तानि कार्यानि विशेषणपदेऽपि चेति अत्रोच्यते। विशेषणविशेष्ययोर्मध्ये यदा एकस्य सम्बन्धिता विवक्ष्यते तदा षष्ठ्यपि भवति यथा पटस्य शुक्लोगुण इति। किन्त्वत्र तथा न विवक्षितमिति। तदाश्रयादिति किं रामश्च कृष्णश्च अत्रभेदो विद्यत एव किन्तु कस्मादितिरत्र संबन्धः प्रवर्त्तत इति न विवक्ष्यते। भेद्येति भेद्यं विशेष्य भेदकं विशेषणं तयोरन्योन्यं परस्पर श्लिष्टिर्योग संवन्ध इष्यत इति भेद्य भेदकयोरित्यस्य

भेद्यस्य विष्णुभक्त्यन्तर विषयत्वादिति भावः ।

सच सम्वन्धचतुर्विधः । यतः—

स्व - स्वामी जन्य-जनकोऽवयवावयवी तथा ।
स्थान्यादेश इति प्रोक्ताः सम्वन्धाश्चोपचारतः ॥
विष्णोर्भक्तो हरेः पुत्रः श्रीकृष्णस्य पदाम्बुजम् ।
त्रिविक्रमो ऽ प्युद्धवस्य चतुर्द्धेयमुदाहृतिः ॥

---

सम्बन्धंविभजते—सचेति । स्वस्य आत्मन आत्मीयस्य वा स्वामी अधिपतिरिति स्व-स्वामी सम्बन्ध इति शेषः । एवमन्येऽपि वोध्याः । उपचारत इति—अव्यापारे व्यापारवत्त्वमुपचारः । अत्रायमाशयः—लोके खलु नानाविधः सम्वन्ध उपलभ्यते । यथा—प्रतियोग्यनुयोगी, आधाराधेयः, समवायिसमवेत, विषयिविषयः, निरूप्यनिरूपक इत्यादयः । दृष्टान्ताश्च क्रमात्—राज्ञः पुरुषः, अन्नस्य पात्रम्, वस्त्रस्य सूत्रम्, शास्त्रस्य ज्ञानम्, जगतः कारणमित्यादयः । तत्र स्व-स्वाम्यादिषु चतुर्ष्वेव मध्ये तेषां यथा सम्भव-मन्तर्भवनं कर्त्तव्यम् । यदा तु चतुर्णां मध्ये कुत्रापि यदन्तर्भवनं नोपलक्ष्यते तदा तेष्वेकतरे तूपचारेणान्तर्भावः कर्त्तव्यः । यथा—कृष्णस्य सम्बन्धः, विश्वस्य कारणमित्यादौ स्व-स्वाम्यादि सम्वन्धाभावेऽपि स उपचर्यतएव । एवं राहोः शिर इत्यत्र भेदाविवक्षितत्वेऽपि अवयवावयवी सम्वन्ध आरोप्यते । तस्मात् सम्बन्धस्य चातुर्विध्यावसानाय ह्युपचार शब्दः प्रयुक्त इत्यवगम्यते ।

अथेति—अथ सामान्य सम्बन्धकथनानन्तरम् उपपद्विष्णुभक्तिव्याप्य, तत् समाप्तिपर्यन्तमित्यर्थः, सम्वन्धस्यभेदा कथ्यन्ते । तत्र क्रियायाः सम्वन्धविशेषे कारकानि,

---

भेदेन विवक्षितयोरिति विशेषणंमनुसन्धेयं, अतएव श्यामोराम इत्यत्र न संवन्धः । द्विष्ठ उभयनिष्ठः । भेद्यस्य संवन्धे उक्त संवन्धषष्ठ्यन्यविष्णुभक्तिविषयत्वाद्भेदकादुत्तरे षष्ठीस्या-दित्यर्थः । सचेति मुख्यत्वाच्चतुर्विघ इत्युक्त ।

वस्तुतस्तु । नानाविधाः संवन्धा भवन्ति अतः—आधाराधेयादयोऽपि गृह्यन्ते तेनान्नस्य भाजनमित्याद्यपि । स्वस्वामीति । स्व आत्मीयः स्वामी अधिपतिः स्वस्य स्वामीति विग्रहः । जन्यजनकादिषु च एवं विग्रह ज्ञेयः । विष्णोर्धनमित्यत्र धनस्याप्यात्मी-यत्वमस्त्येवेति स्व स्वामी संवन्ध एव । स्वं धनमिति केचित् तन्मते स्व स्वामी संवन्धस्य विष्णुर्धनमित्युदाहरणं विष्णोर्भक्त इत्यादौ तु सेव्यसेवकादिसंवन्धान्तरं कल्पनीयं । स्व स्वाम्यादीनां मध्ये यदा यस्य संवन्धित्वं विवक्ष्यते तदा तस्मादेव षष्ठी उभयेषु संवन्धस्य विद्यमानत्वादिति ज्ञेयं । ननु योग स्वरूपसंम्वन्ध इत्युक्तं तर्हि कथं स्वस्वाम्यादीनां संवन्धत्वमिति चेत्तत्राह उपचारत इति संवन्ध संवन्धिनोरभेदोपचारादित्यर्थ ।

विष्णोरिति विष्णुभक्त इत्यादिषु त्रिषु क्रमेण स्वामिजनकावयविभ्यः षष्ठी त्रिविक्रमोऽप्युद्धवस्येति अत्र तु स्थानिनः षष्ठीति ज्ञेयं चतुर्धेति क्रिया प्रकार वृत्तेः संख्याया धेत्यनेन धा प्रत्ययस्तद्धितः उदाहृतिरुदाहरणं ॥ अथेति । अथानन्तरं सामान्य-

अथोपपदविष्णुभक्ति व्याप्य सम्वन्धभेदाः कथ्यन्ते ।

**१०. क्रिया सम्वन्धविशेषि कारकम् ।**

क्रिया सत्तादिलक्षणो धात्वर्थः, तस्याः जन्यजनकान्तर्भूतक्रियायाः कर्त्तृत्वादि संवन्ध विशेषो यत्र विवक्ष्यते तत् कारकमुच्यते । यथा वैष्णवो भवति । अत्र सत्ता क्रिया संवन्ध विशेषी वैष्णवः कारकम् ।

---

शब्दयोगे तूपपदविष्णु भक्तय इति तयोः स्वरूपवैलक्षण्यंवोध्यम् । तत्र कारकलक्षणमाह—

**अमृता०**—१० क्रियेति । क्रियायाः सम्बन्धः क्रियासम्वन्धः, स एव विशेषो विद्यते अस्येति क्रियासबंन्धविशेषि, तदरूपं यत् तत् कारकमुच्यते । सत्तादीति—क्रिया भूप्रभृति धातूनामर्थः, स च सत्तादिलक्षणः । पुनस्तामेव क्रियां परिष्करोति—जन्येति । जन्यश्च जनकश्च जन्यजनकौ, तौ अन्तर्भूतौ यस्यां सा जन्यजनकान्तर्भूता, सा चासौ क्रिया चेति तथा । तस्याः कर्त्तृत्वकर्मत्वादिरूपः सबंन्धविशेषो यत्रविवक्ष्यते तत् कारकमुच्यते । तादृशसम्बन्ध विशेषा विवक्ष्यते चेत्तदा सम्बन्धसामान्यमेवेत्यर्थः । तथाहि—प्रतिक्रियायां हि जन्यजनकत्वं विद्यते । तण्डुलं पचतीत्यत्र तण्डुलस्य विक्लेदनम् (ओदनरूपेण विकृतिकरणरूपम्) फलं जन्यम्; अग्निसन्दीपनादारभ्य अधः सन्तापनादिक्रियाकलापात्मको व्यापारो जनकः । तौ च जन्यजनकौ पचनक्रियायामेवान्तर्भूतौ स्तः । ततो वह्निप्रज्वलनात् प्रभृत्याविक्लित्ति कृतिसमुदायः पाकक्रियातया व्यपदिश्यते । एवं वैष्णवोभवतीत्यत्र गुरोः सकाशात् तापपुण्ड्रादि पञ्च संस्कारग्रहणात्मकं फलं जन्यम्; तद्ग्रहणे सत्सङ्गादिनिवन्धनानुकूलप्रवृत्त्युदयरूपो व्यापारो जनकः । ततश्च सत्सङ्गादि-

---

संवन्धनिरूपणानन्तरं एतदारभ्य उपपदविष्णुभक्ति व्याप्येति उपपदविष्णुभक्तिसमाप्ति यावदित्यर्थः ।।९।।

**बाल०**—क्रिया । क्रियायाः सम्बन्धः स एब विशेषो विद्यतेऽस्य क्रिया सम्वन्ध विशेषि यत् तत् कारक मित्यापाततो व्याख्येति क्रिया केत्यपेक्षायां क्रिया लक्षणमाह क्रियेति । सत्तादिर्लक्षणं स्वरूपं यस्येति विग्रहः धातूनां भुवादीनां सन्नन्तादीनामर्थ धात्वर्थं सत्तादिलक्षणो धात्वर्थः क्रियोच्यत इत्यन्वयः । तस्या सत्तादिरूपायाः । जन्यजनकान्तर भूतक्रियायाः कर्तृत्वादीति पाठ सभ्यः । क्रियाया इत्यत्र षष्ठ्यन्तरूपः लिपिकारेण दूरीकृत इति । सूत्रस्थ क्रियापदेन जन्यजनकान्तर्भूतक्रिया लक्ष्यते तस्मात्तस्याः जन्यजनकान्तर्भूतक्रियायाः कर्तृकर्मत्वादि संवन्धो विशेषो यत्र विवक्ष्यते वक्तुमिष्यते तत् कारकमुच्यते । नन्वत्र किं जन्यं को जनकः का वा तदन्तर्भूतक्रिया । सत्यं । उच्यते । गुरोः सकारात् नाममन्त्रपूर्वक पञ्चसंस्कारादिग्रहणरूपं यत् फलं तदेव जन्यं यस्तु तद्ग्रहणे प्रथमत इन्द्रियप्रवृत्तिरूपः स जनक ग्रहणादिपूर्वक समुदायविद्यमानतादिरूपा जन्यजनकान्तर्भूत क्रियेति विवेकः । फलव्यापारयोर्धातुराश्रयेतु तिङो मताः । फले प्रधानं व्यापार स्तिङर्थस्तु विशेषणं । इति प्राचीनोक्तत्वात् ।

**संबन्ध सामान्ये तु संबन्धयेवेत्यर्थः । यथा कृष्णसंबन्धेन पाकः कृष्णस्य पाकः । एवं कृष्णस्य पचतीति ।**

**कारकमित्यव्युत्पन्नं नाम । क्रियानिमित्तं लोकतः सिद्धमित्यन्ये । तस्य च कारकस्य विशेषता व्यञ्जका आख्याताद्या द्वितीयाद्याश्च**

---

हेतुकानुकूल प्रवृत्त्यनन्तर पञ्च संस्कारादि ग्रहणात्मक समुदाय विद्यमानता वैष्णवस्य सत्तातया व्यपदिश्यते। उक्तञ्च वैयाकरणभूषणे—फलव्यापारयोर्धातु राश्रये तु तिङः स्मृताः। फले प्रधानं व्यापार तिङर्थस्तु विशेषणम् ॥ इति। अत्र स्मृता इति वचनविपरिणामेणान्वयः कार्यः। फलं विक्लित्त्यादि, व्यापारस्तु भावनाभिधा, साध्यत्वेनाभिधीयमाना वह्नि सन्दीपनादिका क्रिया। यथा तत्रैव—यावत् सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते। आश्रितक्रमरूपत्वात सा क्रियेत्यभिधीयते ॥ व्यापारो भावना सैवोत्पादना सैव च क्रिया ॥इति। अस्य च तात्पर्यम्—धातोः शक्तिः फले तथा व्यापारे च; धातूत्तरस्य तिङः शक्तिस्त्वाश्रये। व्यापाराश्रयः कर्त्ता, फलाश्रयः कर्म। तेन यगादि समभिव्याहृत ते प्रभृतिना कर्म प्रत्ययेन फलाश्रयः कर्मोच्यते, शवादि समभिव्याहृत तिप् प्रभृतिना कर्तृ प्रत्ययेन व्यापाराश्रयः कर्त्तोच्यते, अतस्तयोरक्त कारकत्वं वक्ष्यते।

ननु एवं सर्वेषुकिलधातुषु जन्यजनकत्वे परिकल्पने सर्वेषामेव तेषां सकर्मत्वापातात् सत्ताद्यर्थेषु धातूनां परिभाषितमकर्मकत्वमुच्छिद्यत इति चेत्? अत्रेदमवधेयम्,—फल व्यापारयो र्भिन्नाधारवृत्तित्वे धातोः सकर्मकत्वम्, तयोरेकाधारवृत्तित्वे त्वकर्मकत्वमिति। दर्शितञ्च प्राग् वैष्णवो भवतीत्यत्र पञ्चसंस्कारग्रहणात्मक फलम्, तद् ग्रहणेऽनुकूलप्रवृत्त्युदयात्मक व्यापारश्च एकस्मिन् वैष्णवाधारे हि विद्यत इति। किञ्च विभक्ते रर्थः शक्ति र्वा कारकम्, प्रत्ययस्य प्राधान्येऽपि प्रकृतिं विना केवलप्रत्ययस्य प्रयोगविरहात् शक्तिसमन्वित एव पदार्थः कारकशब्देन व्यपदिश्यते, अतएवोक्तं—वैष्णवः कारक मिति। वर्त्तमानसत्तानुकूल व्यापारवान् वैष्णव इत्येवं बोधप्रकरः।

---

स्यादेतत्। यदि सर्वत्र क्रियासु एवं कल्प्यते तदा सकर्मका कर्मकयोरभेद इति चेत् तदैवं वाच्यं। यत्र फलव्यापारयोरेकाधार वृत्तित्वं तत्रैव अकर्मकत्वं, यत्र फल व्यापारयो द्विधाधार वृत्तित्वं तत्रैव सकर्मकत्वं बक्ष्यते च स्वयं ग्रन्थकृता। अन्तर्भूतण्यार्थशून्यत्वाद कर्मकत्वं, अन्तर्भूतण्यर्थत्वात् सकर्मकत्वं। इत्यत्रापि एकाधार वृत्तित्वादिपरिकल्पनीयमन्यथा क्रियाविशेषणं कर्मेत्यत्र विशेष्यविशेषणता न घटते। अथवा तस्याः क्रियायाः संबन्धोविशषो विद्यते यत्र इति सूत्रेणानुषङ्गः कर्त्तव्यः पुनः संबन्धबिशेषबिवृतिं विशेषेणाह जन्येत्यादि। अत्रायमर्थः। जनको हि कर्त्तु श्चैतन्यस्य व्यापारः। व्यापारो भावनाभिदा सैवोत्पादनं सैव क्रियेति वैयाकरणभूषणेन तल्लक्षणं चोक्तं। एतेनैतदयोगाथोऽपि दर्शितः।

तद्यथा। भाव्यते वाप्यते सर्वकारकाणीति भावनाभु प्राप्तावित्यस्मात् ण्यन्तादासः

**प्रत्यया भवन्ति। यत्र क्रिया संबन्धो मुख्यस्तत्राख्यातादयः। यत्र तु तत्संबन्धो गौणः क्रियैव वा मुख्या तत्र द्वितीयाद्या इति। यथा वैष्णवो**

---

सम्बन्धसामान्ये त्विति—सम्बन्धविशेषस्य कारकस्याविबक्षायान्तु सम्बन्धी एव नतु कारकमित्यर्थः। ननु करोतीति कारक इति णक प्रत्ययनिष्पन्नेन कारकशब्देन षट्कारके व्यवहारे को दोष इति मनस्याशङ्क्य तत्परिहरति—अव्युत्पन्नं नामेति। यदि णक प्रत्ययान्तः कारकशब्दो लक्षणोक्तकारकत्वेन गृह्यते तदा प्रत्ययस्य कर्त्तरिविधानात् स्वतन्त्र कर्त्ता हि कारकशब्दवाच्यः स्यान्नपुनः कर्मादि। ततो लक्षणस्याव्यासिप्रसङ्गाद् नायं कर्त्तरिविहित णकप्रत्ययान्तः; किं तर्हि ? क्रियानिमित्तमित्यर्थे निपातितोऽयं कारकशब्दः। अन्य इति कालापाः। लोकतः सिद्धं लौकिक व्यवहारार्थं सिद्धमित्यर्थः।

एतदपि अर्थ कथनं, नतु लक्षणम्। अन्यथा कृष्णस्य पचतीत्यादौ सम्बन्धिनि चातिव्यासेः। अनुमतिप्रकाशन द्वारा सम्प्रदानस्येव तण्डुलादि सम्पादनद्वारा सम्बन्धिनः कृष्णपदस्यापि पाक क्रियाया निमित्तत्वसम्भवात्। तस्मात् क्रिया सम्बन्धविशेषि कारक मित्येवानबद्य लक्षणं ज्ञेयम्।

अथ कारकस्य क्रियासम्बन्धविशेषता केन तावद् बोध्यत इत्यपेक्षायामाह—तस्य च कारकस्येत्यादि। यद्यपि क्रियायाः सम्बन्धविशेषः सर्वत्र हि कारकेषु तथापि तत् सम्बन्धो मुख्यतयान्वेति तत्र तस्य विशेषता व्यञ्जका आख्यात प्रत्ययाभवन्ति। आदिशब्देन कृत् प्रत्ययाः तद्धितप्रत्ययाश्च ग्राह्याः। यत्रकारके तु क्रिया सम्बन्धो गौणतया (परम्परया) अन्वेति तत्रानुक्त कारके इति यावत्, द्वितीयादयः प्रत्ययास्तस्य विशेषता व्यञ्जका भवन्ति। यत्र पुनः क्रियैव स्वयं मुख्या, अर्थाद् यत्रभावे प्रत्ययो विधीयते तत्र तृतीया हि कारकस्य विशेषताव्यञ्जिका भवतीति सरलार्थः।

क्रमेणोदाहरति—यथेति। वैष्णवो भवतीत्यत्र वर्त्तमानसत्तानुकूल व्यापारवान् वैष्णव इति वोधः। ततः क्रियया कर्त्तुरेव वाच्यत्वात्तत्र क्रियासम्वन्धो मुख्यतयान्वेतीति कर्त्तु विशेषता व्यञ्जकमाख्यातं नतु तृतीया, कर्त्तुराख्यातेनोक्तत्वात्, द्वितीया तृतीयादीनामनुक्ते एव विधानात्। एवं कृत् प्रत्ययेन चोक्त कारकविशेषता व्यञ्जकत्वम्—मालां

---

श्रन्थादेश्चेत्यनेन लक्ष्याम् विषये भावेऽनः पश्यादाविति। तज्जन्यत्वे सति तज्जन्यजनकोहि व्यापारः। इत्यपि केनाप्युक्तं। उदाहरणञ्च यथा भ्रमिर्दण्डजन्योऽपि सन् दण्डजन्यं घटं जनयति इति। जन्योऽत्र इन्द्रियस्यन्दनादिर्जनको भावना अहं विद्यमानः भावामित्यादिः। जन्यश्च जनकश्च जन्यजनकौ तौ अन्तर्भूतौ यस्यां सा जन्यजनकान्तर्भूता सा चासौ क्रिया चेति जन्यजनकान्तर्भूताक्रियाकर्त्तृत्वादिसंबन्धविशेष इति समासः। जन्यजनकान्तर्भूता क्रियाकर्त्तृत्वादि संबन्धविशेषो यत्र वस्तुनि विबक्ष्यते तत् कारकमुच्यते। अत्र शक्ति शक्तिमतोरभेदोपचारादिति न्यायेन द्रब्यमेव कारक मुच्यते पाचकः शेते इतिवत्। वस्तुतस्तु कारकं शक्तिः द्रव्यं तच्छक्तिमत् इति विवेचनीयं। क्रियाशब्दोऽत्र व्यवावन्तः लक्ष्मी प्रत्यय साधुः।

तस्येति पाठे तस्य धात्वर्थस्य संबन्धी जन्यजनकरूपसंबन्धस्य अन्तर्भूतो यः क्रिया-

**भवतीति कर्त्तर्याख्यातं नतु तृतीया। मालां करोतीति कर्मणि द्वितीया। वैष्णवेन भूयत इतिकर्त्तरि तृतीया नत्वाख्यातम्।**

---

कृतवान् वैष्णवः, पाकस्य कर्त्ता वैष्णव इत्यादयः। तथा तद्धित प्रत्ययाश्च—व्याकरणमधीते वेद वेति वैयाकरणः, वाचा निष्पन्नं वाचिकमित्यादयो ज्ञेयाः। एषु च क्रियायाः सम्बन्धविशेषः साक्षाद्रूपेण विद्यते।

मालां करोतीत्यत्र कर्त्तरि वाच्ये आख्यातस्य विधानात् तेन च कर्त्तुरुक्तत्वात् कर्मणि तु क्रिया संबन्धो गौण इत्यतो द्वितीया हीह कर्मकारकस्य विशेषता व्यञ्जिका। ततो मालावृत्तिकर्मतानुकूल व्यापारवान् वैष्णव इति बोधः। वैष्णवेन भूयते इत्यत्र तृतीया हि कर्त्तृकारकस्य विशेषता व्यञ्जिका नत्वाख्यातम्, तस्य कर्त्तरि विधानाभावात्। अत्र क्रियाया एव मुख्यत्वम्। तेन वैष्णवनिष्ट वर्त्तमान कृति रिति बोधः। कर्मभावयोरुदाहरणद्वयेतु क्रियायाः संबन्धविशेषो गौणतया (कारकयोः) विद्यते।

---

कर्त्तृत्वादि सरूपसंबन्ध विशेषः विबक्ष्यत इत्यर्थः। अत्र धात्वर्थस्य जन्यता कारकस्य तु जन्यजनकता स यत्र तस्येव व्यापारत्वेन क्रिया बक्ष्यमाणत्वादिति। वस्तुतस्तु। तस्याः सत्तादिस्वरूप सिद्धक्रियायाः संबन्धिजन्यजनकान्तभूँत साध्यक्रियायाः कर्त्तृत्वादि संबन्ध विशेष इत्यादिकं पूर्ववद्योज्यमिति। आदिपदेन क्रियाकर्त्तृत्वकर्मत्वादेर्ग्रहणं। वैष्णवो भवतीति भवतीत्याद्याख्यात विष्णुपदानां बाहुल्य भयादुक्तत्वान्नात्र प्रायः साधनक्रमो न लेख्यः। किञ्चिदन्यथा कथ्यते। ननु वैष्णवोभू इति कृते को दोष इति चेत तदैवं वाच्यं। केवल धातोः सत्तादिना सहभूत भविष्यद् वर्त्तमानकालान्वयित्वाभावात् वैष्णवः तिप् इति कृतेऽपि तिवादर्धात्वर्थ शून्य कर्त्तृत्वादि बोधकत्वात् वैष्णवः भू तिप् इत्यादिकं न स्वादुभयो र्मेलकत्वाभावेन विशृङ्खलत्वादतः उभय पोषक-शपोऽपि द्योतकत्वमिति। अत्र सत्तेति सत्तारूपायाः क्रियायाः संबन्ध विशेषः कर्त्तृत्वरूपस्तद्वान् संबन्ध्येवेति संबन्धवेत्यत्र नतु कारकमिति शेषः। कृष्णस्य पाक इति कृष्णोऽत्र संबन्धी नतु कारकं। कृष्णस्य पचतीति कृष्णस्य संबन्धेन पचतीत्यर्थः। क्रियासंबन्धविशेषि कारकमिति यद्रूढलक्षणमुक्तं तदेव द्रढयति कारकमिति। अव्युत्पन्नं नामेति करोतीति कारकं षट् कारकेन क प्रत्ययान्तेन साधु संज्ञा शब्दानां यथा कथञ्चिद्व्युत्पत्तित्वात्। नतु कर्त्तरि णक प्रत्ययान्तम्। क्रियायाः कर्त्तृत्वादि निमित्तमिति विग्रहः, क्रिया जन्यजनकान्तर्भूतेत्यर्थः। कारकं निमित्तं हेतुरिति पर्यायः लोकोतो व्यावहारात्।

यदि करोतीति कारकमिति णकप्रत्ययान्त स्यात् तदा कर्त्तृशब्देन समानार्थता स्यात् एवं सति स्वतन्त्रस्यैव करकपदेनाभिधानं स्यादिति। भाष्यकारस्तु करोतीति कारकमित्याह आ विक्लित्तेर्ज्वलनकियां कुर्वत् काष्ठमपि अधिश्रयणक्रियां कुर्वती स्थाल्यपि स्वावयवविक्लित्तिं कुर्वदन्नमपि वृक्षात् पत्रं पतति इत्यत्र पततः पत्रस्य विभागं यत्यात्मनो निमित्ततां कुर्वाणो बृक्षोऽपि विप्राय मां ददातीत्यत्र गोस्वीकारं कुर्वन् ब्राह्मणोऽपि कारकं भवत्येव, अतएव सर्वाण्येव कारकान्यभिधीयन्ते तेषान्तु सर्वेषामायोजनं कुर्वन् देवदत्तो मुख्यः सन् कर्त्ता भवति यदि पुनः स्वक्रियां कुर्वतां काष्ठादीनामपि मुख्यत्वं विबक्ष्यते तदा

**कारकञ्च कर्त्रादि षड्विधम्; तच्च पुनः प्रत्येकं द्विविधम्, उक्तमनुक्तञ्च।**

**११. आख्यातादयो यत्र क्रियन्ते तदुक्तम्।**

---

अथ कारकभेदानाचष्टे—कर्त्रादि षड्विधमिति। प्रत्येकं द्विविधमिति—उक्तकर्त्ता अनुक्तकर्त्तेति कर्त्तु र्द्वैविध्यम्; एवं कर्मकरणादिसर्वेषामेवोक्तानुक्तभेदेन द्वैविध्यमवगन्तव्यम्।

**अमृता०**—११. आख्यातादय इति। यत्र कारके आख्याता आदिना कृत् तद्धिताश्च क्रियन्ते तैराख्यातादिभिः प्रत्ययै स्तत्तत् कारकमुक्तं स्यात्। स्वयमेव सूत्रस्य फलितार्थं व्याख्याति—तथाहीत्यादिना। प्रकृतिरिह धातुः, प्रत्ययः स्वाद्याख्यातकृत्तद्धितरूपः। प्रकृतिश्च प्रत्ययश्च प्रकृतिप्रत्ययौ; तौप्रत्ययार्थं प्रकृत्यर्थसमन्वितं प्रत्ययार्थं सह युगपत् ब्रूतः कथयतः इतिन्यायार्थः। तथाहि—प्रकृत्यर्थान्वित स्वार्थबोधकत्वं प्रत्ययानामिति प्राञ्चः।

---

काष्ठं पचति स्थाली पचति ओदनः पचतीत्याद्यपि भवति तेषां मध्ये यदा यस्य क्रियावाप्यत्वं साधकतमत्वादिव्यापारभेदत्वापेक्षया विधीयते तदा कर्मकरणत्वादिकमिति। यथा चोक्तं—निष्पत्तिमात्रे कर्त्तृत्वं सर्वत्रैवास्ति कारके। व्यापार भेदापेक्षयां करणत्वादि संभव इति। तस्यचेति तस्य चोक्तलक्षणलक्षितस्य क्रियासंबन्ध विशेषिणः कारकस्य विशेषितां कर्त्तृत्वकर्मत्वादिरूपतां व्यञ्जयन्ति व्यक्तीकुर्वन्ति ये ते विशेषता व्यञ्जका ज्ञापकाः। आख्यातमाद्यं येषां ते अख्याताद्याः, द्वितीयाद्या येषां ते द्वितीयाद्याः। आख्याताद्याः इत्याद्य पदेन कृत्प्रत्ययस्य ग्रहणं, द्वितीयाद्या इत्याद्य पदेन तृतीयादेर्ग्रहणं प्रथमाया वाच्य वाचकता लक्षणसंबन्धमात्र व्यञ्जकत्वेन कर्त्तृत्वादि व्यञ्जकत्वाभावादीति।

ननु के कुत्र विशेषताव्यञ्जका इति चेत्तत्राह यत्रेति। यत्रकारके क्रियासंबन्धो मुख्यः प्रधानं तत्रविहिता आख्यातादयो विशेषताव्यञ्जका इति शेषः। यत्र तत् संवन्धः क्रियासंबन्धो गौणो भवति भाववाच्ये विहिता या क्रिया सा क्रियैव स्वयं मुख्या वा भवति तत्रानुक्तकारके सति क्रियामुख्यत्वे वा सति द्वितीयाद्य विशेषताव्यञ्जका भवन्तीति। क्रमेणोदाहरति यथेति। वैष्णवो भवतीति वैष्णवो वर्त्तमान सत्तानुकूलव्यापारवान् सत्ताक्रियायाः कर्त्तेत्यर्थः। संप्रदायिगुरोः सकाशात् गृहीतपञ्चसंस्कार विष्णवधिदैवतजनो वैष्णवः। दैवतं तावत् द्विविधं। यज्ञे पुरोडाशादिसंप्रदानं मंत्राराध्यञ्चेति। तत्रान्त्यं ग्राह्यमित्यत्र कर्त्तरि क्रिया संबन्धो मुख्यः, अतः कर्त्तरि आख्यातं विशेषताव्यञ्जकं नतु तृतीवेति कर्त्तु रनुक्तत्वाभावात् नात्र तृतीया न च तस्या विशेषता व्यञ्जकतेत्यर्थः। मालां करोतीति अत्र कर्मणि क्रियासंबन्धो गौणः। अतः कर्मणि द्वितीया विशेषता व्यञ्जिका नत्वाख्यातमिति नात्र कर्मण्याख्यातं अतः आख्यातस्य विशेषता व्यञ्जकता नास्तीत्यर्थः। वैष्णवेन भूयत इति अत्र क्रियैव मुख्या अतोऽनुक्तकर्तरि तृतीया विशेषताव्यञ्जिका नत्वाख्यातमिति नात्रकर्त्तर्याख्यातं किन्तु भावे, अतः आख्यातास्य विशेषताव्यञ्जकता नास्तीत्यर्थः।' तच्चकारकं षड्बिधं भवतीत्याह कारकञ्चेति। षड्विधमिति षट्प्रकारमित्यर्थः विधा विधौ प्रकारे चेति नानार्थवर्गः। तच्चेति षड्विधं कारकमित्यर्थः। प्रत्येकमिति कर्त्तृ द्विविधं कर्मद्विविधमित्येवं क्रमेणेत्यर्थः।

**तथाहि—प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूत इति न्यायेन प्रत्ययार्थस्यैव प्राधान्यात् कर्त्तृकर्मादिषु विहितानामाख्यातादीनां यो यत्र विहित स्तेन तदुक्तं स्यात्। अत उक्तात् नाममात्रार्थे द्योत्ये प्रथमैव, यदि बाधकान्तरं न स्यात्।**

---

ततः प्रकृतिप्रत्यययो युगपत् प्रत्ययार्थकथनात् तस्यैव प्राधान्यम्। तेन कर्त्तरि वाच्ये विहितो य आख्यातः कृत् तद्धितो वा, तेनाख्यातेन कृता तद्धितेनवा प्रत्ययेन सकर्त्ता उक्तो भवति। एवं कर्मणि वाच्ये विहितेनाख्यातादिना प्रत्ययेन तत् कर्म चोक्तं भवतीति सरलार्थः।

तत्र प्रत्ययेन कर्त्तृकर्मादिकारकधर्ममात्रमुच्यते न किन्तु कर्त्राद्यन्वितो नामार्थः; सच प्रथमयैव विष्णुभक्त्या द्योत्यते यदि बाधको न स्यात्। तत्राख्यातेन कर्त्तुरुक्तता—वैष्णवो भवतीत्यत्र दर्शिता। तेन च कर्मण उक्तता—वैष्णवेन माला क्रियत इत्यादौ। कर्त्तृकर्मणोरेवोक्तत्वमाख्यातेन नान्येषां करणादीनाम्। कृद्भिस्तु सर्वेषामेव कारकाणामुक्तत्वम्। यथा क्रमशः—कृष्णः पाता, अर्च्यः, जीवनं, दानीयः, प्रभवः गोचर इति। एवं तद्धितैश्चोक्तत्वंयथा—वैयाकरणः, चाक्षुषं ( रूपं ), आग्रभोजनिकः ( विप्रः ), प्रास्थिकं (क्षेत्रं) इत्यादि।

सर्वत्रावशेषे लुप्तस्यशक्त्यारोप इति न्यायेन समास विग्रहाणांलोपे सति तत्तच्छक्तेः समास एवावस्थानात् तैरपि कारकान्युक्तानि स्युः। क्रमाद् यथा—अतिक्रान्ता श्रियमतिश्री र्गोपी, आरूढः कृष्णो यं स आरूढकृष्ण। गिरिराजः, छिन्न श्चैद्यो येन तत् छिन्नचैद्यं चक्रम्, निहतः कंसो येन स निहतकंसः कृष्णः एवं दत्तसर्वस्वः कृष्णः, निर्गतगर्वो भक्तः, न्यस्तमना गोविन्द इत्यादयः। क्वचित् कृत्तुल्यार्थेनाव्ययेनापि कर्मोक्तं स्याद् यथा—विषवृक्षोऽपि सम्बर्द्धंच स्वयंछेत्तु मसाम्प्रतमिति बक्ष्यते। मनस्विगर्हितः पन्थाः समारोढुमसाम्प्रेतिमिति च दृश्यते।

---

**बाल०**—आख्या। तत्रोक्तलक्षणमाह। यत्रकारके आख्यातादयः क्रियन्ते तैराख्यातादिभिस्तत्तत्कारकमुक्तं स्यादित्यन्वयः। सूत्रस्य वैष्णवोमालां करोति इत्याद्युदाहरणार्थं न्याय पूर्वक वृत्त्या फलितार्थमाह प्रकृतीति। प्रकृतिस्तावन्नाम धातुभेदाद् द्विविधा। प्रत्ययस्तावत् स्याद्याख्यातकृत्तद्धितभेदाच्चतुर्विध इति विवेचनीयः। तत्र विषलृ व्याप्तौ तस्मात् कर्त्तरि कृत् विष्णाति व्याप्नोति सर्वानिति विष्णुः, अत्र व्याप्त्यर्थे विषधातुः। प्रकृतिः शीलार्थः क्नु प्रत्ययः प्रकृत्यर्थ गुणीभूतत्वेन तौ च द्वौ प्रकृति प्रत्ययौ सह युगपन्मिलित्वा प्रत्ययार्थं परस्परापेक्षिसाहित्यावश्यकनित्यतया व्याप्तिगुणशीलकर्त्तारं भगवन्तं यथा तस्तद्वदिहापीति। प्रकृतिश्च प्रत्ययश्च तौ द्वौ प्रकृतिप्रत्ययौ प्रत्ययस्यार्थं सह एकदा ब्रूत इति प्रत्ययार्थस्यैव प्राधान्यं प्रत्ययेनैवोक्तं भवतीति। कर्त्तृकर्मादिष्विति। तेषु वाच्येषु विहितानां कृतानां आख्यातादीनां मध्ये य आख्यातादि यत्र वाच्ये विहितस्तेनाख्यातादिना तत् कर्त्राद्युक्तं स्यादित्यर्थः। अतः हेतोर्नाममात्रार्थे द्योत्ये सति

## १२. उक्तादन्यदनुक्तम् ।

**यो यत्र न विहित स्तेन तदनुक्तं स्यात् । तत्र द्वितीयाद्याविधीयन्ते । यथा वैष्णवो मालां करोतीत्यत्र कर्त्तर्याख्यातेन कर्त्ता वैष्णव उक्तः, मालारूपं कर्म पुनरनुक्तमेव । बाधकान्तरे तु यथा—वैष्णवं मालां कुर्वन्तं पश्येत्यत्र कर्त्तृविहितेन शतृप्रत्ययनोक्तो वैष्णवः कर्त्ता, पश्येत्यस्य कर्त्तृविहितस्य कर्म, तेनानुक्तश्चेति ।**

**तदेवं द्वितीयाद्या भागशो विधातुं कारकभेदानाह—**

---

**अमृता०**—१२ उक्तादिति । यआख्यातादि र्यत्र वाच्ये न विहित् स्तेनाख्यातादिना तत् कर्त्रादि कारकमनुक्तं भवति । तत्र हि कारके द्वितीया तृतीयादयो विधीयन्ते, एवं ता एव द्वितीयादय स्तत्तत् कारकविशेषता (अनुक्तरूपा) व्यञ्जिका भवन्तीति निष्कर्षः । कर्त्ता वैष्णव उक्त इति—अत्रतिप् प्रेत्ययेन वैष्णवस्य कर्त्तृत्वधर्ममात्रमुच्यते, नामार्थ स्तु प्रथमया द्योत्यते । अत्रैत्र क्रियायाः सम्बन्धविशेषो मुख्यरूपेण विभाति । कर्म वक्तु तस्याशक्तेरित्यर्थः । ततः कृति क्रियायाः सम्बन्धविशेषस्य कर्मणि गौणत्वेनानुक्ते तस्मिन् द्वितीया, अनुक्ते कर्मणि द्वितीयेति बक्ष्यमाणानुसारात् ।

उक्तकारके नाममात्रातिरिक्तोऽर्थः (क्रिया सम्बन्धविशेषः) गम्यते चेत्तदातु प्रथमा बाध्यत एवेत्याह—बाधकान्तरेत्विति । कर्त्तृविहितस्य कर्मेति—पश्येत्यत्र कर्त्तरि वाच्ये विहितेन 'हि'प्रत्ययेन कर्त्ता 'त्वम्' उक्तः । ततः शतृशानयोः कृतो; क्रियान्तरापेक्षित्वेन मुख्यत्वाभाद् गौणमुख्ययो र्मुख्ये कार्यसम्प्रत्यय इति न्यायेन पश्येति मुख्य क्रियायां वैष्णवस्य कर्मसम्बन्धानुरोधाच्च तत्क्रियान्विताख्यातेन वैष्णवोऽनुक्तः; अतः सम्बन्ध विशेषेण नाममात्रातिरिक्ततया प्रथमा बाधितेतिभावः ।

---

उक्तान्नामः प्रथमैवेति भवतीति शेषः । यदीति बाधकान्तरसत्त्वे प्रथमा न भवतीति ॥११॥

**बाल०**—उक्ता । य इति य आख्यातादि र्यत्र वाच्ये न विहितस्तेन आख्यातादिना तत् कर्त्रादि अनुक्तं स्तात् इति । मालारूपं कर्म पुनरनुक्तमेवेति आख्यातस्य कर्मण्य विहितत्वादिति शेषः । अत्र कर्त्तरि उत्पादनार्थ कृति क्रियासम्बन्ध मुख्यत्वेन तदवाच्य-विहितेति वाख्यातेनोक्त वैष्णवः कर्त्रेति तत् कृति साध्य उत्पाद्ये कर्मणि मालारूपे तत् कृति क्रिया सम्बन्धे गौणत्वेन कर्मणि वाच्ये तदाख्याताद्यविहितत्वात् अनुक्ते कर्मणि द्वितीयेत्यनेन द्वितीयेति । बाधकान्तरे तु यथारूपं दर्श्यते । कुर्वन्तामिति डुकृञ करणे शतृ तस्याच्युताभावात् शपीऽपवाद उः गोविन्दः करोत्यरामस्य उर्निर्गुणे इत्यनेन उः । उद्वयं वः, ततः कुर्वच्छब्दादम् । अच इत्यादिना नुम् । तेनानुक्तश्चेति प्रधानाऽप्रधानयोः प्रधाने कार्यसंप्रत्यय इति न्यायात् इति भावः । तदेवमिति द्वितीयाद्याः विष्णुभक्तिर्भागशः पृथक् पृथक् विधातं कर्तुं ॥१२॥

## १३. स्वतन्त्रं तत्प्रयोजकश्च कर्त्तृ ।

**यस्यैव व्यापारतया विवक्ष्यते तत् स्वतन्त्रम्, यच्च तस्यापि प्रेरकतया तत् प्रयोजकम् । तत्तच्च कारकं कर्त्तृ संज्ञं स्यात् । अर्थ विशेषणत्वे तु कर्त्तेति पुंलिङ्गत्वम् । यः करोति स कर्त्ता, कारयति यः सहेतुश्चेति**

---

अमृता०—१३. स्वतन्त्रमिति । यस्यैव व्यापारतया साध्यतया क्रिया साध्यत्वेनाभिधीयमाना जन्यजनकान्तर्भूतलक्षणा वक्तुमिष्यते तत् स्वतन्त्रं नाम कर्त्तृकारकम् । तस्यापि स्वतन्त्रस्यापि प्रेरकतया यद् विवक्ष्यते तद्व प्रयोजकं नाम कर्त्तृकारकम् । विवक्ष्यत इति पदेन—"विवक्षातश्च कारकादीनि" इति भावि वचनार्थं ध्वनयति । तथा चोक्तम्—निष्पत्तिमात्रे कर्त्तृत्वं सर्वत्रैवास्ति कारके । व्यापार भेदापेक्षायां करणत्वादि सम्भव इति । यथा—विष्णुमित्रः काष्ठैः स्थाल्यामोदनं पक्त्वा मथुराया आगताय वैष्णवाय अर्पयतीत्यत्र विष्णुमित्रस्य हि पचनक्रियानुकूल व्यापारो मुख्यतया विवक्षित इति तस्यैव कर्त्तृत्वम् । अन्येषां काष्ठादीनां क्रियायां गौणतया सम्बन्धविशेषवत्त्वात् करणत्वादिकम् । तथाहि—ज्वलनक्रियां कुर्वत् काष्ठम, अधिश्रयणादि क्रियां कुर्वती स्थाली, स्वावयवविक्लित्ति दोदनम्, विभाग प्रति आत्मनो निमित्ततां कुर्वती मथुरा, तथा अन्नस्वीकारं कुर्वन् वैष्णवश्च कारकं स्यादेव । तस्माद् यदाकाष्ठादीनामेव व्यापारतया क्रिया विवक्ष्यते तदा तु—काष्ठं पचति ओदनः पचति, स्थाली पचतीति भवत्येव कर्त्तृत्वं काष्ठादीनाम् ।

अर्थविशेषणत्वे त्विति—वैष्णवः कर्त्तेत्यत्र अर्थस्य पदार्थस्य ( वैष्णव इत्यस्य ) विशेषणत्वात् कर्त्तृशब्दस्य पुंलिङ्गत्वम्, सूत्रे कारकविशेषणत्वाद् ब्रह्मत्वमित्यर्थः । छात्राणां बुद्धिप्रसाराय कलापोक्तिमपि न्यस्यति—यः करोतीत्यादि । ननु वैष्णव ओदनं भुङ्क्ते, मथुरां गच्छतीत्यादिषु भोजनगमनादिक्रियासु करोतेर्विरहात् कलाप लक्षणेऽव्याप्तिरिति शङ्कायां समाधत्ते—कृञर्थस्येति । कृधातोरर्थस्य सर्वेषु हि धातुषु अनुगतत्वात्

---

बाल०—स्वत । तत्र स्वतन्त्रलक्षणमाह यस्यैवेति । यस्य कारकस्यैव व्यापारतयेति साध्यतया जन्यजनकान्तरर्भूता क्रियेत्यर्थः । नन्वेवं सति वैष्णवाचार्योऽश्वेन ग्रामं गच्छतित्यादौ कथं नाश्वस्य कर्त्तृत्वं क्रियायास्तद्व्यापारत्वात् उच्यते अत्राश्वस्य कर्त्तुरधीनत्वेन क्रियायां साहाय्यमात्रं विवक्ष्यते नतु स्वातन्त्र्यं । स्वातन्त्र्यविवक्षयां तु अश्वो ग्रामं गच्छतीति भवत्येव । प्रयोजकलक्षणमाह यच्चेति । तस्य स्वतन्त्रस्य । अधिकारात् प्रयोजकस्य प्रेरकतया नियोगकर्त्तृत्वेन विवक्ष्यत इति शेषः । प्रयोजकमित्युक्ते प्रयोज्याकर्षणं भवत्येव । तथापि तत्पदं स्पष्टतार्थं । यत्प्रयोजयतीति तत्प्रयोजकमित्यर्थः । ननु विष्णुमित्रेण वैष्णवोऽन्नं पाचयतीति । इत्यत्र ण्यन्ताभिहितायां प्रेरणक्रियायां स्वातन्त्र्येणैव कर्त्तृत्वे सिद्धे प्रयोजकत्वेन कर्त्तृत्वमनर्थकमिति न वाच्यं एवं सति यथा विष्णुमित्रं पक्तुं प्रयुङ्क्ते इत्यत्र नावश्यं पाकनिष्पत्तिः प्रतीयते तथा विष्णुमित्रेण वैष्णवः पाचयति इत्यत्रापि नियमसिद्धा पाकनिष्पत्ति र्न प्रतीयते अपि च प्रेरणक्रियायाँ भूतायां

कालापाः, कृञर्थस्य धातुष्वनुगतत्वात् । किन्तु तद्द्वयमिदमुदाहरणमेव नतु लक्षणम् ।

अतः स्वतन्त्रस्य केवलस्वातन्त्र्येण प्रयोजकमात्राधीनत्वेन च द्विधात्वम् । ततश्च—

कर्त्ता स्वतन्त्र इत्युक्तो हेतुकर्त्ता प्रयोजकः ।
प्रयोजकाधीन कर्त्ता प्रयोज्य इति स त्रिधा ।।

अथ कर्त्तरि परपदादिविधानात् तेनोक्ते तत्र प्रयोगं दर्शयति । तत्र चोक्तकारकसम्बन्धेन क्रियापदस्य नानारूपत्वमाह ।

---

अन्तर्भूतत्वादित्यर्थः, गमनं करोति भोजनं करोतीत्यादि व्यवहारसिद्धत्वादितिभावः । नतु लक्षणमिति—तत्र यः करोतीति वर्त्तमाननिर्देशात्—अगच्छत् वैष्णवोमथुरां, गमिष्यति वेति भूते भविष्यति चाव्याप्तेः । अतएव तत्रत्य टीकायां निष्कृष्ट लक्षणम्—प्राधान्येन धातुवाच्य व्यापारवत्त्वं कर्त्तृत्वमिति कविराजः ।

कारयतीति—कुर्वन्तं प्रेरयति, प्रेरणाद्यर्थे णिः । ननु राजाविप्रेणान्नं पाचयतीत्यादौ ण्यन्ताभिहितायां प्रेरणक्रियायां स्वातन्त्र्येण हि कर्त्तृत्वे सिद्धे पचि क्रियायां प्रयोजकतया कर्त्तत्वमनर्थकमिति चेन्मैवम्, राज्ञः प्रेरणक्रियायां स्वातन्त्र्यम्, पचिक्रियायान्तु प्रयोजकत्वमिति । अन्यथा पाक क्रियायां राज्ञः कर्त्तृत्वाभावे—राजाविप्रेण पाचयते इत्यत्र "कर्त्तृगाभिक्रियाफले" इत्यनुशासनत आत्मपदत्वं न सङ्गच्छते क्रियायाः । तस्मात् प्रयोज्यकर्त्तु स्तु पाकनिष्पादनक्रियायां स्वातन्त्र्यं निर्बाधमिति सुपद्म मकरन्दे विष्णुमिश्रः ।

अथस्वतन्त्रकर्त्तु रेव द्वैविध्यमुपपादयति—कर्त्ता स्वतन्त्र्य इति कारिकया । इह स्वतन्त्र कर्त्तु रवस्थाभेदेन हि संज्ञाभेद । यथा प्रेरकरहिततया कर्त्ता स्वाधीन स्तदासौ केवल स्वतन्त्र उच्यते, यदा तु—प्रेरकस्यानुवर्त्तीतदा प्रयोज्यइत्यस्य पृथक् कर्त्तृत्वं न गणनीयम् । तस्मात् "स्वतन्त्रं तत्प्रयोजकश्च कर्त्तृ" इतिलक्षणं सङ्गतमेव ।

---

पचिक्रियायां भविष्यन्त्यामपि विष्णुमित्रेण वैष्णवोऽपाचयदितिस्यात् किञ्च यशोदाया अन्नं पाचयते कृष्ण इत्यत्र पाकक्रियायां कृष्णस्य कर्त्तृत्वाभावे कर्त्तृगामीक्रियाफलस्याभावात् आत्मपदं न स्यात् । तस्मात् वैष्णवादेः प्रेरणक्रियायां स्वतन्त्रकर्त्तृत्वं पचिक्रियायां तुप्रयोजककर्त्तृत्वमिति । कारक विशेषणत्वेन कर्त्तृशब्दस्य ब्रह्मत्वमुक्त वाच्यलिङ्गत्वेन पुंस्त्वमपि साधयति अर्थेति अर्थद्धोऽत्राभिधेयवाची । कर्त्तेति कर्त्तेत्यस्य पुंलिङ्गत्वमिति । यः करोतीति कर्त्ता हेतुश्चेति कर्त्तेत्यर्थ । कर्त्तेति कृधातो कर्त्तरि तृण तस्मात् कालापानामन्वर्थमिदं लक्षणं । ननु तर्हि कथं वैष्णवो महाप्रसादं खादति मथुरां गच्छतीत्यादौ कर्त्तृत्वं, कृतेरभावादिति चेत्तत्राह कृञर्थस्येति । कृधातोरर्थस्य धातुषु धात्वर्थेष्वनुगतत्वादिति किन्त्विति कालापानां लक्षणे कोऽपि विरोधो नास्ति किन्तु तेषां कालापा

**१४. उक्तानुरूपमेव पुरुषवचनादिकं क्रियापदे ।**

**यथा उक्तत्वेन विवक्षिते नाम्नि प्रथमपुरुषः, युष्मदि मध्यमः, अस्मद्युत्तमवचनानि च तद्वदिति । वर्त्तमान काले तिवादयः कर्त्तरि परपदादिकम् । वैष्णवो भवति । वैष्णवो वर्त्तमान सत्ताक्रियायाः कर्त्तेत्यर्थः । तदनुकूलव्यापारत्वेन तत्रस्वातन्त्र्यात् । अत्र क्रियायाः कर्त्तेत्यर्थः । कर्त्तृसम्बन्धो मुख्यः कर्त्तुरेव वाच्यत्वात् । एवं वैष्णवो भवतः, वैष्णवा भवन्ति । एवं भवान् भवतीति । हे वैष्णव त्वं भवसि, युवां भवथः, यूयं भवथ । अहं भवामि, आवां भवावः, वयं भवामः ।**

---

अमृता०—१४ उक्तेति । क्रियापद उक्तस्य कारकस्य अनुरूपं सदृश पुरुषो वचनञ्च प्रयोज्यते । आदि शब्दइह लिङ्गस्यग्राहकः, तच्चकृत्क्रियाया एव । यद्यपि क्रियाप्रधानमाख्यातं साधन प्रधानं कृदिति, तथा कृदभिहितो मावो द्रव्यवत् प्रकाशत इति च वचन वर्त्तते तथापि "विष्णुनिष्ठा कृत्यादयश्चाख्यातवन्मुख्या इत्यतिदेशस्य बलवत्त्वाद् विष्णुनिष्ठादयो मुख्यक्रिया वदेव व्यवह्रियन्ते । ततस्तेषामुक्तकारकविशेषणत्वेन तल्लिङ्ग विष्णुभक्तिवचनभाक्त्वं प्रसिद्धम् । यथा रोहिणी पाकं कृतवती, वृन्दावनं दृष्टं चत्तेन, कृष्णः सेव्यः, सतां मर्यादा रक्षणीया इत्यादि ।

---

दीनामिदं द्वयमस्माकमुदाहरणमेव पोषकमेव नतु लक्षणमिति स्वतन्त्रमित्यादिलक्षणस्य विराजमानत्वादिति शेषः । ननु स्वतन्त्रं तत् प्रयोजकं च कर्त्तृ इत्युक्तं तर्हि कथं प्रयोज्यस्य कर्त्तृत्वमिति चेत्तत्राह अत्रेति । स्वतन्त्रस्यैव द्विधात्वं नतु प्रयोज्यः पृथक् कर्त्तेत्यर्थः । ततश्चेति स्वतन्त्रस्य द्वैविध्यात् सह इति कर्त्तेत्यर्थः । अथेति । कर्त्तरि वाच्ये । तेन परपदादिना उक्ते तत्र कर्त्तरि । परपदादीत्यादिपदेन आत्मपदादेर्ग्रहणं । तत्र चेति तत्र कारकेषु । उक्तेति । उक्तस्य कारकस्य सम्बन्धेनेति आह इति प्रशस्तपण्डित इत्यर्थः । उक्ता । उक्तस्यानुरूपं सदृशं पुरुषश्च वचनञ्च तदादिकं । तद्विवृणोति यथेति । उक्तत्वेन विवक्षिते वक्तुमिष्टे नाम्नि वाच्ये क्रियापदे प्रथमः पुरुषो भवति उक्तत्वेन विवक्षित इति युष्मदि अस्मदि च योज्यं । तद्वदिति उक्तानुरूपमेवेत्यर्थः । पुरुषवचनादिकमित्यत्रादिशब्देन बहुप्रयोजक इति ज्ञेयं । वर्त्तमान इत्यादौ परपदादिकं यथा स्यात् तथा धातोरुत्तरे । तदनुकूलेति । तस्याः सत्तायाः अनुकूलः सहायो व्यापारश्चेष्टा यस्य तत्तेन । तत्र सत्तायां । अत्रेति अत्रोदाहरणे क्रियायाः कर्त्तृसम्बन्ध इति कर्त्रा सह सम्बन्ध इत्यर्थः । एवं भवान् भवतीति, युष्मदर्थ भवद्योगे मध्यमो नेष्यते बुधैरिति भवच्छब्दस्य युष्मद्वाचित्वेऽपि न मध्यमः । लभ्यत इति युष्मदादीति शेषः । अस्मीति अहमित्यस्य निपातत्वेन अस्मद्वाचित्वं तेन हेतुना तद्योगेऽप्यस्मीत्यस्य योगेऽपि । त्वामिति विदुषां पण्डितानां समवायः समूहः । ननु घटो भवतीत्यादौ कथं घटादीनां कर्तृत्वं क्रिया व्यापरत्वाभावादिति चेत्तत्राह घट इति अत्र हेतुः उपचारादिति अचेतनत्वेनाव्यापारवत्यपि व्यापारवत्त्वोपचारादित्यर्थः ॥ १३ ॥

**युष्मदाद्यप्रयोगेऽपि लभ्यते, भवसीत्यादि । अस्मि इत्यव्ययमहमित्यस्य-निपातोऽस्ति । तेन तद्योगेऽप्युत्तमः । यथा— त्वामस्मि वच्मि विदुषां समवायोऽत्रतिष्ठतीति । घटो भवतीत्यादावचेतनेऽपि स्वातन्त्र्य-मुपचारात् ।**

## १५. नञ् प्रयोगेऽपि कर्त्तृत्वादि ।

**वैष्णवो न भवतीत्यादौ ।**

---

युष्मदाद्यप्रयोगेऽपि लभ्यत इति—आदि शब्देन अस्मदो ग्रहणम् । उक्तानुरूप-मित्यादि परिभाषार्थो विपर्य्ययेणापि लब्धुंशक्यते, यथा—क्रियापदानुरूप पुरुषवचने उक्तकारके स्यातामिति । तेन भवसीत्यत्र मध्यमपुरुष एकवचनश्चोक्तकारकस्य लाभात् त्वमित्युक्तकर्त्ता अर्थाल्लभ्यते । एवं भवाम इत्यत्र उत्तम पुरुष बहुवचनानुरूपं वयमित्युक्त कर्त्ता लभ्यते ।

ननु घटो भवतीत्यादौ कथं घटादेः कर्त्तृत्वं, क्रिया व्यापारस्य चेतनधर्मत्वादिति चेत्तत्राह—अचेतनेऽपीति । तत्र अचेतनेऽपि सचेतनत्वमुपचर्यते, अन्यथा घटादेः कर्त्तृत्वं नहि सम्भवतीत्यर्थः ।

**अमृता०**—१५ नञिति । नञः प्रयोगेऽपि कर्त्तृत्वादि भवति । इह कर्त्तु व्यापार-तया क्रियाया विविक्षातः कर्त्तृत्वेऽप्रासे विधानम् । आदिपदेन कर्मादि च भवेत्—मिथ्यां न भवेदित्यादे । तथा चोक्तं भर्त्तृहरिणाप्रवृत्तौ च निवृत्तौ च कारकाणां य ईश्वरः । अप्रयुक्तः प्रयुक्तोवा सकर्त्ता नाम कारकम् । इति । कारकाणामीश्वरः प्रधानभूतः प्रवृत्तौ क्रियानिष्पत्तौ (वैष्णवो भवतीत्यादौ) अन्येन प्रयोजकेन प्रयुक्तः प्रेरितः अप्रेरितो वा यथा कर्त्ता भवति तथा निवृत्तावपि भवतीत्यर्थः । तत्र प्रयुक्तः—वैष्णवाचार्यो वैष्णवं भावयतीत्यादौ । अप्रयुक्तः केवल स्वतन्त्रः, निवृत्तौ स उदा हृतो नञ्प्रयोगे मूले । नञ् चात्र क्रियया सान्वयात् प्रसह्यप्रतिषेधार्थको ज्ञेयम् । यथोक्तम्—अप्रधान्यं विधेर्यत्र प्रतिषेधे प्रधानता । प्रसह्य प्रतिषेधोऽसौ क्रियया सह यत्र नञिति । तदेतत् समास प्रकरणे सविशेषं विवरिष्यामः ।

---

**बाल०**—नञ् । प्रधानत्वं विधे र्यत्र प्रतिषेधेऽप्रधानता । पर्यु दासः स विज्ञेयो यत्रोत्तरपदेन नञ् । इति । अप्राधान्यं विधे र्यत्र प्रतिषेधे प्रधानता । प्रसह्यप्रतिषेधोऽसौ क्रियया सह यत्र नञ् इति । नञः प्रयोगो नञ्प्रयोगस्तस्मिन् सत्यपि कर्त्तृत्वादि स्यात् । आदिपदेन कर्मत्वकरणत्वादे र्ग्रहणं । वैष्णवो न भवतीत्यादी क्रियाकर्त्तृत्वादि-सम्बन्धाभावादप्राप्तमपि कर्त्तृत्वादिलक्षणकरणाद्भवतीत्यर्थः ॥ १४ ॥

**बाल०**—वाच्य । वाच्यस्य अभिधेयस्यैव लिङ्गं येषां । तुल्यमधिकरणं वाच्यस्य येषां तानि च तानि विशेषणानि चेति तेषां विशेष्यवल्लिङ्गादि स्यात् । आदिपदेन वचनादे र्ग्रहणं । उत्तमो वैष्णवो भवतीति यत्र वैष्णवस्तत्रैवोत्तमत्वमिति तुल्याधिकरणता ।

## १६. वाच्यलिङ्गानां तुल्याधिकरणविशेषणानां विशेष्यवल्लिङ्गादि।

**उत्तमो वैष्णवो भवति, उत्तमौ वैष्णवौ भवतः। वैष्णवस्त्वं भवसि। युष्मदाद्यप्रयोगेऽपि वैष्णवो भवसीत्यादि।**

---

अमृता०—१६ वाच्येति वाच्यस्य अभिधेयस्य लिङ्गं येषाम्, त्रिष्वेव लिङ्गेषु प्रयोज्यशब्दानामित्यर्थः। कथम्भूतानां? तुल्याधिकरणानि च तानि विशेषणानि च तेषां विशेष्यवत् लिङ्गादि स्यात्। आदि शब्देन विष्णुभक्ति वचनानि च विशेष्यवत् स्युः। वाच्यलिङ्गानामिति किम्? अजहल्लिङ्गानां माभूत—गतिः कृष्णः, वेदाः स्वतः प्रमाण-

---

वैष्णवस्त्वं भवसीत्यनेन युष्मदो विशेष्यत्वं लभ्यत एव तस्य विशेषणत्वेन वैष्णव इति प्रयुज्यते। वाच्यलिङ्गानामिति किं प्रधानं राधागतिः कृष्णः आश्रयो वृन्दावनं। अत्र तुल्याधिकरणत्वमस्त्येव किन्तु न वाच्यलिङ्गत्वमिति। तुल्याधिकरणेति किं, भक्तस्य कृष्णः, अत्र भक्तशब्दस्य वाच्यलिङ्गत्वमस्त्येव किन्तु न तुल्याधिकरणत्वमिति। तुल्याधिकरणत्वं हि भिन्नप्रवृत्तिनिमित्तयोरेकस्मिन्नर्थे वृत्तिरिति य एव कृष्णः स एव भक्त इति न किन्तु भक्तसम्बन्धी कृष्णः। अनयोर्विशेष्यविशेषणत्वं भेद्यभेदकयोरित्यादावुक्तमेव ननु तथापि तुल्याधिकरणेति किमर्थं यतः षष्ठ्युत्पत्तिस्तु भेदकादित्यनेन व्यधिकरणविशेषणात् षष्ठ्येव भविष्यति। उच्यते। स्पष्टतार्थमेतदिति।

उक्तानां। उक्तानां कारकाणां पृथक् निर्देशे पृथग्योगे प्रत्येकमिति एकमेकं प्रति प्रत्येकं षष्ठ्यन्तमेतत् एकैकस्तेत्यर्थः। उक्तानामित्यत्र बहुवचनमनियतं तेनोक्तयोरपि। ब्रह्मरातः शुकदेवः, विष्णुरातः परीक्षितः। उक्तानुरूपमेव पुरुषवचनादिकं क्रियापदे इत्यस्योक्तत्वात्। ब्रह्मरातविष्णुरातौ भवत इत्यत्र भवतीति च भवत्येव च शब्दस्यार्थद्वैविध्यस्वीकारात् तथापि पृथगिति कृतं स्पष्टतार्थमिति ज्ञेयं।

युग। युगपदिति युगपदेकदावचने एकवचने द्विवचनेबहुवचने प्राप्ते सति य इति पुरुष इत्यर्थः। समुदायसंख्यामपेक्ष्येति समुदायस्य संख्यामपेक्ष्य भवतीत्यर्थः। नतु प्रत्येकसंख्यापेक्ष्यमिति। कृष्णश्च त्वञ्च भवथ इति अत्रैकदैव नाम्नि प्रथमपुरुषैकवचने युष्मदि मध्यमपुरुषैकवचने प्राप्ते तयोः परो मध्यम एव स्यात् समुदायस्य द्वित्वात् तस्य द्विवचनं थसातौ चेति ताविर्त्यनेन पूर्वोक्तयो र्नामयुष्मदोः परामर्षः। अत्र नाम्नि प्रथमपुरुषैकवचने प्राप्ते तेषां परो उत्तम एव स्यात् समुदायस्य बहुत्वात्तस्य वचनं मस्। पुरुषाणां परत्वन्तु प्रथममध्यमोत्तमानामिति पाठक्रमेण ज्ञेयं नतु विवक्षाक्रमेण। एतत् सूचयितुमाह वैपरीत्येति। वैपरीत्येन व्यक्तिक्रमेण निर्द्देशेऽपि तेषां परः स्यादिति शेषः। पुरुषाणां युगपद्वचनप्राप्तिस्तु क्रियाकालयोरेकत्व एव सम्भवतीति। स भवति त्वं गच्छसि इत्यादौ स पचति, त्वं पक्ष्यसि इत्यादौ युगपद्वचनप्राप्तेरसम्भवः॥

अथेति। आत्मपदेति। आत्मपदप्रथमैकवचनमेव भावे इति नियमादिति शेषः। तेनेति। तेन आत्मपदप्रथमपुरुषैकवचनेन अनुक्ते इति तस्य कर्त्तर्यविहितत्वादिति शेषः॥ १५॥

**१७. उक्तानां पृथङ् निर्देशे प्रत्येकं समुदायस्य वा संख्यामपेक्ष्य वचनानि स्युः ।**

**यथा—ब्रह्मरातश्च विष्णुरातश्च भवति भवतो वा ।**

---

मित्यादि । तुल्याधिकरणेत्यादि किम् ? व्यधिकरणे न,—कृष्णस्य सखा । उत्तमो वैष्णव इति—यत्रैव वैष्णवता तत्रैवौत्तमता, अतस्तुल्याधिकरणत्वम् ।

**अमृता०**—१७ उक्तानामिति । उक्तानां कारकाणां पृथक्‌निदेशे असमासे, एकमेकं प्रति प्रत्येकम् एकैकस्येत्यर्थः, समुदायस्य वा संख्यामपेक्ष्य वचनानि स्युः । उक्तानामित्यत्र बहुबचन प्रयोग स्तदन्तर्गतद्विवचनस्य च लाभार्थः । तेन उक्तयोः पृथक् निर्देशेऽपि यथा स्यात् तद् दर्शयति—ब्रह्मरातश्चेति । ब्रह्मरात्ः शुकमुनिः, विष्णुरातः परीक्षित् । चशब्दस्य समुच्चयेतरेतरयोगेद्योतकत्वं दर्शितं नामप्रकरणे । तत्र समुच्चयः समासाविषयः, इतरेतरयोगस्तु समास विषय इत्यपि वक्ष्यते । यदा समुच्चयार्थ स्तदा प्रत्येक द्योतकत्वादेकैकस्योक्तकारकस्य संख्यामपेक्ष्य वचनं भवेत्, यदा पुनरितरेतरयोगार्थ स्तदा समुदायद्योतनात् समुदायस्योक्तस्य संख्यामपेक्ष्य वचनम् । अस्मिन्नर्थे समासे उद्‌भूतावयवसंख्यत्वात् तदनुरूपं वचनं सिद्धमेव—ब्रह्मरात विष्णुरातौ भवत इति । मूले एतस्य-वाक्यमुद्दिश्य द्वित्वंदर्शितम् । इयञ्च व्यवस्था प्रथमपुरुष परा, पुरुषत्रय व्यामिश्रे तूत्तरसूत्रे नियममाचष्टे ।

---

**बाल०**—अनु । सुगमं । कारकान्तरेति । कारकान्तरे कर्मादौ द्वितीयादिविष्णुभक्तिविधानेऽपीति । ननु उक्तत्वात् प्रथमैवेत्युक्तमतोऽनुक्तएव द्वितीयादयो भवन्ति किमनुक्त इत्यनेन इति चेत्तत्राह स्पष्टार्थश्चैतदिति । अन्यथा अस्पष्टता स्यादिति शेषः । अस्पष्टेत्वेहेतुमाह उक्त इति । तदभावस्य तृतीयाद्यभावस्य न्यायसिद्धत्वादिति न्यायलभ्यत्वात् । शब्दोऽर्थः स्पष्टोभवतीत्युक्तमत उक्त तदभावस्य अस्पष्टता स्यादिति भावः । कथमिति कथं नोक्तार्थकं स्याद् द्विशब्देनैव द्वित्वसंख्याया उक्तत्वादिति । उच्यत इति । सिद्धान्त इति शेषः । अवधारणार्थं नियमार्थं नतु तस्या द्वित्ववाचित्वं । ततश्चैषां जनानां मध्ये वैष्णवावेव भवत इत्यर्थः । स्वतन्त्रः कर्त्तेति कथित इति शेषः । भावयतीति प्रेरणार्थणिः कर्त्तर्याख्यातविधानात् प्रेरणकर्त्ता कृष्ण उक्तः । भवन्तमिति शत्रन्तस्य रूपं भवन्तं जनमित्यर्थः । अत्र प्रयोजकस्य परमतेन सम्यक्‌कर्त्तृत्वं प्रतिपद्यते । सविशेषणे विधिनिषेधौ विशेषणमुपसंक्रामतः सति विशेष्येबाधे । यथा एकतारं नभो दृष्ट्वास्मर्त्तव्यो नारदोमुनिः । निषेधे यथा,-दृष्ट्वा । त्वं वैष्णवं भक्तो नाश्नीयात् पानभक्षणे । कृष्णः प्रयोज्यवैष्णवस्य वर्त्तमानभवनप्रेरणक्रियायाः कर्त्ता प्रयोजकः । सत्ताप्रेरणानुकूलव्यापारत्वेन तत्र सत्ताप्रेरणे प्रेरकत्वात् प्रयोज्यवैष्णवकर्मकवर्त्तमानभवनप्रेरणानुकूलव्यापारवान् कृष्णः । कृष्णावतार इति कृष्णस्यावतार इति विग्रहः । अवतारः अवतरणं । श्यामरामसमासन्तु न सभ्यः कृष्णस्यावतारित्वात् । यदुक्तं श्रीमद्भागवते । एते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयमिति । मुक्तानां भविष्यन्निति अन्येषां हतारिगतिदायकत्वाभावादिति शेषः ।। १६ ।।

## १८. युगपद्वचने पुरुषाणां परः ।

**प्रथममध्यमोत्तम संज्ञानां युगपद्वचने प्राप्ते तेषां मध्ये यो द्वयो र्बहूनां**

---

**अमृता०**—१८ युगपदिति । युगपद् वचने एकदा कथने । पुरुषाणां परत्वमिह न तु विवक्षाधीनमित्याह—प्रथममध्यमोत्तम संज्ञानामिति । तेषां परत्वञ्च सर्वादिषु तदादिगणे पाठक्रमतो हि ज्ञातव्यं नतु यदृच्छम् । तत्र तद्रूपेणैव निर्देशात् । तच्च पुनः—"अन्यैः सहोक्तौ तदादेः, तदादिभिस्तु परपरस्य" इति रामकृष्णसमासे एकशेष-

---

**बाल०**—क्रिया । यस्य साधिका यत्साधिकेति । साधिकेति । यत् साध्नोतीति कर्त्तरि णकः । ननु क्रिया यस्य व्यापारतया विवक्ष्यते तस्य स्वातन्त्र्यमुक्तं तर्हि कथं क्रियायाः स्वातन्त्र्यमिति चेत्तत्राह साधिकेतीति । दृष्टान्तमाह साधकतममिति । करणस्य साधकतमत्वमारोप्यते तथा क्रियायाः साधकत्वाभावेऽपि साधकत्वमित्यस्मिन्नंशे दृष्टान्तः ।

तेने । एतादृशेन स्वातन्त्र्यक्रियाघटितलक्षणकरणेन हेतुनेत्यर्थः । कर्त्तु रनीप्सिततमस्यापि कर्मत्वं स्यादिति । साधिकेत्यकृत्वा कर्त्तुः समुद्दिष्टं कर्म कर्त्तुर्व्याप्यं कर्मेत्येवम्प्रकारेण लक्षणस्यान्यप्रकारत्वे सति अनीप्सिततमविषस्य कर्मत्वं न स्यादित्यभिप्रायः । तस्मात्तत्र लक्षणेऽपि कर्त्तुः क्रियायाः समुद्दिष्टं कर्मेति कर्त्तुः क्रियया व्याप्यं कर्मेति च व्याख्येयमिति । भक्षयतीति भक्ष अदने चुरादि । यत् क्रियते तत् कर्म इति अत्रापि कृष्णर्थस्य धातुष्वनुगतत्वादिति हेतुर्निर्देश्य । ननु साध्नोति उत्पाद्याद्यवस्थां प्रापयति या सा साधिका । साध्येत यत् तत् साध्यं । अनयोराक्षेपेणोद्दिष्टं साधनार्थमित्युक्तं साधनमेव किमिति तत्राह तत्रेति । या साधनार्थं प्रवर्त्तते तयैव क्रियया कर्त्तृभूतया प्रकारविशेषेण सम्पादनं निष्पादनं साधनमुच्यते । प्रकारविशेषस्य पाञ्चविध्यमाह उत्पाद्यतयेत्यादिरूपेण प्रकारबिशेषेणेत्यर्थः । क्रियया यस्योपस्थितिस्तदुत्पाद्यं तस्य भावस्तत्ता तयेति सर्वत्र ज्ञेयं । तस्मात्तयैव साधिकतया क्रियया उत्पाद्यतया प्रकारविशेषेण सम्पादनं साधनं उत्पादनं नाम भिद्यते अतः क्रिया उत्पादिका उच्यते तद्योग्यतारूपसाधन मुत्पादनं तत्साध्यकर्मणि परिणमते इति तन्नाम उत्पाद्यकर्मेति । एवमुत्तरत्रापि योज्यं । अतः क्रिया पञ्चविधा । उत्पादिका, विकारिका, संस्कारिका, प्रापिका, त्याजिका इति । साधनमपि पञ्चविधं । उत्पादनं, विकारणं, संस्करणं प्रापनं, त्याजनं । तत्साध्यं कर्मापि पञ्चविधं । उत्पाद्यं, विकार्यं, संस्कार्यं प्राप्पं, त्याज्यमिति । क्रियात्र अन्तर्भूतण्यर्थानां धातूनामर्थस्तेषामेव वस्त्वन्तरसाधनयोग्यतास्ति नतु सत्ताद्यर्थानां अन्तर्भूतण्यर्थशून्यानां तेषां वस्त्वन्तरसाधनासमर्थो वक्ष्यते । यथा मालां करोति, पुत्रं प्रसूते इत्यादि । उत्पाद्यं क्रियया यस्य विद्यमानस्यैव अनुच्छिद्यमानत्वेन उच्छिद्यमानत्वेन वा स्वभावादन्यथाकरणं तद्विकार्यं, यथा,-अन्नं पचति काष्ठं दहतीत्यादि । क्रियया यस्य विद्यमानस्यैव गुणान्तराधानं तत् संस्कार्यं, यथा,-जलं वासयतीत्यादि । अत्र स्वभावादन्यथाकरणस्याभावात् न विकार्यता । क्रियया प्राप्तिमात्रं यत्र प्रतीयते तत् प्राप्यं, यथा,-कृष्णमन्दिरं गच्छतीत्यादि गमनेन कृष्णमन्दिरं प्राप्नोतीत्यर्थः । क्रियया यस्यापेक्षणीयत्वमात्रं प्रतीयते तत् त्याज्यं, यथा,-स्वगृहं त्यजतीत्यादि ॥ १७ ॥

**वा परः सएव स्यात्, वचनन्तु समुदाय संख्यापेक्ष्यम्। यथा—कृष्णश्च त्वञ्च भवथः। तौ च अहञ्च भवामः। वैपरीत्यनिर्देशेऽपि—अहञ्च भवामः। वैपरीत्यनिर्देशेऽपि—अहञ्च त्वञ्च स च भवामः।**

**अथ भावे आत्मपद प्रथमपुरुषैकवचनम्। तेन अनुक्ते कर्त्तरि यथा,—**

---

विध्यनुरोधात् समासाभावपक्षे बोध्यम्। वचनन्तु समुदाय संख्यामपेक्ष्यैव भवति नतु प्रत्येकमनुसारि। कृष्णश्च त्वञ्च भवथ इत्यत्र प्रथम-मध्यम पुरुषयोर्युगपत् कथनात् परस्थस्य मध्यमपुरुषस्यानुरूप एव पुरुषः क्रिया पदे प्रयुक्तः, समुदायस्य द्वित्वत्वात् तत्र द्विवचनम्। एवं तौ च अहं चेत्यत्रोत्तमपुरुषो बहुवचनञ्च क्रियापदे। वैपरीत्येन व्यतिक्रमेण प्रयुक्तेऽपि यथानिर्देशमेव पाठक्रमस्तेषां परत्वनियामक इति दर्शितमहमित्यादिना दृष्टान्तेन। समासेनैकशेषे तु—युवां भवथः, वयं भवाम इत्येव। किञ्च पुरुषाणां युगपद् वचनप्राप्तिः क्रिया कालयो रेकत्व एव सम्भवेत्। तेन नेह—कृष्णो नृत्यति त्वं पश्यसि, तथा कृष्णो गच्छति त्वंगमिष्यसीत्यादौ सूत्रस्याविषयः।

अथ भाव इति—तेनात्मपदप्रथमपुरुषैकवचनेन अनुक्ते अनभिहते कर्त्तरि का विष्णुभक्तिः स्यादित्याकाङ्क्षायामाह—

---

**बाल०**—कर्म। अनुक्त इत्येवेति। अनुक्त इत्यनुवर्त्तत इत्यर्थः। अनुक्त कर्मणि द्वितीया स्यात्। वैष्णवो मालां करोतीति वैष्णवस्य कृतिक्रिया मालायाः साधनार्थं प्रवृत्तेति मालायाः कर्मत्वं। मालाया वर्त्तमानकृतिक्रियायाः कर्त्ता वैष्णवः। मालाकर्मकवर्त्तमानकरणानुकूल-व्यापारवान् वैष्णव इत्यादिकं यथायथोह्यमिति। कृष्णं स्पृशतीति स्पर्शेन प्राप्नोतीत्यर्थः। एवं पश्यतीत्यादावपि।

भावेऽपीति। भावे प्रत्यये सत्यपि चेदित्यनन्तरं तदेति गम्यं। सकर्मकाद्धातो र्भावे प्रत्यये सत्यपि यदि कर्मापेक्ष्या तदा कर्मसम्बन्धो भवत्येवेति। अतएव, कां दिशं गन्तव्यमिति प्रयोगो दृश्यते। सकर्मकधातोः कर्माविवक्षया भावे प्रत्ययो भवतीति ज्ञेयं। गम्यते मया ग्राममिति भावे प्रत्यये तस्यैवोक्तत्वात् न कर्मणः उक्तत्वं। भाषावृत्ति र्भागवृत्तिश्चेत्यनेन उक्तमतस्य बहुसम्मतत्वं सूचितं।

कर्मेति। तस्मिन् कर्मणि। युष्मदिति। उक्तयोः सतोः। वैष्णवेन त्वं क्रियसे इति त्वं वैष्णवस्य वर्त्तमान कृतिक्रियायाः कर्मेत्यर्थः। एवं सर्वत्र। श्रीकृष्ण इति अत्र श्रीकृष्णस्य एकस्यां स्वकर्त्तृकायां दर्शनक्रियायां कर्त्तृत्वमन्यस्यां भक्तकर्त्तृकायां दर्शनक्रियायां कर्मत्वमिति। कर्मेति। कर्मत्वमिति भवत्येवेति शेषः। तत्र हेतुमाह तदपीति। इति शब्दोऽत्र हेतौ वर्त्तते। अथेति आद्ये व्यधिकरणे लक्षणाच्चिह्नात् तृतीया वक्ष्यते इति विशेषलक्षणात् तृतीयेत्यनेनेति शेषः। उदाहरणन्तु सुखेन भजतीति सुखं भजनस्य चिह्नं। अन्तिमे तुल्याधिकरणे आहुरिति पूर्वाचार्या इति शेषः॥ १८॥

## १९. अनुक्ते कर्त्तरि करणे च तृतीया ।

**अनुक्त इति कारकान्तरविष्णुभक्तिविधानेऽपि योज्यम् । स्पष्टार्थश्च तत्, उक्ते तदभावस्य न्यायसिद्धत्वात् । वैष्णवेन भूयते, वैष्णवस्य वर्त्तमान-सत्ताक्रियेत्यर्थः । अत्र क्रियैव मुख्या, तस्या एव वाच्यत्वात् । एवं वैष्णवाभ्यां भूयते इत्यादि । कथं द्वौ वैष्णवौ भवतः इत्यत्र द्वि शब्देन द्विवचनं नोक्तार्थकं स्यात् ? उच्यते—द्विशब्दोऽत्रावधारणार्थमेव प्रयुज्यते नतु द्वित्व वाचित्वं । इति स्वतन्त्र कर्त्ता ।**

---

**अमृता०**—१९ अनुक्तइति । केनाप्यनुक्ते कर्त्तरि, अनुक्ते करणे च तृतीया स्यात् । कारकान्तरेति—कर्मसम्प्रदानापादानाधिकरणेषु द्वितीयादि विष्णुभक्तीनां विधाने च तत्कर्मादिविशेषणतया अनुक्ते इति योजनीयम् । ननु उक्तान्नाममात्रार्थे द्योत्ये प्रथमैव इत्युक्तम्, अतो द्वितीयादयोऽनुक्ते भवतीत्यर्थादेवायाति, किंतर्हि अनुक्ते इत्यभिधानेनेति पृच्छायामाह—स्पष्टार्थश्चेति । तदभावस्य न्यायलभ्यत्वात्, आख्यातादिना तत्तत्

---

**बाल०**—क्रियेति । क्रियाया विशेषणं क्रियाविशेपणं तत् कर्म स्यात् । तच्च क्रियाविशेषणं ब्रह्म च स्यात् । एकवचनञ्च स्यात् । एकं व्यक्तीत्येकवचनं अस्मादेकवचनं भवतीत्यर्थः । सदानुक्तश्च स्यात् । कदाचिदपि तस्योक्तत्वं नास्तीत्यर्थः । तादृशमिति तादृशं मालाकरणमित्यर्थः । क्रियाविशेषणस्य कर्मत्वादिकं युक्तिसिद्धमित्याह कर्त्रादीति । तत्र प्रथमं कर्मत्वे युक्तिमाह प्रत्ययस्याख्यातादिरूपस्य कर्त्रादिवाचित्वात् । आदिपदेन कर्मादे र्ग्रहणं । कारकवाचित्वादित्यर्थः । सत्तादीति । प्रभृतिशब्द आद्यर्थः । धातुशब्देन धात्वर्थो लक्ष्यते । ततश्च, सत्तादिक्रियावाचिनो ये भू-प्रभृतयस्तेषां धात्वर्थरूपं सत्तादिरूपं अन्तर्भूतं कर्म अस्तीति शेषः । तस्येति । तस्य धात्वर्थरूप कर्मणः । अतः कर्मणो विशेषणत्वात् शीघ्रादिशब्दानामपि कर्मत्वं । ब्रह्मत्वे युक्तिमाह सकेति सच शीघ्रादिशब्दः तस्य धात्वर्थरूपकर्मणोऽलिङ्गस्य लिङ्गरहितस्य विशेषणमिति हेतो र्ब्रह्म अलिङ्गस्याव्यय-संज्ञत्वात् अव्ययविशेषणं ब्रह्मेत्यनेनेति शेषः । एकवचनत्वे युक्तिमाह सामान्यमिति । तत् कर्म सामान्यं सामान्यवत् सामान्यं जातिरिति हेतोस्तस्य विशेषणं एकवचनं भवति । सामान्यं सामान्यवत् क्रिया पुनरेकरूपेति वैयाकरणाः । सामान्यवदिति जातिवदितार्थः । अनुक्तत्वे युक्तिमाह मुख्येति । मुख्यकारके कर्त्रादावेव प्रत्ययस्याख्यातादेर्विधानात् तत् कर्म अनुक्तं अतस्तस्य विशेषणमप्यनुक्तमिति । अयमर्थः । वैष्णवो भवति इत्यत्र प्रत्ययार्थप्राधान्यात् कर्त्तृविहितेनाख्यातेनैव कर्त्ता उच्यते । अस्य च कर्त्तुः सत्तारूपो धात्वर्थः कर्म अतः कर्त्तृवाचिन आख्यातस्यापि तदेकं कर्म क्रियाकर्त्तृत्वादिसम्बन्धस्य जन्यजनकान्तर्भूतत्वेन धात्वर्थस्य जन्यत्वात् कर्मत्वमुक्तमेव अतएव वैष्णवो भवतीत्य-स्यार्थविवरणं कृतं वैष्णवो वर्त्तमानक्रियायाः कर्त्तेति अतस्तस्य कर्मणो विशेषणस्य शीघ्रशब्दस्य कर्मत्वादिकमेव । वैष्णवः शीघ्र मालां करोतीत्यत्र कर्त्तर्याख्यातेन कर्त्ता

प्रयोजकस्तु यथा—कृष्णो भवयति, भवन्तं प्रेरयतीत्यर्थः। तथा विध्यादि प्रयोगा अपि ज्ञेयाः। वैष्णवो भवेत्, वैष्णवौ भवेता-मित्यादयः। अजित प्रयोगस्त्वेवम्,—भूते, यदि कृष्णावतारो नाभविष्यत् तदा दैत्या मुक्ता नाभविष्यन्। भविष्यति च, यदि कृष्ण-भक्तिरभविष्यत् तदाहं कृतार्थोऽभविष्यम्।

**१० क्रिया यत् साधिका तत् कर्म।**

**क्रिया यस्य साधनार्थं प्रवर्त्तते तत् कारकं कर्मोच्यते। साधिकेति**

---

कारकस्योक्तत्वेन तत्र द्वितीयादीनामनुक्ततारूपसम्बन्ध विशेषवत्त्वमिति भावः। अवधारणार्थं नियमार्थं दृढ़तार्थमिति यावत्। "कलौ नास्त्येव नास्त्येव नास्त्येव गतिरन्यथेतिवत्। प्रयोजकस्तु यथेति—प्रयोज्यस्य वैष्णवस्य या वर्त्तमानभवनक्रिया तत्र प्रेरकत्वेन प्रयोजक कर्त्ता कृष्णः। तेन प्रयोज्यवैष्णवकर्मक वर्त्तमानभवनप्रेरणानुकूल-व्यापारवान् कृष्ण इति बोधप्रकारः।

**अमृता०** (२०)—क्रियेति। यस्य साधिका यत्साधिका। साध्नोतीति साधकः कर्त्तरि णकः, लक्ष्म्यामाप्, पूर्वारामस्य इरामः। साधिकापदेन साधनमाक्षिप्यते, ततो हि विवृणोति—क्रिया यस्य साधनार्थमित्यादि। तत्र च साधिका पदं साधन प्रवृत्तिपरं नतु साधनसमाप्तिपरम्। अन्यथा काशीं गच्छन् दुर्गादासः पथि विसूचिकया मृत इत्यत्र गमन क्रियया कर्त्तुः काशी संयोगाभावात् काश्याः कर्मत्वं न स्यात्। ततएव वृत्तौ परिष्करोति साधनार्थं प्रवर्त्तत इति। ननु "स्वतन्त्रं तत् प्रयोजकञ्च कर्तृ" इत्यत्र कर्तृरेव स्वतन्त्रता-वगता, कथमिह क्रियाया अपि स्वातन्त्र्यमिति चेत्तत्राचष्टे—स्वातन्त्र्याभावेऽपीत्यादि।

---

उच्यते वैष्णवो वर्त्तमानमालाकृतिक्रियाया कर्त्तेत्यर्थः। अतः कृतिक्रियाया विशेषणस्य शीघ्रशब्दस्य कर्मत्वादि। वैष्णवेन शीघ्रं माला क्रियत इत्यत्र कर्मणि विहितेनाख्यातेन कर्म उच्यते। माला वैष्णवस्य वर्त्तमानकृतिक्रियाया कर्मेत्यर्थः। ततश्च कर्त्तु कर्मत्वेन धात्वर्थस्य जनन्यत्वात् कृतिक्रियायाः कर्मत्वं अतः कृतिक्रियायाः विशेषणस्य शीघ्रशब्दस्य कर्मत्वादिकं मुख्यकारके मालारूपे कर्मणि आख्यातस्य विहितत्वान्न शीघ्रशब्दस्योक्तत्वं। एवमन्यत्रापि। वैष्णवेन शीघ्रं भूयते इत्यत्रतु धात्वर्थस्य प्राधान्यात् तस्य विशेषणस्य कर्मत्वब्रह्मत्वादिकं सिध्यत्येव। किन्त्वत्र धात्वर्थस्य वाचित्वात् क्रियाविशेषणं कर्मणो-ऽप्युक्तं स्यादिति। केचित्तु सूत्रस्थ-सदानुक्तपदग्रहणादत्रापि क्रियाविशेषणस्यानुक्तत्वं मन्यन्ते तत्तु न बहूनां सम्मतमिति। केषाञ्चिन्मते क्रियाविशेषणकर्मत्वादौ युक्तिस्तु दुर्घटा अतएव कर्मत्वादिसिद्धयर्थं क्रमदीश्वरादिभिर्लक्षणं कृतमिति ज्ञेयं। अत्रेति केवलमेक-वचनमिति एकवचनमेव नतु कर्मादीत्यर्थः। भ्रम इति सर्वेषाममतमित्यर्थः। दोषोऽपि भवतीत्याह सामान्यत् इति। केवलमेकवचनमिति सामान्यवचनात् प्रथमापि स्यात्। तस्यान्तु सत्यां शीघ्रमित्यस्य प्रथमान्तत्वेन सपूर्वपदात् प्रथमान्ताद्वान्यादेशेऽपि ते विरिञ्चय इत्यनेन वसाद्यादेशानां पाक्षिकता स्यात् सातु विरुद्धैवेति ॥ १९ ॥

क्रियायाः स्वातन्त्र्याभावेऽपि स्वातन्त्र्यारोपात् कर्त्तृत्वप्रयोगः। साधकतमम् करणमितिवत्। तेन प्रमाद् विषं भक्षयतीत्यत्र कर्त्तुरनाप्सिततमस्यापि विषस्य कर्मत्वंस्यात्। यत् क्रियते तत् कर्म, इति

---

अत्र क्रियायाः कर्त्तृत्वमुपचारात्; कर्त्तरि वाच्येनिष्पन्नो साधकशब्दो यथा करणेऽपि साधकतम रूपेणारोप्यते तद्वदिह च बोध्यम्। तादृश्यारोपे किमुद्देश्यमित्याह—तेनेति। कर्त्तुरनीप्सिततमस्यापीति—प्राणघातित्वाद् विषं खलु न कस्यापीप्सितम्, वरं सर्वेषां द्वेष्यमेव। एवं सति कर्म साधन विषये यदि कर्त्तुः सर्वत्र नियामकत्वं विवक्ष्यते तर्हि विषस्य न जातु कर्मत्व मुपजायते, विषत्वेन जानतो न कस्यापि तत्र भोजनप्रवृत्तेः। तस्मात् क्रियाया हि कर्त्तृत्वारोप इह युक्त इति भावः।

यत् क्रियते तत् कर्मेति कालापलक्षणे कृञर्थस्य धातुष्वनुगतत्वादिति हेतुरुन्नेयः। क्रिया व्याप्य कर्मेति सौपद्म क्रमदीश्वरादयः। पर समवेत क्रियाजन्य फलशालित्वं कर्मत्वमिति नैयायिकाः।

यत् साधिकेत्यत्र यत् शब्देन साध्यं गम्यते; साध्यते यत् तत् साध्यं कर्मेत्यर्थः। तत्राक्षेपात् साधनञ्च लभ्यते, तदेवाह—क्रिया यस्य साधनार्थमिति। साधनं परिष्करोति—तयैव क्रिययेत्यादिभिः। क्रियया स्वतन्त्रभूतया प्रकारविशेषेण—उत्पाद्यप्रभृत्ववस्था विशेषप्रापकतया सम्पादनमित्यर्थः। तेषां प्रकार विशेषाणां पञ्चविधत्वं निर्दिशति—उत्पाद्यतयेत्यादिभिः। अतएव पञ्च प्रकारैः सम्पद्यं कर्म च पञ्चधा। यथा हि—कर्त्तुः क्रियया अविद्यमानस्य यस्योत्पत्तिः प्रकाश आविर्भावो वा गम्यते तदुत्पद्यं कर्म, मालां करोतीत्यादौ। विक्रियते विद्यमान वस्तु अवस्थान्तरं नीयत इति विकार्यम्। तत् पुनर्द्विविधम्, प्रकृतेरुच्छेदकं, तस्या रूपान्तराधायकञ्च। प्रथमं यथा—अग्निः काष्ठं भस्म करोति। द्वितीयं यथा—सुवर्णं कुण्डलं करोति। अत्र काष्ठसुवर्णयो विकार्यत्वं, भस्म कुण्डलयोस्तूत्पाद्यत्वं बोध्यम्। अथ संष्क्रियते विद्यमान वस्तु गुणान्तरेण संयुज्यत इति संस्कार्यम्,—जलं वासयतीत्यादौ। नेह जलस्य स्वभावसिद्धः शीतत्वादि गुणोऽपनीयते

---

**बाल०**—ननु शीघ्रः पाक इत्यादौ भावकृदन्तस्य पाकादि शब्दस्य धात्वर्थ—वाचित्वात् तस्य विशेषणस्य कथं न कर्मत्वादिकमिति चेत्तत्राह भावेति। भावविहित—कृदन्तानां क्रियायां सत्यां तस्य भाव कृदन्तस्यैव प्राधान्यात् कृदविहितो भावो द्रव्यवत् प्रकाशते इत्यस्माच्च भावकृदन्त क्रियाविशेषणं भावकृदन्तवत् भवतीति। पाक इति। डु पच ष् पाके घण् वृष्णीन्द्र चस्य कः। पक्तिरिति क्तिर्लक्ष्मां भावे इत्यनेन क्तिः पचनमिति भावे अन्। कर्म प्रोच्य कर्मकर्तारमप्याह किञ्चेति। यत् कर्मकर्त्रा क्रियमाणमपि अत्यन्त सुकरत्वेन धर्मेण स्वयं सिद्धं आत्मनैव निष्पन्नं प्रतीयते प्रतीतिविषयीक्रियते तत् कर्म कर्मकर्त्तेति बिदुर्बुधा इति शेषः। कर्म चासौ कर्त्ता चेति विग्रहः। ननु क्रियमाणस्य स्वयं सिद्धौ कथं प्रतीतिरिति चेत्तत्राह अत्यन्तेति। कर्त्तुरत्यन्त सुखनिष्पादनीयत्वेन साध्यमानत्वात्तस्य कर्मत्वेऽपि सुखनिष्पादनीयत्वेन खतः सिद्धौ क्रियायां कर्त्तृत्वमिति तस्मात् यस्यां

कालापाः । तत्र साधनं तयैव क्रियया प्रकारे विशेषेण सम्पादनम्, उत्पाद्यतया, विकार्यतया, संस्कार्यतया, प्राप्यतया, त्याज्यतया चेति ।

## २१. कर्मणि द्वितिया ।

अनुक्त इत्येव । वैष्णवो मालां करोति; वैष्णवो मालाया वर्त्तमान कृति क्रियायाः कर्त्तेत्यर्थः । अत्र क्रियायाः कर्म सम्बन्धो गौणः कर्त्तु-रेव वाच्यत्वात् । एवमन्नं पचति, जलं वासयति, कृष्णमन्दिरम् गच्छति,स्वगृहंत्यजतीति । कृष्णं स्पृशति पश्यति शृणोति इत्यादिष्वपि प्राप्यता । एवं त्वं मालां करोषीत्यादि । अहं मालां करोमीत्यादि । भावेऽपि प्रत्यये सकर्मकस्य धातोः कर्मापेक्षा चेत् कर्म सम्बन्धो भवत्येव यथा—गम्यते मया ग्राममिति भाषावृत्तिर्भाग वृत्तिश्च । कर्म प्रत्ययेन

---

किन्तु सुरभित्वरूपमुगुणान्तरं तत्र संयुज्यत इति विकार्याद् विलक्षणमिदम् । प्राप्यतेऽधि-गम्यत इति प्राप्यम्, संयोगाश्रयइत्यर्थः, मन्दिरं गच्छतीत्यादौ । त्यज्यते पूर्वदेशाद् विभज्यते यत् तत् त्याज्यम्, स्वगृहं त्यजतीत्यादौ । तथा क्रियापि—उत्पादिका विकारिका संस्कारिका प्रापिका त्याजिकेति सुतरां पञ्चधा ज्ञेया ।

**अमृता०** (२१)—कर्मणीति । कर्मणि कारके द्वितीया विष्णुभक्तिर्भवति । मालां करोतीति उत्पादयतीत्यर्थः मालायाः साधनार्थं वैष्णवस्य कृति क्रिया प्रवृत्तेति तस्याः कर्मता । कर्त्तरि वाच्येविहितेन तिप् प्रत्ययेन कर्त्ता ह्युक्तः, अतः कमणोऽनुक्तता तेन । तस्य च विशेषता व्यञ्जिकात्र द्वितीया विहिता, कर्मणि क्रियासम्बन्धस्य गौणत्वात् ।

एवमन्नं पचतीत्यादीनि क्रमशो विकार्यादिकर्मोदाहरणानि । एतै र्दशितानि कर्माणि हस्तादि कर्मेन्द्रियनिष्पाद्यानि; चक्षुरादि ज्ञानेन्द्रिय साध्यं दर्शनादिकन्तु प्राप्यन्त र्भूतमेवेत्याशयेनाह—कृष्णं स्पृशतीत्यादिष्वपि प्राप्यतेति । स्पृशतीति स्पर्शद्वारा कृष्णं प्राप्नोतीत्याद्यर्थ उन्नेयः । एवं तुलसीं जिघ्रति, कृष्णंगायतीत्यादावपि ज्ञेयम् । केवलमन इन्द्रिय साध्यं ध्यानादिकञ्च प्राप्यान्तर्भूतम्; कृष्णं ध्यायति, ध्यानेन कृष्णसंयोगं प्राप्नोतीत्यर्थः ।

---

क्रियायां यः कर्मासीत्तस्यामेव यस्य कर्त्तृत्वं बिवक्ष्यते स कर्मकर्त्तेति । नन्वेवमपि न सम्भवति कर्म शक्ति कर्त्तृ शक्तोः सभावभेदात् । उच्यते । शक्तयाधारस्यैकत्वात् कर्मक-र्त्तृत्वं बिबक्षितमित्यदोषः ॥२०॥

**बाल०**—कर्म । कार्यमाह । कर्मकर्तरि वाच्ये कर्मवत् आत्मपदादि स्यात् यथा कर्मणि आत्मपदादि क्रियते तथेत्यर्थः । तदेवाह तस्मिन्निति । तस्मिन् कर्मकर्तरि आत्मपदे सति । आदिपदं विवृणोति यगित्यादि । हन्यते इति वैष्णवा य संसारं घ्नन्ति स संसारः स्वयमेव हन्यते इति स्वादृष्टोपनिबद्धशरीरपरिग्रहः संसार इति संसारलक्षणमिति । इण

तस्मिन्नुक्ते तु—वैष्णवेन माला क्रियते; वैष्णवस्य माला वर्त्तमान कृतिक्रियायाः कर्मेत्यर्थः। अत्र क्रियायाः कर्मसम्बन्धो मुख्यः, कर्मण एव वाच्यत्वात्। वैष्णवेन माले क्रियेते इत्यादि। युष्मदस्मदोरुक्तयोः— वैष्णवेन त्वम् क्रियसे इत्यादि। वैष्णवेनाहं क्रिये इत्यादि। यत्र त्वेकस्यां कर्त्तृत्वमन्यस्यां कर्मत्वम् तत्रोभाभ्यां प्रत्ययाभ्यामुक्तत्वे यथा- श्रीकृष्णोभक्तात् पश्यति भक्तै र्दृश्यते च।

कर्मतुल्याधिकरणस्यापि कर्मत्वम्, तदपि क्रिया साधयतीति। यथा,— उत्तमा मालां करोति, तश्चोत्तमां करोतीति सम्बन्धः। एवमन्यत्रापि। अथ क्रिया विशेषणञ्च द्विविधम् व्यधिकरणं तुल्याधिकरणञ्च। तत्राद्ये लक्षणात् तृतीया वक्ष्यते, अन्तिमे त्वाहुः—

---

भावेऽपीति—सकर्मकाद्धातोर्भावे प्रत्यये सत्यपि यदि कर्मापेक्षा स्यात् तर्हि कर्म प्रयोगोभवेत्। सकर्मकधातो भावप्रत्ययश्च कर्माविवक्षयैव क्रियते, कर्मविवक्षया तु भवत्येवैततसम्बन्ध इतिभावः। अतएव कांदिशं गन्तव्यमित्यादि प्रयोगाश्च सिध्यन्ति। भाषा वृत्तिभागवृत्तिकारयोः प्रयोगदर्शनेनात्र प्राचीनसम्मतिः सूचिता।

युष्मदस्मदोरुक्तयोः सतो रितिभावे सप्तमी। वैष्णवेन त्वं क्रियस इत्यत्र वैष्णवस्य वर्त्तमानकृति क्रियायाः कर्म, त्वमित्यर्थः। श्रीकृष्णइति—एकस्यां—स्वकर्त्तृकदर्शन क्रियायां कर्त्तृत्वम्, अन्यस्यां–भक्तकर्त्तृकदर्शनक्रियायां कर्मत्वमिति द्वाभ्यामेव क्रियाभ्यां श्रीकृष्णस्योक्तता।

कर्मणस्तुल्याधिकरणस्य विशेषणस्यापि कर्मत्वम्, तत्र हेतुः—तदपीत्यादिः। क्रिया तदपि कर्मविशेषणमपि साधयतीति। तांमालामुत्तमाञ्च करोतीति उत्तमत्वञ्च क्रियायाः साध्यत्वम्। अथविशेषणं विशिनष्टि—क्रिया विशेषणञ्च द्विविधमित्यादिना। तत्राद्येइति व्यधिकरणे लक्षणात् चिह्नादुत्तरे तृतीया वक्ष्यते— विशेषलक्षणात् तृतीयेत्यत्रहि क्रिया वैशिष्टयज्ञापकत्वेऽपीत्यनेन। उदाहरणञ्च तत्र—सुखेन भजति, न्यक्षेण वीक्षते, द्रुतेन धावतीत्यादि। सुखादिकमत्र भजनादे श्चिह्नं वैशिष्टयज्ञापकञ्च। अन्तिमे—तुल्याधिकरणे विषये तु आहुः पूर्वाचार्या इति शेषः।

---

इण्वदिटश्च। उदाहरणमाह एवमिति। वैष्णवा यं संसारं अवधिषुः तेषां स स्वयमेव अघानि। वैष्णवा यं संसारं हनिष्यन्ति तेषां स स्वयमेव घानिष्यते इत्यादि। भावे त्विति। एतेन वत्करणस्य फलं दर्शितं। कर्मवत् कार्यं भवति ननु कर्मतैव। यदा तु धातोः सकर्मता न भवति तदा भावविहितं कार्यं भवतीति उचितमेव। अस्यास्योर्भावः कर्त्तृस्थः कर्त्तृस्था च गमेः क्रिया। कर्मस्थः पचतेर्भावः कर्मस्था च भिदेः क्रिया। इत्यादि- पद्यानुसारेण क्रियायाः कर्त्तृस्थत्वे सति कर्म कर्त्तुः कार्यं कर्त्तृवद्भवति तस्मात् तत्र कर्मवत् कार्यं न भवतीति क्रमदीश्वरादयः। ततश्च गच्छति मथुरां वैष्णवः। इयं गमन-

**२२. क्रिया विशेषणं कर्म, तच्च ब्रह्मैकवचनं सदानुक्तञ्च ।**

शीघ्रं मालां करोति, शीघ्रं माला क्रियते, शीघ्रं यथा स्यात्तादृशमित्यर्थः । कर्त्रादिवाचित्वात् प्रत्ययस्य, सत्तादि क्रिया वाचि भूप्रभृतिधातुरूप-

---

अमृता०—२२ क्रियेति । क्रियाया विशेषणं कर्मसज्ञं स्यात् । तच्च क्रियाविशेषणं नपुंसकमेकवचनं सदा अनुक्तञ्च भवति । इमाञ्च प्राचीनोक्तिं स्वयुक्तया सोपपत्तिकां करोति—कर्त्रादीति । तत्रादौ तस्य कर्मत्वे युक्तिमवतारयति—प्रत्ययस्य आख्यात कृत्तद्धितरूपस्य कर्तृकर्माद्युक्त कारकवाचित्वात् । स्वादेस्तु नहि कारकवाचित्वम् किन्तु कारक द्युोतकत्वमेव । सत्तादीत्यादौ धातु शब्देन धात्वर्थों लक्ष्यते । सत्ता प्रभृति क्रिया वाचिनो ये भूप्रभृतिधातव स्तेषामर्थरूपम्, अर्थात् सत्तादि रूपमन्तर्भूतं कर्म विद्यत इति शेषः; तस्य धात्वर्थरूपस्य विशेषणं शीघ्रादि शब्दः क्रियते ।

अत्रायमभिप्रायः—सर्वा हि धात्वर्थरूपाः क्रियाः कर्तृव्यापाररूपेण परिणमन्ते तञ्च व्यापारं कर्त्ता सम्पादयतीति व्यापारवान् कर्त्तेति कथ्यते । ततो गमनं करोति, शयनं करोतीत्यादि व्यवहार सिद्धया धात्वर्थस्य कर्मत्वं प्रतीयते सर्वत्र सकर्माकर्मक धातुषु । अतएव क्रियायाः साध्यत्वात् कर्मत्वमिति न्यासकारः । ततो नामार्थ धात्वर्थयो र्भेदेन साक्षादन्वयस्याव्युत्पन्नत्वादिह गमनादि (भवनादि) धात्वर्थरूप कर्मणो यदा शीघ्रादि शब्दा स्तुल्याधिकरण्येनान्वीयते तदा तेषामपि कर्मत्वमुपजायते,—"कर्मतुल्याधिकरणस्यापि कर्मत्वं, तदपि क्रिया साधयतीति" वचनप्रामाण्यात् ।

अथ तस्य ब्रह्मत्वे युक्तिमाह—सचेति । क्रिया खलु नजातु द्रव्यवाचिका, लिङ्गं पुन र्द्रव्यात्मकनाम्नामेवार्थविशेषः । अतो नामत्वाभावात् क्रियायां नास्ति लिङ्गता, कुतः पुन स्तद् विशेषणे? ततश्चालिङ्गत्वेन धात्वर्थस्याव्ययत्वातिदेशात् तद्विशेषणस्य च "अव्यय विशेषणं ब्रह्म"इत्यनेन ब्रह्मत्वमेव सुष्ठुसिध्यतीति भावः ।

एकवचनेऽपि उपपत्तिं दर्शयति—सामान्यमिति । सामान्यं जातिः । तत्रजातौ बहुत्वसमवेतत्वात् प्रथमोपस्थितमेकत्वमेव स्वतः सिद्धम्; विभाषया बहुत्वविधानेऽपि नहि तत्रार्थाधिक्यं लभ्यते । तस्मादिह शीघ्रादे द्वित्वे बहुत्वेवाकृतेऽपि एकत्वेन सह समानार्थाव-गमाद् न्यायत एकत्वमेव क्रियाविशेषणे प्राप्यमित्याशयः । तच्चैकवचनं समन्वयितुं सदानुक्तत्वमुपपादयति—मुख्येति । उक्तकारकमेव मुख्यम्: आख्यातादि प्रत्ययेन तस्यैव वाच्यत्वात्; तदितरकारकेऽनुक्तत्वं गौणत्वञ्च न्यायादागच्छति । ततः क्रिया विशेषणस्य

---

क्रिया कर्तृस्था तस्मिन्नेव तदुपलम्भात् । मथुरायाः कर्मणेहित्यन्तसुकरत्वेन यदि तस्यां क्रियायां कर्तृत्वं विवक्ष्यते तदा मथुरायाः कर्मकर्तृत्वे गच्छति मथुरा स्वयमेवेति भवति नतु गम्यते । क्रियायाः कर्मस्थत्वे सति कर्म कर्तुः कार्यं कर्मवद्भवतीति विवेचनीयमिति । तव्यादौ विषये क्रियायाः कर्मस्थत्वे च कर्म कर्तुः कार्यं कर्तृवद्भवतीत्यपि क्रमदीश्वरादयः, ततश्च पक्तव्यमोदनेन स्वयमेवो अत्र उदनस्य कर्तृवद्भावः भावोत्पन्नेन तव्येनानुक्तत्वात् उदनेनेति तृतीया ॥ २१ ॥

मन्तर्भूतं कर्म, तस्य विशेषणं शीघ्रादि शब्दः क्वचित् क्रियते । सच तस्यालिङ्गस्य विशेषणमिति ब्रह्म, सामान्यमित्येकवचनम्, मुख्यकारक एव प्रत्यय विधानादनुक्तश्चेतिभावः ।

अत्रकेवलमेकवचनमिति तस्यां भ्रमः । सामान्यतः प्रथमायां—याति

---

कर्मत्वाभिव्यक्तये "अनुक्ते कर्मणि द्वितीया" इत्यनुशासनेन द्वितीया सिध्यति तत्र । एवञ्च द्वितीयाया एकवचनमेव सदा स्यात् क्रियाविशेषणे इति समवसितम् । इह धात्वर्थस्य अव्ययत्वातिदेशः—'न व्येति' इत्यांशिक व्युत्पत्त्या क्रियाविशेषणस्य ब्रह्मत्वोपयोगार्थ एव, न तु स्वरूपत स्तस्याव्ययत्वम्, नामत्वाभावेन तत्र विभक्ति लिङ्गायोगात् ।

अत्र "सदानुक्तमिति" विधेयांशः पर्यालोच्यते,—इतः प्राक् कारकस्य उक्तानुक्तभेद द्वयमुक्तवा तत्र कर्त्रादि प्रत्येककारकस्य चोक्तानुक्तत्वं विहितम् । यदा क्रियायाः संबन्ध विशेषो मुख्यतया कर्त्तरि विवक्ष्यते, तदा कर्तृकारकस्योक्ततया मुख्यत्वम्, कर्मादीना-मनुक्ततया गौणत्वम् । यदा पुनः क्रियायाः सम्बन्धविशेषो मुख्य तथा कर्मादौ विवक्ष्यते, तदा कर्मादे रुक्ततया मुख्यत्वम्, कर्त्तु स्तु अनुक्ततया गौणत्वम् । एवञ्च कर्त्रादि प्रत्येक कारकं विवक्षाधीन तथा क्वचिदुक्तं,क्वचिच्चानुक्तं भवति किन्तु न कस्यापि सदानुक्तता; क्रिया विशेषणन्तु सदानुक्तं,नकदाप्युक्तं मुख्यं वा भवतीति कारकादस्य वैषम्यं ध्वनितम् । अपि च कर्तृकर्मादे धात्वर्थे भेदेनान्वयसाधनार्थं विभक्तेरर्थ स्तत्र द्वारी क्रियते । तत्रो क्तकारकस्य तिवादेरर्थद्वारा क्रियायामन्वयः, अनुक्तस्य स्वादेरर्थद्वारेणेति ज्ञेयम् । क्रिया विशेषणस्य तु क्रियया सहाभेदेनान्वयः, तुल्याधिकरणधर्मत्वात् । अतोऽस्मिन्नंशे चास्य वैसादृश्यमुपलभ्यते ।

तस्मात् क्रिया विशेषणस्य कारकत्वातिदेशः केनचित् सादृश्येन । स च धात्वर्थरूप-कर्मणः (गमनादेः) तुल्याधिकरणस्य (शीघ्रादि शब्दस्य) च क्रियासाध्यत्वात् कर्मोप-पादनार्थो बोध्यः । द्वितीयां विना तत्कर्मत्वाभिव्यक्तेरसम्भवात् तत्र सदानुक्तत्वनियमनेन द्वितीया व्यवस्थापिता, अनुक्ततामृते द्वितीयाविधानस्याशक्यत्वात् । अस्मिन्नेवांशे कारकत्वसादृश्यं विवेच्यम् ।

केचित्तु स्तोकावित् मृदुनी त्यादौ कर्मोपपदे कृत्समासावसरे चास्य कर्मोपयोगित्वं मन्यन्ते । तथा श्रीपतिरपि—"द्वितीयाकारकविधौ धातोरेकाधिकरण्यमिति" सूत्रयित्त्वा कर्मकारकत्वमस्य व्यवस्थापितवान् । अत्र मुग्धबोधटीका कृता दुर्गादासेन—"क्रिया विशेषणस्य कर्मत्वेऽपि अकर्मकधातूनामकर्मकत्मेव इति यदुक्तम्, उदाहृतञ्च—तेन शिशुना साधुसुप्यते इति । तत्तु समीचीनं न भाति । यतः साधु पदस्य कारकसम्बन्धाति-रिक्तत्वे सति क्रियान्वयावच्छिन्नता विरहेण तस्य प्रयोगयोग्यतैव विहन्यत इत्यलमयथा-चर्च्चया ।

नैयायिका स्तु क्रियाविशेषणस्य कर्मत्वं निषिध्य तत्र द्वितीयातु साधुत्वार्था इति सिद्धान्तयति । तदपि नानवद्य भाति; साधुत्वार्थं द्वितीयाविधाने नियमाभावात्;

युष्मानथो पश्यति शीघ्रं वः, इत्यादौ सपूर्बपदादित्यादिना वसाद्यादेश विकल्पे सति दोषश्च ।

**२३. भावकृदन्तायां क्रियायान्तु कृदन्तवदेव स्यात् तस्यैव प्राधान्यात् ।**

**यथा—शीघ्रः पाकः, शीघ्रा पक्तिः, शीघ्रं पचनम् ।**

---

कर्मत्वाभावे नाममात्रार्थद्योत्यत्वेन प्रथमाया एव प्रासङ्गिकत्वाच्च । तस्मात्तादृशसिद्धान्तोस्माकम् स्थूल धियां दुर्बोध इति किमाक्षेपेण ।

अत्र क्रियाविशेषणे केवलमेकवचनं नतु कर्मत्वमिति प्रक्रिया कौमुद्यां भ्रमः, सर्वेषाममतत्वात् । दोषश्च तस्या उद्घाटयति—सामान्यत इत्यादिना । एकबचनमात्रस्वीकारे प्रथमायामति प्रसङ्ग आपतेत्; ततः प्रथमेतरविभक्तयन्तपदपूर्वत्वे सति, अन्वादेशे नित्यमेव वस् नसाद्यादेशाः स्युः, प्रथमान्तपूर्वत्वे तु विभाष्येति तैरपि मन्यते । अतः शीघ्रमिति प्रथमान्तत्व स्वीकारे तत्तदा देशानां विकल्पप्रवृत्तिरनिवार्या स्यादिति तन्मत विरुद्धतैवेति ।

**अमृता०**—२३ भावेति भाववाच्ये विहितो यः कृत् स एवान्ते यस्या स्तादृशि क्रियायान्तु प्रयुक्तायां तद् विशेषणस्य कृदन्तवदेव विभक्ति लिङ्ग वचनानि भवन्ति । तत्र हेतुः—तस्य कृदन्तस्य हि प्राधान्यादिति । तथाहि—प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूत इति न्यायेन प्रत्ययस्यैव प्राधान्यात् कृदन्तस्य प्राधान्यम् । तदुपरि कृदभिहितो भावो द्रव्यवत् प्रकाशत इति न्यायेन कृत् प्रत्ययोक्तभावस्य द्रव्यत्वातिदेशात् तत्र प्रयुक्तानि कारकदीनि (विभक्ति लिङ्गवचनानि) तद् विशेषणमपि प्राप्नोतीति तात्पर्यम् ।

किञ्चेति—व्यापारभेदविविक्षया कर्मकरणादीनामपि कर्त्तृत्वं सिद्धयति प्रागुदाहृतम्; तत्र च विवक्षायां साधनसुकरत्वस्यातिशयं हि निदानमुपलभ्यते—काष्ठं पचतीत्यादौ । तत्रापि कर्मणस्तु कर्त्तृत्वे वैशिष्टचमाह—क्रियमाणमिति कारिकया । यत् कर्म क्रियमाणं सत् अत्यन्त सुकरत्वेन हेतुना स्वयमेव सिद्धं प्रतीयते तत् कर्म कर्मकर्त्ता इति विदुर्जानन्ति बुधा इति शेषः । कर्मैव कर्त्ता कर्मकर्त्ता श्यामराम समासः । पूर्व कर्म हि कर्त्तृतया विवक्ष्यते चेत् तदा तत् कर्मकर्त्तृ इति संज्ञां लभत इत्यर्थः । इदमत्राकूतम्—यदा अति शुष्क काष्ठचुल्ल्यादि निवन्धना पाकक्रिया अनायाससाध्या स्तात्, कर्त्ता मन्यते च—नाहमिदं पचामि किन्तु स्वयमेव पच्यतेऽयमोदन इति तदा खलु तत्क्रियायाः कर्माणि कर्त्तृत्वं विवक्ष्यते, तदैवायं कर्मकर्त्तृप्रयोगः स्यादिति ।

---

**बाल०**—तपः । तपः कर्म यस्य तादृशस्य तपेः कर्त्तरि च वाच्ये तद्वत् स्यात् । कर्मवत् कार्यं स्यादित्यर्थः । तप्यते इति तप सन्तापे ।। २२ ।।

**बाल०**—अत्र । अत्र तपधातोरिणो निषेधो भवति । तपःकर्मकस्येति यदुक्तं तदेव दर्शयति नान्यकर्मकस्येति । तपतीति सन्तापयतीत्यर्थः ननु तपः कर्मकस्य तपेरित्युक्तं

किञ्च—क्रियमाणन्तु यत् कर्म स्वयं सिद्धं प्रतीयते ।
अत्यन्त सुकरत्वेन कर्मकर्त्रीति तद् विदुः ॥

## २४. कर्मकर्त्तरि कर्मवदात्मपदादि ।

तस्मिन्नात्मपदे यक् इण् इण्वदिट् स्यात । हन्यते संसारः स्वयमेव

---

ननु नैवमपि सम्भवति, कारकं शक्तिरिति दर्शनेन कर्मशक्ति-कर्त्तृशक्त्योः स्वभाव वैलक्षण्यादिति चेत् ? सत्यं, किन्तु शक्तिशक्तिमतोरभेदविवक्षयात्र शक्त्याधार-द्रव्यस्यैव कर्मत्वं मन्यते, तत्र च कर्त्तृत्वमारोप्यत इत्यदोषः। तत् प्रयोगे चावश्यक-ज्ञातव्यमुपदिशति,—

अमृता०—२४ कर्म कर्त्तरीति । कर्म कर्त्तरि सति, कर्म प्रत्यये यथा आत्मपदादिकं भवति तथात्रापि स्यात् क्रियापदे । सप्तम्यर्थे वतुः, तेन कार्यातिदेशोऽयम् । कस्य कस्याति-देशो इहाभिप्रेत इत्याकाङ्क्षायामादि शब्दविवृणोति—यक् इण् इण्वदिट् स्यादिति । अत्र रामकृष्णे वैकल्पिकैकत्वम् । कियदत्र पर्यालोच्यते,—शुद्ध कर्त्तर्येव कर्त्तरि विहित स्तिवादिप्रत्ययो भवति, इह तु कर्मण्येव कर्त्तृत्वारोपात् कर्मकर्त्तरि शुद्धकर्त्तरीव प्रत्ययो वारितः। यत् प्राक् कर्मासीत् तदेव यदि कर्त्ता सम्पद्यते तर्हि धातोः पुनरकर्मकत्वं सञ्जातम्, अतएव तत्र कर्मवाच्यत्वाभावात् कर्त्तृ वाच्य भाववाच्ये चास्य प्रयोगः सम्भवेदिति सुतरामधिगम्यते, तथा ह्युदाहृतं मूले । अथ कर्मकर्त्तुः सत्यपि कर्त्तरिवाच्ये शुद्धकर्त्तृत्वाभावेन कर्त्तरि विहित प्रत्ययाभावात् कर्मवदेव प्रत्ययः यगादिः स्यादित्ये-वातिदेशः। अथ कर्मण एव कर्त्तृत्वविवक्षया धातो रकर्मकत्वपातात् भावे च कर्म वदात्मपदादिकमेव । तत्र कारक कार्यातिदेशाभावादनुक्तकर्मणि द्वितीयावदनुक्तकर्त्तरि न हि द्वितीया प्रसङ्गः किन्तु तृतीयैवेति ।

किञ्च क्रिया क्वचित् कर्त्तृस्था क्वचिच्च कर्मस्था भवति । तथा चोक्तम्कर्मस्थः पचतेर्भावः, कर्मस्था च भिदेः क्रिया । अस्यादेर्भावः कर्त्तृस्थः, कर्त्तृस्था च गमेः क्रिया । इति । अस्याभिप्रायः—पचति भिनत्ति हन्तीत्यादि क्रियासु ओदनादि कर्म समवेताहि पचनादिक्रिया भवति, यत ओदनादिकं दृष्ट्वा पचनादि क्रिया समुपलभ्यत इति पचनादि क्रिया कर्मस्थेत्युच्यते । गच्छति पश्यतीत्यादिषु तु क्रिया कर्त्तृसमवायिनी, गमनादेः पश्चात् ग्रामादि कर्मणि तत् क्रियायाः प्रतीतिर्विरहात् । यथा वैष्णवेन गतं यद् वृन्दावनं तद् दृष्ट्वा वैष्णवस्य गमन क्रिया नोपलब्धा किन्तु गच्छन्तं वैष्णवमेव प्रसमीक्ष्य तस्याः प्रतीतिर्जायत इति तादृशी क्रिया कर्त्तृस्थेत्युच्यते । एवं स्थिते यदा खलु क्रिया कर्मस्था तदैव कर्मकर्त्तुः प्रयोगो नतु कर्त्तृस्थाया स्तस्याः । अतएव पद्मनाभेन सूत्रितम्—कर्मस्थ धात्वर्थे कर्मवत् कर्मकर्त्तेति ।

---

तर्हि कथं तपते तपांसि इति चेत् । उच्यते । यथा तपःकर्मकस्य ग्रहणेन अन्यकर्मकस्य कर्मवन्न भवति तथा अर्जयतीति कथनेन उपार्जनार्थस्य तपे ग्रहणं नान्यार्थस्य इत्यर्थः । अन्यत्र तपः करोतीति यथायोग्यं वक्तव्यमिति ॥ २३ ॥

वैष्णवानाम् । एवमघानि घानिष्यते ।

कर्त्तरि प्रयोगोऽयं दर्शितः । भावे तु—हन्यते संसारेण इत्येव ।

## २५. तपः कर्मकस्य तपेः कर्त्तरि च तद्वत् ।

तप्यते तपो नारायणः, अर्जयतीत्यर्थः ।

## २६. अत्रेणो निषेधः ।

अतप्त तपो नरः । नान्यकर्मकस्य,—तपति श्रीकृष्णप्रतापो दैत्यान् ।

---

एवं कृदन्ते च क्वचित् कर्मकर्त्तृत्वमधिगम्यते । यथा—पचेलिमास्तण्डुलाः, भङ्गुरं काष्ठम्, भिदिरा रज्जुः, सीनो ग्रासः स्वयमेव, इत्यादयो। वक्ष्यन्ते । अथाख्यात-वाच्यस्थलेहि कर्मकर्त्तुरपि भावे प्रयोगो भवति नान्यत्रेति सूचयितुं मूले—"हन्यते संसारेण इत्येव" एवशब्दो निवेशितः । शुद्धभावस्तु निर्बाधं भवत्येव, गन्तव्यं मयेत्यादि । एतावता कर्म कर्त्तृप्रयोगो विवेचितः । करणाधिकरणयोस्तु नितान्त सुकरत्वेन कर्त्तृत्वे विवक्षिते नकोऽपि विशेषः, तत्र काष्ठं पचति स्थाली पचतीत्यादि प्रयोगा विज्ञेयाः ।

**अमृता०**—२५ तप इति । तपः कर्मयस्य तादृशस्य तपधातोः कर्त्तरि च वाच्ये कर्मवदात्मपदादि भवति,च कारेण कर्मकर्त्तर्यपि । विध्यर्थमिदं वचनम् । पूर्ववत् तत्र यगादिश्च। एवञ्च कर्मकर्त्तरि तप्यते तपः स्वयमेव नारायणस्येति बोध्यम् ।

**अमृता०**—२६ अत्रेति । अत्र तपः कर्मकस्य तपेः कर्त्तरि कर्मवदात्म पदादित्वेऽपि भूतेशे इण् तु नस्यात् । अतस तपो नर इति कर्त्तरि प्रयोगः, कर्मकर्त्तरि तु—अतप्त तपः स्वयमेव नरस्येति । प्रत्युदाहरणे तपेः सन्तापनार्थ इति कर्मकर्त्तृ प्रसङ्गो निवृत्तः । अनेन अर्जनेतरार्थेऽपि न भवतीति सूचितम्; तस्मान्नेह—तपांसि तेपे धनञ्जयः, आचरतीत्यर्थः ।

---

**बाल०**—कुषि । कर्मकर्त्तरि वाच्ये कृष्णधातुके परे कुष निकर्षे रञ्जरागे इत्येताभ्यामुत्तरे श्यः स्यात् परपदं तु वा । श इत् । निष्कर्षो निष्कासनं । नन्दकः कृष्णखड्गः । रज्यतीति वंशीत्यनन्तरं स्वयमेवेति ज्ञेयं । कृष्णधातुके इति किं चुकुषे नन्दकः स्वयमेव । अत्र नित्यमेवात्मपदं । ननु कुषिरञ्जयोः कर्मकर्त्तरि कृष्णधातुके परपदं वेत्येवास्तु किमनेन श्यविधानेन कर्मवत् कार्यं यक् भवत्येव। उच्यते । परपदमेव वा भवति नतु यक् भवतीति शङ्का स्यात् । यक् भावकर्मणोर्भवति भावकर्मणोस्तु आत्मपदस्यैव विधानात् यकः आत्मपदविषयत्वात् तत्र तु परपदस्यापि विधीयमानत्वात् यगित्यकृत्वा श्य इति कृतमिति ज्ञेयं । श्यस्य आख्यातोक्त-श्यस्यानुवादरूपत्वेन कृष्णधातुकत्वाद्गोविन्दाभावः प्रयोजनभावे शिदनुबन्धत्वं ।। २४ ।।

**बाल०**—सर्वे । सर्वेश्वरशब्देन सर्वेश्वरान्तो गृह्यते कर्मकर्त्तरि वाच्ये सर्वेश्वरान्ताद्धातोरुत्तरे इण् वा स्यात् दुहश्च वा । नित्यं प्राप्ते विभाषार्थं वचनं। अकृतेत्यत्र द्वयाद्विष्णुजनान्तेशोद्धवाच्चेत्यनेन सेः कपिलत्वं वामनवैष्णवाभ्यानित्यनेन हरश्च ।। २५ ।।

**बाल०**—नव्य । रुधिर् आवरणे इत्यस्मात् कर्मकर्त्तरि इण् न स्यात् ।। २६ ।।

## २७. कुषिरञ्जिभ्यां श्यः कर्मकर्त्तरि कृष्णधातुके, परपदन्तु वा ।

कुष्यति कुष्यते वा नन्दकः, स्वयमेव रज्यति रज्यते वा वंशो ।

## २८. सर्वेश्वरादिण् वा कर्मकर्त्तरि, दुहश्च ।

---

**अमृता०**—२७ कुषीति । कुष निष्कर्षे, रञ्ज रागे इत्यनयोरुत्तरे कृष्णधातुके श्यप्रत्यय स्यात् कर्मकर्त्तरि, विकल्पेन परपदञ्च । पाक्षिक परपदार्थं विधानमेतत्, तदर्थञ्च यकमपवाद्य श्य प्रत्ययो विहितः । तथाहि कृतेऽपि यकि, कुष्यते रज्यत इति तुल्यमेव रूपं स्यात् किन्तु भावे कर्म्मणि च यको विधानात् तयोः पुनरात्म पद विषयकत्वात् परपदमत्र विरुध्येत, अतः परपदविधान सहायक एवायं श्यविधिरिति विभाव्यम् । कृष्णधातुक इत्येव तेन रामधातुके—अरञ्जि वंशी, अकोषिनन्दकः स्वयमेव, आत्मपदेणो निर्बाधत्वात् ।

**अमृता०**—२८. सर्वेश्वरादिति । कर्मकर्त्तरि सति सर्वेश्वरान्ताद्धातो दुंहश्चोत्तरे इण्

---

**बाल०**—दूहो । कर्मकर्त्तरि दूहा यक् न स्यात् ॥ २७ ॥

**बाल०**—स्नुनमि । स्नुप्रश्रवणे, नमप्रह्वत्वे शब्दे च, इत्येताभ्यां आत्मपदिनश्च ते अकर्मकाश्चेति तेभ्यः । णेर्ण्यन्तात् । श्रन्थ मोचने, ग्रन्थ सन्दर्भे, क्र्यादिरस्यैव ग्रहणं । ग्रन्थ सन्दर्भे चुरादिर्यदा युजादित्वात् णि भवति न तदा तस्यापि ग्रहणं णौ कृति ण्यन्तत्वादेव प्रतिषेधस्य सिद्धत्वात् । श्रथि शैथिल्ये ग्रथि कौटिल्ये भ्वादि तयोरपि, मैत्रेयः ग्रहणमिति ब्रूञ् व्यक्तायां वाचि, कॄ विक्षेपे, गॄ निगरणे, श्रिञ् सेवायां भूषा अर्थो यस्य तेभ्यः सनन्താच्च यगिणौ न स्यातां । कर्मवदात्मपदादि इत्युक्तमतः प्राप्तौ यगिणौ बाध्येते आत्मपदन्तु भवत्येव । प्रस्नुत इति अत्र यग्निषेधः । प्रास्नोष्टेति अत्रेणो निषेधः । नमत इति यकि निषिद्धे शवेव । विकुरुत इति अत्र कृधातोरात्मपदित्वमकर्मकञ्चास्ति स्वयमेवेति सर्वत्र ज्ञेयं । अन्तर्भूतण्यर्था इमे इति अन्यथा कर्मकर्त्तृत्वमेव न घटेतेति भावः । तथाहि स्नुधातोः प्रश्रवणार्थत्वेन गोः कर्मत्वमेव न सम्भवति कुतः कर्मत्वमेव न सम्भवति कुतः कर्मकर्त्तृत्वं । नमधातोरत्र नम्रत्वार्थत्वेनाकर्मकत्वाद्दण्डस्य कर्मत्वाभावे कर्मकर्त्तृत्वाभावः । वि पूर्वस्य करोतेरकर्मकत्वेन पयसः कर्मत्वाभावे कर्मकर्त्तृत्वाभावः स्पष्ट एवेति तस्मादन्तर्भूतण्यर्थत्वेन सकर्मकत्वात् कर्मकर्त्तृत्वाविरोधः । तथाहि । गां प्रस्नौति प्रस्नावयतीत्यर्थः । सा गौः स्वयमेव प्रस्नुत इति । दण्डं नमति नमयतीत्यर्थः स दण्डः स्वयमेव नतेः इति । पयो विकुरुते विकारयति विकृतं करोतीत्यर्थः तत् पयः स्वयमेव विकुरुते इति विकृतं भवतीत्यर्थः । एवमन्यत्रापि अन्तर्भूतण्यर्थत्वेन सकर्मकत्वात् अन्यत्र कर्मकर्त्तृत्वमिति ।

कारयते अकारयिष्टेति प्रेरणार्थेणिः । अत्र माल्येत्यादिकः कर्मकर्त्ता उह्यः । तथाहि वैष्णवो मालां करोतीत्यत्र करोति निष्पत्त्युपसर्जनीभूतनिष्पादने वर्त्तते ततश्च निष्पाद्यमानां मालां वैष्णवो निष्पादयतीत्यर्थः । यदा तु अत्यन्तसुकरत्वेन वैष्णवव्यापाराविवक्षायां करोति निष्पत्तिमात्रे वर्त्तते तदा कर्मणो मालाया एव कर्त्तृत्वात् क्रियते माला स्वयमेव इति यदा तस्मान्निष्पत्तिमात्र निवृत्तेः करोतेः प्रेरणे णिरुत्पद्यते कारयति मालां

अकारि अकृत, अदोहि अदुग्ध ।

वा स्यात् । नित्यं प्राप्ते बिभाषेयम् । अकारि माला, अदुग्धगौः स्वयमेव । अकृत अदुग्ध इत्युभयत्र "ऋद्वयाद् विष्णुजनान्तेशोद्धवाच्चेति सेः कपिलत्वं, वामन वैष्णवाभ्यामिति

वैष्णवः निष्पद्यमानां मालां करोति वैष्णव इत्यनेन सहाऽस्य समानार्थता स्यात् पूर्ववदत्यन्तसुकरत्वेन वैष्णवव्यापारेऽविवक्षिते ण्यन्तापि निष्पत्तिमात्रे वर्त्तते कारयते माला स्वयमेवेति अस्य प्रयोगस्य क्रियते माला स्वयमेव इत्यनेन सह समानार्थतेति । यद्वा । विष्णुमित्रादिकः कर्मकर्त्ता उह्यः । कृञ्हृञ्रादेर्विभाषयेत्यनेन अनिकर्त्तुर्विकल्पेन कर्मत्वं वक्ष्यते । ततश्च वैष्णवो विष्णुमित्रं मालां कारयति तत्र प्रेरणे प्रेरयति स विष्णुमित्रः स्वयमेव मालां कारयते स्वयमेव मालाकरणे प्रेरिता भवतीत्यर्थः । इत्यादीति । एवं श्रन्थादीनामप्युदाहरणानि ज्ञेयानि इति भावः ।

तच्चेति प्रसिद्धं पूर्वोक्तं क्रिया यत् साधिकेत्यादिना उक्तं । आप्यमिष्टं ईप्सितं तस्मादतिशयार्थे तमः प्रत्ययः न ईप्सितं अनीप्सितं कर्मणस्त्रैविध्यमुक्त्वा पाणिन्युक्तमुदाहरति । यथेति भगवानिति सर्वज्ञ इत्यर्थः । कर्त्तुरिति । कर्त्तुरनीप्सितञ्च तथा कर्मत्वेन युक्तं क्रियासाध्यत्वात् तदपि कर्मेत्यर्थः । अकथितञ्च कर्मेति अत्र कर्त्तुरिति न योज्यं अर्थासङ्गतेः । प्रथममीप्सिततमं मालां करोतीत्यर्थमेव क्रियारम्भात् मालाकर्त्तुरीप्सिततमेति । मध्यममनीप्सितं द्वेष्यं द्वेषविषयीभूतं । पापं करोतीति नात्र पापार्थं क्रियारम्भः किन्तु अनवधानतया द्वेष्यमपि पापं करोतीत्यर्थः । अनपेक्षं अपेक्षाशून्यं । मथुरां गच्छन् देशान् पश्यतीति नात्र देशाद्वेष्या द्वेशार्हत्वाभावात् । नापीप्सिततमाः । मथुराया ईप्सिततमत्वेन देशदर्शनक्रियाया आनुषङ्गिकत्वात् । ईप्सितमाया मथुराया उपयोगित्वेऽपि न चेप्सिताः । एकस्यामेव क्रियायामीप्सितयोर्वक्ष्यमाणत्वात् अतोऽनपेक्ष्याः । तथेति । ईप्सिततमस्य उपयोगि अनुकूलं यत् तदीप्सितमिति पाणिन्युक्तस्याकथितस्य लक्षणमाह अकथितत्वमिति अपादानादित्वेन पूर्वोक्तकर्मद्वयेन च अविवक्षितं अकथितमित्यर्थः । आदिपदेन अधिकरणादेर्ग्रहणं । कर्मद्वयमीप्सितरूपं ।

तत्रेति । एकस्यामेवेत्युपादानात् गां दुहता दुग्धान्यवचीयन्त इत्यादौ गौरीप्सितत्वं न भवति किन्तु ईप्सिततमत्वमेव विवक्षितं । नात्र एकस्या एव क्रियायाः द्वे कर्मणी किन्तु भिन्नयोरिति ईप्सितत्वेतु उक्तत्वं स्यात् । नन्वेका क्रिया कथं द्वे वस्तुनी साधयत्विति चेत्तत्राह तथाहीति । अकर्मका इति नास्ति कर्म येषामिति विग्रहः येषामर्थैर्वस्त्वन्तरं निष्पाद्यं न भवतीत्यर्थः सकर्मका इति कर्मणा सह वर्त्तमाना इति अर्थैः साध्येन वस्त्वन्तरेण सह वर्त्तमाना इत्यर्थः । द्विकर्मका इति द्वे कर्मणी येषामिति विग्रहः । अकर्मकादीनां लक्षणमाह तत्रेति तत्र तेषु त्रिविधेषु वस्त्वन्तरसाधनासामर्थ्ये हेतुमाह अन्तर्भूतेति वस्त्वन्तरमित्यन्तरपदेन स्वसाधकतोषयोगित्वमस्त्येवेति सूचितं । असमर्था इत्यत्र असमर्थार्था इति पाठः सुसङ्गतः न हि धातवो वस्त्वन्तरं साधयन्ति किन्तु धात्वर्था एव । एतच्च क्रिया यत् साधिका तत् कर्मेत्यनेनैव सूचितं । एवं समर्था इत्यत्रापि ज्ञेयं । सत्तेति सत्तामात्रादिरर्थो येषामिति विग्रहः । तदिति वस्त्वन्तरमित्यर्थः । क्रियेति क्रियाया

तस्य हरश्च। इण एव विभाषा नतु इण्वदिटः, तेन अकारिषातां पटौ स्वयमेवेति नित्यमिट्।

---

वाप्यमिति विग्रहः वाप्यं साध्यं। सौपद्मा इति कालापा इति वत् सुपद्मसंज्ञकव्याकरण-विशेषाध्यायिन इत्यर्थः। उदिति उत्पादनादिरर्थो येषामिति विग्रहः। मालां करोतीति उत्पाद्यमानां मालां उत्पादयतीत्यर्थः। ननु तर्हि वैष्णवो मथुरां गच्छतीत्यादौ कथं गमनादीनां सकर्मकत्वं अन्तर्भूतण्यर्थत्वाभावात् तथाहि मथुरां गच्छतीति गमनेन मथुरां प्राप्नोतीत्यर्थः। इति उच्यते मथुरां प्राप्नोतीति प्राप्तिः संयोगः ततश्च मथुरां आत्मना सह संयोजयतीत्यर्थः। इत्येवं सर्वत्र ज्ञेयं। तत्रैवेति सकर्मकेष्वेवेत्यर्थः। द्विवृत्तय इति द्वे वृत्ती येषामिति विग्रहः वृत्तिरर्थः। एत इति दुहादयो निवहादयश्चेत्यर्थः। हेतुमाह आकर्षणेति आकर्षणविशेषपूर्वकं यन्निष्कासनं तदादिरूपा अर्था येषां तेषां भावस्तत्त्वं तस्मादिति। आकर्षणरूपा एका वृत्तिः। निष्कासनरूपा द्वितीयेत्येवं क्रमेण ज्ञेयं। तदुपयोगीति तस्य दुग्धादिकस्योपयोगि अनुकूलं। तद्वृन्दमिति तेषां वृन्दमिति विग्रहः वृन्दं गणः। दुहीति दुह प्रपूरणे टुयाचृ याच्ञायां रुधिर आवरणे प्रच्छ ज्ञीप्सायां प्रछीत्यत्र छन्दोऽनुरोधात् द्विः सर्वेश्वरमात्राच्छः इत्यनेन द्वि र्न भवतीति ज्ञेयं। याच्ञायां चिञ् चयने ब्रू ञ व्यक्तायां बाचि शासु अनुशिष्टौ जि जये दण्ड दण्डनिपाते वृञ् वरणे मन्थ विलोड़ने वद व्यक्तायां वाचि इति इत्येवं प्रकारेण एते दुहादि ज्ञेयं। तु पुनस्तद्दुहादि उभयकर्म भवेत्। उभयकर्मेति उभयं कर्म यस्येति विग्रहः। दुहादीति वृन्दविशेषणत्वाद्ब्रह्म। दुह्यादिषु चिञ जि वृ वद वर्जं धातुनिर्देशे इक् प्रत्ययः कृत्। अथेति नीञ् प्रापणे वह प्रापणे हृञहरणे कृष विलेखनाकर्षणयोः एते मुख्या यत्र तद्वृन्दमपि उभयकर्म भवेदित्यन्वयः। मुख्यशब्दोपादानादन्येषामप्येतद्वृन्दपातिता भवतीति सूचितं।

एषां वृत्ती यथेति। निष्कासनं निःसारणं स्वस्मै आत्मने। वेष्टनमावरणं अन्तःस्थापनं वेष्टितस्याऽबहिस्थापनं जिज्ञासा ज्ञानेच्छा। याचिवदिति स्वस्मै दाने प्रेरणं वाञ्छेत्यर्थः। एवमन्त्र च ज्ञेयं। ननु याचिवत् इति कथं उक्तं याचिस्त्व विनयार्थोऽपि इति वक्ष्यति भिक्षिस्तु विनयार्थ एव। अतः समानार्थत्वाभावात्। उच्यते। न हि याचिः सर्वत्रैवाविनयार्थो गृह्यत इति किन्तु क्वचिदिति अतएव मातरं नवनीतं याचत इत्युदाहृतं, अत्र याचि विनयार्थ एव। अवशेषणमवशिष्टी करणं आदानं ग्रहणं। शासेश्चेति श्रावणं प्रतिपादनमित्यर्थः।

वृञ इति यद्यपि याचि वदिति सामान्येनोक्तं तथापि पूज्यविषयिकायां याच्ञाया-मेवास्य प्रयोगो ज्ञेयः, अन्यथा वृञ ग्रहणमनर्थकं स्यात्, भिक्षिरर्थ पर इति वक्ष्यति। अतः सामान्यग्रहणत्वेऽपि भिक्षार्थत्वेनैव द्विकर्मकत्वसिद्धेर्हेतो र्गोवर्द्धनं वरं वृणुते इत्युदाहृतं। कृषश्चेति संयोजनमाकर्षणमित्यर्थः। कृष्णो गां दुग्धं दोग्धीति दुग्धमभीप्सिततमं तदर्थं दोहनक्रियारम्भात् गामितीप्सितं ईप्सिततमोपयोगित्वात् उभयत्र यत् क्रिया यत् साधि-केत्यादिना कर्मत्वं एवं सर्वत्र ज्ञेयं। अन्वयार्थो तु अत्रेत्यादिना वक्ष्येते। दुग्धं निष्कासयन् अङ्गुलिद्वयेन स्तनयुगमाकर्षयतीत्यर्थः। आकर्षणवृत्तिसाध्येप्सित–गोकर्मकनिष्कासनवृत्ति–साध्येप्सिततम–दुग्धकर्मकवर्त्तमानदोहनानुकूलव्यापारवान् कृष्णः।

मातरमिति नवनीतं वाञ्छन् मातरं स्वस्मै दाने प्रेरयतीत्यर्थः। स्वदानप्रेरणवृत्ति-साध्येप्सितमातृकर्मकवाञ्छावृत्ति-साध्येप्सिततम नवनीतकर्मकवर्त्तमानयाचनक्रियानुकूल-व्यापारवान् कृष्णः। गोष्ठमिति गां अन्तःस्थापयन् गोष्ठं वेष्टयतीत्यर्थः। वेष्टनवृत्ति-साध्येप्सितगोष्टकर्मकान्तस्थापनवृतिसाध्येप्सिततमगोकर्मकवर्त्तमानरोधनक्रियानुकूलव्यापा-रवान् कृष्णः। पितरमिति। इन्द्रमखजिज्ञासमानः पितरं स्वोपदेशे प्रेरयतीत्यर्थः। स्वोपदेशप्रेरणवृत्तिसाध्येप्सितपितृकर्मकजिज्ञासावृत्तिसाध्येप्सिततमेन्द्रमखकर्मकवर्त्तमान-प्रच्छनक्रियानुकूलव्यापारवान् कृष्णः। मखोयज्ञः। यज्ञेति अन्नं वाञ्छन् यज्ञपत्नीः स्वस्मै तद्दाने प्रेरयतीत्यर्थः स्वदानप्रेरणवृत्तिसाध्येप्सितयज्ञपत्नीकर्मकवाञ्छावृत्तिसाध्येप्सित-तमान्नकर्मकवर्त्तमानभिक्षाक्रियानुकूलव्यापारवान् श्रीदामा। वृन्दावनमिति। पुष्पाण्याद-दानः वृन्दावनमवशेषयतीत्यर्थः। अवशेषणवृत्तिसाध्येप्सित-वृन्दावनकर्मकादानवृत्ति-साध्येप्सिततम-पुष्पकर्मक-वर्त्तमान-चयन-क्रियानुकूलव्यापारवान् कृष्णः। पितरमिति गोवर्द्धनमखं प्रतिपादयन् पितरं श्रावयतीत्यर्थः। श्रावणवृत्तिसाध्येप्सितपितृकर्मकप्रति-पादनवृत्तिसाध्येप्सिततमगोवर्द्धनमखकर्मकवर्त्तमानवचनक्रियानुकूलव्यापारवान् कृष्णः। लोकानिति तद्भक्तिं गोवर्द्धनभक्तिं प्रतिपादयन् लोकान् श्रावयतीत्यर्थः। श्रावणवृत्ति-साध्येप्सितलोककर्मक-प्रतिपादनवृत्ति-साध्येप्सिततम-गोवर्द्धन भक्तिकर्मक वर्त्तमानशासन-क्रियानुकूलव्यापारवान् कृष्णः। दैत्यानिति युद्धं वशीकुर्वन् दैत्यानतिक्रामयतीत्यर्थः। अतिक्रमवृत्तिसाध्येप्सित-दैत्यकर्मक-वशीकरणवृतिसाध्येप्सिततम-युद्धकर्मकवर्त्तमान-जय-क्रियानुकूलव्यापारान् कृष्णः। दैत्यानिति प्राणान् गृह्णातीत्यर्थः। निग्रहवृत्तिसाध्येप्सित दैत्यकर्मकग्रहणवृत्तिसाध्येप्सिततम-प्राणकर्मक-वर्त्तमानदण्डनक्रियानुकूलव्यापारवान् कृष्णः। गोवर्द्धनमिति। वरं वाञ्छन् स्वस्मै तद्दाने प्रेरयतीत्यर्थः। स्वदानप्रेरणवृत्ति-साध्येप्सित-गोवर्द्धनकर्मकवाञ्छावृत्तिसाध्येप्सिततम-वरकर्मकवर्त्तमानवरणक्रियानुकूल-व्यापारवान् कृष्णः। दधीति। नवनीतमुत्थापयन्ती दधि सञ्चालयतीत्यर्थः। सञ्चालन-वृत्तिसाध्येप्सित-दधिकर्मकोत्थापनवृत्तिसाध्येप्सिततम-नवनीतकर्मकवर्त्तमानमन्थनक्रिया-नुकूलव्यापारवती गोपी। सखीरिति। नर्म प्रतिपादयन् सखीः श्रावणवृत्तिसाध्येप्सित-सखीकर्मक प्रतिपादनवृत्तिसाध्येप्सिततम-नर्मकर्मक-वर्त्तमानवदनक्रियानुकूलव्यापारवान् कृष्णः। क्रीड़ा लीला च नर्म चेत्यमरः। अत्रेति इत्यादिरित्यादिपदेन मातरं याचते नवनीतं याचते इत्यादिरप्यन्वयो ज्ञेयः। दुग्धमिति निष्कासयन् निःसारयन् अङ्गुलिद्वयेन इति युगपद्दक्षिण-वामकरयोरङ्गुलितर्जनीरूपेणेत्यर्थः स्तनेष्विति स्तनचतुष्टयेत्यर्थः। तन्ना-कर्षणमेकैकस्मिन् स्तेन अङ्गुलिद्वयकरणकमेव ज्ञेयं। इत्यादिरित्यादिपदसंगृहीता अर्था उक्ताः। भिक्षिरर्थपर इति अर्थधातुपरः द्विकर्मकः। अतो याच्ञार्थस्यान्यधातोरपि द्विकर्म-कता। अर्थपर इति। अर्थः परो यस्येति विग्रहः। अर्थो याच्ञा परः श्रेष्ठ प्रतिपाद्य इति यावत् ततश्च याच्ञाप्रतिपादक इत्यर्थः अर्थतात्पर्यक इति फलितार्थः। प्रार्थयत इत्यत्र अर्थः याच्ञायां चुरादिः आत्मनेपदी। धातूनामनेकार्थत्वान्मृगिरपि याच्ञार्थः अतः शङ्करं वरं मृगयते इत्यपि भवतीति ज्ञेयं। ननु यद्येवं तर्हि याचेरुपादानेन किमिति चेत्तत्राह याचिस्त्विति। अविनयार्थ इति अविनयपूर्वकयाच्ञार्थ इत्यर्थः। भिक्षादीनां विनयपूर्वकयाच्ञायामपीति शेषः। दुष्टं शतं याचते राजा इत्यत्र याचनमस्त्येव किन्तु

अविनयपूर्वकमिति । ननु तथापि किं याचेर्ग्रहणेन अविनयार्थत्वेऽपि याच्ञार्थकत्वात् उच्यते भिक्षादीनां विनयपूर्वकयाचनार्थत्वं प्रसिद्धमेव अतस्तस्मिन् भवत्येव अविनयपूर्वक-याचनार्थत्वेतु भवेत् किं वा न भवेदिति सन्देहः स्यात् अतः पृथक् ग्रहणमुचितमेवेति नास्ति विरोधः । अत्रेति अत्र दुहादिषु ब्रू शासि वदोनामिति प्रयोग इति शेषः । प्रतिपाद्य-मानमिति हेतुगर्भविशेषणं प्रतिपाद्यमानत्वात एवं ईप्सिततमत्वमित्यर्थः । मखादिक-मित्यादिपदेन तद्भक्तिनर्मणो ग्रहणं तत् प्रतिपादनेन मखादिक प्रतिपादने संपद्यमानं सम्बध्यमानं पित्रादिकमिति त्वीप्सितं । पित्रादिकमित्यादिपदेन लोकसखीनां ग्रहणं । श्रावणकाले पित्रादिकस्य मखादिकोपयोगिताया अव्यक्तत्वात् कस्य वेप्सिततमत्वं कस्य वेप्सितत्वमित्यपि व्यक्तं न स्यादतोऽत्र ब्रू शासि वदीनामित्यादिकमुक्तमिति ज्ञेयं । अत्र निर्गलितार्थमाह अत्र द्विकर्मकेषु मध्ये ब्रू शासिवदीनाञ्च त्रयाणां प्रयोगे प्रतिपाद्यमानं ग्राह्यमाणं मखादिकं गोवर्द्धनमखतद्भक्तिनर्मेति त्रयं ईप्सिततमं मुख्यं कर्मेत्यर्थः । तत्प्रति-पादनेन तेषां गोवर्द्धनमखतद्भक्तिनर्मणां प्रतिपादनेन संग्राहकतया निष्पाद्यमानं पितृलोक-सखीति त्रयमीप्सितं गौणमित्यर्थः । तदर्थानामपीति तत्पदेनात्र ब्रू शासिवदीनां परामर्शः । दृश्यत इत्यनेन तदर्थानां द्विकर्मकताया असार्वत्रिकत्वं सूचितं । अतएवसमानार्थानामपि ब्रू शासिवदीनां पृथग्ग्रहणं कृतं । अथो वा तेषां दुहादीनामर्थ इव अर्थो येषां ते तदर्थाः तेषामपि ग्रहणमित्यपि ज्ञेयं । जगादेति गदधातोस्तदर्थत्वात् द्विकर्मकत्वमिति । मारीचं महार्थं वचनं प्रतिपादयन् सन् मारीचं उच्चैः श्रावयामास । उच्चैः श्रावणवृत्तिसाध्ये-प्सितमारीचकर्मक-प्रतिपादनवृत्ति-साध्येप्सिततम-महार्थवचनकर्मकपरोक्षभूतगदनक्रियानु-कूलव्यापारवान् रघुनन्दनः । गिरमिति विपूर्व-धा-करोत्यर्थे अभिपूर्वन्तु भाषणे इत्यनु-सारेण अभिपूर्वस्य दधातेः कथनार्थत्वेन तदर्थत्वात् द्विकर्मकता । नरेन्द्र इति गौणकर्मत्वात् नरेन्द्रस्योक्तत्वं । द्वैपायनेन व्यासेन नरेन्द्रः युधिष्ठिरः, अत्युदारां गिरं अभिदधे । अत्युदारां गिरं प्रतिपादयता द्वैपायनेन नरेन्द्रः श्रावयाञ्चक्रे । द्वैपायनकर्तृकप्रतिपादनवृत्तिसाध्येप्सित-तमात्युदारगीः कर्मकपरोक्षातीताभिधानक्रियायाः श्रावणवृत्तिसाध्येप्सितोक्तकर्म नरेन्द्र इत्यर्थः । किञ्चेति । वृत्तिद्वयसाध्यत्वेऽपि क्रियैकसाध्यत्वात् कर्मप्रत्यये सामान्याच्च गौणमुख्योभयकर्मोक्तत्वप्राप्ते एकस्यैव कर्मण उक्तत्वं स्यादिति व्यवस्थापयति कर्मप्रत्यये-त्विति । कर्मणि वाच्ये प्रत्यये सति दुहादेर्धातुगणस्य गौणकर्म उक्तं । कर्मप्रत्यये सति नीवहादेर्धातु गणस्य मुख्यकर्मोक्तं स्यात् । यदुक्तं प्राचीनैर्यत्राख्यातादिः ।

अस्यार्थ इति । णेरिति ण्यन्तादित्यर्थः । णेरेवेति ण्यन्तस्यैवेत्यर्थः । कर्तृकर्मणो-रिति सप्तमी द्विवचनान्तं स्यादिति उक्तत्वमिति शेषः । एवमन्यत्र ज्ञेयं । सचेति सुगमत्वात् कर्मणीति नोक्तमिति ज्ञेयं । कृष्णेनेति गौणकर्मत्वाद्गारुक्तत्वं । दुग्धं निष्कासयता कृष्णेन अङ्गुलिद्वयेन स्तनेषु गोवृत्तिषु गौराकृष्यते इत्यर्थः । कृष्णकर्तृकनिष्कासनवृत्ति-साध्ये-प्सिततम-दुग्धकर्मक-वर्त्तमान-दोहनक्रियाकर्षणवृत्ति साध्येप्सितोक्तकर्म गौः । नवनीत-मिति । नवनीतं वाञ्छयता कृष्णेन स्वस्मै दाने माता प्रेर्यत इत्यर्थः । कृष्णकर्तृक वाञ्छावृत्तिसाध्येप्सिततम–नवनीतकर्मकवर्त्तमान–याचनक्रिया-प्रेरणवृत्ति–साध्येप्सितोक्त-कर्म माता । इत्यादीत्यादिपदेन उदाहरणानि यथा । गोष्ठं गा अवरुद्धयते पिता इन्द्रमखं पृच्छ्यते यज्ञपत्न्यः अन्नं भिक्ष्यन्ते वृन्दावनं पुष्पाण्यवचीयते पिता गोवर्द्धनमखमुच्यते ।

लोकास्तद्भक्ति शिष्यन्ते दैत्या युद्धं जीयन्ते दैत्याः प्राणान् दण्ड्यन्ते गोवर्द्धनो वरं व्रियते दधि नवनीतं मथ्यते सख्यो नर्म उह्यन्ते। अथेति नीवहादीत्यादिपदेन हृञकृष्योर्ग्रहणं कृष्ण इति गाः प्रेरयन् व्रजं संयोजयतीत्यर्थः। श्रीदामानमिति श्रीदामानं स्कन्धे धारयन् भाण्डीरं संयोजयतीत्यर्थः। भाण्डीरमिति वटविशेषमित्यर्थः वस्त्रमिति वस्त्रमाकर्षन् कदम्बाग्रं संयोजयतीत्यर्थः। गोपीरिति गोपीराकर्षन् वनं संयोजयतीत्यर्थः। अन्वयार्थौ पूर्ववदिति तत्रान्वयो यथा गा नयति व्रजं नयतीति एवं सर्वत्र ज्ञेयं। अर्थस्तूक्त एव।

अथेति। अथ नीवहीत्यादाविति। अथ नीवहि हृञ कृषि-मुख्यमपीत्यत्रेत्यर्थः। करोत्यादयोऽपि इति द्विकर्मका इति शेषः।

आच्छिन्नन्निति वलादाकर्षणपूर्वकं गृह्णन्नित्यर्थः। धर्षयति प्रगल्भयति धृष्टा करोतीत्यर्थः। तानि ओदनं साधयन्त्यः तान् तण्डुलान् विक्लेदयन्तीत्यर्थः। कृष्णेनेति मुख्यकर्मत्वाद्गवामुक्तत्वं। ननूभयोः कर्मणोः प्रयोगे दुह्यादेर्गौणस्योक्तत्वमुक्तं नीवहादेस्तु मुख्यस्यैव यदा एकस्यैव प्रयोगो भवति तदा किं भवतीति चेत्तत्राह यदात्विति यदा कर्मणि वाच्ये एकमेव कर्म प्रयुज्यते तदा गौणं मुख्यं वा उक्तं स्यात्। अतो दुग्धानीत्यत्र मुख्यमेवोक्तं कृष्णकर्तृक-आकर्षणवृत्ति-साध्येप्सित-गोकर्मकवर्त्तमान-दोहनक्रियानिष्का-सनवृत्ति-साध्येप्सिततमकर्माणि दुग्धानीत्याक्षेपलभ्यार्थः। वस्तुतस्तु कृष्णकर्तृकवर्त्तमान-दोहनक्रियाकर्माणि दुग्धानि इत्यनेनैव सिद्ध्यति।

अथ द्विकर्मकोदाहरणान्तरं प्रेरणाद्यर्थं विहितो योणिस्तदन्तस्य प्रयोगे सति कर्त्तुः कर्मणश्च विवेकः विवेचना क्रियते।

अत्रेति ण्यन्तकर्त्ता प्रयोजकः। पूर्वकर्त्ता प्रयोज्यः। यथा विष्णुमित्र इति। अत्र हेतुकर्त्तुर्विष्णुमित्रस्य प्रेरणव्यापाररूपेण पचधातोर्णिः तस्मात् पाचि ण्यन्तादुत्तरे प्रयोजक-कर्त्तुर्वाच्ये तिप्प्रत्यये कृते सति स कर्त्तैवोक्तः पूर्वकर्त्तातु वैष्णवोऽनुक्तः अतस्तस्मिन् तृतीया तद्वाच्ये प्रत्ययानभिधानात् अन्नमपि पचनसाध्यं कर्म सुतरामनुक्तं स्यात्। अर्थस्तु। प्रयोज्यकर्त्तुर्वैष्णवस्य अन्नस्य कर्मणो वर्त्तमानपचनक्रियायाः प्रयोजकविष्णुमित्र इति। प्रयोज्यवैष्णवकर्तृकाऽन्नकर्मकवर्त्तमानपचनक्रियाप्रेरणानुकूलव्यापारवान् विष्णु-मित्रः।

पुनरिति। तत्कर्त्ता पुनर्णिकर्त्ता। पूर्वपूर्वकर्त्ता अणिकर्त्ता पूर्व-णिकर्त्ता च। प्रयोज-कप्रयोज्य विष्णुमित्रस्य प्रयोज्यवैष्णवस्य अन्नस्य कर्मणो वर्त्तमानपाचन क्रियायाः प्रयोजको वैष्णवाचार्यः प्रयोजकप्रयोज्य विष्णुमित्र-प्रयोज्य वैष्णवकर्तृकाऽन्नकर्मकवर्त्त-मानपचनक्रियानुकूलव्यापारवान् वैष्णवाचार्यः। ण्यन्तस्य धातोकर्मणोऽभावे तदेव पूर्वक-र्मैव कर्त्तृमात्रं प्रयोजकप्रयोज्यरूपं। विष्णुमित्रेणेति अकर्मकादिषु धातुषु पूर्वकर्त्तुः कर्मत्वं वक्ष्यते। अतो ण्यन्तस्य पचेः कर्त्तुर्न कर्मत्वं अतः पूर्वकर्मैवोक्तं प्रयोजकविष्णु-मित्र-प्रयोज्य वैष्णवकर्तृकवर्त्तमानपाचनक्रियाया उक्तकर्म अन्नं ॥ २८ ॥

## २६. नरुध इण् ।

अरुद्ध ।

---

अमृता०—२८. नेति । कर्मकर्त्तरि सति रुधिर् आवरणे इत्यस्मादिण् प्रत्ययो न स्यात् । अरुद्ध गौः स्वयमेव ।

---

बाल०—अक । अकर्मकाश्च गति ज्ञानशब्दभोजनवाचिनश्च तेषां धातूनां प्रयोगे णौ सति अणिकर्त्ता कर्म स्यात् । डुकृञ्करणे हृञ्हरणे इत्यादेः प्रयोगे अणिकर्त्ता विभाषया विकल्पेन स्यात । कृञो हृञश्च अप्राप्ते विभाषेयं । नीखा । नीञ प्रापणे खाद्द भक्षणे अद भक्षणे ह्वेञ स्पर्द्धायां शब्दे च शब्दायेति क्यङन्तशब्दाय धातुः क्रदि आह्वाने रोदने च इत्येते अहिंसने अर्थे अदने भक्ष इत्येष च अयन्तृ-बहिश्च वर्त्तते इति शेषः । एषां प्रयोगे णौ सति अणिकर्त्तुः कर्मत्वं निषिध्यते अयन्तृकवहिरिति यन्ता गवादेः प्रयोजकः नास्ति यन्ता यत्र सोऽयन्तृकः स चासौ वहिश्चेति । नीखाद्यदिह्वाशब्दायक्रन्दां भक्षेरहिंसने । अयन्तृकस्यापि वहेर्णौ कर्मत्वं निषिध्यत इति वा पाठः । नीञो वहेश्च गतिवाचित्वात् खाद्यदिभक्षीणां भोजनवाचित्वात् ह्वेञः क्रन्दश्च शब्दवाचित्वात् शब्दायेत्यस्य तु अकर्म-कत्वात् शब्दवाचित्वात् च प्राप्ते निषेधः क्रमेणोदाहरति वैष्णवाचार्य इति ।

प्रयोज्य वैष्णवकर्मणः वर्त्तमानसत्ताक्रियायाः प्रेरणकर्त्ता वैष्णवाचार्यः । प्रयोज्य वैष्णवकर्मकवर्त्तमानभवनक्रियाप्रेरणानुकूलव्यापारवान् वैष्णवाचार्यः । एवमिति अण्यन्ते गोपा गां जानन्ति ण्यन्तेतु गोपान् गां ज्ञापयति । अण्यन्ते पश्यन्ति ण्यन्तेतु दर्शयति । इति अण्यन्ते उपलभ्यन्ते ण्यन्तेतु उपलम्भयतीति । दर्शनस्य ज्ञानान्तर्भावात् उपलब्धेस्तु ज्ञानरूपत्वात् दृशधातोरुपपूर्व-लभेश्च ज्ञानवाचित्वं । कृष्णा गोपीं पुष्पाणि घ्रापयती-त्याद्यपि ज्ञानान्तर्भावात् । गोपानिति । अण्यन्ते गोपा गीतं गायन्ति ण्यन्तेतु गोपा-नित्यादि । अत्रेति । अत्र शब्दार्थे जल्प व्यक्तायां वाचि वि पूर्व लप व्यक्तायां वाचि । इत्येतावप्युदाहार्यौ । जल्पविलपयोः शब्दवाचित्वं स्पष्टमेव तथापि किमर्थमेतदुक्तमिति न निश्चितं । श्रवणस्यापीति शब्दात्मकत्वादिति शब्दमूलकत्वादित्यर्थः । शब्दमूलकत्वा-दिति वा पाठः । तदन्तर्भावः श्रावयतीति अण्यन्ते गोपा गीतं शृण्वन्ति ण्यन्तेतु श्रावय-तीत्यादि । गा इति अण्यन्ते गावस्तृणं भुञ्जते ण्यन्तेतु गा इत्यादि । गा जलमिति । अण्यन्ते गावो जलं पिबन्ति ण्यन्तेतु गा इत्यादि ।

कथमिति । अकर्मकादीनामेव-अणिकर्त्तुः कर्मत्वमुक्तमतो ग्रहेरणिकर्त्तुः कर्मत्वं न भवतीत्यत्र विरोधः । अयाचितारमिति । अद्रिर्हिमालयः । अयाचितारमयाचकं देवदेवं महादेवं सुतां पार्वतीं ग्राहयितुं स्वीकारयितुं न शशाक शक्तो न बभूवेत्यर्थः । अजिग्रह-दिति । अण्यन्ते रघुनन्दनस्तद्धनुरग्रहीत् ण्यन्ते जनकस्तन्नामा नृपस्तद्धनुस्तं रघुनन्दनं अजिग्रहत् ।

सिद्धान्तमाह अत्रेति । उपादानार्थस्य स्वीकरणार्थस्य प्राप्त्यात्मकत्वेनेति उपा-दानस्येति शेषः । उपादानस्य प्राप्त्यात्मकत्वेन तदर्थस्य ग्रहेर्गत्यर्थतेति । एतेन गौण-गत्यर्थस्यापि ग्रहणं भवतीति सूचितं । त्याजितैरिति द्रुमैरिति द्रुमैः कीदृशैः फलं

३०. दुहो न यक्।

दुग्धे ।

---

अमृता०—३०. दुह इति । अत्र दुहधातो र्यक् प्रतिषिद्धः कर्मकर्त्तरि । दुग्धे गौः स्वयमेव ।

---

त्याजितैः । अत्र त्यागस्य गत्यात्मकत्वात् अणिकर्त्तृणां द्रुमाणां प्रथमं कर्मत्वमासीत् क्तप्रत्ययस्य कर्त्तरि विहितत्वात् अनुक्तत्वञ्च द्रुमान् फलं त्याजित इति पश्चात् क्तप्रत्ययस्य कर्मणि विहितत्वात् ण्यन्तकर्मणां तेषामुक्तत्वं द्रुमाः फलं त्याजिता इति तत्पश्चात् विवक्षावशतया तेषां द्रुमाणामेवकर्त्तृत्वं परार्द्धपद्यस्थितप्रत्ययान्तरस्य कर्त्तर्यऽविहितत्वा-दनुक्तत्वञ्च त्याजितपदस्य च तद्विशेषणत्वात्तादृश विष्णुभक्तिभाक्त्वं फलं त्याजितै द्रुमैरिति वनं रज्यते इति शेषः । उत्खातैरिति भग्नैरिति च द्रुमाणामेव विशेषणं । पुनरिति पुनर्णौ सति णिकर्त्तुः कर्मत्वं न स्यात् । नेदं लक्षण । किन्तु अणिकर्त्ता इति यदुक्तं तदेव विवृतमिति । पितेति । कृष्णो गा वनं गमयति तञ्च पिता प्रेरयतीत्यर्थः पुनर्णौ कृते प्रथमणिकर्त्तुः कृष्णस्य न कर्मत्वं । कारयतीति अण्यन्ते भक्तः भक्तिं करोति अत्र स्वशब्दो न योज्यः ण्यन्तेतु कारयतीत्यादि । विकारयतीति । अण्यन्ते वैष्णवो विकुरुते विकृतो भवतीत्यर्थः । ण्यन्तेतु विकारयतीत्यादि । अस्माकं मते वि पूर्वस्य करोतेरकर्म-त्वान्नित्यमेव कर्मत्वं भवतीति केचिदित्युक्तं । हारयतीति । अण्यन्ते सखी मुरलीं हरति ण्यन्तेतु हारयतीत्यादि ॥ २९ ॥

बाल०—अभि । आत्मपदे विषये अभिवादेदृशेः प्रयोगे अणिकर्त्ता कर्म वा भवति आभिवादेरप्राप्ते दृशो ज्ञानार्थत्वात् प्राप्ते विभाषा । कृञ् हृञादेर्विभाषयेति यदुक्तं तस्यैव प्रपञ्चरूपं लक्षणमिदमिति ज्ञेयं । अभिवादयत इति अभि पूर्वं वदधातुरत्र चुरादि ण्यन्तो गृहीतः ततश्चुरादि ण्यन्ते कृष्णो गर्गं अभभिवादयति प्रणमतीत्यर्थः । प्रेरण ण्यन्तेतु अभिवादयते इत्यादि । ञिद्भूच उभयपदिभ्योणेः कर्तृगामि क्रियाफलं इत्यनेन आत्मपदं । एवं दर्शयत इति । अण्यन्ते कृष्णः स्वकार्यं प्रदर्श्यते ण्यन्तेतु दर्शयत इत्यादि । आत्मपदं तेनैव । पचत्यादीति । पचत्यादीनां धातूनां णौ कृते सति विकल्पं यथा स्यात्तथा अणि-कर्त्तुः कर्मत्वं भवतीति केचित् पण्डिता आहुः । श्रुदृशो र्णौ कृते सति अणिकर्तुः कर्मत्वं न भवतीति कश्चिदाह । कर्मेति । यथा अकर्मकादि ण्यन्तात् कर्तृप्रत्यये ण्यन्तकर्त्तैवोक्तः स्यात् नतु पूर्वकर्त्ता । तथा अकर्मकादि ण्यन्तात् कर्मप्रत्यये सति ण्यन्तस्य कर्मैवोक्त स्यात् नतु पूर्वकर्मेत्यर्थः । एवकारेण नतु णत्यादीनां पूर्वकर्म उक्तं स्यात् । वैष्णवाचार्ये-णेति । वैष्णवाचार्यस्य भावनक्रियायाः प्रयोज्य कर्म वैष्णवः । अकर्मकत्वादत्र पूर्व-कर्मणोऽभावः । कृष्णेनेति । अत्र पूर्वकर्मणो वनस्य नोक्तत्वं । कृष्णस्य वनकर्मकवर्त्त-मानगमनप्रेरणक्रियायाः प्रयोज्यकर्माणि गावः । पुनरिति । पुन र्णौ कृते सति कर्मणि बाच्ये प्रत्यये प्रथम णिकर्त्तुः कर्मत्वाभावात् अणिकर्त्तुः कर्मत्व तदेव कर्म उक्तं स्यात् । पुनर्णौ निकर्त्तु र्न कर्मत्वमित्युक्तमतोऽणिकर्त्तृणां ण्यन्तकर्मणां गवामेवोक्तत्वं ।

प्रयोजक-पितुः प्रयोजकप्रयोज्य कृष्णकर्तृक वनकर्मकवर्त्तमानगमनप्रेरणक्रिया प्रयोज्य कर्माणि गावः। कृष्ण इति। अण्यन्ते गोपा गा व्रजं नयन्ति ण्यन्तेतु कृष्ण इत्यादि। अत्र अणिकर्त्तॄणां गोपानां न कर्मत्वं। एवमिति यथा खादयति गोपैस्तानि फलानि कृष्णः एवमादयति। तथेति। अण्यन्ते गोपा गा आह्वायन्ति ण्यन्तेतु आह्वयतीत्यादि। अकर्मक इति क्यङैव शब्दरूपस्य कर्मण उक्तत्वादिति भावः। अयतेरिति अयगतावित्यस्य अणिकर्त्तुः कर्मत्वनिषेध इत्यर्थः भक्षयति इति भक्षधातुश्चुरादि ण्यन्ते कृष्णो नवनीतं भक्षयति प्रेरण ण्यन्तेतु भक्षयतीत्यादि। हिंसायान्तु इति। प्राणिविषयकपीडोत्पादनं हिंसेति मुखनासिकाभ्यां यो वायुर्निःसरति स प्राणः सोऽस्यास्तीति प्राणी। भक्षयतीति चुरादि ण्यन्ते गरुड़ो दैत्यान् भक्षयतीति। भक्षयतीति चुरादि ण्यन्ते दैत्या यादवानां भोज्यं भक्षयन्तीति। वहेरिति अण्यन्ते। गोपा वन्यभोजनं वहन्तीति। वन्यभोजनमिति वन्यभोज्यमित्यर्थः। टणप्रत्ययस्य कर्मणि विहितत्वात्। सयन्तृकत्वेत्वित्येव पाठः वहेरिति शेषः। सयन्तृक-कर्त्तृत्वेति पाठः सर्वत्र दृश्यते किन्तु स दुर्बोध एव। सयन्तृक कर्त्तृत्वेत्विति पाठेतु यन्त्रा सह वर्त्तमानः सयन्तृकः सकर्तृकस्तस्य भावस्तत्त्वं तस्मिन् वहेरिति शेषः। वाहयतीति। अण्यन्तेतु वृषभाः शकटं वहन्तीति। नाप्यन्त इति ण्यन्ताद्यक्। मुख्यत्वादिति मुख्यकर्मत्वादित्यर्थः। यत उक्तं ण्यादेस्तु मुख्य इति।

काला। कालश्च अध्वा च भावश्च देशश्च तेषां अन्तर्भूतं क्रियान्तरं येषां तथाभूतैः सर्वैरकर्मकैर्धातुभिर्योगे कर्मत्वं जायते कालाध्वभावदेशानामिति तद्वाचकानामित्यर्थः। अध्वशब्देनेति। तस्य अध्वनः परिमाणं। एतत्तूपचारादिति ज्ञेयं। अतएव क्रोशत्रयं गोवर्द्धनोऽस्तीत्युदाहृतं। व्याप्तिपूर्वकमिति। ततश्च मासं वाप्य आस्ते इत्यादिरर्थः। आसनादि पूर्विकायां प्राप्तावास्यादीनां वृत्तिरिति भाष्यं प्राप्ताविति: व्याप्तावित्यर्थः। कालसंख्यायामपि कालस्योपचारात् मासचतुष्टयमधीते वर्षशतं जीवतीत्याद्यपि भवतीति ज्ञेयं। क्रोशत्रयं गोवर्द्धनोऽस्तीत्यत्र अध्व परिमाणसंख्यायामध्वपरिमाणस्योपचार इति ज्ञेयं। त्रीन् क्रोशान् गोवर्द्धनोऽस्तीति वा पाठः। यथा धेनुद्वयं ददामीत्युक्ते द्वित्वसंख्या-विशिष्ट धेनोरेव दानं प्रतीयते। तथा क्रोशानां त्रयं क्रोशत्रयमिति धर्मप्रधानेन त्रयशब्देन कृष्णपुरुषे कृते तस्योत्तरपदार्थप्रधानत्वेऽपि त्रित्वसंख्याविशिष्ट-क्रोशं वाप्य गोवर्द्धनस्थितिः प्रतीयते इति। गोदोहमिति गोदोहशब्दो भावे घणन्तः। माथुरानिति मथुरा राजधानी कालदेशानित्यर्थः। सर्वैरिति पदोपदानात् सकर्मकोऽपि यदा कर्माविवक्षयामकर्मकस्तस्यापि ग्रहणार्थमतो मासोऽधीतः रात्रिरधीता अहरधीतमित्यादि। मासं वेदोऽधीत इत्यादौ तु धातोः सकर्मकत्वान्नास्य विषयः किन्तु कालाध्वनोरत्यन्तव्याप्तौ द्वितीयेत्यनेन द्वितीया। अत्रेति पूर्वकर्त्तुरणिकर्त्तुः कर्मत्वमेव मन्यन्त इति अन्तर्भूतक्रियान्तरत्वेन। कृतेऽपि कर्मत्वे धातोरकर्मकत्वमस्त्येव अतोऽकर्मकेत्यादिना अणिकर्त्तुः कर्मत्वमेवेत्यभिप्रायः। मासमिति। वैष्णवो अण्यन्ते समामास्ते ण्यन्ते मासमासीनं वैष्णवं प्रेरयतीति मासमिति। कर्मप्रत्यये-त्विति ण्यन्तात् कर्मप्रत्यये सतीप्यर्थः। यथेष्टमिति इष्टमनतिक्रम्य एकस्य कर्मण उक्तत्वं भवति। एतेन द्वयोरेवोक्तत्वं भवति। किन्तु क्रमेणेत्युक्तं वैष्णवेणेति उभयत्र योज्यं। गतीति एतेषामपि प्रयोगे एकस्य कर्मण उक्तत्वस्य विकल्पमिति केषाञ्चिन्मतं। कृष्णेनेति

अतएव वनस्य उक्तत्वं। किञ्चेति। तत्प्रेरणादि। भिक्षेति। प्रेरणस्य प्राणिव्यापार-विशेषत्वादत्रासम्भवः। वासयतीति वैष्णवमिति शेषः। किञ्चेति। प्रेरणादि णेरिति प्रेरणादि विहितस्य णेः प्रयोगे इत्यर्थः। यद्वाक्यमिति प्रयुज्यते इति शेषः। तदेवेति नान्य-विरुद्धमित्यर्थः। समस्तादपिकारादसमस्तात् कृदन्तान्नाम्न उत्तरे णौ कर्त्तव्ये सति प्रेरणादिणेस्तद्धातोरुत्तरे कृतस्य णेर्यद्वाक्यं भवति तदेव प्रयुज्यते। तत्र प्रथमं पुरावृत्त-मवलम्ब्य उदाहरणमाह तत्र पुरावृत्ते यथेति इतिहासः पुरावृत्तमित्यमरः। सीताहरणमिति सीताया हरणमिति विग्रहः। हरणमिति हृञ् धातोर्भावेऽनः। यद्येवमतिदेशलक्षणं न क्रियते तदा सीताहरणमाचष्टे इत्यादौ सीताहरणयतीत्यादिकमनिष्टोदाहरणं स्यादिति। एवमिति रावणं हन्तुं प्रेरयतीत्यत्र यथा रावणं घातयतीति प्रयुज्यते तथा रावणवधमाचष्टे इत्यत्रापि रावणं घातयति कथक इति प्रयोक्तव्यं। रावणवधमिति रावणस्य वधो रावण-वधः तं वधशब्दो भाव कृदन्तो हनधातुसिद्धः। रामागमनमिति राममागन्तुं प्रेरयतीत्यत्र यथा राममागमयतीति तथा रामागमनमाचष्टे इत्यत्राऽपीति। एवं बलिबन्धं बलिं बन्धयतीत्यपि ज्ञेयं। कालात्यन्तसंयोगे कृदन्तान्नाम्न उत्तरे णौ कर्त्तव्ये सति यथा उदाह्रियते। कालेति कालस्य अत्यन्तसंयोगः कालात्यन्तसंयोगस्तस्मिन् अत्यन्तसंयोगो-ऽविच्छेदसंयोगः। आरात्रिविवासमिति रात्रीति आवैकुण्ठमितिवदव्ययीभावसमाससिद्धं रात्रिमभिव्याप्येत्यर्थः। ततश्च आरात्रि विवास इति भूतपूर्वादिवत् समासस्तं। केवल समासाश्च दृश्यन्ते इति समासप्रकरणे वक्ष्यते। तस्याप्रयोग इति उक्तार्थानामप्रयोग इति न्यायेनेति शेषः। वासातिक्रम इति वासाभाव इत्यर्थः। रात्रिं विवस्तुं प्रेरयतीत्यत्र यथा रात्रिं विवासयति इति तथा आरात्रिविवासमाचष्टे इत्यत्रापि इति रात्रिमिति रात्रिं व्याप्य इत्यर्थः। विवासशब्दो भावघणन्तः। अत्र रात्रेर्वासातिक्रमेण सहाऽविच्छेदसंयोगः। अतिक्रमयति लङ्घयतीत्यर्थं इति। रात्रिं विवासयति इत्यस्येति शेषः। आदिग्रहणादिति तमाचष्टे इत्याद्यर्थं इत्यत्रेति शेषः। अन्यत्रापीति तदाचष्टे इत्यर्थादन्यस्मिन्नर्थेऽपीत्यर्थः। अन्यस्मिन्नर्थे अध्वमर्यादायामाश्चर्यत्वे उदाहरणमाह तत्रेति अध्वमर्यादायां अध्वसीमायां। पुष्करात्तीर्थविशेषात्। अस्थित इति प्रस्थितो जन इत्यर्थः। सम्भावयतीति स्वयोग्यतया सूर्यमुद्गमनं निश्चिनोतीत्यर्थः। पुष्करान्मथुरा पञ्चदशदिनगम्येति प्रसिद्धिरस्ति अतोऽध्व-मर्यादायामाश्चर्यत्वं। सूर्यमुद्गन्तुं प्रेरयतीत्यत्र यथा सूर्यमुद्गमयतीति तथा सूर्योद्गमनं सम्भावयतीत्यत्रापीति। सूर्योद्गमनमिति सूर्यस्यद्गमनमिति विग्रहः।

ज्योतिरिति ज्योतिषां ग्रहनक्षत्रादीनां ज्ञानं ज्योतिर्ज्ञानं तस्मिन्नर्थे समस्तादपि कृदन्ताण्णौ कर्त्तव्ये प्रेरणादिणेर्यद्वाक्यं तदेव प्रयुज्यते। विधुना चन्द्रेण रोहिणी नक्षत्र-विशेषः। विधुं रोहित्या सह योक्तुं प्रेरयतीत्यत्र यथा रोहिण्या विधुं योजयतीति। तथा विधुना रोहिणीयोगं जानाति इत्यत्रापीति। धर्मसूत्रमिति धर्मस्य सूत्रं धर्मसूत्रं तत् करोतीति वाक्ये कृति क्रियायाः सूत्रमेव कर्म यदातु अन्तर्भूतकर्मिका सूत्रिक्रियाजाता तदा तत् साध्यत्वात् धर्मस्यैव कर्मत्वमित्यभिप्रायः। सूत्रेत्येकदेशनिर्देशः। सूत्रीति वा पाठः। धर्मं सूत्रयितुं प्रेरयतीत्यत्र यथा धर्मं सूत्रयतीति तथा धर्मसूत्रं करोतीत्यत्रापीति। सूत्रशब्दः सूञ्धातोः त्र प्रत्ययसिद्धः। सूत्रेण धर्मं निश्चिनोतीति निर्गलितार्थः।

**३१. स्नु-नमिभ्यामात्मपद्यकर्मकेभ्यो णेः श्रन्थि ग्रन्थि ब्रू किरति-गिरति श्रि-भूषार्थेभ्यः सनन्ताच्च न यगिणौ ।**

प्रस्नुते पास्नोष्ट गौः । नमते अनंस्त दण्डः । विकुरुते व्यकृत पयः । स्वयमेव अन्तर्भूतण्यर्था इमे । एवमन्यत्रापि । कारयते अकारयिष्ट इत्यादि ।

---

अमृता०—३१. स्नुमिभ्यामिति । कर्मकर्त्तरि स्नु प्रस्रवणे, णम प्रह्वत्वे इत्येताभ्यां तथा आत्मपदिनश्च ते अकर्मकाश्च तथाभूतेभ्यः, ण्यन्तात्, श्रन्थ मोचने, ग्रन्थ सन्दर्भे, ब्रूञ् व्यक्तायां वाचि, कृविक्षेपे, गृनिगरणे, श्रिञ् सेवायां, भूषणार्थाश्च तेभ्य स्तथा सनन्ताच्च यगिणौ न स्याताम् । नित्यं प्राप्ते प्रतिषेधः । प्रस्नुत इति यक् निषिद्धः; अत्र विप्रतिषेधाभावेन सकृद्गत न्यायाप्रवृत्तिः, ततोऽपवादे विनिर्मुक्ते उत्सर्गो हि प्रवर्त्तते इति न्यायात् पूर्वसिद्धः शप् हि तुनः प्रवर्त्तते, इह अदादित्वेन तस्य तद्दाहरः । प्रास्नोष्टेति इण् निषेधः । नमते इति—इह नमे र्वक्रीकरणमर्थः । तेनान्तर्भूतण्यर्थत्वात् सङ्कुचते हिकर्मकर्त्तृत्वम् । विकुरुत इति—आत्मपद विधौ ये धातवोऽकर्मकतया व्यवस्थीयन्ते ते हि आत्मपद्यकर्मक शब्देन व्यपदिश्यन्ते । तेन—अधेः प्रसहन इत्यादौ—"अकर्मकाच्च वे" रित्यनेन विपूर्व करोते रकर्मकत्वं वच्यते । एवं—आहते वालः स्वयमेव इत्यादि च बोध्यम् ।

ननु कर्म सद्भावे हि कर्म कर्त्तृत्वं सम्भवेत्, तदा कथमेषामकर्मकाणां तद् विधाय यगिणौ निषिध्येते इति चेत्तत्राह—अन्तर्भूतण्यर्था इमे इति । अन्तर्भावित ण्यर्थविना अकर्मकधातूनां कर्म कर्त्तृत्व प्राप्तिरेव न सम्भवति, तेषां कर्त्तृस्थ क्रियात्वनियमात् । तेन प्रस्नुते गा वंशीध्वनिः प्रस्नावयतीत्यर्थः, ततो गौः स्वयमेव प्रस्नुते । एवं दण्डं नमते नमयति नम्रीकरोति, पयः विकुरुते विकारं प्रापयतीत्याद्यथा उन्नेयाः ।

---

केवलेति । केवल कृदन्तादपि णौ कर्त्तव्ये प्रेरणादिणेर्यद्वाक्यं तदेव प्रयुज्यते । कर्त्तुं प्रेरयतीत्यत्र यथा कारयतीति तथा कर्त्तारमाचष्टे इत्यत्रापीति । कर्त्तारमिति डु कृञ्करणे तृल् । पक्तुं प्रेरयतीत्यत्र यथा पाचयतीति तथा पाकं करोतीत्यत्रापि । पाकमिति पचधातोर्घण् । वादितवन्तमिति । वीणारागादिकं उदितवती ततश्च परिवादकस्तां वीणां रागादिकं वदितुं प्रेरितवान् इत्यर्थे णिः ततः क्तवतुः परिवादको वीणां रागादिकं उदितवतीं वादितवान् इति ततश्च रागादिकं उदितवतीं वीणां वादितवन्तं परिवादकमपरः कोऽपि प्रयोजितवान् इत्यर्थे केवलकृदन्तात् क्तवत्वन्तात् णौ कर्त्तव्ये प्रेरणणेर्यद्वाक्यं अवीवददित्यादिकं तदेव प्रयुज्यते । प्रेरणणिवाक्यं योजना यथा वीणा वदति ततश्च परिवादकस्तां वदितुं प्रेरितवानित्यर्थे णिः ततः भूतेशदिप् परिवादको वीणामवीवददिति । ततश्च रागादिकं वदतीं वीणां वादितवन्तं परिपादकं कोऽपि प्रैरिरदित्यर्थे पुनर्णौ अवीवदद्वीणां परिवादकेनेति । परिपादकस्य णि कर्तृत्वान्नकर्मत्वं । प्रयोजितवानिति स्वार्थे ण्यन्तात् क्तवतुः प्रेरितवानितिवापाठः ॥ ३० ॥

**तच्च पूर्वोक्तं कर्म पुन स्त्रिविधम्। कर्त्तुरीप्सिततममनीप्सितमीप्सितञ्च। यथाह भगवान् पाणिनिः,—कर्त्तुरीप्सिततमं कर्म, तथायुक्तञ्चानीप्सितम् अकथितञ्चेति।**

---

अथ णेः—आचार्यो मालां कारयति, माला स्वयमेव कारयते। णेरिति प्रेरणादि णे रितरेषाञ्च णीनां ग्रहणम्। तेन वत्सपाल उत्पुच्छयते वत्सम्, वत्सः स्वयमेवोत्पुच्छयते इत्याद्युन्नेयम्। किञ्च कृञ्ह्वञादे र्विभाषयेति—अणि कर्त्तु विकल्प कर्म पक्षे तत् कर्मणस्तु नेष्टं कर्मकर्त्तृत्वम्, तस्याशुद्धकर्मत्वात्। इत्यादि पदेन—श्रथ्नीते मेखला, ग्रथ्नीते श्लोकः, ब्रूते हरिकथा स्वयमेव। ब्रूवतेः कर्त्तस्थ क्रियत्वेऽपि अन्तर्भूतण्यर्थत्वात् कर्मस्थ क्रियात्वञ्चाङ्गीकर्त्तव्यम्। किरते हस्ती, निगिरते दध्योदनम्, अलङ्कुरुते कृष्णम्। सनन्तात्—चिकीर्षते कृष्णगीतिः स्वयमेव। एवमिणोऽपि निषेधे प्रयोगा वेदितव्याः।

ननु—विकारहेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीरा इति कुमारे कथं कर्म कर्त्तरि यकः प्रयोगो दृश्यते? मैवं, कर्मणि प्रयोगोऽयं, नतु कर्मकर्त्तरि। विकारेण इति कर्त्ता त्वध्याहार्यः। तथा हि तट्टीकायाम्—"येषां चेतांसि न विक्रियन्ते न विकृतिं नीयन्ते तएव धीराः, कर्मणि लट्" इति मल्लिनाथः।

साधनस्य उत्पाद्यतयादि प्रकार विशेषेण कर्मणोऽप्युत्पाद्यादि पञ्चविधत्वं दर्शितम्; इदानीं प्रकारान्तर भेदानाह—तच्चेति। ईप्सिततममिति—आपलृधातोः सनि ईप्स इति निपात उक्त एव, तस्मात् विष्णु निष्ठा क्तप्रत्यये ईप्सित शब्दो जातः, तदुत्तरञ्च प्रकर्षार्थे तमप्रत्ययस्तद्धितः। तेन कर्त्तुः क्रियया यदतिशयेनाप्तुमिष्टं भवति तदीप्सित तमं कर्मेत्यर्थः। न ईप्सितं अणोप्सितम्। एवं भेदत्रयमुक्त्वा पाणिनि मतप्रदर्शनेन तत् पुष्णाति—यथाहेति। पूज्यार्थे भगवान् पदम्।

तत्रेप्सिततमं व्याख्यातम्। कर्त्तुरिति किम्—तृणेषु गां बध्नाति। इह कर्मणो गोरेव तृणमीप्सिततमं न पुनः कर्त्तुः। तम ग्रहणं किम्—दध्ना शाल्योदनं भुङ्क्ते। अत्र शाल्योदन मेव संस्कार्यतया कर्त्तु रतिशयेनेप्सितम्, दधि तु तत्संस्कारक मात्रमिति न तस्य कर्मत्वम्।

तथायुक्तञ्चानीप्सितमिति—येन प्रकारेण कर्त्तुरीप्सिततमं क्रियया युज्यते तेनैव प्रकारेण यदनीप्सितं चेद् युक्तं भवति तदा तस्यापि कर्म संज्ञा विधीयत इत्यर्थः। ईप्सिततमानीप्सिताभ्यामन्यत् सर्वमीप्सितं कर्मेति भावः। पापं करोतीत्यत्र नहि विष्णुभक्तस्य पापार्थं क्रियारम्भः सम्भवेत् किन्तु द्वेष्यमपि पापमनवधानत एव सकरोतीत्यर्थः। एवं विषं भुङ्क्ते इत्यादि च। मथुरां गच्छन्नित्यादौ मथुरा हीप्सिततमं कर्म, गमनक्रियया कर्त्तुस्तामेवासुमिष्टतमत्वात्। देशास्तु—द्वेष्याभावात् कारकान्तरविवक्षाविरहाच्च नद्वेष्यमीप्सितंवा, किन्तु मथुरागमन क्रियायामानुषङ्गिकमेव। नहि तद्गमनक्रियायां देशान्तर दर्शनमपेक्षत इति देशानामनपेक्ष्य कर्मत्वम्।

ईप्सिततमस्य यदुपयोगि अनुकूलं तदीप्सितम्। पाणिने र्लक्षणमपि विवृणोति—

प्रथमं दर्शितं—वैष्णवो मालां करोतीत्यादिना। मध्यमन्तु द्वेष्यमनपेक्ष्यञ्च। प्रमादेन पापं करोति विष्णुभक्तः। मथुरां गच्छन् देशान् पश्यति। तथेप्सितं यदीप्सिततमोपयोगि। अकथितत्वमपादानादित्वेन पूर्वोक्त कर्म द्वयेन चाविवक्षित कारकत्वम्।

तत्रैकस्यामेव क्रियायामीप्सिततममीप्सितञ्चेति कर्म द्वयं स्यात्। तथा हि—धातवस्तावत् त्रिविधाः, सकर्मकाः अकर्मकाः द्विकर्मकाश्च। तत्रान्तर्भूतण्यर्थशून्यत्वाद् वस्त्वन्तरं साधयितुमसमर्थाः अकर्मकाः। यथा सत्तामात्राद्यर्था भवत्यादयः।

अन्तर्भूतण्यर्थत्वात् तत्साधयितुं समर्थाः सकर्मकाः। अतएव क्रिया व्याप्यं कर्मेति सौपद्माः। यथा—उत्पादनाद्यर्थाः करोत्यादयः। तथैव द्विवृत्तयो द्विकर्मकाः। यथा दुहादयोनीवहादयश्च। एते उभयमेव कर्म

---

अकथितत्वमिति। अपादानत्वेन अधिकरणत्वेन च यन्न विवक्षितम्, यथा ईप्सिततमानीप्सित कर्मद्वयत्वेन च यन्न विवक्षितं तदीप्सितं कर्म। अपादानाधिकरणे बाधित्वा कर्मतया यद् विवक्ष्यते तदीप्सितं कर्मेत्यर्थः।

तत्रैकस्यामेव क्रियायामित्यत्र एवकाराद्भिन्न क्रिययोरीप्सिततयेप्सित कर्मद्वयप्रयोगे तूभयोरेव ईप्सिततमत्वमवगन्तव्यम्। यथा—गा दुहत् दुग्धं सञ्चिनोति गोपः। अत्रभिन्नक्रियत्वेन गवामीप्सिततमत्वमेवनत्वीप्सितमिति। एकस्यामेव क्रियायां कर्म द्वयसद्भावमुपपादयितुं धातुभेदानाह—तथाहीत्यादिना। नास्ति कर्म येषां ते अकर्मकाः। कर्मणासह वर्त्तमानाः सकर्मकाः। द्वे कर्मणी येषां ते द्विकर्मकाः। तेषां सोदाहरणलक्षणानि चाह—तत्रान्तर्भूतेत्यादिभिः। सर्वेषामेव धातूनां फलव्यापारवत्त्वेऽपि फलावच्छिन्नव्यापारबोधकत्वे सति सकर्मता, केवलव्यापारबोधकत्वे त्वकर्मकतेति सन्धेयम्। उत्पादनाद्यर्था इत्यत्रादिपदेन संस्कार विकार प्राप्तित्यागार्था ग्रहणीयाः। तेषु सर्वत्रान्तर्भूतण्यर्थत्वात् सकर्मकत्वमवगन्तव्यम्।

अथ द्वे वृत्ती कर्मत्वोपपादकधर्मो येषां ते द्विवृत्तयः। यथा दुहे राकर्षण निष्काषणरूपे द्वे वृत्ती, ताभ्यां दुह धातु दुग्ध-गोरूपं कर्मद्वयं साधयति। दुग्धादिकमीप्सिततममिति—कर्त्तुर्दोहन क्रियया दुग्धादिकमेवाप्तुमिष्टतमम्, अतो हि दुग्धादेरीप्सिततमत्वं मुख्यत्वं वा। गवादेस्तु दुग्धाद्युपयोगित्वादीप्सितत्वं गौणत्वंवेति सहजार्थः।

अथ कति तावद् दुहादयो द्विकर्मका इत्याकाङ्क्षायां तद्गणं परिसंख्याति श्लोकेन—दुहि याचीत्यादिना। तोटकं नामच्छन्दः। प्रछीत्यत्रच्छन्दोऽनुरोधात् छरामस्य द्वित्वाभावः। दुह प्रपूरणे, टुयाचृ याच्ञायां, रुधिर् आवरणे, प्रच्छ ज्ञीप्सायां, भिक्ष याच्ञायां, चिञ् चयने, ब्रूञ् व्यक्तायां वाचि, शासु अनुशिष्टौ, जि जये, दण्ड दण्डनिपातने

स्व वृत्तिविशेषाभ्यां साधयन्ति । आकर्षण विशेषपूर्वक निष्काषणादि-रूपार्थत्वात् तत्र दुग्धादिकमीप्सिततमं मुख्यम्, तदुपयोगि गवादिक-मीप्सितं गोणम् । तेन दुहादयो नीवहादयश्च धातवो द्विकर्मकाः ।

तद् वृन्दं यथा,—

दुहि याचि रुधि प्रछिभिक्षि चिञो,
ब्रुवि शासि जि दण्डि वृ मन्थि वदः ।
इति तूभयकर्म दुहादि भवे—
दथ नी वहि हृञ् कृषि मुख्यमपि ॥

एषां वृत्तो यथा,—

दुहे राकर्षणविशेषो निष्कासनम् । याचेः स्वस्मै दाने प्रेरणं वाञ्छा । रुधे र्वेष्टनमन्तः स्थापनम् । पृच्छेः स्वोपदेशे प्रेरणं जिज्ञासा । भिक्षे र्याचिवत् । चिञोऽवशेषणमादानम् । ब्रूञः श्रावणं प्रतिपादनम् । शासेश्च । जेरतिक्रमो वशीकरणम् । दण्डे र्निग्रह ग्रहणम् । वृञो याचिवत् । मन्थेः सञ्चालन मुत्थापनम् । वदः ब्रूञवत् । नीञः संयोजनं प्रेरणम् । वहः संयोजनं धारणम् । हृञः संयोजनमाकर्षणम् । कृषश्चेति ।

एतत्क्रमेणोदाहरणानि यथा,–कृष्णो गां दुग्धं दोग्धि । मातरं नवनीतं याचते । गोष्ठं गा अवरुणद्धि । पितरमिन्द्रमखं पृच्छति । यज्ञपत्नीरन्नं

---

वृञ् वरणे, मन्थ विलोडने, वदव्यक्तायां वाचि, इति दुहादि वृन्दं तु उभयकर्म भवेत् । अथ नीञ् प्रापणे, वहप्रापणे, हृञ् हरणे कृष विलेखनाकर्षणयो रिति न्यादिवृन्दञ्च उभय-कर्म भवेदित्यन्वयः ।

एषां वृत्ती स्पष्टे । तत्रावशेषणमवशिष्टीकरणम्, आदानं ग्रहणम् । भिक्षे र्याचिवदिति—स्वस्मै दाने प्रेरणं वाञ्छेत्यर्थः । तथैव वृञः । कृषश्चेति—संयोजन-माकर्षणमिति ।

कृष्णो गांदुग्धं दोग्धीत्यत्र—कृष्णो गां दोग्धि दुग्धं दोग्धि इति क्रियान्वय स्तथा दुग्धं निष्कासयन्नङ्गुलि द्वयेन स्तनेषु गामाकर्षति इत्यर्थश्च वक्ष्यते । कर्त्तुरीप्सिततमत्वात् दुग्धं मुख्यं कर्म, तदुपयोगित्वादपादानाविवक्षया गामिति गौणं कर्म । तेन आकर्षण वृत्ति-साध्येप्सितगोकर्मक निष्कासनवृत्तिसाध्येप्सितमदुग्धगोकर्मक वर्त्तमान दोहनानुकूलव्यापार-वान् कृष्ण इति शाब्दबोधः । सर्वत्रोदाहरणेषु कर्त्ता कृष्णोऽध्याहार्यः । मातरमिति—नवनीतं वाञ्छन् स्वस्मै तद्दाने मातरं प्रेरयतीत्यर्थः । अपादानाविवक्षयामातुर्गौण

 

भिक्षते । वृन्दावनं पुष्पाण्यवचिनोति । पितरं गोवर्द्धनमखं ब्रूते । लोकांस्तद्भक्तिं शास्ति । दैत्यान् युद्धं जयति । दैत्यान् प्राणान् दण्डयति । गोवर्द्धनं वरं वृणुते । दधि नवनीतं मथ्नाति । सखी र्नर्म वदति । अत्र गां दोग्धि दुग्धं दोग्धि इत्यादिरन्वयः । दुग्धं निष्कासयन्नङ्गुलिद्वयेन स्तनेषु गामाकर्षति इत्यादिरर्थो ज्ञेयः । भिक्षिरर्थपरस्तेन प्रार्थयत इत्यपि । याचि स्त्वविनयार्थेऽपि, तेनदुष्टं शतं याचते राजा ।

अत्र ब्रू शासि वदीनाञ्च प्रतिपाद्यमानं मखादिकमेवेप्सिततमम्, तत् प्रतिपादनेन सम्पाद्यमानं पित्रादिकन्त्वीप्सितमितिज्ञेयम् । तदर्थानामपि दृश्यते । जगाद मारीचमुच्चैर्वचनं महार्थमिति भट्टिः । गिरमत्युदारां द्वैपायनेनाभिदधे नरेन्द्र इति भारविः ।

---

कर्मत्वम् । स्वदानप्रेरणवृत्तिसाध्येप्सितमातृकर्मक वाञ्छा वृत्तिसाध्येप्सिततम नवनीतकर्मक वर्त्तमान याचनानुकूल व्यापारवान् कृष्ण इति बोधः । एवं रीत्या सर्वत्र शाब्दबोध उन्नेयः ।

गोष्ठमिति—गाः अन्तः स्थापयन् गोष्ठं वेष्टयतीत्यर्थः । अधिकरणाविवक्षया गोष्ठस्य गौणकर्मता । पितरमिति—इन्द्रमखं जिज्ञासमानः स्वोपदेशाय पितरं प्रेरयतीत्यर्थः । आपादानाविवक्षायां पितुर्गौण कर्मता । यज्ञपत्नीरिति याचि वज्ज्ञेयः । वृन्दावनमिति—पुष्पाणि आददानो वृन्दावनमवशेषयतीत्यर्थः । आपादानाविवक्षया वृन्दावनस्य गौणकर्मता । पितरमिति—गोवर्द्धनमखं प्रतिपादयन् पितरं श्रावयतीत्यर्थः । तादर्थ्याविवक्षया पितुर्गौण कर्मत्वम् । लोकानितितद्भक्तिं गोवर्द्धनभक्तिं प्रतिपादयन् लोकान् श्रावयतीत्यर्थः । पूर्ववद् गौणकर्मत्वं लोकस्य । दैत्यानिति—युद्धं वशीकुर्वन् दैत्यानतिक्रामतीत्यर्थः । करणाविवक्षायां युद्धमिति गौण कर्म । प्राणानिति—प्राणान् गृह्णन् दैत्यान् निगृह्णातीत्यर्थः । इहतु सम्बन्ध सामान्यस्याविवक्षायां दैत्यानिति गौण कर्म । गोवर्द्धनमिति—वरं वाञ्छन् स्वस्मै तद्दाने गोवर्द्धनं प्रेरयतीत्यर्थः अपादानाविवक्षया गोवर्द्धनस्य गौणकर्मता । दधीति—नवनीतमुत्थापयन् दधि सञ्चालयति गोप इत्यर्थः । आपादानाविवक्षया दधति गौणकर्म । सखीरिति—नर्मप्रतिपादयन् सखीः श्रावयतीत्यर्थः । तादर्थ्याविवक्षायां सखीरिति गौणं कर्म ।

भिक्षिरर्थपर इति—अर्थधातुपरः, याचञार्थक इतियावत् । इत्थं शङ्करं वरं मृगयत इति च । ननु याचञार्थक धातवो हि द्विकर्मका इत्यभिप्रेतं तर्हि भिक्षेरुपादानेनैव तत्सिद्धेः कथं याचेः पृथक् ग्रहणमिति चेत्तत्राह—याचि स्तत्वविनयार्थेऽपीति ।

अविनयपूर्वकयाचञायामपीत्यर्थः । भिक्षि प्रभृतीनामर्थः सविनय याचञा, याचेस्तु सविनया अविनया च याचञा इतिभावः । तेन दुष्टमित्यादौ याचनमस्त्येव किन्तु तदविनयपूर्वकमिति भेदः । दुष्टमित्यपादानाविवक्षयेप्सितं कर्म ।

किञ्च कर्मप्रत्ययेतु दुहादे गौणं कर्मोक्तं स्यान्नीवहादेस्तु मुख्यम्। यदुक्तम्,—

यत्राख्यातादिरुक्तं तत् सणेस्तत्कर्त्तृकर्मणोः।
सचेत् कर्मणि दुह्यादे गौणे न्यादेस्तु मुख्यके ॥

अस्यार्थः,—यत्रकारके आख्यातादिः क्रियते तत् कारकमुक्तं स्यात्। सचाख्यातादि र्यदि णेः स्यात् तदा तस्य णेरेव कर्त्तृकर्मणोः स्यात्, नतु पूर्वकर्त्तृकर्मणोः। सचाख्यातादि र्यदि दुहादेः स्यात् तदा गौण एव स्यान्नतु मुख्ये। नीवहादे र्यदि स्यात् तदा मुख्य एव नतु गौण इति। यथा कृष्णेन गौदुग्धं दुह्यते इति। माता नवनीतं याच्यते इत्यादि। अथ नीवहादिः। कृष्णो गा व्रजं नयति। श्रीदामानं भाण्डीरं वहति। वस्त्रं कदम्वाग्रं हरति। गोपी वनं कर्षति। अन्वयार्थौ पूर्ववत्।

---

तत्र द्विकर्मकेषु ब्रू शासि वदीनां प्रयोगे पित्रादि कर्माणि मखादि कर्मोपयोगितायामव्यक्तानि, ततो मखादीनां वा पित्रादीनां वा ईप्सित तमत्वमिति संशये तत् स्पष्टयति--अत्रेति। प्रतिपाद्यमानं साध्यमानं मखं, तद्भक्ति र्नर्म च मुख्यं कर्म। सम्पाद्यमानमुपयुज्यमानं पिता लोकाः सख्यश्च गौणं णर्म। तदर्थानामिति ब्रूशासिवद्यर्थानाम्। दृश्यते इति पदेन तदर्थानां धातूनां द्विकर्मकत्वमसार्वत्रिकमिति सूच्यते। जगादेति--गद धातो ब्रू ञर्थेनसामानार्थत्वात् द्विकर्मकता। मारीचं महार्थं वचन मुच्चै र्जगाद रघुनाथ इतिशेषः। गिरमिति—"विपूर्वधा करोत्यर्थे अभिपूर्वस्तु भाषणे" इति प्रसिद्धेरभिपूर्वस्य दधातेः कथनार्थत्वाद् द्विकर्मकता। नरेन्द्रो युधिष्ठिरो द्वैपायनेन व्यासेन अत्युदारां गिरमभिदधे ऊचे इति कर्मणि वाच्ये गौणकर्म नरेन्द्र इत्युक्तम्। एवं शिष्यं धर्ममुपदिशतीति शास्यर्थत्वेन द्विकर्मकता ज्ञेया।

किञ्चेति—अथ वृत्तिद्वयसाध्यत्वेऽपि एकस्या एव क्रियाया आख्यातादि प्रत्ययेन युगपदेकाधिक कारकस्योक्तत्वासम्भवात् कर्मप्रत्यये एकमेव कर्मोक्तं स्यान्न तूभयम्। तत्र द्विविधकर्मणोः कुत्र कस्योक्तत्वमिति व्यवस्थामाह—कर्मप्रत्ययेत्विति। कर्मणि वाच्ये आख्यातादिप्रत्यये कृते दुहादिगस्य धातो गौणमीप्सितं कर्मोक्तं स्यात्, नी वहादि वृन्दस्य धातोस्तु मुख्यमीप्सिततमं कर्मोक्तं स्यादित्यर्थः। एतच्च प्राचीनोक्त्या द्रढ़यति यत्रेत्यादि कारिकया। अर्थश्च विवृत्तः स्वयमेव--यत्रेत्यादिना। तत् कारकमुक्तं स्यात् तेनैवाख्यातादिनेति शेषः। णेरिति ण्यन्तादित्यर्थः। तस्य णेरेव कर्त्तृकर्मणोरुक्तत्वं स्यादिति शेषः। तत्र कर्त्तरि वाच्ये कर्त्तु रुक्तत्वम्, कर्मणि च कर्मण इति बोद्धव्यम्। यदि दुहादेः स्यादाख्यातादि स्तदा गौणे हि कर्मणि उक्तता स्यादित्यर्थः। उदाहरति--यथा कृष्णेनेति। दुग्धं निष्कासयता कृष्णेनाङ्गुलिद्वयेन स्तनेषु गौराकृष्यत इत्यर्थः मातेति--नवनीतं वाञ्छता कृष्णेन स्वस्मै तद्दाने माता प्रेर्यत इत्यर्थः। इत्यादि पदेन--गोष्ठं गा

अथ नीवहीत्यादौ मुख्यग्रहणात् करोत्यादयोऽपि क्वचित् । कृष्णः पुष्पाणि मालां करोति । मालामुत्पादयन् पुष्पाणि ग्रथ्नातीत्यर्थः । गोपी मनो मुष्णाति; मनो हरन् गोपी वंञ्चयतीत्यर्थः । गोपी हारान् गृह्णाति; हारानाच्छिन्नन् गोपी धर्षयतीत्यर्थः । गोप्य स्तण्डुलानोदनं पचन्ति; तानोदनं साधयन्त्यो विक्लेदयन्तीत्यर्थः ।

कर्मप्रत्यये—कृष्णेन गावो व्रजं नीयन्ते । श्रीदामा भाण्डीरमुह्यत इत्यादि । यदा त्वेकमेव कर्म प्रयुज्यते तदा गौणं मुख्यं वा तदेवोक्तं स्यात्, यथा दुग्धानि दुह्यन्त इति ।

अथ प्रेरणाद्यर्थ ण्यन्तप्रयोगे कर्तृकर्मविवेकः । अत्र ण्यन्तात् कर्तृप्रयोगे ण्यन्तकर्त्तैवोक्तः स्यात्, पूर्व कर्त्ता त्वनुक्तः । यथा—विष्णुमित्रो

---

अवरुध्यते, पिता इन्द्रमखं पृच्छ्यते, यज्ञपत्न्यः अन्नं भिक्ष्यन्ते, वृन्दावनं पुष्पाण्यवचीयते, पिता गोवर्द्धनमखमुच्यते, लोका स्तद्भक्तिं शिष्यन्ते, दैत्या युद्धं जीयन्ते, दैत्याः प्राणान् दण्ड्यन्ते, गोवर्द्धनो वरं व्रियते, दधि नवनीतं मथ्यते, सख्यो नर्म उह्यन्त इति ।

अथ नीवहादिरिति—गाः प्रेरयन् व्रजं संयोजयतीत्यर्थः । अत्राधिकरणाविवक्षायां व्रजमिति गौणं कर्म । श्रीदामानं स्कन्धे धारयन् भाण्डीरं संयोजयतीत्यर्थः । प्राग्वत् भाण्डीरस्य गौण कर्मत्वम् । वस्त्रमाकर्षन् कदम्बाग्रं संयोजयतीर्थः । कदम्बाग्रमिति गौणं कर्म पूर्ववत् । गोपीराकर्षन् वनं संयोजयतीत्यर्थः । तथैव वनस्य गौणकर्मता । मुख्यशब्दोपादानात् करोत्यादयोऽपि द्विकर्मका भवन्तीत्यर्थः । पुष्पाणीति करणाविवक्षायां गौणं कर्म । उभयत्र गोपीरित्यपादानाविवक्षया गौणंकर्म । तण्डुलानिति करणाविवक्षायां-गौणं कर्म ।

एते चापरे च मुख्या धातवो नीवहादिवृन्दान्तर्गततया न तु भ्रमितव्याः, अर्थ-सङ्गतिद्वारेण हि तत्तदन्तःपातो विवेच्यः । तेन प्राप्त्यात्मक गत्यर्था एव नीवहादौ परिसंख्यनीया नान्ये । करोत्यादेस्तु कर्मप्रत्यये दुहादिवत् गौण कर्मणां पुष्पादीना-मेवोक्तत्वमधिगम्यते शिष्टप्रयोगेषु । यथा—एको वृक्षो पञ्च नौकाः क्रियते इति न्यास-कारः । नी वहादेः कर्मप्रत्यये मुख्यकर्मैवोक्तं स्यादित्युदाहरति—कृष्णेनेति । अत्र कर्त्तुः क्रियया ईप्सिततमत्वाद् गाव इत्यस्य मुख्य कर्मत्वम्, अतश्चोक्तता, अतएव—"उक्तानुरूप-मेवपुरुषवचनादिकं क्रियापदे" इत्यनेन नीयन्त इति प्रथमपुरुष बहुवचनम् । आदिना-वस्त्रं कदम्बाग्रं ह्रियते, गोप्यो वनंकृष्यन्त इति ।

ननु द्विकर्मक धातूनामुभयोः कर्मणो र्युगपत् प्रयोगे दुहादेर्गौण कर्मण उक्तत्वं न्यादे स्तु मुख्यस्येति व्यवस्थापितम् । यदि विवक्षावशादेकस्यहि कर्मणः प्रयोग स्तर्हि पुनः का व्यवस्थेति मनसि विचार्य समाधत्ते--गौणं मुख्यं वा तदेवोक्तं स्यादिति । प्रयुक्त

वैष्णवेनान्नं पाचयति। पुन र्णौ तु तत्कर्त्तैवोक्तः, पूर्वपूर्व कर्त्ता त्वनुक्तः। यथा—वैष्णवाचार्यो विष्णुमित्रेण वैष्णवेनान्नं पाचयति। ण्यन्तकर्माभावे सति पूर्वकर्मण्येव प्रत्यये तदेवोक्तं स्यात्, कर्त्तृमात्रं त्वनुक्तमेव। यथा—विष्णुमित्रेण वैष्णवेनान्नं पाच्यत इत्यादि।

अकर्मकादि धातुषु पूर्व कर्त्तुः कर्मत्वमाहुः,—

**३२. अकर्मक गतिज्ञान शब्दभोजन वाचिनाम्।**
**अणि कर्त्ता कर्म णौ स्यात् कृञ्हृञादे र्विभाषया॥**

---

कर्ममात्रमुक्तं भवति, न तत्र गौणमुख्यविचार आवश्यक इत्यर्थः। तेन दृष्टान्ते दुग्धानीति मुख्यमपि कर्मोक्तम्।

अण प्रेरणादि ण्यन्तात् कर्त्तृ प्रयोगे साधारणविधानमाह—ण्यन्तादिति। ण्यन्तकर्त्ता प्रयोजकः, हेतुकर्त्ता वा। पूर्वकर्त्ता प्रयोज्य इत्यर्थः। प्रेरणाद्यर्थणीत्युक्त्या तत्करोति तदाचष्टे इत्यादि नामधातुप्रकरणोक्तणेर्निरासः। उदाहरणे—वैष्णवोऽन्नं पचतीति वाक्यमासीत्। ततो विष्णुमित्रस्तं वैष्णवं पक्तुं प्रेरयतीत्यर्थेणिः प्रयुक्तः। अत्रपचन व्यापारः प्रयोज्यकर्त्तु र्वैष्णवस्य, पाचनव्यापारः अर्थात् पचनाय प्रेरणव्यापार स्तु प्रयोजक कर्त्तु र्विष्णुमित्रस्य। ततः प्रयोजक कर्त्तु र्वाच्ये विहितेन तिप्प्रत्ययेन स एवकर्त्ता उक्तः, पूर्वकर्त्ता वैष्णवस्त्वनुक्तः प्रत्यनेन तस्यानभिधानादिति तत्र तृतीया, कर्त्तरि वाच्ये प्रत्ययविधानेन अन्नरूपं कर्म तु सुतरामनुक्तमिति विवेकः।

पुनरिति—तत् कर्त्ता आधुनिक ण्यन्तकर्त्ता। पूर्व पूर्व कर्त्तेति अणि कर्त्ता, प्राचीनण्यन्तकर्त्ता च। अत्र वैष्णवः प्रयोज्यकर्त्ता, विष्णुमित्रः प्रयोजक प्रयोज्यः, वैष्णवाचार्यः प्रयोजक इति विवेच्यम्।

ण्यन्तात् कर्म प्रत्यये विधानमाचष्टे—ण्यन्तकर्माभाव इति। वक्ष्यमाणाकर्मकगतिज्ञानादित इतरधातूनामयं विषय इति भावः। कर्त्तृमात्रस्यानुक्तत्वात् प्रयोज्य प्रयोजकयो रुभयोरेव कर्त्त्रोरनुक्तता। तत्र विशेषव्यवस्थामाह—अकर्मकादीति।

**अमृता०**—३२. अकर्मकेति। अकर्मकाश्च गति ज्ञानशब्दभोजन वाचिनश्च तथा, तेषां णौ प्रयोगे अणिकर्त्तुः कर्मत्वं स्यात्। डुकृञ् करणे हृञ् हरणे इत्यादे णौ प्रयोगे अणि कर्त्ता विभाषया कर्म भवति। इह येषां देश कालादिभिन्नं कर्म न सम्भवति तएवाकर्मकत्वेन ग्राह्या नपुनरविवक्षित कर्मका धातवाः। तेन राजा प्रतिनिधिना शासयतोत्यादौ

---

**बाल०**—संज्ञः। संपूर्वस्य ज्ञाधातोः प्रयोगे कर्मणि विषये तृतीया वा भवति। अवेक्षते पश्यति जानाति वा। आत्मपदं वक्ष्यते इति संप्रतिभ्यां समुत्कण्ठापूर्वकस्मरणं विनेत्यतेन इति शेषः षष्ठी वक्ष्यत इति स्मृत्यर्थदयेशां कर्म वेत्यनेन इति शेषः। संजानातीति समुत्कण्ठापूर्वकं स्मरतीत्यर्थः। स्मरणार्थत्वान्नात्मपदं॥ ३१॥

नीखाद्यदि ह्वा शब्दाय क्रन्दो भक्षिरहिंसने ।
अयन्तृकवहिश्चैषां णौकर्मत्वं निषिध्यते ।।

अत्र कर्त्तृप्रत्यये अण्यन्ते—वैष्णवो भवति । ण्यन्ते तु वैष्णवाचार्यो वैष्णवं भावयति । अण्यन्ते—गावो वनं गच्छन्ति । ण्यन्ते तु—कृष्णो गा वनं गमयति । एवं गोपान्गां ज्ञापयति, दर्शयति, उपलम्भयति वा । गोपान् गीतं गापयति । अत्र जल्प विलापावप्युदाहार्यौ । एवं श्रवणस्यापि शब्दात्मकत्वात्तदन्तर्भावः । श्रावयति गोपान् गीतम् । गास्तृणं भोजयति; गा जलं पाययतीत्यादि । कथम्— अयाचितारं नहि देवदेवमद्रिः सुतां ग्राहयितुं शशाकेति ? अजीग्रहत्तं जनको धनुस्तदिति च ? अत्रोपादानार्थस्य ग्रहेः प्राप्त्यात्मकत्वेन गत्यर्थत्वात् । एवं त्यागोऽपि गत्यात्मक इति । त्याजितैः फलमुत्खातैर्भग्नैश्च बहुधा नृपैरिति सिध्यति ।

---

कर्त्तु र्नहि कर्मत्वप्रसङ्गः । अथ प्रयोजकक्रिया साध्यत्वेनैव प्रयोज्यस्य सिद्धेऽपि कर्त्तृत्वे नियमार्थं बचनमिदम् । तेनाकर्मकगत्यादि—भिन्नार्थानां णौ कर्त्तृत्वमेव बोध्यम् ।

तत्र केषाञ्चिन्निषेधं वक्ति—नीखादीत्यादिना । गत्यर्थत्वात् नीधातोः, भोजनार्थत्वात् खादेः, अदेः भक्षेश्च, शब्दार्थकत्वात् ह्वञः शब्दायतेः क्रन्देश्च पूर्वेण कर्मत्वे प्राप्ते निषेध एषः । अयन्तृकेति—नविद्यते यन्ता चालको यत्र सोऽयन्तृकः, स चासौ वहिश्चेति तथा, श्यामराम समासः । क्रमेणोदाहरति—वैष्णवाचार्य इत्यादि । दर्शनोपलम्भयो ज्ञानार्थ एवान्तर्भाव इति तच्चोदाहृतम् ।

अण्यन्ते—गोपा गां पश्यन्ति उपलभन्ते, ण्यन्ते दर्शयति उपलम्भयतीति । एवं निरीक्षयति अनुभावयति घ्रापयतीत्यादि । च ज्ञेयम् । शब्दवाचिन उदाहरति—गोपान् गीतमित्यादि । अण्यन्ते—गोपागीतं गायन्ति । अत्रेति—अत्र शब्दार्थौ जल्प व्यक्तायां वाचि, विपूर्वलापि रोदने इत्येतौ चोदाहरणीयौ । किञ्च शब्दवाचिनां मध्ये येषां शब्द कर्म त एवात्र ग्रहणीयाः । अन्यथा पूर्वेणैव सिद्धेऽपि जल्प विलाप्योः पृथक् कथनमनुपपन्नं स्यात् तयोरपि शब्दवाचित्वात् । तस्माद् जल्पविलापौ यदा श्रवनगोचरौ न स्यातां तदापि तत्तत्कर्त्तुः कर्मत्वमिष्टमिति वैशिष्ट्यं बोध्यम् । अशब्दकर्मकत्वादिति भाषावृत्तिः । श्रावयतीत्यादौ अण्यन्ते गोपा गीतं शृण्वन्ति, गाव स्तृणं भुञ्जन्ते, गावो जलं पिवन्तीति ।

आशङ्कते—कथमिति । अकर्मक गति ज्ञानादिषु ग्रहधातो रगणनात् कथमणिकर्त्तुरिह कर्मत्वमिति शङ्का पक्षः । प्रथमः प्रयोगः कुमारसम्भवस्य, द्वितीयस्तु भट्टेः । अद्रि र्हिमालयः अयाचितारमप्रार्थिनं देवानां देवं महादेवं सुतां स्वकन्यां पार्वतीं ग्राहयितु

**पुन र्णौ णि कर्त्तु र्न कर्म्मत्वम् । पिता कृष्णेन गा वनं गमयतीत्यादि । कृञादेस्तु कारयति स्वभक्तिं भक्तं कृष्णः भक्तेन वा । विकारयति वैष्णवं कृष्णप्रेमा वैष्णवेन वेत्यपि केचित् । हारयति मुरलीं गोपी सखीं सख्या वा ।**

---

भार्या रूपेण स्वीकारयितुं न शशाके त्यर्थः । अण्यन्ते—देवदेवोऽद्रिसुतां न जग्राहेति रूपम् । एकमण्यन्ते—स (रघुनन्दनः) तद्धनुरग्रहीदिति वाक्यमासीत् । समाधानपक्षमाह—अत्रेति । उपादानमेव ग्रहणं तदेव प्राप्तिः । सा च सत्यात्मिकैव, ततो ग्रहि र्गत्यर्थ एवावसितः । प्राप्त्यर्थधातवः प्रायेण गत्यर्था एवेति सूत्रे नीवर्जनादेव ज्ञापितम्, अन्यथा अप्राप्ते निषेधाप्रसक्तेः । केचित्तु प्रवेशनारोहण-तरण-प्रापणार्था अपि गत्यर्था इत्याहुः । तेन,—"प्रावेशयन् मन्दिरमध्यमेनम्", "तामङ्कमारोप्य सुतां प्रतस्थे", "प्रियामुदन्वन्तमतीत-रद्धरिः", "ननु मां प्रापय भर्त्तु रन्तिकम्" इत्यादिशिष्ट कविप्रयोगाश्च सङ्गच्छन्ते ।

ननु—"सितं सितिम्ना सुतरां मुनेर्वपु र्विसारिभिः सौधमिवाथ लम्भयन् द्विजावली व्याजनिशाकरांशुभिः शुचिस्मितां वाचमवोचदच्युतः ।" इति माघप्रयोगे सितिम्नेति कथं कर्मत्वाभावः ? उच्यते—अत्र अपवाद विषयेऽप्युत्सर्ग विधेर्निवेशादित्यपरे । प्राप्त्युपसर्जना (प्राप्तिगौणीभूता) गतिः, गत्युपसर्जनां (गतिगौणीभूता) चप्राप्ति र्भवति लभत्यर्थः । तत्राद्ये हि कर्मत्वम्, इहतु न, गत्युपसर्जनप्राप्तेरित्यदोष इति वामनः । तस्माद् गति प्राधान्येन प्राप्त्यर्थे हि कर्मत्वं नान्यथेति तत्त्वम् । तेन प्राप्त्युपसर्जनगत्यर्थादिह तु कर्मत्व-मेव—"धृत नवातपमुत्सुकता मतो न कमलं कमलम्भयदम्भसि ।" इत्यत्र रविरिति प्रयोजकोऽध्याहार्यः ।

त्यागोऽपीति—गतिः खलु पूर्वदेश परित्यागपूर्वकोत्तर देशसंयोगात्मिका, अत स्त्यागश्च सदृशस्वरूपतया गत्यात्म एवेत्यर्थः । त्याजितैरिति—प्रथमतः पादपाः फलं त्यक्ता इति गत्यर्थात् कर्त्तरि क्तः, ततो णौ अणिकर्त्तॄणां पादपानां कर्मत्वम्—दन्ती पादपान् फलं त्याजित इति । पश्चात् ण्यन्त क्तप्रत्ययस्य कर्मणि विधानावश्यकात् तेन प्रत्ययेन पादपरूपकर्माण्युक्तानि, कर्त्ता चानुक्तः—दन्तिना पादपाः फलं त्याजिता उत्खाता बहुधा भग्नाश्चेति स्थितिः । ततश्च पादपशब्दादुपलक्षणे तृतीया विवक्षया त्याजिता इत्यादीनां पदानामपि तद्विशेषणतया तृतीयार्हत्वात्—फलं त्याजितै रुत्खातै र्बहुधा भग्नैश्च पादपैरुपलक्षिता दन्तिनो मार्ग इव तस्य (रघोः) मार्गः फलं त्याजितैः (धनमपहारितैः) उत्खातै (पदच्युतैः) बहुधा भग्नैः (उत्सन्नै र्लाञ्छितैः) च नृपै उपलक्षित आसीदित्य-न्वयार्थौ । एवञ्च—"मुक्ताजालं चिरपरिचितं त्याजितो दैवगत्या" इत्यादि सिध्यति ।

किञ्च,—मासमधिशययति रोगिनं भिषक्, गोदोहं स्थापयति कृष्णं नन्द इत्यादौ वक्ष्यमाणौपाधिक सकर्मकत्वेऽपि स्वाभाविकाकर्मकत्वमादाय अणिकर्त्तुः कर्मत्वमग्रे साध्यते । तथा च—त्रिवर्गपारीणमसौ भवन्तमध्यासयन्नासनमेकमिन्द्र इति भट्टि प्रयोगः सङ्गत एव । व्यावृत्तिदर्शयति—पुनर्णाविति । सूत्रकारिकाया मणिकर्त्तुरेव कर्मत्वं व्यवस्थापितम्, अतो णि कर्त्तु र्न कर्मत्वमित्याशयः ।

## ३३. अभिवादि-दृशोरात्मपदे ।

अभिवादयते गर्गं कृष्णं श्रीनन्दः कृष्णेन वा। एवं दर्शयते स्वकार्यं पिता कृष्णं कृष्णेन वा। पचत्यादीनामपि विकल्पं केचिदाहुः। श्रुदृशो र्न कर्मत्वमिति कश्चित्।

कर्मप्रत्यये कर्तृवत् णेः कर्मैवोक्तं स्यात्। वैष्णवाचार्येण वैष्णवो भाव्यते। कृष्णेन गावो वनं गम्यन्ते। पुनर्णौ—पित्रा कृष्णेन गावो वनं गम्यन्त इत्यादि।

नीखादचदीनान्तु कर्तृप्रत्यये—कृष्णो गोपै र्गाः व्रजं नाययति। एवं खादचदी। तथा आह्वाययति गोपै र्गाः कृष्णः। शब्दं करोति

---

कृष्णो गा वनं गमयति, तञ्च पिता प्रेरयतीत्यर्थे पुन र्णौ प्राग् विहित णेः कर्त्तुः कृष्णस्य न हि कर्मता किन्तु अनुक्त कर्त्तृत्वमेव। कृञ् हृञादेर्विभाषयेति यदुक्तं तदुदाहरति—कारयतीति। अण्यन्ते भक्तो भक्ति करोतीति। विकारयतीति—विपूर्व करोते रकर्मकत्वान्नित्वं कर्मत्वे प्राप्ते, सकर्मकत्वविवक्षया पुन रप्राप्ते विकल्पयन्ति केचित्। एतदेवस्वमतम्। एवञ्च हरति र्यदा स्तयादौ वर्त्तते तदा कर्म त्वाप्राप्ते, यदा तु गतौ वाभ्यवहारे (भजने) वा तदा प्राप्ते विभाषा ज्ञेया।

**अमृता०**—३३. अभीति। विभाषयेति पूर्वतोऽनुवर्त्तते। आत्मपदे विषये ण्यन्ते अभिपूर्ववादेः दृशेश्च प्रयोगे अणि कर्त्ता कर्म वा भवति। अभिवादे श्चुरादिण्यन्तत्वेनाप्राप्ते, दृशेस्तु ज्ञानार्थत्वेन नित्यं प्राप्ते विभाषा। कृष्णो गर्गमभिवादयते, तञ्च नन्द प्रेरयतीति कृष्णं कृष्णेन वाभिवादयते। जिदृभ्य उभयपदिभ्यो णे रित्यादिनात्मपदं वक्ष्यते। एवञ्च दृशेरण्यन्ते—कृष्णः स्वकार्यं पश्यति, पिता तं प्रेरयतीति तथा। आत्मपद इतिकिम्—कृष्णेन गर्गमभिवादयति, कृष्णंस्वकार्यं दर्शयतीति यथा—तृतीया द्वितीये एव।

अकर्मकादि धातूनां ण्यन्ते कर्तृप्रयोगान् प्रदर्श्य अथ तेषां कर्म प्रयोगे व्यवस्थापयति—कर्मप्रत्यय इति। कर्तृवत् कर्त्तरि वाच्ये प्रयोग इवेर्थः। कर्त्तरि यथा णेः कर्त्तैवोक्तः स्यान्नतु पूर्वकर्त्ता, कर्मणि च वाच्ये तथा णेः कर्मैवोक्तं स्यान्नपूर्वाण्यन्त कर्मेति भावः। अकर्मकाणां पूर्वकर्माभावाद् णेः कर्म वैष्णव एवोक्तः। गत्यादिषु तु पूर्वकर्मणो नोक्तत्वम्। तत एवोदाहरणे गवामेवोक्तता दर्शिता नतु वनस्य पुनर्णाविति—पुनर्णौ णि कर्त्तु र्न कर्मत्वमित्यनुसारेण अणि कर्तृणां गवां णौ कर्मत्वमासीत्, कर्मणि वाच्ये ता एवोक्ता इति।

इदानीं नीखाद्यादीनां यत् कर्मत्वं निषिद्धं तच्चोदाहरति—कृष्ण इत्यादि।

---

**बाल०**—तृला। संपूर्वस्य ज्ञाधातोः प्रयोगे तृलादिकृति तु सति कर्मणि षष्ठ्ययेव वक्तव्या। कर्तृकर्मणोः षष्ठी कृद्योगे इत्यनेन षष्ठी सिध्यत्येव किन्तु विशेषविधानात् तृतीयया पक्षे बाधिता स्यात्। अतस्तृतीयाबाधनार्थमिदं लक्षणं। संज्ञातेति णकतृलावित्यनेन कर्त्तरि तृल्॥ ३२॥

शब्दायते; अयमकर्मकः शब्दार्थश्च, तस्मात् णौ शब्दाययति वंश्या कृष्णः। अयतेश्च निषेध इत्येके। ह्वा शब्दाय क्रन्दानां न निषेध इति कश्चित्।

भक्षेः—भक्षयति नवनीतं कृष्णेन माता। हिंसायान्तु—भक्षयति गरुडं दैत्यान् विष्णुः। भक्षयति यादवानां भोज्यं दैत्यान् कंस इत्यपि। वहेः—वाहयति वन्यभोजनं गोपैः कृष्णः। सयन्तृककर्तृत्वे तु—वाहयति शकटं वृषभान् गोपः। कर्मप्रत्यये—कृष्णेन गोपं गावो व्रजं नाय्यन्त इत्यादि। अत्र च मुख्यत्वाद् गवामेवोक्तत्वम्। उक्ता ण्यन्ताः।

---

अण्यन्ते—गोपा गा व्रजं नयन्ति। इह अणि कर्तृणां गोपानां न कर्मता। एवमिति—कृष्णो गोपै फलानि खादयति आदयति वा। भक्षेरिति—भक्ष श्चुरादिः। कृष्णो नवनीतं भक्षयति, प्रेरणण्यन्ते तूदाहृतं मले। हिंसायान्तृ भवत्येव कर्म। हिंसा किल जीवोपघातः, जीवपीड़नोतपादनमित्यर्थः मूलोदाहरणे हिंसा सुव्यक्ता। भक्षयति शस्यं वृषभान् गोप इत्यादावपि हिंसावगम्यते। "अतः संज्ञा भवन्त्यते सुख दुःख समन्विता" इति मनुवचनतो वृक्षादीनामपि जीवधर्मश्रवणात्। शस्योपघातद्वारेण तत्स्वाम्युपघातोऽत्र हिंसा" इति वर्द्धमान मिश्राः।

वहेरिति—प्राप्त्यर्थस्य गत्यात्मकत्वेन नित्यं कर्मत्वे प्राप्ते प्रतिषेधः। सयन्तृककर्त्तृत्वे त्विति—यन्तृशब्देन उपदेशे प्राप्तेऽपि भारं वोढुमक्षमानां पशूनां क्रियया वाहयिता चालको वोच्यते। यन्ता चासौ कर्त्ता चेति यन्तृकर्त्ता, तेन सहवर्त्तमानः सयन्तृकर्त्तृकः (वहिः) तस्यभाव स्तत्त्वम्। गोपाः खलूपदेशमात्रे हि वन्यभोजनवहनाय समर्थाः, वृषभास्तु न तथोपदेशमात्रे शकट वाहनाय सभक्षा इति गोप स्तेषां यन्ता, ततो नात्र कर्मत्वनिषेधः। पूर्वत्र त्वयन्तृकर्त्तृत्वात् गोपानां कर्मत्वनिषेध एव।

ण्यन्तादपि कर्मप्रत्यये नीवृहादे र्मुख्यकर्मैवोक्तं भवतीति दृष्टान्तयति—कृष्णेनेति। मुख्यत्वाद् गवामेवोक्तत्वमिति—यतः प्रागुक्तमेव—सचेत् कर्मणि दुह्यादे गौणे ण्यादेस्तु मुख्यक इति।

कालेति—कालश्च अध्वा च भावश्च देशश्चेति कालाध्वभाव देशाः, तेषां कर्मत्व मुपजायते सर्वै रकर्मकैरपि धातुभिर्योगे सति। कीदृशै र्धातुभिः? अन्तर्भूतं क्रियान्तरं व्याप्तिरूपाअन्या क्रिया येषां तादृशैरकर्मकैर्योगे इत्यर्थः। तत् परिमाणम् अध्व परिमाण-मुच्यते, उपचारादिति भावः। व्याप्तिपूर्वकमिति—मासं व्याप्य आस्ते श्रीराधाकुण्डे, एकादशीं व्याप्य उपवसतीत्यर्थः एवञ्च कालसंख्यायामपि कालस्योपचारात् मासत्रय-मुत्तानं शेते, वर्षशतं जीवतीत्यादि च प्रयुज्यते। क्रोशत्रयमिति—त्रिकोशपरिमितं स्थलं व्याप्येत्यर्थः। गोदोहमिति—गोदोहशब्दो भावघणन्तः, गोदोहनकालं व्याप्येत्यर्थः। माथुरानिति—मथुरा राजधान्यन्तर्गत देशान् व्याप्येत्यर्थः। अत्र कारिकायां पूर्वार्द्धोक्त

किञ्च,—

कालाध्वभावदेशानामन्तर्भूतक्रियान्तरैः ।
सर्वैरकर्मकैर्योगेकर्मत्वमुपजायते ॥

अध्वशब्देनात्र तत्परिमाणमुच्यते । मासमास्ते, एकादशीमुपवसति; व्याप्तिपूर्वकमिति ज्ञेयम् । एवं क्रोशत्रयं गोवर्द्धनोस्ति, गोदोहं तिष्ठति हरिः, माथुरान् विराजते कृष्णः । कर्म प्रत्यये—मास आस्यते, एकादश्युपोष्यते इत्यादि ।

अत्र णौ कृते पूर्वकर्त्तुः कर्मत्वमेव मन्यन्ते । मासमासयति वैष्णवं वैष्णवः । कर्म प्रत्यये तु यथेष्टमुक्तत्वं कर्मण एकस्य । मासमास्यते वैष्णवः, मास आस्यते वैष्णवं वा वैष्णवेन ।

गतिज्ञानादीनामपि विकल्प इति केचित् । ततः कृष्णेन गा वनं गम्यते इत्यपि । किञ्च, प्रेरणाद्यसम्भवेऽपि क्वचित्तदुपचर्य णिः क्रियते । यथा—भिक्षा मथुरायां वासयति, दीपो गीतामध्यापयति ।

---

बहुवचनेनैव कार्ये सिद्धे पुनश्च सर्वैरिति विशेषणोपादानात् सकर्मकधातुयोगेऽपि कालादीनां कर्मता कैश्चिदिष्यते, यथा—रात्रिमोदनः पच्यते, रात्रि रोदनं पच्यत इत्यादि । एतन्मते पर्यायेण कर्माभिधानमिति विष्णुमिश्राः ।

णौकृते पूर्वकर्त्तुः कर्मत्वमिति—अन्तर्भूतक्रियान्तरसत्त्वात् खलु कालादेः कर्मत्वमुपदिश्यते । अतो व्याप्तिरूप क्रियाया एव कर्म जायते कालादि नत्वासनादेः, तेषां पुनरकर्मता स्वरूपतो नहि व्याहन्यते । ततोऽकर्मकगतिज्ञानेत्यादिना अणि कर्त्तुः कर्मत्व-अबाधितमेवेत्याशयः । कर्मप्रत्ययये त्विति—ण्यन्तादिति शेषः । प्रथेष्टमुक्तत्वमिति—द्वयोरेव क्रमश उक्तता स्यादित्यर्थः । भावे तु निरपेक्षः प्रयोगः,—वैष्णवं मासमास्यते, मासौ आस्यते, मासान् वास्यते वैष्णवेन, इह पूर्वकर्त्तुः कर्मत्वं तुल्यरूपत्वञ्च । कालादेरिति किम्—तदितरस्य मा भूत्, राजानं सौजन्यं वर्त्तत इति तु नस्यात्, अपप्रयोगात्, तत्र राज्ञि इत्येयं प्रयोक्तव्यम् ।

कालादिभिर्योगे अकर्मकधातूनां ण्यन्ते कर्म प्रत्यये द्वयोरेव कर्मणोर्विषयोक्तत्वं प्रदर्श्य इदानीं गति ज्ञानाद्यर्थानामपि तत्र कर्मणो रुक्तत्वे वैकल्पिकत्वमिष्टं कैश्चिदिति दर्शयति—गतीत्यादिना । अत्र वनस्योक्तता दर्शिता, अपि शब्दात् गावो वनं गम्यन्त इति च वोद्धव्यम् ।

किञ्चेति—प्रेरणादि स्तावत् चेतन व्यापारः, सत्वप्राणिषु नैव सम्भवेदित्यत आह—उपचार्येति । दृष्टान्तद्वये वैष्णवमिति पूर्वकर्त्तु कर्माध्याहार्यम् ।

विसदृशकार्यञ्चाह—किञ्चेति । तदाचष्टे इत्याद्यर्थे इत्यत्रादि शब्देन आश्चर्य ज्योतिर्ज्ञानादिषु च तथा समस्तादपीत्यत्र अपि शब्देन असमस्तादर्थात् केवलकृदन्तात च

किञ्च, तदाचष्टे इत्याद्यर्थे समस्तादपि कृदन्ताण्णौ कर्त्तव्ये प्रेरणादि णे यद् वाक्यं तदेव प्रयुज्यते। तत्र पुरावृत्तो—सीतां हर्त्तुं प्रेरयतीत्यत्र यथा सीतां हारयतीति वाक्यं प्रयुज्यते, तथा सीताहरणमाचष्ट इत्यत्र इत्यत्र तु सीतां हारयतीति प्रयोक्तव्यम्। एवं रावणवधम्—रावणं घातयति; रामागमनम्—राममागमयति।

कालात्यन्तसंयोगे यथा—आरात्रिविवासमाचष्टे—रात्रिं विवासयति। आङत्र्यभिव्याप्तौ, तस्याप्रयोगश्च, विवासो वासातिक्रमे वर्त्तते। अन्यस्त्वाह—रात्रिमतिक्रामयतीत्यर्थ इति। आदिग्रहणादन्यत्रापि। तत्राध्वमर्यादायामाश्चर्यत्वे यथा—संध्यायां पुष्करात् प्रस्थितो मथुरायां सूर्योद्गमनं सम्भावयति—सूर्यमुद्गमयति।

ज्योतिर्ज्ञानेऽपि—विधुना रोहिणी योगं जानाति—रोहिण्या योजयति

---

णौ कर्त्तव्ये प्रेरणादि णे वाक्यवद् वाक्यं प्रयुज्यत इत्यग्रे विवरिष्यते। अत्र "कृदन्तोपाख्याने कृल्लुक् प्रकृति प्रत्यापत्तिः, प्रकृति वच्च कारकम्" इति पद्मनाभः। अस्यार्थः—प्रकृते कृदन्तरूपनाम्नः णिप्रत्ययेनोपाख्याने सति कृतो महाहरः। प्रकृते र्धातोः प्रत्यावृत्ति र्यथापूर्वमवस्थितिः, कृल्लुकि निमित्तापाया नैमित्तिक षष्ठीविभक्तेरपि अपगमात् पुनः कर्मकारकं प्रकृतवत् प्रवृत्तम्। ततः पूर्वप्रकृतेरेवोत्तरे कृतोऽपि विशिष्टार्थणिः प्रेरणाद्यर्थ ण्यन्तात् न किमपि रूपवैशिष्ट्यं भजतीति संक्षेपः।

कालात्यन्तसंयोग इति—कालस्यअत्यन्तसंयोगः अविच्छेदसंयोगः तस्मिन् सति कृदन्तनाम्न ऊत्तरे णौ कृतेऽपि प्रेरण ण्यन्तवदेव प्रयोग उदाह्रियते—आरात्रिविवासमिति। वासातिक्रमो वासाभावः। रात्रेर्विवासः रात्रि विवासः, तत्कालं व्याप्येति अव्ययीभावः—आरात्रिविवासम् तत्। आदिपदं विवृणोति—अध्वमर्यादायामिति। अध्वनः पथः मर्यादा सीमा, तत्र विषये आश्चर्यत्वे गम्यमाने समस्तादपि कृदन्तात् णौ कृते सति प्रेरणण्यन्तवदेव वाक्यं प्रयुज्यते। तदुदाहरति—सन्ध्यायामिति। पुष्कराद् मथुरा पर्यन्तोऽध्वा बहुदिनगम्यः, तावन्तमध्वानमेकयैव रात्र्या गच्छति कश्चिदित्याश्चर्यत्वम्।

ज्योतिर्ज्ञानेऽपीति—ज्योतिषां ग्रहनक्षत्रादीनांज्ञानम्, तत्र समस्तात् कृदन्ताण्णौ सति प्रेरणण्यन्तवदेव वाक्यं प्रयुज्यते। धर्मसूत्रमिति—धर्मस्य सूत्रं संक्षेपग्रन्थनमिति धर्मसूत्रम्, तत्करोतीति वाक्ये कृति क्रियायाः कर्म सूत्रमासीत्। यदा तु कृदन्ताण्णौ जाते धर्मं सूत्रयतीत्यत्र सूत्र क्रिया प्रयुक्ता तदा अन्तर्भूतण्यर्थत्वेन सूत्रक्रियायाः साध्यत्वाद्धर्मस्य कर्मत्वमित्यर्थः। अन्यथा धर्मसूत्रयतीत्यपप्रयोगः स्यात्। सूत्रेण धर्म निरूपयतीत्यर्थः। समस्तादपीत्यत्र अपि शब्द बलात् केवल कृदन्ताच्च णौ प्रयोगान् दर्शयति—कर्त्तारमाचष्ट इति। कृञः तृल् कर्त्ता, पचः घण् पाकः, ताभ्यांणिः कृतः।

विधुम्। धर्मं सूत्रं करोति धर्मं सूत्रयतीति तु सूत्रक्रिया साध्यत्वाद् धर्मस्य कर्मत्वमिति। केवलकृदन्तादपि--कर्त्तारमाचष्टे कारयति; पाकं करोति पाचयति, वादितवन्तं प्रयोजितवान्--अवीवदद् वीणां परिवादकेन इत्यादौ।

## ३४. संज्ञः कर्मणि तृतीया वा।

कृष्णेन संजानीते कृष्णं संजानीते, अवेक्षत इत्यर्थः। आत्मपदं वक्ष्यते। स्मरणार्थे तु षष्ठी वक्ष्यते, कृष्णस्य संजानीति।

---

अवीवदति—अण्यन्तावस्थातो रूपान्तरक्रमो दर्श्यते। यथा,—वीणा (रागादिकं) वदति, परिवादक स्तां वदितुं प्रेरयतीत्यर्थे णौ—परिवादको वीणां वादयति। ततः सङ्गीताचार्यः तंपरिवादकं वीणां वादयितुं प्रैरिरदित्यर्थे पुनर्णौ भूतेशे—सङ्गीताचार्यः परिवादकेन वीणामवीवददित्येवं रूपम्। अथ ण्यन्त क्तवतु प्रत्ययादपि णौ कृते च तथैव रूपं प्रपद्यते यथा—वीणा (रागादिकं) वदति, परिवादक स्तां वदितुं प्रेरितवानिति णौं परिवादको वीणां वादितवान्। पुन णौं— वादितवन्तं परिवादकं सङ्गीताचार्यः प्रयोजितवानित्यर्थे—परिवादकेन वीणामवीवददित्येव रूपं प्रयोज्यम्। साधनन्तु "णे णौं हरे न दशावतारादर्शनत्वं मन्तव्य मित्युक्तदिशा विधेयम्।

**अमृता०**—३४. संज्ञ इति। सपूर्वस्य ज्ञाधातोः प्रयोगे कर्मणि तृतीया वा स्यात्। कर्मणि नित्यं द्वितीयायां प्राप्तायां विभाषया तृतीया विहितानेन। आत्मपदं वक्ष्यत इति— संप्रतिभ्यां समुत्कण्ठापूर्वकंस्मरणं विनेति। स्मरणार्थे (समुत्कण्ठापूर्वक स्मरणे) तु "स्मृत्यर्थदयेशां कर्म वेत्यनेन" षष्ठी द्वितीया च नत्वात्मपदम्। तत्रकर्म प्राप्तिपक्षे पुन स्तृतीया च भवति—"आध्याने पित्रा पितरं वा संजानातीति" मनोरमानुसारिणी तत्त्ववोधिनी। संज्ञ इति किम्—कृष्णं जानाति भक्त इति नित्यमेव कर्मता, द्वितीया चात्र।

---

**बाल०**—परि। वीप्सा। युगपत् सजातीयानां व्याप्तिस्तस्यां गम्यमानायां परिमाण वाचकादुत्तरे कर्मणि विषये तृतीया वा स्यात् इति केचित्। शतमिति। शतशब्दोऽत्र परिमाणवाची वीप्सार्थे द्विरुक्तिः॥ ३३॥

**बाल०**—मन्य। मन्यतेर्दिवादिगणि मनधातोः प्रयोगे अनादरार्थात् कर्मोपमानादुत्तरे चतुर्थी वा स्यात्। पक्षे द्वितीयैव कर्म तुल्याधिकरणस्यापि कर्मत्वं तदपि क्रियासाधयतीत्युक्तेः। ननु उपमानोपमेययोः कथं तुल्याधिकरणत्वमिति चेत् तर्ह्येवं वाच्यं। यद्यपि उपमानोपमेययोस्तुल्याधिकरणत्वं न स्यात् तथापि यथा कथञ्चित् साधर्म्यमुपमा इत्युक्तवीत्या तयोर्धर्मस्य तुल्याधिकरणत्वं अतो धर्मधर्मिणोरभेदेन धर्मेण धर्मिणमाक्षिप्य तुल्याधिकरणत्वं विवक्षणीयमिति। कर्मेति उपमीयते येन तदुपमानं। कर्मण उपमानं कर्मोपमानं तस्मात्।

नतु। अनादरार्थात् कर्मोपमानात् काकादेरुत्तरे चतुर्थी न स्यात्। ना वैष्णवमिति

तृणं यथा मन्ये तथा त्वां न मन्ये इत्यर्थः। अत्र तृणशब्दस्यानादरार्थता कर्मोपमानता च।
मनोतेरिति। मनु बोधने इत्यस्य तनादिकस्य प्रयोगे चतुर्थी न स्यात्। मन्यतेरिति निर्देशादिति शेषः। ननु सूत्रे कर्मोपमानादित्येवोक्तं तर्हि कथमुदाहरणे तृणाय मन्ये इत्युच्यते इति चेत्तत्राह उपमानादिति निकृष्टत्व एवेति उपमेयस्येति शेषः। स्यादिति चतुर्थीति शेषः। नञ्प्रयुज्यते इति नञ्प्रयोगं विना उपमानान्निकृष्टत्वं न स्पष्टं भवतीति। भाष्येति। भाष्यवार्त्तिकचन्द्राणां मतमिति विग्रहः। तेनेति तेन हेतुनेत्यर्थः। तत् साम्य इति तस्य उपमानस्य साम्ये। तृणायेति तृणमिवेत्यर्थः। साधव इति शुद्धा इत्यर्थः। प्रत्युदाहरन्ति चेति उपमानान्निकृष्टत्व एव तेन नेह इत्युक्त्वा प्रत्युदाहरन्ति सुवर्णमित्यादि। तृणमिति तृणमिवेत्यर्थः। अतो न चतुर्थी। तृणायेति। रघुनन्दनोऽपि रक्षो राक्षसं तृणाय मत्वा वाणेन प्रधनात् युद्धात् निरास्थत् दूरीकृतवान् इति तु भट्टिरिति तस्मात् भट्टिप्रयोगे उपमानान्निकृष्टत्वं न व्यक्तं।

मन्य। अप्राणिषु सत्सु अनादरे मन्यकर्मणि विषये उपमाने चतुर्थी स्यादिति। मन्येति मन्यतेरेकदेशनिर्देशः। इत्येवेत्येवकारेण उपमानान्निकृष्टत्व एव स्यादिति न तन्मतमिति सूचितं। आपिशलिः पण्डितविशेषः तस्येदमापिशलं। जयादित्यादयस्त्विति आदिपदेन क्रमदीश्वरादयोऽपि उपमानादिति चेति उपमानान्निकृष्टत्व इति नाद्रियन्त एवेत्येवकारः उपमानादिति च नाद्रियन्त इति च शब्दस्यार्थः। प्रत्युदाहरन्ति चेति अनादर इति किमित्युक्त्वा प्रत्युदाहरन्तीत्यर्थः। अश्मानमिति अश्मानं प्रस्तरविशेषं शिलेति प्रसिद्धं। दृशदं प्रस्तरं मन्ये उदुखलं काष्ठविशेषं काष्ठं मन्ये। यस्य माता न पश्यति न द्रष्टुं प्रभवति तं अन्धायाः सुतं मन्ये इति। यदि तैरुपमानादित्यादृतं स्यात् तदा तन्मतेऽत्रोपमानत्वेनोपमानान्निकृष्टत्वाभावात् अनादराभावाच्च व्यङ्गं विकलमेव प्रत्युदाहरणं स्यादिति। स्वरूपमाख्यानं खल्वेतदित्यनेन अनादराऽभावः सूचितः। जयादित्यादीनां प्रत्युदाहरणान्तरमाह काकादि निषेधः किमिति न त्वा काकं मन्ये इत्यादिषु अनादरो विद्यत एव। नाव्यमिति नाव उपयुक्तं नीरं यावत्। नाव्यं त्रिलिङ्गं नौतार्यं इत्यमरः। यद्यप्येवं तथाप्यस्माभिर्भाष्यादिमतमेवावलम्बनीयमिति पुनस्तदेव द्रढयति मिश्रास्त्विति। मिश्रा वर्द्धमानमिश्राः। आदरे बहुवचनं। भाष्यादिवदेवेत्यनेन उपमानान्निकृष्ट एव स्यादिति मिश्रमतमित्यायातं। ननु तर्हि कथं भट्टौ तृणाय मत्वेति। अश्मानं दृशदं मन्य इत्यादिकं। न त्वा काकं मन्य इत्यादिकञ्च सिद्ध्यतीति चेत्तत्राह तत इति। ततो। भाष्यादिवच्चतुर्थीविधानाद्धेतोः नञ् प्रयुज्यत इति यदुक्तं तन्न नियतं किन्तु उपमानान्निकृष्टत्वस्य स्पष्टतार्थं तदुक्तमिति ज्ञेयं। तृणायेत्यत्र उपमानान्निकृष्टत्व चतुर्थीविधानात् चतुर्थ्यैव निकृष्टत्वं द्योत्यते अत आह तृणादपि निकृष्टमित्यर्थ इति। यथा दृशदन्तरमिति अत्रोपमानान्निकृष्टत्वं विवक्षितं। किन्तु स्वरूपाख्यानात् न अनादर इति न चतुर्थी काष्ठमिति यथा काष्ठान्तरं तथैवेत्यर्थं। अन्धायाः सुतमिति यथा अन्यस्या अन्धायाः सुतं तथैवेत्यर्थः। दृशदं मन्य इत्यादौ कर्मोपमानत्वं व्यक्तमेवाभूत् उपमानान्निकृष्टत्वन्तु सादृश्यप्रतिपादतया सूक्ष्मरूपेणास्तीति ज्ञेयं। न काकमिति कमप्यनादृत्य कोऽपि कथयति ततोऽपि काकादपि नान्नमिति न काकमिति वत्। ततोऽपि अन्नादपि। निगरितुमिति

## ३५. तृलादि कृति तु षष्ठ्येव वाच्या ।

कृष्णस्य संज्ञाता ।

---

अमृता०—३५. तृलादीति । संपूर्वस्य जानातेः तृलादि कृत्प्रयोगेतु कर्मणि षष्ठ्येव वक्तव्या । "कर्त्तृ कर्मणोः षष्ठी कृद्योग" इति वक्ष्यमाणस्य ह्याभाव एषः । धातु विशेष योगे कर्मणि तृतीयाविधानस्य विशेषविधित्वात् कृद्योगे षष्ठीविधायकः सामान्यविधि स्तेन बाध्यते, अतस्तद् बाधनिरासार्थं वचनमिदं ज्ञेयमिति न तृतीया ।

---

निगरणं गलाधः करणं । सुशकत्वात् सुशक्यत्वात् । न नावमिति । कामपि स्त्रियं प्रति कोऽपि कथयति ततोऽपि नावोऽपि । न शुकमिति न काकमिति वद् एवं न शृगालमिति च एते काकादयः ॥ ३४ ॥

बाल०—अध्व । पादविहरणादिरूपा शरीरक्रियात्र चेष्टा तस्यां गम्यमानायां अध्ववर्जिते गत्यर्थस्य कर्मणि चतुर्थी वा स्यात् । व्रजतीति व्रजगतौ भ्वादिः अध्वनः वर्जितमिति विग्रहः । अत्रेति एके जयादित्यादयः । कर्म पक्षे षष्ठी न भवतीति तेषां मतं । तद्यपि सामान्येन कृति षष्ठी न स्यादित्युक्तं तथापि कर्त्तृ कृतीति विशेषो ज्ञातव्यः ।

अतो भावकृति व्रजस्य गमनमिति भवति व्रजं गमनमिति प्रयोगन्तु कुत्रापि न दृश्यते इति अतः कर्त्तृकृति न षष्ठीति क्रमदीश्वरः । षष्ठी चेति । चन्द्र गोमी पण्डित-विशेषः । तन्मते व्रजं गन्ता व्रजस्य गन्तेति । षष्ठ्येवेति इति भागवृत्तिस्तन्मते नित्यमेव षष्ठी भवतीत्यर्थः । कृति षष्ठीवेति भागवृत्तिरिति क्रमदीश्वरेणोक्तं । ग्रामस्य गन्ता ग्रामाय गन्ता वनस्य गमनं वनाय गमनमिति उदाहृतञ्च । ग्रन्थकारेण षष्ठ्येवेति भागवृत्तिरिति उक्तं । व्रजस्य गन्तेत्युदाहृतञ्च । तस्मादत्र एकतरस्य भ्रमो विवेचनीयः । वास्तव विचारेण ग्रन्थकारयोर्मध्ये एकस्यापि न भ्रमः किन्तु क्रमदीश्वरग्रन्थस्य जल-निमग्नत्वेन लिपिकारै र्न बोद्धुं शक्यमिति । अत्र भाषावृत्तिरिति क्रमदीश्वरेणोक्तं इत्येव शुद्धं ।

अध्वेति अर्थपर इति अध्वपर्यायग्राहक इत्यर्थः । स चेति । स च अध्वशब्दोऽध्वा न्तरोपेक्षारहित इति गृह्यत इति शेषः । स चाध्वशब्दः अध्वान्तरापेक्षारहितश्चेत्तदा चतुर्थी न भवति अपेक्षायान्तु भवत्येव । तद्वर्जिते । आक्रम्येति अध्वानं पन्थानञ्चेति शेषः । यातीति व्रजादिकमिति शेषः । अतोऽत्राध्वनो न गम्यतेति । इहैव प्रतिषेध इति अध्वान्त-रापेक्षारहितत्वात् । इह तु स्यादिति अध्वान्तरसापेक्षत्वात् । उत्पथेन कुत्सिताध्वना । पथे इति पथिन् शब्दात् चतुर्थी ङे । अत्र व्रजादिवत् पन्था एव गम्यः अतोऽध्यान्तरापेक्षा अतश्चतुर्थीति । मनसेति । गच्छतीति प्राप्नोतीत्यर्थः । प्रेरसीमिति नात्र गमिर्गत्यर्थः । किन्तु धातूनामनेकार्थत्वात् उपभोगार्थः । गौणगत्यर्थस्याग्रहणात् कुञ्जं प्रविशति गोवर्द्धन-शिखरमारोहतीत्यादौ त्र न चतुर्थीत्येके । अथेति । कृत्प्रयोगो इति कृदन्तप्रयोगा इति कृदन्तप्रयोगा इत्यर्थः कृतां प्रयोगा इति विग्रहः । ते च क्रियाया अन्तरं भिन्नं क्रियान्तरं क्रियान्तरस्य आकाङ्क्षा यासु ताः क्रियान्तराकाङ्क्षाः क्रिया यत्र क्रियान्तराकाङ्क्षाः क्रिया भवन्ति तत्रस्थले ते च प्रसिद्धाः कृत्प्रत्यया स्युरिति कृत्प्रयोगाः साकाङ्क्षा ज्ञेयाः ।

## ३६. परिमाणाद्वीप्सायां कर्मणि तृतीया वेति केचित् ।
### शतं शतं वत्सान् पाययति हरिः, शतेन शतेन वत्सानिति वा ।

**अमृता०**—३३. परिमाणादिति । युगपत् स्वजातीयानां वस्तूनां व्याप्तिर्वीप्सा, तस्यां गम्य मानायां परिमाणवाचिन उत्तरे कर्मणि तृतीया वा स्यादिति केचिदाहुः । शतं शतमिति वीप्सायां द्विरुक्ति र्वक्ष्यते समासप्रकरणे ।

आख्यातप्रयोगास्तु निराकाङ्क्षा भवन्ति स्वभावादिति शेषः । आकाङ्क्षा प्रतीति-पर्यवसानविरहः । यद्धातोरुत्तरे कृत्प्रत्ययाः कर्त्तुं योग्यस्तद्धात्वर्थः यदि स्ववाक्यसमाप्तये धात्वन्तरार्थं मुख्यतयाऽपेक्षते तदा तद्धात्वर्थरूपा क्रियान्तराकाङ्क्षा ज्ञेया इति भावः । अतो हेतोः कर्त्तृत्वादिसाधनत्वे तुल्ये इति आख्यातकृतोरिति शेषः । कर्त्तृत्वादीत्यत्र स्वरूपमात्रे त्वप्रत्ययः । ततश्च कर्त्तृत्वादिरूपं कर्त्रादिरूपमिति । कर्त्तृत्वादिरूपं साधनं करणं ययोस्तयोर्भावस्तत्त्वं । आख्यातकृतोः कर्त्तृत्वादि साधनत्वे तुल्ये विद्यमानत्वेऽपि क्रियाप्रधानमाख्यातं साधनप्रधानं कृदिति प्राचीनैरुक्तमित्यर्थः । क्रिया प्रधानं निराकाङ्क्षा यत्र तत् अत्र निराकाङ्क्षत्वेन प्रधानं साधनं करणं प्रधानं विशेष्यं यत्र तत् अत्र विशेष्यत्वेन प्रधानं । तस्मात् कृतिक्रिया न प्रधानमित्यर्थः । कृच्छब्दस्य ब्रह्मत्वे युक्तिश्चिन्त्या धातुं सर्वनित्यादौ तद्धर्मा कृत्प्रशस्यते इति ग्रन्थकारवचने पुंस्त्वमेव सिद्धयतीति । किन्तु स्थानद्वयोक्तस्य प्रधानशब्दस्य विशेष्यत्वे व्याख्याने सति ब्रह्मवचनं सौष्ठवं भवतीति ज्ञेयं ।। ३५ ।।

**बाल०**—कर्त्तृ । कर्त्ता च कर्म च कर्त्तृकर्मणी तयोः कृत्योगे षष्ठी स्यात् ।

अत्रेतिति उद्देश्यानि मृग्याणि अतस्तानि लेख्यानीति भावः । तत्र कानिचित् सूत्राणि कृत्सूत्रारीणि कानिचित कृत्सूत्र रूपीणीति ज्ञेयं । सोपाधित्वान्नना रोहति परः पूर्वमिति व्यभिचरति । भावे क्तिरिति भावे क्तिः स्यात् क इत् । सूत्रमिदं कृत्सूत्रानुसारि क्तिर्लक्ष्म्यां भाव इति कृत्सूत्रं । कृष्णस्येति कर्त्तरि षष्ठी । अत्रेति गम्यं ज्ञेयं । एवं सर्वत्रैव वोद्धव्यं । कर्त्तरीति कर्त्तरि वाच्ये तृल् स्यात् ल् इत् एतदपि कृत्सूत्रानुसारि । णकतृलाविति कृत्सूत्रं लीलाया इति कर्मणि षष्ठी । व्यभिचरति चेति शिष्टप्रयोगदर्शनात् षष्ठीति शेषः । धायैरिति डुधाञ् । दधाति ददातिभ्यां णश्चेत्यनेन कर्त्तरि णः युक् । पाणिनिसूत्रे चेति षष्ठी व्यभिचरतीति शेषः । अर्हमिति अर्हपूजायां । पचादित्वात् कर्त्तर्यत् । द्विकर्मकत्व इति द्विकर्मकत्वं धातोरेव भवति । किन्तु तदुपचारादत्र कृत्प्रत्ययान्तस्य द्विकर्मकत्वे सतीत्यर्थः । अथवा द्विकर्मकत्व इति धातोरिति शेषः । द्विकर्मकधातोः प्रयोग इत्यर्थः । दोग्धेति दुह प्रपूरणे तृल् गोविन्दः । दादेस्तु धातोर्घः इति ह्स्य घः हरिघोषात्तथो धोधावर्जं इत्यनेन तस्य धः घस्य गः । तस्मादस्माकं मते कर्मद्वये एव षष्ठीत । प्रधान एवेति केचिदिति तन्मते दोग्धा दुग्धस्य गा इति भवति । दुहादेस्त्विति । दुदादेः प्रयोगे गौणे कर्मणि यत् षष्ठी भवति । इति युक्तं उचितमित्यर्थः । तस्मात् प्रधान एवेति यदुक्तं तदनुचितमिति भावः । कृतमिति । इत्यर्थे तद्धित इणिरिति स पूर्वपदाच्चेत्यनेने ति शेषः ।

## ३७. मन्यतेरनादरात् कर्मोपमानच्चतुर्थी वा नतु काकादेः ।

नावैष्णवं त्वा तृणाय मन्ये तृणं वा, ततोऽपि निकृष्टत्वादिति। मनोते र्न स्यात्--न त्वा तृणं मन्वेऽहम् । उपमानान्निकृष्टत्व एव स्यादिति नञ् प्रयुज्यते । एतच्च भाष्यवार्त्तिकचान्द्रमतम् । तेन तत्सास्येतु—हरिमध्यमंसत तृणाय इति, तृणाय मन्ये जगतां प्रभुत्वमित्यादयो न साधव इति वर्द्धमान मिश्राः । प्रत्युदाहरन्ति च--सुवर्ण तृणं मन्ये इति ।

---

अमृता०—३७. मन्यतेरिति । मन्यते र्यदनादरार्थकं कर्मण उपमानं तस्मात् चतुर्थी वा स्यात्, पक्षे द्वितीया । उपमीयते तुलनाक्रियते येन तदुपमानम्, यत्तूपमीयते तदुपमेयम् । यद्यपि उपमानोपमेयमो स्तुल्याधिकरणता नह्यनुशासन लभ्या तथापि—"यथा कथञ्चित्-साधर्म्य मुपममिति" वचनात्तयोर्धर्मयो यावत्यंशे साधर्म्यमुपलभ्यते तावत्यंशे हि तुल्याधि-करणत्वमादाय धर्मधर्मिणोरभेदोपचारेण तद्धर्मिणोऽपि तुल्याधिकरणत्वं विवक्षत इति वोध्यम् । ततश्च कर्म तुल्याधिकरणस्यापि कर्मत्वमिति वचनात् पक्षे द्वितीयैव । अनादरार्थ कर्मोपमागात् काकादेस्तु चतुर्थी न भवति किन्तु द्वितीयैव ।

नावैष्णवमिति—अव त्वा इति कर्म ( उपमेयश्च ) तृणमिति तत् कर्मण उपमान-मनादरार्थकश्च । सूत्रे मन्यतेरिति विकरणयुक्त निर्देशेन दिवादि मनुधातु ज्ञापनादेव तदितरनिरासः कृतः । तच्च पुनः स्पष्टार्थमुद्दिशति—मनोते र्न स्यादिति ।

ननु सूत्रे कर्मोपमानादित्यवोक्तम्, दृष्टान्ते तु कथं—तृणं न मन्ये इति नञ् प्रयोग

---

भाव इति प्रथमं कर्मणोऽविवक्षितत्वादिति शेषः । सृष्टेरिति पश्चात् प्रयुक्तायाः सृष्टे-रित्यर्थः । कर्त्तुरीप्सिततमत्वादित्यन्य इत्यनेन सृष्टेरीप्सिततमरूपकर्मत्वं सूचितं । कर्मण इति सृष्टिरूपस्य कर्मणः कर्त्तरि तद्धितात् कृतोभावे विहितत्वाच्चानुक्तश्च । कर्त्तरि विहितेन तद्धितेन कर्त्तुरेवोक्तत्वं भवति नतु कर्मणः इत्यभिप्रायः । तद्धितत्वादिति पाटेतु स्वरूपमात्रे त्वप्रत्ययः । ननु सृष्टेः कर्मत्वं कृतिक्रियायाः साध्यत्वादित्यनेन कृतिक्रियायाः सृष्टया सह सम्बन्धस्य सूचितत्वादत्र कृद्योगोऽपि घटत इति कथं नोच्यते इति चेत्तत्राह प्रत्ययार्थेति इनेः अर्थे वाच्ये कर्त्तरि गुणीभूतायाः क्रियायाः कृत्यादिरूपायाः सम्वन्धस्य योगस्य कर्मणा सहेति शेषः । सर्वत्रार्थिकत्वादेव न कृद्योग इति शेषः । सर्वत्रेति कृतपूवी सृष्टिमित्यत्र भुक्तपूर्वी दधीनि पीतपूर्वी दुग्धमित्यादौ चेत्यर्थः । आर्थिकत्वादिति अर्थ-लब्धत्वादित्यर्थः । सम्बन्धस्यार्थिकत्वमेवास्ति नतु शाब्दिकत्वमतो न कृद्योग इत्यभिप्रायः । गुणीभाव्येति अगुणं गुणं भावयित्वेत्यर्थः । गुणशब्दोऽत्र गौणार्थः । लीलाया इति । लीलाया कर्त्ता कृष्ण इत्यत्र यथा लीलायाः पश्चाद्योगः तथात्रापि सृष्टिमित्यस्य पश्चाद्योग इति अथवा लीलायाः कर्त्ता कृष्ण इतिवदस्य इनिप्रत्ययान्तस्य सम्बन्धिनः सृष्टिरूपस्य कर्मणः कृता सहायोग इत्यपि ॥ ३६ ॥

तृणाय मत्वा रघुनन्दनोऽपि ।
वाणेन रक्षः प्रधनान्निरास्थत् ॥ इति भट्टिः ।

"मन्यकर्मण्यनादरे उपमाने विभाषाऽप्राणिषु" इत्येवापिशलरूपञ्च । जयादित्यादय स्तूपमानादिति च नाद्रियन्ते । प्रत्युदाहरन्ति च,—

अश्मानं दृशदं मन्ये मन्ये काष्ठमुलूखलम् ।
अन्धाया स्तं सुतं मन्ये यस्य माता न पश्यति ॥ इति ॥

स्वरूपाख्यानं खल्वेतत् ।

काकादि निषेधः किम्——नत्वा काकं मन्ये, नत्वान्नं मन्ये यावद्भुक्तं न श्राद्धम्, नत्वा नावं मन्ये यावत्तीर्णं न नाव्यम् ।

मिश्रास्तु भाष्यादि वदेव कर्मोपमानाच्चतुर्थीं विदधति । ततोऽर्थान्तरं कार्यम् । यथा——तृणायेति तृणादतिनिकृष्टमित्यर्थः । दृशदमिति यथा

---

इति चेत्तत्राह—उपमानान्निकृष्टत्व एवेति । चतुर्णीति शेषः । तच्च भाष्यवार्त्तिक चान्द्र-सम्मतं नतु स्वकल्पितमित्याह—एतच्चेति । तेन तस्योमानस्य साम्ये तु चतुर्थी न युक्ता भवतीत्याहु वर्द्धमानमिश्राः । गौरवे वहुत्वम् । अत्र नञ् प्रयोगाभावादुपमानतो निकृष्टता व्यक्तं न प्रतीयत इत्यसाधुप्रयोगतया सिद्धान्तितम् । अर्थान्तरेण त्वग्रे समाधीयचेऽत्र ग्रप्थकृता । सुवर्णं तृणं मन्य इति तृणमिवेत्यर्थः । उपमेयस्य सुवर्णस्य तृणरूपोपमाना-न्निकृष्टता नावगम्यते किन्तु समतैव, ततो न चतुर्थीति वीजम् ।

एवञ्च सति—द्वणाय मत्ता रघुनन्दनोऽपीत्यादि भट्टि प्रयोगश्चासाधुरित्यवसीयते, तत्रापि नञ् पयोगाभावेनोपमानान्निकृष्टत्वानधिगमात् । किन्तु भट्टिप्रयोगाणां प्रमाण शिरोमणितया सर्वाद्रितत्वाद् ग्रन्थकृत् तत्प्रयोगस्य निर्दोषतामापादयति मतान्तरोत्थापनेन —मन्यकर्मण्यनादर इत्यादिभिः । अपिशलिः प्राचीनपण्डितः, तस्येदम् आपिशलम् । तत्र तु एव शब्देन—उममानान्निकृष्टतायाअनुक्ति रिति वोधयति । जयादित्यः काशिकाकृत्, आदिना क्रमदीश्वरादयश्च उपमानादिति चकारात् निकृष्टत्वमित्यपि नाद्रियन्ते, पाणिनीय-सूत्रे उपमानशब्दविरहात् । अतस्तत्तन्मते भट्टि प्रयोगोऽविरुद्ध इत्यवसितम् ।

प्रत्युदाहरन्तीति—अनादरे किम् ? इत्युक्त्या व्यतिरेकमुखेन पद्येऽस्मिन् प्रत्युदा-हरणानि दर्शयन्तीत्यर्थः । अश्मानं प्रस्तरम् । दृशदं द्रव्यनिष्पेषण शीलापट्टम् । उलूखलं काष्ठनिर्मितं धानादिघातन यन्त्रम् । नतु काकादे रिति प्रतिषेधमुदाहरति—नत्वा काक-मित्यादि । नाव्यंनौतार्थं जलम् । सर्वत्रानादरसत्त्वेऽपि न चतुर्थी । सर्वाण्येतत्प्रतिषेधोदा-हरणानि काशिकात उद्धतानि ।

एवंस्थितेऽपि महाभाष्यमतमेव प्रामाण्यतमत्वेन सर्वादरणीयम्, तदनुसारितया

---

बाल०—क्रिया । क्रियाविशेषणस्य षष्ठी न स्यात् । क्रियाविशेषणस्य कर्मत्वमुक्तं अतः षष्ठी स्यात् तन्निषेधार्थं बचनं ।

दृशदन्तरं तथैवेत्यर्थः। तथानकाकं मन्ये ततोऽप्यतिकदर्यत्वात्। नान्नं ततोऽपि निगरितुं सुशकत्वात्। ननावं ततोऽपि बहुपुरुष सङ्गिनीत्वात्। नशुकं शिक्षित कथनेऽप्यशक्तेः। नश्रृगालं ततोऽपि भीतत्वादिति। काकान्ननौ शुक श्रृगाला एते तु प्राणिसंज्ञाः प्राचीनानाम्।

**३८. अध्ववर्जिते गत्यर्थकर्मणि चतुर्थी वा चेष्टायाम्।**

व्रजं व्रजाय वा व्रजति कृष्णः।

अत्र कृति षष्ठी च न स्यादित्येके। व्रजं गन्ता व्रजाय गन्ता। षष्ठी चेति चन्द्रगोमी। षष्ठ्यपि वेति भागवृत्तिः। व्रजस्य गन्ता। अध्वशब्दोऽत्रार्थपरः, स चाध्वान्तरापेक्षारहितः। तद्वर्जितेति किम्—अध्वानं गच्छति पन्थानं वा, आक्रम्य यातीत्यर्थः। इहैव प्रतिषेधः, इह तु

---

वर्द्धमानमिश्रमतञ्च नोपेक्ष्यमिति पुन स्तत्तद्विरुद्धायमानप्रयोगाणामर्थान्तरापादनेन सङ्गतिमुपपादयति—यथेत्यादिना। तस्मात् हरिमप्यमंसत तृणाय, तृणाय मन्ये जगतांप्रभुत्वम्, तृणाय मत्वा रघुनन्दनोऽपीति सर्वत्र नञ्प्रयोगाभावेऽपि तृणादति निकृष्टार्थतामभिप्रेत्य हि तत्तत्स्थलेषु चतुर्थी प्रयुक्ता कविभिरिति विवेको हि सामञ्जसपन्था इति। यथा दृशदन्तरमित्यादि प्रत्युदाहरणेषूपमानान्निकृष्टत्वं न विवक्षितं, नवानादरविवक्षा, किन्तु स्वरूपाख्यानात् यथाप्राप्त द्वितीयैव।

अमृता०—३८. अध्वेति। चेष्टाइन्द्रियव्यापारः तस्यां गम्यमानायां गत्यर्थ धातूनां कर्मणि चतुर्थी वा स्यात्, अध्ववाचिनि शब्दे कर्मणि तु द्वितीयैत्र स्यान्नतु चतुर्थी। परिस्पन्दनात्मिका चेष्टात्र गत्यर्थ क्रियाणां विशेषणीभूततया पादविक्षेपरूपा खलु मन्तव्या नतु सामान्यगतिः। तदेवं मतभेदे शिष्ट प्रयोगएव प्रमाणम्। कृद्योगे चतुर्थी तु न दृश्यते शिष्ट प्रयोगेष्वित्यलमति चर्च्चया।

अध्वशब्दोऽत्र अर्थ परः पर्यायग्राहक इत्यर्थः। अध्वान्तरापेक्षायान्तु ननिषेधः। एवं मार्ग गच्छतीत्यादौ च न स्यात्। मनसा कृष्णं गच्छतीत्यत्र मनः शब्दसान्निध्येन गमेःप्राप्त्यर्थो बोध्यते, वहिरिन्द्रियव्यापारात्मक चेष्टा विरहेण नासौ पादविहरणरूपार्थ इति न चतुर्थी।

अथेति—अनन्तरं कृत्प्रत्यानां योगे कर्त्तृ कर्मकारकयो रनुक्तयो र्यथा क्रमं तृतीयाद्वितीये बाधित्वा षष्ठीं विधातुं कृत्प्रसङ्गमवतार्य तत् प्रयोग स्थलमवधारयति—तेचेत्यादिना। अन्या क्रिया क्रियान्तरम्, क्रियान्तरस्य आकाङ्क्षा प्रतीतिपर्यवसानविरहो यत्र ताः क्रियान्तराकाङ्क्षाः क्रिया, क्रियान्तरापेक्षिण इति यावत्, विद्यन्त इति शेषः।

---

कर्त्तरीति। कर्त्तरि वाच्ये णकः स्यात् ण इत् सूत्रमिदं कृत्सूत्रानुसारि। कृत्सूत्रन्तुक्तमेव। पाचक इति। णके कृते वृष्णीन्द्रः॥ ३७॥

स्यात्—उत्पथेन पथे गच्छति । चेष्टायां किम्—मनसा कृष्णं गच्छति । अर्थग्रहणं किम्—प्रेयसीं गच्छति हरिः, उपभुङ्क्त इत्यर्थः ।

अथ कृत् प्रयोगाः । ते च तत्र स्यु र्यत्र क्रियान्तराकाङ्क्षाः क्रियाः । आख्यातप्रयोगास्तु निराकाङ्क्षाः । अतः कर्त्तृत्वादि साधनत्वे तुल्येऽप्युक्तम्—क्रियाप्रधानमाख्यातं, साधन प्रधानं कृदिति ।

३८. कर्त्तृकर्मणोः षष्ठी कृद्योगे ।

अत्र कृत्सूत्राणि किञ्चिदुद्देश्यानि । भावे क्तिः । कृष्णस्य कृतिः, अत्रास्तीत्यादि क्रियान्तरं गम्यम् । कर्त्तरि तृल् । लीलायाः कर्त्ता

---

अथादाख्यातक्रियां विना प्रायः कृत्क्रिया निरपेक्षतया वाक्यार्थस्य पूर्णं बोधं जनयितुमशक्ता इति भावः । आख्यात प्रयोगास्तु निराकाङ्क्षाः, तत्र वाक्यार्थ पर्यवसान बाधकाभावात् स्वत एव तद्बोधक समर्थत्वेनान्यनिरपेक्षा इत्यर्थः ।

व्यवस्थेयं साधारणी ज्ञेया, विष्णुनिष्ठा तव्यादयश्चाख्यात वन्मुख्या इति विशेषव्यवस्थाया अग्रे वक्ष्यमाणत्वात् । कर्त्तृत्वादि साधनत्वे तुल्येऽपीति—साधनत्वमिह क्रियानिष्पादनत्वम् । आख्यातप्रयोगेकृदन्तप्रयोगे वा कर्त्तृककर्मकारकाभ्यां क्रियानिष्पादन विषये खलूभयत्र कर्त्रादिस्तुल्यैवोपकरिता, तद्व्यतिरेकेण क्रियाप्रवृत्तेरसम्भात् । यद्वा साधनत्वमिह कारणत्वमिष्टम्, आख्यात कृदन्तप्रयोगयोः कर्त्तृकर्मकारकान्वयित्वं तुल्यमेव, तद् व्यतिरेकतया क्रियाप्रवृत्तेरसभम्भवात् । एवं सत्यपि अस्ति तावत् प्राधान्यांशे वंशिचमित्यनुवदते प्राचीनस्य—क्रिया प्रधान माख्यातमिति । आख्यातं खलु क्रिया प्रधानं धात्वर्थ प्रधानं, साध्यावस्थाप्रधानमिति यावत् । तत एव पचतीत्यादौ पचनानुकूलव्यापार इत्येव वैयाकरणिक बोधः । कृदन्तुस्तु साधनप्रधानं, नामावस्थत्वेन कारकप्रधानं, सिद्धावस्थाप्रधानमिति च । आख्याते कर्त्तृकर्मातिरिक्त कारकान्वयित्वाभावः, कृतन्तस्य पुनः कर्त्रादि षट् कारकवाचित्वम्, ततश्च लिङ्गसंख्यान्वयित्वञ्च तस्य प्रसिद्धम् । अतएवान्नस्य पाक इत्यादो—अन्ननिष्ठ विक्लित्यनुकूल कृत्याश्रय इति बोध इयान् विशेषोऽवगन्तव्यः ।

**अमृता०**—३८. कर्त्तृकर्मणोरिति । कृत् प्रत्ययस्य योगे कर्त्तरि कर्मणि च कारके षष्ठी स्यात् । पूर्वापवादोऽयम् । अत्र प्रकरणे कृत्सूत्राणि किञ्चित् स्वल्पमुद्देश्यानि नामत उल्लेख्यानि । कृत् प्रकरणे तानि सम्यग् विवरिष्यन्ते, इह तु कारक बोधोपकाराय यथा प्रयोजनमुट्टङ्क्यन्त इत्यर्थः । कारक प्रयोगस्य प्रायःकृदन्तापेक्षित्वेन तदुपाधिकः परविधिरत्र पूर्वमारोहतीति तु न दोषाय, प्रत्युत गुणायैव, असिद्धरूपमित्यादिप्रतिज्ञापालनात् ।

---

**बाल०**—कर्त्तृ । कर्त्तृकर्मणोः षष्ठ्याः प्राप्तौ कर्त्तरि षष्ठी वा स्यात् कर्मणि तु नित्यमेव । भाव इति भावे वाच्ये घण् स्यात् घणावितौ । सूत्रमिदं कृत्सूत्ररूपि घणिति कृत्सूत्रं । दोह इति घणि कृते गोविन्दः ॥ ३८ ॥

कृष्णः। व्यभिचरति च; धायैरामोदमुत्तममिति भट्टिः। आमोदं दधद्भिरित्यर्थः। तदर्हमिति पाणिनि सूत्रे च, तदर्हतीत्यर्थः। द्विकर्मकत्वे—दोग्धादुग्धस्य गवाम्। प्रधान एवेति केचित्। दुहादेस्तु गौण इति युक्तम्। कृद्योग इति किम्—तद्धित योगेतु—कृतपूर्वी सृष्टिं कृष्णः। कृतं पूर्वमनेन इत्यर्थे तद्धित इनिः। अत्र कृतमिति भावे क्तः। सृष्टेः कर्मत्वं कृति क्रियासाध्यत्वात्; कर्त्तुरीप्सिततमत्वादित्यन्ये। कर्मणोऽनुक्तत्वञ्च कर्त्तरि तद्धितस्य विहितत्वात् कृतश्च भावे विहितत्वात्। प्रत्ययार्थगुणीभूतायाः क्रियायाः सम्बन्धस्य तु सर्वत्रार्थिकत्वादेव।

---

भावे क्तिरिति—"क्ति र्लक्ष्म्यां भावे" इति कृत्सूत्रस्य प्रतीक् मात्रं गृहीतम्; क इत्। अत्र कृष्णस्येति कर्त्तरि षष्ठी। कर्त्तरि तृलिति—"णक तृलौ" इति कृत्सूत्रम्, इति कृत्सूत्रम्, तत्र कर्त्तरीत्यनुवर्त्तते। लीलाया इति कर्मणि षष्ठी। कृता तृल्प्रत्ययेन कृष्णस्योक्तत्वात्तत्र न षष्ठी। अस्य तु विधेरनित्यतां सूचयति—व्यभिचरति चेत्यनेन। धायैरिति डुधाञ् धातोरुत्तरे—"ददाति दधातिभ्यां णश्च" इत्यनेन णप्रत्यय स्ततो युक्। तदर्हमिति—"पचादेरत्" इत्यनेन कर्त्तरि अर्हधातोरत्प्रत्ययः। एवं प्रतिषेधविधेश्चानित्यता—नरकस्य जिष्णुइत्यादौ ज्ञेया। ततः शिष्टप्रयोगदर्शनात् कृद् योगविधेरनित्यत्वं मन्तव्यम्। द्विकर्मकत्वे सति द्वयोरेव कर्मणोः षष्ठी स्यादिति भावः। यदि एकस्मिन्नेव कर्मणि षष्ठी विवक्ष्यते तदा गौण एव सा दुहादे र्भवितुमर्हतीत्यर्थः।

व्यावृत्तिमाह—तद्धितयोगे त्विति। तद्धित इनिरिति—कृतं पूर्वमनेन इति वाक्ये प्रथमतः समासेन कृतपूर्व शब्दे जाते ततः "सपूर्वपदाच्च" इत्यनेन तद्धित इनिः, इराम इत्। कृतमिति भावे क्त इति—अत्रभावस्यैवेष्टत्वात् सृष्टिमिति कर्मापेक्षायां सत्यामपि नकर्मणो वाच्यता। नच साकाङ्क्षत्वेऽपि कथं समास इति वाच्यम्, "भक्ताय दत्तार्थं" इतिवत् कर्मण इह नित्यापेक्षित्वेऽपि बाहुल्यात् समसविधानात्। तत्र कर्मणोऽनुक्तत्वे हेतुद्वयमुपन्यस्यति—कर्त्तरीत्यादि। कृत् प्रत्ययेनभाव उक्तः, तद्धितेन च कर्त्ता, तत् कर्म पुन र्नकेनाप्युक्तमिति यथापूर्वमनुक्तमेव स्थितमिति भावः।

ननु कृतिक्रिया साध्यत्वात् सृष्टेः कर्मत्वमित्युक्तितः सृष्टि पदेन सह कृति क्रियायाः सम्बन्धोऽनिवार्यइत्यवगम्यते, ततएव कर्मणा कृद्योगोऽपि घटते, किं तर्हि व्यावृत्तेः साफल्यमिति चेत् ? मैवम्, योगएवात्र नास्तीत्याह—प्रत्ययार्थगुणीभूताया इत्यादि। क्रियायाः सम्बन्धस्तावद् द्विविधः, शाब्दिकः आर्थिकश्च। तत्र क्रियोत्तरप्रत्ययस्यार्थो यदा मुख्य स्तदैव पदान्तरेण सह तत्सम्बन्धः शाब्दिकः, अर्थात् साक्षादयोग इतिव्यपदेशः।

---

**बाल०**—लक्ष्मी। लक्ष्म्यां विहितयोर्णकङापोः प्रयोगेतु कर्त्तरि षष्ठ्येव स्यात्। पूर्वसूत्रेण विकल्पेन प्राप्तायां नित्यतार्थं वचनं।

लक्ष्म्यामिति भावे वाच्ये लक्ष्म्यां णकङापो भवतः। इदं सूत्रं कृत्सूत्रानुसारि।

तदेवं सति कृत् प्रत्ययः क्तो गुणीभाव्यः, कर्त्तरि विहित स्तद्धितेनि प्रत्यय एव मुख्यः। तस्माल्लीलायाः कर्त्ता कृष्ण इतिवदस्य कर्मणोऽयोग इति विवेचनीयम्।

**४०. क्रिया विशेषणस्य न षष्ठी।**

कर्त्तरि णकः—साधु पाचकः।

**४१. कर्त्तृकर्मणोः प्राप्तौ कर्त्तरि षष्ठी वा।**

भावे घण्—गोविन्देन गवां दोहः, गोविन्दस्य वा।

---

यदा तु प्रत्ययार्थो गौणस्तदा तस्याः सम्बन्ध आर्थिकः, अर्थात् तात्पर्यगम्य इति व्यपदेशः। इहच डुकृञ् धातो विहितः कृत् प्रत्ययः क्तः, समासेन तद्धितप्रत्ययेन च गौणीकृतः। ततोऽधुना गौण कृत्क्रियया सह कर्मणः सृष्टेः सम्बन्धः (कृतिसाध्यत्वरूपः) अर्थादवगम्यते ननु शब्दात्। तस्मात् लीलायाः कर्त्ता कृष्ण इति वदिह कर्मणासह कृतः साक्षाद् योगो नैव घटत इति विशदः।

**अमृता०**—४०. क्रियेति+कृद्योगे क्रियाविशेषणस्य तु षष्ठी न भवति। पूर्वं क्रिया विशेषणस्य कर्मत्वमतिदिष्टमिति तत्र च षष्ठ्यां प्राप्तायामयं निषेधः। पाचक इति—णक प्रत्यये सति उद्धवारामस्य वृष्णीन्द्रः। साधु यथा स्यात्तथा पचतीत्यर्थः।

**अमृता०**—४१. कर्त्तृकर्मणोरिति। कर्त्तरि कर्मणि च युगपत् षष्ठ्यां प्राप्तौ कर्त्तरि षष्ठी वा स्यात्, कर्मणि तु नित्यमेव षष्ठी ज्ञेया। विभाषा त्वियं तदैव व्यवस्थीयते यदा

---

णको लक्ष्यां भावे इति णकसूत्रं। विष्णुनिष्ठासेट्कगुरुमद्विष्णुजनान्तात् प्रत्ययाच्च भावे लक्ष्म्यां ङाप् इति ङाप्सूत्रं। रुद्रस्येति। कर्त्तरि षष्ठी जगत इति कर्मणि षष्ठी।

भेदिकेति। भिरिर विदारणे णकेति गोविन्दः इरामोवाच्यः प्रत्ययस्यात् कात् पूर्वारामस्येरामः इति भेदनमित्यर्थः। विभित्सेति सनान्ताद्विभित्स भातोर्ङाप् ङ् इत् भेदनेच्छेत्यर्थः॥ ३९॥

**बाल०**—अच्यु। अच्युताभाश्च विष्णुनिष्ठा च अधोक्षजाभश्च खलर्थाश्च अव्ययञ्च उरामान्ताश्च तृल् च एतेषां कृत्प्रत्ययानां प्रयोगे षष्ठी न स्यात्।

वर्त्तमानादाविति। वर्त्तमानादौ काले शतृशाणौ भवतः तौ अच्युताभसंज्ञौ। एतत्सूत्रं प्रायः कृत्सूत्ररूप्येव। कुर्वन्निति डुकृङ करणे शतृ ऋशावितौ तनादेः शपोऽपवाद उरिति उः गोविन्दः करोत्यरामस्य उर्निर्गुणे इति अरामस्य उः उद्वयं वः ततः कुर्वच्छब्दात् सूँ चतुर्भुजानुबन्धत्वान्नुम् सोर्हरः सत्सङ्कान्तरस्य हरः। कुर्वाण इति शानः श इत्। अत्र सूत्रे केनाप्येतदुदाह्रियते यथा। सृष्ट्वा दधि शारुकमेतदर्च्चकानुन्नीतवन्तं यतिभिः सुदर्शनं। ज्ञातं हरिं जिष्णुरघानि संस्तुवन् मुद दधानोऽर्थितमीयिवान्न कः॥ ४०॥

**बाल०**—द्विषः। द्विषधातोः शतु प्रयोगे कर्मणि षष्ठी वा स्यात्। द्विषन्निति।

## ४२. लक्ष्म्यां णकङापोः प्रयोगे तु कर्त्तरि षष्ठ्येव ।

लक्ष्म्यां भावे णकङापो । रुद्रस्य जगतो भेदिका विभित्सा वा ।

---

एकस्मिन्नेव कृति कर्त्तृकर्मणो रुभयो र्योगप्राप्तिः; नोचेत् पूर्व एवविधि र्वलीयान् । यथा—अहो महोत्सवेस्मिन् यावदोदनस्य पाक स्तावतामेव वैष्णवानां समागम इति । भावे घणिति—घणावितौ, अरामःशेषः । दोह इति—घणि कृते लघूद्धवस्येति गोविन्दः, "घण्णलथुकयः पुंसीति" वक्ष्यमाणानुशासनात् पुंस्त्वम् ।

अमृता०—४२. लक्ष्म्यामिति । लक्ष्म्यां विहितयो र्णकङापोः प्रयोगे तु कर्तरि षष्ठी एव भवति नतु विभाषा । पूर्वेण विकल्पे प्राप्ते नित्यतार्थमिदम् । लक्ष्म्यामिति—भाव वाच्ये लक्ष्म्यां णकः ङाप् च भवति । "णको लक्ष्म्यां भावे", इति णक सूत्रम्, तथा "विष्णुनिष्ठासेट्के" इत्यादि ङाप् सूत्रम् । णङ्प इतः । रुद्रस्येति कर्त्तरि षष्ठी, जगत इति कर्मणि । भेदिकेति—भिदिर धातो र्णकः, गोविन्दः, प्रत्ययस्थात् कादित्यादिना पूर्वारामस्य इराम आपि । विभित्सेति—तस्यैव सनन्ताद् विभित्स धातो र्ङाप्, भेत्तुमिच्छेत्यर्थः ।

---

द्विष अप्रीतौ पूर्ववन्नुमादि । ननु कृष्णेन क्रीडां कुर्वता हस्यत इत्यत्र शतुः कर्त्तरि विहितत्वात् कथं कर्त्तुरनुक्तत्वमिति चेत्तत्राह आख्यातस्येति । तेन आख्यातेन । एतदेव कथमिति चेत्तत्राह गौणमुख्ययोरिति । प्रसङ्गान्न्यायो निरूप्यते । विषयः शंसयः पूर्वपक्षः सिद्धान्तः सङ्गतिरिति पञ्च न्यायाङ्गानि न्यायोऽधिकरणं विषयः विचारयोग्यवाक्यं । शंसयः कोटिद्वयं शंसन् निर्णेतुमशक्यं ज्ञानं । पूर्वपक्षः प्रकृतार्थविरोधी तर्कोपन्यासः । सिद्धान्तः तत्त्वावगतिः । सङ्गतिः साक्षात्परम्परया वा विषयस्य तत्त्वावगतिसङ्गमनं । एतदेवोक्तं यदितीत्यनेन । कृष्णेन क्रीड़ां कुर्वता हस्यते इत्यत्र कर्त्तरि विहितेन शतृप्रत्ययेनोक्तः कृष्णः कर्त्ता हस्यते इत्यस्य भावे विहितस्य च कर्त्ता तेनानुक्तश्च अतस्तृतीयैव अत्र तृतीयाया एव बाधकान्तरत्वं । यथेति । कर्त्तरि ताम्बूलं भोजयन् कृष्णो गोपीं वाचयतीति अत्र क्रियाद्वय एव गोपीमिति भवति कर्मणि तु आख्याते विहिते कृतानुक्तायाः अपि गोप्या उक्तत्वमतस्तत्र प्रथमैव । तथेति । खादीति । खादेः प्रयोगे अणिकर्त्तुः कर्मत्वनिषेधेऽपीत्यर्थः । कर्मत्वमेवेति आख्यातस्य मुख्यत्वाद्वाचयतेर्योगे अणिकर्त्तुः कर्मत्वं स्यादिति शेषः । ताम्बूलमिति कर्त्तरि ताम्बूलं खादयन् कृष्णो गोपीं वाचयतीति अत्र खादयन्नित्यस्य योगे गोपीमिति न भवति किन्तु गोप्येति तथा कर्मणि आख्याते विहिते आख्यातस्य मुख्यत्वात् कर्मत्वमेव अतः ताम्बूलं खादयता कृष्णेन गोपी वाच्यत इत्येव प्रयुज्यते । कथमिति । कथं पदेन पश्येत्यस्य कर्मणोऽनुपस्थितिर्भवतीत्यमत्र विरोधः । सिद्धान्तमाह पश्येत्यस्येति वाक्यार्थेनैवेति कृष्णकर्मकदर्शनरूपेण वाक्यार्थेनैवेत्यर्थः । एतेन अनेन कृष्णोदृश्यते इति पश्यत्ययमन्वयः सूचितः ॥ ४१ ॥

बाल०—अत इति । आने परे अत उत्तरे मुग्भवति उकावितौ । सूत्रमिदं कृत्सूत्ररूपि । क्रियमाणेति कर्मणि शानः । पूर्ववदिति आख्यातस्य मुख्यत्वात् यथा कृष्णेन क्रीड़ामित्यादौ तृतीया तथात्र द्वितीयैव ॥ ४२ ॥

**४३. अच्युताभ-विष्णुनिष्ठाधोक्षजाभ-खलार्थाव्ययोरामान्त-तृणां-योगे न षष्ठी ।**

**(क) वर्त्तमानादौ शतृशानावच्युताभसंज्ञौ ।**

तत्र शतृ परपदं, शानमात्मपदम् । यथा—कृष्णः क्रीडां कुर्वन् हसति । एवं कुर्वाणः ।

**४४. द्विषः शतु र्वा ।**

कंसस्य द्विषन् कंसं वा । आख्यातस्य मुख्यत्वात्तेनानुक्ते कर्त्तरि तृतीयैव, गौण मुख्ययो र्मुख्ये कार्यसंप्रत्यय इति न्यायेन । एतदेवोक्तं

---

**अमृता०**—४३. अच्युताभेति । अच्युताभश्च विष्णुनिष्ठा च अधोक्षजाभश्च खलर्थाश्च अव्ययानि च उरामान्ताश्च तृन् चेति तथा । एतेषां कृत्प्रत्ययानां योगे तु कर्त्तृकर्मणोः षष्ठी नस्यात् । सामान्यतः प्राप्ते प्रतिषेधः । एषां प्रत्येकं परिचाययन्नुदाहरति—

(क) वर्त्तमानादाविति । वर्त्तमानादौ काले शतृशानौ प्रत्ययौ भवतः, तौ चाच्युताभसंज्ञौ ज्ञेयौ । आदि शब्देन क्वचिद् भूते भविष्यति च भवत इति वक्ष्यते । ऋशावितौ । कुर्वन्निति—डुकृञ् धातोः शतृ प्रत्ययः । तनादेः शपोऽपवाद उः, धातोर्गोविन्दः, करोत्यरामस्य उर्निर्गुण इति गोविन्दजातारामस्य उरामः, उद्वयं वः । ततः कुर्वत् शब्दात् सुँ, नुम्, सुहरः, सत्सङ्गान्तहरः । कुर्वाणइति—पूर्वोक्तधातोः शानः, शइत् । कुर्वन् कुर्वाण इत्याद्यच्युताभान्तपदानि हसति प्रभृतिक्रियान्तर सापेक्षत्वादसमापिकाक्रियातया व्यपदिश्यन्ते कर्त्तु र्विशेषणतया च व्यवह्रियन्त इति दिक् ।

**अमृता०**—४४. द्विष इति । द्विषधातोः शतृप्रयोगे कर्मणि षष्ठी वा स्यात् । कर्त्तरि तु तस्या नप्रसङ्गः, कृत्प्रत्ययेन हि कर्त्तुरभिधानात् । द्विषन्निति—द्विष अप्रीतौ धातोः शतृ, पूर्ववन्नुमादि, राजत इत्यादि मुख्यक्रियान्तरं गम्यम् । ननु तर्हि कृष्णेन क्रीडां कुर्वता हस्यत इत्यत्र शतुः कर्त्तरि विहितत्वेऽपि कथं कर्त्तु रनुक्तत्वमिति चेत्तत्राह—आख्यातस्येति ।

---

**बाल०**—अतीतादाविति । अतीतादौ काले क्त क्तवतू भवतः । तौ विष्णुनिष्ठासंज्ञौ । अतीतादौ भूतादौ आदिपदेन वर्त्तमानेऽपि एतत् सूत्रं कृतसूत्रानुसारि । क्तोभूते भावकर्मणोरिति क्तसूत्रं । क्तवतुर्भूत इति क्तवतु सूत्रं । क्तः प्राय इति । प्रायग्रहणात् कर्त्तर्यपि ।

कृष्णेन इति । अत्र कर्त्तरि न षष्ठी कृष्ण इति अत्र कर्मणि न षष्ठी । विष्णुनिष्ठासंज्ञौ । विध्याद्यर्थ इत्यादिना वक्ष्यमाणा ये कृत्या विष्णुकृत्यास्तदादयश्च । मुख्यत्वे हेतुमाह कृदन्तरेष्विति । कृदन्तरेषु अन्य कृत्सु दृश्यमानेनेति नन्दादिभिरि शेषः । धृत इति धृञ् धारणे क्तः । पश्यन्तमिति वृन्दावन-मथुरासुबलादिकमिति शेषः । दृष्टवानिति सुबलादिरिति शेषः । दृष्टवानिति दृशिर प्रेक्षणे क्तवतुः शस्य षस्तरामस्य टः ॥ ४३ ॥

यदि बाधकान्तरं नस्यादिति। कृष्णेन क्रीडां कुर्वता हस्यते। एवं कृतानुक्तेऽप्याख्यातेनोक्ते कर्मणि प्रथमा। यथा—ताम्बुलं भोजयता कृष्णेन गोपी वाच्यते।

तथा खादिकर्मत्व निषेधेऽपि कर्मत्वमेव। ताम्बुलं खादयतेत्यादि। कथं– पश्य दृश्यते कृष्णः? पश्येत्यस्य वाक्यार्थेनैवान्वय इति।

## (ख) अतो मुगाने।

---

आख्यातस्य मुख्यत्वात् ( समापिका क्रियातया क्रियाप्राधान्यात् ) तेन मुख्यप्रत्ययेनाख्यातेनानुक्ते कर्त्तरि तृतीया हि भवति। तत्र च हेतुः—गौणमुख्ययोरित्यादि न्यायः। युगपत् प्राप्तयो गौणमुख्ययो र्मध्ये मुख्येहि कार्य निर्वाहः कर्त्तव्य इत्यर्थः। तदेतदभिप्रेत्यैव प्रागुक्तम्—उक्ते नामार्थे द्योत्ये प्रथमैव, यदि बाधकान्तरं नस्यादिति। अत्र कर्त्तरि विहितेन शतृप्रत्ययेन उक्तोऽपि कर्त्ता कृष्णः, पुनर्भावे विहितेन 'हस्यते' इत्याख्यातेनानुक्तः, भावस्यैव वाच्यत्वात। ततो मुख्येनाख्यातेनानुक्तत्वात्तत्र तृतीया हि न्यायतः प्राप्ता। तदनुक्तत्वमेवात्र बाधकान्तरं ज्ञेयम्।

एवञ्च व्यतिरेकमुखेन कृतानुक्तेऽपि आख्यातेनोक्ते कर्त्तरि प्रथमैव। यथा—राधा पक्तुं नन्दालयं व्रजति, कृष्ण लीलाः स्मारं स्मारं मोदते। अव्ययकृतो भावेविधीयन्त इत्यग्रे प्रपञ्चयिष्यते। एवं कृत्प्रत्ययेनानुक्तेऽप्याख्यातेनोक्ते कर्मणि प्रथमा, आख्यातस्यैव मुख्यत्वात्। यथेति—अण्यन्ते ताम्बुलं भुञ्जानागोपी वक्ति, ण्यन्ते—कृष्णो गोपीं ताम्बुलं भोजयन् वाचयति। इह भोजनार्थत्वादणि कर्त्तुः कर्मत्वम्। कर्मणि वाच्ये ण्यन्तकर्मण एवोक्तत्वनियमात्—ताम्बुलंभोजयता कृष्णेन गोपी वाच्यत इति। अत्र कर्त्तरि वाच्ये क्रियाद्वये हि गोपीमित्यनुक्तसम्बन्धः। कर्मणि तु कृतानुक्तमपि गोपीति कर्माख्यातेनोक्तमेव, मुख्य प्रत्ययस्य तस्य कर्मणि विहितत्वादिति।

तथा खादीति—कृति खादेः प्रयोगे नीखाद्यदीत्यादिना अणिकर्त्तुः कर्मत्वनिषेधेऽपि कर्मत्वं स्यादेव। ताम्बुलमिति—कर्त्तरि–ताम्बुलंखादयन् गोपीं वाचयतीति। अत्र मुख्यत्वेन वाचयतीत्यस्य हि कर्म गोपीमिति नतु खादयन्नित्यस्य, तस्य पुनः कर्मत्व निषेधात् गोप्येति तृतीया। ततः कर्मणिविहितेन मुख्येन कर्मण उक्तता—ताम्बुलंखादयता कृष्णेन गोपी वाच्यत इति।

आशङ्कते—कथमिति। अत्र पश्येति मुख्यक्रियायाः कर्मणोऽनुपस्थितेः कथमन्वय इतिसंशयपक्षः। समाधत्ते च—वाक्यार्थेनेति। दूरादेव कृष्णो दृश्यतेगोपैरिति पश्य त्वमित्यन्वयः। कृष्णो दृश्यत् इति वाक्यस्य योऽर्थः—दृष्टिगोचरीभूतकृष्णकर्मकदर्शनरूपः, अनेन सह पश्य पदस्यान्वयः, एतद् वाक्यार्थ एव पश्येत्यस्य कर्मेत्यर्थः।

(ख) अत इति। आनेपरे अतः आरामादुत्तरे मुगागमो भवति। उकावितौ। क्रियामाणेति—कर्मणि शानः, क्रीड़ाया विशेषणत्वेन लक्ष्मीत्वम्। अत्र उभाभ्यामेव प्रत्ययाभ्यां कर्मण उक्तता दर्शिता। पूर्ववदिति– बाधकान्तरे–मालां कुर्वन्तं पश्येति वत्।

कृष्णेन क्रीडा क्रियमाणा विराजते। कृष्णेन क्रियमाणां क्रीडां पश्येति पूर्ववद् द्वितीयैव।

**(ग) अतीतादौ क्त-क्तवतू विष्णुनिष्ठा संज्ञौ।**

क्तः प्रायो भावकर्मणोः; क्तवतुः कर्त्तर्येव। कर्मणि—कृष्णेन क्रीडा कृता। कर्त्तरि—कृष्णः क्रीडां कृतवान्। विष्णुनिष्ठाः कृत्यादयश्चाख्यातवन्मुख्याः, कृदन्तेष्वाकाङ्क्षा पूरकत्वात्। दृश्यमानेन कृष्णेन गोवर्द्धनो धृतः, पश्यन्तं कृष्णं दृष्टवान्।

**(घ) परोक्षातीते क्वसुकिकाना अधोक्षजामसंज्ञाः।**

अत्रक्वसुकी परपदे, कानआत्मपदम्। यथा—कृष्णः क्रीडां कृतवान् चक्रिः चक्राणः, कृष्णेन क्रीडा चक्राणा।

---

इह तु कृता उक्तमपि कर्म, आख्यातेनानुक्तमिति तादृशि बाधकान्तरे (उभाभ्यामेवोक्तत्वाभावे) आख्यातेनानुक्तकर्मणि द्वितीयैव।

(ग) अतीतेति। अतीतादौ काले क्त-क्तवतू प्रत्ययौ भवतः, तौ च विष्णुनिष्ठा संज्ञौ। आदि शब्देन वर्त्तमानेऽपि क्तप्रत्ययो विधास्यते। प्राय इति बाहुल्याभिप्रायेण, तेनक्वचित् कर्त्तर्यपि भवेदिति सूचितम्। कृष्णेनेति कर्त्तरि नषष्ठी, तथा कृष्ण इति कर्मणि च न। विष्णुनिष्ठा इति—विष्णुनिष्ठाक्त-क्तवतू उक्तौ, विध्याद्यर्थे इत्यादिना विष्णु कृत्यप्रत्ययाश्च वक्ष्यन्ते। एते आख्यातवद् मुख्याः, समापिकाक्रिया रूपेण व्यवह्रियन्ते। तत्र हेतुः—कृदन्तेष्विति। कृदन्तेषु समग्रेषु मध्ये एषामेवाकाङ्क्षापूरकत्वात्, अन्येषान्तु क्रियान्तरसापेक्षत्वदिति भावः। कृदन्तरेष्विति पाठोऽपपाठः आदि शब्देन क्वचिद् अच्युताभाधोक्षजाभ खल् प्रत्ययानाञ्च आख्यातवन्मुख्यत्वं मन्यते।

दृश्यमानेनेति—गोपादिभिरिति शेषः। धृत इति—धृञ् धारणे कर्मणि क्तः, तेन गोवर्द्धनरूपं कर्म उक्तम्। अत्र नान्याक्रियापेक्षा विद्यते, दधारेत्याख्यातक्रिया समानार्थेन ह्यनेनाकाङ्क्षापर्यवसानात्। पश्यन्तमित्यस्य कर्म वृन्दावन सौन्दर्यमित्युह्यम्। दृष्टवानिति—दृशिर् प्रेक्षणे धातोः क्तवतुः, शरामस्य षः, तरामस्य टः, ततो दृष्टवतु शब्दात् सुँ नुमादि। क्त-क्तवत्वो राख्यातवन्मुख्यत्वप्रदर्शनार्थएवात्र विशेषणमुखेन दृष्टान्तद्वयस्योपन्यासः। आद्ये शानप्रत्ययेनोक्तमपि कृष्णपदं क्तप्रत्ययेनानुक्तमिति तत्रप्रथमाभावः। उत्तरत्र च शतृप्रत्ययेनोक्तमपि क्तवतु प्रत्ययेनानुक्तमिति विष्णुनिष्ठाया मुख्यता। उभयत्र कृष्णस्य एकस्यां क्रियायां कर्मत्वमनस्यां कर्त्तत्वमिति व्यक्तम्।

(घ) परोक्षेति। परोक्षातीतकाले क्वसु कि कानः प्रत्यया भवन्ति, ते च अधोक्षजाभ संज्ञकाः स्युः। उकावितौ। चकृवानिति—डुकृञ् करणे क्वसुः, अधोक्षजाभत्वेन द्विर्वचनम्। ततः चकृवस् शब्दात् स्वादयः। पूर्वत्र कर्त्तरि वाच्ये कर्मणि क्रीडामित्यत्र

(ङ) अकृच्छ्र कृच्छ्रार्थे खल् । तदर्थाश्चान्ये खलर्थाः । ते च भावकर्मणोः ।

कृष्णेन सा क्रीडा सुकरा, अकृच्छ्रेण क्रियत इत्यर्थः । अन्येन दुष्करा, कृच्छ्रेण क्रियत इत्यर्थः । कृष्णेनेषद्दानममृतम्, अकृच्छ्रेण दीयत इत्यर्थः ।

(च) क्त्वामान्ताश्च कृदव्ययम् ।

(छ) एक कर्त्तृकयोः क्रिययोः पूर्वकालस्थधातोः क्त्वा ।

(ज) क्रियार्थत्वे तुमुः ।

कृष्णः क्रीडां कृत्वा व्रजमाजगाम । कृष्णः क्रीडां कर्त्तुं वनं जगाम ।

---

न षष्ठी, उत्तरत्र कर्मणि वाच्ये कर्त्तरि कृष्णेत्यत्र न षष्ठी । चकृवनित्यादित्रयम् "चकार" इत्याख्यातपदेनसमानार्थकम्, चक्राणेति तु "चक्रे" इत्यनेन तुल्यार्थ कमिति आख्यातवद् मुख्यत्वमेषाम् ।

(ङ) अकृच्छ्रेति । कृच्छ्रं कष्टम् । अर्थशब्दः प्रत्येकमभिसम्बध्यते । तेन अकृच्छ्रार्थे कृच्छ्रार्थे च खल् प्रत्ययो भवतीत्यर्थः । स्वलावितौ, अरामशेषः । तदर्थाश्चेति—अकृच्छ्रार्थाः कृच्छ्रार्थाश्चान्ये प्रत्ययाः खलर्था ज्ञेयाः । तत्रच कृच्छ्रार्थे दुरुपेन्द्रयोगेन, अकृच्छ्रार्थे सु शब्देषच्छब्दयोगेन खलभवेदिति वक्ष्यते । कृष्णेनेति कर्तरि न षष्ठी । कर्मणि प्रत्ययविधानात् क्रीड़ेत्यत्रोक्तकर्मणि नहि षष्ठी प्रसङ्गः । सालीलेति—हेलया (अवलीलाक्रमेण) असुरमारणाद्यात्मिका लीला । अन्येन—कृष्णादपरावतारेण केनापीत्यर्थः । अमृतं मोक्षः । मुक्तिः कैवल्यनिर्वाणं श्रेयो निः श्रेयसामृतमित्यमरः । भक्तिस्तु दुर्याणा—कृच्छ्रेण दीयत इति ध्वन्यते, "मुक्तिं ददाति कर्हिचित् स्म न भक्ति योगमिति श्रीभागवतोक्तेः, भक्तेर्भगवद्व वशीकरणशक्तित्वशास्त्रप्रसिद्धेरित्येव तत्र बीजं ज्ञेयम् ।

(च) कृदव्ययस्य स्वरूपमाह—क्त्वेति । कृदन्तेषु मध्ये क्त्वा, मान्तप्रत्ययश्च अव्ययसंज्ञः स्यात् ।

(छ) एकेति । एकः कर्त्ता ययो स्ताहृशयोः क्रिययोः सतोः पूर्वकालस्थस्य धातोरुत्तरे क्त्वा प्रत्ययः स्याद् भावे । "अव्ययकृतोभावे" इत्युक्तेः । क इत् ।

(ज) क्रियार्थत्व इति । एक कर्त्तृकयोरित्यनुवर्त्तते । क्रिया धात्वर्थः, तदर्थे तन्निमित्ते तुमुप्रत्ययः स्यात् । यस्माद् धातो स्तुमुर्विधेयः, तस्यैव धातो रर्थो यदि मुख्यक्रियायाः प्रयोजनं स्यात्तदा तुमुर्भवतीत्यर्थः सच भावे भविष्यति स्यादित्यवधेयम् । अत्र क्रीड़ा मित्यत्र न षष्ठी ।

ननु यदि भावे इत्युक्तं, तर्हि क्रीड़ां कर्त्तुमिति कथं कर्मणः प्रयोग इति चेत् ? सत्यं, श्रूयताम्—"भावेऽपि प्रत्यये सकर्मकस्य धातोः कर्मापेक्षा चेत् तत्सम्बन्धो भवेदेव" इति वचनादिहापि कर्म विवक्षितम्, यथा ओदनस्य पाक इत्यादौ । एतदेव स्पष्टयति—अनयोः

अनयोः कर्मणः प्रत्ययान्तरेणोक्तत्वञ्च— कृष्णेन क्रीडा कृत्वा समाप्यते। कृष्णेन क्रीडा कर्त्तुमारभ्यते।

**(झ) क्वचित् कृत्तुल्यार्थेनाव्ययेन च।**

यथा—विषवृक्षोऽपि सम्बर्द्ध्य स्वयं छेत्तुमसाम्प्रतम्। अयोग्य इत्यर्थः।

**(ञ) उरामान्ताः कर्त्तरि शीलार्थे प्रायः।**

कृष्णः क्रीडां कारुः, अलङ्करिष्णुरित्यादि।

**(ट) शीलार्थे तृन् कर्त्तरि।**

कृष्णः क्रीडां कर्त्ता। अच्युताभादियोगे कारकषष्ठ्या एव निषेधः, सम्बन्धविवक्षायान्तु षष्ठ्येव। क्रीडायाः कुर्वन्नित्यादि; किमेषामस्ति दुष्करमिति।

---

कर्मण इत्यादिना। भावे विहितत्वान्न कदापि क्त्वा तुमुप्रत्ययाभ्यामुक्तत्वं कस्यापीति भावः।

(झ) क्वचिदिति। कृतस्तुल्यः अर्थो यस्य तादृशेनाव्ययेन च क्वचिदुक्तत्वं स्यादनयोः कर्मण इतिशेषः। सम्बर्द्धेति—क्त्वा स्थाने यप् वक्ष्यते। अस्य छेत्तुमित्यस्य च कर्म विषवृक्षः, असाम्प्रतमित्यव्ययेन तन्न कर्मोक्तम्। तदव्ययस्य च कृत्तुल्यता व्यक्तीकृता—अयोग्य इत्यनेन।

(ञ) उरामान्ता इति। कर्त्तरि वाच्ये प्रायः शीलार्था उरामान्ताः प्रत्यया भवन्ति। अत्र क्रीड़ामिति कर्मणि नषष्टी। कारु रिति—उणादयो बहुलमिति कर्त्तरि उण्, णइत्, वृष्णीन्द्रः। यद्यपि—"कारुः शिल्पी"—इत्यमरेण, तथा—"तक्षा च तन्त्रवायश्च नापितो रजक स्तथा। पञ्चम श्चर्मकारश्च कारवः शिल्पिनो मताः"। इति शास्त्रान्तरेण च कारु शब्दस्य रूढितः शिल्पिवाचित्वमवधारितम्, तथापि "कारुः कारकः" इति मेदिनी दृष्ठ्या कर्त्तृवाचित्वमिह नैव विरुध्यते। अलङ्कारिष्णुरिति—अलं कृञ् निरा कृञ् इत्यादिना शीलार्थे इष्णुः। इत्यादिपदेन दैत्यजिष्णुः, नवनीतं गृध्नुः, भक्तिमिच्छुः विन्दुः चिकीर्षु रित्याद्या बोध्याः। सर्वत्र कर्मणि पष्ठी बाधः।

(ट) शीलार्थ इति। कर्त्तरि वाच्ये शीलार्थे तृन् प्रत्ययो भवति। न इत्। अत्र क्रीड़ामिति कर्मणि न षष्ठी। ननु अच्युताभादियोगे यथा—सम्भवं कर्त्तृकर्मणोः षष्ठी निषिद्धा, कथं तर्हि—क्रियायाः कुर्वन्नित्यादि प्रयोगेषु षष्ठी दृश्यत इति चेत्तत्र समाधानमाह—कारक षष्ठ्या एव निषेध इति। "कर्त्तृकर्मणोः षष्ठी कृद् योगे" इत्यनेन विहिताया एव षष्ठ्या निषेधः कृतो नतु सम्बन्ध सामान्य षष्ठ्या इत्यर्थः। सम्बन्धसामान्यविवक्षा तु दुर्निवारा, अत ईदृश प्रयोगा न खलु दुष्टा इतिभावः। दुष्करमिति खल् प्रत्ययान्तम्, एवंमाषाणामश्नीयादित्यादि च ज्ञेयम्।

---

बाल०—परोक्षातीत इति। परोक्षातीतकाले धातोः क्वसु कि काना भवन्ति ते

**४५. उकस्यापि योगे कर्मणि न षष्ठी कमि विना ।**

**(ठ) उकण् कर्त्तरि ।**

दैत्यान् घातुको हरिः । कमेस्तु—गोपीनां कामुकः ।

**४६. आधमर्ण्य तुमु भविष्यदर्थणकणिन्यो र्योगे न षष्ठी ।**

आधमर्ण्ये—शतंदायी, शतस्य ऋणस्य प्रतिदातेत्यर्थः । तुम्वर्थे—

---

**अमृता०**—४५. उकस्येति । उकण् प्रत्ययस्य योगेऽपि कर्मणि न षष्ठी, कमिधातो रुकण् योगे तु सा भवत्येव ।

(ठ) उकण्णिति । कर्त्तरि वाच्ये उकण् प्रत्ययः स्यात्, णइत् । लषहनपतेत्यादिना उकण् कृत्प्रकरणे वक्ष्यते । दैत्यानिति कर्मणि न षष्ठी । घातुकइति—हनो हस्य घः, हन्तेस्त इति नस्य तः, वृष्णीन्द्रः । कामुकइति कमु कान्तौ धातो रुकण् ।

**अमृता०**—४६. आधमर्ण्येति । ऋणे अधमः अधर्मणः ऋण ग्रहीता, तस्य भाव इत्याधमर्ण्यम् । तच्च तुमुश्च भविष्यच्च, आधमर्ण्य तुमुभविष्यतः, तेषामर्थे विहितौ यौ णकणिण्यौ तयो र्योगे कर्मणि षष्ठी न स्यात् । अत्र क्रमस्तु न विवक्षितः, यावत्सम्भव न्यायेनात्र तुम्वर्थे णकस्य योगे, भविष्यदर्थे आधमर्ण्ये च णिने र्योगे षष्ठीनिषेधोवेदच शतं दायीति—अजातावनुपेन्द्रोपपदादित्यादौ आवश्यकाधमर्ण्ययोश्चेति ददाते र्णिनिः, युक् । हरिं सेवकइति—तुमुणकौ तत् क्रियार्थत्वे इति णकः, सेवितुमित्यर्थः ।

केचित्तु तुम्वर्थ इत्युनुक्त्वा भवित्यदर्थे हि णकं विदधति, तत्र च भविष्यति तुमो विधानान्नासङ्गतम् । व्रजं गामीति—गमी गाम्यादयो भविष्यति साधव इति कृत् सूत्रम् । व्यभिचरति चेति—अत्र केचिदेवमाहुः—"णक् तृलौ" इत्यनेन निष्पन्नाविमौ दर्शक पूरक शब्दौ । तत्र काल विशेषनिर्देशाभावेन त्रिष्वेव कालेषु तयोः सम्भवादिह भविष्यदर्थो

---

अधोक्षजाभसंज्ञा उकावितौ अधोक्षजाभत्वात् द्विर्वचनादि । इदं सूत्रं कृत्सूत्ररूपि । कृष्ण इति अत्र कर्मणि न षष्ठी । कृष्णेनेति अत्र कर्त्तरि न षष्ठी । चक्राणेति कर्मणि कानः ॥ ४४ ॥

**बाल०**—अकृच्छ्रेति । कृच्छ्रं कष्टं अकृच्छ्रार्थे कृच्छ्रार्थे च खल् भवति खलावितौ अरामशेषः । तदर्थाश्चेति । अन्ये अकृच्छ्रार्थाः कृच्छ्रार्थाश्च खलर्थाः । चकारेण खलोऽपि खलर्थत्वं प्रतिपादितं तस्मात् खलः खलर्थानाञ्च योगे षष्ठी न स्यादिति । ते चेति । ते च खलर्थाः एतत् सूत्रं कृत्सूत्रानुसारि । प्रादिव्यवहितेऽहि कृच्छ्रार्थे दुरि खल् भावकर्मणोरिति अकृच्छ्रार्थे ईषति सौच इति । आरामादनः खलर्थ इति च कृत्सूत्रं । कृष्णेनेति । अत्र कर्त्तरि न षष्ठी । सेति असूरमारणादिकेत्यर्थः । अन्नेनेति भवतारान्तरेणेत्यर्थः । अमृतं मोक्षः । मुक्तिः कैवल्यनिर्माणं श्रेयो निःश्रेयसामृतं इत्यमरः ॥ ४५ ॥

**बाल०**—अव्ययलक्षणमाह क्त्वेति । क्त्वा कृत्मान्तश्च कृत् अव्ययं । एतदपि कृत्प्रकरणोक्तमेव ।

हरिंसेवको व्रजति। भविष्यदर्थे—व्रजं गामी व्रजं गमी। व्यभिचरति च,—पुत्रपोत्राणां दर्शको विष्णुमित्रो वर्षशतस्य पूरको जीवति।

**४७. वर्त्तमाने भावे च क्तस्य योगे कर्त्तरि षष्ठी वा।**

वैष्णवानां ज्ञातोऽयं वैष्णवैर्वा। तृतीया तु न साधुरिति भागवृत्तिः।

**४८. शीलितादौ षष्ठी नेष्यते।**

कृष्णेन शीलितः रक्षितः क्षान्तः। भावे—वैष्णवानां ज्ञातं वैष्णवै र्वा।

**४९. अधिकारण वाचि क्तस्त योगे कर्त्तरि कर्मणि च षष्ठी।**

---

ग्राह्यः, तथापि "तुमुणकौ" इतिसाहचर्येणोक्तस्य णकस्य यत्तुम्वर्थसाम्यं तत्तु नास्मिन् विद्यते। अतः सत्यपि भविष्यदर्थे अनयो र्योगे न षष्ठीनिषेध इति।

**अमृता०**—४७. वर्त्तमानेति। वर्त्तमानकाले तथा भावे च विहितस्य क्तप्रत्ययस्य योगे कर्त्तरि षष्ठी वा भवति। वैष्णवानां ज्ञातमिति—त्रिरामेतो बुद्धीच्छापूजार्थेभ्यश्च क्तो वर्त्तमाने चेत्यनेन ज्ञानार्थे वर्त्तमाने कर्मणि क्तः। तृतीया तु न साधुरिति—तथैव पद्मनाभः। तन्मते नित्यमेव षष्ठी।

**अमृता०**—४८. शीलितेति। "चादनुक्तादपी"त्यनेन अप्राप्तानामपिविशेषविधिना वर्त्तमाने क्तो वक्ष्यते। तेषां योगे तु कर्त्तरि षष्ठी न स्यात्। क्षान्तइति—हरिवेण्वन्तो-द्धवस्येत्यादिना त्रिविक्रमः, मस्य विष्णुचक्रम्, पुनस्तस्य हरिवेणुः। भाव इति—क्तो भूते भावकर्मणो रिति कृत्सूत्रम्। इह कर्त्तरि षष्ठी तृतीये सर्वसम्मते।

**अमृता०**—४९. अधिकरणेति। अकर्मकगतिभोजनार्थेभ्यो क्तोऽधिकरणे चेत्यनेन क्तो वक्ष्यते। तादृशः क्तस्य प्रयोगे कर्त्तरि कर्मणि च षष्ठी भवति। अधिकरणस्यैव वाच्यत्वात् तत्र कर्त्तृकर्मणो र्नोक्तता, अतः षष्ठी युक्तैवेति व्यञ्जयति—अधिकरणमेवोक्त-मिति। आसितमिति—आस उपवेशने क्तः। आस्यते यत्र तदासितम्—वृन्दावनमित्यधि-करणमुक्तम्। कृष्णस्येति कर्त्तरि षष्ठी। भुक्तमिति भुज्यते यत्र तत्, वृन्दावनमित्यर्थः।

---

एककर्त्तृकयोरिति। एककर्त्तृकयोः क्रिययोः प्रयोगे अथवा एककर्त्तृकयोः क्रिययोः सत्योः पूर्वकालस्थधातोरुत्तरे क्त्वा भवति। क इत्। एतत् सूत्रं कृत्सूत्ररूपि॥ ४६॥

**बाल०**—क्रियार्थत्व इति। क्रिया धात्वर्थः तस्मात् क्रियार्थत्व इति। यस्मात् धातोस्तुमूर्विधेयस्यैव धातोरर्थो यदि प्रयोजनं स्यात्तदा तुमुर्भवति उराम इत्। एतत् सूत्रं कृत्सूत्रानुसारि॥ ४७॥

**बाल०**—तुमुणकौ ततक्रियार्थत्व इति कृत्सूत्रं।

कृष्ण इति अत्र कर्मणि न षष्ठी। क्रीड़ां कृत्वेति वनादिति शेषः। जगामेति व्रजादिति शेषः। अनयोरिति अनयोः क्त्वातुम्वोः। प्रत्ययान्तरेण आख्यातादिना। उक्तत्वश्चेति भवतीति शेषः॥ ४८॥

अत्राधिकरणमेवोक्तम् । कृष्णस्य वृन्दावनमासितम्, भुक्तं फलानाम् । आस्यतेभुज्यते यत्रेति ।

**५०. विष्णुकृत्यानां कर्त्तरि षष्ठी वा ।**

**(ड) विध्याद्यर्थे तव्यानीय यत् क्यप् ण्यत् केलिमा विष्णुकृत्यसंज्ञाः । तेच प्रायो भावकर्मणोः । मया सेवितव्यो हरिः, मम वा एवं सेवनीयोहरिः ।**

---

अस्य फलानामिति कर्मणि षष्ठी । अत्र भुज्यत इति प्रथमं भावे यक् विहितः । कर्त्तृ कर्मेतरकारकाणां वाच्यता खलु भावद्वारेण हि ज्ञेया, आख्यातस्य त्रितयारिक्त वाच्यत्वाभावात् । अन्यथात्र भुज्यन्त इति कर्मणो बहुत्वे विवक्षिते बहुवचनापत्तेः ।

**अमृता०**—५०. विष्णुकृत्यानाति । एभिर्भावकर्म वाच्यत्वात् कर्मणि षष्ठीप्रसङ्गो नास्तीति कर्त्तरि विभाषया विधीयते । तानाह,--

(ड) विध्याद्यर्थ इति । भविष्यति विधिप्रभृत्यर्थे तव्यादयः पञ्चविष्णुकृत्यसंज्ञाः स्युः । तत्र च प्रायः शब्दग्रहणात्—"क्वचित् करणादौ च ते" इति वक्ष्यते । तेन कर्त्तरि च विधास्यते । कर्त्तरि विष्णुकृत्ये विहिते सति कर्मणि षष्ठी तु भवति—हरिर्गेयो भक्त महिम्नः । तत्र विशेषमाचष्ठे--

---

**बाल०**—क्वचिदिति कृतः कृदन्तविशेषस्य तुल्योऽर्थो यस्य तथा भूतेन अव्ययेन च क्वचिदुक्तत्वं स्यात् क्वदिति शिष्टप्रयोगदर्शनादिति भावः ।

विषवृक्षोपीति । अत्रासाम्प्रतमित्यनेनाव्ययेन विषवृक्षस्य उक्तत्वं । कृत्तुल्यार्थतां स्पष्टयति अयोग्य इत्यर्थ इति । अत्र तु ग्रन्थान्तरे इत्यपि पाठोऽस्ति । कृष्णाय धूपो नम इत्यादौ अव्ययमात्रेण च नमः शब्देन दानमात्र मुच्यते कृष्णस्य धूपदानमित्यर्थः । कृत्तुल्यार्थताऽभावरूपत्वात् । अतोऽन्तस्थितेन तदर्थेनोक्तत्वं तेन कृष्णं प्रति धूपोदेय इति निर्गलितार्थः ।। ४९ ।।

**बाल०**—उरामान्ता इति । कर्त्तरि वाच्ये शीलार्थे प्रायः उरामान्ताः सिद्ध्यन्तीति शेषः । नेदं सूत्रं । किन्तु कृत्सूत्रानुसारेणोक्तमेतत् । सूत्रलिखनमुचितमेव किन्तु उरामान्तानां प्राचुर्यात् सूत्राणि न लिखितानीति ज्ञेयं । कृष्णइति अत्र कर्मणि न षष्ठी ।

कारुरिति । उणादयो बहुलमित्यनेन कर्त्तरि उण् ण इत् वृष्णीन्द्रः । प्रायः ग्रहणादस्य शीलार्थत्वाभावेऽपि न विरोधः । किन्तु क्रीड़ां कारुरिति यदुदाहृतं तदसङ्गतमिव प्रतिभाति कारुशब्दस्य शिल्पिवाचित्वात् । कारुः शिल्पीत्यमरः । तक्षा च तन्त्रवायश्च नापितो रजकस्तथा । पञ्चमश्चर्मकारश्च कारवः शिल्पिनो मता इति शास्त्रान्तरं । अथवा कारुशब्दोऽत्र न शिल्पिनि वाचकः किन्तु कर्त्तरि वाचक इति । करिष्णुरिति शीलार्थे बाहुल्यादिष्णुः । कृत्सूत्रे केवलस्य कृञ्धातोरिष्णुविधानाऽदर्शनात् । कृष्णमलंकरिष्णुरिति वा पाठः । अलंकृञ् निराकृञ् प्रयोजने इत्यादि कृत्सूत्रं । इत्यादीत्यादिपदेन दैत्यं जिष्णुर्नवनीतं गृध्नुः सुखमिच्छुः शास्त्रं विन्दुरित्यादयो हरिभक्तिं चिकीर्षुरित्यादयश्च ज्ञेयाः ।। ५० ।।

## ५१. उभयप्राप्तौ विष्णुकृत्ये षष्ठी न ।

कृष्णेन गावो व्रजं नेतव्याः ।

॥ इति कृत् प्रयोगाः ॥

## ५२. स्मृत्यर्थ दयेशां कर्म वा ।

पक्षे सम्बन्धषष्ठ्येव । कृष्णं स्मरति कृष्णस्य स्मरति । भक्तिं दयते कृष्णः भक्ते र्वा, ददातीत्यर्थः । जगदीष्टे जगतो वा; यथेष्टं विनियुङ्क्त इत्यर्थः । कर्मपक्ष एव कर्मप्रत्ययः,— कृष्णः स्मर्यते । भावे तु षष्ठीमेव

---

**अमृता०**—५१. उभयेति । विष्णुकृत्यैर्योगे कर्त्तरि कर्मणि चोभयत्र प्राप्तायां षष्ठ्यां कुत्रापि सा नस्यात् । कृष्णेनेति—अत्र कर्मणि वाच्ये प्रत्ययविधानात् न्यादे र्मुख्यं कर्म गाव इत्युक्तवम्, व्रजमिति गौण कर्म त्वनुक्तमेव स्थितम् । अधुना कर्त्तरि तत्कर्मणि च प्राप्ता षष्ठी निषिद्धानेन । इति कृत्प्रयोगा उक्ताः, तद्योगे विष्णुभक्तीनां विधिनिषेधौ चोक्तौ ।

**अमृता०**—५२. स्मृत्यर्थेति । स्मृत्यर्थश्च दयश्च इश् च स्मृत्यर्थदयेशः, तेषां प्रयोगे कर्म वा स्यात् । सकर्मकत्वेनैषां नित्यं कर्मणि प्राप्तेविभाषावचनम् ।

ननु अच्युताभादियोगे निषेधविषयेऽपि ( किमेषामस्ति दुष्करमित्यादौ ) यदि सम्बन्धसामाण्ये षष्ठी निवारयितुमशक्या, तर्हि सर्वत्रहि निर्बाधतया तस्याः प्रवृत्ति-सम्भवात् किमनया विभाषा व्यवस्थयेति चेत् ? सत्यमस्तिकिञ्चिदुद्देश्यम् । सामान्यतः सिद्धायामपि तस्यां, विशेषवचनेन कर्मणि तस्याः पुन र्विधानं नियमार्थम् । तेन तदन्यत्र सा मा भूदिति । यथा—स्मृत्यर्थादीनां योगे कर्म वा विहितम्, अर्थात् कर्मण एव स्थले ततश्च गुणैः कृष्णस्य स्मरतीत्यत्र करणभूते गुण शब्दे विवक्षयापि षष्ठी नैव भवेत् । एवञ्च वक्ष्यमाण सूत्रे वैष्णवाद् विष्णुभक्ते र्विष्णुभक्ति वा नाथते इत्यत्रापादानभूते वैष्णवशब्दे नहि षष्ठी स्यादित्याशयः । तदेतत्प्रकरणान्तै स्वयंग्रन्थकृतापि विवरिष्यते ।

भक्ति दयत इति—दय दानगतिरक्षणहिंसादानेषु धातुः भ्वादिरात्मपदी, अत्र दानार्थएव । जगदीष्ट इति—ईशऐश्वर्ये अदादिः । अस्य त्वकर्मत्वप्रसिद्धेरिह सकर्मतया प्रयोगोऽसाधुरित्याशङ्कमानं प्रत्याह—यथेष्टं विनियुङ्क्त इत्यर्थ ईति । अनेन धातूना-मनेकार्थत्वादर्थान्तरवृत्तौ सकर्मकत्वमस्य प्रतिपादितम् । कर्म पक्षे हि कर्म प्रत्ययो नतु

---

**बाल०**—शीलार्थ इति । कर्त्तरि वाच्ये शीलार्थे तृल् भवति । ल इत् । एतत् सूत्र प्रायः कृत्सूत्ररूपस्येव । तृल् इति कृत्सूत्रं । कृत्सूत्रे शीलार्थ इति कर्त्तरि इति च अधिकार-लब्धं । कृष्ण इति अत्र कर्मणि न षष्ठी । ननु अच्युताभादि योगे षष्ठी निषिद्धा तर्हि कथं क्रीड़ायाः कुर्वन्नित्यादि भवतीति चेत्तत्राह अच्युताभादियोगे इति तस्मान्नेयं कारक-षष्ठी किन्तु सम्बन्धषष्ठीति ।

किमेषामिति । इति चेति सम्बन्धषष्ठीसिद्धमितिशेषः । दुष्करशब्दः खलन्तः ॥५१॥

मन्यन्ते,—कृष्णस्य स्मर्यत इत्यादि। अतएवोक्तं विस्तरेण,—मातुः स्मर्यत इति सम्बन्धे षष्ठ्या भाव्यमेवेति। एवमुत्तरेष्वपि।

## ५३. कृञः कर्म वा प्रतियत्ने।

गङ्गोदकमुपस्कुरुते तस्य वा।

## ५४. भावकर्त्तृकाणां रुजार्थानां कर्म वा ज्वरि सन्तापि वर्जम्।

अवैष्णवं रुजतु रोगः, तस्य वा। अभावकर्त्तृकाणान्तु न,—यमुना कूलं रुजति। श्लेष्मा हरिपराङ्मुखं रुजतु। रुजर्थानां किम्—एति

---

षष्ठी पक्षे, तत्र तु भावे एव। अतः गम्यते मया ग्राममिति वत् भावात् पुनः कर्मविवक्षा तु निरस्ता। विस्तरो व्याकरणविशेषः। एव कारेण स्वमतमेव दृढीकृतम्।

अमृता०—५३. कृञ इति। सतो वस्तुनो गुणान्तराधानं प्रतियत्नः, तस्मिन्नर्थे गम्यमाने डुकृञ् धातोः कर्म वा भवति, पक्षे सम्बन्धे षष्ठी। उपस्कुरुत इति—उत् पूर्वात कृञः—"गन्धने तु भर्त्सने यत्नसेवयो"रित्यात्म पदं वक्ष्यते। उपाद् भूषणसमवायप्रतियत्नेत्यादिना सुट् प्रागुक्तम्। कर्पूरादिना गङ्गोदकमभिरुचितं करोतीत्यर्थः। कर्म वेति किम्—प्रज्ञया गङ्गोदकस्योपस्कुरुत इति करणभूतात् प्रज्ञा शब्दान्न षष्ठी।

अमृता०—५४. भावेति। रुजा रोगः अर्थो येषां ते रुजार्था स्तेषां धातूनां कर्म वा स्यात्। कथम्भूतानां तेषाम्? भावो धात्वर्थः कर्त्ता येषां ते भावकर्त्तृका स्तादृशानाम्, समासान्त कप्रत्ययः। भावेविहित—रोगार्थकशब्दानां कर्त्तृत्वे सतीत्यर्थः। पक्षे सम्बन्धे षष्ठी। रुजा शब्दो भावडावन्तः। रुजतिवति रुजो भङ्गे तुदादिः, पीड़यतु इत्यर्थः। रोग इति—रुजते र्भावे घण्। वृद्धाइति जयादित्यादयः। एतीति—आनन्दे। जीवन्तं जनं एति मिलति प्राप्नोति, प्राप्य तमानन्दयतीत्यर्थः। इह भावकर्त्तृत्वमस्त्येव, किन्तु नास्ति रुजार्थत्वम्, अतो जीवन्तमिति न षष्ठी। ज्वरसन्तापयोः रोग वाचित्वे भावकर्त्तृत्वेऽपि तद्योगे न हि षष्ठी, किन्तु कर्मैव, सूत्रे तयो र्वर्जनात्। ज्वरयतु सन्तापयत्विति प्रेरण ण्यन्तौ, पूर्वत्र घटादित्वाद् वामनः।

---

बाल०—उक। उकस्यापि योगे कर्मणि षष्ठी न स्यात्। स च निषेधः कर्मि विना वर्जयित्वा भवति॥ ५२॥

बाल०—उकण् कर्त्तरीति। कर्त्तरि वाच्ये उकण् स्यात् ण इत्। एतत् सूत्रं कृत्-सूत्रानुसारि।

लष हन पत वद स्था भू वृष कम गम शृभ्यः उकण् इति कृत्सूत्रं। दैत्यानिति कर्मणि न षष्ठीति। घातुक इति उकणि कृते हनो हस्य घो निण्णयोरिति हस्य घः। हन्तेस्तो नृसिंहे इति नस्य तः वृष्णीन्द्रः। कामुक इति कमु कान्तौ उकण् वृष्णीन्द्रः॥५३॥

बाल०—आधः। आधमर्ण्यश्च तुमुश्च भविष्यच्च अर्थश्च अर्थश्च अर्थश्च अर्थाः। आधमर्ण्य तुमु भविष्यतश्च ते अर्थांश्चेति ते आधमर्ण्यतुमु भविष्यदर्थाः। तेषु विहितौ

जीवन्तमानन्द इति वृद्धाः। नचेह—अवैष्णवं ज्वरयतु ज्वरः, सन्तापयतु सन्तापः। अत्र भावपदं यद्धातु योगे षष्ठी तदर्थपरम्। तेन पाको रुजति भिक्षुमित्यादौ षष्ठी न भवेत्, अनभिधानात्।

**५५. नाथतेः कर्म वा कामनायाम्।**

विष्णुभक्तिं नाथते तस्या वा। आत्मपदं चात्र वक्ष्यते। याच्ञायान्तु तां नाथति।

---

ननु पाको रुजति भिक्षु मित्यत्र च भावकर्त्तृत्वसत्त्वेन लक्षण व्याप्तेः कर्मणि षष्ठी कथं न क्रियत इति चेत्? तत्र विशेषप्रति पत्त्यर्थं भाव पदं विवृणोति—यद्धातुयोग इत्यादि। तदर्थपरमिति तद्धात्वर्थपरम्। इहपाकः कर्त्ता भावेहि विहितः, किन्तु नासौ भावोरुजेः किन्तुपचेरेव। ततो भिन्नधात्वर्थत्वान्न तद् योगे षष्ठी-पक्षः। हेत्वन्तरञ्चोपन्यस्यति—अनभिधानादिति। सूत्रे कथनाभावाद् बुद्ध्या प्रथमोपस्थापितं प्रत्यासन्नमेव ग्राह्यमिति भावः।

**अमृता०**—५५. नाथतेरिति। कामनार्थे नाथतेः प्रयोगे कर्म वा स्यात्, पक्षे सम्बन्धे षष्ठी। नाथत इति—नाथृ नाधृ याच्ञोपतापैश्वर्याशीःषु भ्वादिः। अत्र कामनायामर्थे, आत्मपदं वक्ष्यत इति—नाथेराशिषि तन्मतमित्यनेन। तत्र चाशिष् शब्दस्य कामनार्थो ज्ञेयः, एकवाक्यतानुरोधात्। एवमुपतापार्थे च न—पिता शिशुमुपनाथति, पठनार्थं पीड़यतीत्यर्थः।

---

णकणिनी आधमर्ण्ये तुमुभविष्यदर्थे णकणिनी तयोः। अथवा तुमुश्च भविष्यच्च तयोरर्थौ तयोर्योग। अधमर्णः खादकः। तस्य भाव आधमर्ण्यं तस्मिन् तुमु भविष्यदर्थे च विहितयो र्णक णिन्योर्योगे षष्ठी न स्यात्। यावत् सम्भवस्तावद्विधिरिति न्यायेन समुदाय प्रत्येकन्यायाभ्याञ्च आधमर्ण्ये विहितयो र्णकणिन्योर्योगे तुम्बर्थे विहितस्य णकस्य योगे भविष्यदर्थे विहितस्य णिनेर्योगे च न षष्ठी भवतीत्यर्थः।

दायक इति। डुदाञ दाने आधमर्ण्ये णकविधानस्य कृत्प्रकरणे विशेषलक्षणं दृश्यते अतः' णक तृलावित्यनेनैव णकः कर्त्तव्यः युक्। दायीति दाधातो र्णिनि विधानस्य विशेषसूत्रं दूरे वर्त्ततां सामान्यसूत्रमेव न दृश्यते अतो बाहुल्यादेव आधमर्ण्ये णिनिर्विधेयः प्रतिदाता परिशोधकर्त्ता। सेवक इति सेवृ सेवने तुमुणकौ तत्क्रियार्थत्व इति णकः सेवितुमित्यर्थः। गातिगमीति। गमिगम्यादयस्तु भविष्यति च साधव इति कृत्सूत्रं। आधमर्ण्यादिकं सूत्रमेव लिखितं अतोऽकृत्सूत्रोल्लेखो न कृत इति ज्ञेयं। व्यभिचरति च इति निषेधः इति शेषः। दर्शकेति तुम्वर्थे णकः पुत्र पौत्रान् द्रष्टुमित्यर्थः। वर्षशतस्य पूरक इति वर्षशतं पुरयितुञ्चेत्यर्थः॥ ५४॥

**बाल०**—वर्त्त। वर्त्तमानकाले भावे च विहितस्य क्तस्य योगे कर्त्तरि षष्ठी वा स्यात्। वैष्णवानामिति वैष्णवैरयं ज्ञायते इत्यर्थः। ज्ञात इति ज्ञा अवबोधने। ञिरामेतो बुद्धीच्छा पूजार्थेभ्यश्चोक्तो वर्त्तमाने इति क्तः।

**५६. पिष निप्रहनोनाटच्युज्जास्युत्क्रथ्यादीनां कर्म वा हिंसायाम् ।**

नटजसुक्रथश्चुरादौ ज्ञेयाः । तृणावर्त्तं पिपेष, निजघान प्रजघान निप्रजघान प्रणिजघान उन्नाटयामसेत्यादि, तृणावर्त्तस्य वा । हिंसायां-किम्—धानाः पिनष्टि ।

**५७. व्यवहृज् पण दिवां कर्म वा व्यवहारे ।**

अत्र व्यवहृज् पणो द्यूतग्लहे क्रयविक्रयलक्षणे च, दिवस्तु द्यूतग्लह एव मन्यन्ते । त्रयाणामपि द्यूतग्लह एवेति तस्यां भ्रमः । धान्यं व्यवहरति

---

अमृता०—५६. पिषेति । पिष्लृ संचूर्णने रुधादिः, निप्रपूर्व हन हिंसागत्यो—रित्यनयोः, उतपूर्वाणां नट अवस्यन्दने, जसु हिंसायां ताड़ने च, क्रथ हिंसाया मित्येतेषाञ्च चुरादीनां कर्म वा स्यात् हिंसायां गम्यमानायाम् । पक्षे पूर्ववत् षष्ठी । नटादि त्रयाणां चुरादित्वनिर्देशात्, नट नृत्यौ भ्वादिः, जसुमोक्षणे दिवादिः, तथा क्रथ हिंसायां भ्वादिः, एते निरासिताः ।

ननु नटादि त्रयाणां चुरादित्व ज्ञापनार्थं सूत्रे हि त्रिविक्रमरूपेण निर्दिष्टास्ते, कथं पुनर्वृत्तौ तदेवोक्तम् ? मैवं, त्रिविक्रमत्वेन निर्देशेन हेतुण्यन्तत्वञ्च प्रतीयत इति तद्-वारणाय वृत्तौ स्पष्टोक्तिरियम्मिति निप्रहनेति—विगृहीतः संघाततः विपर्यस्तश्च गृह्यत इति दृष्टान्त चतुष्टयेन दर्शितम—निजघानेत्यादिना । प्रत्युदाहरति—हिंसायां किमिति । हिंसा तूत्पीड़नम्, तच्च प्राणवतामेव सम्भवेत्, धानानामप्राणित्वान्न तत्र हिंसावगम्यत इति सूत्रप्रवृत्तेरभावः । "धाना भ्रष्टयवे त्रिषु" इत्यमरः ।

अमृता०—५७. व्यवहृञिति । व्यवहारे अर्थे व्यय पूर्व हृञ् हरणे, पण व्यवहारे स्तुतौ च, दिवु क्रीड़ादिषु एतेषां कर्म वा भवति । पक्षे पूर्ववत् षष्ठी । तत्र व्यवहार शब्दस्य इष्टार्थमाचष्टे—अत्रेत्यादिना । व्यवहार इह द्विविधः—द्यूत विषयक पण रूपः, क्रयविक्रयात्मक द्रव्यविनिमय रूपश्चेति । तस्यां प्रक्रिया कौमुद्यां भ्रमः तथाहि तद् वृत्तिः-व्यवहृपणो द्यूत व्यवहारसमर्थयोः, द्यूतार्थस्य दिवश्च कर्मणि षष्ठी स्यादिति । प्रसादाख्य तट्टीकायान्तु—शतं व्यवहरत इत्यत्र शतं क्रयविक्रयेण विनियुङ्क्ते दीव्य-तीत्यर्थ इत्युक्तम् ।

---

तृतीयात्विति तन्मते नित्यमेव षष्ठीति ।। ५५ ।।

बाल०—शीलि । व्यक्तार्थमेतत् । शीलितः रक्षितः इति शील समाधौ रक्षपालने वर्त्तमान क्त सूत्रे चादनुक्तादपि इति वर्त्तमाने क्तः इट् । क्षान्त इति क्षमुष् सहने पूर्ववत् क्तः । हरिवेण्वन्तोद्धवस्य त्रिविक्रमः क्वौ कंसारिर्वैष्णवे च इत्यनेन त्रिविक्रमो मस्य विष्णुचक्रं विष्णुचक्रस्य हरिवेणुः भाव इति उदाह्रियते इति शेषः । ज्ञातमिति क्तो भूते भावकर्मणारिति क्तः ।। ५६ ।।

बाल०—अधि । व्यक्तार्थमेतत् ।

पणते, तस्य वा। तत् ग्लहं करोति तद्विनिमयते वेत्यर्थः। वंशीं कृष्णो दीव्यति, तस्या वा।

एवं प्रदीव्यति, तां ग्लहं करोतीत्यर्थः। अन्यत्र तु चक्रं व्यवहरति विक्षिपतीत्यर्थः। कृष्णं पणायति स्तौतीत्यर्थः। पणायते इतिकश्चित्। अत्र परपदमेवेति वर्द्धमानः।

## ५८. क्तस्येनन्तस्य योगे कर्मणि सप्तमी।

अधीती श्रीभागवते। कृतपूर्वी सृष्टिमित्यत्र तु न क्तस्येनन्तत्वमिति। अत्र द्वितीयैव। अत्राप्यधिकरण विवक्षायां स्यादित्यन्ये।

॥ इति कर्त्तृकर्मणी ॥

---

ग्लहं करोतीति–पाशकक्रीडायां पणं करोतीत्यर्थः। विनिमयते परिवर्त्तत इत्यर्थः। दीव्यति तस्या वेत्यत्र दिवो द्यूतपण एवार्थो गम्यते, वंश्या विनिमयस्यानौचित्यात्।

अथ सोपसर्गस्य दिवो वा, अनुपसर्गे नित्यमिति केनचित् सूत्रितम्, तन्मतन्तु नाभीष्टमित्याशयेनाह––एवं प्रदीव्यतीति। अन्यत्रेति––द्यूत ग्लह-क्रयविक्रयरूपार्थाद् न्यार्थे न षष्ठीत्यर्थः। कृष्णं पणायतीति––पणतेः स्तुत्यर्थे नित्यमायः परपदञ्चेति प्रागुक्तम्। द्यूतग्लहत्वाभावादिह च न षष्ठी। अत्रार्थे कश्चिदात्मपदं मन्यते तत्तु न युक्तमिति वर्द्धमान मतमुत्थाप्य निज मतं पुष्णाति—अत्र परपदमेवेति।

**अमृता०**—५८. क्तस्येति। इद् अन्ते यस्य तादृशः क्तप्रत्ययस्य योगे क्तान्तक्रियायाः कर्मणि सप्तमी स्यात्। अधीतीति—अधीतमनेन इत्यर्थे भावे क्तः,––तत "इष्टादिभ्यश्चेति कर्त्तरि इति स्तद्धितः। प्राग् भावेविहित क्तप्रत्ययेन निष्पन्नादधींत शब्दात् कर्त्तरीनौ कृते, पश्चादध्ययनस्य को विषय इत्याकाङ्क्षायां सत्यां गुणीभूत क्रियया सम्बध्यमान-मथचानुक्तं कर्म श्रीभागवतमिति स्थिते अत्रैवद्वितीयायाः स्थाने सप्तमीविधीयतेऽनेन। मासमधीती श्रीभागवते, इत्यत्र तु व्याप्तिप्रभृत्यन्तर्भूत क्रियान्तरस्य कर्मत्वात् कालादौ न सप्तमीति क्तान्तक्रियाया एव कर्मणि सप्तमीति व्याख्यानुसारात्। कृतपूर्वी सृष्टि-मित्यत्रापि कर्मसम्बन्धो दर्शितदिशा अस्त्येव, अतस्तत्र चास्य विषयमाशङ्क्य समादधाति–

---

उक्तमिति भवतीति शेषः। कृष्णस्य वृन्दावनमासितमिति आस उपवेशने। अकर्मक गति भोजनार्थेभ्यः क्तः अधिकरणे चेत्यनेन क्तः अधिकरणं वृन्दावनमुक्तं कृष्णेन वृन्दावने आस्यत इत्यर्थः। अत्र कर्त्तरि षष्ठी। भुक्तं फलानामिति भुजपाल-नाभ्यवहारयोः क्तः अत्रापि कृष्णस्य वृन्दावनमिति योज्यं। तत्र कर्त्तरि कर्मणि च षष्ठी। क्तस्याधिकरणवाचित्वं वाक्येन व्यञ्जयति आस्यते भुज्यते अत्रेतीति आस्यते यत्र तदासित-मिति भुज्यते यत्र तद्भुक्तमिति। भुज्यते इति प्रथमं कर्माविवक्षया भाव इति ज्ञेयं अन्यथा भुज्यन्ते इति स्यात्। फलानामित्युपादानात्॥ ५७॥

## ५९. कर्त्तृकर्मणोराधारोऽधिकरणम् ।

क्रियया सह वा क्रिया द्वारा वा कर्त्तृकर्मणी यदाश्रित्य विषयोकृत्य वा वर्त्तेते सआधार स्तद्रूपं कारक मधिकरण संज्ञं स्यात् । तत्र यदालम्ब्यवर्त्तते स आश्रयः । तत्र स्थित्वा यत्र प्रवर्त्तते सविषयः ।

---

न क्तस्येनन्तत्वत्वमिति । अत्र क्तान्तात् परवर्त्तिन पूर्वशब्दादेव इनिः, नतु क्तप्रत्ययान्तकृत शब्दादिति नास्य विषयोऽसौ ।

॥ इति विचारिते कर्त्तृकर्मणी ॥

क्रियाश्रयभूते कर्त्तृकर्मणी निरूप्य अथ तयोरप्याश्रयमधिकरणं निरूपयति,—

**अमृता०**—५९. कर्त्तृकर्मणोरिति । आध्रियते आश्रीयते क्रियां कर्त्तृकर्मभ्यामस्मिन्नितिआधारः, अधिकरणवाच्ये घणन्तो निपातितः । ननु कारकसामान्यलक्षणे—क्रिया सम्बन्धविशेषि कारकमित्युक्तम् अधिकरणलक्षणे तु तत्सम्बन्धस्यानुपलब्धेः कथं तल्लक्षण समन्वय इति मनस्याशङ्क्य स्वयं वृत्तावधिकरणं विवृणोति—क्रिययेत्यादि । कर्त्तृकर्मणो र्यदा क्रियासम्बन्धविशेषित्वेन कारकत्वं सिद्धम्, तदा च तयोरप्याधार विवक्षा सञ्जाता, अतस्तत् क्रियोपकारकतयो ह्यधिकरणस्य परम्परा क्रियासम्बन्धविशेषित्वमधिगम्यते, किन्तु कोमलधियातद् दुर्बोधत्वाद् "व्याख्यया विशेषप्रतिपत्ति"रिति नीति मनुससारः ।

क्रियया सह क्रिया द्वारा वाश्रयभूतत्वादधिकरणस्य क्रिया सम्बन्धः परम्परया, कर्त्तृकर्मणोरेव साक्षाद् रूपेणेति सूचितम् । तथैवोक्तं भर्त्तृहरिणा—कर्त्तृकर्मव्यवहितामसाक्षाद्धारयत् क्रियाम् । उपकुर्वत् क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतम् ॥ इति ॥ अस्यार्थः—कर्त्तृकर्मव्यवहितां क्रियां असाक्षात् परम्परया धारयत्, आत्मनि क्रियासम्बन्धमवस्थापयत्, कर्त्तृकर्मणोरेव क्रियाश्रयत्वस्य साक्षात्तयावगमात् । कथं तर्हि तस्य कारकत्वमित्यत आह—उपकुर्वदिति । आसने आस्ते इत्यादौ स्थित्यादि क्रियासिद्धौ उपकारं कुरुते, अतः शास्त्रे तदधिकरणं स्मृतमिति ।

क्रिया च सा द्विविधा, कर्त्तृस्था कर्मस्था चेति । यदुक्तं वृद्धैः—कर्मस्थः पचतेर्भावः कर्मस्था च भिदेः क्रिया । अस्यास्यो भावः कर्त्तृस्थः कर्त्तृस्था च गमेः क्रिया ॥ इति ॥ इत्थं क्रियाधारत्वं खलु कर्त्तृकर्मणोरेव सिद्धम्, तयोरप्याधारत्वेन परम्परयाधिकरणस्य हि तत् सिध्यति नेतरेषां कारकाणाम्, तत एव वृत्तौ कर्त्तृकर्मणी इत्येवोक्तम् तत्र यदाश्रित्य विषयीकृत्य वेत्यनेनाधिकरणस्य प्राधान्येन द्वैविध्यमुद्दिष्टम् । तच्च प्रत्येक विशिनष्टि—यदालम्ब्येति । तत्र तयो र्मध्ये यदालम्ब्य यदाश्रित्येत्यर्थः । तत्र स्थित्वेति आश्रये

---

**बाल०**—विष्णु । विष्णुकृत्यानां योगे कर्त्तरि षष्ठी वा स्यात् ॥ ५८ ॥

**बाल०**—विध्याद्यर्थे तव्यानीय क्यप् ण्यत् यत् केलिमा भवन्ति ते विष्णुकृत्यसंज्ञाः । ते चेति । ते च तव्यादयः । एतत् सूत्रं प्रायः कृत्सूत्ररूप्येव । कृत्सूत्रे अनीयेत्यनन्तरं

यथेन्द्रियाणां पुरुष आश्रयः, रूपादिकं विषयः। यथा राज्ञोऽन्तः पुरमाश्रयः, देशो विषयः। छात्रस्यासनमाश्रयः, पुस्तकं विषय इति।

**६०. अधिकरणे सप्तमी।**

**६१. प्रसितोत्सुकाभ्यां कालवाचि नक्षत्रेण च योगे तृतीया च।**

तत्रक्रियया सह आश्रये—आसने आस्ते, ललाटे तिलकं करोति कृष्णः। क्रिया द्वारा आश्रये—कृष्णे मोदते, कृष्णे सुखं लभते लोकः। अत्र

---

स्थित्वा। उदाहरणैश्च तत् सुगमीकरोति—यथेत्यादिभिः। तानि चैवमधिकरणेषु-प्रयोक्तव्यानि—अहो चित्रम्। विष्णुमित्रस्य नेत्रयुगं तद् देहे विराजमानमपि श्रीकृष्णरूपे निमग्नम्। राजा अन्तःपुरे तिष्ठन्नपि चारचरणः स्वराज्ये विहरति। छात्र आसने उपविश्य पुस्तकेऽभिनिविशत इति। एवं—कर्त्तृकर्मान्यतरद्वारा क्रियाश्रयत्वे सति तत्-क्रियोपकारकत्वमधिकरणत्वमिति च नैयायिकाः।

**अमृता०**—६०. अधिकरणेऽनुक्ते सप्तमी विष्णुभक्तिः स्यात्।

**अमृता०**—६१. प्रसितेति। प्रसितोत्सुक शब्दाभ्यां योगे तथा कालवाचिनक्षत्रेण च योगे अधिकरणे सप्तमी तृतीया च स्याताम्। आश्रयमुदाहरति–आसने आस्त इत्यादि। अत्रकर्त्ता कृष्णः उपवेशनक्रियया सह आसनमाश्रित्य वर्त्तते; तेनासनं कृष्णस्याश्रयः, गौण तयोपवेशनक्रियायाश्च। एवं ललाटे तिलकं करोतीत्यत्र कर्म तिलकं कृति क्रियया सह ललाटमाश्रित्य वर्त्तते, तेन ललाट स्तिलकस्य गौणतया कृतिक्रियायाश्चाश्रयः। एव मग्रेऽपि यथायोग्यमुह्यम्।

ननु व्रजसुखे निपुणः कृष्ण इत्यत्र क्रियासम्बन्धानुपलब्धे कथं व्रजसुखशब्दस्याधि-करणत्वमिति चेत्तत्राह—गम्य सत्तादीति। गम्यमाना या सत्तादि क्रिया तस्यः सम्बन्धेन, अस्ति प्रभृति क्रियामध्याहार्यं सम्बन्धः कर्त्तव्य इत्यर्थः। इदविषयाधिकरणम्।

अधुना आश्रयंविभजते—आश्रयः पुनस्त्रिविध इति। उपश्लेषएकदेश इति—आधाराधेययोरन्यत्र सिद्धयोः संयोग उपश्लेष इत्यर्थः। तत्र भावार्थे माधवठः औप-श्लेषिकः। एवं सामीपिकः। समीप सम्बन्धिनी लक्षणा यत्र क्रियते स सामीपिक आश्रयः।

---

यदित्युक्तं अत्र तु ण्यदित्यनन्तरं यदिति लिखितमिति भेदः। किन्तु अत्रापि यदित्यस्य अनीय इत्यन्तरमेव लिखनमुचितमिति ज्ञेयं॥ ५९॥

**बाल०**—उभय। विष्णुकृत्ये सति उभयस्मिन् कर्त्तृकर्मणोः षष्ठ्याः प्राप्तौ षष्ठी न स्यात्। कृष्णेनेति अत्र कर्त्तरि व्रजमित्यस्मिन् गौणकर्मणि च षष्ठी स्यात्तस्मिन्-निषेधार्थं वचनं॥ ६०॥

**बाल०**—स्मृत्यर्थः। स्मृत्यर्थश्च ईश् च तेषां प्रयोगे कर्म वा स्यात्। पक्षे किं भवति इत्यपेक्षायामाह पक्ष इति द्वितीयापक्षावाधक कर्माऽव्याप्तेः कारकसूत्रेण बाधस्य सम्बन्ध

लोकस्य या मोदक्रिया या च सुखलाभक्रिया ते द्वे कृष्णमाश्रित्य जायेते इत्यर्थः। विषये—कृष्णे प्रीणाति, कृष्णे प्रीतिं करोति। तंप्रति प्रीतिं प्रवर्त्तयतीत्यर्थः। व्रजसुखे निपुणः कृष्ण इत्यत्र तु गम्यसत्तादि क्रियायाः सम्बन्धेन कारकत्वम्।

आश्रयः पुन स्त्रिविधः—औपश्लेषिकः सामीपिको व्याप्त इति। उपश्लेष एकदेशस्तत्रभवे—आसने आस्ते। सामीपिके—यमुनायां घोषः।

---

यमुनायां घोष इति—मुख्यो लाक्षणिको गौण इत्यादिभिः शब्दभेदाः स्वयं दर्शयिष्यन्ते कृदप्रकरणे। तत्रैव सविस्तारं विवरिष्यते, इहतूद्दिश्यते किञ्चिन्मात्रम्। शब्दाः खलु वाचकाः, वाच्यास्तु अर्थान्विताः पदार्थाः। अभिधा लक्षणाव्यञ्जना चेति तिस्रः शब्दशक्तयः। तत्र अस्माच्छब्दादयमर्थो बोद्धव्य इतीश्वरेच्छाशक्ति रभिधा, तया योऽर्थो बोध्यते स मुख्यः, यथागौः शिखीत्यादिषु। अथ मुख्यार्थे बाधे सति तद् युक्तोऽन्योऽर्थो यया बोध्यते, रूढितः प्रयोजनतो वा, सालक्षणा नाम वृत्तिः। तया योऽर्थो बोध्यते स लाक्षणिकः। यमुनायां घोष इत्यत्र प्रतिवसतीति क्रिया अध्याहार्या, वासे हि लक्षणाश्रयस्यावश्यकत्वात्। अन्यथा घोष शब्दस्य मुख्यया हि वृत्त्या शब्दात्मकार्थे गृहीतेऽपि सम्भवेदन्वयबोधः, घोष आभीर पल्ली स्यात् शब्दश्चेति कोषात्। "स घोषो धार्त्तराष्ट्राणां हृदयानि व्यदारयदिति" श्रीगीता प्रयोगाच्च। तस्माद् यमुनाजले आभीर ग्रामस्य वासासम्भवात्, शक्षणया वृत्त्या तत् समीपस्थं तटमुपस्थाप्यते। शीतलत्वमतिपावनत्वञ्च तत्र लक्षणाश्रये प्रयोजनं बोध्यम्। अतो यमुना ( तत्तटं ) अत्र घोषस्य सामीपिकआश्रय इति। तत्र च स्पष्टार्थं दृष्टान्तयति—गौण्या वृत्त्येति। लक्षणान्तर्भूतापि सादृश्यगुणयोगाद् गौणीनामस्वतन्त्र्या वृत्ति कैश्चिदङ्गीक्रियते, तन्मते उदाहरणमिदम्। तत्र पुरुष शब्दो सिंह शब्देनान्वयमलभमानो विक्रमत्वादि साधर्म्यसम्बन्धं सिंहार्थं लक्षयति। पुरुषस्य विक्रमातिशय्यबोधनमत्र प्रयोजनम्। एवमग्निर्माणवक इत्यादि च ज्ञेयम्।

व्याप्तइति—पृथग् देशभागानभिव्याप्य तिष्ठतीति व्याप्तः। आधाराधेययो स्तुल्यजन्या, समवायलक्षण इत्यर्थः। विष्णुः सर्वत्रास्तीति सर्वं विश्वं व्याप्यास्तीत्यर्थः। एवं रेमे शरदि गोविन्द इत्यादि। रात्रौ भुङ्क्ते, प्रातः स्नातीत्यादि त्वौपश्लेषिकान्तर्भाव्यम्। विषयः अनन्यत्रभावः, नविद्यतेऽन्यत्र भावः सत्ता यस्मात् सविषय इत्यर्थः। नेत्रंरूपे बद्धमित्यादौ नेत्रस्य रूपैकनिष्टताप्रसिद्धा। सामीपिके यमुनाघोषयो र्न हि संयोगो न वा

---

समानस्यानुवृत्तेः कर्मणि षष्ठ्येव नतु द्वितीया कर्म साधिकानां स्मृत्यर्थादि क्रियाणां अकर्मकापत्तेः। स्मरतीति स्मृ चिन्तायां। दय इति दय दान गति हिंसा दानेषु स्वादिरात्मपदी। ईष्ट इति ईश ऐश्वर्ये अदादिरात्मपदी छशोराजेति शस्य षः तरामस्य टः। ननु ईशधातुरकर्मकः कथमस्य कर्म सम्भवत्विति चेत्तत्राह यथेष्टमिति। एतेन धातूनामनेकार्थतया अर्थान्तरवृत्तित्वात् सकर्मत्वमिति दर्शितं। कर्म पक्ष एवेति। तस्मात् षष्ठी

मुख्यया वृत्त्या येन नदीविशेष उच्यते लक्षणया वृत्त्या तेन शब्देनैव तत्-सम्बन्धितटमुच्यते। यथा गौण्या वृत्त्या पुरुषसिंह इत्यन्ये। व्याप्ते—विष्णुः सर्वत्रास्ति।

प्रसितेति—कृष्णे कृष्णेन वा प्रसितं मनो बद्धमित्यर्थः। एवमुत्सुकम्। तथा रोहिण्यां कृष्णमभिषिञ्चेत्, रोहिण्या वा। अकालवाचित्वे तु—रोहिण्यां बिधुः।

## ६२. अधिशीङ् स्थासामाधारः कर्म, अभिनिविशो वा।

समवाय लक्षण इति भिद्यते स त्रिध्यः। केचित्तु—"यमुना समीपो देशोऽपि यमुना इत्युपचारात्—आधारस्त्रिविधो ज्ञेयः कटाकाशतिलादिषु" इत्याहुः।

तदेवंविषयसहितं चातुर्विध्यं दर्शितमधिकरणस्य। तथा चाह पद्मनाभः—सामीपिको वैषयिक आभिव्यापक एव च। औपश्लेषिक इत्येवं स्यादाधार श्चतुर्विधः॥ इति॥ प्रसितमिति सि ञ् बन्धने कर्मणि क्तः। तथा रोहिण्यामिति—रोहिणी नाम नक्षत्रम्; नक्षत्रेण युक्तः काल इत्यर्थे केशवणः, तस्य च स्मरहरः। अतो रोहिणी शब्देन तद्युक्त कालोऽत्राभिधीयत इति तद् योगे सप्तमी तृतीया च। प्रति नक्षत्रस्य भोगकालः षष्ठिदण्डः, क्वचित् वाणवृद्धि रसक्षयइति ज्योतिश्चक्रनियमानुसारेण पञ्चषष्ठिदण्ड पर्यन्तं वर्द्धते, पञ्च पञ्चाशद् दण्डावधि ह्रसति तत्। उदाहरणमिदं व्याप्तौ हि प्रयुञ्जत केचित्, तत्तु न समीचीनं भाति, तावन्तं दीर्घकालं व्याप्य कृष्णाभिषेकविधेरप्रसिद्धत्वात्।

अमृता०—६२. अधीति। अधिपूर्वाणां शीङ् ष्ठा आस इत्येतेषां प्रयोगे कर्त्तुराधारः प्रयोगे कर्त्तुराधारः कर्म भवति, अभिनि पूर्वस्य विशतेः प्रयोगे आधारः कर्म वा स्यात्। अधिकरणस्यापवाद एषः। अकर्मकप्रसङ्गास्तु एते सर्वे, तेन सकर्मकत्वे नास्यविषयः—गोपाला वनं गन्तुं कृष्णमधितिष्ठन्तीति, अपेक्षन्त इत्यर्थः। किञ्च एषां कर्त्तु र्य आधारः स एव कर्म भवति नापरः। तेन वृन्दावने गोष्ठमध्यास्ते कृष्ण इत्यत्र कर्त्तुः कृष्णस्य गोष्ठ-माधार इति तदेव कर्म नतु वृन्दावनमिति, एतत्तु गोष्ठस्याधार इति विवेच्यम्।

आत्मपदं वक्ष्यतइति—"नेविश" इतितत् सूत्रम्। विशधातुः सकर्मकः, सोपेन्द्रत्वे त्वकर्मकः, यथा विपूर्वस्य हरतेः। केचिदिह च नित्यमेव कर्मत्वं मन्यन्ते। किन्तु—"या या संज्ञा यस्मिन् यस्मिन्नभिनिविशते" इति महाभाष्यम्, तथा—"स्वहस्तदत्ते मुनिमासने मुनिश्चिरन्तनस्तवदभिन्यवीविशत्" इति माघप्रयोगश्च दृष्ट्वा ते खलु—क्वचिदपवाद

पक्षे न कर्मप्रत्ययो भवति। किन्तु भावप्रत्यय इति स्वरूपाख्यानमेवैतदिति ज्ञेयं। भावेतु षष्ठीमेव मन्यन्त इत्यस्मात् गम्यते मया ग्राममित्यादिवत् भावे स्मर्यते कृष्णमित्यादि प्रयोगो न भवतीति।

विस्तरेति व्याकरणविशेषः। स्मर्यत इतीति स्मर्यते इत्यत्रेत्यर्थः॥ ६१॥

बाल०—कृञ्। सतो गुणान्तराधानं प्रतियत्नः तस्मिन्नर्थे कृञः प्रयोगे कर्म वा

गोवर्द्धनमधिशेते अधितिष्ठति अध्यास्ते हरिः। अभिनिविशते कृष्णभक्तिं कृष्णभक्तौ वा। अत्र विशेरात्मपदं वक्ष्यते।

## ६३. उपान्वध्याङ्भ्यो वस आधारः कर्म।

वृन्दावनमुपवसति हरिः। एवम् अनु अधि आङ्।

---

विषयेऽप्युत्सर्गोऽभिनिविशते इति न्यायोपन्यासेन समादधाति। मन्दिरे अधिष्ठानम्, धर्मे अभिनिवेश इत्यादौ तु न कर्मत्वम्, आख्यात प्रत्यययोगे ह्येषां प्रयोगेऽत्रकर्मत्वाभीष्टत्वादिति।

**अमृता०**—६३. उपेति। उप अनु अधि आङ् पूर्वस्य वस धातोः प्रयोगे आधारः कर्म स्यात्। एवमनुवसति अधिवसति आवसतीति सर्वत्र वासएवार्थः।

---

स्यात्। पक्षे सम्बन्ध षष्ठ्येव उपस्कुरुत इति उपपूर्वात् कृञः गन्धने तु भर्त्सने यत्नसेवयोरित्यादिना आत्मपदं। उपाद्भूषणसमवायप्रतियत्नविकृतिकरणवाक्याध्याहारेषु इत्यनेन सुट् सौगन्ध्यादिना अभिरुचितं करोतीत्यर्थः। तस्य गङ्गोदकस्य ॥ ६२ ॥

**बाल०**—भावः। पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना। आक्षेपश्च समाधानं व्याख्यानं पञ्चलक्षणमित्यादिरीत्या। भावः कर्त्ता येषां ते भावकर्त्तृका स्तेषां रुजाया अर्थ इव अर्थो येषां ते रुजार्थास्तेषां। ज्वरिसन्तापी वर्जयित्वा भावो धात्वर्थः स कर्त्ता येषां तथा भूतानां रुजार्थानां रोगार्थानां धातूनां प्रयोगे कर्म वा स्यात् पक्षे सम्बन्धषष्ठ्येव।

रुजाशब्दस्य भावङावन्तत्वेन रोगवाचित्वं। रुजतु इति रुजो भङ्गे तुदादिः पिडयत्वित्यर्थः। रोगशब्दो घणन्तः। तस्य अवैष्णवस्य हरौ पराक अधोगतं मुखं यस्य स तं हरिपराङ्मुखं। एतीति इणगतौ आनन्दो जीवन्तं एति गच्छतीति। अत्र धातोर्भावकर्त्तृत्वं विद्यत एव आनन्दस्य कर्त्तृत्वात् किन्तु रुजार्थत्वं नास्तीति तस्माद्भावकर्त्तृकाणामित्यस्य स्वार्थकर्त्तृकाणामित्यर्थो न व्याख्येयः। तथा सति एतत् प्रत्युदाहरणं द्व्यङ्गविकलं स्यात् गमनस्य कर्त्तृत्वाभावात्। अतो भावकर्त्तृत्वं धात्वर्थमात्र कर्त्तृकत्वमिति व्याख्येयं।

अतएव पाको रुजतु भिक्षुमित्यादौ स्वसमानार्थभावकर्त्तुरभावत्वात् षष्ठी प्राप्त्यभावेऽपि षष्ठीप्राप्तिसम्भावनया स्वयं ग्रन्थकृतापि अनभिधानादिति हेत्वन्तरमुपन्यस्तमिति। अवैष्णवं रुजतु आम इत्यत्रापि पक्षे सम्बन्ध षष्ठी भवितुमर्हति आम इत्यस्य घणन्तस्य स्वभिन्नधात्वर्थः कर्त्तृत्वेऽपि अम रोगे इत्यनेन रोगार्थत्वादिति। अथवा एति इत्यस्य आनन्दयति इत्येव फलितार्थो भवति अतएव एति जीवन्तमानन्द इत्यत्रापि स्वार्थकर्त्तृकत्वं घटयते तस्मात् भावकर्त्तृकाणामित्यस्य स्वार्थकर्त्तृकाणामित्येवार्थो व्याख्येयः तथा सति सर्वमनवद्यमिति। गोस्वामिचरणानामपि अयमेवाभिप्रायः। अतएव रुजतु रोगः ज्वरयतु ज्वरः सन्तापयतु सन्तापः इत्येवोक्तं। क्रमदीश्वरादीनामपि एतदेव मतं। रुजार्थस्य स्वार्थकर्त्तृकत्व इति क्रमदीश्वरसूत्रं। नचेहेति ज्वरि सन्तापि वर्जनादिति

## ६४. अभोजनार्थस्योपवसे नं ।

कालियह्रदे उपवसन्ति । लुग्विकरणालुग्विकरणयोरलुग्विकरणस्यैव ग्रहणमिति न्यायेन वस्ते नंग्रहणम् ।

## ६५. अपायादिष्ववधिरपादानम् ।

प्रभुरयम् । अपायादिषु क्रियासु साध्यासु यदवधिभूतं तत् कारकम-

---

अमृता०—६४. अभोजनार्थस्येति । अभोजनं भोजनविरहः अर्थो यस्य तादृशस्य उपपूर्ववसतेः प्रयोगे तु कर्मत्वं न स्यात् किन्तु अधिकरणत्वमेव । अत्र नञः अभावोऽर्थः । कालियह्रदे उपवसन्तीति—तैर्थिकाः कालियह्रदे लङ्घनं कुर्वन्ति, भोजनं न कुर्वन्तीत्यर्थः । यतः—मण्डनं चोपवासश्च सर्वशास्त्रेष्वयं विधिरिति शास्त्रोक्तेः । तीर्थेएकरात्रिं त्रिरात्रिं वा वसेदिति च प्रसिद्धम् ।

अमृता०—६५. अपायादिष्विति । अपायो विश्लेषः, अपपूर्वादिण् गतावित्यस्मात्, अपपूर्वादयगतावित्यस्माद् वा भावे घण् । स आदि र्यासां क्रियाणां तासु साध्यासु अवधिरपादन कारकं भवति । प्रभुरिति—प्रभु नामाधिकारोऽयमित्यर्थः । सूत्रार्थं विशदयति—अपायादिषु क्रियास्वित्यादिना । तत्र साध्यास्वित्यनेन कर्त्तृकर्मणी आक्षिप्येते, ताभ्यां

---

शेषः । ज्वरयत्विति ज्वर रोगे भ्वादिः । णिः प्रेरणादाविति णिः घटादित्वाद्वामनः सन्तापयत्विति पूर्ववण्णिः ।। ६३ ।।

बाल०—नाथ । कामनायां विषये नाथतेः प्रयोगे कर्म वा स्यात् ।

नाथत इति नाथृयाच्ञोपतापैश्वर्याशीःषु भ्वादिः । तस्याः विष्णुभक्तेः । आतमपदमिति । अत्र कामनायां वक्ष्यत इति नाथेराशिषि तन्मतमित्यनेन इति शेषः । तां विष्णुभक्तिं । नाथतीति याचते इत्यर्थः ।। ६४ ।।

बाल०—पिष । पिषलृ संचूर्णने निप्रपूर्व हन हिंसागत्योः एतयोः उत पूर्वाणां नट जसु क्रथां आदिग्रहणादन्येषाञ्च प्रयोगे हिंसायां गम्यमानायां कर्म वा स्यात् । नट जस्विति एते चुरादौ ज्ञेयाः । अतो नट अवस्यन्दने जसु हिंसायां जसु ताडने चुरादित्वाद्द्वयोरेव ग्रहणं । क्रथ हिंसायां । एतेषामेवात्र ग्रहणं । नटनृतावित्यस्य भ्वादेर्जसु मोक्षणे इत्यस्य दिवादेः । क्रथ हिंसायां इत्यस्य भ्वादेश्चाग्रहणमिति । भौवादिक-दैवादिकयोर्नटजस्वोहिंसार्थत्वाभावादेव चौरादिकयोरेव ग्रहणे लब्धेऽपि यत् नटजस्वित्युक्तं तत् शिशूनां झटिति प्रतिपत्त्यर्थं धातूनामनेकार्थत्वात् तयोरपि ग्रहणं भवत्विति शङ्का स्यात् तन्निरासार्थञ्चेति ज्ञेयं । ननु यदि चुरादय एव गृह्यन्ते तर्हि सूत्रे नटादयो ण्यन्तत्वेन कथं निर्दिष्टाः । उच्यन्ते यत्र नाटीत्यादिरूपं तिष्ठेत् तत्रैव कर्म वा भवतीत्यभिप्रायेण ण्यन्तनिर्देशः कृतः तेन तृणावर्त्तमनीनटत् । कंसमजीजसत् । कुवलयापीडमचिक्रथत् कृष्ण इत्यादौ भूतेशे अङि । द्विर्वचने वामने च कृते नाटचादिरूपाभावात् पक्षे षष्ठी न भवति । तृणावर्त्तमिति सर्वत्र योज्यं । निप्रेति प्रत्येकं समुदितं विपरीतञ्चाऽन्वेतीति सूचयितुं

पादानसंज्ञं स्यात्। कर्त्तुः कर्मणो वा पूर्वयोः क्रिया ज्ञानयो विषयोऽवधिः।

**६६. अपादाने पञ्चमी।**

**अपायो विश्लेषः, तत्रादि मर्यादावधिः। मथुराया आगतः, रथादवतीर्णः द्रवतोरथात् पतितः, परस्परस्मात् कृष्णचानूरावपसर्पतः।**

---

विना क्रिया साध्यनुपपत्तेः। तत एव अवधिशब्दस्य विवृतौ—कर्त्तुः कर्मणो वेत्युपन्यस्तम्। तत्र च विषय इत्यनेन अधिकरणस्यापवादोऽमवधि रिति ज्ञापितम्।

**अमृता०**—६६. अपादान इति। अपायशब्दं विवृणोति—अपायो विश्लेष इति। स चापायः संयोगप्रतियोगिकत्वाद् द्विनिष्ठः, तेन पूर्वदेशसंयोग ध्वंसः अपाय इत्यवसीयते। मथुराया आगत उद्धव इत्यवागमन रूपविश्लेषक्रियया सह कर्त्तुरुद्धवस्य हि साक्षात्तया सम्बन्धविशेषः अधिगम्यते। यतो विश्लेषस्य जनकीभूता या स्पन्दनाद्यात्मिका क्रिया सा खलु कर्त्रैव साध्या, तस्या, तस्य च कर्त्तुः पूर्वस्थितिक्रियाया विषयत्वेन कर्त्तुराधाररूपा, इदानीं विश्लेषक्रियोपकारकत्वादवधिर्मथुरा। तत्र च क्रिया सम्बन्धविशेषित्वंगौणतयास्त्येव, तदभावे विश्लेषासिद्धेः। ततश्चावधिभूता मथुरा अपादानम्।

एवञ्चापादानस्य निष्कृष्ट लक्षणम्—विभागजनकीभूतक्रियानाश्रयत्वे सति विभागाश्रयत्वमिति। परकीयक्रिया जन्य तद्धात्वर्थतानवच्छेदक विभागाश्रयत्वमपादानत्वमिति नैयायिकाः। तत्र च परकोय शब्दः स्वेतर परः, कर्त्तृपर इति यावत्। उक्तञ्च प्राचीनैः—अपाये यदुदासीनं चलं वा यदि वाचलम्। ध्रुवमेवातदावेशात् तदपादान मिष्यते। इति। अस्यार्थः—ध्रुव शब्दस्य यो निश्चलत्वरूपोऽर्थः तं खण्डयति—चलंवा यदि वाचलमित्यनेन। अथ ध्रुवस्यौदासीन्यं कुत स्तत्राह—अतदावेशादिति। तस्मिन् ध्रुवे तस्याः अपायसेतुभूत स्पन्दनात्मकक्रियायाः अप्रवेशादित्यर्थः। अथ चोदासीनस्य क्रियामित्तत्वाभावात् कथं कारकत्वम्? सत्यम्, कर्त्तृकर्मणोराधारतया ध्रुवस्यावस्थानमेव क्रियोपकारकत्वमिति।

ननु मथुरातो नन्दीश्वराख्यव्रजागमने गोवर्द्धनादिबहु स्थानानि हि कर्त्तुर्गन्तव्यत्वेन विषयाः सन्तीति तेषामिह कथं नावधित्वमिति पूर्वपव निराकरोति—आदि मर्यादावधिरिति। आदि श्चरमसीमा हि अवधिरिष्यते, न त्ववरसीमा। तच्चापादानं त्रिविधम्। यथोक्तम्—निर्दिष्टविषयं किञ्चिदुपात्तविषयन्तथा। अपेक्षितक्रियञ्चेति त्रिधापादानमिष्यते। इति।

---

चत्वार्युदाहरणानि दर्शितानि। धाना इति। धाना भ्रष्टयवेस्त्रिषु इत्यमरः। हिंसायाः प्राणि धर्मत्वात् नात्र हिंसा॥ ६५॥

**बाल०**—व्यय। व्यवहारेऽर्थे व्यवहृञ पण दिवां प्रयोगे कर्म वा स्यात्। यद्यपि व्यवहार इति सामान्येनोक्तं तथापि विशेषोज्ञेय इत्याह अत्रेति। द्यूतेति द्यूतविषयकपणरूपव्यवहार इत्यर्थः। क्रयेति। क्रय-विक्रय-स्वरूपव्यवहारे च इत्यर्थः। मन्यन्त इति

## ६७. प्रभवे तत् स्थानम् ।

हिमवतो गङ्गा प्रभवति ।

---

तत्र निर्दिष्टो निश्चलो विषयो यत्र तत् प्रथमम्, यथा मथुराया आगतः, वृक्षात् पतति फलमित्यादि । किञ्चिदांशिकं यथा स्यात्तथा उपात्तः, प्रयुक्तो विषयो यत्र तद् द्वितीयम्, यथा द्रवतो रथात् पतितो रुक्मी, धावतोऽश्वात् पतितः शतधन्वा इत्यादि । अत्र विषयस्य रथस्य द्रवणावस्था हि पतनक्रियायामुपयुज्यते नत्वचलावस्थापीति । अपेक्षिता क्रिया अपर क्रिया यत्र तत् तृतीयम्, यथा कृष्णचानूरौ परस्परस्मादपसर्पतः, अपसर्पतो रामादपसर्पति मुष्टिक इत्यादि । अत्र कृष्ण रामात्मकावधि श्चानूर मुष्टिक-योरपसर्पणक्रियामपेक्षते, तया च चानूरमुष्टिकात्मकावधिः कृष्णरामयोरपसर्पण क्रियाम-पेक्षत इत्यन्योऽन्यापेक्षिक्रियत्वात् परस्परशब्दस्य रामशब्दस्य चापादानत्वम् । द्वितोये तु रुक्मिणो रथस्य नपतनमिति भेदः ।

**अमृता०**—६७. प्रभव इति । अपाये अवधेरुदाहरणानि दर्शयित्वा अधुना तल्लक्षणस्थ मादिपदं प्रपञ्चयति । प्रभवे साध्ये सति प्रभव स्थानमवधिभूतमपादान-कारकं स्यात् ।

---

पूर्वाचार्या इति शेषः त्रयाणामपीत्यत्र त्रयाणामिति वा पाठः । तस्यां प्रक्रियाकौमुद्यां । व्यवहरत इति व्यवपूर्वहृञहरणे भ्वादिः । ञित्वादात्मपदं । पणत इति पण व्यवहारे स्तुतौ च भ्वादिरात्मपदी मूर्द्धण्यन्तादयो न व्यवहारे इति निषेधात् । गुपू धुप विच्छि पनि पणिभ्यः आय इत्यनेन न आय । तस्य धान्यस्य । ग्नहं द्यूतपणं । तत् धान्यं विनिमयत इति विनिमयस्य परिवर्त्तरूपत्वेन क्रयविक्रयात्मकत्वमिति । दीव्यतीति दिवु क्रीडादिषु तस्या वंश्याः । एवं प्रदीव्यतीति इत्यनेन द्यूतग्लहे सोपेन्द्रदिवोऽपि कर्म वा भवतीति सूचितं । दिवः सोपेन्द्रत्वे षष्ठी वा भवति अनुपेन्द्रत्वेतु षष्ठ्येवेति तु क्रम-दीश्वरः । अन्यत्रेति द्यूतग्लहादेरन्यत्रेत्यर्थः । पनायतीति कश्चिदित्यत्रापि चक्रमिति शेषः । चक्रं स्तौतीत्यर्थः व्यवहृञ पणनार्थत्वेतु चक्रस्य कर्मत्वं न सम्यक् सङ्गच्छते तस्मादपण-नार्थत्वे पुष्पाणि व्यवहरतीति प्रत्युदाहार्यं । हृञः ञित्वेनोभयपदित्वादत्र परपदमिति । पणधातोरात्मनेपदित्वात् पणतीत्युक्त्वा आशङ्कमानः समादधाति अत्रेति तस्माद्वर्द्धमाना-नुसारेणैव पणतीत्युक्तमिति भावः । ननु पणतीति कथं भवतु व्यवहारे निषेधात् स्तुत्यर्थो आयस्यापरिहार्यत्वात्तदेतच्चिन्त्यं । पणायतीत्यत्र लिपिकरप्रमादात् पणतीति जातमिति न वाच्यं अन्यधातुत्वात् परपदमित्यनेनायान्तस्य परपदित्वेन अत्र परपदमेवेति वर्द्धमान इत्यस्य वैयर्थ्यात् तस्मात् मुर्द्धण्यान्तादायो न व्यवहारे इत्यस्यैवात्र व्यभिचारो विवक्षणीय इति तस्मात् व्यवहाराभावेऽप्यत्र नाय इति ॥ ६६ ॥

**बाल०**–क्तस्ये । इन् अन्तो यस्य तादृशस्य क्तस्य योगे कर्मणि सप्तमी स्यात् । अधीतीति अधीतमनेनेत्यर्थे इष्टादिभ्यश्चेत्यनेन इणिः अधीतानुकूलव्यापारवतस्तवाधीतस्य को विषय इत्युक्ते कुत्राधीति भवान् इत्यस्य प्रत्युत्तरं श्रीभागवत इत्यादि । नक्तस्येनन्तत्वमिति

## ६८. जनने प्रकृतिः ।

**विष्णोर्जगज्जायते । प्रभवः प्रथमदर्शनम्, जननमुत्पत्तिरिति भेदः ।**

---

**अमृता०**—६८. जनन इति । जनने उत्पत्तौ प्रकृति र्जनन हेतुरवधिभूतमपादानं स्यात् । प्रकृतिः कारणम्, तच्च समवायि असमवायि निमित्तभेदेन त्रिविधम् । यत् समवेतं कार्यमुत्पद्यते तत् समवायिकारणं, द्रव्य मात्र वृत्तिकम् । यथा मृत्तिका घटस्य, तन्तवः पटस्येत्यादि । समवायि कारणे प्रत्यासन्नं कार्योत्पादनक्षमं, गुणकर्मवृत्तिकमसवायि कारणम्, यथा कपालद्वयसंयोगो घटस्य, तन्तुरूपं पटरूपस्येत्यादि । एतद्भिन्नं कारणं निमित्तम्, यथा चक्र दण्डादि घटस्य, तुरी वेमादिकं पटस्येत्यादि । तत्र समवायि कारणमेव क्वचिदुपादानकारणतयोच्यते, इतरे तु तत् सहकारिकरणतयेति । तदेतत् त्रिविधं हि कारणं जगदुत्पत्तौ विष्णुरेव, जिज्ञासा चेत् श्रीभगवत् सन्दर्भ-गोविन्दभाष्यादयः समनुसन्धेयाः ।

ननु जनन प्रभवानेकार्थवाचिनौ, तर्हि किमिह पृथग् लक्षणेनेति चेत्तत स्तयोर्भेदंदर्शयति—प्रभव इत्यादिना । अन्यत्र सिद्धस्य प्रथममनुभवः प्रभवः, अभूतपूर्वप्रादुर्भावो जननमिति फलितभेदः ।

ननु च किमर्थमिह प्रकृति ग्रहणम्, अवधिरित्यनुवर्त्तत एव, जनने साध्ये तदवधिरेव कारणं स्यादिति केत् ? श्रूयताम्—पुत्रात् प्रमोदो जायत मातुरित्यत्रापि यथा स्यात् तदर्थम् । प्रकृति ग्रहणं हेतुमात्रपरमिति न्यासः, उपादानमात्रपरमिति तु भाष्यकैयटौ ।

---

पूर्वशब्देन व्यवधानादिति शेषः । अत्रापीति अत्रापि अधिकरणविवक्षायां सप्तमी स्यादित्यर्थः । तस्मादन्येषां मते कृतपूर्वी सृष्टावित्यपि भवतीति ॥ ६७ ॥

**बाल०**—अधिकरणविवक्षायामित्यनेनोट्टङ्कितमधिकरणलक्षणमाह कर्त्रिति ।

कर्त्ता च कर्म च कर्त्तृकर्मणी तयोः कर्त्तृकर्मणोराधारोऽधिकरणं स्यादित्यापातत व्याख्येति । कर्त्तृकर्मभ्यामाध्रियते आश्रियते स्थीयते यत्र इत्यर्थे अधिकरणवाचि घण्प्रत्यय सिद्ध आधारः तस्मिन् सिद्धे कर्त्तृकर्मणोः षष्ठी कृद्योगे इत्यनेन कर्त्तृकर्मणोरित्यत्र पश्चात् षष्ठीति । वृत्तिरूपत्वेन आधारलक्षणमाह । क्रिययेति । क्रियया सह वा क्रियाद्वारा वा कर्त्तृकर्मणी द्वे यदाश्रित्य यदवलम्बय वर्त्तत यद्विषयीकृत्य यद्विषयं कृत्वा वर्त्तते स स आधारस्तत्तद्रूपं कारकं अधिकरणसंज्ञं स्यात् । अधिकरणलक्षणे कर्त्तृकर्मणोरित्युक्तमत एव आधारलक्षणे कर्त्तृकर्मणी एव कर्त्तृत्वेन-विवक्षिते तस्मात् कर्त्तृकर्मणी यदाश्रित्येत्यादिकं दृष्ट्वा कर्त्तृकर्मणोरित्यस्य सम्बन्ध षष्ठीति वैयर्थ्यं नाशङ्कणीयं । तस्मात् यः कर्त्तृकर्मणोराश्रयः यश्च तयोर्विषयः स आधार आधार एवाधिकरणमिति । क्रियया सह वा क्रियाद्वारा वा इत्यनेनाधिकरणस्य क्रिया सम्बन्धविशेषित्वं प्रतिपादितं । अन्यथा कारकत्वं न स्यात् । तथाहि । कर्त्तृकर्मव्यवहितामसाक्षाद्धारयत् क्रियां । उपकुर्वत् क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतमिति । तत्र आश्रयलक्षणमाह यदालम्ब्येति यदवलम्बनं कृत्वा वर्त्तते इति क्रियया सह क्रियाद्वारा वा कर्त्तृकर्मणी इति शेषः । विषयलक्षणमाह

**६९. अन्तर्द्धौ शङ्कास्पदम् ।**

अवैष्णवादन्तर्द्धत्ते । एते कर्त्तुः पूर्वस्याः स्थिति क्रियाया विषयाः ।

**७०. अथासहनार्थ-पराजेः सोढुमशक्यः ।**

कृष्णात् पराजयते कंसः । तंसोढु नशक्नोतीत्यर्थः । नेह—कंसं पराजयते कृष्णः, अभिभवतीत्यर्थः ।

---

**अमृता०**—६९. अन्तर्द्धाविति । अन्तः पूर्व दधातेः किः अन्तर्द्धि व्यवधानम्, तस्मिन् साध्ये यदन्तर्द्धिकर्त्तुः शङ्काया आस्पदं तदवधिभूतमपादानं स्यात् । अवैष्णवादन्तर्द्धत्ते निलीयत इत्यर्थः । एत इति—उक्तसूत्रचतुष्टये उदाहरणेषु सर्वेऽवधय इत्यर्थः । एतेन मथुरायां तिष्ठन् तत आगत इत्याद्यर्था ज्ञेयाः । ननु प्रोक्तोदाहरणे वैष्णवस्यावैष्णवेऽवस्थानं कथमुपपद्यत इति चेत्तदुच्यते–"अयमवैष्णवो यदि मां पश्येत तदा वैष्णवनिन्दां श्रावयेत्" इत्यवं चिन्तयन् वैष्णवो बुद्धया तंप्राप्य तत्र च तिष्ठन् ततो निलीयत इति ।

**अमृता०**—७०. कर्त्तुः स्थिति क्रियाया विषयानाहृत्य तस्य ज्ञानस्य विषयानाहर्त्तु-मुपक्रमते—अथेति । असहनमर्थो यस्य तादृशपराजेः प्रयोगेसोढुमशक्योऽवधिभूतंपादानं स्यात् । अशक्य इति कर्मणियत्, अवधेर्विशेषणत्वात् पुंस्त्वनिर्देशः । पराजयत इति—"विपराभ्यां जे" रित्यनेनात्मपदं वक्ष्यते । व्यावृत्ति दर्शयति—नेहेति । अत्र पराभवार्थ-त्वान्नावधिरिति भावः ।

---

तत्र स्थित्वेति । तत्र आश्रये । उदाहरणं दर्शयति यथेति । दर्शनादिक्रियया सह इन्द्रियाणां चक्षुरादीनां । रूपादिकमित्यादिपदेन रूप-रस-गन्ध-स्पर्शशब्दानां ग्रहणं । सूक्ष्मत्वेनापरि-तोषात् उदाहरणान्तरं दर्शयति यथावेति । ततोऽपि स्पष्टं दर्शयति छात्रस्येति छात्रस्य पाठकस्य ॥ ६८ ॥

**बाल०**—अधि । अधिकरणे सप्तमी विष्णुभक्तिः स्यात् ॥ ६९ ॥

**बाल०**—प्रसि । प्रसितोत्सूकाभ्यां शब्दाभ्यां कालवाचि नक्षत्रेण च योगे अधि-करणे सप्तमी तृतीया च भवति । कालवाचिनक्षत्रेण योगे अधिकरणे सप्तमी तृतीया च भवति । कालवाचिनक्षत्रेण अधिकरणे सप्तमीतृतीये भवन्त्यौ कालवाचिनक्षत्रादेव भवत इति लभ्यते शब्दान्तराभावादिति ज्ञेयं । आसने आस्त इति कर्त्ता कृष्णः उपवेशनक्रियया सह आसनमाश्रित्य वर्त्तते आसनं उपवेशनस्य कृष्णस्य च आश्रयः । ललाटे तिलकं करोतीति कर्म तिलकं कृतिक्रियया सह ललाटमाश्रित्य वर्त्तते अतो ललाटं कृतिक्रिया-यास्तिलकस्य च आश्रयः । कृष्णे मोदते इति कर्त्ता लोकः मोदक्रियाद्वारा कृष्णमाश्रित्य वर्त्तते अतः कृष्णो मोदक्रियाद्वारा लोकस्याश्रयः । कृष्णे सुखं लभत इति कर्म सुखं लाभक्रियाद्वारा कृष्णमाश्रित्य वर्त्तते अतः कृष्णलाभक्रियाद्वारा सुखस्याश्रयः । मोदत इति मुद हर्षे भ्वादिरात्मपदी । लभत इति डु लभष प्राप्तौ । पूर्ववत् ते द्वे क्रिये ।

विषये । कृष्णे प्रीणातीति विग्रहे स्थित्वा कर्त्ता लोकः प्रीतिक्रियया सह कृष्णं

विषयीकृत्य वर्त्तते अतः कृष्णः प्रीतिक्रियायाः लोकस्य च विषयः। प्रीणातीति प्रीञ् तर्पणे क्र्यादिः। कृष्णे प्रीतिं करोतीति प्रीतिः कर्म कृतिक्रियया सह कृष्णं विषयीकृत्य वर्त्तते अतः कृष्णः कृतिक्रियायाः प्रीतेश्च विषयः। तं कृष्णं। ननु व्रजसुखे निपुणः कृष्ण इत्यत्र क्रियासम्बन्धाभावात् कथं कारकत्वमिति चेत्तत्राह व्रजसुख इति गम्येति। गम्या या सत्ताक्रिया तस्याः सम्बन्धेनेति।

उक्तलक्षणस्याश्रयस्य त्रैविध्यमाह आश्रय इति। ऊपश्लेषिक उपश्लेष भव इत्यर्थे माधव ठः। ठ इकः टणिन्माधवः। एवं सामीपिक इति। व्याप्त इति कर्मणि क्तः। ऊपश्लेषिकस्य लक्षणं ब्रुवन् तत्रोदाहरणं दर्शयति उपश्लेष इत्यादिना आस्त इत्यन्तेन। उपश्लिष्यतेऽसौ इत्युपश्लेषः कर्मणि घञ्। तत्रेति तत्र उपश्लेषे भव ऊपश्लेषिक इत्यर्थः। आसने आस्त इति आसनस्यैकदेशः कृष्णस्याश्रय इति।

सामीपिके उदाहरणं दर्शयति सामीपिक इति। यमुनायां घोष इत्यत्रापि गम्यसत्तायाः सम्बन्धेन कारकत्वे यमुनासमीपे घोषस्याश्रय इति। अस्माकं मते आश्रय-सामीपिकत्वेनैव यमुनायां घोष इति सिद्धेऽप्येकया वृत्त्या यमुनाशब्देन तत्समीप उच्यते इत्यपेक्षायामत्र परमतं दर्शयति मुख्ययेत्यादिना इत्यन्य इत्यन्तेन। मुख्यो लाक्षणिको गौणः शब्दः स्यादौपचारिक इत्यालङ्कारिकाः। मुख्यार्थोऽभिधया बोध्यो लक्ष्यो लक्षणया मतः। व्यङ्ग्यो व्यञ्जनया ज्ञेयस्तिस्र. शब्दस्य शक्तयः। ननु कास्ताः शक्तय इत्यपेक्षाया-मभिधादयोऽत्र वक्तव्याः। यस्योच्चारणमात्रेण सहजं यत् प्रतीयते तत्र तस्य तु या वृत्तिः साभिधा, लक्षणा पुनः। अभिधा—अस्माच्छब्दादयमर्थो बोद्धव्य इति ईश्वरेच्छा शक्तिः। मुख्यार्थ बाधे शक्यस्य सम्बन्धे यान्यधीर्भवेत्। रूढेः प्रयोजनाद्वापि भिद्यत अथ सा द्विधा। इति कौस्तुभकारः। मुख्यार्थबाधे तद्योगे रूढतोऽथ प्रयोजनात्। अन्यार्थो लक्ष्यते यन्तु लक्षणारोपिता क्रिया। विरतास्वभिधाद्यासु ययार्थो बुध्यते परो। व्यञ्जना सातु विज्ञेया शब्दस्यार्थादिकस्य चेति काव्यप्रकाशकार इत्याद्युक्तरीत्या मुख्यया वृत्त्या येन यमुना-शब्देन नदीविशेष उच्यते। लक्षणया वृत्त्या तेन यमुनाशब्देन तत्सम्बन्धि तटं उच्यते। ननु भवतु लक्षणायाः कीदृशी प्रवृत्तिरिति चेत् तदेवं वाच्यं। घोष आभीरपल्ली स्यात् पक्कणः शवरालयः। कुठीग्रामकयोः पल्ली। इत्युक्तानुसारेण जलमय्यां यमुनायां घोषस्य आभीरग्रामस्य वासो न सम्भवतीति लक्षणाया वृत्तेः स्वीकारः क्रियत इति भावः। अत्र दृष्टान्तो यथेति। मुख्यया वृत्त्या येन पशुविशेष उच्यते गौण्या वृत्त्या तेन सिंहशब्देनैव पुरुषः सिंहपुरुषः प्रशस्तपुरुष उच्यते इत्यन्ये तस्मान्मुख्यवृत्त्यभावांशेऽयं दृष्टान्तः।

व्याप्ते उदाहरणं दर्शयति व्याप्त इति। विष्णुः सर्वत्रास्तीति सर्वं वाप्यास्तीत्यर्थः। विष्णुः कर्त्ता सर्वमाश्रित्य वर्त्तते अतः सर्वं विष्णोराश्रयः तत् सर्वं विष्णुना व्याप्तं अतः सर्वस्य व्याप्तत्वञ्च। सर्वशब्दो विश्ववाची। एवं विषयोऽपीति। विषयोऽप्यौपश्लेषिका-दिभेदेन त्रिविध इत्यर्थः। अत्र क्रमेणोदाहरणत्रयमाह प्रसितेत्यादिना। प्रसितमिति। सिञ् बन्धने क्तः। कृष्णे प्रसितं मन इत्यत्रौपश्लेषिको विषयः कृष्णस्य वदननेत्रादीनां मध्ये एकस्मिन्नेकस्मिन्नवयवे मनसो विषयतया बन्धनं नतु युगपत् सर्वावयवे इति।

## ७१. प्रमादे जुगुप्सायाञ्च तद्विषयः ।

प्रमादोऽनवधानता; गर्हायाश्चित्तनिवृत्ति र्जुगुप्सा । हरिभक्तेः प्रमाद्यति । अवैष्णवमार्गाज्जुगुप्सते । एते कर्त्तुर्ज्ञानस्य ।

---

**अमृता०**—७१. प्रमाद इति । प्रमाद-जुगुप्सयोः साध्ययोः तयो विषयः अवधिः स्यात् । तयो र्लक्षणे निरूपयति—प्रमाद इति । गर्हा कुत्सा तस्याः सकाशात् चित्त-निवर्त्तनं जुगुप्सेत्यर्थः । प्रमाद्यतीति—मदी हर्षे दिवादिः, शमादित्वात् त्रिविक्रमः । कनिष्ठभक्तो हरिभक्तौ असावधानो भवति, साधनभक्तौ क्वचिदननुसन्धानादपराधं करोतीत्याशयः । जुगुप्सत इति—गुप गोपन कुत्सनयो धातो र्निन्दायां सन् । अवैष्णवमार्गात् चित्तं निवर्त्तयतीत्यर्थः । एवं सन्मार्गाद् भ्रश्यतीत्यादि च । एत इति—सूत्रद्वयोक्तदृष्टान्त त्रये अवधयः कर्त्तु ज्ञानस्य विषयाः । तेन कृष्णं जानन् ततः पराजयत इत्येवमर्थो वेद्यः ।

---

एवमिति कृष्णे कृष्णेन वा उत्सुकं मन इति । इष्टार्थोद्युक्त उत्सुक इत्यमरः । किन्तु इष्टार्थोद्युक्तार्थत्वेतु अत्र अर्थसुसङ्गति र्न भवति तस्मात् उत्सुकं सोत्कण्ठमिति । कालाक्षमत्वमौत्सुक्यमिति श्रीभक्तिरसामृतसिन्धुः । कालाक्षमत्वं कालयापनाय असमर्थत्वमिति अत्र सामीपिको विषयः कालयापनासामर्थ्यत्वेन कृष्णे उत्सुकं मन इत्यत्र कृष्णशब्देन कृष्णसमीपे निवासदर्शनाद्यर्थं मनसः सौत्कण्ठ्यं भवतीत्यर्थः ।

रोहिण्यामिति । रोहिणीयुक्तः काल इत्यर्थे रोहिणीशब्दात् केशव णः तस्य स्मरहरः रोहिणी तस्यां रोहिणीनक्षणयुक्तकाल इत्यर्थः । अभिपूर्वसिच धातुरभिषेकार्थः । अत्राभिव्याप्तो विषयो यावत् रोहिणीयुक्तकालस्तावत् कृष्णं सिञ्चे दित्यर्थः । रोहिण्यामिति रोहिणीनक्षत्र इत्यर्थः । मया यदुक्तं प्रकारान्तरेण प्राचीनैरेतदेवोच्यते तद्यथा—

ऊपश्लेषिकवैषयिकावभिव्यापक एव च । आधारस्त्रिविधो ज्ञेयः कटाकाश-तिलादिषु । ऊपश्लेषिक यथा । आधाराधेययोरन्यत्र सिद्धयो संयोग उपश्लेषस्तत्र भव ऊपश्लेषिकः । देवदत्तः कटे आस्ते ।

वैषयिके यथा । विषयो ह्यनन्यत्र भावो न विद्यतेऽन्यत्र भावः सत्ता यस्मात् स तत्र भवः वैषयिकः । दिवि देवाः ।

अभिव्यापके यथा । आधाराधेययोस्तुल्यजन्मापृथग्देशभागानभिव्याप्य तिष्ठतीत्य-भिव्यापकः । अभिव्याप्यते इति कर्मणि णकप्रत्ययान्तोऽभिव्यापकः । तिलेषु तैलं । एतत् सर्वैरुक्तं किन्तु तिलादीनां कल्कादौ तैलस्य सम्भवान्न सम्यङ् मनोरमं । अस्माकं मते विष्णुः सर्वत्रास्तीति सर्वसम्मतमिति ॥ ७० ॥

**बाल०**—अधि । अधिपूर्वाणां शीङ्स्थासां प्रयोगे आधारः कर्म स्यात् । अभिनि-पूर्वविशः प्रयोगे आधारः कर्म वा स्यात् । गोवर्द्धनमिति हरिरिति च सर्वत्र योज्यं । अधिशेत इति शीङ स्वप्ने अदादिः । अधितिष्ठतीति ष्ठा गति निवृत्तौ । अध्यास्त इति आस उपवेशने अदादिरात्मपदी । अभिनिविशत इति कृष्णभक्त इति शेषः । विश प्रवेशने तुदादिः । अत्रेति निपूर्वत्वे इत्यर्थः । आतमपदं वक्ष्यत इति नेर्विश इत्यनेनेति शेषः ।

## ७२. अथ विरामे त्याज्यः ।

अवैष्णवमार्गाद् विरमति ।

## ७३. भये हेतुः ।

कृष्णाद्विभेति कंसः । एतौ कर्त्तु र्ज्ञानक्रिययोः ।

## ७४. अथवारणे रक्षितुमिष्टः ।

---

**अमृता०**—७२. अधुना कर्त्तु र्युगपद् ज्ञानक्रिययो विषयौ दर्शयन् पृथगारभते—अथेति । विराम उपरतिः, तस्मिन्साध्ये त्यागस्य विषयः अवधिः स्यात् । विरमतीति—"व्याङ्परिभ्यो रम" इत्यनेन रमतेः परपदम् । अवैष्णवमार्गं त्यजतीत्यर्थः ।

**अमृता०**—७३. भय इति । भये साध्ये तस्य हेतुरवधिभूतमपादानं स्यात् । विभेतीति—ञिभीभये ह्लादिः । एताविति—अवैष्णवमार्ग-कृष्णौ अवधी कर्त्तुर्ज्ञानक्रिययो र्विषयौ । तेन अवैष्णवमार्गजानन् ततो विरमति; कृष्णं जानन् बुद्ध्या तं प्राप्नुवन् ततो विभेतीत्यर्थः ।

**अमृता०**—७४. कर्मणः क्रियाविषयान् संग्रहीतुंभिन्नमुपक्रमते—अथेति । वारणः प्रवृत्ति विघातः, तस्मिन् साध्ये रक्षितुमिष्टः अवधिरूपमपादानं स्यात् । वारयतीति—वृञ्

---

अधिपूर्वशीङादीनां प्रयोगे यो नाधारः स कर्म न स्यात् । तेन वृन्दावने गोष्ठमध्यास्ते इत्यत्र गोष्ठावस्थानक्रियाया वृन्दावनमाधारः न पुनरध्यासनक्रियायास्तस्यान्तु गोष्ठमेवाधार इति ।

शीङासोः साहचर्यात् स्थाधातोरप्यकर्मकस्य ग्रहणं तेन मानसगङ्गायां नावमधितिष्ठतीत्यत्र मानसगङ्गाया न कर्मसंज्ञा नावस्तु क्रियया साध्यत्वात् कर्मत्वमिति नावमारोहति इत्यर्थः । क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशते इति न्यायात् । अस्मिन्नेव भाष्यकारवाक्ये यस्मिन् यस्मिन्नभिनिविशते इति प्रयोगाच्च व्यभिचारः क्वचिद्भवति । तेन वृन्दावनेऽस्याधिष्ठानं । धर्मेऽभिनिवेशः । गोवर्द्धनेऽध्यासनमित्यादौ कर्मत्वमेषां न दृश्यते च ॥ ७१ ॥

**बाल०**—उपा । उपादिभ्य उत्तरस्य वसः प्रयोगे आधारः कर्म स्यात् । उपवसतीति वस निवासे ॥ ७२ ॥

**बाल०**—अभोजनमर्थो यस्य तस्य वसः प्रयोगे आधारः कर्म न स्यात् । उपवसन्तीति तैर्थिका इति शेषः । लङ्घनं कुर्वन्तीत्यर्थः । मण्डनं चोपवासश्च सर्वतीर्थेष्वयं विधिरिति शास्त्रशासनात् । ननु सूत्रे वस इत्येवोक्त तर्हि वस आच्छादन इत्यस्यादादेरपि ग्रहणं कथं न भवतीति चेत्तत्राह लुग्विकरणेति । अदादेः शपो महाहर इत्यनेन शपो लुग्विधानाददादिर्लुग्विकरणः अतो भ्वादेरेव ग्रहणं । अत्र यद्यद्ग्रन्थकारेणोदाहृतं तत्तदन्येनाप्युच्यते । श्रीशोऽधिशेतेऽहिमधिष्ठितोऽद्रिमध्यास्य घोषं मथुरामनुष्य । यो द्वारकामध्युषितो विकुण्ठमुपावसच्चाबसतात् स हृन्नः ॥ ७३ ॥

वैष्णवपाकादवैष्णवं वारयति नदीतीरे। रक्षितुमनिष्टत्वात् तत्तीरन्तु नावधिः। रक्षे र्वारणार्थत्वे तु ततस्तं रक्षतीति स्यात्।

## ७५. प्रतिग्रहे दाता।

वैष्णवादन्नं गृह्णाति।

---

आवरणे चुरादिः। धातूनामनेकार्थत्वादिह प्रवृत्ति विघातार्थ इष्टः। वैष्णवपाकादवैष्णवं बारयतीति—वैष्णवपाकसंयोगात् पूर्वं तत्रावैष्णवप्रवृत्तिं निराकरोतीत्यर्थः। नच संयोगात् पूर्वमपायः त्वसिद्ध इति वाच्यम्, बुद्ध्या हि पाकावैष्णवयोः संयोगसम्भावयन् ततस्तं निवारयतीति गौणावधिरयं बुद्धियोगादिति। रक्षितुमिष्ट इत्यस्य व्यावृत्तिप्रदर्शनार्थं नदी तीरे इत्युपन्यस्य तामुपपादयति—रक्षितुमनिष्टत्वादिति। अतो नात्र पञ्चमी किन्तु आधारविवक्षया सप्तमी। अथ—"वारणार्थानामीप्सितः", इति प्राचीनानां सूत्रे अर्थशब्द ग्रहणदृष्ट्या तदप्यरीकरोति—रक्षेरिति। रक्षधातोरपिवारणार्थोऽस्ति, तेनस्तत्साध्येऽपि यइष्टः सोऽवधिर्भवतीत्यर्थः। तेन वैष्णवपाकादवैष्णवं रक्षतीत्यपि भवेदिति भावः।

**अमृता०**—७५. प्रतिग्रहइति। प्रतिग्रहः स्वीकार आदानमिति यावत्, तस्मिन् साध्ये दाता अवधिर्भवति। वैष्णवादिति—अत्र वैष्णवोऽन्नदाता, भक्तो गृह्णाति।

---

**बाल०**—प्रभूरयमिति प्रभूनामा अधिकारोऽयमित्यर्थः। अवधिभूतमवधिरूपं। अवधिलक्षणमाह कर्त्तुरिति॥ ७४॥

**बाल०**—अपादाने पञ्चमी विष्णुभक्तिः स्यात्। अपायलक्षणमाह अपायो विश्लेष इति। अपायनमपायः अपपूर्वादिन गतावित्यस्मात् भावे घण् अतो विश्लेषवाची। विश्लेष्यागः वियोग इति यावत् सच मथुराया आगत इत्यादावागमनादिक्रियाकर्त्तुः साध्य एव अतएवोक्तं अपायादिषु क्रियासु साध्यास्विति। ननु यदि कर्त्तुः कर्मणो वा पूर्वयोः क्रियाज्ञानयोर्विषय एवावधिस्तर्हि मथुराया आगत इत्यादौ मध्यवर्त्तिनो देशादेः कथं नावधित्वमिति चेत्तत्राह तत्रादिमर्यादेति। अत्र विश्लेषे आदिमर्यादा आदिसीमा। कृष्णो मथुराया आगत इति आङ्पूर्व गम क्तः हरिवेण्यन्तेत्यादिना मरामहरः। भूतागमनानुकूल-व्यापारयतः कृष्णस्य कर्त्तुरागमनेनैव तदाद्यफलापत्यागक्रियायाः पूर्वमपायः साध्यः तस्मिन् सति तस्यैव कर्त्तुः पूर्वस्याः स्थितिक्रियाया विषयो मथुरा अतः सैवावधिः अतएव सैवापादानकारकं। तत्र कर्त्तुरागमनस्थित्योर्मध्ये साध्योऽपायः, अन्यथा गमना-नुपपत्तिः। मथुरापादानक-भूतागमनानुकूलव्यापारवान् कृष्णः। रथादवतीर्ण इति अवपूर्व तॄ प्लवनतरणयोः क्तः इरामस्येर् कंसारावित्यनेनेर् धातोरव इति त्रिविक्रमः। रदाभ्यां विष्णुनिष्ठा तस्य पूर्वदस्य च नोदां विनेत्यनेन तस्य नः णत्वं। अवरूढ इत्यर्थः। भूता-वतरणानुकूलव्यपारवतः कृष्णस्य कर्त्तुरवतरणक्रियैव तदाद्यकलापत्यागक्रियाया अपारः साध्यस्तस्मिन् सति तस्यैव कर्त्तुः पूर्वस्याः स्थितिक्रियाया विषयो रथः अतः सोऽवधिः। अतएव स एवापादानकारकं। अत्र कर्त्तुः स्थित्यवतरणक्रिययोर्मध्ये साध्योऽपायः। अन्यथा

७६. त्राणे भयहेतुः।

संसारात् वैष्णवंत्रायते । त्राणार्थंत्वे वारयति च । एते कर्मणः क्रियायाः ।

---

अमृता०—७६. त्राणइति। त्राणं रक्षणम्, तस्मिन् साध्ये भयस्य हेतुरवधिः स्यात्। संसारादिति—संसारो भयस्य हेतुः, मायया जीवानां स्वरूपावरणेन तेषां त्रिताप जनकत्वात्। त्रायत इति त्रैङ् पालने भ्वादिः। कृष्णकृपा साधुकृपा वात्र कर्त्री। वृञो यदि त्राणार्थः प्रतीयते तदा—संसारात् वैष्णवं वारयतीति च भवेदित्यर्थः। एत इति—सूत्रत्रयान्तर्गतनिदर्शनेषु दर्शिता अवधयः कर्मणः क्रियाया विषय इत्यर्थः। ततश्च वैष्णव पाकादवैष्णवं वारयतीत्यादौ कर्मणोऽवैष्णवस्य या पाकसमीपे गमनस्पर्शादिरूपा क्रिया तस्या विषयो वैष्णवपाकः। तेन पाक समीपे गच्छन्तं तिष्ठतं वा अवैष्णवं ततो वारयतीति फलितार्थः। अत्र गृह्णातीति वैष्णवस्थितमन्नम्, वैष्णवं त्रायत इति संसारे तिष्ठन्तंवैष्णव-मित्याद्यथा उन्नेयाः।

---

रथावतरणक्रियानुपपत्तिः। रथापादानक-भूतावतरणानुकूलव्यापारवान् कृष्णः। शिशुपालो द्रवतो रथात् पतित इति पतलृ गतौ क्तः इट्। भूतपतनानुकूलव्यापारवतः शिशुपालस्य कर्त्तुः पतनक्रियैव तदाद्यकलापत्यागक्रियाया अपायः साध्यः तस्मिन् सति तस्यैव कर्त्तुः पूर्वस्याः स्थितिक्रियाया विषयः धावमानरथः अतः स एवावधिः। अतएव स एवापादानकारकं। अत्र कर्त्तुः स्थितिपतनक्रिययोर्मध्ये साध्योऽपायः। अन्यथा पतनक्रियानुपपत्तिः। धावमानरथापादानकपतनानुकूलव्यापारवान् शिशुपालः। परस्परस्मात् कृष्णचानूरावपसर्पत इत्यत्र परस्परस्मादिति कृष्णनामत्वात् ङसेः स्मात्। कृष्णश्चानूरादपसर्पति चानूरः कृष्णादपसर्पतीत्यर्थः। असर्पत इति सृपलृ गतौ वर्त्तमानापसर्पनानुकूलव्यापारवतोः कृष्णचानूरयोः कर्त्रारपसर्पणक्रियैव तदाद्यकलापत्यागक्रियाया अपारः स्तस्मिन् सति तयोः कर्त्रोः संयोगोपलक्षितयोः पूर्वस्याः स्थितिक्रियायाविषयः परस्परं अतस्तदेवावधिः। अतस्तदेवापादानकारकं। अत्र कर्त्रोः स्थित्युपसर्पणयोर्मध्ये अपायः साध्यः। अन्यथा अपसर्पणक्रियानुपपत्तिः परस्परापादानकापसर्पणक्रियानुकूलव्यापारवन्तौ कृष्णचानूरौ। अत्रापेक्षया एकस्यावधितातो विविक्षित इति। इदानीं प्राचीनमतेन त्रिविधापादानं स्पष्टीक्रियते तत्र पाणिनिसूत्रञ्च दर्श्यते। ध्रुवमपायेऽपादानं अपाये यद्ध्रुवं यन्निश्चलं तदपादानं। अपायो विश्लेषः। पूर्वदेशसंयोगध्वंसपूर्वकोत्तरदेशसंयोगरूपः। विभागजनकौभूतस्पन्दनादिक्रियानाश्रयत्वे सति विभागाश्रयत्वं अवधित्वं। अवधित्वेन यत् स्थिरतरं तदपादानमिति। अनेन न सर्वं निर्वाहितं अतः सूत्रान्तरमाह चलमचलञ्चेति। अपाये यदुदासीनं चलम्वा यदिवाचलं। ध्रुवमेवातदावेशात् तदपादनमिष्यते। निर्दिष्टं विषयं किञ्चिदुपात्तविषयन्तथा। अपेक्षितक्रियञ्चैव-त्रिधापादानमिष्यते। निर्दिष्टं यथा वृक्षात् पर्णं पतति। उपात्तविषयं यथा धातवः अश्वात् पतितः। अपेक्षितक्रियं यथा अपसरतो मेवादपसरति मेषः। इत्यत्र अपसरणक्रियापेक्षया एकस्यावधिभावो विवक्षितः॥ ७५॥

## ७७. अथ शिक्षायां गुरुः ।

**वैष्णवाद् गीतामधीते । अशिक्षायान्त्वनभिधानम्—नटस्य गीतं शृणोति । एष कर्मणो ज्ञानस्येति ।**

---

**अमृता॰**—७७. पुनर्भिन्नमुपक्रम्योपसंहरते—अथेति । शिक्षायां साध्यायां गुरुरवधि भूतमपादानं स्यात् । अत्र शिक्षा च नियमपूर्वक विद्या स्वीकार उच्यते । तदभावे तु न स्यादिति प्रत्युदाहरति—नटस्येति । एवञ्च पाठकस्यानुवर्त्तत इत्यादौ च न । एष इति—एतन्निदर्शनस्थोऽवधिः कर्मणो गीताया ज्ञानस्य विषयः । तेन वैष्णवो गीतां जानाति, तस्माद् भक्तः पठतीत्यर्थः ।

अत्रभाष्यकारस्तु प्रथमसूत्रादुत्तराणि सर्वाण्येव सूत्रानि प्रत्याख्यातवान्, तन्मते सर्वत्रैवापायस्यसिद्धत्वात् । तत्र चैवमुपपत्तिर्दर्शिता । क्वचित् काय कृत संयोगादपायः क्वचिद् वा बुद्धिकृतसंयोगात् । यथा—आदिमः—मथुराया आगत इत्यादिः कायकृत संयोगादपायः । शेषा बुद्धिकृत संयोगात् । अवैष्णवादन्तर्धत्त इति बुद्धया अवैष्णवं प्राप्य ततो निवर्त्तते । कृष्णात् पराजयत इति बुद्धया कृष्णपराक्रमं ज्ञात्वा ततो निवर्त्तत इत्येवं दिशा सर्वत्रापाय उपपादितः । स्वमतेऽपि—"कर्त्तुः कर्मणो वा पूर्वयोः क्रिया ज्ञानयो विषयोऽवधि" रित्युक्त्या तत् सर्वमुपपादितमेव ग्रन्थकृता । तथापि बुद्धिकृतस्य संयोगस्य गौणत्वादिह विलष्टत्वपरिहाराय पाणिन्यादिभिरिव पृथक सूत्राणि ग्रथितानि । प्रथमस्यैव प्रपञ्चमेतत् सर्वमिति प्रभ्वधिकारणे च ज्ञापितमिति दिक् ।

---

**बाल॰—प्रभवे** । अपाये उदाहरणानि दर्शयित्वा आदिपदं विवृणोति । प्रभवे साध्ये तत्स्थानं प्रभवस्थानं अवधिः स्यात् । हिमवत इति अवधित्वादपादानत्वं । ततश्च अपादाने पञ्चमीत्यनेन पञ्चमी । एवं सर्वत्र ज्ञेयं ।। ७६ ।।

**बाल॰**—जन । जनने साध्ये प्रकृतिरवधिः स्यात् । प्रकृतिरिति जननकर्त्तरिति शेषः । प्रकृतिः कारणं तच्च त्रिविधं । समवायि असमवायि निमित्तञ्च । तत्र । यत् समवेतं कार्यमुत्पद्यते तत् समवायि कारणं । यथा घटस्य मृत्पिण्डः । जगतः पञ्च भूतानि च । समवायिकारणप्रत्यासन्नमव्यवधानेन कार्योत्पादनाक्षममसमवायि कारणं । यथा पटस्य तन्तुद्वयसंयोगः । एतद्व्यतिरिक्तं कारणं निमित्तं यथा घटस्य चक्रादि । विष्णोर्जगत् जायते इति विष्णुर्निमित्तकारणं । जायत इति दिग्दर्शनमात्रं अतः हरिभक्तेः सुखमुत्पद्यते विष्णोर्जगद्भवति पुष्पेभ्यो माला स्यादित्याद्यप्युदाहरणीयं । मातुः पुत्रो जायते इत्यत्र निमित्तविवक्षया विष्णोर्जगज्जायत इत्यत्र चापयादिसाध्यत्वसम्भवात् सामान्यसूत्रेण मात्रादेरवधित्वसिद्धेऽपि मृत्पिण्डात् घटो जायते तन्तुभ्यः पटो जायते। कस्यचिन्मते विष्णोः समवायित्वविवक्षया विष्णोर्जगज्जायत इत्यादौ तु मृत्पिण्डादीनां सामान्यसूत्रेण नावधित्वं सिध्येत् मृत्पिण्डादौ घटादिकस्याऽव्यतिरेकत्वादत इदं सूत्रमिति । प्रभवजननयोः समानार्थत्वमाशङ्क्य समादधाति प्रभव इति । प्रभवशब्दस्य प्रथमदर्शनार्थत्वेन गङ्गा प्रभवतीत्यस्य गङ्गा प्रथमं पश्यतीत्यर्थः सिद्धः मर्त्यलोकमिति शेषः । अथवा

७८. प्रदेयाभिसम्बध्यमानं सम्प्रदानम् ।

प्रभुरयम् । प्रदेयमात्यन्तिकदेयम्, तेन यदभिसम्बध्यते, यद्देयतया सम्पाद्यते तत्कारकं सम्प्रदानं स्यात् ।

७९. सम्प्रदाने चतुर्थी ।

वैष्णवः कृष्णाय सर्वस्वं ददाति । श्रीकृष्णश्चाणूराय प्रहारमदात्,

---

अमृता०—७८. प्रदेयेति । प्रदीयते यत् तत्प्रदेयम् कर्म, तेन अभिसम्बध्यमानं सम्प्रदान कारकंस्यात् । अयञ्च प्रभुनामाधिकारः । आत्यन्तिक यद् देयं वस्तु तेन यदाभिमुख्येन सम्बन्धविषयीक्रियते, अर्थाद्देयतया सम्पाद्यते तत् कारकं सम्प्रदानसंज्ञंस्यात् । अत्र देयत्वं वा आत्यन्तिकदानत्वं वा स्वस्वत्व ध्वंसपूर्वक परस्वत्वापादनरूपं ज्ञेयम् ।

अमृता०—७९. सम्प्रदान इति । सम्प्रदानकारके चतुर्थी विष्णुभक्ति भवति । प्रायः कर्मोपमर्दकमिदम् । तत्र सम्प्रदानं त्रिधा भिद्यते । यथोक्तम्—अनुमन्त्रनिराकर्त्तृ-प्रेरणं त्यागकारणम् । व्याप्येनाप्तं ददातेस्तु सम्प्रदानं प्रकीर्त्तितम् । सम्प्रदानं तदैव स्यात् पूजानुग्रहकाम्यया दीयमानेन संयोगात् स्वामित्वं लभते यदि ॥ इति ॥ अस्यार्थः—अनुमन्ता च अनिराकर्त्ता च प्रेरकश्चेति अनुमन्त्रनिराकर्त्तृप्रेरकम् (समाहारेणैकत्वम्) ददाते व्याप्येन कर्मणा आप्तं सम्बन्धं सत् यदि त्यागकारणं स्यात् तदा सम्प्रदानं भवति । ननु राज्ञो दण्डं ददातीत्यत्र राज्ञो तद्दाने प्रेरकत्वाद् भवतु तत्सम्प्रदानं राजा ? इत्याशङ्क्य पुनराह—सम्प्रदानमित्यादि । पूजानुग्रहकाम्यया दीयमानेन वस्तुना संयोगाद् यदि स्वामित्वं लभते तदैव सम्प्रदानं स्यादिति ।

तत्र पूजा गौरवितप्रीति हेतुक्रिया, अनुग्रहः परदुःखहानिप्रवृत्तिः । तयोः काम्या इच्छा तया । तेन अतिथेरासनं ददातीत्यत्र पूजायां प्रतीयमानायामपि आसनेन स्वामित्व-सम्बन्धाभावान्न सम्प्रदानमतिथिः । तत्र अनुमन्तृ—गुरवे गां ददाति; हे गुरो ! तुभ्यं

---

अन्तर्भूतण्यर्थत्वात् प्रभवतीत्यस्य प्रथमं दर्शयतीत्यर्थो व्याख्येयः । आत्मानमिति शेषः । अणिकर्त्तृत्वन्तु लोकानामिति । हिमवति स्थित्वा गङ्गा स्वमात्मानं लोकान् दर्शयतीत्यत्र अपायादिसाध्यस्यासम्भवात् प्रभव इत्यस्य प्रयोजनं बोद्धव्यमिति ॥ ७७ ॥

बाल०—अन्त । अन्तर्द्धौ साध्ये सति यत् शङ्कास्पदं शङ्कास्थानं तदवधिः स्यात् । यं दृष्ट्वा शङ्का भवति तत् शङ्कास्पदं अन्तर्द्धिरन्तर्द्धानं । अन्तर्द्धा व्यवधा पुंसि त्वन्तर्द्धिरपवारणमित्यमरः । शङ्कास्पदमिति अन्तर्द्धिकर्त्तुरिति शेषः । अन्तर्द्धत्ते इति अन्तरपूर्वात् डुधाञ्धातोरात्मपदं । अन्तर्द्धत्ते इति दिग्दर्शनमात्रं । अतोऽवैष्णवात् पलायते इत्याद्यप्युदाहार्यं । संसर्गादिरूपत्वेन अवैष्णवादौ स्थितिसम्भवात् अवैष्णवे स्थितिः सम्यङ् न सम्भवेदतः सूत्रस्य प्रयोजनमिति । एत इति एतेन मथुरादयोऽवैष्णवान्ता अवधयः कर्त्तुः पूर्वस्याः स्थितिक्रियाया विषया इत्यनेन मथुराया आगत इत्यादीनां मथुरायां तिष्ठन् सन् आगत इत्याद्यर्थाः सूचिताः ॥ ७८ ॥

कंसायभयमदात् । प्रदेयत्वं विना तु न—रजकस्य वस्त्रं ददाति, हन्तुः पृष्ठं ददाति ।

---

गां ददामि कृपयानुमोदस्वेति प्रार्थितो गुरुश्चानुमन्यते—देहीति । अनिराकर्त्तृ—सूर्याय्यार्घ्यं ददाति, सूर्यो "देहीति" नानुमन्यते, नवा प्रेरयति, दीयमानञ्च न निराकरोतीति । प्रेरकम्—विप्राय वस्त्रं ददाति, विप्रः—मह्यं वस्त्रं देहीति दातारं प्रेरयतीति । प्रथमद्वये पूजा, शेषे त्वनुग्रहो गम्यते ।

अथ मुलमनुसरामः । वैष्णवः कृष्णाय सर्वस्वं ददातीत्युदाहरणेन द्वयमपि दर्शितम् । तथाहि—पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति । तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः । इति स्वमुखोक्त्या कृष्णस्यानुमन्तृत्वमञ्जसा सिद्धम् । तथा सर्वस्व दाने भक्तं नैव निराकरोतीति अनिराकर्त्तृत्वञ्च तस्य स्पष्टमिति । मे प्रयच्छतीति धात्वन्तर प्रयोगलाभात् ददाति दानार्थपरो ग्राह्यः ।

ननु पूजानुग्रहकाम्यतामन्तरेण सम्प्रदानस्यानिष्टत्वात् श्रीकृष्ण श्चानूराय प्रहार मदादित्यादिद्वये तत्तदभावे कथं सम्प्रदानत्वमिति चेत् ? मैवम्, अत्र प्रहारः परमार्थतोऽनुग्रहसूचकः । प्रहारेण तदसुर देहं विनाश्य तं सद्गतिं ददौ, कृष्णस्य हतारिगतिदायकत्व प्रसिद्धेः । एवं कंसाय भयमदादित्यत्र च—"भयात् कंस" इति वचनाद् भयेन हि तस्य कृष्णप्राप्तिविज्ञानात् कंसायभयदानमनुग्रहलक्षणमेवेति तत्त्वम् । पूर्वत्र—"मयि विक्रम वार्ष्णेय" इति चानूरोक्त्या प्रेरकत्व मधिगम्यते । उत्तरत्र चानिराकर्त्तृत्वं गम्यते । तथा हि—कुवलयापीडं गजं, चानूरमुष्टिकौ प्रसिद्धमल्लवरौ च हतान् दृष्ट्वा हताशः कंसः कृष्णं घातयित्वा स्वभयनिराकरणे उदास्ते इत्यनिराकर्त्तासौ ।

अथ व्यावृत्तिमुखेन प्रदेयत्वंस्पष्टयति—प्रदेयत्वंविनेति । अत्र वस्त्र-पृष्ठयोः पुनरादानात् स्व-स्वत्वध्वंसपूर्वकं दानं नास्ति । किञ्च पूजानुग्रहयोरेकतरमपि नास्तीति न सम्प्रदानत्वप्रसङ्गः । तत्क्रिया करणीभूत कर्मजन्य फलभागित्वेनोद्देश्यत्वं सम्प्रदानत्वमिति नैयायिकाः । त्यज्यमानवस्तुनः स्वत्वभागित्वेनोद्देश्यत्वं सम्प्रदानमिति च केचित् ।

ननु—"प्रदीयतां दाशरथायमैथिली" इति भट्टि प्रयोगे रावणस्य मैथिल्यां स्वत्वाभावेऽपि कथं सम्प्रदानत्व घटनेति चेत् ? सत्यम्, तदपि श्रूयताम्—चौरस्यापहरणक्रिययैव स्वत्वापादनवदिह च रावणस्य दानकर्त्तुः स्वत्ववत्त्वं गम्यते । पूजापुरःसरमेवदानं तत्र प्रयोक्तुस्तात्पर्यमित्यवधेयम् ।

---

**बाल०**—अथा । असहनमर्थो यस्य तस्य पराजेः प्रयोगे सोढुमशक्योऽवधिः स्यात् । पराजयत इति विपराभ्यां जेरित्यनेनात्मपदं । सूत्रे लिङ्गवचनमतन्त्रमिति अशक्य इत्यस्य पुरुषोत्तमत्वं न नियतं अतएव युद्धात् पराजयते कृष्ण इत्याद्यपि भवति । एवमथ विरामे त्याज्य इत्यादिष्वपि ज्ञेयं । नेहेति असहनार्थत्वाभावादिति शेषः ॥ ७९ ॥

**८०. रुच्यर्थैरिच्छन् ।**

रुचिरत्र रुचधातुः, स चानेकार्थत्वात् स्वविषयेच्छादानमाह। सच तदर्थाश्च रुच्यर्था धातव स्तै र्योगेइत्यर्थः। कृष्णाय रोचते स्वदते वा दुग्धम्, स्वाद्यत्वेन सम्पद्यत इत्यर्थः। रुच्यर्थैरिति किम्—कृष्णो दुग्धमभिलषति। स्पष्टतार्थोऽयं योगः।

**८१. स्पृहे रभीष्टम् ।**

कृष्णाय स्पृहयति गोपी।

---

अमृता०—८०. रुच्यर्थैरिति। रुचधातुना योगे तदर्थैश्चधातुभिर्योगे इच्छाकारी रुचिमान् सम्प्रदान संज्ञः स्यात्। रुच दीप्तौ अभिप्रीत्यादौ च भ्वादि रात्मपदी। अतआह—सचानेकार्थत्वादिति। स्वशब्देन कर्त्ता परामृश्यते। स्वविषये कर्त्तृभूतदुग्धादिविषये इच्छादानं रुचेरर्थः। कृष्णाय रोचते दुग्धमिति—दुग्धंकृष्णस्य स्वाद्यत्वेन सम्पद्यते, दुग्धं-स्वविषये कृष्णस्य रुचिमुत्पादयतीत्यर्थः। कृष्णस्य रुचिविषयो दुग्धमिति बोधः। दुग्ध-मभिलषतीति वाञ्छतीत्यर्थः। अत्र दुग्धस्य कर्त्तृत्वाभावेन कृष्णे रुचिदानानुपलब्धेः कृष्णस्य न सम्प्रदानत्वम्।

ननु रुच्यर्थस्य दानार्थपर्यवसानात् पूर्वेणैव सिद्धे किमर्थमस्य पृथक् कथनमिति चेत्त्राह—स्पष्टतार्थ इति। रुचधातोदानार्थस्तु दुर्गमः, अतः स्पष्टतार्थः पृथगारम्भ इत्यर्थः। ननु च—"स्फुरदधरसीधवे तव वदनचन्द्रमा रोचयति लोचनचकोरम्" इत्यत्र—तव वदनचन्द्रमा अधरसीधु लोचन चकोरायरोचयतीत्येवं प्रयोगेण भवितव्यम्, कथं तद्-विपर्ययइति चेत्? सत्यम्, रुचिरिह अभिलाषार्थकः। तेन तव वदनचन्द्रमा मे लोचन चकोरं ते स्फुरदधरसीधवे उच्छलिताधरसुधापानार्थमभिलाषयतीत्येवमर्थ स्तत्प्रयोक्तु-र्जयदेवस्याभिप्रेतः। तस्मादिह तादर्थ्यविवक्षया चतुर्थीति नास्य विषय इत्यविरोधः।

अमृता०—८१. स्पृहेरिति। स्पृहधातोः प्रयोगे तत् कर्त्तुरभीष्टः सर्वतोभावेन इच्छा

---

बाल०—प्रमा। प्रमादे जुगुप्सायाश्च साध्यायां तयोः प्रमादजुगुप्सयोर्विषयोऽवधिः स्यात्। प्रमादलक्षणमाह प्रमाद इति। जुगुप्सालक्षणमाह गर्हाया इति। गर्हायाः कुत्सायाः। चित्तनिवृत्तिरिति अन्तर्भूतण्यर्थत्वात् चित्तनिवर्त्तनेनेत्यर्थः। हरिभक्तेः प्रमाद्यतीति वैष्णवाभास इति शेषः। हरिभक्तौ असावधानो भवतीत्यर्थ। मदि हर्षे दिवादिः। अवैष्णवमार्गाज्जुगुप्सते इति वैष्णव इति शेषः। अवैष्णवमार्गे चित्तं निवर्त्तय-तीत्यर्थः। जुगुप्सत इति गुप गोपनकुत्सनयोः निन्दायां सन्। एत इति एते कृष्ण-हरिभक्त्यऽवैष्णवमार्गरूपा अवधयः। ज्ञानस्येति विषया इति शेषः। अत्र ज्ञानस्येतस्मात पूर्वस्येति ज्ञेयं। पूर्वयोः क्रियाज्ञानयोरित्युक्तत्वात्। एवमग्रेऽपि ज्ञेयं। ततश्च कृष्णं जानन् ततः पराजयत इत्यादिकोऽर्थः ॥ ८० ॥

८२. धारे र्धनिकः ।

विष्णुमित्राय शतं धारयते । शतं गृहीत्वा देयत्वेन स्वीकुर्वन्नास्ते इत्यर्थः ।

८३. क्रुधाद्यर्थानां यं प्रति कोपः ।

कृष्णाय क्रुध्यति द्रुह्यति असूयति ईर्ष्यति कंसः । क्रोधोऽपराधासहनम् । द्रोहोऽपकारः । असूया गुणेऽपि दोषारोपणी दृष्टिः । ईर्ष्या परोत्कर्षासहनी दृष्टिः । चन्द्रगोमी तु कर्मत्वमप्याह । यंप्रतिकोप इति किम्— प्रणयेन प्रियामीर्ष्यति कृष्णः, ईर्ष्यतीवेत्यर्थः ।

---

विषयीभूतो यः स सम्प्रदान कारकं स्यात् । यदा तु ईप्सिततमता विवक्ष्यते तदा भवत्येव कर्मसंज्ञा—पुष्पाणि स्पृहयतीत्यादि ।

अमृता०—८२. धारेरिति । धारिधातोः प्रयोगे धनिक उत्तमर्णः सम्प्रदान कारकं भवति । षष्ठ्या बाधक एषः । धारयत इति धृङ् अवस्थाने तुदादे हेतु ण्यन्तः । स्वरूपेणावस्थापयतीति काशिका । अत्र धारे गृहीत परिशोधन कार्मोऽर्थः । तमेव स्फुटयति—शतं गृहीत्वेत्यादिना । अधमर्ण स्वरूपेणैवात्मानमवस्थापयति नतु अपलपतीत्यर्थः । अत्र शतमिति धङोऽकर्मकत्वादणो कर्त्तुः शतस्य णौ कर्मत्वम् । णेरुभयपदित्वात् कैश्चित् परपदश्च प्रयुज्यते । यथा च भट्टिः—धारयन्निव चैतस्य वसूनिप्रत्यपद्यत इति ।

अमृता०—८३. क्रुधेति । क्रुधादयः अर्था येषां ते क्रुधाद्यर्थाः, तेषां योगे यं प्रति कोपादयः प्रतीयन्ते तत्सम्प्रदान कारक स्यात्, आदि शब्देन त्रय एव गृह्यन्त इत्युदाहरणे ज्ञापयति—क्रुध्यतीत्यादिभिः । क्रुध कोपे, द्रुह जिघांसायां दिवादौ अकर्मकौ । ईर्ष्या ईर्ष्यायां भ्वादिः । असूयति कण्ड्वादि यगन्तः । क्रोधः कोपाभिन्नः, द्रुहादयोऽपि कोपप्रभवा एव गृह्यन्ते; तत एव सामान्यत उक्तिः—यंप्रति कोपइति । तच्च प्रत्युदाहरणे स्फुटी कृतम्—प्रणयेनेति । कोप प्रणयौ यदा स्वयमङ्गिनौ तदैव विरोधिनौ, प्रणये सति न कोपावकाश इत्येव व्यञ्जयति—ईर्ष्यतीवेति नतु वस्तुत ईर्ष्यतीति भावः । इह कोपः प्रणयस्यैवाङ्गतिति न विरोधी, प्रणयोत्थः कोप एष इति । अर्थ शब्द ग्रहणात्—द्वेष्टिप्रायो गुणिभ्योऽपीति भट्टिः । कोपाभावे तु—औषधं द्वेष्टि, नाभिनन्दयतीत्यर्थः ।

---

बाल०—अथ वि- विरामे साध्ये त्याज्योऽवधिः स्यात् । विरामो विरतिः । अवैष्णवमार्गाद्विरमतीति अवैष्णवमार्गं त्यजतीत्यर्थः । विरमतीति रमु क्रीडायां व्याङ्परिभ्योरम् इत्यनेन आत्मपदनिषेधः ॥ ८१ ॥

बाल०—भये । क्षये साध्ये हेतुरवधिः स्यात् । हेतुरिति यस्येति शेषः । बिभेतीति ञि भी भये जुहोत्यादिः । एताविति । एतौ अवैष्णवमार्गकृष्णरूपाववधी ज्ञानक्रिययोरिति शेषः । ततश्च अवैष्णवमार्गाद्विरमतीति तं जानन् तत्र तिष्ठंश्च ततो विरमतीत्यर्थः । कृष्णाद्बिभेतीति तं जानन् प्राप्नुवंश्च ततो बिभेतीत्यर्थः ॥ ८२ ॥

**८४. क्रुधद्रुहोः सोपेन्द्रयोः कर्मैव ।**

कंसमभिक्रुध्यति प्रतिद्रुह्यति ।

**८५. राधीक्षो र्यस्य विप्रश्नः ।**

शुभमशुभं वा दैवनिरूपणं विप्रश्नः । कृष्णाय राध्यति राध्नोति वागर्गः । विविधं पृष्टो गर्गः कृष्णार्थं दैवं पर्यालोचयतीत्यर्थः । एवमीक्षते । पुरुषोत्तमस्त्वाह—किमयं करोति किं न वेति पृच्छतीत्यर्थः ।

। संक्रुध्यसि मृषा किं त्वं दिदृक्षुं मां मृगेक्षणे ।

ईक्षितव्यं परस्त्रीभ्यः स्वधर्मो रक्षसामयम् । इति भट्टिः । का कीदृशी भवति विविधप्रश्नेन विचार्यमित्यर्थः ।

---

**अमृता०**—८४. क्रुधेति । व्यक्तार्थमेतत् ।

**अमृता०**—८५. राधीक्षोरिति । राधेरीक्षतेश्च प्रयोगे यस्य विप्रश्नोगम्यते स सम्प्रदानं भवति । विप्रश्नं विश्लेषयति—शुभमिति । विविधप्रश्न पूर्वकं दैवपर्यालोचनं सत्ताद्धातोरर्थः । राध साध संसिद्धौ दिवादिः स्वादिश्च द्वयोरेव ग्रहणमित्युदाहरति—राध्यति राध्नोति वेति । एवं कृष्णाय इक्षते गर्गः । पुरुषोत्तमो भाषावृत्तिकृत् । तन्मते सामान्यतः पर्यालोचनमर्थः सच पूर्वोक्तार्थे एवान्तर्भूतोऽस्तीति ग्रन्थकर्त्तुरपि सम्मत इति भट्टिप्रयोगेणानुमोदयति—ईक्षितव्यमित्यादि । अत्र यस्य विप्रश्न इति सम्बन्धावगमात् षष्ठी बाधकोऽयं विधिरिति निर्णयः ।

---

**बाल०**—अथ वार । वारणे साध्ये रक्षितुमिष्टोऽवधिः स्यात् । वारयतीति वृधातुश्चुरादिः । ननु कर्त्तुः कर्मणो वा पूर्वयोः क्रियाज्ञानयोर्विषयोऽवधिरित्युक्तं तर्हि कथं नदीतीरस्य नावधित्वमिति चेत्त्राह रक्षितुमिति । पाकस्यैव रक्षितुमिष्टत्वमिति । तत्तीरं नदीतीरं । ततो वैष्णवपाकात् । तं अवैष्णवं । रक्षतीति रक्ष पालने वारयतीत्यर्थः ॥ ८३ ॥

**बाल०**—प्रति । प्रतिग्रहः स्वीकरणं तस्मिन् साध्ये दाता अवधिः स्यात् । गृह्णातीति ग्रह उपादाने क्र्यादिः ॥ ८४ ॥

**बाल०**—त्राणे । त्राणं रक्षणं तस्मिन् साध्ये भये हेतुरवधिः स्यात् । संसारादिति संसारो भयहेतुः । त्रायत इति कृष्णो वैष्णवाचार्यो वेति शेषः । त्रैङ् पालने भ्वादिः । त्राणार्थत्वे वारयति चेति । वारेस्त्राणार्थत्वेतु संसाराद्वैष्णवं वारयतीति च स्यादित्यर्थः । वारयतीति त्रायते इत्यर्थः । एत इति एते अवधयः । क्रियाया इति शेषः । ततश्च वैष्णवपाकादवैणवं वारयतीति पाकसमीपे स्थितं गच्छन्तं वा अवैष्णवं वारयतीत्यर्थः । वैष्णवादन्नं गृह्णातीत्यर्थः संसाराद्वैष्णवं त्रायत इति संसारे स्थितं वैष्णवं त्रायत इत्यर्थः ॥ ८५ ॥

८६. श्लाघ ह्नुङ् स्थाशपां ज्ञापयितुमिष्टः ।

कृष्णाय श्लाघते । श्लाघमान स्तां श्लाघां कृष्णं ज्ञापयितुमिच्छतीत्यर्थः । आत्मश्लाघामेव कृष्णं ज्ञापयितुमिच्छतीतिकश्चित् । एवं कृष्णाय ह्नुते, कृष्णं निह्नुवान स्तां निह्नुतिमित्यादि पूर्ववत् । इदमहं ह्नुवे इति कृष्णं ज्ञापयतीति कश्चित् । कृष्णाय तिष्ठते, कृष्णं प्रति स्वाभिरुचिं प्रकाशयतीत्यर्थः । कृष्णाय शपते, कृष्णं प्रति शपथं कुर्वन् सत्यमिदमिति ज्ञापयतीत्यर्थः । आभ्यामात्मपदञ्च प्रकाशन शपथयो र्वाच्यम् । द्विषद्भ्यश्चाशपंस्तथा इति भट्टि स्त्वाक्रोशेऽपि दृश्यते । ज्ञापयितुमिष्ट इति किम्—कृष्णं श्लाघते ।

८७. प्रत्याङ् श्रुवः प्रार्थयिता ।

भक्तायाभीष्टं प्रति शृणोति कृष्णः, आशृणोति; प्रार्थयन्तं तंप्रति प्रतिज्ञां

---

अमृता०—८६. श्लाघेति । श्लाघादीनां धातूनां प्रयोगे यो ज्ञापयितुमिष्टः तत्सम्प्रदान कारकं स्यात् । श्लाघत इति श्लाघृ विकत्थने भ्वादि रात्मपदी । श्लाघमानो भक्तः, तां कृष्णसम्बन्धिनीं श्लाघाम् । ह्नुत इति—ह्नुङ् अपनयने अदादिः । निह्नुवानः कश्चित्-सखाकृष्णोद्दिष्टां निह्नुतिमात्मगोपनं कृष्णं ज्ञापयितुमिच्छति । निलायन क्रीडायामिति शेषः । आभ्यामिति—तिष्ठति शपतिभ्यामात्मपदं वाच्यमिति—स्थो निर्णीतौ प्रकाशने, शपेस्तु शपथे तत् स्यादित्येताभ्यामात्मपदं वक्ष्यते । आक्रोशेऽपीति—धातोः स्वाभाविकार्थेऽपि सम्प्रदानप्रयोगो दृश्यते, किन्तु शपथ द्वारा ज्ञपनाभावान्नात्मपदमिति लक्षितव्यम् । कृष्णं श्लाघते स्तौतीत्यर्थः ।

अमृता०—८७. प्रत्याङिति । प्रति पूर्वस्य आङ्पूर्वस्य च श्रु धातोः प्रयोगे प्रार्थयिता सम्प्रदानं भवति । प्रतिशृणोतीति प्रति जानीते इत्यर्थः । अत्र दृष्टान्ते प्रार्थयिता भक्तः

---

बाल०—अथ शिक्षा । शिक्षायां साध्यायां गुरुरवधि स्यात् । अधीत इति इङ् अध्ययनेऽदादिः । अधीत इति दिग्दर्शनमात्रं, अतो वैष्णवाद्गीतां पठति शृणोति जानातीत्याद्यपि ज्ञेयं । अशिक्षायामिति । अशिक्षायान्तु गुरुत्वस्याप्यभिधानं नास्तीति नटस्य गीतं शृणोतीत्यत्र कर्मणो ज्ञानस्य विषयत्वेऽपि नटस्य नावधित्वमिति । शृणोतीति श्रु श्रवणे स्वादिः । अत्र श्रु धातुर्न शिक्षार्थः । किन्तु श्रवणेन्द्रियव्यापारार्थः । एष इति एषोऽवधिः । ज्ञानस्येति विषय इति शेषः । ततश्च वैष्णवाद्गीतामधीत इति वैष्णवेन ज्ञातां गीतां ततोऽधीत इत्यर्थः ॥ ८६ ॥

बाल०—पदे । प्रदेयेनाभिसंबध्यमानं प्रदेयाभिसंबध्यमानं । प्रभुनामाधिकारोऽयं । प्रदेयलक्षणमाह प्रदेयमिति । पुनर्ग्रहणेच्छात्यागपूर्वकमिच्छया यद्दीयते तदात्यन्तिकदेय-

करोतीत्यर्थः । प्रार्थयितात्र प्रतिज्ञायाचकः । पूर्वस्य प्रार्थनादेः कर्त्ता सम्प्रदानमिति पुरुषोत्तमः । तेन श्रृण्वद्भ्यः प्रतिश्रृण्वन्तीति भट्टिः ।

**८८. अनुप्रति गृणः प्रशस्यमानवचनः ।**

गीताविदे अनुगृणाति प्रतिगृणाति । तांशंसन्तं प्रोत्साहयतीत्यर्थः । शब्देनानुगच्छतीति तु पुरुषोत्तमः । तेन—गृणद्भ्योऽनुगृणन्त्यन्यइति भट्टिः । श्नानिर्द्देशान्नेह—गीताविदमनुगिरति ।

---

प्रतिज्ञायाचकः विप्राय गाः प्रत्यश्रृणोत् मन्द इत्यादौ तु प्रार्थयिता याचकमात्रम् । भट्टि-प्रयोगानुसारित्वात् पुरुषोत्तममतमपि प्रामाण्यमित्यत स्तन्मतमाह—पूर्वस्येति । श्रृण्वदभ्य इति—पूर्वं प्रार्थयमानेभ्यः प्रतिश्रृण्वन्ति—वयं युष्माकेमेतत् करिष्यामे इत्यङ्गी कुर्वन्ती-त्यर्थः ।

**अमृता०**—८८. अन्विति । अनुपूर्वस्य प्रतिपूर्वस्य च गृणातेः प्रयोगे प्रशस्यमान-वचनः सम्प्रदान कारकं स्यात् । प्रशस्यमानं श्लाघ्यमानं वचनं यस्य स प्रशस्य मानवचनः पूर्ववक्तेत्यर्थः । अनुगृणातीति गृशब्दे क्र्यादिः । अस्य चार्थ पुरुषोत्तममते गदति—शब्दे-नेति । गृणद्भ्येः कथयद्भ्यः अनुगृण्वन्ति शब्देनानुगच्छन्ति, अनुवदन्त इत्यर्थः । अत्र तु प्रोतसाहनाभाव इतिभेदः । अनुगिरतीति गृनिगरणे तुदादिः । धातूनामनेकार्थत्वादिह शब्दार्थो ग्राह्यः ।

---

मिति । तेन आत्यन्तिकदेयेन यत् कारकमभिसंबध्यते अभि सर्वतोभावेन सम्बन्धविषयी-क्रियते इत्यस्यार्थं स्पष्टयति यद्द्येयतया सम्पाद्यते इति । तत् आत्यन्तिकं देयं यद्द्येयतया यत्सम्बन्धितया सम्पाद्यते सस्पन्नीक्रियते तत् कारकं सम्प्रदान संज्ञं स्यादित्यर्थः ।। ८७ ।।

**बाल०**—सम्प्रदाने चतुर्थी विष्णुभक्तिः स्यात् । ददातीति डुदाञ् दाने जुहोत्यादिः । अदादीति भूतेशे । देयेत्यकृत्वा यत् प्रदेयेति कृतं तत् प्रयोजनमाह प्रदेयत्वं विना त्विति । रजकस्य वस्त्रं ददातीत्यत्र वस्त्रस्य देयत्वमस्त्येव किन्तु प्रदेयत्वं नास्ति पुनर्ग्रहणात् । हन्तुः पृष्ठं ददातीत्यत्र पृष्ठस्य देयत्वमस्त्येव किन्तु प्रदेयत्वं नास्ति इच्छाया अभावात् । हन्तुर्हननकर्त्तुः । एवं राज्ञो दण्डं ददातीति । कालापाः सूत्रं न बहु मन्यन्ते तेतु व्युत्पत्ति-लभ्यत्वात् सर्वं साधयन्ति । तद्यथा । सम्यक् प्रकर्षेण दीयते यस्मै तत् सम्प्रदानमिति । अनुमन्त्रऽनिवारणकर्त्तृ प्रेरकं त्यागकारणं । व्याप्येनाप्तं ददातेस्तु सम्प्रदानं प्रकीर्त्तितं । सम्प्रदानं तदेव स्यात् पूजानुग्रहकाम्यया । दीयमानेन संयोगात् स्वामित्वं लभते यदि । अनुमन्तृ यथा गुरवे गां ददाति गुरुस्तु प्रार्थितः सन्ननुमन्यते । अनिराकर्त्तृ यथा कृष्णायार्घ्यं ददाति कृष्णो हि अर्घ्यार्थं ददाति कृष्णो हि अर्घ्यार्थं न प्रेरयति नानुमन्यते च केवलं दीयमानं वस्तु न निराकरोति । प्रेरकं यथा ब्राह्मणाय वस्त्रं ददाति भो राजन् ! मह्यं वस्त्रं देहीति राजानं प्रेरयति ततो राजा वस्त्रं ददातीत्यर्थः । राज्ञो दण्डं ददाति अत्र पूजानुग्रहकाम्या नास्ति । पूजा यथा, कृष्णाय धूपं ददाति । अनुग्रहो यथा, भृत्याय

## ८९. अशिष्टव्यवहारे सम्प्रयच्छते सम्प्रदाने तृतीया।

विष्णो र्बहिमुखैस्तत्प्रसादं सम्प्रयच्छते, तेभ्यो ददातीत्यर्थः। कथं पशुं रुद्राय ददातीत्यर्थे पशुना रुद्रं यजते? पशुना देयेन रुद्रं प्रीणयतीति- सोपानं कर्त्तव्यम्।

---

अमृता०—८९. अशिष्टेति। अशिष्टव्यवहारे असभ्याचरणे गम्ये सम् प्र पूर्वस्य यच्छतेः प्रयोगे सम्प्रदान कारके चतुर्थी बाधिका तृतीया भवति। तत् प्रसादविष्णोः प्रसादम्। बहिर्मुखेभ्यो विष्णुप्रसाददानमयुक्तम्. तेषां तन्माहात्म्याविज्ञानात्, अतस्तद- शिष्टव्यवहारः। "दानः सा चेच्चतुर्थ्यर्थे" इत्यनेनात्मपदंवक्ष्यते। केवल सम् पूर्व यच्छते- रिति केचित्। तथाहि तदुदाहरणम्—संयच्छते स्म गोप्यैष्ट श्रीशः संयच्छते श्रियै। इति। अत्र श्रीशस्य लक्ष्मीपतेः पररमणीं गोपीं प्रति त्विष्टदानं (रतिदानं) न खलु शिष्ट- व्यवहारः, धर्मशास्त्र विरुद्धाचार इत्यर्थः। दृष्टान्तस्त्वयं व्याकरणबोधचरितार्थाय कैश्चित् सयोजितः, परमार्थतो नैवं घटितुं शक्यते, निष्ठाहान्या रसाभाषान्महादोषापत्तेरिति विवेच्यम्।

आशङ्कते—कथमिति। यजधातो र्दानार्थत्वात्—पशुं रुद्राय यजते इत्येवमेव प्रयोगेण भवितव्यम् कथमत्र तद् व्यत्यय इति शङ्कापक्षः। समाधत्ते च—पशुना देयेनेति। सोपानम्—आरोहणावरोहणसाधनम्। सिद्धान्तेऽवगाहार्थमिदं साधनं कर्त्तव्यमित्यर्थः। इदञ्चात्र वार्त्तिकम्—"यजेः कर्मणः करणसंज्ञा वक्तव्या सम्प्रदानस्य च कर्मसंज्ञा" इति। एतन्निरपेक्षया हि ग्रन्थकर्त्तुः समाधान प्रणाली ज्ञेया। अथ करण लक्षणमाह—

---

वस्त्रं ददाति। काम्या यथा, दास्यै मालां ददाति। स्वस्वत्वे विद्यमाने हि परस्वत्वं न विद्यते। परित्यज्य प्रदानञ्चे दौदासीन्यान्न सिध्यति। स्वस्वत्वध्वंसपूर्वकपरस्वत्वजनकी- भूत-सङ्कल्पविशेषो दानं। एतेन त्यागजन्यस्य फलभागित्वं सम्प्रदानत्वं ॥ ८८ ॥

बाल०—रुच्यर्थः। रुच दीप्तौ धातुनिर्देशे इक्। रुचेरर्थ इव अर्थो येषां ते रुच्यर्था इति मध्यपदलोपी पीताम्बरः। तैर्योगे इच्छन् इच्छां कुर्वन् सम्प्रदानं स्यात्। सचेति। सच रुचधातुः। स्वेति स्वो विषयो यस्याः सा स्वविषया स्वविषया चासाविच्छा चेति स्वविषयेच्छा तस्या दानमिति विग्रहः। स्व आत्मीयः स चात्र रुच्यर्थकर्त्तैव। सचेति सच रुचिः। कृष्णाय रोचते स्वदते वा दुग्धमिति दुग्धं कृष्णाय सम्प्रति इच्छां ददातीत्यर्थः। इच्छायाः प्रदेयत्वेन इच्छाविषयीभूतं दुग्धमपि कृष्णस्यैवेत्यभिप्रेत्य फलितार्थमाह स्वाद्य- त्वेनेति। कृष्णस्येति शेषः। अभिलषतीति वाञ्छतीत्यर्थः। ननु रुच्यर्थानां दानार्थत्वात् पूर्वेणैव सम्प्रदानं सेत्स्येति किमनेन सूत्रेणेति चेत्तत्राह स्पष्टतार्थ इति। यत्नलभ्या या शाब्दी प्रतीतिः स्पष्टा भवतीति। ननु, स्फुरदधरसीधवे तव वदनचन्द्रमा रोचयति लोचन- चकोरं, इत्यत्र अण्यन्ते रुच्यर्थयोगे इच्छाकर्त्तृत्वात् लोचनचकोरस्य सम्प्रदानत्वं सीधोः कर्त्तृत्वं सम्भवति ण्यन्तेऽपि लोचनचकोरस्यैव सम्प्रदानत्वं अकर्मकगतिज्ञानेत्यनेन सीधोः

## ९०. कर्त्तुरधीनं प्रकृष्टं सहायं करणम् ।

**अनुक्ते कर्त्तरिकरणे च तृतीया । कृष्णो गा वनाद् यमुनातीरे वशीवाद्येन आह्वयते । हस्तेनोत्तरीयं भ्रमयति । कर्त्तुरधीनमिति किम्—कृष्ण प्रसादात् सुखं लभते । पञ्चमी वक्ष्यते ।**

---

अमृता०—९०. कर्त्तुरिति । क्रिया सिद्धौ कर्त्तुरधीनं प्रकृष्टं प्रधानं सहायमुपकारकं भवति तत् कारकं करणमुच्यते । क्रियासिद्धौ अधिकरणादीनामुपकारित्वं दर्शितम्, अत स्तत्र तत्रातिव्याप्तिवारणाय प्रकृष्टमितिपदम् । तत्र च कर्त्ता स्वतन्त्र इति पूर्वमुक्तम्; इह प्रकृष्टसहायस्य च स्वतन्त्रता चेत्तदा करणमेव कर्त्ता इति विप्रतिपत्तिः स्यात्, तत आह—कर्त्तुरधीनमिति । यद्यपि पचतीत्यादिक्रिया सिद्धौ तण्डुलकाष्ठ चुल्ली स्थाली घृतादीनि बहूनि साधनानि सन्ति तथापि तेषां मध्ये यदा यस्य प्रकृष्टोपकारकत्वं विवक्ष्यते तदा तस्य करणत्वं मतम् ।

प्रकृष्टत्वञ्चास्य कारकान्तरा व्यवधानेन हि क्रियया निष्पादकत्वाज् ज्ञेयम् । यदुक्तं प्राचीनैः—कारकाव्यवधानेन क्रियानिष्पत्ति कारकम् । यद् वै विवक्षितं तेषु करणं तत् प्रकीर्त्तितम् । करणं खलु सर्वत्र कर्तृव्यापारगोचरः । तिरोदधाति कर्त्तारं प्राधान्यं तन्निबन्धनम् ।। इति ।। अत्र कारकान्तराव्यवधानेनेति—तदनन्तरमेव क्रियासिद्धिर्गम्यते । अतः कर्त्तुरव्यप्यवधानं बोध्यम् । तथाहि—कृष्णो वनाद् यमुना तीर इत्युदाहरणे कर्त्तुः कृष्णस्य यो व्यापारः—वंशीरन्ध्रेष्वङ्गुलीचालनादिरूप चेष्टाविशेषः, तस्य गोचरः करणमत्र वंशीवाद्यम्, कर्त्तुर्व्यापारविशिष्टवंशीवादनानन्तरमेव तदाह्वानक्रिया निष्पद्यते । तत्राह्वानं वंशीवाद्यजन्यं, वंशीवाद्यञ्च व्यापारायात्तं, व्यापारः पुनः कर्त्रायात्त इति व्यवहित एव कर्त्ता, किमुतापादानाधिकरणे—वनयमुनातीर रूपे । कर्त्तुः पश्चादेव कारकान्तरानुसन्धानप्रवृत्त्युदयात् तदितरकारकाणां सुतरामेव व्यवहितत्वमिति भावः । तथापीह करण प्रवृत्ति हेतुत्वेन कर्त्तुरेव प्राधान्यं कारकत्वांशे इति विभाव्यम् ।

प्रागुक्ति स्मारयति—अनुक्त इति । तेनैव विधिना करणे तृतीया सिद्धा इत्यर्थः । करणस्यहि प्रकृष्टसहायत्वदर्शनार्थं पञ्च कारकान्वित वाक्योपादानम् । आह्वयत इति—ह्वेञ् स्पर्द्धायां शब्दे च धातोरत्र शब्दार्थः स्फुट एव । व्यावृत्तिमाह—कर्त्तुरधीनमिति किमिति । कृष्णप्रसादादिति हेतौ पञ्चमी । अत्र कृष्ण प्रसादस्य सुखलाभक्रियायां प्रकृष्टसहायत्वेऽपि कर्त्तुः ( लोकस्य ) नासौ कदाप्यधीनः, प्रत्युत लोक एव कृष्णानुग्रहस्याधीन इति तत्त्वम्, अतो न तस्य करणता । गुणाद्धेतोः पञ्चमी तृतीया चेति तद्विधानसूत्रम् ।

---

कर्मत्वं स्यात् । तर्हि कथं सीधवे इत्यत्र सम्प्रदानचतुर्थी । सत्यं उच्यते । सीधव इत्यत्र मया सम्प्रदानचतुर्थी न विवक्षिता किन्तु तादर्थ्यचतुर्थीति न कश्चिद्विरोधः ।। ८९ ।।

बाल०—स्पृहे । स्पृहेः प्रयोगे स्पृहधातुकर्त्तुरभि सर्वतोभावेनेष्टः इच्छाविषयीभूतः सम्प्रदानं स्यात् । अतः कर्मणि क्तप्रत्ययात् कर्मबाधकमिदं सूत्रं । स्पृहयतीति स्पृह

## ९१. दिवः करणं कर्म वा ।

अक्षान् दीव्यति कृष्णः अक्षैर्वा। अत्र केचिद्युगपदेव संज्ञाद्वयं मन्यन्ते । तेनमनसा देवीत्यत्र कर्मोपपदे प्रत्ययः सिध्यति । अक्षै र्देवयते कृष्णो

---

अमृता०—९१. दिव इति । दिवु क्रीडादिषु धातोः प्रयोगे तस्य करणं कर्म वा स्यात् । क्रीडार्थकत्वेनाकर्मकत्वादप्राप्ते विभाषया कर्मविधानम् । अक्षशब्दः पाशकवाची। केचिदिति पाणिनि प्रमुखः । युगपदिति समकालमेव संज्ञाद्वयं मन्यन्ते । तथाहि तत्-सूत्रम्—"दिवः कर्म च" इति । चकारेण करणानुवृत्तिः, तेन यदाहि करण संज्ञा तदैव कर्म संज्ञेति तन्मतं समुपलभ्यते । तादृशनिर्देशे फलमाह—मनसादेवीति । कर्मोपपद इति—"कर्मण्यन्" इत्यनेन मनसां पदं कर्म मत्वा दिवः अण् प्रत्ययो विहितः, तेन च मनसा देवीति सिध्यति । एतन्मते नित्य सकर्मकत्वात्—अकर्मक गति ज्ञानेत्यादिना अणि कर्त्तु र्न हि कर्मत्वं सम्भवेदिति दर्शयति—अक्षैर्देवयत इत्यनेन । अस्मन्मते तु भवत्येवेति—विभाषया कर्मविधानात्, ततएव करणपक्षे कर्मत्वाभावात्—अकर्मक गति ज्ञानेत्यादि सूत्रेण प्रयोज्यस्य—अणिकर्त्तु र्णौ कर्मत्वे न कोऽपि बाधः । किञ्च—"अणौ ये स्युरकर्मकाः सचित्त कर्त्तृकाश्चैव" इत्यनेन परपदमपि भवेदिति बोध्यम् ।

स्वमतस्यानुकूले भट्टिप्रयोगमुद्धरति—तेनादुद्यूषयदित्यादि । "मैथिली विपुलो-रस्कं प्रावुवूर्षु र्मृगाजिनमि"त्युत्तरार्द्धम् । अस्यार्थः—मृगाजिनं मृगचर्म प्रावरितुमिच्छु मृगलोचना मैथिली तेन मृगेण ( मायामृगेण ) विशालवक्षसं रामं अदुद्यूषयत् देवितु-मषयदिति । अत्र दिवुधातोः सनन्तात् णिः, तेनाणिकर्त्तुः रामस्य कर्मता, तथा धातो रकर्मकत्वेन णौ परपदित्वमिति ।

केचिदिह सनन्तत्वेन पृथग्धातुत्वकल्पनया समाधातुमीहन्ते स्म । तत्तु नानवद्यं प्रतिभाति, पूर्वधातुवत् सनः परपदादिकमित्यत्र आदि पदेन कैश्चिदकर्मकत्वादेश्च ग्रहणात् । तस्माद् युगपत्संज्ञाद्वयविधानं छान्दस विषयार्थमिति सुवचम् । तेन हि भाषा व्युत्पादकेन चन्द्रगोमिना प्रत्याख्यातमेतत् । भाषायां पाक्षिककर्मविधानमेवेष्टं प्रयोगसम्मतत्वादिति दिक् ।

ननु तर्हि करणत्वावस्थायां कर्मत्वविरहे स्वमते मनसादेवीति केन सिध्यतीति चेत् ? अवधीयताम्—"पचादेरत्" इत्यनेन देव शब्दं निष्पाद्य पश्चात् समास ईप् चेति । अत एव पूर्वपदान्महा हर निषेध प्रसङ्गे—मनसादेव्यादयस्तु संज्ञाशब्दा इत्युक्त्या तेषां

---

ईप्सायां चुरादित्वाण्णिः । कर्मणोऽभावात् न कर्मप्रत्ययः । अतो भावे कृष्णाय स्पृह्यते गोप्येति ॥ ९० ॥

बाल०—धारे । धारेः प्रयोगे धनिको धनस्वामी सम्प्रदानं स्यात् । षष्ठीबाधकोऽयं योगः । विष्णुमित्रायेति खादक इति शेषः । धारयत इति धृ धारणे चुरादिः । धृञ् च धृत्वां धृक् चेति कविकल्पद्रुमः । आत्मपदन्तु अन्येषां मते नेति ज्ञेयं । आख्यातप्रकरणे

राधया इत्यत्र प्रयोज्यस्य कर्मत्वं न भवतीति । अस्मन्मते तु भवत्येव । तेनादुद्यूषयद् रासं मृगेण मृगलोचना इति भट्टि प्रयोगः ।

९२. परिक्रयणे करणं सम्प्रदानं वा ।

शतेन शताय वा परिक्रीतः । शतेन वेतनेन नियते काले वशीकृत इत्यर्थः ।

९३. स्तोकाल्पकृच्छ्रकतिपयेभ्यः करणेपञ्चमी वा असत्त्ववचने ।

---

रूढित्वमुपदिष्टं ग्रन्थकृता । संज्ञा शब्दानां यथा कथञ्चिद् व्युत्पत्ति स्वीकारादिति समञ्जसम् ।

अमृता०—९२. परिक्रयण इति । परिक्रयणे अर्थे तस्य करणं सम्प्रदानं वा स्यात्, पक्षे करणस्य च स्थितिः । परिक्रीत इति—डुक्रीञ् द्रव्यविनिमये कर्मणि क्तः । नियते निर्द्धारिते काल इत्यर्थः । क्रय आत्यन्तिक एव भवति, इह परिशब्देन तत्प्रत्यासत्ति र्द्योत्यते । तेनात्यन्तिकक्रयसमीपं परिक्रयणं कतिचिद्दिनपर्यन्तं तिष्ठति नतु यावज्जीवमिति वेदयितुं नियते काले वशीकृत इत्यर्थोल्लेखः ।

अमृता०—९३. स्तोकाल्पेति । असत्त्ववचने अद्रव्यवचनेऽर्थाद् गुणवचने सति स्तोकादि शब्दानां करण कारके पञ्चमी वा स्यात्, पक्षे यथाप्राप्त तृतीया । स्तोकादयः स्वभावतो गुणवाचिन एव, यदा त्वभेदोपचारेण स्तोकादि गुणवति द्रव्ये वर्त्तन्ते तदा भवन्ति सत्त्ववाचिन इति तत्र नित्यमेव तृतीया । एवमल्पादल्पेन वा रक्षितः, कृच्छ्रात्

---

णेरुभयपदमित्यत्र अन्यमतानुसारेण चोरयत इत्यपि लिखितं । धारयतीति वा पाठः । धृधातुरत्र गृहीतपरिशोधनार्थः, अतएवाह शतं गृहीत्वेति ॥ ९१ ॥

बाल०—क्रुधा । क्रुध आदिर्येषां ते क्रुधादयः । तेषामर्था इव अर्था येषां तेषां धातूनां प्रयोगे यं प्रति कोपः स सम्प्रदानं स्यात् । क्रोधस्तावत् कोप एव द्रोहादयोऽपि कोप प्रभवत्वात् कोपः । अतो यं प्रति कोपइत्येवोक्तं क्रुध्यतीति क्रुध रोषे द्रुह्यतीति जिघांसायां दिवादी । असूयतीति असूशब्दात् कण्ड्वादिभ्यो यक् करोत्यर्थ इत्यनेन यकि कृते असूयधातुर्निष्पद्यते । ईर्ष्यतीति ईर्ष्या ईर्ष्यायां भ्वादिः । क्रोधादीनां लक्षणान्याह क्रोध इति । अपराधस्य असहनमिति विग्रहः । अपकारोऽमङ्गलोत्पादना तदिच्छा च । दृष्टिर्ज्ञानं दृष्टिर्ज्ञानेऽक्ष्नि दर्शन इति नानार्थवर्गः । असूया गुणेऽपि दोषारोप इति वा पाठः । असूयात्, दोषारोपो गुणेष्वपीत्यमरः । ईर्ष्या परोत्कर्षासहनमिति वा पाठः । अक्षान्ति-रीर्ष्येत्यमरः । चन्द्रगोमी त्विति । चन्द्रगोमीं पण्डितविशेषः । तन्मते कृष्णं क्रुध्यतीत्याद्यपि । प्रणयेणेति । प्रणयेन ! प्रेम्ना ईर्ष्यतीवेति इव शब्दः सादृश्यद्योतकः ॥ ९२ ॥

स्तोकान्मुक्तः स्तोकेन वेत्यादि। सत्त्वं द्रव्यं, तत्रतु—स्तोकेन विषेण हतः। स्तोकाद् विषादित्यपि केचित्।

## ८४. तृप्त्यर्थकरणे षष्ठी वा।

नवनीतानां तृप्तो बालगोपालो नवनीतैर्वा।

## ८५. अज्ञानार्थस्य ज्ञः करणं वा।

---

कृच्छ्रेण वा जीवितः, कतिपयात् कतिपयेन वा समुद्धृत इत्यादि। करण इतिकिम्—क्रियाविशेषणे कर्मणि मा भूत्—स्तोकं स्वपितीति।

**अमृता०**—८४. तृप्त्यर्थेति। तृप्तिरर्थोयेषां ते तृप्त्यर्था स्तेषां धातूनां करण कारके षष्ठी वा स्यात्। अप्राप्तौ विधिः। तृप्त्यर्थग्रहणात् तृफति तृम्फति तुष्यतीत्यादीनाञ्च तथा आङ् पूर्वस्य अश्नातेरपि भवतीति ज्ञेयम्। तेन फलानामलमाशिता इतिभट्टिः। करण इति किन्—वने तृप्यन्ति निर्वित्ता इति नाधिकरणे षष्ठी।

**अमृता०**—८५. अज्ञानार्थस्येति। अज्ञानमर्थो यस्य तथाभूतस्य ज्ञाधातोः प्रयोगे तत् करणं वा स्यात्। पक्षे सम्बन्धे षष्ठी। अज्ञानार्थेति विरुद्धार्थे नञ्। तेन विरुद्ध ज्ञानार्थकस्य, अयथा ज्ञानार्थकस्य ज्ञः प्रयोगे सतीति फलितार्थः। ततः कूपजले सरोवर-जले वा गङ्गाजलबुद्धि र्जायते। ज्ञोऽकर्मकापह्नवार्थत इत्यात्मपदं वक्ष्यते। अत्रापि

---

**बाल०**—क्रुध। सोपेन्द्रयोः क्रुधद्रुहोः प्रयोगे कर्मैव स्यात्। प्रतिद्रुह्यतीति प्रत्यपकरोतीत्यर्थः॥ ८३॥

**बाल०**—राधी। राधीक्षोः प्रयोगे यस्य विप्रश्नः स सम्प्रदानं स्यात् विप्रश्न-लक्षणमाह शुभमिति। दैवमदृष्टं निरूपणं पर्यालोचनं। राध्यति राध्नोतीति राध साध संसिद्धौ दिवादिः स्वातिश्च, अविशेषात् द्वयोरेवात्र ग्रहणं धातूनामनेकार्थत्वात्। राध धातुरत्र दैवनिरूपणार्थः। ततश्च कृष्णाय राध्यति राध्नोति वा गर्गः कृष्णस्य दैवं पर्यालोचयतीत्यर्थः। प्रश्नं विना दैवनिरूपणं न सम्भवतीत्यभिप्रायेण विविधं पृष्टो गर्गः कृष्णार्थमित्युक्तः। कृष्णार्थमिति पृष्ट इत्यनेन योज्यं। विविधमिति क्रियाविशेषणं विविधं नानाप्रकारं पृष्टः प्रश्नविषयीकृतः नन्दादिनेति शेषः। विविधं पृष्ट इति दृष्ट्वा विप्रश्न-शब्दस्य विविधप्रश्नार्थत्वं नाशङ्कनीयं किन्तु दैवनिरूपणमेव विप्रश्न इति ग्रन्थकृताम-भिप्रायः। एवमीक्षत इति। ततश्च कृष्णाय ईक्षते गर्गः अर्थस्तु पूर्ववत्। पुरुषोत्तमः पण्डितविशेषः। किमयमिति अयं जनः किं करोति किं न करोति इतीति मनसि कृत्वेति शेषः पृच्छतीत्यर्थः। राध्यति राध्नोतीनयोः ईक्षत इत्यस्य चेति शेषः। किमिति वितर्के इत्यर्थः। इत्यनन्तरं इति शब्दप्रयोग उचित इति ज्ञेयं। तस्मात् यस्य सम्बन्धे इति पृच्छति तस्य सम्प्रदानत्वमिति। ग्रन्थकृतोऽत्रापि सम्मतिर्वर्त्तते इति भट्टिप्रयोगं दर्शयति ईक्षितव्य-मिति इत्यर्थं इति ईक्षितव्यमित्यस्येति शेषः॥ ८४॥

पक्षे सम्बन्धे षष्ठ्येव । गङ्गाजलेन जानीते, तस्य वा । तद् बुद्ध्या जलान्तरे प्रवर्त्तत इत्यर्थः ।

**९६. अपादान सम्प्रदान करणाधार कर्मणाम् ।**
**कर्त्तुश्चान्योन्य सन्देहे परमेकं प्रवर्त्तते ।।**

**कृष्णाय निवेद्य गृह्णाति, शार्ङ्गेण शरान् विक्षिपति, उपविश्योत्तिष्ठति**

---

विवक्षातः षष्ठ्यां सिद्धायामपि विशेषवचनं नियमार्थम् । तेन गङ्गाजलं जानीति इति कर्म मा भूदिति । यथाज्ञानार्थत्वे तु भवत्येव कर्म—कण्ठ स्वरेण कृष्णं जानातीति ।

**अमृता०**—९६. षट् कारकानि परिचाय्य तेषामन्योन्य संशये व्यवस्थामाह—आपादानेति कारिकया । एषां मध्ये द्वयो र्युगपत् प्राप्तिसन्देहे सति परमेकं कारकं प्रवर्त्तते । परत्वञ्चात्र कारिका निर्देश क्रमेणैव ज्ञेयम्, ननु पूर्वनिर्द्धारण क्रमेण । तदेतत् प्रकारान्तरेण नियम्यते कैश्चित्, यथा—कर्त्ता कर्माधिकरणं करणं सम्प्रदानकम् । अपादानञ्च सन्देहे परं पूर्वेण बाध्यते ।। इति ।। अत्रोत्सर्गापवादादि विधीनां नावकाश इति प्राञ्च ।

कृष्णाय निवेद्य गृह्णातीत्यत्र कृष्णाय निवेद्य कृष्णाद् गृह्णातीति अपादान सम्प्रदानयोरन्योन्य सन्देहे परं सम्प्रदानं प्रवृत्तम् । शार्ङ्गेण शरान् विक्षिपतीति—अपादान करणयोः सन्देहे परं करणम् । उपविश्येति—आपादानाधिकरणयोः सन्देहे परमधिकरणम् । यमुनां प्रविश्येति—अपादान कर्मणोः सन्देहे परं कर्म । अस्त्येष कृष्ण इति—कर्म कर्त्रो रन्योन्यसन्देहे पर कर्त्तृ कारकं प्रवृत्तमिति । अन्तिमे अस्त्येष कृष्ण इति वाक्यमेव पश्येत्यस्य कर्म इति पूर्वमेवोक्तम् तथापीह कर्म पदमपेक्षत इति बाधकमेतत् । यत्र तु लक्षणेनैव विशेष व्यवस्थास्ति तत्र नावसरः सन्देहस्य, यथा कृष्णाय श्लाघत इत्यत्र कर्मणो बाधिकैव विहिता चतुर्थीति ।

सम्प्रदानं बाधित्वा करणादीनां प्रवृत्ति र्यथा—स्वहस्तेनार्घ्यं दातुं कृष्णमाह्वयते, कृष्णे माल्यं प्रदादुमुत्सुक इति । करणं बाधित्वा अधिकरण कर्मणोः—रथे स्थितो गच्छति, अस्त्राणि गृहीत्वा युध्यत इति । अधिकरणं बाधित्वा कर्मणः—यमुनां गत्वा स्नातीति ।

---

**बाल०**—श्लाघादीनां प्रयोगे ज्ञापयितुमिष्टः सम्प्रदानं स्यात् । श्लाघत इति श्लाघ स्तुतौ भ्वादिरात्मपदी । तां कृष्णसम्बन्धिनीं । ह्नुत इति ह्नुङ् अपनयने अदादिः । निह्नुतिर्गोपनं । इत्यादिपूर्ववदित्यनेन कृष्णमेव ज्ञापयितुमिच्छतीत्यर्थ इति लभ्यते । तिष्ठत इति ष्ठा गतिनिवृत्तौ । शपत इति शप आक्रोशे शपथं । शपनं शपथः पुमानित्यमरः । आभ्यामिति । तत्र स्था धातोः स्थो निर्णीतौ प्रकाशने प्रतिज्ञायामित्यनेन । शपधातोः शपेस्तु शपथे तत् स्यात् इत्यनेनेति । दृश्यत इति सम्प्रदानमिति शेषः । अशपन्निति आक्रोशं कृतवन्त इत्यर्थः । कृष्णं श्लाघत स्तौतीत्यर्थः ।। ९५ ।।

**बाल०**—प्रत्याङ् । प्रत्याङ् पूर्वः श्रुम्तस्येति कुप्रादयो मध्यपदलोपश्चेत्यनेन

**कृष्ण समीपे, यमुनां प्रविश्य निःसरति, अस्त्येष कृष्णः पश्य। निवेद्य कृष्णाद्गृह्णाति, इत्यादिकेतु कृष्णाय निवेद्य इत्यर्थाद् गम्यते। क्वगच्छसि क्व गत इत्यादौ गमनपूर्विका स्थिति र्बोध्यते।**

**॥ इति कारकाणि ॥**

---

ननु निवेद्य कृष्णाद् गृह्णातीत्यादौ दृश्यते च पूर्वस्यापादानस्य प्रवृत्तिरिति चेत्तत्राह—कृष्णाय निवेद्ये ति अर्थाद् गम्यत इति। अत्र निवेदयते दीनार्थत्वात् सम्प्रदानमर्थाल्लभ्यते ततो न दोषः तथापीदृशप्रयोगस्तु कादाचित्को नतु साम्प्रदायिकः। गमनपूर्विका स्थिति र्बोध्यत इति—क्वकुत्र प्रभृतयः सप्तम्यर्थे निपातिताः। तेन क्वगच्छसीत्युक्ते गत्वा कस्मिन् स्थानेस्थास्यसीत्यर्थो हि प्रयोक्तुरभिप्रेत इति न तेन नियमहानिः शङ्कनीयेति भावः। एवञ्च कृष्णायाहूय नवनीतं ददातीत्यादौ दानस्य हि साध्यत्वेन मुख्यत्वात् पूर्वमपि सम्प्रदानं प्रवर्त्तत इत्यदोषः।

॥ इति व्याख्यातानि कारकाणि ॥

---

श्यामरामः मध्यपदलोपश्च। प्रत्याङ् पूर्वस्य श्रुवः प्रयोगे प्रार्थयिता सम्प्रदानं स्यात्। प्रतिपूर्व आङ्पूर्वश्च श्रुरभ्युपगमे वर्त्तते इत्याह प्रार्थयन्तमिति। तं भक्तं। प्रार्थयन्तमित्यत्र प्रार्थयमानमिति पाठः सभ्यः। चुरादौ अर्थधातोरात्मपदिषु लिखितत्वात्। यद्वा, पारायणमते चुरादिमात्रस्यार्थधातोरुभयपदित्वमिति दुर्गमसङ्गमनी। पुरुषोत्तममतमाह पूर्वस्येति। शृण्वद्भ्यः पूर्वं प्रार्थयमानेभ्यः प्रतिशृण्वन्ति वयमेतद्वः करिष्यामः इत्यङ्गीकारं कुर्वन्ति॥ ९६॥



अथ उपपदविष्णुभक्तयः ।

**९७. कृष्णप्रवचनीयैं र्योगे द्वितीया ।**

**ते चैते—**

लक्षणवीप्सेत्थम्भूतेष्वभिर्भागे परिप्रती ।
अनुरेषु सहार्थे च हीने तूपश्च कथ्यते ॥

**कर्म प्रवचनीया इतिप्राञ्चः। लक्षणं चिह्नम्, वीप्सा युगपत् स्वजातीयानां व्याप्तिः, इत्थम्भूतं प्रकारविशेष प्राप्तिः। एतेष्वभिः कृष्णप्रवचनीयः। तत्र लक्षणे— कृष्णमभि पतति पुष्प वृष्टिः। वीप्सायाम्— गोपीं गोपोमभिक्रीडति कृष्णः। इत्थम्भूते—कृष्णमभिभक्तोऽसौ,**

क्रियासम्बन्धसापेक्षाः षट्कारकविष्णुभक्तीः, प्रसङ्गात् सम्बन्ध षष्ठीश्च प्रदर्श्य सम्प्रति क्रियासम्बन्ध निरपेक्षा विष्णुभक्ती र्निरूपयिष्यन्नुपक्रमते—अथ उपपदेति। पदस्य समोपमुपपदम् तस्य, उपपदसम्बन्धि विष्णुभक्तय इत्यर्थः। निरूप्यन्त इति शेषः। पदशब्देनात्र सुवन्तरूपमेव ग्राह्यम् पारिशेष्यात्। क्रियासम्बन्ध विशेषीत्यनेन प्राक् तिङन्तसम्बद्धस्य हि कारकत्वनिर्देशादिति भावः।

**अमृता०**—९७. तत्र द्वितीयामाह—कृष्णप्रवचनींयैरिति। कृष्णं कृष्णगुणलीला उक्तवन्त इति कृष्णप्रवचनीयाः। भव्य गेय प्रवचनीयेत्यादिना भूते कर्त्तरि अनीयो वक्ष्यते। संज्ञा शब्दोऽयं यथा कथञ्चिद् व्युत्पन्नः। एते क्रियां न द्योतयन्ति। यथाह—क्रियाया द्योतको नायं सम्बन्धस्य न वाचकः। नापि क्रियापदापेक्षी सम्बन्धस्य तु भेदकः॥ इति॥ अस्यार्थः—अयं कृष्णप्रवचनीयः क्रियां न द्योतयति, यथा अनुभवतीत्यादौ, न तथा लक्षणादिष्वित्यर्थः। सम्बन्धं न वक्ति, तस्य तु वाचिका षष्ठी नतु द्वितीया। तथा निष्क्रान्तो मधुपुर्या निर्मधुपुरिरितिवन्न च क्रियान्तरमपेक्षते, किन्तु सम्बन्धस्य भेदको विशेषकः, यथा कृष्णमभि पुष्पवृष्टिः, कृष्णसम्बन्धिनी पुष्पवृष्टिरित्यर्थः।

के च कृष्णप्रवचनीयाः किंलक्षणा वा ते इत्याकाङ्क्षायां तान् निर्दिशति—लक्षणेत्यादिपद्येन। प्रत्येकञ्च लक्षयति वृत्तौ—लक्षणं चिह्नमित्यादि। कृष्णमभीत्यादि—अत्र लक्ष्य लक्षणाभावः सम्बन्धः अभिना द्योत्यते; तत्र लक्ष्यः कृष्णः, लक्षणं पुष्पवृष्टिरिति। गोपीं गोपीमभीति—अत्र साध्यसाधनरूपः सम्बन्धः अभिना द्योत्यते, वीप्सा तु द्विर्वचनेन।

भक्तत्वप्रकारविशेषं प्राप्त इत्यर्थः। लक्षणादिषु भागे च परिप्रती; तत्र त्रिषु—कृष्णं परि इत्यादि पूर्ववत्, एवं प्रति। भागे—यत् कृष्णं परिस्यात्, यत्कृष्णं प्रति स्यात् तत् देहि। अत्र धातुयोगाभावेनोपेन्द्रत्वाभावात् षत्वाभावः।

अनु र्लक्षणादि चतुर्षु सहार्थे च। अत्र चतुर्षु कृष्णं अनु इत्यादि पूर्ववत्। सहार्थे—कृष्णमनुगच्छन्ति गोपाः। चकाराद्धेतौ च,—हरिभक्तिमनु सुखम्। अनुश्चोपश्च हीने—अन्वर्ज्जुनं योद्धारः, उपार्ज्जुनम्।

## ९८. अतिरतिक्रमणे।

सर्वानति राजते कृष्णः। राधिकामधिवचनजातमित्यपि दृश्यते।

---

गोपी साधनम्, क्रीडा साध्या। कृष्णमभिभक्त इत्यत्र विषयविषयिरूपः सम्बन्धः, कृष्ण विषये भक्तत्वलक्षणं कश्चित् प्रकारविशेषमापन्न इत्यर्थः। पूर्ववदिति—कृष्णं परि पतति पुष्पवृष्टि रित्यादि योज्यम्। एवञ्च कृष्णं प्रति पततीत्यादि। यत् कृष्णं परिस्यादिति—यत् कृष्णस्यांशं भजते तद्देहीत्यर्थः। इह स्वा-स्वामिलक्षणः सम्बन्धः।

कृष्ण प्रवचीयानामुपेन्द्रसंज्ञाबाधकत्वं ज्ञापयति—धातु योगाभावेनेत्यादि। अत्र परेः धातुना सहयोगो नास्ति, ततो न तस्योपेन्द्रत्वमिति—उपेन्द्रप्रादुर्भ्यामस्तेः सः ष इत्यनेन षत्वं न प्राप्तम्। अनेन च—अभिपततीति कृष्णं लक्षीकृत्य पतति, गोपीं गोपीमिति ताः प्राप्य क्रीडतीत्यादि गम्यमानक्रियाभिः सहापि कृष्णप्रवचनीयानां योगसम्भावना निर्मूलीकृता। सहार्थ इति—अत्र सहभावरूपः सम्बन्धः वक्ष्यमाण सहार्थ तृतीयाया उपमर्दको विधिरयम्। प्रकारस्य समुच्चयार्थं व्यञ्जयन् अनुक्तार्थञ्चाकर्षति—चकाराद्धेतौ चेति। अत्र "अनु लक्षणे" इति पृथक् सूत्रमाकलितं मुनिना तत्र हेतुभूतलक्ष इतितदर्थः। तेन हरिभक्तिमनुसुखमिति हरिभक्त्या सुखम्, हरिभक्तिहेतुकं सुख मित्यर्थोऽवसीयते। इह "हेतौ स्तृतीया" इति वक्ष्यमाण तृतीयापवादिका द्वितीयेयम्। अन्वर्जुनं योद्धार इति—योद्धारोऽर्जुनात् हीना ऊणा इत्यर्थः। अत्र हीनोत्तमलक्षणः सम्बन्धः।

अमृता०—९८ अतिरिति। अतिक्रमणार्थे द्योत्ये अतिः कृष्णप्रवचनीयः स्यात्। सर्वानिति सर्वानतिक्रम्य राजत इत्यर्थः। सर्वानिति निखिल भगवत् स्वरूपान्, रूपवेणुमाधुर्यादि चतुभिरसाधारण गुणैरिति शेषः। राधिकामिति—राधिकामधि अधिकृत्य

---

बाल०—अनु। प्रशस्यमानं वचनमुक्तिर्यस्य स प्रशस्यमानवचनः। अनुप्रतिपूर्वस्य गृणः गृणोतेः प्रयोगे प्रशस्यमानवचनं सम्प्रदानं स्यात्। अनुगृणातीति गॄ शब्दे क्र्यादिः। तां गीतां शंसन्तं कथयन्तं। गृणद्भ्यः कथयद्भ्यः अनुगृणन्ति शब्देनानुगच्छन्ति। अनुगिरतीति गॄ निगरणे तुदादिः॥ ९७॥

**९९. कालाध्वनोरत्यन्त व्याप्तौ द्वितीया, अपवर्गे तु तृतीया ।**

तत्र गुणेन व्याप्तौ—सर्वायुर्विष्णुभक्तः । क्रियया—यामं हरिपूजकः । द्रव्येण—सर्वदिनं हरिर्नैवेद्यम् । एवं क्रोशं यमुना कुटिला इत्यादि । जन्म जन्म यदभ्यस्तमिति तत्सम्बन्धो मरण पर्यन्तमित्यर्थः । अत्रतु कर्मत्वाभावात् कालाध्वभावदेशानामित्यादिवन्न तत् प्रत्ययाः । भावे तु मासमास्यते क्रोशं सुप्यते ।

---

लक्षीकृत्येत्यर्थः तस्मादधेरपि कृष्णप्रवचचनीयत्वं मन्तव्यम्, जयदेवादि शिष्टप्रयोग दर्शनादिति भावः । अत्र लक्ष्यलक्षणभावः सम्बन्धः । इति कृष्णप्रवचनीयाः ।

**अमृता०**—९९. कालेति । अत्यन्त व्याप्ति निरवच्छिन्न व्याप्तिः । कालस्य अध्वनश्च अत्यन्त व्याप्तौ सत्यां तत्तद्वाचि शब्देभ्य उत्तरे द्वितीया स्यात् । तत्रअन्तर्भूत क्रियान्तरं नास्ति तदर्थं बचनमिदमिति पद्मनाभः । अपवर्गे गम्ये तु कालाध्वनोरत्यन्त व्याप्तौ कालाध्ववाचिभ्यां तृतीया स्यात् । अत्यन्तव्याप्तिश्च गुणक्रियाद्रव्यैः सम्भवतीति दर्शयति क्रमेण—सर्वायुरिति । दयादाक्षिण्यादिवत् भक्तत्वं गुणः, गुण-गुणिनोरभेदोपचारात् भक्तस्यापि गुणवाचित्वमिष्यते । गुणेन सर्वायुरिति कालस्य अत्यन्तव्याप्तिः । याममिति—यामः प्रहरः, हरिपूजक इति क्रियावाची विशेष्यपदं, पूजनमितिवत् । पूजनञ्च यामस्यनिरवच्छेदेनेति अत्यन्तव्याप्तिः । एवं हरिर्नैवेद्यमित्यादौ च ज्ञेयम् । क्रोशमिति—क्रोशपरिमितिमध्वानं यावत् कुटिलेत्यर्थः । एवञ्च क्रिया द्रव्याभ्याम्—क्रोशमधीते, क्रोश त्रयं गोवर्द्धन इति । अत्र तु कर्मत्वाभावादिति—अन्तर्भूत क्रियान्तरगम्यत्वविरहात् कर्मत्वाभाव इति कर्मप्रत्यया न स्युरित्यर्थः । अत्यन्तव्याप्ताविनिकिम्—मासस्य द्विरधीते, क्रोशस्यैकदेशे पर्वतः ।

---

**बाल०**—अशिष्ट । अशिष्टस्य व्यवहारोऽशिष्टव्यवहारस्तस्मिन् गम्ये संपूर्वस्य यच्छतेः प्रयोगे संप्रदाने तृतीया भवति । अशिष्टो मूर्खः । तत्प्रसादं विष्णुप्रसादं । वहिर्मुखेभ्यो विष्णुप्रसाददानं अशिष्टव्यवहारः । संप्रयच्छत इति दान दाने । दानः सा चेच्चतुर्थ्यर्थ इत्यनेन आत्मपदं । संयच्छते स्म गोप्येष्ट श्रीशः संयच्छते श्रियै इति कस्यचिदुदाहरणं । अत्र श्रीशस्य गोपीं गोपीं प्रत्यभीष्टदानं अशिष्टव्यवहारः श्रियं प्रति न । कथमिति । यजधातोर्दानार्थत्वात् पशु रुद्राय यजते इति भवितुमर्हतीत्ययमत्र विरोधः । सिद्धान्तमाह पशुनेति देयेन पशुनेत्यर्थः । देयेनेत्यर्थलब्धं । सोपानमिति सिद्धान्तस्येति शेषः । आरोहणं स्यात् सोपानमित्यमरः । पशुना रुद्रं प्रीणयतीत्यस्यापि पशुं रुद्राय ददातीत्येव फलितार्थः, अतएव पशुं रुद्राय ददातीत्यर्थ इत्युक्तं । अन्यथा तद्विरुद्धं स्यादिति ज्ञेयं । प्राचीनैरप्येतत्प्रकारान्तरेणोक्तं । तद्यथा यजतेः कर्म करणं सम्प्रदानस्य च कर्म । यजतेः कर्मसम्प्रदानयोर्युगपत् करणकर्मणी ।। ९८ ।।

**बाल०**—कर्त्तु । कर्त्तुरधीनमायत्तं । तथाच । क्रियासाधने प्रकृष्टं सहायं यत् कारकं तत् करणसंज्ञं स्यात् । ननु कर्त्तुः सहायं करणमित्येवास्तु लक्षणमतेन सूत्रेत्र सर्वत्र प्रयोग

**फलप्राप्त्या क्रिया समाप्तिरपवर्ग स्तस्मिंस्तु तृतीया। अहोरात्रै श्चतुः षष्ठ्या सर्वमध्यैष्ट माधवः।**

---

अपवर्गशब्दं विवृणोति—फलप्राप्त्येति। क्रियासमाप्तिः प्रायः सर्वत्रैवास्ति, किन्तु यदा पलप्राप्तिद्वारा क्रियासमाप्ति गंम्यते तदैवापवर्गः स्यात्। यद्यपि सामान्यतो व्याख्यातं—कालाध्वनोरत्यन्तव्याप्तावपवर्गे तृतीयेति तथापि सामर्थ्यात् क्रियात्यन्त संयोग एवेष्टः। यथाहि—न्यासः—तच्च क्रियात्यन्तसंयोगस्यैव सम्भवति नान्यस्येति सामर्थ्यादत्र क्रियात्यन्त संयोग एव गृह्यत इति। अहोरात्रैरिति–धेन्वनडुह्स्त्रीपुंसादयश्चेति केशवारामः, इरामहरश्च। अत्र अध्ययनस्य फलं यो ज्ञानलाभः स च चतुः षष्ठ्या अहोरात्रैरेव सम्पन्नः, तदनन्तरमेवाध्यायनं निवृत्तमित्यर्थः। चतु. षष्ठ्येति—विंशत्याद्याः सदैकत्वे इत्येकवचनम्। अपवर्गे किम्—सम्वत्सरंव्याकरणमधीतं जडेन; न चानेन ज्ञातमित्यर्थ।

---

सिद्धिः स्यात् प्रकृष्टस्य किं प्रयोजनं। सत्यं। यदा एतद्ब्रवीषि तदा हस्तपादादिकानास्तु चालनरूपेण सहायत्वं किं विद्यते अतो हेतोः प्रकृष्टमित्युक्तं। अधीनमिति किं। अधीनमित्युक्तं कृष्णेन सुखं लभते लोक इत्यत्र कृष्णस्य विवक्षान्तररहितत्वेन सुखसिद्धौ योग्यतया हेतुतायां अनधीनत्वेऽपि सहायत्वांशमवलम्ब्य योऽतिव्याप्तिदोषस्तत्परिहाराय। अलक्ष्ये लक्षणगमनमतिव्याप्तिः तर्हि कर्त्तुरधीनं प्रकृष्टमित्येवास्तु लक्षणं, सहायमिति किं, सहायमित्युक्तं वह्निना सिञ्चतीत्यादौ तद्दोषपरिहाराय इति ज्ञेयं। करणं तावद्द्विविधं मुख्यं गौणञ्च। आद्यं स्वरूपभिन्नं यथा वंशीवाद्यं अन्यत् स्वरूपाभिन्नं स्वरूपभूतमिति यावत् यथा श्रीकृष्णहस्तः। यथा प्राचीनैरुक्तं। यद्यपि क्रियासिद्धौ बहूनिसाधनानि व्याप्रियन्ते तदा तेषु मध्ये अनेनैतत् करोमीति प्रकृष्टोपकारकमन्तरङ्गं विवक्षितं यत् तत् करणं। एतेनाधीनप्रकृष्टयोरपवादं वारयति। तथाचोक्तं। कारकव्यवधानेऽपि क्रियानिष्पत्तिकारणं। यद्वै विवक्षितं तेषु करणं तत् प्रकर्त्तितं। स्थाल्या पच्यत इत्येषां विवक्षा दृश्यते यतः। यदाह। कारणं खलु सर्वत्र कर्त्तृव्यापारगोचरः। तिरोदधाति कर्त्तारं प्राधान्यं तन्निबन्धनं। ननु काष्ठैः स्थाल्यामोदनं पचतीत्यत्र काष्ठानामुज्ज्वलनेन स्थाल्यामोदनं पचतीति दात्रतीब्रेण धान्यं लुनाति इतिच कथं नोक्तं तस्य तस्यैव करणत्वसम्भवादिति चेत्तदैवं वाच्यं। नहि स्वव्यापार व्ययायः कारणानां कारकतामुपहन्ति सर्वत्र तथा भावप्रसङ्गात्। नहि पाके करणभूतानां काष्ठानां ज्वलनमवान्तरव्यापारस्तेषां करणत्वमपहन्ति। तदुक्तं। ज्वलनाज्जायमानेऽपि पाके तत्समनन्तरं। काष्ठानां करणत्वं यत् प्रागुक्तं तन्न हीयते। वह्निना दह्यते काष्ठं कुद्दालेन निखन्यते। अश्वेन नीयते ग्रामो धान्यं दात्रेन लुयते। आह्वयत इति ह्वेञ् धातुरत्र शब्दार्थः अत्र स्पर्द्धाभावात् आङ्ः स्पर्द्धे इत्यनेनात्मपदं न भवतीति ज्ञेयं। उत्तरीयं वस्त्रविशेषः। संव्यानमुत्तरीरञ्चेत्यमरः। भ्रमयतीति भ्रमुअनवस्थाने प्रेरणे णिः। लभत इति डु लभष प्राप्तौ। पञ्चमी वक्ष्यते इति। गुणाद्धेतोः पञ्चमी तृतीया वेत्यनेनेति शेषः। प्रसादशब्दोऽत्र प्रसन्नतावाचकः। प्रसादन्तु प्रसन्नतेत्यमरः॥ ८८॥

## १००. अभित आदिभिर्योगे द्वितीया ।

अभितः कृष्णम्, परितः कृष्णम्, उभयतः कृष्णम्, सर्वतः कृष्णम्, समया कृष्णम्, निकषा कृष्णं गोपाः । एतद् द्वयं निकटार्थे । हा कृष्णविमुखम् धिक् कंसम्, तस्मै तस्मै च कुत्सास्तु इत्यर्थः । अत्रैवार्थे हाशब्दयोगे क्षीरस्वामिना द्वितीया दर्शितत्वात् । कथं— हा रमणीनां गतः कालः, हा देवि ! धीराभव ? पूर्वत्र वाक्यार्थेनैव सम्बन्धात्, उत्तरत्र सशोक सम्बोधने हा शब्दात् ।

---

**अमृता०**—१००. अभित इति । एभिरव्ययै र्योगे द्वितीया विष्णुभक्तिः स्यात् । अभिपर्युभय सर्वशब्देभ्य स्तद्धिततस् प्रत्ययेन अभित आदयश्चत्वारो निष्पन्नाः, तसन्ताश्चाव्ययानीति तत्रैव वक्ष्यते । तत्र अभितः कृष्णमिति कृष्णस्य पार्श्वद्वये गोपा इत्यर्थः । एदमुभयतः कृष्णमिति च । परितः कृष्णमिति—कृष्णस्य चतुर्दिक्षु गोपा इत्यर्थः । एवं सर्वतः कृष्णमिति । समया निकषेति द्वे निकार्थद्योतकाव्यये । एषां प्रयोगे षष्ठ्यपवादिका द्वितीया ।

हा विषादशुचर्त्तिषु निन्दायाश्च । तत्रनिन्दायामेव द्वितीया स्यात् । धिक् भर्त्सन-निन्दयोः, तत्र निन्दने हि द्वितीया । ननु विषादाद्यर्थे द्वितीया न भवतीत्यत्र किं प्रमाण-मित्याशङ्कमानं प्रति क्षीरस्वामिनः प्रयोगं द्रष्टुमुपदिशति—अत्रैवार्थ इति । क्षीरस्वामी अमरकोषस्य सुप्रसिद्धप्राचीन टीकाकृत् । तथाहि तदुक्तिः—विषादे हा रमणीनां गतः कालः, शोके—हा प्रिये जनक राजपुत्रि ! आर्त्तौ (पीडायां) हा हतोऽस्मि; निन्दायाश्च— हा श्रोत्रियानिति । अन्तिमप्रयोग एव ग्रन्थकृतो लक्ष्यः । तत्र समाधत्ते—पूर्वत्रेति । वाक्यार्थेनैवसम्बन्धादिति—अभितआदिभिः सह यस्य योग स्तस्माद् द्वितीयेति सूत्राभि-प्रायः । इह तु हाशब्देन वाक्यार्थस्य योगः, तत्रतु विष्णुभक्तियोगासम्भवान्नैष सूत्रस्य विषयः; विषादरूपार्थ स्तात्पर्यादेवाधिगम्यते । हा देवीति—अत्र हा शब्दः सशोकसम्बोधन द्योतकः, तेन कुत्सार्थाभावान्न द्वितीया । एवं हापितः क्वासि हे सुभ्रु ! इति भट्टिः ।

पुनराशङ्कते—कथमिति । धिगास्तां मम वीर्यस्येत्यत्र कुत्सार्थे विद्यमानेऽपि न द्वितीयेति विरोधमानम् । तत्र सङ्गतिं नयति—तत्र तादर्थ्ये हि द्वितीया इष्यते, इहतु तन्न विवक्षितम्, किन्तु सम्बन्धसामान्यमिति । धिग् जाल्मेति—जाल्मो मूर्खः । इह धिक् शब्देन जाल्मस्य न योगः, किन्तु आक्षिप्तपदस्य, तच्च निषिद्धाचारणादिरूपम् । तेन मिथ्याभाषिणं धिक्, हे जाल्म ! इति पश्चात् सम्बोधनम् । सम्बोधनस्य अन्तर्भूताभिमुखी-करणरूपार्थत्वान्न तत् कस्यापि योगमपेक्षत इति मूलमनुध्येयम् ।

---

**बाल०**—दिवः । दिवः प्रयोगे करणं कर्म वा स्यात् । पक्षे करणमेव । दीव्यतीति दिवु क्रीड़ादिषु । अक्षशब्दः पाशकवाचकः । युगपदेव संज्ञाद्वयं मन्यन्ते तेन युगपत्

कथं धिगास्तां मम वीर्यस्य ? तत्र तत्रार्थ्ये एवेष्टिः, अत्र तु सम्बन्ध विवक्षा। धिग् जाल्मेत्यादौ धिक् शब्देन न योगः, किन्तु प्रथमं कुत्सयित्वा पश्चात् सम्बध्यते। उपर्युपरि सर्वं हरिः। एवमध्यधि। कथमुपर्युपरि बुद्धीनां चरन्तीश्वरबुद्धयः ? उपर्युपर्यादिषु सामीप्यार्थ एवेष्टिः, अत्रतु वीप्सामात्रमिति।

अधोऽधो गोवर्द्धनं वृक्षाः। हरिभक्ति यावत् सुखम्। बुभुक्षितं न प्रति भाति किञ्चित्, तस्मै नकिञ्चिद् रोचत इत्यर्थः। अन्तरेण हरिं न सुखम्, तंविना नसुखमित्यर्थः। अन्वरा त्वां मां हरिः, तवमम मध्ये हरि रित्यर्थः। षष्ठ्यपवादत्वाद् युष्मदस्मदभ्यामेव द्वितोया, हरेस्तु नाममात्रार्थस्यान्तरङ्गत्वात् प्रथमैव। एवमन्यत्रापि।

---

उपर्युपरि सर्वंहरिरिति—सर्वेषां निकटे हरिर्वर्त्तत इत्यर्थः। उपर्युपर्यादिषु सामीप्यार्थे हि द्वितीयेष्यते, अत "उपर्यध्यधसां सामीप्ये" इतिद्विरुक्तिर्वक्ष्यते। बुद्धीनामिति मनुष्यबुद्धीनां उपर्युपरि अग्रे अग्रेईश्वरबुद्धयश्चरन्ति, ईश्वरस्य हि सर्वबुद्धि प्रवर्त्तकत्वात्। तस्मात् सामीप्यार्थाभावादिह न द्वितीया। ततो द्विरुक्तिस्तु आभीक्ष्ण-वीप्सयोरित्यनेन। तत्र आदिपदेन—अध्यधि अधोऽधः एतयोश्च ग्रहणम्। अधोऽधो गोवर्द्धनं वृक्षा इति गोवर्द्धनस्य समीपे वृक्षा इत्यर्थः। अतः षष्ठ्यर्थे द्वितीयेयम्। यावदित्यव्ययं मर्यादार्थे, हरिभक्तिपर्यन्तंसुखमित्यर्थः। बुभुक्षितमिति—तस्मै न किञ्चिद् रोचत इति त्वर्थकथनम्, बुभुक्षितस्य न किञ्चित् स्फुरतीति भावः। तेन षष्ठ्यर्थे द्वितोया। न च वक्तव्यम्—कृष्णप्रवचनीयसंज्ञकेनहि सिध्यति द्वितीया, किमनेनाधिकं सिद्धमिति ? अर्थाधिक्यमत्रावगमात्। तत्र लक्षणाद्यर्थाः नियताः, इहतु तदभावान्न हि द्वितीयाप्राप्तिरिति अभित आद्यन्तर्भाविता एते। इहोपेन्द्रत्वश्चास्य निषित्वमिति धात्वर्थद्योतकत्वञ्चापास्तम्।

ननु त्वांमामन्तरा हरिरित्यत्र अन्तरा शब्देन हरेरपि योगः सम्भवेत् कथं तस्मान्न द्वितीयेति चेत्तत्राह—षष्ठ्यपवादकत्वादिति एषा द्वितीया व्यवस्था प्रायः षष्ठीबाधिका। ततो यत्र षष्ठी सम्बन्धो गम्यते तत्रैवद्वितीया विधीयते नेतरत्र। हरिशब्दाद् द्वितीयां सत्यामर्थबोधे बाधा स्यात्। विशेषतो नाममात्रार्थस्य ह्यन्तरङ्गत्वात् तत्र प्रथमाया एवावकाशः। अथ कथमन्तरङ्गत्वं तस्य ? तदुच्यते,—अर्थस्तावत् प्रकृतेः स्वरूपानुबन्धी धर्मः, शब्दोच्चारणमापेण प्रथममेव तस्योपस्थितेः; विभक्ति विवक्षा तु तत् पश्चात्। तेनोभयोरपि प्रकृत्यर्थाश्रितत्वेऽपि बुद्धौ पूर्वापेक्षितस्य नामार्थस्य ह्यन्तरङ्गत्वाद् वलवत्त्वम्, उपपदविष्णुभक्तौ तु सनामार्थो विष्णुभक्त्या व्यवहित इति विवेकः।

---

संज्ञाद्वयमननेन मनसा दीव्यतीति या सा मनसादेवीत्यत्र कर्मोपपदे कर्मण्यणित्यनेन अण् प्रत्ययः सिध्यति। अक्षैर्देवयते कृष्णः राधया इत्यत्र प्रयोज्यस्य कर्मत्वं न भवति।

## १०१. सहार्थैरप्रधाने तृतीया ।

सहार्थो द्विविधः, क्रिया गुण द्रव्यै स्तुल्ययोगिता, विद्यमानतामात्रञ्च । आद्यो यथा—रामेण सह क्रीडति कृष्णः, रामेण सह सुन्दरः, रामेण सह गोमानिति च । कृष्णस्यात्र क्रियादि सम्बन्धः साक्षादेव, रामस्य तु प्रतीयमान इति रामस्याप्राधान्यम् । किन्तु प्रथमद्वये कर्त्तृसहभावः, तृतीये तु सम्बन्धसहभावो ज्ञेयः । एवं कर्मसहभावोऽपि । यथा—गानेन सह नृत्यं करोतीत्यादि । एवं समं सार्द्धं साकं सत्रः । सहार्थे गम्येऽपि,—रामेण क्रीडति । अप्रधान इति किम्—रामेण

अमृता०—१०१. सहार्थैरिति । सहशब्दस्यार्थो विद्यते येषां ते सहार्थाः, तादृशैः शब्दै र्योगे अप्रधाने तृतीया विष्णुभक्तिः स्यात् । सहार्थविभज्य विशिनष्टि—क्रियेत्यादिभिः । तुल्यः समान श्चासौ योगश्चेति तुल्ययोग स्तस्य भावे ता । सा च तुल्ययोगिता क्रियया गुणेन द्रव्येन च सम्भवतीति क्रमेणोदाहरति—रामेणसहेति । अप्राधान्यमुपपादयति—"कृष्णस्येत्यादिना । क्रिया गुणद्रव्यैः सह कृष्णस्य सम्बन्धोहि साक्षात्, शाब्दबोधे विशेष्यतया कृष्णस्योपस्थितेः । रामस्य तु तत्तत् सम्बन्धः प्रतीयमानः, व्यवधानतो विशेषणतयौपस्थिते स्तस्याप्राधान्यात् तत्रैव तृतीया । षष्ठीबाधकमिदं प्रकरणम्; षष्ठी चाप्रधानादेव प्रवर्त्तते, अत स्तृतीयापि युज्यतेऽप्रधानात् । यतः प्रधानादन्तरङ्गतया नाममात्रार्थे प्रथमा सिद्धैवास्तीति तात्पर्यम् ।

प्रथमद्वयइति—गुणक्रिययोरुदाहरणयोः कर्त्तृसहभावः, कृष्णः क्रीडति रामश्चेति कर्त्तृत्वस्योभयत्र तुल्ययोगित्वम् । तृतीये द्रव्यतुल्ययोगित्वे सम्बन्धिसहभावः, द्रव्येन सहसम्बन्धात् गोसम्बन्धिना रामेण सह कृष्णस्य सहभाव स्तुल्ययोग इत्यर्थः । गोमानिति—गावोऽस्य सन्तीत्यर्थे मतुप्रत्यय स्तद्धितः । कर्म सहभावे गानेन सहेति—अत्र नृत्यस्य कृति क्रियासम्बन्धः साक्षात् गानस्य तु प्रतीयमान इत्यप्राधान्यात्तत्र तृतीया । कर्मणश्च कारकत्वात् प्राधान्यमेव । रामस्य प्राधान्येतु—कृष्णेन समं व्रजति राम इत्येवं प्रयोगेण भवितव्यम् ।

सहार्थेगम्येऽपीति—सहादि शब्द प्रयोगाभावेऽपि सहार्थे गम्यमान इत्यर्थः । रामेण क्रीडतीति—अत्र सहार्थो गम्यः । कर्त्तृसहभावेऽपि क्रीडायां कृष्णस्य हि नायकत्वमिति रामस्याप्राधान्यमित्यर्थः । व्यावृत्ति वाक्ये रामेण सहेति—यद्यपि शाब्दबोधे कृष्णस्य गां प्रति विशेषणत्वेनाप्राधान्यमस्ति तथापि गोसम्बन्धे राममपेक्ष्य कृष्णस्य प्राधान्यम्, गोकृष्णयोः परस्पर प्रणयविवशत्वख्याते र्न तत्र तृतीया ।

सहोभाविति—अत्रसहशब्दस्ययोगपद्यमर्थः । अत उभयोरेव क्रियासम्बन्धो युगपत्

अस्मन्मते तु भवत्येव । तेनादुद्रूपयद्रामं मृगेण मृगलोचना । मैथिली विपुलोरस्कं प्रादुर्बुर्भुर्मृगाजिनं । इति भट्टिप्रयोगात् । दिवस्तेन करणमिति कालापाः ।। १०० ।।

सह कृष्णस्य गौः । गोसम्बन्ध प्राधान्यात् । कृष्णान्न स्यात् । सहोभौ चरतो धर्ममिति तु द्वयोरपि प्राधान्यात् । अन्त्यो यथा—वाल कृष्णेन सह दधि मथ्नाति यशोदा इत्यादि ।

**१०२. तुल्यार्थैः षष्ठी च, तुलोपमाभ्यान्तु षष्ठ्येव ।**

रामेण तुल्यः कृष्णः, रामस्य तुल्यो वा । एवं सदृशइत्यादि । नेह—रामस्य तुला लक्ष्मणः । तुलोपमा शब्दाविह तुल्यार्थौ—विति भाषावृत्तिः । अर्थग्रहणाद् द्योतकत्वे तु न—कृष्णइव प्रद्युम्नः ।

**१०३. येनाङ्गेन निन्दा तस्मात् तृतीया ।**

---

साक्षात्तया विवक्षितत्वाद्द्वयोरेव प्राधान्यमिति न कुत्रापि तृतीयेति भावः । अन्त्य इति विद्यमानतात्मकः सहार्थः । इह बालकृष्णस्यावस्थानमात्रमुपलभ्यते नहि मन्थन क्रियायां तुल्य योगित्वम् । एवं सहैव दशभिः पुत्रैर्भारं वहति गर्दभोति च । विद्यमानेषु दशपुत्रेषु भारवहने न तस्याः कोऽप्युकार इत्यर्थः ।

**अमृता०**—१०२. तुल्यार्थैरिति । तुल्यार्थैः समानार्थैः शब्दै र्योगे तृतीया षष्ठी च स्यात्, तुलोपमा शब्दाभ्यान्तु षष्ठ्येव नतु तृतीया । तुल्य सम समान सदृश प्रभृतय स्तुल्यार्थाः । ननु तुल्यादि शब्दा धर्मिवाचिनः, तुलोपमा शब्दौ तु धर्मवाचिनौ, कथमेतौ तुल्यार्थावुक्त्वा व्यावृत्त्यते ? इत्याशङ्क्य प्राचीनमतोट्टङ्कनेन दोषं परिहरति—तुलोपमाशब्दाविति । अर्थग्रहणोद्देश्यं दर्शयति—द्योतकत्वे तु नेति । कृष्ण इवेति—इवशब्दो द्योतकाव्ययम् । द्योतकाव्ययं खलु पदान्तर सम्बन्धंबिना स्वार्थमपि द्योतयितुमसमर्थम्, अत आपेक्षिकम् । इह तु पदान्तरनिरपेक्षतया तुल्यवाचिन एव गृह्यन्त इति सूचनार्थं ह्यर्थशब्दग्रहणमित्याशयः । केचित्तु गुणीभूतैरपि सदृशादिशब्दै स्तृतीयामिच्छन्ति । तेन—सादृश्यं गतमपनिद्रच्यूतगन्धैरिति माघ प्रयोगः सङ्गच्छत इत्याहुः । वस्तुत इह गम्य सहार्थे तृतीयेति युक्तम् ।

**अमृता०**—१०३. येनाङ्गेनेति । येनाङ्गेन अवयवेन अङ्गिनो निन्दा लक्ष्यते तस्मादङ्गात् तृतीया स्यात् । सा च निन्दा अङ्गविकारेण हि भवतीति दर्शयति—दन्तेनेति । ननु दन्त एव वक्रो न पुनः कापुरुषः, कथं तर्हि वक्रशब्दः कापुरुषस्य तुल्यधिकरणतया प्रयुक्त इति चेत् ? तत्राष्टे—अङ्ग धर्म इति । अङ्गस्य दन्तस्य यो धर्मः

---

**बाल०**—परि । परिक्रयणेऽर्थे करणं सम्प्रदानं वा स्यात् । पक्षे, करणमेव । परिक्रीत इति डु क्रीञ् द्रव्यविनिमये कर्मणि क्तः नियते नियमविषयीकृते ॥ १०१ ॥

**बाल०**—स्तोका । स्तोकादिभ्य उत्तरे असत्ववचने गुणवचने करणे पञ्चमी वा स्यात् । स्तोकादयः शब्दाः स्वभावादेव गुणवचनाः यदा त्वभेदोपचारात् स्तोकादिगुणवति सत्वे वर्त्तन्ते तदा सत्ववाचिनो भवन्ति । मुक्त इति मुचॢमोक्षणे क्तः । तत्र द्रव्ये ॥ १०२ ॥

दन्तेन वक्रः कारुषः। अङ्गधर्मोऽत्राङ्गिन्यारोप्यते, षष्ठी स्थानापवादः सर्वम्, तेन नेह—दन्ता वक्रा अस्य।

## १०४. विशेष लक्षणात्तृतीया।

विशेषप्राप्तिचिह्नादित्यर्थः। कौस्तुभेन भगवन्तमद्राक्षीत्। क्रियावैशिष्ट्य ज्ञापकत्वेऽपि। न्यक्षेण बीक्षते कृष्णम्। कार्त्स्न्येन भजति प्रियाम्।

---

वक्रतारूपविकारः, स इह अङ्गिनि कारुषे आरोपितः, ततो दन्तेनवक्रः कारुष इति व्यपदेश इत्यर्थः। एवमक्ष्णा काणः, पादेनखञ्जः, पृष्ठेन कुब्ज इत्यादयश्च। विकार स्तवद्गुनेन वृद्धा वा भवति, तत्र प्रथमप्रकर उदाहृतः, वृद्धया च यथा—षड्गुल्या वादकः, मुखेन त्रिलोचभ इत्यादयः। षष्ठीस्थानापवाद सर्वमिति—प्रायः सर्वप्रकरणोक्तविधानं षष्ठी स्थानस्यापवाद इति कथितमेव तत्रतत्र। तेन दन्ता वक्रा अस्य इत्यत्र सत्यामपि निन्दायामङ्गस्य षष्ठी स्थानत्वविरहान्न हि तत्र तृतीयेति भावः।

अमृता०—१०४. विशेषेति। लक्ष्यते ज्ञायतेऽनेनेति लक्षणं चिह्नम्, विशेषलक्षणादुत्तरे तृतीया स्यात्। विशेषलक्षणं स्फुटयति—विशेषप्राप्ति चिह्नादिति। विशिनष्टीति-विशेषः सामान्यव्यावर्त्तक इत्यर्थः। तेन सामान्यलक्षणं व्यवच्छिनत्ति यत् तस्माद् विशेष-चिह्नात् तृतीयेत्यर्थः। तच्च द्विविधम्—स्वरूपं तटस्थञ्चेति। तत्राद्यम्—कौस्तुभे न भगवन्तमद्राक्षीदिति। तथाहि—वैकुण्ठलोकगता भगवत्पार्षदा अपि तत्सरूपाः शङ्ख चक्रादिधारिणो भवन्ति किन्तु तत्र भगवत्त्वोपलम्भकविशेषचिह्नम् कौस्तुभ एव, यत् खलु स्वपाषदेषु नदृश्यते, तच्च सदा तस्य स्वरूपस्थमेवेति। एवं जटाभिस्तापस इत्यादि च। द्वितीयं यथा—पुस्तकेन छात्रं, काकेन गृहमपश्यदित्यादि। अत्रपुस्तकादीनां छात्रादिषु विशेषप्राप्तिचिह्नत्वेऽपि नपुनरात्यन्तिक योगः, समयान्तरे तद्योगविश्लेष सम्भवादिति। तदेतदुभयत्र ह्युपलक्षणे तृतीयेति केचित्। इत्थम्भूत लक्षणे तृतीयेति पाणिनिः।

इत्थं वस्तुनो विशेषता ज्ञापकात् तृतीयां व्यवस्थाप्य क्रियायाश्च विशेषता ज्ञापकात् तामेव व्यवस्थापयति—क्रियावैशिष्ट्यज्ञापकत्वेऽपीयि। न्यक्षेणेति—कात्स्न्येन (साकल्येन) कृष्णं वीक्षते राधा कुञ्जगृहे इति शेषः। न्यक्षत्रमत्रवीक्षणस्य हि वैशिष्ट्यज्ञापकमिति विशेषचिह्नमेव तथाप्ययंभेदः—बीक्षणस्य प्रकारविशेषत्वेन न्यक्षमपि वीक्षात्मकम् नतु ततो भिन्नम्। प्रथमोक्त विशेष लक्षणे तु स्वरूपस्थत्वेऽपि कौस्तुभस्य कृष्णाद् भिन्नत्व-मिति। तदेतत् भक्तिरसामृतटीकायां व्यक्तीकृतं स्वयं ग्रन्थकृता—"आनुकूल्येन कृष्णानु-शीलनं भक्तिरुत्तमा" इत्यत्र। आनुकूल्येनेति विशेषणे तृतीया नतूपलक्षणे। शङ्खिण आनयेत्युक्ते यथाशङ्खसहितमेव जनानामागमनमुपलभ्यते तथानुकल्पस्य च भक्तित्वं सिध्यति। उपलक्षणे तृतीयेति स्वीकृते तु—शङ्खिणो भोजयेत्युक्ते यथा जनानामेव भोजनं प्रसज्यते नतु शङ्खाणां तथानुकूल्यस्य नहि भक्तित्वसिद्धिः स्यादिति दिक्।

---

बाल०—तृप्त्य। तृप्तिरर्थो येषां ते तृप्त्यर्थोस्तेषां करणे षष्ठी वा स्यात्। तृप्त इति तृप प्रीणने कर्त्तरि क्तः॥ १०३॥

न्यक्षं कार्त्स्न्य-निकृष्टयोः। सुखेन भजति। सुखं भजतीत्यादिकन्तु गुणगुणित्वविकल्पात्।

**१०५. प्रकृत्यादिभ्य स्तृतीया।**

प्रकृत्या कृष्णः, जात्या गोपालः, जनुषा करुणः, रामेणानुजः, नाम्ना मर्जुनः, आत्मना द्वितीयः स्वभावेनोदारः। प्रकृत्यादि सम्बन्धेनेत्यर्थः। तृतीयेयं भवत्यादि क्रियाया हेतुत्वं गमयतीति कश्चित्। एवं समेन चलति, विषमेण धावति, समादौ देश इत्यर्थः समे चलतीत्यादि च दृश्यते। कर्मणी इमे इति केचित्, क्रिया विशेषणे इति कश्चित्। प्रायेण वैष्णवः, वैष्णवताभिव्यञ्जक धर्म प्राचुर्य सम्बन्धेनेत्यर्थः। गोत्रेण गार्ग्यः,

---

इदमेव प्राक् क्रियाविशेषण प्रसङ्गे व्यधिकरण विशेषणतया संज्ञितम्। एव कार्त्स्न्येन भजति प्रियाम्, सुखेन विचरति व्रजे इत्यादि। कार्त्स्न्यंसुखञ्च तत्तत्क्रिया-विशेष लक्षणत्वेऽपि तत्तत्प्रकार विशेषत्वेन भजनाद्यभिन्नमेवेत्याशयः। ननु तर्हि सुखं भजतीत्यत्र कथं द्वितीया दृश्यते? तत्समाधत्ते—गणिगुणत्वविकल्पादिति। गुणी च गुणश्च तयोर्भावो गुणिगुणत्वं, तस्यविकल्पात्। अयमभिप्रायः—धर्मधर्मिणोरभेदोपचारवद् गुणगुणिनोरप्यभेद उपचर्यंते, यथा क्रोधो दुर्वासा, पापः कंस इत्यादि। एवं खलु सुखादि शब्दा यदा गुणवाचिन स्तदा व्यधिकरणक्रियाविशेषणतया तेभ्य स्तृतीया, यदा गुणि-वाचिन स्तदा तुल्याधिकरणविशेषणतया तेभ्यो द्वितीया स्यादित्यविरोधः। तथा हि—सुखवत्त्वं कर्त्तर्यारोप्यमाणमिह सुखत्वेनोच्यते, तेन सुखं सुखी यथा कर्त्ता भवति तथा भजतीति सुखस्य गुणिवाचित्वभङ्गी कर्त्तव्यमिति धीः।

**अमृता०**—१०५. प्रकृत्यादिभ्य इति। प्रकृत्यादि शब्देभ्यस्तृतीया भवति। क्रिया-पद पदराहित्येन प्राय एष षष्ठ्यपवादः। प्रकृत्या स्वभावेन। कृष्णः सर्वचित्ताकर्षकः। जनुषा जन्मना करुण उदारो दाता वा। षष्ठीथानिकत्वं दर्शयति—प्रकृत्यादि सम्बन्धे-नेति। परमतमुत्थापयति—गम्यमानेति। गम्यमानाया भवत्यादि क्रियाया हेतुं बोधयति; अत स्तन्मते हेतौ तृतीयेयम्। कालापास्तु गम्यमानक्रिया सम्बन्धेन करणत्वं मन्यन्ते।

---

**बाल०**—अज्ञ। अज्ञानमर्थो यस्य तस्य ज्ञाधातोः प्रयोगे करणं वा स्यात्। पक्षे, सम्बन्धषष्ठ्यवेति अकर्मकत्वादिति भावः। जानीत इति ज्ञोऽकर्मकापह्नवार्थत इत्यने-नात्मपदं। तस्य गङ्गाजलस्य। तद्बुद्ध्या गङ्गाजलबुद्ध्या॥ १०४॥

**बाल०**—षट् कारकाण्युक्त्वा तेषामन्योन्यसन्धेहव्यवस्थामाह अपादानेति। परमेकं प्रवर्त्तत इति परत्वमत्र स्वीयलिखनक्रमेण ज्ञेयं। कृष्णाय निवेद्य गृह्णातीति अत्र अपादान-सम्प्रदानयोरन्योन्यसन्देहे परत्वात् सम्प्रदानं वर्त्तते। शार्ङ्गेण शरान् विक्षिपतीति कृष्ण इति शेषः। शार्ङ्गेण धनुषा शरान् वाणान् संयुज्य विक्षिपति अत्रापादानकरणयोरन्योन्य-सन्देहे परत्वात् करणं प्रवर्त्तते। उपविश्येति अत्र अपादानाधिकरणयोरन्योन्यसन्देहे

अन्वयसम्बन्धेनेत्यर्थः। एवं भवत्या पूर्व इत्यादि। तथा द्विप्रसृतेन फलं क्रीणाति, द्विर्द्विः प्रसृतं फलं क्रीणातीत्यर्थः। पञ्चकेन वत्सान् गृह्णाति कृष्णः, पञ्च पञ्च तान् गृह्णातीत्यर्थः। सतामर्थो हरिभक्त्या, सैवार्थ इत्यर्थः।

**१०६. यदर्थमन्यत् तस्माच्चतुर्थी।**

**तादर्थ्ये चतुर्थीति प्राञ्चः। उभयत्रापि कार्यरूपात् प्रयोजनाच्चतुर्थीत्यर्थः। मालायै तुलसी। रन्धनाय यमुनोदकम्। हरि प्रीतये हरिं भजति।**

---

समेनेति समे देशे पथि चलतीत्यधिकरणत्वस्य बोधः। कर्मणी इमे इति--तन्मते कर्म-द्वितीया बाधिकेयं तृतीया। क्रियाविशेषणे इति--तन्मते तुल्याधिकरण क्रियाविशेषण द्वितीयाया बाधिका। प्रायेण बाहुल्येन, भक्त्या भक्ति सम्बन्धेन। द्विप्रसृतेनेति--पाणि निकुब्जः प्रसृत इत्यमरात् आकुञ्चितपाणिः प्रसृत इत्यर्थः। द्वयोः प्रसृतयोः समाहार इति द्विप्रसृतम्, तेन फलं क्रीणाति बालकृष्ण इतिशेषः। द्विर्द्विः प्रसृतमिति—द्वित्रि चतुर्भ्यः सुरिति क्रियाभ्यावृत्तौ सुप्रत्यय स्तद्धितः, आभीक्ष्ण्य वीप्सयोरिति द्विरुक्तिः। इह कर्मत्व बाधिकेयमिति प्रतीयते। सतामर्थो हरिभक्त्येति—हरिभक्तिरेव सतां जनानामर्थो नान्यत्। इयमभेदे तृतीयेति केचित्, धान्येन धनमित्युदाहरणञ्च।

**अमृता०**—१०६. यदर्थमिति। अर्थः प्रयोजनम्। यस्मै इदं यदर्थम्। यत् प्रयोजनकमन्यत् प्रवर्त्तते तस्मात् चतुर्थी स्यात्। अन्यरिति कारणं प्रकृति र्वा, तदर्थस्य भावस्तादर्थ्यम्। निमित्तार्थे चतुर्थी इत्यपि केचित्। द्वयोरेकार्थतां प्रतिपादयति—कार्य रूपात् प्रयौजनादिति। प्रयोजनं निमित्तं वा क्वचिद् विकृतं क्वचिदविकृतञ्च तिष्ठति,

---

परत्वादधिकरणं। यमुनामिति अत्र अपादानकर्मणोरन्योन्यसन्देहे परत्वात् कर्म। अस्त्येष इति अत्र कर्मकर्त्रोरन्योन्यसन्देहे परत्वात् कर्त्तृ। पूर्वं वाक्यार्थेनैवान्वय इति यदुक्तं तेनापि अस्त्येष कृष्णः पश्येति सिध्यतीति ज्ञेयं। यत्र विशेषलक्षणमस्ति तत्र अन्योन्य-सन्देहाभावः। अतः कृष्णाय श्लाघत इत्यादौ सम्प्रदानमेव कर्मबाधकं। कृष्णायाहूय नवनीतं ददाति वैष्णवाय पूजयित्वा सर्वस्वं दीयते। धृत्वा नन्दकेन दैत्यं लुनातीत्यादौ दानादेरेव साध्यत्वान्मुख्यत्वं आह्वनादेस्तु तदर्थतया गौणत्वं अतः कृष्णादेः सम्प्रदानत्वा-द्य ेति। निवेद्य कृष्णाद्गृह्णातीत्यादिकेः प्रयोगेतु अर्थादगम्यत इति कृष्णादिति प्रयुक्तमेव कृष्णायेत्यर्थाल्लब्धं अतोऽन्योन्यसन्देहाभावादत्र न कोऽपि विरोध इति भावः। कृष्णाय निवेद्य इत्यत्र कृष्णाय प्रदीयेति वा पदं। ननु क्व गच्छसीत्यादौ कर्म भवतु कथमधि-करणमिति चेत्तत्राह क्व गच्छसीति। अयं गमिर्गमनपूर्वकस्थित्यर्थः, अतोऽधिकरणमेव। बोध्यत इति गमधातुनेति शेषः॥ १०५॥

**बाल०**—कृष्ण। अथेति उपपदसम्बन्धिन्यो विष्णुभक्तय इति विग्रहः। याः पदान्तरसम्बन्धेन क्रियन्ते ता उपपदविष्णुभक्तयः। तत्र द्वितीयामाह। कृष्णप्रवचनीयैर्योगे

एवं हरिभक्तिः सुखाय कल्पते, हरेरभक्ति दुःखाय सम्पद्यते, तत्तद्रूपेण परिणमतीत्यर्थः। सेवायै गोविन्दं याति, सेवितुमित्यर्थः। एवं पाकाय व्रजतीत्याद्यपि। सम्बन्धविवक्षायां मालाया स्तुलसीत्याद्यपि। अभेद विवक्षायां हरिभक्तिः सुखं कल्पते।

---

यदा विकृतं भवति तदैवास्य सूत्रस्य विषयः। यदा त्वविकृतं तदा निमित्तात् कर्मसंयोगे इति सप्तमी वक्ष्यते। अनेन कार्यं कारणसम्बन्धावगमात् षष्ठी बाधिकेयं चतुर्थीति ज्ञेयम्। साच चतुर्थी भेदकाद् विशेषणात् षष्ठीव कार्यरूपादेव प्रधानाद् भवति नतु कारणरूपादिति तात्पर्यम्।

मालायै तुलसीति—अत्र माला हि कार्यरूपप्रयोजनम्, तस्य कारणं तुलसी। एवं रन्धनाय यमुनोदकम्, यूपाय दारु इत्यादिषु च ज्ञेयम्। हरिभक्तिः सुखाय कल्पत इति—सुखं (आनन्दः) हि हरिभक्तेः परिणामः प्रयोजनश्च, अतश्च कार्यरूप एवावसीयते। सेवायै इति—अत्र "तुमर्थाच्च भाववचनात्" इति मुनिना सूत्रितम्; तच्चेह नावश्यक वक्तव्यम्, तादर्थ्येन हि चरितार्थत्वात्। तथाहि—सेवा गमनस्य परिणामः प्रयोजनञ्चेति कार्यरूपावसान इति। अभेदविवक्षायामिति—भेदेन विवक्षितयो र्द्वयो र्योगः सम्बन्ध इति लक्षणात् यदा त्वभेद विवक्षा तदा न सम्बन्धस्य विषयः, ततश्च भक्ति सुखयो स्तुल्याधिकरणतया समान विष्णुभक्तियुक्तत्वानात्र सूत्रप्रवृत्तिरित्यर्थः।

सम्पद्यमानादिति—परिणामं प्रपद्यमानादित्यर्थावसानात् तादर्थ्येन हि तदुद्देश्यं सिध्यतीति न पृथग् लक्षणमावश्यकमिति भावः। अवधिविवक्षायामिति—तन्मते हरिभक्तेः सुखं जायते इति हरिभक्तः प्रकृतित्वम्। तच्च स्वमतेऽपि सिद्धमस्ति, किन्तु

---

द्वितीया स्यात्। ते चैत इति। ते च कृष्णप्रवचनीया एते अनन्तरं वक्ष्यमाणा इत्यर्थः। लक्षणेति। लक्षणञ्च वीप्सा च इत्थम्भूतश्च तेषु। लक्षणादीनां लक्षान्याह लक्षणं चिह्नमित्यादि। चिह्नं ज्ञापकं हेतुरिति यावत्। युगपदेकदा। एतेषु विषयभूतेषु। कृष्णमभिपतति पुष्पवृष्टिरिति अत्र कृष्णो लक्षणं पुष्पवृष्टिर्लक्ष्या तयोः। कृष्णं प्राप्य-पततीति प्राप्तिक्रियाजनितलक्ष्यलक्षणभावोऽभिशब्देन द्योत्यते। गोपीं गोपीमभिक्रीडति कृष्णः गोपीं गोपीं व्याप्य क्रीडतीति। आभीक्ष्यवीप्सयोरिति द्विरुक्तिः। क्रीडतीति क्रीड विहारे। अत्र द्विरुक्त्यैव वीप्सा द्योत्यते अभिशब्दस्य विहारक्रियया सह गोपानां यः सम्बन्धः स द्योत्यः। कृष्णमभिभक्तोऽसाविति। भक्तस्य जनस्य कृष्णविषया भक्तत्व-प्रकारविशेषप्राप्तिः। अत्रापि कृष्णं प्राप्य भक्तत्वप्रकारविशेषप्राप्तिरिति प्राप्तिक्रिया-जनित एव कृष्णस्य भक्तप्रकारविशेषप्राप्तेश्च विषयविषयिभावः सम्बन्धोऽभिशब्देन द्योत्यते। भागे चेति। भागे विषयभूते भागोअंशस्तस्मिन् परिप्रतो इति कृष्णप्रवचनीया-विति शेषः। कृष्णं परीत्यादि पूर्ववदिति कृष्णं परि पतति पुष्पवृष्टिः। गोपीं गोपीं परि क्रीडति कृष्णः। कृष्णं परि भक्तोऽसाविति। यत् कृष्णं परि स्यात् यत् कृष्णं प्रति स्यादिति यद्वस्तु कृष्णस्य भागः स्यात् कृष्णं भजते इत्यर्थस्तत् कृष्णाय देहीति शेषः।

अत्र सम्पद्यमानात् क्लृप्त्यर्थ योगे इति पृथग् लक्षणं केचिद् विदधति, तदकिञ्चित्करं, तादर्थ्येनैवेष्टसिद्धेः । अवधि विवक्षायां पञ्चमीति कश्चित् ।

## १०७. उत्पातेनज्ञाप्याच्चतुर्थी ।

शुभाशुभसूचकमाकस्मिकदर्शनमुत्पातः । वाताय कपिलिका विद्युत् । आतपाय लोहिनी विद्युत् ।

---

सुखस्यात्र विकृतत्वविवक्षया चतुर्थी विधानापेक्षत्वात् हरिभक्तेः प्राधान्येन प्रथमेति विवेकः ।

ननु मशकाय धूम इत्यत्र मशको धूमस्य कार्यरूपपरिणाम इत्यर्थस्यासङ्गतेः कथं सङ्गमनीयमिति चेत् ? उच्यते—मशकशब्देनात्र मशकाभावे लक्षणा क्रियते, अनुद्वेगत्व-प्रयोजनात् । तेन मशक वारणरूपेण धूपस्य परिणति रिति तादर्थ्येन हि इष्टसिद्धिः । एव मश्वाय घास इत्यत्र अश्व शब्देन अश्वतृप्त्यर्थे लक्षणायां सामञ्जस्यम् । मशकायधूमः क्रियत इत्यादि क्रिया सम्बन्धवेलायान्तु मशकं निवारयितुमिति वक्ष्यमाणेन—"तुम्वन्तक्रियान्तरे गम्ये" इत्यनेन चतुर्थी सङ्गमनीया ।

अमृता०—१०७. उत्पातेनेति । उत्पातेन ज्ञाप्यात सूच्यमानात् शब्दाच्चतुर्थी स्यात् । आकस्मिकदर्शनमिति—आकाशादि महाभूतानां विकारः प्राकृतिक इत्यर्थः । इहोत्पातः कपिलिका पिङ्गला विद्युत्, तया वातो ज्ञाप्यत इति ज्योति विदां मतम् । अत्र श्लोकसंग्रहः—वाताय कपिला विद्युदातपायाति लोहिनी । पीता वर्षाय विज्ञेया दुर्भिक्षाय सिता भवेत्" ॥ इति काशिका । एवञ्च—"जलदः पूयवर्षी वै भूकम्पो दैत्यजन्मने" इति श्रीभागवतम् ।

---

अत्र भजनक्रियाजनितः स्वस्वामिभावः सम्बन्धः परिणा प्रतिना च द्योत्यते । ननु परि स्यादित्यत्र प्रति स्यादित्यत्र च उपेन्द्रप्रादुर्भ्यामिस्तेः सः षो य-सर्वेश्वरयोरित्यनेन षत्वं कथं न स्यादिति चेत्तत्राह अत्र धातुयोगाभावेनेति । अनुरिति । सहार्थे चेत्ति सहार्थे द्योत्ये च कृष्णप्रवचनीय इति शेषः । कृष्णमन्वित्यादि । पूर्ववदिति । कृष्णमनुपतति पुष्पवृष्टिरित्यादि । कृष्णमनुगच्छन्ति गोपा इति कृष्णेन सह गच्छतीत्यर्थः अत्र सहार्थैर-प्रधाने तृतीयेत्यनेन तृतीयायां प्राप्तायां द्वितीयाविधानं । चकारादिति । चकारात् हेतौ च द्योत्ये अनुः कृष्णप्रवचनीयः । हरिभक्तिमनुसुखमिति हरिभक्त्या सुखमित्यर्थः । अत्र हेतोस्तृतीयेत्यनेन तृतीयायां प्राप्तायां द्वितीयाविधानं । हीन इति हीन उत्कृष्टापेक्षः । ततश्च हीनोत्कृष्टापेक्षः । ततश्च हीनोत्कृष्टसम्बन्धे द्योत्ये इत्यर्थः । अन्वर्ज्जुनमिति अर्ज्जुना-द्धीना इत्यर्थः । एवमुपार्जुनमिति ॥ १०६ ॥

बाल०—अति । अतिक्रमेणे द्योत्ये अतिः कृष्णप्रवचनीयः स्यात् । सर्वानतीति

**१०८. तुम्वन्तक्रियान्तरे गम्ये तत्कर्मणश्चतुर्थी ।**

कृष्णाय गोकुलं याति, कृष्णं द्रष्टुं सेवितुं वेत्यर्थः । कृष्णशब्देनात्र दर्शनादिकं लक्ष्यते इत्येके । एवं युद्धाय संनह्यते कृष्णः, युद्धं कर्त्तुं सन्नाहं बध्नातीत्यर्थः । पत्ये शेते लक्ष्मीः, पतिं रमयितुमित्यर्थः । हर्य-भक्तये निन्दति, तां त्याजयितुमित्यर्थः ।

**१०९. नम आदिभि र्योगे चतुर्थी ।**

---

**अमृता०**—१०८. तुम्बन्तेति । तुमुः अन्ते यस्य स तुम्वन्तः, प्रयुक्तक्रियातः अन्तरं भिन्नमिति क्रियान्तरम्, तुम्वन्तश्च तत् क्रियान्तरञ्चेति तथा, तस्मिन्गम्यमाने तुम्बन्त-क्रियायाः कर्मेण श्चतुर्थी स्यात् । कर्म बाधिकेयम् । द्रष्टुमिति तुम्बन्त क्रिया, तस्याः कर्म कृष्णः, अतस्तस्मात् चतुर्थी । दर्शनादिकं लक्ष्यत इति—कृष्णाय कृष्णदर्शनाय यातीति तादर्थ्ये चतुर्थीति तन्मतम् । सन्नह्यत इति—नह बन्धने दिवादिरुभयपदी । सन्नाहं कवचम् ।

**अमृता०**—१०९. नम इति । नमः प्रभृति शब्दै र्योगे चतुर्थी स्यात् । नम आदीनि अव्ययानि । प्रायः षष्ठ्यां प्राप्तायां चतुर्थी विधीयते । कृष्णाय नम इति—कृष्णसम्बन्धी

---

सर्वानतिक्रम्येत्यर्थः । राजत इति राजृ दीप्तौ । इत्यत्रापि दृश्यत इति तस्मात् अधेरपि कृष्णप्रवचनीयत्वं शिष्टप्रयोगे दृश्यत इति । अत्र लक्ष्यलक्षणभावः सम्बन्धः ॥ १०७ ॥

**बाल०**—काला । कालाध्वनोरत्यन्तव्याप्तौ सत्यां द्वितीया स्यात् कालाध्व-भ्यामिति शेषः । अध्वशब्देन तत्परिमाणमुच्यते । अत्यन्तव्याप्तिरविच्छेदव्याप्तिः । कालाध्वनोरत्यन्तव्याप्तौ अपवर्गेतु गम्ये कालाध्वभ्यां तृतीया स्यात् । अत्यन्तव्याप्तिर्गुणेन क्रियया द्रव्येण च भवतीति क्रमेणोदाहरणत्रयं दर्शितं । सर्वायुर्विष्णुभक्त इति साध्यत्वेन ज्ञानं भक्तिरिति भक्तेर्गुणत्वं । गुणगुणिनोरभेदोपचारात् भक्तशब्दस्यापि गुणवाचकत्वं । क्रिययेति व्याप्ताविति शेषः । एवं द्रव्येणेत्यत्रापि । यामं हरिपूजक इति यामः प्रहरः । द्वौ यामप्रहरौ समावित्यमरः । पूजाऽत्र क्रिया । धर्मधर्मिणोरभेदोपचारात् पूजकशब्दस्यापि क्रियावाचकत्वं । क्रोशं यमुना कुटिलेत्यत्र कौटिल्यरूपेण गुणेन व्याप्तिः । जन्म जन्मेति । तदिति तस्य जन्मनः सम्बन्धिमरणपर्यन्तं कालं व्याप्य तदत्यस्तं स्यादिति शेषः । तत्सम्बन्धं मरणपर्यन्तमिति वा । तदा तस्याभ्यस्तस्येति सुगमः । एतत्तु लक्षणयैवेति ज्ञेयं । अतो जन्मशब्दस्यापि कालवाचित्वमिति । तत्प्रत्ययाः कर्मप्रत्यया । सुप्यत इति ञि स्वप शये । देशभावाभ्यामपि द्वितीयेति जुमरमतं । तेन कुरून् सुप्यते गोदोहमास्यत इत्यद्यपि भवतीति ज्ञेयं । अपवर्गलक्षणमाह फलप्राप्त्येति । तस्मिन् अपवर्गे । अहोरात्रै-रिति । चतुःषष्ट्येति विंशत्याद्याः सदैकत्वे इत्येकत्वं चतुःषष्ट्या संख्यया उपलक्षितैर-होरात्रैर्वा इत्यपि मत । अनपवर्गेतु वत्सरं व्याकरणमधीतं न चानेन ज्ञातमित्यर्थः । अत्र द्वितीयैव ॥ १०८ ॥

**कृष्णाय नमः, तंप्रति नमस्कार इत्यर्थः। कृष्णाय स्वस्ति, तस्य मङ्गलं भूयादित्यर्थः। गोविन्दाय स्वाहा, तंप्रति समर्पयामीत्यर्थः। एवं पितृभ्यः स्वधा, इन्द्राय वषट्। कृष्णः कंसायालम्, तंप्रति समर्थः। एवं समर्थः प्रभुः पर्याप्तो वा कृष्णः।**

---

नमस्कारोऽयमिति फलितार्थः। स्वस्तीति मङ्गलवाचकमव्ययम्। स्वाहा शब्द स्त्यागार्थमव्ययम्। एवं नमः शब्दस्य च समर्पणार्थो दृश्यते,—पुष्पाण्येतानि कृष्णाय नम इति। स्वधा वषट् च त्यागार्थे अव्यये। आदिपदं विवृणोति—कंसायालमिति। समर्थवाचिनश्च आदिना ग्राह्याः। अलं भूषण पर्याप्ति शक्तवारणवाचकमित्यमरः। तत्र भूषणार्थो दर्शितः—कृष्णमलङ्करोतीत्यनेन। इह शक्तपर्याप्त्यर्थयोश्चतुर्थी। कृष्णः कंसायालमिति शक्तार्थः। तथा एकः कृष्णएव कंसायालं किं रामेणेति पर्याप्तिरर्थः। वारणे तृतीया वक्ष्यते। एवं शक्त प्रोथशब्दौ च समर्थार्थौ। यथा शक्तो रामो हि श्रीदाम्ने। तस्माद्वनैरपत्रेपे पुप्रोथास्मै न कश्चन इति भट्टिः। प्रभुशब्दस्य ईश्वरवाचित्वे तु षष्ठ्येव, यथा—कृष्णएव ममप्रभुः। "प्रभुर्बुभूषु र्भुवनत्रयस्य" इति महाकविः।

प्रादीनामिति—प्राद्युपेन्द्राणां वक्ष्यमाणोर्यादीनाञ्च क्रिययासह एकार्थतां मन्यन्ते वैयाकरणाः। पाणिनीयानान्तु सुप् सुपा (समस्यते) इत्यनुवृत्तितः सुप् (प्राद्युर्यादिरूपः) तिङा च समस्यत इति मतम्। स्वग्रन्थे एतेन कृदन्तेन समासो वक्ष्यते। तिङा सह समासः स्फुटमनुक्तोऽपि तत्र सम्मति रस्तीति व्यज्यते, तन्मतानुसारेण हि सिद्धान्तसङ्गमनात्। तदेव घटयति—अतः कृञीत्यादिभिः। कृष्णं नमस्करोतीत्यत्र नमः शब्दः स्वस्य नमनमर्थं कृञि समर्प्य, कृञः प्राधान्यमुपपाद्य तस्य नमनार्थं द्योतयति। गुणीभूतस्य नमः शब्दस्य योग इदानीं कृञा सह नतु कृष्णेन, अतः साक्षात् तद्योगाभावात् कृष्णशब्दे चतुर्थी वारिता, नमनार्थस्य कृञः पुनः कर्मसाकाङ्क्षत्वात् कृष्णस्य कर्मत्वमिति सदलार्थः।

उपलब्धदृष्टान्तराभ्यां तदेव स्फुटीकरोति—वृन्दावनमिति। प्रतिष्ठतइति—धातूनामनेकार्थत्वेऽपि प्रादिभिरेव द्योत्यन्ते तत्तदर्थाः। अत इह धातो र्गमनार्थं द्योतकत्वेन स्वर्थाभावात् प्रशब्दस्य गौणत्वम्, गमनार्थत्वेन तिष्ठतेरिह सकर्मकत्वम्। कृष्णमुरीकरोतीति—उरी शब्दः स्वीकाररूपं निजार्थं कृञि समर्प्यस्वयं गौणो भवति, ततो मुख्य-

---

**बाल०**—अभि। व्यक्तार्थमेतत्। अभित आदयश्चत्वारस्तस्यस्ताः। तसिस्तद्धितः। अभित इत्यव्ययं उभयत इत्यर्थः। परित इति चाव्ययं सर्वत इत्यर्थः। कृष्णस्य गोपा इति सर्वत्र योज्यं। एतदिति। एतत् शेषोक्तं द्वयं शब्दद्वयं। शब्दद्वयमिति वा पाठः। समयेति निकषेति चाव्ययं। तस्मै कृष्णविमुखाय तस्मै कंसाय च। हेति धिगिति चाव्ययं। हा कृष्णविमुखं इत्यस्य तस्मै कुत्सास्त्वित्यर्थमुक्त्वा हेतुमाह अत्रैवार्थ इति। कथमिति द्वितीया कथं न भवतीत्ययमत्र विरोधः सिद्धान्तमाह पूर्वत्रेति। पूर्वत्र हा रमणीनां गतः काल इत्यत्र वाक्यार्थेनैव सम्बन्धादिति हाशब्दस्येति शेषः। तस्मात

प्रादीनामुपर्यादीनामपि क्रिययैकार्थ्यं मन्यन्ते। पाणिनीयानान्तु सुप्-सुपेत्यनुवृत्ते स्तिङापि समास इति। अतः कृञि नमनमर्थं समर्प्य गुणीभूतेन नमः शब्देन कृष्णं नमस्करोतीति कृञ्योगात् कर्मत्वम्, कृष्णं नमतीत्यर्थः। वृन्दावनं प्रतिष्ठते, कृष्णमुरीकरोतीतिवत्। उपपद-विभक्तेः कारकविभक्ति र्बलीयसीति न्यायादित्येके। नारायणाय नमः

---

त्वेन कृञ् कर्मत्वमपेक्षत इति कृष्णस्य कर्मता। एवं नारायणं नमस्कृत्य नरञ्चैव नरोत्तममित्यत्र च नमः शब्दस्य गौणत्वान्न हि तेन नारायणादिशब्दानां योगः, किन्तु कृञा योगात् तत्र कर्मत्वम्।

एतच्च एके वैयाकरणा न्यायत उपपादयन्ति—उपपदेति। अयमत्राशयः—उपपद-विभक्त्या प्रायः सम्बन्ध सामान्यमुपलभ्यते, तद्विशेषोपलब्धिस्तु अर्थप्रकरणादिपर्या-लोचनापेक्षिकी। कारक विभक्त्या क्रियान्वयित्वेन कर्मत्वादिसम्बन्धविशेषो झटित्यव-गम्यते, अतस्तस्या बलीयस्त्वमिति। किञ्च, नाम्नो धातो र्वार्थो बुद्धौ प्रथममुपस्थितो भवति, विभक्त्यर्थद्वारा पुरुष वचन कालादे र्वैशिष्ट्य प्रतिपत्तिस्तु पश्चादेव। एवञ्च प्रकृतावेव स्थितयोरर्थ विभक्त्यो र्मध्ये पूर्वसिद्धस्यार्थस्य ह्यन्तरङ्गत्वे लब्धे धात्वर्थरूप क्रियायाश्च अन्तरङ्गता सुतरां निश्चीयते। तत एव तत् सम्बन्धसम्बद्धायाः कारक विभक्ते रन्तरङ्गतय बलीयस्त्वम्। उभयत्र नामार्थ सत्त्वेऽपि कारक विभक्तौ धात्वर्थ-सम्बन्धाधिक्यमेव तत्र बीजमिति विमर्शः।

नारायणाय नम इति—अत्र नमः शब्दस्योभयतो योगः। समासा भायेनागुणी-भूतत्वात् तस्य कृञि कर्मत्वं, पुनर्नारायण शब्देन योगात् तत्र चतुर्थीति। ननु कृष्णं नमस्करोति, नारायणं नमस्कृत्येत्यादौ समासे गुणीभूतेन नमः शब्देन साक्षाद् योगाभावात् (धातुना कृष्णादे योगात्) उपपदविभक्तेः कारकविभक्ति र्बलीयसीति न्यायो युज्यत एव, किन्तु—स्वायम्भुवे नमस्कृत्येत्यत्र कथपुनस्तद् व्यभिचार इति चेत्? तत्र समाधत्ते—

---

हाशब्देन योगाभागात् मात्र द्वितीयेति भावः। रमणीनां गतः काल इति हा कुत्सान्तु इति निर्गलितार्थः। उत्तरत्र हा देवि! धीरा भवेत्यत्र। सशोकसम्बोधने हाशब्दादिति तस्मात् हाशब्दस्य कुत्साद्योतकत्वाभावात् न द्वितीयेति भावः। हा कष्टं हे देवि त्वं धीरा तवेत्यर्थः। एवं भट्टौ हा पितः क्वासीति। कथमिति अत्र धिक्शब्दस्य कुत्सार्थत्वेऽपि कथं द्वितीया न भवतीत्ययं विरोधः सिद्धान्तमाह अत्रेति। अत्र धिक् कंसमित्यत्र उदाहरणे तादर्थ्य एव द्वितीयेष्टिरिति अतः तस्मा इति चतुर्थ्यन्तमुक्तं तदर्थमित्यर्थः। इष्टिरिच्छा। अत्र तु सम्बन्धविवक्षेति तस्मात्तादर्थ्यविवक्षां विना न द्वितीयेति भावः। धिग् जाल्मेत्यादाविति। न योग इति जाल्मेत्यस्येति शेषः। कुत्सयित्वेति निन्दित्वेत्यर्थः। कुत्स अवक्षेपणे चुरादिः। त्वत्कार्यं धिक् पश्चात् हे जाल्म इत्यर्थः। उपर्युपरि सर्वं हरिरिति उपर्यध्यधसां सामीप्य इत्यनेन द्विरुक्तिः। कथमिति बुद्धीनामुपर्युपरि ईश्वर-

कुर्यादिति नमः शब्दस्यैव कर्मत्वेनागुणीभूतत्वात् । स्वयम्भुवे नमस्कृत्येति तु तादर्थ्यात् ।

वारणार्थे त्वलं योगे तृतीयैव। कृष्णवैमुख्येनालम्, तेन नकिञ्चित् प्राप्यमिति हेतुत्वकरणत्वयोरेकतरावगमात् ।

## ११०. चतुर्थी हिताद्यर्थैः ।

सर्वस्मै हिता हरिभक्तिः । हरये बलिः ।

---

तादर्थ्यादिदिति । अत्र प्रयोक्तु स्तादर्थ्यं हीष्टमित्यर्थः । तथा हि—वक्तु र्विवक्षा खलु सर्वोपरि बलीयसीति—"विवक्षातश्च कारकादीनि" इत्यनेनोपपादयिष्यते स्वयमव । प्रगपि कर्त्तृ लक्षण व्याख्यायां किञ्चित् प्रपञ्चितम्। तस्मादत्र नमस्कारस्य प्रयोजनं हि स्वयम्भुरिति । यः स्वयमेव भवति, नयस्योद्भवे कारणान्तरं, यो जगज्जनकः, तदर्थो मे नमस्कार इत्यवं वक्तुरभिप्रायेण चतुर्थीयं प्रयुक्तेति मन्तव्यम् ।

अथ अलं शब्दस्यार्थद्वये चतुर्थी व्यवस्थाप्य वारणार्थे व्यवस्थामाह—वारणार्थ व्यवस्थामाह—वारणार्थ इति । एतच्चोपलक्षणम्, वारणार्थकिमशब्द योगे च तृतीया ज्ञेया । साच तृतीया केनानुशासनेन कर्त्तव्येति शङ्कयामाह—हेतुत्व-करणत्वयोरिति । नहि पृथग्लक्षणमावश्यकमिति भावः । हेतौ करणे वा तृतीया वक्तुंशक्यते, उभयोरेवात्र सम्भवात् । तथाहि—कृष्णवैमुख्य हेतुका अप्राप्तिः, कृष्ण वैमुख्यं तदप्राप्तौ प्रकृष्ण-सहायमिति वा ।

अमृता०—११०. चतुर्थीति । सुगमम् । अत्र आदिपदेन वति सुखप्रभृतयो ग्राह्या इति दृष्टान्तयति—हरये बलिरिति । बलिरुपहारः । एवं श्रीकृष्ण कीर्त्तनं भवव्याधि-ग्रस्ताय पथ्यम् शर्म सुखमित्यादि बोध्यम् ।

---

बुद्धयश्चरन्तीति । अत्र द्वितीया भवितुमर्हतीति विरोधः । सिद्धान्तमाह उपर्युपर्यादिष्विति । अत्र तु वीप्सामात्रमिति तस्मात् सामीप्यार्थभावात् न द्वितीयेति । उपर्युपरीति आभीक्ष्ण्य-वीप्सयोरित्यनेन द्विरुक्तिः । सर्वेषां बुद्धीनामुपर्युपरि अग्रे अग्रे ईश्वरबुद्धयश्चरन्तीत्यर्थः । उपरिबुद्धीनामुपरि चरन्तीत्यन्वयेन उपर्युपरियोगाभावान्न द्वितीयेति जुमरमतं । अधोऽध इति उपर्यध्यधसां सामीप्य इत्यनेन द्विरुक्तिः । उपर्युपरीति अधोऽध इति चाव्ययं । हरि-भक्ति यावत् सुखमिति सुखं हरिभक्तिपर्यन्तमित्यर्थः । यावदित्यव्ययं । बुभुक्षितमिति अत्र प्रतिभातीत्यनेन योगे द्वितीया प्रतिभातीति प्रतिपूर्वभा दीप्तौ अदादिः । अन्तरेणेति अन्तरेति चाव्ययं । षष्ठ्यपवादत्वात् षष्ठीबाधकत्वात् द्वितीयाया इति शेषः । हरेरिति पञ्चम्यन्तं । अन्तरङ्गत्वादिति स्वल्पाश्रितत्वादेवान्तरङ्गत्वमिति । स्वल्पाश्रितमन्तरङ्ग-मित्युक्तं ।। १०९ ।।

बाल०—सहा । सहशब्दस्यार्थ इवार्थः येषां ते सहार्थास्तैः सहार्थैर्योगे अप्रधाने

## १११. आशिषि चतुर्थी कुशलाद्यैः ।

वैष्णवाय कुशलं भूयात्; आयुष्यं भूयादित्यादि ।

---

अमृता०—१११. आशिषीति । आशिषि गम्यमानायां कुशलादिशब्दैं योगे चतुर्थी भवति । कुशलंमङ्गलम् । आदि पदेन—वैष्णवाय निरामय भद्रं मङ्गलं शं प्रयोजनंअर्थो वा भूयादिति च ज्ञातव्यम् । आशिषीति किम्—भवतः कुशलं नु ? आयुष्यं हि नृणां घृतमित्यादौ न ।

---

तृतीया स्यात् । सहार्थ इति सह शब्दस्यार्थ इत्यर्थः । तुल्ययोगितेति तुल्ययोग इत्यर्थः । आद्यः क्रियागुणद्रव्यैस्तुल्ययोगितारूपः सहार्थः । क्रियागुणद्रव्यसम्बन्धेन क्रमेणोदाहरणत्रयं रामेण सह क्रीडति कृष्ण इत्यादि । क्रियादीत्यादिपदेन गुणद्रव्ययोर्ग्रहणं । रामस्याप्राधान्यमिति अतो रामे तृतीयेति । किन्त्विति । प्रथमद्वये रामेण सह कीडति रामेण सह सुन्दर इति द्वये । कर्त्रा सह सहभावः कर्त्तृसहभावः । कर्त्रा रामेण सह कृष्णस्य सहभाव इत्यर्थः । रामेण सह सुन्दर इत्यत्र कर्त्तृसहभावो नातिवक्तव्य इति ज्ञेयं । अत्र गुणिसहभाव इति । तृतीये रामेण सह गोमानित्यत्र सम्बन्धिना सह सहभावः सम्बन्धिसहभावः गोसम्बन्धिना रामेण सह कृष्णस्य सहभाव इत्यर्थः । सहभाव इति सम्बन्धे इत्यर्थः । गोमानिति गावोऽस्य सन्तीत्यर्थे तदस्यास्त्यस्मिन् वा मतुरित्यनेन सम्बन्धे मतुप्रत्ययस्तद्धितः । गानेन सहेति अत्र नृत्यस्य क्रियासम्बन्धः साक्षादेव गानस्य तु प्रतीयमान इति गानस्याप्राधान्यं । एवमिति ततश्च रामेण समं क्रीडतीत्यादि ।

सहार्थ इति । सहार्थे गम्येऽपि सति सहार्थैर्योगेऽप्रधाने तृतीया स्यात् । रामेणेति रामेण सहेत्यर्थः । गोसम्बन्ध इति यद्यपि विशेषणत्वात् कृष्णस्य गां प्रत्यप्राधान्यं तथापि गोपसम्बन्धे रामं प्रति प्राधान्यमेव अतो गोसम्बन्धे प्राधान्यादित्युक्तं । न स्यादिति तृतीयेति शेषः । सहोताविति सह एकदा । अत्र उभयोरेव क्रियासम्बन्धः साक्षाद्विवक्षितः । दघ्नोरपीति द्वयोरेवेत्यर्थः द्वयोरेवेति वा पाठः । प्राधान्यात् तृतीया न स्यादिति शेषः । अन्त्यक्रियाद्रव्यैर्विद्यमानतामात्रं । सह वै दशभिः पुत्रैर्भारं वहति गर्दतीति प्राञ्चः । विद्यमानेषु दशपुत्रेष्वित्यर्थः ॥ ११० ॥

**बाल०**—तुल्या । तुल्यार्थैं सदृशाभिधायिभिः शब्दैर्योगे तृतीया षष्ठी च स्यात् । तुलोपमेति । व्यक्तार्थमेतत् । नेहेति तृतीयेति शेषः । तुलेति तुल्य इत्यर्थः । ननु तुलोपमाशब्दौ धर्मवाचिनौ कथं तुल्यार्थौ भवतामिति चेत्तत्राह तुलोपमाशब्दाविति । तुलोपमाभ्यान्तु षष्ठ्येवेत्युक्तमतो विनाप्यर्थशब्देन अर्थग्रहणादिति । कृष्ण इवेति इवशब्दः पदान्तरसम्बन्धेन सादृश्यद्योतकः तस्मात् पदान्तरनिरपेक्षो एव ये तुल्यतामाहुस्तेषामेवात्र ग्रहणमिति सूचनार्थमर्थशब्दोपादानं कृतमिति भावः सादृश्यं गतमपनिद्रचूतगन्धैरित्यादौ गम्ये सहार्थे तृतीयेति ज्ञेयं ॥ १११ ॥

## ११२. गम्यस्य यवन्तस्य कर्मणोऽधिकरणाच्च पञ्चमी ।

यप् क्त्वादेशः । ल्यब्लोपे पञ्चमीति पाणिनीयाः । गोवर्द्धनात् प्रेक्षते कृष्णः, तमारुह्य तत्रोपविश्येति वा । श्रीकृष्ण मुखाब्जात् विराजते हासः; तत्रनिसृत्येत्यर्थः ।

## ११३. अन्यार्थादिभि र्योगे पञ्चमी ।

अन्यः कृष्णात्, भिन्नो रामात् । एवं इतरप्रतियोगी । इतरोऽर्जुनात् । ऋते इत्यव्ययं वर्जनार्थे; ऋते कृष्णात् । ऋते कृष्णमित्यपि चन्द्रगोमी ।

---

**अमृता०**—११२. पञ्चमोमुपक्रमते—गम्यस्येति । अप्रयुक्तस्य गम्यमानस्य यवन्त धातो कर्मण: अधिकरणात् च पञ्चमी स्यात् । अत: कर्माधिकरणयो 'र्बाधिकेयम् । यप् प्रत्यय: क्त्वा स्थाने आदिश्यत इति कृति वक्ष्यते । गोवर्द्धनादिति—तं गोवर्द्धनमारुह्य, तत्र गोवर्द्धने उपविश्य इति वार्थ: । यवन्तस्येति तूपलक्षणम्; तेन—संसार सिन्धौ पतिता: सदार्त्ता, गुरुपदेशात् तरसा तरन्तीति च । गुरुपदेशं प्राप्य तत्रास्थाय वा तरन्तीत्यर्थ: । श्रीकृष्णमुखाब्जादिति—श्रीमुखस्य अब्जेन रूपकत्वात् हासस्य मधुना सुधया वा रूपकत्वमिह गम्यम्, तेन हासमकरन्द: श्रीकृष्णमुखाब्जे नि:सृत्य विराजते इतितात्पर्यम् ।

**अमृता०**—११३. अन्यार्थादिभिरिति । अन्यइत्यर्थो येषां ते अन्यार्था:, तै र्योगे आदि शब्देन दिक् शब्दादि योगे च पञ्चमी स्यात् । अपादानस्यैव प्रपञ्चोऽयमिति दुर्ग-पद्मनाभौ । अन्यार्थै र्योगे यतो भिन्नत्वं प्रतीयते तस्मादेव पञ्चमी, तेन कृष्णादन्य: स्तोक कृष्ण इत्यत्र स्तोककृष्णात् न सा । इतरप्रतियोगि शब्दौ चान्यार्थौ । घटात् प्रतियोगी पट:, ब्राह्मणादितर: क्षत्रिय इति ।

नचैवं नञोऽपि भेदार्थे शक्तत्वात् घटो न पट इत्यत्राति प्रसङ्ग इति वाच्यम्, नञो द्योतकत्वमेव नतु वाचकत्वमित्यभ्युपगमात्, सूत्रे ह्यर्थ ग्रहणेनैव द्योतकस्य निरास: कृत इति । चान्द्रास्तु—ऋते कृष्णमित्यपीति । अन्तरविलक्षणशब्दाभ्याञ्च तथेष्यते—विलक्षणोरामो लक्ष्मणात्, पूर्वोक्तादन्तरमिदमिति । आराद् वृन्दावनादिति—वृन्दावनस्य निकटे दूरे वेत्यर्थ:, अतश्च दूरान्तिकार्थेति वक्ष्यमाणवैकल्पिकषष्ठ्या अपवाद एष: । केचिदिति भाष्यकारादय: । तथा हि—अपादाने पञ्चमीति सूत्रे कार्त्तिक्या: प्रभृति शीत-

---

**बाल०**—येन । येन अङ्गेन निन्दा तस्मादङ्गात् तृतीया स्यात् । निन्देति अङ्गिन इति शेष: । सूत्रे भवत्यादिक्रियाध्याहारात् येनाङ्गेति हेतौ करणे वा तृतीया । उदाहरणेतु क्रियापदाध्याहारस्यानभीष्टत्वात् हेतुत्वं करणत्वञ्च नास्तीति लक्षणारम्भ: । कारूषो दन्तवक्र: । ननु वक्रशब्द: कथं कारूषस्य विशेषणं सम्भवतु नहि कारूषो वक्र: किन्तु तद्दन्त एवेति चेत्तत्राह अङ्गधर्म इति । षष्ठीति षष्ठीस्थाने अपवाद इति विग्रह: षष्ठी-बाधकमित्यर्थ: । दन्ता वक्रा यस्येत्यत्र दन्तशब्दो न षष्ठीस्थानं अतो न तृतीया ॥ ११२ ॥

आराद् दूरसमीपयोः। अत्र दूरान्तिकार्थैरिति बक्ष्यमाणषष्ठ्यपवादः। आराद् वृन्दावनात्। आरभ्यार्थयोगेऽपि केचित्। भवादारभ्य विष्णुभक्तः, मासात् प्रभृति दीक्षितः।

दिक्शब्दा अञ्चूत्तरपदा आदाहिप्रत्ययान्ताश्चान्यादयः। पूर्वं व्रजात्। शब्दग्रहणात् रामः कृष्णात् पूर्वः, प्राग् दिनकतिपयात्। अतस्यर्थ योगे

---

मित्युक्तम्। तद् व्याख्यायां कैयटोऽपि—तत आरम्भ इत्यर्थ इत्याह। भवात् शिवादित्यर्थः, वैष्णवेषु यथा शम्भुरिति श्रीभागवतोक्तेः।

आदिशब्दं विवृणोति—दिक् शब्दा इत्यादिभिः। दिक् शब्दा दिग्वाचिनः शब्दा इत्यर्थः, अञ्चुः उत्तरपदेषु येषां ते तथा आत् प्रत्ययान्ताः, आहि प्रत्ययान्ताश्च शब्दा अन्यार्थादिमध्ये गणनीयाः तत्र दिक् शब्दा रूढयएव गृह्यन्ते; तेन ऐन्दीयामी प्रभृतिभिर्योगे तु न पञ्चमी। किञ्च विधिरयमपादानप्रपञ्चः, अतोऽवधिमत्वप्रतीतौ हि दिक् शब्दा अन्यार्थाः स्युः। ऐन्दीप्रभृतिभ्यस्तु तत्प्रतीत्यभावान्न तद्योगे पञ्चमीप्रसंगः। तत्रशब्दग्रहण प्रयोजनं दर्शयति—रामः कृष्णात् पूर्वमिति। सामान्यतो दिक्शब्देन देशस्योपस्थिति र्जायते यथा व्रजात् पूर्वं वृन्दावनमिति। शब्दग्रहणेन यावदर्णवृत्तित्वमभिप्रेयते, तेन कालार्थवृत्तित्वेऽपि यथा स्यात् तदर्थोऽयं दृष्टान्तः, रामः कृष्णात् पूर्वकालभव इत्यर्थः।

ननु दिग्वाचिन इत्युक्ते—दिशश्च ककुभः काष्ठा आशाश्च हरितश्च ता इत्यमरात् ककुवादि शब्दाश्च दिग् वाचिन एवेति तै र्योगोऽपि कथं पञ्चमी नोच्यत इति चेत्? नैवम्, सजातीयत्वविगानात्। अन्यादिशब्दाः खलुप्रतियोगवाचिन इह गृहीताः, अतस्तत्साहचर्येण दिग्वचना अपि प्रतियोगिवाचिन एव ग्राह्या नतु दिक् सामान्यवचना इति। अनयैवदिशा नीचार्थं वाचकेतरशब्दयोगे पंचमीप्रसक्ति र्वारणीया। एवं दक्षिणं वृन्दावनाद् मधुवनमित्याद्युन्नेयम्। अवयववाचिभिरेभि र्योगेऽपि न—पूर्वं कायस्येत्यादे र्वक्ष्यमाणत्वात्।

अथ अञ्चूत्तरपदेन योगे चोदाहरति—प्राग्दिनकतिपयादिति। प्रागिति—प्रपूर्वादञ्चुधातोः क्विपि प्राच्शब्द इति दर्शिता हि साधन शैली शब्दप्रकरणे। ततो 'दिक् शब्देभ्य' इत्यादिना अस्ताति प्रत्ययस्तद्धितः, "अञ्चते र्महाहर" इति तत् प्रत्ययस्य महा

---

**बाल०**—विशे। व्यक्तार्थमेतत्। विशेषलक्षणादित्यस्यार्थमाह विशेषेति। सामान्यावगमे इतरेभ्यो यद्व्यवच्छिनत्ति तद्विशेषप्राप्तिचिह्नं। कौस्तुभेन भगवन्तमद्राक्षीदिति कौस्तुभस्य देवतान्तरेभ्यो भगवत्त्वस्य व्यवच्छेदकत्वाविशेषप्राप्तिचिह्नत्वं। अद्राक्षीदिति दृशिरत्रोपलब्धिवचनः। ततश्च उपलब्धवानित्यर्थः। क्रियेति। विशेषलणस्य क्रियावैशिष्ट्यज्ञापकत्वेऽपि विशेषलक्षणात् तृतीया स्यादिति शेषः। क्रियाया वैशिष्ट्यं क्रियावैशिष्ट्यं तस्य ज्ञापकं क्रियावैशिष्ट्यज्ञापकं तस्य भावस्तत्त्वं तस्मिन् वैशिष्ट्यं वैलक्षण्यं। न्यक्षेणेति न्यक्षमत्र कार्त्स्न्यं तदत्र विशिष्टेक्षणक्रियाया विशेषलक्षणं वैशिष्ट्यज्ञापकमपि। कार्त्स्ने-

षष्ठीति वक्ष्यमाणापवादोऽयम्। आदाही तद्धितावदूरदूरयोः, तदन्ते चाव्यये ज्ञेये। दक्षिणा व्रजात्, दक्षिणाहि व्रजात्।

## ११४. पृष्टाख्याताभ्यामवधिभ्यां पञ्चमी।

कुतो भवान्? वृन्दावनात्। अवधिभ्यां किम्—कस्यायं शालग्रामः? मम।

---

हरे प्राक्। ननु प्राच् शब्दस्य पूर्वकालार्थावगमात् दिक् शब्देन हि तत्र पञ्चमी सिद्धा, कथमञ्चूत्तरपदानामन्यार्थादिषु पातनमितिचेत्? तत्राह—अतस्यर्थ योग इति। अस्ताति प्रत्ययश्चायम् अतस्यन्तर्गणे एव पठ्यते, ततो वक्ष्यमाण लक्षणेन तत्र षष्ठी प्राप्येत तद् बाधनार्थ मस्यान्यार्थादिषु पठनमित्याशयः। तेन अञ्चूत्तरपदानादाहि प्रत्ययान्ताञ्च वर्जयित्वा अपरै रतस्यर्थैर्योगे हि वक्ष्यमाणषष्ठी प्रवर्त्तत इति विवेचनीयम्। आदाही इति—आत् आरामः अदूरे, आहि दूरे। दक्षिणा व्रजादिति—दक्षिणाददूरे आराम इति आत् प्रत्ययः। दक्षिणाहि इति—आहिश्च दूरे इति आहि प्रत्ययः। दक्षिणा दक्षिणाहि शब्दौ तद्धितान्ताव्ययसंज्ञौ। दक्षिणाहि वसन् रामः समुद्राद् रक्षसां पुरमिति भट्टिश्च।

**अमृता०**—११४. पृष्टेति। पृष्टः प्रश्नविषयीभूतः, आख्यात स्तदुत्तरभूतः। पृष्टश्च आख्यातश्च पृष्टाख्यातौ, तादृशाभ्यामवधिभ्यां पञ्चमी भवति। क्रियायोगाभावेन अपादाने पञ्चम्या अप्राप्तौ विधानमिदम्। कुतो भवानिति—किम्शब्दोऽत्र पृष्टरूपोऽवधिवाचकः, वृन्दावन मित्याख्यातरूपोऽवधिवचनम्। व्यावृत्तिमाह—कस्याय शालग्राम इति। इह पृष्टत्वमाख्यातत्वञ्चास्ति किन्तु न तयोरवधित्वं विवक्ष्यत इति तदभावे सम्बन्धसामान्यत्वेन षष्ठी।

---

नेति कार्त्स्नेन साकल्येन कार्त्स्न्यं भजनक्रियया विशेषलक्षणं वैशिष्ट्यज्ञापकमपि। सुखेनेति सुखं भजनक्रियया विशेषलक्षणं वैशिष्टयज्ञापकमपि। ननु तर्हि कथं सुखं भजतीत्यादिति चेत्तत्राह। गुणगुणित्वविकल्पादिति सुखादिशब्दानामिति शेषः। गुणश्च गुणी च तयोर्भावो गुणगुणित्वं तस्य विकल्पात्। अयमर्थः। यदा सुखादिशब्दा गुणवचनास्तदा तृतीया यदा तु गुणिवचनास्तदा तुल्याधिकरणक्रियाविशेषणत्वात् सुखं भजतीत्यादि॥ ११३॥

**बाल०**—प्रकृ। इदमपि व्यक्तार्थं। प्रकृत्या स्वभावेन कृष्णः श्यामः। जनुषा जन्मना करुणः करुणान्वितः। उदारो महान्। उदारो दातृमहतोरिति नानार्थवर्गः। तृतीयेयमिति। भवत्यादिक्रिययेति अध्याहृतयेत्यर्थः। गमयति बोधयति। तन्मते प्रकृत्या कृष्ण इत्यादिषु हेतौ तृतीयेति। समादौ देश इति समे देशे चलति विषमे देशे धावतीति। तस्मादधिकरणे तृतीयेति। इत्यादीत्यादिपदेन विषमे धावतीति। कर्मणी इमे इति केचिदिति। तन्मते समं चलति विषमं धावतीति। इमे क्रियाविशषणे इति कश्चित् तन्मते व्यधिकरणक्रियाविशेषणत्वात् तृतीयेति। प्रायेणेत्यस्यार्थमाह वैष्णवेति। गोत्रेण गार्ग्य

## ११५. अपपरियुक्तात् पञ्चमी वर्जने ।

अपवैकुण्ठात् परिवैकुण्ठात् संसारः ।

---

अमृता०—११५. अपपरीति । वर्जने अर्थे द्योत्ये अपपरिशब्दाभ्यां योगे नाम्नः पञ्चमी स्यात् । अपवैकुण्ठादिति—वैकुण्ठं वर्जयित्वा संसार इत्यर्थः । वर्जनइति किम्—कृष्ण परि पुष्पवृष्टिः ।

---

इति अपत्यं पुत्रप्रभृतिकं गोत्रमिति गोत्रशब्दो वंशवाची अतएवाह अन्वयसम्बन्धेनेत्यर्थ इति । अन्वयशब्दोऽपि वंशवाची । सन्ततिर्गोत्रजननकुलान्यभिजनान्वयमित्यमरः । गार्ग्य इति गर्गस्यापत्यमित्यर्थे गर्गादेर्माधव-यराम इत्यनेन माधवयः वृष्णीन्द्रः । भक्त्या पूर्व इति भक्तिसम्बन्धेनेत्यर्थः । इत्यादिपदेन परिणत्या मधुर इत्याद्यपि । अर्थेति । द्विः द्विः प्रसृतं फलं क्रीणातीत्यर्थे इत्यनेन तृतीयेयं वीप्सायामिति सूचितं । द्विःप्रसृतेनेति सविष्णु-सर्गपाठः क्वचिद्दृश्यते सत्वसभ्य एवेति ज्ञेयं । द्वित्रिचतुर्भ्यः सुरिति क्रियाभ्यावृत्तौ सुप्रत्ययो भवति, किन्त्वत्र क्रियाभ्यावृत्तिर्न घटत इति । प्रसृतशब्दो निकुब्जपाणिवाचकः । पाणिर्निकुब्जः प्रसृतस्तौ युतावञ्जलिः पुमानित्यमरः । पञ्चकेनेति पञ्च परिमाणमस्येत्यर्थे कप्रत्ययस्तद्धितः पञ्चसंख्यः अत्रापि वीप्सायां तृतीया । तान् वत्सान् । सतामिति सैव हरिभक्तिरेव । अभेदे तृतीयेयं ॥ ११४ ॥

बाल०—यदर्थं । यदर्थमन्यत् प्रवर्त्तते तस्माच्चतुर्थी स्यात् । यदर्थमिति यस्मै इदमर्थे इदंवाच्यर्थशब्देन चेत्यनेन कृष्णपुरुषः । तादर्थ्य इति तस्मै कार्यरूपाय इदं तदर्थं तदर्थमेव तादर्थ्यं तस्मिन् चतुर्थीति व्याख्याते कारणरूपे निमित्ते चतुर्थी सम्भवतीति चेत्तदैवं वाच्यं तादर्थ्ये सति कार्यरूपनिमित्ताच्चतुर्थीति । अथवा तत्कारणं परिणामित्वेनार्थं प्रयोजनं यस्य तत् तदर्थं तस्य भावस्तादर्थ्यं तस्मिन्नार्थे कृते कार्यरूपात् सम्भवत्येव । अस्माकं मते यत्तच्छब्दग्रहणात् एवम्विरोधाभावेन सर्वमनवद्यमतएवोक्तं उभयत्रापीति अस्माकं मते प्राचीनानां मते चेत्यर्थः । यदर्थमन्यत् तस्य प्रयोजनत्वमेव भवति, प्रयोजनन्तु कार्यरूपमत एवाह कार्यरूपात् प्रयोजनाच्चतुर्थीत्यर्थ इति । मालायै तुलसीति तुलस्या । माला प्रयोजनं । एवं सर्वत्र ज्ञेयं । हरिभक्तिः सुखाय कल्पत इति भेदविवक्षायां हरिभक्तिप्रयोजनं सुखमिति । एवं हरेरभक्तिर्दुःखाय सम्पद्यत इति । कल्पत इति कृपू सामर्थ्ये । सम्पद्यत इति पद गतौ । तत्तद्रूपेणेति भक्तिः सुखरूपेण अभक्तिर्दुखरूपेणेति । तत्तद्रूपेणेति परिणमतीति तत्तद्रूपं सत् परिणामं प्राप्नोतीत्यर्थः । पाकाय व्रजतीति व्रजनस्य प्रयोजनं पाकः । हरिभक्तिः सुखं कल्पत इति नात्र भेदो विवक्षितः किन्तु कारणमात्रं । सम्पद्यमानादिति परिणामात् चतुर्थीति शेषः । तदकिञ्चित्करमिति किमपि न करोतीत्यर्थः । अतो हेतुमाह तादर्थ्येनेति । एतद्भवतु । कथं मशकाय धूमः मशकरूपेण परिणमत इत्यर्थः स्यात् । धूमस्य मशकपरिणामित्वाभावात् । उच्यते । यदर्थमन्यदिति सूत्रेण चतुर्थीप्राप्तत्वेऽपि मशकशब्दस्य मशकाभावे लक्षणा मन्यते, अतो मशकवारणरूपेण परिणमते धुम इत्यर्थः । एवं कृष्णाय दुग्धमित्यत्र प्रयोजनत्वासम्भवात् लक्षणया कृष्णशब्देन कृष्णतृप्तिरेवोच्यते इति ज्ञेयं ॥ ११५ ॥

 

## ११६. आङ् युक्तात् पञ्चमी मर्यादाभिविध्योः ।

अभिविधिरभिव्याप्तिः । आसागराद् गङ्गा, आसमस्ताद् विष्णुः ।

## ११७. प्रति युक्तात् पञ्चमी प्रतिनिधि-प्रतिदानयोः ।

श्रेष्ठस्य सदृशः प्रतिनिधिः, प्रतिदानं मूल्यम् । प्रद्युम्नः कृष्णात् प्रति । तुलसीपत्रादात्मानं प्रति यच्छति हरिः ।

---

**अमृता०**—११६. आङिति । मर्यादा चाभिभिदिश्च ते, तयो र्गम्यमानयोः आङ् योगे नाम्नः पञ्चमी स्यात् । आसागरादिति सागरपर्यन्तमित्यर्थः । आसमस्तादिति समस्तमभिव्याप्येत्यर्थः । मर्यादाभिविध्योरिति किम्—आरक्तो रामगण्डः, इषद् रक्त इत्यर्थः ।

**अमृता०**—१ ७. प्रतीति । प्रतिनिधिप्रतिदानयो रर्थयोः सतोः प्रतियुक्ताच्छब्दात् पञ्चमी भवति । श्रेष्ठस्यानुपस्थितौ तत् सदृशो य उपादीयते स हि प्रतिनिधिरित्यर्थः । प्रद्युम्नः कृष्णात् प्रतीति—प्रद्युम्नः कृष्ण पुत्रः, सच रूपगुणादिभिः कृष्ण सदृश एव, तथापि कृष्णस्य द्वारकायामवनस्थानकाले सर्वे प्रद्युम्नं कृष्णस्य प्रतिनिधिरूपेण समन्यन्त इति तथ्यम् । तुलसी पत्रादिति—भक्ताद् गृहीतस्य तुलसी पत्रस्य मूल्यरूपेणात्मानं विक्रीणीत इत्यर्थः । तथा हि—तुलसीदलमात्रेण जलस्य चुलुकेन वा, विक्रीणीते स्वमात्मानं भक्तेभ्यो भक्तवत्सल इति श्रीविष्णुधर्मे वचनम् ।

---

**बाल०**—उत्पा । उत्पातेन ज्ञाप्याद्बोध्यात् चतुर्थी स्यात् । उत्पातलक्षणमाह शुभाशुभेति । आकस्मिकं दर्शनं यस्येति विग्रहः । ततश्च शुभाशुभसूचकं आकस्मिकदर्शनं आकस्मिकदर्शनविषयः किमपि उत्पात इत्यर्थः । उत्पातस्य शुभसूचकत्वमप्रसिद्धमिति ज्ञेयं । वाताय कपिला विद्युदिति कपिला विद्युत् वातं ज्ञापयतीत्यर्थः । कपिला विद्युत् उत्पातः तेन वातो ज्ञाप्यः अतस्तस्मात् चतुर्थी । कपिला पिङ्गला लोहिनी रक्तवर्णा । पूर्वेणैव सिद्धे लक्षणमेतत् स्पष्टतार्थं । उत्पातोऽत्र विद्युल्लतादिरूपज्ञापकः तत्क्रियाज्ञापनं ज्ञाप्यं आतपादिकं कर्म । पुरुषोऽत्र ज्ञाता तत्क्रियाज्ञानं ज्ञेयं । आतपादिकं कर्म । अत्र ज्ञापकत्वं विशेषणगुणविशिष्टवैशिष्टयेनैव नतु स्वरूपत्वेन अन्यथा सर्वदा उत्पातस्वरूपत्वेन ज्ञापकत्वापत्तिरिति ॥ ११६ ॥

**बाल०**—तुमवन्त । तुमप् अन्ते यस्य तत्तुमवन्तं । विवक्षितक्रियाभ्योऽन्तरं भिन्नं क्रियान्तरं । तुमवन्तश्च तत् क्रियान्तरञ्चेति तस्मिन् गम्ये तत्कर्मणश्चतुर्थी स्यात् । कृष्णशब्देनेति । दर्शनादिकं तद्दर्शनादिकं । तद्दर्शनादिकमिति वा पाठः । तन्मते तादर्थ्ये चतुर्थीति । संनह्यत इति नह बन्धने दिवादिरुभयपदी । सन्नाहं कवचं । पतिं वैकुण्ठनाथं । तां हर्यभक्तिं ॥ ११७ ॥

**११८. यतः कालाध्वनो मानं तस्मात् पञ्चमी; कालात्तु सप्तमी, अध्वनः प्रथमा च ।**

**शयन्याः प्रबोधनी मासचतुष्टये । मथुराया गोवर्द्धनो योजनद्वयं योजनद्वये वा ।**

---

**अमृता०**—११८. यत इति । कालस्य अध्वनश्च मानं परिमाणं यतो यमपेक्ष्य क्रियते तस्मात् पञ्चमी स्यात्; कालात् सप्तमी, अध्वनः सप्तमी प्रथमा च भवति । दिक् कालयो विभुत्वेनापरित्वान्न हि तयोः परिमाणं सम्भवेत्, ततः कञ्चिदुपाधिमन्तर्निधाय तमपेक्ष्यैव परिमाणं प्रकल्प्यते, तत्र हि पंचमी विधीयत इति तात्पर्यम् । शयन्या इति शयन्यैकादश्या प्रबोधनी उत्थानैकादशी । योजनं क्रोशचतुष्टय, तस्य द्वयमित्यष्ट क्रोश चतुष्टय, तस्य द्वयमित्यष्ट क्रोश परिमितिः पन्था गोवर्द्धनो मथुराया इति प्रसिद्धिः ।

---

**बाल०**—नम । नम आदिभिर्योगे चतुर्थी स्यात् । कृष्णाय नमः इति सरामान्तमव्ययं प्रणामवाचकमत आह तं प्रति नमस्कार इत्यर्थ इति । अत्र सम्बन्धषष्ठ्यां प्राप्तायां चतुर्थीविधानं । नम इति सान्तमव्ययं विशेष्यं प्रणाममाचष्टे, यदा तु दानवाचि तन्त्रेण तदपि गृह्यते । दानार्थत्वात् सम्प्रदाने चतुर्थीति कश्चित् स भ्रमी तस्य सम्प्रदानस्य कारकत्वात् क्रियापदोपेक्षा । नास्ति अस्तीत्यादिवत् तिङन्तप्रतिरूपमव्ययमेतत् । ग्रन्थान्तरीयः पाठोऽयं न सर्वत्र किन्तु साधुः । समर्पणार्थोऽपि नमःशब्दोऽस्ति तेन तद्योगेऽपि चतुर्थी भवति, अतः कृष्णाय पुष्पं नमः इति तं प्रति समर्पयामीत्यर्थः । स्व स्वाहा देवहविर्दाने श्रौषट् वौषट् स्वधेति । पितृभ्यः स्वधेति तान् प्रति समर्पयामीत्यर्थः । एवं इन्द्राय वषडिति । कृष्णः कंसायालमिति अलंशब्दः समर्थवाची अत आह तं प्रति समर्थ इति । एवं समर्थ इति । अलंयोगे चतुर्थी भवति तथा समर्थप्रभुपर्याप्तयोगऽपीति । प्रभुः पर्याप्तश्च समर्थवाची । शक्तप्रोथयोगेऽपि चतुर्थीति जुमरमतं । शक्तप्रोथावपि समर्थवाचिनौ । प्रभुशब्दस्य समर्थार्थत्वाभावात् ममायं प्रभुरिति भवतीति ज्ञेयं । अत्र प्रभुशब्दः स्वामिवाचकः । प्रादीनामिति । कृत्प्रकरणे उर्यादिगणो वक्ष्यते । तत्र नमःक्रियया सह ऐक्यार्थ्यं एकार्थतां मन्यन्ते पण्डिता इति शेषः । तस्मात् प्राचीनामुर्यादीनाञ्च क्रियानुगतत्वे पृथगर्थता नास्तीति । पाणिनीयानान्त्विति सुप् सुपेत्यनुवृत्तिरिति पञ्चम्यन्तं अनुवृत्तिस्तु सुरित्यस्येति ज्ञेयं । तिङापीति सुप इति शेषः । तिङापि सह सुपः समास इति । तस्मात् पाणिनीयानां मतेऽपि तेषां पृथक्त्वं नास्तीति अत इति । अत ऐक्यार्थाद्धेतोः कृञि कृञ्धातौ नमनं प्रणामं अर्थं समर्प्य गुणभूतेन नमःशब्देन सह कृष्णं नमस्करोतीत्यत्र कृञ्योगात् कर्मत्वमित्यर्थः । तस्मात् नमःशब्देन साक्षाद्योगाभावात् गौणमुख्ययोरिति न्यायाच्च कृष्णान्न चतुर्थीति । कृष्णं नमस्करोतीत्यत्र ऐकार्थ्यफलेनार्थसमर्पणपूर्वकगुणीभवनेन कर्मत्वं प्रतिपाद्य उदाहरणान्तरं दृष्टान्तरूपेण दर्शयति । वृन्दावनं प्रतिष्ठते कृष्णमुरीकरोतीति वदति । तत्र उर्यादीनामैक्यार्थ्यफलमर्थसमर्पणं गुणीभवनञ्च ज्ञेयं । प्रादीनान्तु क्रियानुगतत्वे अर्थवाचकत्वाभावादर्थसमर्पणं नास्ति, किन्तु ऐकार्थं फलं

## ११९. पृथङ् नानायोगे पञ्चमी तृतीया च, बिना योगे द्वितीया च ।

आद्यौ रहितार्थौ विना त्वन्यार्थः । पृथक् कृष्णात्, पृथक् कृष्णेनेत्यादि । बिना कृष्णात् कृष्णेन कृष्णं वा । त्रिष्वपि द्वितीयेति केचित् ।

## १२०. हेतो स्तृतीया ।

---

अमृता०—११९. पृथगिति सुगमम् । आद्यौ पृथग् नाना शब्दौ रहितार्थौ वर्जनार्थौ पृथग् विनान्तरेनर्त्ते हिरुङ् नाना च बर्जने इत्यमरात् पर्यायवाचित्वेऽपि तेषां भेद उदाहरणेषु लक्षितव्यः । पृथक् कृष्णात् मुमुहु व्रजौकसः । नाना रामेण ब्रह्ममोहन लीला । कृष्ण विना को वा लतास्वपि प्रेमद इति । त्रिष्वपि पृथङ्नानाबिना युक्तेषु शब्देषु दितीयेति पाणिनीयाः । तथाहि तत् सूत्रम्—पृथग्विना नानाभि स्तृतीयाऽन्यतरस्यामिति । तत्र पञ्चमी द्वितीये चानुवर्त्तते । पृथग् राममित्युदाहरन्ति च । "नाना नारीं निष्फला लोकयात्रा" इति दृश्यते च । तस्मादेतन्मतञ्चोरीकृतं ग्रन्थकृतेति मन्तव्यम् ।

अमृता०—१२०. हेतो रिति । हेतुभूतात् शब्दादुत्तरे तृतीया भवति । तल्लक्षमाह —विवक्षान्तर रहित इत्यादि । अन्यस्य ( करणादेः ) विवक्षेति विवक्षान्तरम्, राजदन्तादित्वात् पूर्वनिपातः । तेन रहितो यः फलसाधने योग्यः समर्थः सहेतुरुच्यते । योग्य-

---

गुणीभवनमेव ज्ञेयं । वृन्दावनं प्रतिष्ठत इत्यत्र प्रशब्दः धातूनामनेकार्थत्वादगमनार्थो स्थाधातौ तदर्थमात्रद्योतकत्वेन गुणीभूतः । ततश्च प्रतिष्ठत इत्यस्य गच्छतीत्यर्थः । अतो वृन्दावनस्य कर्मत्वं । प्रस्थानं गमनं गम इत्यमरः । कृष्णमुरीकरोतीति अत्र उरीशब्दोऽङ्गीकारवाची सच अङ्गीकारमर्थं कृञि समर्प्य गुणीभूतः । ततश्च उरीकरोतीत्यस्य अङ्गीकरोतीत्यर्थः । अतः कृष्णस्य कर्मत्वमिति । एवं नमस्कृत्य मुनित्रयमिति ।

उपपद । उपपदेत्यादिन्यायादिति द्वितीया विभक्तिरिति शेषः । चतुर्थी विभक्तिरत्रोपपदविभक्तिः । नमःशब्दयोगविधानात् नमस्कृतिक्रियासम्बन्धविशेषिकृष्णसम्बन्धित्वात् द्वितीयायास्तु कारकविभक्तित्वं । नारायणायेति अत्र कृतिरेव क्रिया नतु नमस्कृतिः कृतेस्तु नमःशब्द एव कर्म नतु नारायणः अतो नारायणे न द्वितीया, किन्तु नमःशब्दयोगे चतुर्थीति । ननु तर्हि कथं स्वयंभूवे नमस्कृत्येत्यत्र चतुर्थी नमस्कृतिक्रियायाः कर्मत्वादिति चेत्तत्राह स्वयम्भूव इति । तादर्थ्यादिति चतुर्थीति शेषः । वारणार्थत्वेति वारणेऽर्थे अलशब्दप्रयोगे सति तृतीयैव भवति, समर्थार्थत्वे एव चतुर्थीविधानादिति शेषः । कृष्णवैमुख्येनालमिति । तेन कृष्णवैमुख्येन किञ्चित् प्राप्यं न भवतीति तेनालमिति तस्मात् कृष्णवैमुख्यं दूरेऽस्त्वित्यर्थः । तृतीयैवेत्युक्त्वा हेतुमाह हेतुत्वेति । तस्माद्धेतौ करणे वा तृतीयेति ॥ ११८ ॥

बाल०—चतुर्थी । हितादीनामर्थ इव अर्थो येषां ते हिताद्यर्थास्तैर्योगे चतुर्थी स्यात् । बलिरुपहारः । करोपहारयोः पुंसि बलिः प्राण्यङ्गजे स्त्रियामिति नानार्थवर्गः ॥ ११९ ॥

विवक्षान्तररहितः फलसिद्धौ योग्यो हेतुः। कृष्णेन सुखम्, सुखसिद्धौ कृष्णो योग्य इत्यर्थः। एवं श्रद्धया हरिभक्तिः।

## १२१. ऋणात् पञ्चमी।

परार्द्धादिव बद्धोऽसौ भवेद् भक्तिलवाद्धरिः। कथं शतेन बन्धितः? हेतुकर्त्तृतया विवक्षितत्वात्।

---

इत्यनेन क्वचित् फलमनिष्पादयन्नपि योग्यतामात्रेण हेतु र्भवेदिति बोध्यम्। तेन बहुपुण्यैर्वैष्णवदर्शनं लभ्यते इति यदि पुण्यैरपि तद्दर्शनं नोपलभ्यते तथापि तेषां तद्-योग्यतास्तीति मन्तव्यम्। कृष्णेनेति—सुखं फलं साध्यं वा तस्य सिद्धौ कृष्ण एव योग्यः, अन्यनैरपेक्ष्येण समर्थः। समर्थः। एवं श्रद्धयेति—हरिभक्तिसिद्धौ श्रद्धा सुदृढविश्वास एव निरपेक्षभावेन समर्थ्येत्यर्थः।

ननु गम्यभवतीत्यादि क्रियायाः सम्बन्धेन करणत्वेन हि तृतीया सिध्यति किम-नेनेति न वक्तव्यम्, हेत्वधीनः कर्त्ता, कत्रधीनन्तु करणमिति पद्मनाभः। तथाहि करणं क्रियामात्र विषयकं व्यापारनियतञ्च, हेतुस्तु द्रव्यादि साधारण विषयः व्यापार निरपेक्ष-श्चेति महदन्तरमुतयोः।

**अमृता०**—१२१. ऋणादिति। हेतोरित्यनुवर्त्तते। ऋणभूतात् हेतोरुत्तरे तु पंचमी स्यात्। पूर्वस्यापवाद एषः। गृहीममथ च नदत्तम् ऋणमुच्यते। परार्द्धादिवेति—अत्र हरे र्बन्धने भक्ति लवः स्वल्पापि भक्ति र्हेतुः, सएव ऋणतया मन्यते। लवो लेशः अल्प इति यावत्। बन्धुनन्तु नभक्तयनुरूपमित्याह—परार्द्धादिवेति। परार्द्धशब्द श्चरम संख्या वाची। यथा—एकं दश शतं चैव कोटि रर्वुदमेव च। वृन्दः खर्वो निखर्वश्च शङ्खपद्मौ चसागरः। अन्त्यं मध्यं परार्द्धश्च दशवृद्धया यथोत्तरमिति। हरि र्भक्तिलेशात् हेतोः परार्द्धादिव बद्धो भवेदिति तस्य महाकृपालुता दर्शिता। सवां मनागरि कृतां बहुधाभ्युपैतीति वचनात्। कथमित्याशङ्क्य सिद्धान्तयति—हेतु—कर्त्तृतयेति। अत्र प्रेरण णौ कर्मणि क्तस्य विधानात् कर्मभूतोऽणिकर्त्ता भृत्य उक्त उह्यः। ऋणत्वेऽपि शतस्य न हेतुत्वं विवक्षितं किन्तु हेतु (प्रयोजक) कर्त्तृत्वमित्यनुक्तात्तस्मात्तृतृयेति भावः।

---

**बाल०**—आशिषि। आशिषि गम्यमानायां कुशलाद्यैर्योगे चतुर्थी स्यात्। आयुष्य-मिति तस्मै हितमित्यर्थे य-रामः। इत्यादीत्यादिपदेन वैष्णवाय भद्रं शं सुखं वा भूया-दित्याद्यपि। अत्र चतुर्थी वेति जुमरमतं। अतो वैष्णवस्य कुशलं भूयादित्याद्यपि ज्ञेयं। आशिषीति किं आयुष्यं प्राणिनां घृतं॥ १२०॥

**बाल०**—गम्य। व्यक्तार्थमेतत्। क्त्वादेश इति विग्रहः। प्रेक्षत इति ईक्ष दर्शने भ्वादिरात्मपदी। तं गोवर्द्धनं तत्र गोवर्द्धने। विराजत इति राजृ दीप्तौ। तत्र मुखाब्जे। निःसृत्य निर्गत्य॥ १२१॥

## १२२. गुणाद्धेतोः पञ्चमी तृतीया वा ।

अवैष्णवत्वात् संसारी, अवैष्णवत्वेन वा । अव्यभिचारेण ज्ञापकश्च हेतुः । गोवर्द्धनोऽयं कृष्णवान्, सर्वाकर्षि वेणुशब्दात् तच्छब्देन वा ।

---

**अमृता०**—१२२: गुणादिति । गुण वाचकात् हेतो रुत्तरे तु पञ्चमी तृतीया वा स्यात् । उभयप्राप्त्यर्थं आरम्भोऽयम् । अवैष्णव त्वात्संसारीति—संसारित्वेसिद्धौ अवैष्णवता हि निरपेक्षतया योग्येत्यर्थः । हेतो लक्षणान्तरञ्च वक्ति—अव्यभिचारेणेति । अव्यभिचारत्वञ्चान्वय व्यतिरेकाभ्यां प्रतिपद्यते, तत एवोदाहरण द्वयमुपन्यस्यति : तत्रान्वयमुखेन—गोवर्द्धनोऽयमिति । सर्वाकर्षीति विशेषणमव्यभिचारित्वप्रतिपादनार्थम् । अत्र कृष्णवत्त्वमनुमेयं साध्यं वा, सर्वाकर्षिवेणु शब्द स्तस्य ज्ञापकः, कृष्णेतरस्य तादृशवेणुशब्दाश्रुते स्तस्याभिचारेण ज्ञापकत्वमिति । इदमेव व्यतिरेकेण—नायं गोवर्द्धनः कृष्णवान् अङ्गसौगन्ध्याभावादिति । अत्र कृष्णो नास्तीति–इह कृष्णाभावः साध्यः, तस्याव्यभिचार ज्ञापिका अनुपलब्धिः ।

द्रव्यादपीति—हेतोरितिपूर्वतोऽनुवर्त्तमानोऽपि सूत्रे पुन र्हेतु ग्रहणं द्रव्यादपि पञ्चमी ज्ञापनार्थम् । पर्वत इति—अनुमेयस्य वह्निमत्त्वस्य धूमः अव्यभिचारिज्ञापकत्वेन हेतुः । अयमेव व्याप्ति ग्रहो नैयायिकानाम् । सचात्रानुसङ्गिकतया किञ्चिदुद्दिश्यते । अनुभूतिरूपं ज्ञानं चतुर्विधम्—प्रत्यक्षः अनुमितिः उपमितिः शाब्दश्चेति । एषां करणानि च प्रत्यक्षानुमानोपमानशब्दाः तत्तज् ज्ञानसाधन प्रमाणानि । तत्र विषयेन्द्रिय संयोगात् प्रत्यक्षोऽनुभवो

---

**बाल०**—अन्या । अन्यस्यार्थ इव अर्थो येषां ते अन्यार्थास्तदादिभिर्योगे पञ्चमी स्यात् । इतरः प्रतियोगीति प्रतियोगिशब्दोऽपि अन्यार्थ एव । इतरस्त्वन्यनोचयोरिति नानार्थवर्गः । अन्यार्थोदियोगे यतोऽन्यत्वं तस्मादेव पञ्चमी भवतीति ज्ञेयं । अतएव सुखमेव कृष्णभक्तस्य इतरवदभक्तस्येत्यत्र अभक्तान्न पञ्चमी, किन्तु यतोऽन्यत्वं तस्मात् सुखादेवेति । आत्मपदं विवृणोति । ऋते इत्यव्ययं वर्जनार्थ इति शेषः । ऋते कृष्णमित्यपीति तन्मते पञ्चमी द्वितीया च भवतीति । क्रमदीश्वरस्यापि एतदेव मतं । फलित पुरुषाराधनमृत इति प्रयोगोऽपि क्रमदीश्वरेण दर्शितः । दूरसमीपयोरिति वर्त्तत इति शेषः । अत्र आराच्छब्दयोगे । दूरेति दूरान्तिकार्थबहिर्योगे षष्ठी पञ्चमी चेति लक्षणं । तस्मादाराद्योगे न षष्ठीति । आरभ्येति आरभ्येत्यर्थस्यार्थ इव अर्थो यस्य तद्योगेऽपि पञ्चमी भवति । भवात् शिवात् । प्रभृतिशब्द आरभ्यार्थः । दिकशब्दा इति दिग्वाचकाः शब्दा इत्यर्थः । अञ्चुः उत्तरपदं येषां त इति । आत्प्रत्ययान्ता आहिप्रत्यान्ताश्च । शब्दग्रहणादिति दिश इत्युक्तेऽपि दिग्वाचकग्रहणे सिद्धे यच्छब्दग्रहणं तस्माद्धेतोरित्यत्र तदुद्भवोऽपि गृह्यते इत्यर्थः । राम इति पूर्वः । एवमुत्तरादियोगेऽपि पञ्चमी । प्रागिति प्रपूर्वादञ्च धातोः क्विप् न-रामहरः तदन्तात् प्राच्शब्दात् दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो । दिग्देशकालेष्वस्तातिरिति अस्तातिः । अञ्चतेर्महाहर इति तस्य महाहरः प्रागिति । ननु दिक्शब्देनैव प्राग्दिनकतिपयादित्याद्यौ पञ्चमी स्येत्सति अञ्चूत्तरपदाना-

अत्र कृष्णो नास्ति, अनुपलब्धेः अनुपलब्ध्या वा ।

द्रव्यादपि दृश्यते—पर्वतोऽयं वह्निमान् धूमात् ।

**१२३. राधा गोपी संज्ञाभ्यान्तु न पञ्चमी ।**

श्रीकृष्णकृपया सुखम्, तन्माधुर्या वा ।

**१२४. हेतु शब्दप्रयोगे हेतौ षष्ठी ।**

---

जायते । अनुमितिस्तु व्याप्तिज्ञानात् । व्याप्तिश्च सा पक्षसाध्य हेतुभिरुपादीयते । पर्वतो वह्निमान् धूमादित्यत्र पक्षः पर्वतः, साध्यो वह्निमत्वम्, हेतुर्धूम इति । व्याप्तिप्रकारो यथा—यत्र यत्र धूम स्तत्र तत्राग्निः, यथा महानसः । व्यतिरेकेण यत्र नाग्नि स्तत्र न धूमः, यथा जल ह्रद इति । उपमान जनित ज्ञानमुपमितिः, यथा गोसदृशो गवयः । पद-ज्ञानजन्यमाप्तवाक्यं शाब्द इति संक्षेपः ।

**अमृता०**—१२३. राधेति । आवन्तलक्ष्मी राधा सज्ञा, ईऊलक्ष्मी गोपी संज्ञा, ताभ्यान्तु हेतुभ्यां पञ्चमी नस्यात् किन्तु तृतीयैव । राधा गोपी संज्ञयोगुण वाचकयोरेव पूर्वेण सामान्यतः प्राप्ते निषेधोऽयम् । कृपा माधुरी च गुणविशेषौ । "विभाषा गुणेऽस्त्रियामिति" पाणिनीय सूत्रे स्त्रीलिङ्गमात्रे पंचमी निषिद्धा । व्याख्याकृद्भिस्तु पंचमीष्टा सर्वेषामिति राधा गोपी संज्ञयो र्निषेधेनैवास्माकं सामञ्जसं कृतम् ।

**अमृता०**—१२४. हेत्विति । हेतुशब्दस्य साक्षात् प्रयोगे तु हेतौ षष्ठी स्यात् तद् । विशेषणतया हेतुशब्दे च षष्ठी ज्ञातव्या । पूर्वस्यापवादः । कृष्णस्य हेतो र्वसतीत्यत्र वासस्य हेतुः कृष्णः । यत्रेति—यत्र हेतुशब्देन कस्यचिद् समासः तत्र च हेतुशब्दस्य

---

मन्यादित्वेन किमिति चेत्तत्राह अतस्यर्थेति षष्ठी चेत्यत्र चरामो लिपिकरप्रमादकृत इति ज्ञेयं । प्रयोजनाभावाल्लक्षणे चरामस्यानुक्तत्वात् । अस्तातेरतस्यार्थत्वेन षष्ठी स्यात् । तद्बाधनार्थमिदं तस्मात् प्रागादियोगेन न षष्ठीति । आदाही इति तद्धितौ तद्धित प्रत्ययौ । अदूरदुरयोरिति अदूरे दूरे च अर्थे विहितावित्यर्थः । अत्र आत् अदूरे दूरे च आहिस्तु दूर इति । तदन्ते इति तौ आदाही अन्ते ययोस्ते । दक्षिणा व्रजादिति दक्षिणाद-दूर आराम इति आरामः । दक्षिणाहि व्रजादिति आहिश्च दूर इति आहिः । व्रजस्या-दुरवर्त्तिन्यां दक्षिणस्यां दिशि । व्रजस्य दूरवर्त्तिन्यां दक्षिणस्यां दिशीत्यर्थः । आदाही अपि अतस्यार्थौ अतः षष्ठी स्यात् । तद्बाधनार्थमन्यादित्वं अन्यथा दिक्शब्दत्वेनैव पञ्चमी स्यात् । अञ्चूत्तरपदा दिक्शब्दा एव गृह्यन्ते तेन कृष्णेन कृष्णस्य वा सध्रचङ् इत्यत्र न पञ्चमी, किन्तु तुल्यार्थत्वात् तृतीयाषष्ट्यौ ॥ १२२ ॥

**बाल०**—पृष्ठा । पृष्टश्च आख्यातश्च ताभ्यामवधिभ्यामुत्तरे पञ्चमी स्यात् । कुतो भवात् वृन्दावनादिति अत्र पृष्टावधिः किम्शब्दः, आख्यातावधिर्वृन्दावनं । आगमनादिति क्रियाप्रयोगेतु अपायादिष्ववधिरपादानमित्यनेनैव सिध्यति तस्मात् क्रियायाः प्रयोगे पञ्चम्यर्थमिदं सूत्रं । कस्यायमिति पृष्टाख्यातयोः किमस्मदोरवधित्वं नास्ति ॥ १२३ ॥

कृष्णस्य हेतो र्वसति। वेति केचित्। यत्र हेतुशब्देन समासस्तत्र समस्तादेव षष्ठी। प्रेमहेतोः कृष्णं भजति।

**१२५. कृष्णनामयोगे निमित्तकारणहेत्वर्थाद् द्वितीयावर्जं सर्वा-विष्णुभक्तयः।**

कृष्णो मथुरां गतः किं निमित्तं केननिमित्तेनेत्यादि। एवमुभेनिमित्ते, उभाभ्यां निमित्ताभ्यामित्यादि।

कृष्णनामायोगेऽपि तृतीयादय इत्येके। कंसघातेन निमित्तेनेत्यादि।

**१२६. एण प्रत्ययान्तयोगे द्वितीया षष्ठ्यौ।**

अदूरे एणोऽपञ्चम्या स्तद्धितः। दक्षिणेन वृन्दावनमक्रूरतीर्थम् वृन्दावनस्य वा।

---

गुणीभूतत्वेऽपि समस्तादेव षष्ठी भवति। प्रेमा चासौ हेतुश्चेति प्रेमहेतुः तद्धेतुकं कृष्ण-भजनमित्यर्थः, प्रेमा पुमर्थो महानिति वचनात्।

**अमृता०**—१२५. कृष्णेति। निमित्तञ्च वत् कारणञ्चेति निमित्तकारणम्, उपा-दानाद्भिन्नम्, तच्च हेतोरेवार्थः। कृष्णनामानि सर्यादीनि, तद्योगे निमित्तकारणरूपो यो हेत्वर्थः, तस्माद् द्वितीयावर्जं सर्वा विष्णुभक्तयो भवन्ति। कृष्ण नाम्नश्च तद्विशेषणतया तत्तद् विष्णुभक्त्यः सिद्धाः। उभशब्दस्य सर्वादिगणपाठसाफल्यं दर्शयति—उभेनिमित्ते इति। सर्वादौ तस्यपाठाभावे सति हेत्वर्थत्वेन तृतीयामात्रं सिध्येतेतिभावः। कृष्णनामा-योगेऽपीति—तदपि पृष्टप्रतिवचनरूपार्थत्वात् किम् शब्दपूर्वगम्यमिति भाति। तथा हि—कृष्णे। मथुरां गतः, केननिमित्तेन? कंसघातेननिमित्तेनेति, किन्त नेह प्रथमेत्येव विशेषः। अर्थग्रहणेन हेतुपर्यायशब्दाच्च तथेष्यते,—किं कारणम्, केन हेतुनेत्यादि। न चानेन—हेतुशब्द प्रयोगे हेतौ षष्ठीति सूत्रं व्यर्थमिति वाच्यम्, कृष्णनामायोगे हितस्य विषयत्वा-दिति विशेष एषः।

**अमृता०**—१२६. एवेति। सुगमम्। तत् स्वरूपमाह—अदूर इति। दक्षिणेनेति—दक्षिणस्यामदूरवर्त्तिन्यां दिशि अक्रूरतीर्थमित्यर्थः। अदूरे एनोऽपंचम्या वेति तद्धितसूत्रम्।

---

**बाल०**—अप। वर्जनेऽर्थे वर्त्तमानाभ्यां युक्तादुत्तरे पञ्चमी स्यात्। अप वैकुण्ठात् परि वैकुण्ठादिति वैकुण्ठं वर्जयित्वेत्यर्थः॥ १२४॥

**बाल०**—आङ्। मर्यादा च अभिविधिश्च तयोर्वर्त्तमानेन आङा युक्तादुत्तरे पञ्चमी स्यात्। मर्यादा सीमा। आ सागराद्गङ्गेति सागरपर्यन्तमित्यर्थः। आ समस्ताद्विष्णुरिति विशेषणमर्थान्तरनिरासार्थं तेन आ पिङ्गल इत्यत्र न पञ्चमी ईषत् पिङ्गल इत्यर्थः॥१२५॥

**बाल०**—प्रति। प्रतिनिधि-प्रतिदानयोर्वर्त्तमानेन प्रतिना युक्तादुत्तरे पञ्चमी स्यात्।

**१२७. दूरान्तिकार्थवहिर्योगे षष्ठी पञ्चमी च। दूरान्तिकार्थेभ्यो द्वितीयातृतीयापञ्चमीसप्तम्यो नाममात्रार्थे।**

दूरं दूरेण दूराद् दूरे वा व्रजस्य व्रजाद् वा तिष्ठन्ति पुलिन्दाः। एवमन्तिकमन्तिकादन्तिकेनान्तिके वा वसन्ति ब्राह्मणा इत्यादि। असत्व-वचन एव स्यात्। अन्यत्र समानाधिकरणत्वे तु दूरो व्रजो मथुरायाः, व्रजाद् दूरा मथुरा।

**१२८. आशिषि हिताद्यर्थ योगे च षष्ठीपंचम्यावेव।**

दूरं यातु व्रजस्य दुःखं व्रजाद् वा। अन्तिकं हितं भवतु व्रजस्य व्रजाद् वा।

---

**अमृता०**—१२७. दूरेति। दूरार्थेन अन्तिकार्थेन बहिः शब्देन च युक्तात् शब्दात् षष्ठी पंचमी च स्याताम्। दूरान्तिकार्थेभ्यः शब्देभ्यस्तु नाम मात्रार्थे द्वितीयादयो भवन्ति। पुलिन्दा नीच जातीया जनाः। अर्थग्रहणात् निकट निकटेनेत्यादि च भवेत्। नाममात्रार्थमेव प्रपंचयति—असत्ववचन एवेति। दूरादि शब्दानां बिशेषणत्वेन गुण गुणित्ववाचित्वं प्रसिद्धम्। तत्र यदा गुणवाचित्वं प्रसिद्धम्। तत्र यदा गुण वाचित्वं तदैव दूरत्वादिरूप नाममात्रार्थत्वेन सूत्रस्य विषयः। तेषां गुणवाचित्वे तु दूरत्वादिमत् वस्तुप्रतीते दूरादि शब्दानां वस्तुना सामान्याधिकरण्यात् विशेष्यस्य विष्णुभक्तिभागित्वं सिध्येदित्याशयः।

**अमृता०**—१२८. आशिषीति। आशिषि गम्यमानायां हिताद्यर्थयोगे, चकारात् दूरान्तिकार्थयोगे च षष्ठीपंचम्यौ हि भवतः। एव कारेण हिताद्यर्थ योगे विहिता चतुर्थी, तथा दूरान्तिकार्थे नाममात्रार्थे विहिता द्वितीयादयाश्च व्यावर्त्तिताः। प्राग् हिताद्यर्थयोगेऽनाशिषि चतुर्थी व्यवस्थापिता, इह तु आशी रर्थो विशेषः। दूरमिति कर्मणि द्वितीया; अन्तिकमिति हितशब्देन तुल्याधिकरणतया स्वन्तम्। यातु भवतु पदे आशिषि कामपाल विधातारौ इत्यनेन ह्याशिषि विधातृप्रयोगः।

---

श्रेष्ठस्य सदृशः प्रतिनिधिरिति कृष्णस्य प्रतिनिधित्वाभावान्निकृष्टसादृश्येन भवतीति ग्रन्थ-कृतामाशयः। सादृश्यमात्रे भवतीति जुमरमतं। प्रद्युम्नः कृष्णात् प्रतीति कृष्णस्य सदृशः इत्यर्थ तुलसीपत्रादिति। भक्तादगृहीतस्य तुलसीपत्रस्य आत्मानं मूल्यं यच्छति ददाति तस्य मुल्यरूपेणात्मना परिशोधनं करोतीत्यर्थः। सम्बन्धषष्ठ्यां प्राप्तायां पञ्चमीविधानं। यद्यपि प्रद्युम्ने आत्मनि च प्रतियोगो वर्त्तते तथापि कारकविभक्त्या प्रथमया द्वितीयया च पञ्चमी बाध्यते ॥ १२६ ॥

**बाल०**—यतः। कालस्य अध्वनश्च मानं परिमाणं तस्मात् पंचमी स्यात्। कालात्तु सप्तमी स्यात्। अध्वनः सप्तमी प्रथमा च स्यात्। यत इति यदपेक्ष्यत्यर्थः। शयन्याः शयनैकादश्याः प्रबोधन्युत्थानैकादशीति ॥ १२७ ॥

## १२९. अतस्यर्थ योगे षष्ठी ।

दक्षिणतो व्रजस्य, पुरस्ताद् गोवर्द्धनस्य । अवधित्वविवक्षायां पञ्चमीति चन्द्रगोमी ।

## १३०. सामान्यतो विशेषस्य निर्द्धारणे षष्ठी सप्तम्यौ, विशेषतश्चेत् पञ्चम्येव ।

---

**अमृता०**—१२९. अतस्यर्थेति । अतस्यर्थैर्योगे षष्ठी स्यात् । अतस्यर्थ प्रत्यया: तद्धिते वक्ष्यन्ते । ते पुनरिह अंचूत्तरपदादाहि प्रत्ययान्तेभ्य इतरे एव ज्ञेया:, तैर्योगे प्राक् पंचमीविहितत्वात् । दक्षिणत इति—दक्षिणोत्तराभ्यामित्यादिना अतसि:, अइ द्वयस्य हरो भगवतीति दक्षिणस्यान्तारामहर: । पुरस्तादिति—पूर्वशब्दात्—दिक् शब्देभ्य इत्यादिना अस्तीति:, पूर्वस्य पुरादेशश्च ।

**अमृता०**—१३०. सामान्यत इति । सामान्याद् विशेषस्य निर्द्धारणे गम्यमाने षष्ठी सप्तमी च भवति । विशेषाद् विशेषस्य निर्द्धारणं चेत् तदा पंचम्येव स्यात् । यतो निर्द्धारणं गम्यते तस्मात् षष्ठ्यादी, इतरत्र प्रथमादिकारकविभक्ति: । अपादानापवाद एष: । निर्द्धारणं लक्षयति—धर्मविशेषेणेति । निर्धार्यते पृथक् क्रियते धर्मविशेषेण यस्मात् समुदायात् ( एकदेश: ) तद् निर्द्धारणमिति व्युत्पत्ति: । यदुराजस्य वंशजा यदव:, तथा वृष्णयश्च यदुवंशजत्वाद् यादव एव, किन्तु सामान्येभ्यो यदुभ्य: श्रेष्ठत्वरूपधर्मेण तदेकदेशो वृष्णय: पृथक्क्रियन्त इत्यर्थ: । एवं कौरवाणां कौरवेषु वा पाण्डवा धार्मिका इत्यादि ।

माथुरा इति—प्रथमं जनपदेषु सामान्येषु मध्ये श्रौघ्ना: (श्रुघ्नदेशवासिन:) आढ्या इति श्रौघ्नानां विशेषत्वमवगतम्, ततो माथुरा ( मथुरा वासिन: ) श्रौघ्नेभ्योऽप्याढ्यतरा

---

**बाल०**—पृथक् । व्यक्तार्थमेतत् । विनायोगे पञ्चमी तृतीया द्वितीया च भवति । आदौ पृथङ्नानाशब्दौ इत्यादीत्यादिपदेन नाना कृष्णात् नाना कृष्णेनेति । त्रिष्वपि पृथङ्नानाविनाशब्देष्वपि विद्यमानेषु नाम्न इति शेष: । केचिदिति जुमरादय इत्यर्थ: । त्रिष्वपीत्यत्र त्रिभिरपीति वा पाठ: ॥ १२८ ॥

**बाल०**—हेतो: । हेतोस्तृतीया स्यात् । हेतुलक्षणमाह विवक्षान्तरेति । अन्तरस्य करणादेर्विवक्षा वक्तुमिष्टा इत्यर्थ राजदन्तादित्वाद्विवक्षाया: पूर्वनिपात: तस्माद्विवक्षान्तरं तेन विवक्षान्तरेण कारणत्वादिति विवक्षया विहितहेतुत्वेनैव विवक्षित इत्यर्थ: । अनिष्पादयन्नपि फलं योग्यतामात्रेण हेतुर्भवतीति सूचयितुं योग्य इत्युक्तं तदुदाहरणं । श्रद्धया हरिभक्तिरिति श्रद्धा स्वाप्यकुर्वत्यपि हरिभक्तिं तत्कारणयोग्यतामात्रेण हेतुर्भवति । न वाच्यं भवतीत्यादि क्रियासम्बन्धेन कारणत्वेनैव तृतीया सिध्यतीति हेतुकरणयोर्भेदात । तथाहि यदधीन: कर्त्ता स हेतु: करणन्तु कर्त्रधीनमिति ॥ १२९ ॥

**बाल०**—ऋणात् । हेतुरित्यनुवर्त्तते । ऋणाद्धेतोरुत्तरे पञ्चमी स्यात् । गृहीतमपरिशुद्धं ऋणं ऋणमुच्यते । पराद्धादिवेति । हरिभक्तिलवाद्बद्धो भवेदिति बन्धने भक्तिलवस्य

निर्द्धारणं धर्मविशेषेण पृथक्करणम् । यदूनां वृष्णयः श्रेष्ठाः यदुषु वा । माथुराः श्रौघ्नेभ्य आढ्यतराः ।

## १३१. आयुक्तकुशलयोगे षष्ठी सप्तम्यौ तात्पर्ये ।

**आयुक्तः कृष्णभक्तेः कृष्णभक्तौ वा ।**

---

अधिक धनवन्त इति विशेषाद् निर्द्धारणे पञ्चम्येव । अत्राढ्यत्वधर्मेण पृथक् कृताः । जाति-गुणक्रियाभिः पृथक् करणं निर्द्धारणमिति केचित् । तर्हि च श्रेष्ठत्वमाढ्यत्वञ्च गुण-वचनम् । जात्या यथा—नराणां नरेषु वा ब्राह्मणः शान्तः । क्रियया यथा—गच्छतां गच्छत्सु वा धावन हि त्वरितंमुपैति व्रह्महृदमिति ।

**अमृता०**—१३१. आयुक्तेति । तात्पर्ये तत्परत्वेऽर्थे आयुक्तेति कुशलेति च योगे षष्ठी सप्तम्यौ भवतः । आयुक्तः व्यापारितः, कृष्णभक्तौ तत्पर इत्यर्थः । एवं कुशलो महत्सेवायाः महत् सेवायां वा । अधिकरणे सप्तम्यां प्राप्तायां पक्षे षष्ठ्यर्थं वचनमेतत् । तात्पर्य इति किम्—आयुक्तो वृषः शकटे, इषद्युक्त इत्यर्थः ।

---

ऋणस्य हेतुत्वं अतस्तृतीयायां प्राप्तायां पञ्चमी । लवोलेशः । बन्धनन्तु न लेशानुरूपं इत्याह परार्द्धादिवेति । भक्तिपरार्द्धादिवेत्यर्थः । परार्द्धशब्दः संख्याविशेषवाची । सेवां मनागपि कृतां बहुधाभ्युपैतीति शास्त्रवाक्यं । कथमिति सिद्धान्तमाह हेत्विति । हेतु-कर्त्तृतया विवक्षितत्वात् सेत्स्यतीति शेषः । बन्धित इति ण्यन्तात् क्तः ।। १३० ।।

**बाल०**—गुणात् । गुणवाचकाद्धेतोरुत्तरे पञ्चमी तृतीया वा भवति, वाशब्दश्चार्थः पञ्चमी तृतीया चेत्यर्थः । पञ्चमी तृतीया वेत्यत्र पञ्चमी वेति वा पाठः । अवैष्णवत्वात् संसारी इति संसारित्वसिद्धौ अवैष्णवत्वं योग्यमित्यर्थः । अव्यभिचारेणेति । चकारः समुच्चयार्थः । व्यभिचारोऽनन्यत्र ज्ञानसन्दीपनं । अथवा उक्ताऽनन्यथारूपं नियम इति यावत् । ज्ञापक इति अनुमेयस्येति शेषः । गोवर्द्धनोऽयमिति कृष्णवत्वमनुमेयं अव्यभि-चारेण तज्ज्ञापकः सर्वाकर्षिवेणुशब्दः । अतस्तस्मात् पञ्चमी । सामान्यवेणुशब्दस्य अव्यभिचारेण ज्ञापकता न घटत इति सर्वाकर्षीत्युक्तं । तच्छब्देन सर्वाकर्षिवेणुशब्देन । अत्र कृष्णो नास्तीति अनुमेयस्य कृष्णाभावस्य अनुपमर्द्धिरव्यभिचारे ज्ञापिकेति । द्रव्या-दपीति । द्रव्यादपि हेतोरित्यर्थः । दृश्यत इति पञ्चमीति शेषः । पर्वतेऽयमिति धूमोऽनु-मेयस्य वह्निमत्वस्य अव्यभिचारेण ज्ञापकः । वैयाकरणानामिदमेव मतं । नैयायिका-नान्त्वत्रैव व्याप्तिग्रहः । तद्यथाकथञ्चिद्दृश्यते । व्याप्तिलक्षणं यत्र यत्र धुमस्तत्र तत्र वह्निरिति । व्याप्तिज्ञाने पक्षः साध्यो हेतुरिति त्रिविधमुन्नेयं । तत्र यत्र व्यापकसामान्या-धिकरण्यं व्याप्यसामानाधिकरण्यञ्च वर्त्तते स पक्षः । यत्तु व्यापकसामानाधिकरण्यं तदेव साध्यं । तद्भिन्नभानत्वे सत्येकान्तेन तद्बोधकं यद्व्याप्यसामानाधिकरण्यं तदेव हेतुः । पर्वतोऽयं वह्निमान् धूमादित्युदाहरणं । अस्य तु सपक्षसत्व-विपक्षसत्वावन्वयव्यतिरेक-दृष्टान्तौ । यन्नैवं तन्नैवं । यत्र यत्र वह्न्यभावस्तत्र तत्र धूमाभाव इत्यर्थः । तत्रान्वये

## १३२. एकस्थक्रिययोर्मध्ये यः संख्यात्मकः कालः, कारकयो र्मध्ये यश्चाध्वा ताभ्यां सप्तमी पञ्चमी च ।

अद्य हरिं दृष्ट्वा द्व्यहे हरिं द्रष्टा द्व्यहाद् वा । अत्र दर्शनयोर्मध्येद्व्यहः । इहस्थोऽयं क्रोशे कृष्णं पश्यति क्रोशाद् वा । अत्र कर्त्तृकर्मणो र्मध्ये अध्वा ।

## १३३. उक्तस्य यस्य क्रिया कालोऽन्यस्य क्रियावकाश स्तस्मात्-सप्तमी ।

---

**अमृता०**—१३२. एकस्थेति । एकस्मिन् कर्त्तरि स्थितयोः क्रिययो र्मध्ये यः संख्यात्मकः कालः तस्मात् सप्तमी पञ्चमी च, तथा कारकयो र्मध्ये यः परिमाणात्मकः अध्वा तस्माच्च सप्तमी पञ्चम्यौ स्याताम् । उदाहरति—अद्य हरिमित्यादि । अत्रोदाहरणे एककर्त्तृस्त्रयोरेव क्त्वान्त-बालकल्क्यन्तयो दर्शन क्रिययो र्मध्ये द्व्यह इति संख्यात्मकः कालः । द्व्यह इति—द्वयोरह्नोः समाहारः, राजाहः सखिभ्य इतिकेशवाराम , संसारहरः, रात्राह्नाहाः पुंस्येव ।

**अमृता०**—१३३. उक्तस्येति । यस्य उक्तकारकस्य क्रियायाः कालः, तत्रैवान्य-कारकस्य ( उक्तस्यानुक्तस्य वा ) क्रियावकाशो गम्यते चेत् तदा तस्मात् सप्तमी स्यात् । उक्तस्येति ग्रहणोद्देश्यं स्पष्टयति—कारकमात्रंगृह्यत इति । कारकमात्रमित्यनेन कर्त्तृ-कर्मणीएव लक्ष्येते क्रियोत्तराख्या।तस्य तदतिरिक्तकारक वाच्यत्वाभावात् । उक्तकारकस्य

---

दृष्टान्तो यथा महानसः । व्यतिरेके दृष्टान्तो यथा जलह्रदः । ननु यन्नैवमित्यत्र यत्र धूमा-भावस्तत्र वह्न्यभाव इति कथं न व्याख्यायते भद्रमुच्यते । त्वदुक्तार्थो कृतेऽपि यथा जलह्रद इत्यत्र न दोषः किन्त्वयोगोलोक इत्यत्रातिव्याप्तिः स्यादत्र धूमाभावेऽपि वह्नि-सत्वादिति । नन्वेतदस्तु । निदाघे पलालपुञ्जादौ हेमन्ते जलह्रदादौ च दैवादतिवृष्टित्वेन कुज्झटिकात्वेन च धूमसदृशदृष्टत्वात् कथं तत्र तत्र सूत्रस्यातिव्याप्तिर्न स्यात् । सत्यं ब्रवीषि समाधानं शृणु । कज्जलजनकत्वं धूमत्वमिति धूमलक्षणमतः कज्जलजनकता-भावत्वेन नायं धूमस्तस्मादत्र न व्याप्तिज्ञानमिति । नन्वत्र न भवतु वह्निसंयोगान्निः-सारितेऽपि गोपालघटिकादौ धूमस्य दर्शनात् कथं न व्याप्तिरिति चेत्तदैवं वाच्यं शिखा-वच्छेदत्वेनाखण्डधूमाभावादत्र न व्याप्तिरित्यनवद्यं सर्वमिति । तस्मात् कज्जलजनकता-वच्छेदकावच्छिन्नधूमो यत्र लभ्यते तत्रैव वह्न्यनुमिति र्नान्यत्रेति निर्गलितार्थः ॥ १३१ ॥

**बाल०**—राधा । आवन्तलक्ष्मी राधासंज्ञा ई ऊ लक्ष्मीर्गोपीसंज्ञा ताभ्यां गुण-वाचकाभ्यान्तु पञ्चमी न स्यात् । तन्माधुर्या श्रीकृष्णमाधुर्या श्रीकृष्णकृपामाधुर्या वा । अत्र हेतोस्तृतीयेत्यनेन तृतीयैव ॥ १३२ ॥

**बाल०**—हेतु । हेतुशब्दयोगे सति हेतौ षष्ठी स्यात् । कृष्णस्य हेतोर्वसतीति

उक्तस्येति सामान्यनिर्देशात् कारकमात्रं गृह्यते। गोषु तिष्ठन्तीषु दुह्यमानासु वा गायति कृष्णः।

## १३४. अर्हानर्हयोश्च।

वैष्णवेषु भुञ्जानेषु वैष्णवा आहूयन्ते। वैष्णवेषु भुञ्जानेषु अवैष्णवा आहूयन्ते। उक्तस्येति किम्—गवां दोहे गायति। अन्यस्येति किम्—दुहन् गीतवान् कृष्णः। आत्मना दुह्यमानासु गोषु गायतीत्यत्रतु

---

यस्य क्रियाद्वारा अपरस्य कारकस्यक्रियायाः कालो निरूप्यते तदोक्त कारकात्सप्तमी स्यादिति तात्पर्यार्थः।

अत्रोदाहरणे उक्तकर्त्तृणां गवामवस्थानक्रियया अन्य कारकस्य कृष्णस्य गीतक्रियायाः कालो निरूपितः। तेन यदा हि गाव स्तिष्ठन्ति तदैव कृष्णो गायति स्म इत्यवसितम्। तिष्ठन्तीति स्था धातोः कर्त्तरि शतृप्रत्ययः, दुह्यमानास्विति तु दुहधातोः कर्मणि शानः। तेन यदा गावो दुह्यन्ते तदाहि कृष्णो गायति स्मेति फलितम्। इयमेव भावे सप्तमीति सप्तमीति सति सप्तीमीति चोच्यते कैश्चित्।

**अमृता०**—१३४. अर्हेति। अर्ह इति कर्त्तरि अत्, उचित इत्यर्थः। पूर्वतोऽनुवर्त्तते सर्वम्। अर्हार्थे गम्यमाने तथा अनर्हार्थे च गम्यमाने यस्योक्तस्य क्रियाकालः, अन्यस्य क्रियाया अवकाशः तस्माच्च सप्तमी स्यात्। वैष्णवेष्विति—अत्र वैष्णवभोजनसमकाले वैष्णवानामाह्वानं योग्यमेव, तेन उक्तानां वैष्णवानां भोजनक्रियाकाले अपरेषां वैष्णवानामाह्वान क्रियाया अवकाश इत्युक्तभ्यो वैष्णवेभ्यः सप्तमी। परत्र वैष्णव भोजन वेलायामवैष्णवानामाह्वानमनुचितम्, वैष्णवभोजनात् परमेव तेषामाह्वानं तद् भोजनं वा युक्तम्, अतः अनर्हार्थत्वेन उक्तेभ्यो वैष्णवेभ्यः सप्तमी। एतद्वैपरीत्येऽपि स्यादिति वार्त्तिकमतम्।

प्रत्युदाहरति—उक्तस्येति किमिति। गवां दोह इति—दुहधातोर्भावे घण्, कृद्योगे भावे घण्, कृद्योगे कर्मणि गवामिति षष्ठी, सा चानुक्तएव कर्मणि विहिता। तस्मादत्रानुक्तस्य दोहनक्रियातया नहि गो शब्दे सप्तमीप्रसङ्ग इति भावः। दुहन्निति—अत्र येनैव कर्त्रादोहनं तस्यैव गानं भवतीति क्रिययोरेककर्त्तृत्वान्नायं प्रयोगः सूत्रस्यविषयः। आत्मनेति—गोरुक्तकर्मरूपाया दोह इत्यादिना भिन्नकारकत्वमुपपादितम्। किञ्च क्रियाद्वयस्य विशेष्यविशेषणभावे हि सूत्रस्य प्रवृत्ति र्नतु स्वतन्त्ररूपेणेति प्रकारान्तरेण प्रत्युदाहरति—यस्तुलसीमालयेति। अत्र तु क्रिया एकैव, तुलसीमालयेति विशेष लक्षणे तृतीया, तया हि विशेषत्वं बोध्यते। एवं यो भुङ्क्ते स वैष्णव इत्यत्र च एकैव क्रिया, विशेषणत्वञ्च

---

वसनक्रियाया हेतुः कृष्णस्तस्मिन् षष्ठी विशेषणत्वात् हेतुशब्देऽपि षष्ठी। वेति केचिदिति तन्मते षष्ठी तृतीया च। प्रेमहेतोरिति प्रेमा चासौ हेतुश्चेति श्यामरामः॥ १३३॥

स्यादेव, गोरुक्तकर्मरूपाया दोहः, गानन्तु कर्त्तुरिति । अत्र तु सूत्रं न प्रवर्त्तते—तुलसीमालया स भुङ्क्ते, योभुङ्क्ते सवैष्णवः ।

**१३५. अत्रानादरे षष्ठी च ।**

रुदति कुटुम्बे रुदतः कुटुम्बस्य वा मथुरां गतः । तदनादृत्येत्यर्थः ।

**१३६. साधुनिपुणाभ्यां योगेऽर्चायां सप्तमी ।**

साधुः कृष्णे, निपुणः कृष्णभक्तौ । अर्चायां किम्—कंसस्य साधवी दैत्याः ।

---

योभुङ्क्त इति वाक्येन प्रतीयते नहि क्रियया । तेन भिन्नकारकयोः क्रियाद्वयसद्भावे तयो र्विशेष्यविशेषणभावे चास्य सूत्रस्य प्रवृत्तिरिति सारो लब्धः ।

**अमृता०**—१३५. अत्रेति । अत्र एक क्रियायाः कालेनान्यक्रियायाः कालनिरूपणे विषये अनादरो गम्यते चेत् तदा सप्तमी षष्ठी च स्याताम् । रुदतीति—रुदिर् धातोः शतृ प्रत्ययः । यदा रोदनक्रियायाः कालः तदैव गमनक्रियाया अवकाशः । तेन रोदन क्रियायाः कालेन गमनक्रियायाः कालो विशिष्यते । तदनादृत्येति रोदनमनपेक्ष्येत्यर्थः ।

**अमृता०**—१३६. साध्विति । अर्चा पूजा, तस्यां गम्यमानायां साधुनिपुणशब्दाभ्यां योगे सप्तमीस्यात् । साधुः कृष्णे इति—कृष्णं सम्मानत इत्यर्थः । कंसस्य साधवो दैत्या इत्यत्र तु पूजा न प्रतीयते किन्तु पक्षपातित्वमेव ।

---

**बाल०**—कृष्ण । सर्वादीनि कृष्णनामानि तद्योगे सति निमित्तकारणरूपो यो हेत्वर्थस्तस्मात् द्वितीयावर्जं सर्वा विष्णुभक्तयो भवन्ति ।

कृष्णेति । कृष्णनामभिरयोगेऽपि । कंसघातेन कंसहननेन ॥ १३४ ॥

**बाल०**—एण । एणप्रत्ययोऽन्ते यस्य तद्योगे द्वितीयाषष्ठ्यौ भवतः । अपञ्चम्या अपञ्चम्यन्तात् । दक्षिणेति । दक्षिणशब्दात् प्रथमान्तात् पञ्चम्यन्ताद्वा । अदूरे एणो पञ्चम्या वेत्यनेन एणः, ततः अन्तरङ्गस्वादेर्महाहरः । दक्षिणस्यामदूरवर्त्तिन्यां दिशि अक्रूरतीर्थमित्यर्थः ॥ १३५ ॥

**बाल०**—दूरा । दूरार्थेन अन्तिकार्थेन बहिःशब्देन च योगे षष्ठी पञ्चमी च स्यात् । अन्तिकशब्दो निकटवाची ।

दूरान्तिकार्थेभ्यः शब्देभ्य उत्तरे द्वितीयादयः स्युः नाममात्रार्थे वाच्ये । पुलिन्दशब्दो निकृष्टजातिवाची । भेदाः किरातशवरपुलिन्दा म्लेच्छजातय इत्यमरः । एवमिति । अत्रापि व्रजस्य व्रजाद्वेति योज्यं । इत्यादीत्यादिपदेन बहिर्व्रजस्य व्रजाद्वा तिष्ठन्ति भिल्ला इति । नाममात्रार्थ इति यदुक्तं तदेव विवृणोति असत्ववचने धर्मवचने । अन्यत्रेति असत्ववचन इत्यर्थः । दूर इति । अत्र दूरशब्दो धर्मवचनः ॥ १३६ ॥

**१३७. असाधुनानर्चायां सप्तमी ।**

असाधुः कृष्णे ।

**१३८. अधिकार्थेनोपेनयुक्तात् सप्तमी ।**

उपपरार्द्धे हरे र्गुणाः, परार्द्धादधिका इत्यर्थः । परार्द्धादिति गम्य यवन्तात् पञ्चमी । किन्तुविस्तरे—कर्त्तरि कर्मणि चाध्यारूढस्य-क्तान्तस्याधिकादेशः । ततः कर्मणि अधिका खारी द्रोणेनेति, कर्त्तरि त्वधिकः खारीं द्रोणः । अधिकः खार्यां द्रोण इति त्वधिकरणस्यैव विवक्षेति । यद्‌येवं गम्य यप् पञ्चम्यपि दुर्निवारा ।

---

**अमृता०**—१३७. असाधुनेति । अनर्चायां गम्य मानायां असाधुशब्देन योगे सप्तमी भवति । असाधुः कृष्णे इत्यत्र कसः कर्त्ताध्याहार्यः, अनर्चा तु प्रसिद्धा ।

**अमृता०**—१३८. अधिकार्थेनेति । अधिकार्थेन उपशब्देन युक्तान्नाम्नः सप्तमी स्यात् । परार्द्धं चरमसंख्येति दर्शितं प्राक् । अर्थमुक्त्वा मतान्तरदर्शनाय परार्द्धादिति पञ्चम्यर्थं पुनराचष्टे—गम्ययवन्तादिति । गम्यस्य यवन्तस्य कर्मणोऽधिकरणाच्चेत्यनेन पञ्चमी, परार्द्धमपेक्ष्येत्यर्थः । अत्र विस्तरमतानैक्यं प्रपञ्चयति—कर्त्तरि कर्मणि चेति । अध्याङ् पूर्वस्य रुहधातोः कर्त्तरि कर्मणि च क्त प्रत्यनेन अध्यारूढपदं निष्पाद्य तत्स्थाने अधिक इत्यादिश्यते । ततस्तस्य कर्त्तरि यथाक्रमं प्रथमा तृतीया च प्राप्ता, कर्मणि तु द्वितीया प्रथमा चेति दर्शितमुदाहरण द्वयेन । तन्मते परार्द्ध शब्दयोगे कर्मणि क्ते— परार्द्धमधिकं गुणैरिति, कर्त्तरि तु परार्द्धमधिका गुणा इत्येवं रूपं सिद्धम् । अधिकः खार्यामिति तु कर्मण्यधिकरणविवक्षा, अत्राधिक इति कर्त्तरि क्तस्य विधानात् । स्वयञ्च कृदन्त प्रकरणे—अध्यारूढस्याधिको वा साधुरिति निपातो वक्ष्यते । तेन च मतमिदमनुपेक्षणीय मिति विज्ञाप्य स्वमतस्यापि सारस्यमुपपादयति—यद्यप्येवमिति । यद्यपि अधिक शब्दात् कर्त्तरि प्रथमा तृतीया च न्यायतः प्रयोक्तुं शक्या तथापि गम्य यवन्तपञ्चम्यपि निवारयितुमशक्या । तथाहि—यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमीति पाणिनीय सूत्रमेव समर्थकमेतस्य ।

---

**बाल०**—आशिषि । आशिषि गम्यमानायां हिताद्यर्थयोगे च सति षष्ठीपञ्चम्यावेव तवतः । दूरान्तिकार्थयुक्तादिति शेषः एवकारात् दूरान्तिकार्थेभ्यो नाममात्रार्थे द्वितीयादयो न भवन्तीति । दूरं यात्विति दरशब्दोऽत्र धर्मवचनः दुरमिति कर्म । अन्तिकमिति स्वन्तं ॥ १३७ ॥

**बाल०**—अत । अतस्यर्थैर्योगे षष्ठी स्यात् । अतस्यर्थास्तद्धितप्रकरणे बक्ष्यन्ते । दक्षिणत इति दक्षिणोत्तराभ्यां सप्तमीप्रथमाभ्यामतसिरिति अतसिः । अ इ द्वयस्य हर इत्यनेन अरामहरः । पुरस्तादिति पूर्वशब्दात् सप्तम्यन्तात् । दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिरित्यनेनास्तातिः । अन्तरङ्गस्वादेर्महाहरः । पूर्वादीनां

## १३८. निमित्तात् कर्मसंयोगे सप्तमी।

**सौरभ्ये तुलसीं जिघ्रति।**

---

**अमृता०**—१३८. निमित्तस्य कर्मणा संयोगे सति क्रियाया निमित्तात् सप्तमी भवति। हेतौ तृतीयायां प्राप्तायां तन्निवारणार्थमिदं विधानम्। तादर्थ्ये चतुर्थी वारणार्थमिति केचित्। सौरम्य इति—अत्र क्रियाया घ्राणस्य निमित्तं सौरम्यं सुरभित्वमित्यर्थः, तस्य कर्मणा तुलस्या संयोगः समवायसम्बन्धेन हि विद्यत इति निमित्तात् सप्तमी। सौरभग्रहणार्थं तुलसीं जिघ्रतीत्यर्थः। एवं—चर्मणि द्विपिनं हन्ति दन्तयो र्हन्ति कुञ्जरम्। केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः॥ इति भाष्यम्। सीम्नि अण्डकोषे, पुष्कलको गन्धमृगः। वस्त्रेषु रजकमवधादिति वोपदेवः। एतद् दृष्ट्वा—हन्तेः कर्म योगे सप्तमीति केचित् सिद्धान्तयन्ति। तत्र च हन्तेरित्यनुपेन्द्रस्यैव ग्रहणमिष्टम्। तेन नेह—मुक्ताफलाय-करिणं हरिणं पलाय सिंहं निहन्ति भुज विक्रमसूचनाय। का नीति रीति रियती रघुवंश वीरः शाखामृगे जरति यस्तववाण मोक्षः॥ इति॥ किन्तु मतमिदं न मुन्यादि सम्मतमिति ग्रन्थकृता सामान्यतः सूत्रितम्।

ननु हरिप्रीतये हरिंभजतीत्यादि वदत्रापि तादर्थ्येन हि स्वाभीष्टं सिध्येत् तथापि सूत्रप्रयत्ने को विशेषोलाभ इति चेत्? सत्यमवधीयताम्—तादर्थ्ये प्रकृति विकृति भावो नियतः, तत एव कार्यरूपात् प्रयोजनादित्येवं व्याख्यातम्। सच मालायै तुलसीत्यादिषु स्फटएव, मालारूपेण तुलस्याः परिणति दर्शनात्। इह तु सौरम्यं नहि—तुलस्याः कार्यं परिणामो वा, अपि पूर्वसिद्धं तदङ्गमेव। यद्यप्युद्देश्य रूपोऽर्थ उभयत्रहि तुल्य स्तथापि पूर्वत्रोद्देश्यस्य कार्यरूपेण परिणतिरुपलभ्यते, इह तूद्देश्यस्याविकृत रूपेणावस्थिति-रिति भेदः।

निमित्तादिति किम्—उद्यानस्य तुलसीं सिञ्चति। कर्म संयोग इति किम्—बाणिज्याय वङ्गे प्रवसति। संयोग इति किम्—भिक्षायै देशं त्यजति। फलायवृक्षं छिनत्तीत्यादौ तादर्थ्यमिष्टमेव। किञ्च मुक्ता फलाय करिणमित्यादौ मुक्ताफल-माहर्त्तुमिति तुम्वन्तक्रियायाः कर्मणि चतुर्थी, भुजविक्रमसूचनायेति तु तादर्थ्ये चतुर्थी सु व्यक्ता।

---

पुर् अध् अव् तयोरित्यनेन पूर्वस्य पुरं। अवधित्वेति। तन्मते दक्षिणतो व्रजादित्यादि भवति॥ १३८॥

**बाल०**—सामा। सामान्यतः सामान्यात् विशेषस्य निर्द्धारणेऽर्थे षष्ठीसप्तम्यौ भवतः। विशेषतो विशेषस्य निर्द्धारणं चेत्तदा पञ्चम्येव। यस्मान्निर्धारणं तस्मात् षष्ठ्यादयः। यस्मान्निर्द्धारण तस्मात् प्रथमादिकारकविष्णुभक्तिः। निर्द्धारणलक्षणमाह निद्धारणमिति। यदुनामिति। अत्र सामान्येभ्यो विशेषाणां वृष्णीनां श्रेष्ठत्वरूपधर्म-विशेषेण पृथक्करणं। माथुरा इति विशेषेभ्यो विशेषाणां माथुराणां आढ्यतरत्वरूपधर्म-विशेषेण पृथक्करणं। आढ्यो धनी॥ १३९॥

१४०. ऐश्वर्यार्थेनाधिका युक्तात् सप्तमी । स्वात् स्वामिनो वा विष्णुभक्तिः ।

अधिभुवि रामः, रामो भुवः स्वामीत्यर्थः । अधि रामे भूः, भूः रामस्य स्वमित्यर्थः ।

विवक्षातश्च कारकादीनि भवन्ति । दर्शितानि तत्र तत्र । यथा च—क्रिया जायते । ओदनः पचति, सिध्यतीत्यर्थः । तण्डुलः पचति, विक्लिद्यतीत्यर्थः । ओदनं पचति वैष्णवः, साधयतीत्यर्थः । तण्डुलं पचति, विक्लेदयतीत्यर्थः । तण्डुलमोदनं पचतीति द्विकर्मके व्याख्यातम् । कृष्णो वंशीवाद्येन सुखं ददाति वंशीवाद्ये वा । व्रजं प्रवशति व्रजे वा ।

---

अमृता०—१४०. ऐश्वर्यार्थेनेति । ऐश्वर्यार्थं द्योतकेन अधिना युक्तान्नामः सप्तमी भवति । सा च सप्तमी स्वात् स्वामिनो वा भवति । वा शब्दो विकल्पार्थकः, तेन पर्यायेण सप्तमी स्वान्नतु युगपदिति बोध्यते । एतेन सम्बन्ध सामान्यस्य बाधकमिदमिति व्यज्यते । अव्ययीभाव समासपक्षे अधिरामं भूरिति वक्ष्यते ।

एवञ्च शब्दयोगे विष्णुभक्तीः प्रदर्श्योपसंहारे तत्तन्नियमानाअनित्यतां सूचयन् विवक्षाया एव प्राधान्यमभ्युपगच्छति—विवक्षातश्चेति । आदि पदेन षष्ठ्या उपपद विष्णु-भक्तीनाञ्च ग्रहणम् । विवक्षात इति तृतीयायां तसिः, विवक्षया इत्यर्थः । लक्षणंविनापि वक्तुरभिप्रायेण हि सर्वाणि सिध्यन्तीति तात्पर्यम् । तत्र तत्रेति—स्वतन्त्रं तत् प्रयोजकञ्च कर्त्तृ, क्रिया यत् साधिका तत् कर्म इत्यादि लक्षणावसरे दर्शितानि, तथापि चेह किञ्चिद् दर्श्यत इति भावः ।

क्रिया जायतइति—कर्त्तृलक्षणे कर्त्तुरेव स्तातन्त्र्यमुक्तम्, इह तु क्रियाया एव तद्विवक्षितम् क्रियायामेव कर्त्तृतारोपिता । पचते योगे नानार्थमाविष्करोति—ओदनः पचतीत्यादिभिः । अत्रपचेरकर्मकत्वं, ओदनस्य कर्त्तृत्वविवक्षया पचतेः सम्पन्नार्थत्वं दर्शितम् । तण्डुलस्य कर्त्तृत्वविवक्षायान्तु विक्लेदनार्थः । वैष्णवस्य कर्त्तृत्वविवक्षायां धातोः साधनार्थकत्वेन सकर्मकता । तथा पचते द्विकर्मता व्याख्यातैव प्राक्—तण्डुलमोदनं साधयन् विक्लेदयतीत्यर्थ इत्यनेन । अथ करणस्याविवक्षायामधिकरणस्य प्रवृत्ति दर्शयति—वंशीवाद्येन वंशीवाद्ये वेति । इत्यादि मन्यन्ते इत्यग्रेणान्वयः । एवं कर्मणश्चा-विवक्षायामधिकरणम् । गोपीभ्यः स्पृहयतीति—सम्प्रदानमेव लक्षणेन प्राप्तम्, तत्र कर्माधिकरणे षष्ठीञ्च मन्यन्ते, दिवस्तु कर्म करणे लक्षण प्राप्ते, अधिकरण षष्ठ्यौ च मन्यन्यते । गवां स्वामीति षष्ठी न्याय्या, सप्तम्यपि विवक्ष्यते । एवं गवामीश्वरः गवां प्रसूतः गोषु वेत्यादि । स्वाम्यादि शब्दयोगे षष्ठी । सप्तम्यौ सूत्रेण हि विहिते वैया-करणैः । तत्र च "षष्ठ्यामेव प्राप्तायां सप्तम्यर्थं वचनम्, अथाधिकरणविवक्षायां सप्तमी केन वार्यते इति चेत् ? सुखप्रतिपत्त्यर्थमिदम्", इत्थं समाहितं तैः ।

गोपीभ्यः स्पृहयति गोपी गोंपीषु गोपीनां वा। गां दुग्धं दोग्धि गोभ्यो गवां वा। अक्षै र्दीव्यति अक्षात् अक्षाणां अक्षेषु वा। गवां स्वामी गोषु वा। एवमीश्वराधिपति दायाद साक्षि प्रतिभुवः। तथा व्रजस्य राजा व्रजे वा। पञ्चकृत्वो दिनस्य दिनेन दिने वा भुङ्क्ते। एवं द्विबहु इत्यादि।

तथा शतं दायी शतस्यदायीत्यादि मन्यन्ते। तथाहि—माषाणामश्नीयादिति भाष्यम्। नच स्निह्यति कस्यचिदिति भट्टिः। ग्रामाद्यद् गुणिनां हितमिति च। सा लक्ष्मीरुपकुरुते यया परेषामिति किरातः। नारायणस्यानुकरोतीत्याद्यपि बहुत्र। यत्र तु करणं वेति कर्म वेति प्रोच्य पक्षे सम्बन्धो विवक्ष्यते तत्र तु तस्य तस्यैव सम्बन्धिता नान्यस्येति नियम्यते।

ततः शुभ्रत्वेन गङ्गाजलस्य जानीते इत्यादौ शुभ्रत्वादीनां तद्विवक्षा नस्यात् दुर्बोधत्वात्। चान्द्राः कालापाश्च विवक्षयैव प्रायः सर्वं साधयन्ति। तदुक्तं बर्द्धमानमिश्रैः—कल्पनाप्रसवानां नास्त्यन्त इति।

---

पञ्चकृत्व इति—"संख्यायाः क्रियाभ्यावृत्तौ" इति कृत्वसु प्रत्ययस्तद्धितः, पञ्चवारमित्यर्थः। अत्राधिकरणमेव लक्षण प्राप्तम्, करणं षष्ठीञ्च मन्यन्ते। द्विरिति—क्रियाभ्यावृत्तौ द्वित्रिचतुर्भ्य इति सु प्रत्ययस्तद्धितः, पूर्ववदर्थः प्रयोग विवक्षा च। तथा षष्ठीनिषेधात् शतं दायीत्येव प्राप्तम्, षष्ठीमपि मन्यन्ते। एतदुक्तीनां पोषकत्वेन महाकवीनां प्रयोगाश्च समाहरति—तथाहीति। माषाणामित्यत्र सकर्मकत्वमपवार्य षष्टो विवक्षिता। नच स्निह्यतीति—अधिकरणाविवक्षया षष्ठी। ग्रामाद्यदिति—हितयोगे चतुर्थी स्थाने षष्ठा। सा लक्ष्मीरिति—यया परेषामुपकुरुते सा हि लक्ष्मी नं तु ययात्मतृप्तिः स्यादित्यर्थः। अत्र कर्माबिवक्षातः षष्ठी। तथैव नारायणस्येत्यत्र च।

तत्र विशेषमाचष्टे—यत्र त्विति। करणं वेति—"अज्ञानार्थस्य ज्ञः करणं वा" इत्यत्र करण स्थाने हि विभीषया षष्ठी विहिता, अतस्तत्रान्यकारकस्य विवक्षा नेष्टा। एवं—"कृञः कर्म वे"त्यत्र कर्म स्थाने हि षष्ठ्याविभाषा विधानात् करणादि विवक्षा न स्यात्। तदेतत् स्मृत्यर्थदयेशामित्यत्र व्याख्यातं, तत्र तत्र दर्शितञ्च। तदविवक्षायां हेतुः—दुबोधत्वादिति। विभक्त्यर्थस्य बोधे काठिन्य पातादित्यर्थः। कल्पेयेति—कल्पनया विवक्षया प्रसवानामुद्भावितानां युक्तीनामन्तो नास्तीत्याशयः।

सर्वापवादमुपदिशति—कृष्णप्रवचनीयैरिति। एभिर्योगे विभक्त्यन्तरविवक्षां न मन्यन्ते वैयाकरणा इति शेषः। तत्र हेतुः—तत्र संज्ञाकरणे प्रयत्नविशेषावगमादिति। प्रयत्न उद्योगः। तथा हि—सम्बन्धस्य तु भेदक इति भर्तृहरि वचनात् कृष्णप्रवचनीयानां

कृष्णप्रवचनीयैर्योगे तु नान्यां विवक्षां मन्यन्ते, तत्र संज्ञाकरणे प्रयत्नविशेषावगमात्। यथा—कृष्णं प्रति साधुः, साधुनिपुणाभ्यामिति न सप्तमी। गोपीं गोपीं प्रति प्रेमास्ति, नाधार सप्तमी। गाः प्रति स्वामी, सम्बन्ध विषययो र्न षष्ठी सप्तम्यौ। कृष्णं प्रत्युत्सुकः, प्रसितोत् सुकाभ्यामिति न तृतीया सप्तम्यो। कंसंप्रति हरिः क्रुद्धः, नसम्प्रदान चतुर्थीति।

॥ इत्युपपदविष्णुभक्तयः ॥

---

प्रायः षष्ठ्यपवादत्वं लब्धम्, तथा "धातु योगाभावेनोपेन्द्रत्वाभावादि" त्यनेन तेषामुपेन्द्रत्वनिषेधश्चावगत स्तत्रैव। तस्मादेतदपवाद कार्यद्वयस्य बलवत्त्वपालनार्थां हि कृष्णप्रवचनीय संज्ञा विहिता, अन्यथा लक्षणाद्यर्थेषु अभिप्रभृतियोगे द्वितीयाविधानेऽपीष्ट सिद्ध्येतेति नैव, विवक्षान्तरं भवतीति दर्शितमुदाहरणैः।

॥ इति व्याख्याता उपपदविष्णुभक्तयः ॥

---

**बाल०**—आयुक्त। तात्पर्ये गम्यमाने आयुक्तकुशलयोगे षष्ठीसप्तम्यौ भवतः। आयुक्त इति तत्पर इत्यर्थः। सप्तम्यां प्राप्तायां पक्षे षष्ठ्यर्थं वचनं॥ १४०॥



अथ अच्युताद्यर्था विवक्ष्यन्ते ।

**१४१. वर्त्तमानेऽच्युतः ।**

**वर्त्तमानो बहुविधः । तत्र वचनसमकालत्वे वैष्णवो भवति । त्रिकाल भावेषु सदातनत्वे—भगवान् विराजते । बहु कालत्वे—गङ्गा स्रवति । तच्चरितत्वे—भगवन्तं पूजयत्ययम् ।**

**पौनः पुन्ये च—त्वामेव पृच्छति हरिः सखि ! मद्विलोके । तस्माद्**

---

अथ आनन्तर्ये, उपपदविष्णुभक्त्यर्थनिरूपणानन्तरमच्युतादीनामर्था सम्यक्तया वक्ष्यन्ते कथयिष्यते। कथनस्य वर्त्तमान समीपत्वेऽपि वर्त्तमानप्रयोगाभावपक्षे कल्किरयम् । अच्युतादयश्च तिवादि प्रत्ययात्मकाः कालविशेषमाश्रित्य प्रवर्त्तन्ते इति प्रोक्तमाख्यात प्रकरणे। कालस्य लक्षणमाह सन्दर्भे—कालस्तु भूत भविष्यद् वर्त्तमान श्चिरक्षिप्रादि व्यवहारहेतुः क्षणादि परार्द्धान्त श्चक्रवत् परिवर्त्तमानः, प्रलयसर्गनिमित्तभूतो जडद्रव्य विशेष इति । किञ्च काल आकाशवदपरिच्छिन्नो विभुः, भूतभविष्यदादिव्यपदेशस्तु किञ्चिद्वस्तुनः सत्तामपेक्ष्य हि जायत इति बोध्यम् । अच्युतादि दश कालविभागा दश लकारत्वेन व्यपदिष्टाः प्राचीनैः ।

**अमृता०**—१४१. वर्त्तमान इति । वर्त्तमान काले धातोरुत्तरे अच्युत नामा लकारः प्रयुज्यते । वर्त्तमानस्य बहुविधत्वं दर्शयति—तत्रेत्यादिभिः । वचनसमकालत्व इति—प्रयोक्तुर्वचनेन समं तुल्यकालो यस्य स वचनसमकाल स्तस्यभाव स्त्वं तस्मिन् । वैष्णवो भवतीत्यत्र आचार्यो वदतीत्यध्याहार्यमर्थं सुबोधाय । तेन यत् काले प्रयोक्तुराचार्यस्य कथनं तत् काले हि वैष्णवभवनरूप क्रियाया वर्त्तमानता समुपलभ्यते । त्रिकालभावेष्विति—त्रिषु कालेषु भावः सत्ता येषां ते त्रिकालभावाः, ईश्वर जीव माया काल कर्मेति वेदान्तोक्तनित्य पदार्था स्तेषु वर्त्तमानस्य सदातनत्वे नित्यत्वे सतीत्यर्थः । यस्य स्वरूपस्य त्रिषु कालेषु नान्यथाभावः स खलु सदा वर्त्तमान तयोपलभ्यते भक्तैरिति विवेकः ।

बहु कालत्व इति—बहुकालादारभ्य गङ्गाप्रवहने वर्त्तमानतायाः प्रवृत्तिः, प्रस्रवणस्य ध्वंसाभावान्न जातुभूतत्वप्रतीति रितिभावः । तच्चरितत्व इति—तत् पदेन कर्त्तुः परामर्शः, तेन भगवतः पूजनमेवास्य चरितं शीलमित्यर्थः । त्वामेवेति—राधिकां प्रति

---

**बाल०**—एकस्थ । एकस्मिन् स्थितयोः क्रिययोर्मध्ये यः संख्यात्मकः कालस्तस्मात् कारकयोर्मध्ये यश्च संख्यात्मकोऽध्वा अध्वपरिमाणं तस्माच्चोत्तरे सप्तमी पञ्चमी च

व्यक्त्या जात्या चैकक्रिया व्याप्तत्वेन भूतभविष्यदतिरिक्ततया विवक्षितः कालो वर्त्तमानः ।

## १४२. भूते भूतेशः ।

श्रीकृष्णावतारोऽभूत् ।

---

कस्याश्चित् सख्या उक्तिः—हरि मंद् विलोके मां बिलोक्य त्वामेव बारम्बारं पृच्छतीति वर्त्तमानस्य पौनः पुन्यं बोधितम् ।

केचित्तु वर्त्तमानस्य चातुर्विध्यमन्यथाहुः, यथा,—प्रवृत्तोपरतश्चैव वृत्ताविरत एव च । नित्य प्रवृत्तिः सामीप्यो वर्त्तमानश्चतुर्विधः ॥ इति ॥ तत्र च य आरब्धः सन्निवृत्तः स प्रथमः, यथा मत्स्यं न खादति । य आरब्धो न पुन विरतः सद्वितीयः, यथा गोपालाः क्रीडन्ति । तृतीयो नित्यप्रवृत्तिर्यथा पर्वताः सन्ति । अत्र बहु कालप्रवृत्ति रिति वक्तव्ये नित्य प्रवृत्तिरित्युक्ति र्ज्ञेया, अन्यथा उत्पत्ति विनाशशालीनां पर्वतानां नित्यप्रवृत्त व्यभिचारापत्तेः । सामीप्यञ्च द्विविधं, भूतस्य भविष्यत श्चेति, यथा कदा आगतोऽसि ? अयमागच्छामि । कदा गमिष्यसि ? एष गच्छामीति । सामीप्य वर्त्तमानस्तु मूले दर्शयिष्यते ।

एवं वर्त्तमानस्य बहुविधत्वमुदाहृत्य तस्य निष्कृष्ट लक्षणमाह—व्यक्त्या जात्या चेत्यादिना । व्यक्त्या जात्या च (कर्त्तृ भूतया) एकक्रियायाः व्याप्तत्वं यथा स्यात् तेन रूपेण विवक्षित स्तथा, भूतभविष्यद्भ्यामतिरिक्तरूपेण च विवक्षितः कालो वर्त्तमान इत्यर्थः । व्यक्ति जात्योरन्योन्याश्रयत्वाद् जाति विशिष्टव्यक्त्या हि क्रिया व्याप्तिर्ज्ञेया नतु प्रत्येकं स्वातन्त्र्येण । तत्र चैकक्रियाव्याप्तत्वम् प्रारम्भादासमाप्तेरेकस्या निरवच्छेदेन सम्पाद्यमानत्वमित्यर्थः । तेन पचनक्रियामारम्य निद्रिते, नष्टे च पाके नहि पचतीति प्रयोगः स्यादित्यभिप्रायः । यथोक्तम्—प्रारम्भादासमाप्तेस्तु यावन्न नश्यति क्रिया । तावद् वर्त्तत इत्यस्माद् वर्त्तमान उदाहृतः ॥ इति ॥

**अमृता०**—१४२. भूत इति । अतीत काले धातोरुत्तरे भूतेशः प्रयुज्यते । अत्रभूत-सामान्ये विवक्षा, विशेषस्यानन्तरसूत्रे वक्ष्यमानत्वात् । तेन—श्रीकृष्णावतारोऽभूदिति तदाविर्भावदिवसेऽद्यतनभूते देवा ऊचुः, अधुनाऽनद्यतनभूते वयञ्च ब्रूमः । एवञ्च—अभून्नृपो विबुधसख इत्यादि भट्टि प्रयोगः सङ्गच्छते ।

---

स्यात् । द्रष्टेति दृशधातोस्तृण् । द्व्यह इति द्वयोरह्नोः समाहार इति राजाहसखिभ्य इत्यनेन केशवारामः । अह्नाष्ट-खरामयोरेवेत्यनेन संसारस्य हरः ॥ १४१ ॥

**बाल०**—उक्त । क्रियायाः कालः क्रियाकालः । यस्य उक्तस्य कारकस्य क्रिया-कालोऽन्यस्य कारकस्य क्रियावकाशः क्रियावसरस्तस्मादुक्तात् सप्तमी स्यात् । कारकमात्रं गृह्यत इति अतो गोषु दुह्यमानाष्वित्यत्र कर्मणि विहितेन शानेनोक्ताभ्यो गोभ्यः कर्मभ्यः सप्तमी । गोष्विति । अत्र गवां स्थितिक्रियाया दोहनक्रियायाश्च कालः कृष्णस्य गान-क्रियाया अवकाशः ॥ १४२ ॥

## १४३. अनद्यतनभूते भूतेश्वरः ।

प्रभुरयम् । पूर्वापरनिशयो र्द्वाभ्यां द्वाभ्यां यामाभ्यां सह दिवसमद्यतन काल स्तद्भिन्नोऽनद्यतनः । तस्मिन्नधिक्रियते । कृष्णावतारोऽभवत् ।

## १४४. स्मरणोक्तौ कल्कि र्नतु यत्प्रयोगे, साकाङ्क्षे वक्तरि तु वा ।

स्मरसि भ्रात र्बृहद्वने वत्स्यावः । नेह—भ्रात र्जानासि यद् बृहद्वनेऽ

---

**अमृता०**—१४३. अनद्यतनेति । अद्यतनभिन्नेभूते हि भूतेश्वरः प्रयुज्यते । प्रभुरिति —अनद्यतनभूतमधिकृत्य वक्ष्यमाणा लकाराः ( प्रश्नस्योत्तर इति यावत् ) उच्यन्त इति प्रभोरर्थः । अनद्यतनस्य लक्षणं व्याचष्टे—पूर्वापरयो रित्यादिना । यामः प्रहरः, अष्टाभि-र्यामैः षष्ठिदण्डात्मकमहोरात्रम् । तेन सार्द्धसप्तदण्ड परिमितः कालो याम इत्यर्थः । पूर्वनिशाया अन्तिमौ द्वौ यामौ, दिवसस्य चत्वारो यामा स्तथा अग्रिमनिशायाश्चादियाम द्वयमिति मिलित्वाष्टयामः कालः अद्यतन उच्यते, तदतिरिक्तोऽनद्यतनः । स पुन भूते भविष्यति चोभयत्र सम्भवति । तत्र भूते भूतेश्वरस्य विषयः, भविष्यति तु बालकल्के रिति वक्ष्यते । कृष्णावतारोऽभवदिति तु तदाविर्भाव कालात् परं षष्ठी दण्डेषु व्यतीतेषु कस्यचित् प्रयोगो बोध्यः, इदानीन्तनश्च ।

**अमृता०**—१४४. स्मरणोक्ताविति । स्मरणवाचकशब्दस्य प्रयोगे सति अनद्यतन भूते धातोः कल्किः स्यात् : भूतेश्वरापवादः । यच्छप्रयोगे तु तत्र कल्कि र्न स्यात् किन्तु

---

**बाल०**—अर्ह । अर्ह इति अर्हतीति कर्त्तर्यत् । ययोरर्हानर्हयोः क्रियाकालोऽन्यस्य क्रियावकाशस्ताभ्यामर्हानर्हाभ्याञ्च सप्तमी स्यात् । वैष्णवष्विति । अत्र अर्हाणां भोज-नार्हाणां वैष्णवानां भोजनक्रियायाः कालः वैष्णवानां आह्वानक्रियाया अवकाशः भुञ्जाने-ष्विति भुजधातोः शानः रुधादित्वात् शप्खण्डी श्नम् । वैष्णवेष्विति । अत्र वैष्णवा अनर्हा भोजनानर्हाः अवैष्णवाह्वानात् पूर्वस्यैव प्रपञ्चोऽयं योग इति ज्ञेयं । गवां दोहे दोहनकाले । दुहन्निति कर्त्तरि शतृ । दोहनक्रियाया गमनक्रियायाश्च कर्त्ता कृष्णः । आत्मनेति । सादेवेत्युक्त्वा हेतुमाह गोरुक्तकर्मरूपाया इति । उक्तकर्मणो दोहनक्रियायाः गानक्रियातु कर्त्तुः । गोरिति गोशब्दस्येत्यर्थः । अन्यथा बहुवचनं स्यात् । गवामुक्तकर्म-रूपाणामिति वा पाठः । अत्र त्विति । न प्रवर्त्तेयं इति विषयाभावादिति शेषः । क्रियाद्वय-सद्भावे लक्षणं प्रवर्त्तते । यस्तुलसीमालया सह भुङ्क्ते इत्यत्र एकैव क्रिया सापि अन्यस्य न किन्तु तुलसीमालिन एव अतः सूत्रं न प्रवर्त्तत इति । तुलसीमालयेति प्रकृत्यादिभ्य-स्तृतीयेत्यनेन उपलक्षणे तृतीया । यो भुङ्क्ते स वैष्णव इत्यत्रापि एकैव क्रिया अन्योऽपि नास्ति अतस्तस्याः क्रियायाः कालस्य अन्यस्य क्रियावकाशता न घटते इति सूत्रं प्रवर्त्तत इति ॥ १४३ ॥

**बाल०**—अत्र । अनादरे अर्थेऽत्र सप्तमी षष्ठी च स्यात् । अत्रेति यस्य उक्तस्य

वसाव। अत्र तु यत्प्रयोगेऽपि वा,—स्मरसि यद् वृन्दावने वत्स्यावः अवसाव वा, तत्र क्रीडां करिष्यावः अकुर्व वा। वासोऽत्र लक्षणं, क्रीडा करणं लक्ष्यम्, तयोः सम्बन्धे ह्यत्र प्रयोक्तुराकाङ्क्षा मता।

**१४५. परोक्षानद्यतनभूतेऽधोक्षजः।**

कृष्ण श्चिक्रीड। हरिप्रेममत्तोऽहं किं विललाप इति परोक्षवद् भाणात्। नाहमवैष्णवमन्त्रं जजाप इत्यपरोक्षत्वेऽप्यपह्नवात्। अहन् कंसमित्यादय आधुनिकजल्पा स्त्वनद्यतनभूतमात्र विवक्षया।

---

भूतेश्वर एव। तत्र वक्ता साकङ्क्षश्चेत् तदा कल्कि र्वा स्यात् यत्प्रयोगेऽपीति सम्बन्धः। पक्षे भूतेश्वर एव। बृहद्वने महावने गोकुले इत्यर्थः। साकाङ्क्षत्वमुपादयति—वासोऽत्रेति। उक्तिग्रहणं पर्यायार्थम्, तेन अभिजानासि बुध्यसे चेतयसे इत्याद्युपपदेऽपि कल्कि-र्भवेदिति।

**अमृता०**—१४५. परोक्षेति : अक्ष्णां परः परोक्ष इन्द्रियाणामविषयः, असाक्षादित्यर्थः। स चासौ अनद्यतनभूत श्चेति तथा। तस्मिन् काले धातोरधोक्षजः प्रयुज्यते। अनद्यतनभूते इत्यधिकारादनुवर्त्तते, तथापि पुनस्तद् ग्रहणं स्पष्टतार्थम्। परोक्षानद्यतन-भूतत्वं वक्तारमपेक्ष्य हि बोध्यम्। तेन मध्यम पुरुषेऽपि स्यात्। यथा—त्वं वृन्दावनं ददर्शिथ इति श्रुतवानस्मि। उत्तमपुरुषविषये तु सामान्यतो नसिध्यत्ययम्, स्वस्य परोक्षत्वे स्वेनैव तत्कथनासम्भवात्। तस्मादेव तत्रविशेषार्थं प्रयोगंसम्भावयति—हरि-प्रेममत्त इति। अत्र हेतुः-परोक्षवद् भाणात्, परोक्षवद् बुद्धचा कथनादित्यर्थः। हरिप्रेम्ना चित्तविक्षेपादननुसन्धानेनाहं किं विललाप तन्नजान इति भावः। एवमपह्नवार्थे च भवतीति दर्शयति—नाहमित्यादिना। अपह्नवः अपलापः गोपनमिति यावत्। कश्चित् किञ्चिदर्थ-सिद्धये अवैष्णवमन्त्रं शक्तिमन्त्रमजपत्, अपर स्तद्विदित्वा तं पृच्छति स्म-त्वमवैष्णव-मन्त्रमजपः? स तु तदपह्नुते—नाहमिति। उक्तञ्च—कृतस्यास्मरणे कर्त्तुरत्यन्तापह्नवेऽपि च। दर्शनादेरभावे च त्रिधा विद्यात् परोक्षता॥ इति॥

ननु परोक्षानद्यतनभूते अधोक्षजस्य विधानादपरोक्षानद्यतनभूते भूतेश्वरः स्यादित्य-वसीयते, कथं तर्हि आधुनिकजनाः परोक्षानद्यतनेऽपि—अहन् कंसं कृष्ण इत्यवं प्रयुञ्जन्ते? इत्याशङ्कायां समाधत्ते—अनद्यतनभूतमात्रविवक्षयेति। नात्र वक्तुः परोक्षापरोक्षविचारः किन्त्वनद्यतनभूतमात्र विवक्षया हि प्रवृत्तिरिति। विवक्षाचैषा लोकप्रसिद्धविषये हि

---

क्रियाकालोऽन्यस्य क्रियावकाशस्तस्मिन्नुक्त इत्यर्थः। रुदतीति अत्र रोदनक्रियाकालो गमनक्रियाऽवकाशः। तत् कुटुम्बं॥ १४४॥

**बाल०**—साधु। अर्चा पुजा तस्यां गम्यमानायां साधुशब्देन निपुणशब्देन च योगे सप्तमी स्यात्। कंसस्य साधव इति नात्र पूजा गम्यते किन्तु कुत्सैव॥ १४५॥

**१४६. हान्त शश्वतो र्योगेऽधोक्षजस्य भूतेश्वरो वा पञ्चवर्षाभ्यन्तर प्रश्ने च ।**

इति हाकरोत् शश्वदकरोत् कृष्णः, चकार वा । तथा पृच्छामि त्वामागच्छत् कृष्ण आजगाम वा ।

**१४७. पुरा योगे भूतेश्वरादि त्रयमच्युतश्च ।**

पुरा इह कृष्णोऽक्रीडत् अक्रीडीत् चिक्रीड क्रीडति वा ।

**१४८. स्मेन योगे त्वपरोक्षे चाच्युतः ।**

भजति स्म कृष्णम्, परत्वात् पश्यति स्म पुरा रामम् ।

---

भवति नतु साधारणजनविहिते कार्ये । तेन नेह—चकार कृष्णपूजां मे प्रपितामह तत्सर्वैरिति ।

**अमृता०**—१४६. हान्तेति । हान्तस्य शश्वतश्च योगे अधीक्षजस्य स्थाने भूतेश्वरो वा भवति । प्रश्ने च पञ्चवर्षमध्ये तथा । इतिह शब्दस्य पारम्पर्योपदेशोऽर्थः । पारम्पर्योपदेशः स्यादैतिह्यमितिहाव्ययमित्यमरः । हान्तग्रहणात्—अहह इह प्रभृत्यव्यययोगेऽपि स्यादिति केचित् । पञ्चवर्षाभ्यन्तर इति किम्—जघान कंसं किल वासुदेवः ? इत्याधुनिकेन पृष्टम् । ननु भूतेश्वर स्यानद्यतनभूते विधानात् परोक्षे च सिध्यतीति किमनेन सूत्रेण ? सत्यमुच्यते—तत्र भूतेशो मा भूदिति तद्बाधनियमार्थमिदमिति ।

**अमृता०**—१४७. पुरेति । पुराशब्दयोगेभूतकाले धातोर्भूतेश्वरभूतेशाधोक्षजा भवन्ति तथाच्युतश्च स्यात् । पूर्वपरयोः परो बलवानिति हान्त इहशब्द योगेऽप्यत्र न प्रागुक्त व्यवस्था किन्तु पुरायोगात् चतुष्टयमेव ।

**अमृता०**—१४८. स्मेनेति । स्म शब्देनयोगे तु परोक्षेऽपरोक्षे चानद्यतनभुते धातोरच्युतएव स्यात् । भूतेशादि त्रयाणामपवादः । स्म इत्यव्ययं भूतकालद्योतकम् ।

---

**बाल०**—असाधु । अनर्चायां गम्यमानायां असाधुना योगे सप्तमी स्यात् ॥ १४६ ॥

**बाल०**—अधि । अधिकार्थेनोपशब्देन युक्तादुत्तरे सप्तमी स्यात् । गम्ययवन्तत्वात् पञ्चमीति । गम्यस्य यवन्तस्य कर्मणोऽधिकरणाच्च पञ्चमीत्यनेनेति शेषः । परार्द्धमपेक्ष्येत्यर्थः । तस्मादस्माकं मते अधिकशब्दस्य प्रचुरार्थत्वं व्यक्तं । विस्तरमतेन अधिकशब्दस्य प्रकारान्तरसिद्धत्वं प्रतिपादयति किन्त्विति । अधिकादेश इति उक्त इति । विस्तरोक्तमुदाहरणमपि दर्शयति तत इति । अधिकेति अध्यारूढेत्यर्थः । अधिक इति अध्यारूढ इत्यर्थः । अधिकरणस्यैव विवक्षेति विस्तरोक्तमेव । यद्येवमिति यदि विवक्षाया बलवत्वमित्यर्थः । तर्हि गम्ययप्पञ्चम्यपि दुर्निवारेति तस्मात् परार्द्धादधिकेति यदुक्तं विस्तरमतेऽपि न विरुद्धमिति भावः ॥ १४७ ॥

## १४९. प्रश्नस्योत्तरे ननुयोगे भूतेष्वच्युतो नुनाभ्यां वा ।

**अपश्यः कृष्णम् ? ननु पश्यामि । तथा नु पश्यामि नु अपश्यम् । एवं**

---

स्मातीतेऽस्तमदर्शन इत्यमरः । परत्वादिति—परविधेर्बलवत्त्वात् स्मशब्दयोगे सति पुरा योगेऽपि न हि त्रितयञ्च किन्तु केवलमच्युत एवेत्यर्थः ।

**अमृता०**—१४९. प्रश्नस्येति । प्रश्नस्योत्तरे सति ननु शब्दयोगे भूतेषु अद्यतनानद्यतनपरोक्षेषु धातोरच्युतः स्यात्; तत्र नु शब्देन नशब्देन च योगे भूतेष्वच्युतो वा

---

**बाल०**—निमि । कर्मणा संयोगे सति निमित्तात् सप्तमी स्यात् । निमित्तादिति क्रियाया इति शेषः । सौरभ्ये तुलसीं जिघ्रतीति तुलसीघ्राणस्य निमित्तं सौरभ्यं अतस्तस्मात् सप्तमी निमित्तस्य कर्मणा तुलस्या संयोगोऽस्ति । जिघ्रतीति घ्रा गन्धोपादाने । क्वचिद्व्यभिचरति चेति । कदाचित् कर्मसंयोगे निमित्तात् सप्तमी न स्यादित्यर्थः । यद्यपि कर्मसंयोगे क्रियामात्रस्य निमित्तत्वात् सप्तमीति सूत्रार्थः तथापि चर्मणि द्वीपिनं हन्तीत्युदाहरणं दृष्ट्वा अत्र हन्तेः कर्मसंयोग एव सप्तमीति । केषाञ्चिन्मते हन्तेरभिधानात् फलाय वृक्षं छिनत्तीत्यादौ न स्यात् । अयुक्ताद्वा । नहि वृक्षच्छेदनस्य फलं निमित्तं । फलाय वृक्षस्य रोपणात् । उक्तञ्च । हन्तेः कर्मण्युपष्टम्भात् प्राप्तमात्रेतु सप्तमीं । चतुर्थीवाधिकामाहुश्चुर्णीभागुरिवाभटा इति । उपष्टम्भाख्याः संयोगा दन्तकेशनखादिषु । कथं मुक्ताफलाय करिणं हरिणं पलाय सिंहं निहन्ति भुजविक्रमसूचनाय । का नीतिरीतिरियती रघुवंशवीर-शाखामृगे जरति यस्तववाणमोक्षः । हन्तेरिति निरुपसर्गश्रुतेः । कथं विल्वं युपेषु संहन्यात् शोणिते रक्तछागल मित्यत्र केचित्तालव्यशकारं पठित्वा कल्याणार्थं वदन्ति । अथवा सुस्थदुस्थ इतिवत् सुप्रतिरूपके शब्दनिर्देशेन सिध्यति । नैमित्तिकाधिकरणतयैव सिद्धे सूत्रमिदं नित्यतार्थं । तेनात्र सप्तमी अनित्या । युद्धाय संनह्यते इत्यपि स्यात् । एतत् प्राचीनमतमस्माकं व्यभिचारात् सर्वं सिद्धमिति ॥ १४८ ॥

**बाल०**—ऐश्व । ऐश्वर्यार्थेन अधिशब्देन युक्तादुत्तरे सप्तमी स्यात् । स्वादिति यस्य स्वामी तस्मादित्यर्थः । स्वामिनश्च वाशब्दश्चार्थः । विष्णुभक्तिरिति सप्तमी विष्णुभक्तिरित्यर्थः । विवक्षातश्चेति । कारकादीनि विवक्षातश्च भवन्ति आदिपदेन षष्ठ्या उपपदविष्णुभक्तीनाञ्च ग्रहणं । लक्षणैर्विना विवक्षयापि सर्वाणि सिध्यन्तीत्यर्थः । चान्द्राः कालापाश्च विवक्षयैव प्रायः सर्वं साधयन्तीति वक्ष्यते । वक्तुमिच्छा विवक्षा । विवक्षात इति तृतीयान्तात्तसिप्रत्ययः । तृतीया च हेतौ करणे वा । तानि तत्र तत्र । स्वतन्त्रं तत्प्रयोजकश्च कर्त्तृ क्रिया यत् साधिका तत्कर्मेत्यादिषु दर्शितानि । अतो नात्र दर्श्यन्त इति । क्रियाया अकर्मकत्वादिकमपि विवक्षया भवतीत्याह यथा चेति । यथा येन विवक्षाप्रकारेण क्रिया च जायते भवति, कियाया अकर्मकत्वादिकं भवतीत्यर्थः । विवक्षया क्रियया अकर्मकत्वादिकं केवलं पचधातुमवलम्ब्य दर्शयति । ओदनः पचतीत्यादि ओदनः पचतीति ओदनस्य कर्त्तृत्वविवक्षया पचधातोः सिद्धयर्थता अतोऽत्र क्रियाया अकर्मकत्वं ।

**न पश्यामीत्यादि। प्रश्नस्योत्तर इति किम्—नन्वकार्षी विष्णुमित्र ! भूता निवृत्ताः।**

---

स्यात्। भूतेशादीनामपवादः। अपश्यः कृष्णमिति—अनद्यतनभूते प्रश्नः, प्रत्युत्तरे तदपवादोऽच्युतः। एवमद्यतन परोक्षभूतयो श्चाच्युत प्रयोग उन्नेयः। "प्रश्नावधारणा-नुज्ञाऽनुनयामन्त्रणे ननु" इत्यमरः। प्रश्नेत्यनेन तदुत्तरश्चाक्षिप्यते। अवधारणादौ तु नेति प्रत्युदाहरति—नन्वकार्षीरिति। हे विष्णुमित्र ! त्वं नूनमिदमकार्षीरित्यर्थः।

---

तण्डुलस्य कर्तृ विवक्षया धातोर्विकलृत्यर्थता अतोऽत्रापि कर्मत्वं। ओदनं पचति वैष्णव इति ओदनस्य कर्मत्वे विवक्षया धातोः समाधानार्थता अतोऽत्र सकर्मकत्वं। तण्डुलं पचतीति तण्डुलस्य कर्मत्वविवक्षया धातोर्विक्लेदनार्थता अतोऽत्रापि सकर्मत्वं। द्विकर्मके ख्यातमिति तद्यथा तण्डुलमोदनं साधयन् विक्लेदयतीत्यर्थ इति। अत्र तण्डुलौदनयोः कर्मत्वविवक्षया धातोः साधनाविक्लेदनार्थता अतो द्विकर्मत्वं। कृष्णो वंशीवाद्येन सुखं ददाति वंशीवाद्ये वेत्यादीनां इत्यादि मन्यन्त इत्यत्र समाप्तिः। एषु पूर्वोक्तानुसारेण यद्यद्भवति तत्तद्युक्तमेव पूर्वोक्तानुसारेण यद्यन्नभवति तत्तदपि भवति अतएव मन्यन्त इत्युक्तं। मन्यन्त इति अयुक्तपरमेव ज्ञेयं। तथाहि वंशीवाद्येन सुखं ददातीति युक्तमेव वंशीवाद्ये सुखं ददातीत्यपि मन्यन्ते। व्रजं प्रविशतीति युक्तमेव व्रजे प्रविशतीत्यपि मन्यन्ते। गोपीभ्यः स्पृहयतीत्याद्यपि मन्यन्ते। गां दुग्धं दोग्धीति युक्तमेव गोभ्यो दुग्धं दोग्धीत्याद्यपि मन्यन्ते। अक्षैर्दीव्यतीति युक्तमेव अक्षाणां दीव्यतीत्याद्यपि मन्यन्ते। अक्षान् दीव्यतीत्यपि पूर्वमेवोक्तं। गवां स्वामीति युक्तमेव गोषु स्वामीत्यपि मन्यन्ते। एवमिति यथा स्वामिशब्दयोगे षष्ठी सप्तमी च तथा ईश्वराधिपतिदायादसाक्षिप्रतिभूः क्रयणादौ विश्वसनीयः। व्रजस्य राजेति युक्तमेव व्रजे राजेत्यपि मन्यन्ते। पञ्चकृत्व इति संख्यायाः क्रियाभ्यावृत्तौ कृत्वसुरित्यनेन कृत्वसुः पञ्चकृत्वो दिने भुङ्क्ते इति युक्तमेव पञ्च कृत्वा दिनस्य भुङ्क्ते इत्याद्यपि मन्यन्ते। दिने इत्यस्य आदौ लिखनमुचितमिति ज्ञेयं। एवमिति। द्विरह्नः अह्ना अह्नि वा भुङ्क्त इति। अत्रापि द्विरह्निभुङ्क्त इति युक्तमेव द्विरह्नो भुङ्क्त इत्याद्यपि मन्यन्ते। अत्रात्यह्नत्यस्यादौ लिखनमुचितं। द्विरिति द्वित्रिचतुर्भ्यः सुरिति क्रियाभ्यावृत्तौ सुः। षष्ठीनिषेधात् शतं दायीति युक्तमेव शतस्य दायीत्यपि मन्यन्ते। इत्यादिपदेन शिष्टप्रयोगानुसारेणापरमपि ज्ञेयं। मन्यन्त इत्युक्त्वापि महापण्डितानां वाक्यं पोषकत्वेन दर्शयति तथा इति माषाणामश्नीयादिति। अत्र कर्मत्वस्य युक्तत्वेऽपि षष्ठी। एवं, नच स्निह्यति कस्यचिदिति केन सह स्निह्यतीति भवितुमर्हति प्रामाद्यदिति। व्यजिघृक्षत् सुरान्नित्यं प्रामाद्यद्गुणिनां हितं। आशङ्कत सुहृद्बन्धू नवृद्धान् सबन्धानबह्वमन्यत इति भट्टिपद्यं। प्रामाद्यदत्र अनवहितवानित्यर्थः। गुणिनामित्यत्र चतुर्थीति युक्ताहितयोगात्। हितमित्यत्र सप्तमीपञ्चम्यौ युक्ते। इति चेति इति च भट्टि-रित्यर्थः। सा लक्ष्मीरिति। यया लक्ष्म्या परेषामुपकुरुते सैव लक्ष्मीर्नत्वन्या परेषामित्यत्र कर्मत्वं युक्तं। यया सा इत्यत्र विवक्षावशादुद्देश्यविधेययोस्तृतीया प्रथमेति। सा विद्या तन्मतिर्यया। महाजनो येन गतः स पन्था इत्यादि दर्शनात्। एवं नारायणस्येत्यत्रापि

## १५०. भविष्यति ।

**प्रभुरयम् ।**

---

**अमृता०**—१५०. भविष्यतीत्यधिकारः—मुहूर्त्तोपरितनत्व इति यावत् वर्त्तिष्यते ।

---

नारायणं सदृशं करोतीत्यर्थः। यत्र त्विति। प्रोच्यउक्त्वा पक्षे सम्बन्धो वक्तुमिष्यते। यस्य तस्यैवेति उक्तानामेवेत्यर्थः। ततो नियमात् शुभ्रत्वेन गङ्गाजलस्य जानीते इति अज्ञानार्थस्य ज्ञः करणं वेत्यनेन करणं विकल्पेन विधीयते करणाभावपक्षे सम्बन्धषष्ठी भवति। अत्र उक्तस्य गङ्गाजलस्यैव सम्बन्धिता ननु शुभ्रत्वस्य। तद्विवक्षा सम्बन्धि-विवक्षा। दुर्बोधत्वादिति कारकादीनामिति शेषः। कल्पनेति कल्पना विवक्षा तया प्रसव उद्भवो येषां तेषामन्तः सीमा नास्ति। अतस्तदर्थं लक्षणकरणं न बहुप्रयोजनकमिति भावः। कृष्णेति। अन्यविवक्षाया अमनने हेतुमाह अत्रेति। अवगमः ज्ञानं। न सप्तमीति किन्तु द्वितीयै वेति। सम्प्रदानचतुर्थीति क्रुधाद्यर्थानां यं प्रति कोप इत्यनेन सम्प्रदानं स्यात्।

अथ। मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ। अतोऽत्र उपपदविष्णुभक्त्यर्थ-निरूपणानन्तरं अच्युतादीनामर्था विषया विव्रियन्ते विस्ताररूपेण कथ्यन्ते। विवक्ष्यन्ते इति पाठो ग्रन्थान्तरे ॥ १४९ ॥

**बाल०**—वर्त्त। वर्त्तमाने काले धातोरुत्तरे अच्युतो भवति। अच्युतस्तिवादिः। एतत् सूत्रं आख्यातसूत्रानुरूपं। बहुविधत्वं विवृणोति तत्रेति। वचने कथनसमये समस्तुल्यः कालो यस्य वर्त्तमानस्य स वचनसमकालस्तस्य भावः वचनसमकालत्वं तस्मिन् वचनसमकालत्वे वर्त्तमानत्वे रूपं दर्श्यते। क्रियाकर्त्तृभ्यां सहैककालत्वे इति निर्गलितार्थः। वैष्णवो भवतीति यत्र काले वैष्णवस्य सत्ता क्रिया तत्रैव तस्य कर्त्तृत्वमिति। एवं मथुरां गच्छति अन्नं पचतीत्यद्यपि।

क्रियाकालेति। क्रियाकालभात्रेषु क्रिया कालद्रव्येषु सामान्येषु सदातनत्वे नित्यत्व-वर्त्तमानत्वे रूपं दर्श्यते. इति सर्वत्र योज्यं। यदा त्रिकालभावेषु इति पाठोऽपि क्वचित्तदा क्रियाकालभावेषु वर्त्तमानभूतभविष्यत्क्रियासु क्रियाकालभावेष्विति निर्द्धारणे सप्तमी। यद्वा, त्रिकालेषु भावः सत्ता येषां ते त्रिकालभावास्तेषु नित्यपदार्थेषु सदातनत्वे नित्यत्वे वर्त्तमानस्य क्रियाया वा इति शेषः। सायं चिरं प्राह्णे प्रगे अव्ययेभ्यस्तनट्। शाश्वतस्तु ध्रुवं नित्यसदातनसनातनाः। भगवान् विराजतेऽत्र भगवतो विराजक्रियायाः तिपाबोध्य-कालस्य च नित्यत्वमिति। बहुकालत्वे वर्त्तमानस्य क्रियाया वेति शेषः। तच्चरितत्व इति। सा क्रिया चरितं स्वभावो यस्य स तच्चरितः तस्य भावः तच्चरितत्वं तस्मिन् तच्चरितत्वे वर्त्तमानत्वे। भगवन्तं पुजयतीति पूजात्र क्रिया सैव चरितमिति। चरितं शीलं तत्तु पूजकस्य तस्मात् पूजकस्य ताच्छील्यं वर्त्तमानत्वं। पौनःपुन्ये वर्त्तमानत्वे क्रियाय इति शेषः। त्वामेवेति। हे सखि ! मद्विलोके मद्दर्शने त्वां पुनः पुनः पृच्छतीत्यर्थः।

## १५१. कल्किः ।

**बलिरिन्द्रो भविष्यति ।**

---

**अमृता०**—१५१. कल्किरिति । भविष्यति सामान्ये धातोरुत्तरे कल्कि र्भवति । तेन बलिरिन्द्रो भविष्यतीत्यनद्यतनेऽपि कल्किः प्रयुक्तः । अद्यतने च यथा—सायं कृष्णं द्रक्ष्यामीति ।

---

सर्वसंग्राहकवर्त्तमानलक्षणमाह तस्मादिति । तस्माद्बहुविधत्वात् व्यक्ताव्यक्तरूपेण जात्या जातिरूपेण च यदेकस्यां क्रियायां तेनैव एकक्रियाव्याप्तत्वेन धर्मेण करणेन भूतभविष्यदतिरिक्ततया रूपेण विवक्षितः वक्तुमिष्टः कालः वर्त्तमान इत्यर्थं । भगवान् विराजते अस्त्याकाशं वैष्णवो भवति वैष्णवस्तिष्ठतीत्यादौ व्यक्त्या एकैकक्रियाव्याप्तत्वेन विवक्षितत्वं व्यक्तेस्तु पृथक्त्वमिति । अयं पचति मथुरां गच्छतीत्यादौ तु जात्या एकैकक्रियाव्याप्तत्वेन विवक्षितत्वं वर्त्तमानत्वं । अन्यथा विकलृत्यादेर्बाहुल्यात् क्रियाया एकत्वानुपपत्तिः स्यात् । स्वमतमुक्त्वा पोषकत्वेन परमतमपि दर्श्यते । यत्रारब्धा फलान्तैका क्रिया कालः स वर्त्तते । यत्र काले क्रिया आरब्धा साधयितुं प्रस्तुता एका एकरूपा निरवयवाविजातीयान्तररहिता फलान्ता फलपर्यवशायिनी स कालो वर्त्तते वर्त्तमानाख्यां लभते । एका किं तण्डुलं पचन् इष्टं गच्छतीत्यत्र न वर्त्तमानत्वं विजातीयया अन्तरितत्वात् । ननु फलान्तेत्युक्त कथं नदीं सन्तरन् म्रियत इति सिध्यति । अत्र मरणेनैव सन्तरणसमाप्तेः फलपर्यवशारित्वमिति केचित् । केचित्त्वेवं वदन्ति तद्यथा । यद्यपि मतभेदादनेकप्रकारवर्त्तमानस्तथापि सामान्यलक्षणमाह प्रारम्भापरिसमाप्तिर्वर्त्तमान इति । यथोक्तं । प्रारम्भादासमाप्तिस्तु यावन्नो नश्यति क्रिया । तावद्वर्त्तत इत्यस्मात् वर्त्तमान उदाहृतः । प्रवृत्तोपरतश्चैव वृत्ताविरत एव च । नित्यप्रवृत्तः सामीप्यो वर्त्तमानश्चतुर्विधः । प्रवृत्तोपरतो यथा मांसं पुरा न खादति । वृत्ताविरतो यथा इह कुमाराः क्रीडन्ति । नित्यप्रवृत्तो यथा तिष्ठन्ति पर्वताः । सामीन्ये कदा गतोऽसि एषोऽहमागच्छामि । यदा प्रारम्भग्रहणं न दीयते तदा करिष्यमाणेऽपि घटं करोतीति प्रयोगः स्यात् । तन्निषेधार्थं प्रारम्भग्रहणं । आपरिसमाप्तिग्रहणं किं । यदा परिसमाप्तिर्न दीयते तदा वैशाखादिस्थूलकाले याः पच्यादिक्रियाः प्रारब्धास्तासां तत्तन्मासस्याप्यभावे वैशाखे पचतीति प्रयोगः स्यात् । ननु यस्य कालस्य वर्त्तमानादि बहुविध उक्तः भूतभविष्यदादिबहुविधो वक्ष्यते च । स कालः क इत्यपेक्षायां कालोऽपि दर्श्यते । अखण्डदण्डायमानः कालः तस्य क्रियागुणद्रव्येषु विभागेषु विभागः कथ्यते । यथाचोक्तं सन्दर्भे । कालस्तु भूतभविष्यद्वर्त्तमानश्चिरक्षिप्रादिव्यवहारहेतुः क्षणादिपरार्द्धान्तश्चक्रवत् परिवर्त्तमानः प्रलयसर्गनिमित्तभूतो जडोद्रव्यविशेषः । अन्यत्र प्रभावं पौरुषं प्राहुः कालमेके यतो भयं ।। १५० ।।

**बाल०**—भूते । भूते काले धातोरुत्तरे भूतेशो भवति । एतदपि आख्यातसूत्रानुरूपं । अनद्यतनभूतेश्वरादिविधानादद्यतनेऽस्य विषयः । भूतेशो दिवादिः । श्रीकृष्णावतारोऽभूदिति अवतीर्णं श्रीकृष्णं दृष्ट्वा तदैवकस्यचिद्वचनमन्यथा भूतेश्वरः स्यात् । यद्वा,

**१५२. अनद्यतने भविष्यति वालकल्कि राशङ्कायामद्यतने च ।**

श्वः कृष्णं द्रष्टा परश्वो वा । तथा इयं ननु कदा गन्ता या कृष्णं बीक्ष्य रोदिति ।

**१५३. यावत् पुराभ्यामच्युतः, कदा कर्हिभ्यां कल्की च ।**

यावत् पश्यामि पुरा पश्यामि कृष्णम् । तथा कदा पश्यामि द्रष्टास्मि

---

**अमृता०**—१५२. अनद्यतनइति । अनद्यन भविष्यति धातो र्बालकल्कि र्भवति । आशङ्कायां ( अनिष्टसंशये ) गम्यमानायामनद्यतने अद्यतने च स एव स्यात् । श्वःशब्दो भविष्यत् कल्यवाचकोऽव्ययम् । "ह्यो गते ऽनागतेऽह्नि श्वः परश्व स्तत्परेऽहनि" इत्यमरः । इयं ननु कदा गन्तेत्यत्र—अद्य गृहं गमिष्यति न वा मोहदशां गमिष्यति वेत्यादि संशयो जातः, दर्शनोत्कण्ठाया निवृत्त्यभावादित्यर्थः । वालकल्कि रयं सामान्य विधि र्न पुनः कल्क्यपवादः । तेनानद्यतन भविष्यति कल्कि प्रयोगश्च दृश्यते; यथा—वसुदेव गृहे साक्षाद् भगवान् पुरुषः परः जनिष्यत इत्यादि श्रीभागवतम् । अपि च—स्मेष्यन्ते मुनयो देवाः कथयिष्यन्ति चानिशमिति भट्टिश्च ।

**अमृता०**—१५३. यावदिति । यावत्पुरा इत्यव्ययाभ्यां योगे धातोर्भविष्यति अच्युतः प्रयुज्यते । कदा कर्हि इत्यव्ययाभ्यां योगे तु भविष्यति अच्युतः कल्किश्च स्याताम् । कल्किरित्यनुवर्त्तमानेऽपि पुनरुक्ति स्तस्याच्युतेन बाधशङ्कया स्पष्टार्था । यावत् पुरात्र अव्यये गृह्यन्ते । "यावत् तावच्च साकल्येऽवधौ मानेऽवधारणे" इति, "स्यात् प्रबन्धे चिरातीते निकटागामिके पुरा" इति चामरः । यावत् पश्यामीत्यत्र यावत् अवधारणं ( निश्चयं ) द्योतयति, पुरा तु भविष्यदासन्नम् । तत्तदभावे तु नेति प्रत्युदाहरति—

---

पादसंस्कारवेलायामनद्यतनस्य विद्यमानत्वान्न भूतेश्वरः पश्चात् श्रीकृष्णावतार इति प्रयोक्तव्यं । एवं भट्टौ । अभून्नृपो विवुध सख इति ॥ १५१ ॥

**बाल०**—अन । अनद्यतनलक्षणमाह पूर्वापरेति । पूर्वापरनिशयोर्द्वयोर्द्वाभ्यां द्वाभ्यां यामाभ्यां प्रहराभ्यां सह मध्यवर्ति-चतुर्यामदिवसमद्यतनः कालः स्यात् । द्वौ यामौ प्रहरौ समावित्यमरः । दिवसमिति । वा तु क्लीषे दिवसवासराविति दिवसशब्दस्य ब्रह्मत्वं । पूर्वापरनिशायामौ दिनेनाद्यतनं विदुरिति क्रमदीश्वरः । शेषौ गतायाः प्रहरौ निशाया आगामिनी या प्रहरौ च तस्याः । दिनस्य चत्वार इमेऽष्ट यामाः कालं बुधाश्चाद्यतनं वदन्तीति कालापाः । तद्भिन्नोऽद्यतनभिन्नं । अधिक्रियत इति अधिकारः क्रियत इत्यर्थः । भूते । अनद्यतनभूते भूतेश्वरो भवति, भूतेश्वरोऽपि दिवादिः । इदञ्च आख्यातसूत्रानुरूपं ॥ १५२ ॥

**बाल०**—स्मरणस्योक्तौ सत्यामनद्यतनभूते कल्किः स्यात् । यच्छब्दप्रयोगेतु कल्किर्न स्यात् । आकाङ्क्षया सह वर्त्तमानः साकाङ्क्षः साकाङ्क्षे वक्तरि सति यच्छब्द-

द्रक्ष्यामि वा। एवं कर्हि। अत्र यावदित्यव्ययमेव गृह्यते। नेह—यावदासिष्यते तावत् द्रक्ष्यामि।

**१५४. किं कतरकतमै र्लिप्सायाञ्च ते।**

कृष्ण दर्शनं लब्धुकामः पृच्छति—कः कृष्णं दर्शयति दर्शयिता दर्शयिष्यति वा। प्रश्नोत्तरे च, तं प्रति निर्वक्ति—कस्ते कृष्णं दर्शयति दर्शयिता दर्शयिष्यति वा। एवं कतर कतमौ।

**१५५. वाञ्छितादन्य सिद्धौ च ते।**

---

यावदासिष्यत इति, अच्युत इति शेषः। यावदासिष्यत इति यावत् वस्तु तिष्ठन्ति तावत् सर्वं द्रक्ष्यामि, साकल्येनेत्यर्थः। इह यावत् तावत् शब्दौ नाव्यये, किन्तु तत्परिमाणार्थे आवतुच् प्रत्ययान्तौ।

**अमृता०**—१५४. किमिति। लब्धुमिच्छा लिप्सा, तस्यां गम्यमानायां किं कतरकतमै र्योगे भविष्यति धातोस्ते अच्युतः कल्की च भवन्ति। लालसाज्ञापनार्थमेव—कृष्णदर्शनमित्यादि वाक्यम्। प्रश्नोत्तरे च लिप्सायामतीते ते भवन्तीति शेषः। अत्र निर्वक्तुरपि लिप्सा विद्यते, समवेदना ज्ञापकत्वात्। लिप्सायामिति किम्—को मथुरां गमिष्यति? एवमिति—युवयो र्मध्ये कतरो मां कृष्णं नयति नेता नेष्यति वा। युष्माकं मध्ये कतमो गङ्गायां स्नाति स्नाता स्नास्यति वेति।

**अमृता०**—१५५. वाञ्छितादिति। स्वेप्सिताद् वस्तुनोऽन्यसिद्धौ च गम्यमानायां भविष्यति धातो स्ते अच्युतादयः स्युः। यो दध्योदनं ददातीति मधुमङ्गलनाम्न सख्यु

---

प्रयोगेऽपि कल्किर्वा स्यात्। पक्षे भूतेश्वरः। बृहद्वने महावने। अत्राकाङ्क्षां घटयति वास इति। लक्ष्यते अनेनेति लक्षणं लक्ष्यते इदं लक्ष्यं तयोर्लक्षणलक्ष्ययोः॥ १५३॥

**बाल०**—परो। अक्षाणां परः परोक्ष इन्द्रियाणामविषय इत्युक्तेः परोक्षशब्दोऽसाक्षाद्वाची। परोक्षश्चासावनद्यतनभूतश्चेति तस्मिन् अधोक्षजः स्यात्। अधोक्षजोनलादिः। कृतस्यास्मरणे कर्त्तुरत्यन्तापह्नवेऽपि च। दर्शनादेरभावे च त्रिषु विद्यात् परोक्षतामित्युक्तानुसारेणोदाहरणत्रयमाह चिक्रीडेत्यादिना। चिक्रीडेति क्रीड विहारे। यद्यप्यस्मन्मते सर्वत्रैवाधोक्षजमात्रं भवति, तथापि काशिकामतमाश्रित्य उदाहरणद्वयमाह हरीत्यनेन। एवं भ्रमगोपनादिषु उत्तमपुरुषो ज्ञेयः। उन्मत्तविषयेऽपि चित्तविक्षेपात् परोक्षता सम्भवत्येवेति काशिकोक्तात्। परोक्षवद्भाणादिति। अपरोक्षेऽपि परोक्षवद्भाणादनद्यतनभूतस्य परोक्षत्वं, अतोऽधोक्षजप्राप्तौ न विरोधः। भाणात् कथनात्। भाणशब्दो भणधातुसिद्धः। भणधातुः शब्दार्थः। नाहमिति। अपह्नवात् गोपनात्। अनद्यतनस्य परोक्षवत्त्वमिति शेषः। नन्वपरोक्षाद्यतनभूते भूतेश्वरः परोक्षानद्यतनभूतेऽधोक्षजस्तर्हि कथमहन् कंसमित्यादयः सिध्यन्त्विति चेत्तत्राह अहन्निति आधुनिकजल्पाः। अनद्यतनेति। नात्र परोक्षाऽपरोक्षाविवक्षेति भावः। अतोऽधोक्षजाभावः॥ १५४॥

यो दध्योदनं ददाति स कृष्णं पश्यति, इति दातारं कृष्णदर्शनसिद्धौ प्रोत्साहयति। पक्षे कल्किद्वयम्।

**१५६. विधात्रर्थस्य लक्षणाच्च ते।**

गुरुश्चेत् कृपयति कृपयिता कृपयिष्यति वा अथ त्वं कृष्णं सेवस्व। विधातुरर्थोऽत्र कृष्णसेवा प्रेरणम् तस्य लक्षणं गुरुकृपा।

**१५७. मुहूर्त्तोपरितनत्वे तु विधिश्चात्र।**

कृपयेद् वेति। भविष्यतीति निवृत्तम्।

**१५८. वर्त्तमानसामीप्ये वर्त्तमानवद् वा भूते भविष्यति च।**

---

वंचनम्। तस्य वाञ्छितं दधिषिक्तमन्नम् तस्मादन्यस्य कृष्णदर्शनस्य सिद्धि र्गम्यते। पक्ष इति वर्त्तमानाभाव पक्षे दास्यति दाता वा।

**अमृता०**—१५६. विधात्रर्थस्येति। विधातुरर्थो यः प्रैषादि स्तस्य लक्षणात्चिह्नात् (ज्ञापकात्) भविष्यति धातो स्ते अच्युताद्या भवन्ति। कृपयतीति कृप दौर्बल्ये चुरादिः। यद्वा तत्करोतीत्यर्थे कृपा शब्दात् णिः, कृपां करोतीत्यर्थः। एतेन गुरुकृपा हि कृष्णप्राप्ते र्द्वारमिति तत्त्वं ज्ञापितम्।

**अमृता०**—१५७. मुहूर्त्तेति। मुहूर्त्तस्य उपरितने भविष्यति तु विधात्रर्थस्य लक्षणान् विधिश्च स्यात्। च कारादच्युतादि त्रयश्च स्युरित्यर्थः। मुहूर्त्तस्तु घटिकाद्वयम्। ततो मुहूर्त्तस्योपरि गुरुश्चेत् कृपयति कृपयिता कृपयिष्यति कृपयेद् वा कृष्णं सेवस्व इति योज्यम्। निवृत्तो भविष्यतीत्यधिकारः। इदानीं प्रकीर्णमारभते—

**अमृता०**—१५८. वर्त्तमानेति। समीपमेव सामीप्यम्, स्वार्थे यण्। वर्त्तमानस्य

---

**बाल०**—हान्त। हान्तस्य शश्वतश्च योगे सति अधोक्षजस्य स्थाने भूतेश्वरो वा स्यात्। पञ्चवर्षाभ्यान्तरप्रश्ने च सति अधोक्षजस्य स्थाने भूतेश्वरो वा स्यात्। अत्यन्तर-शब्दो मध्यवाची। इति हेत्यादौ पारम्पर्योपदेशं निरन्तरञ्च। पारम्पर्योपदेशः स्यादैतिह्य-मिति हाव्ययमित्यमरात्। हान्तग्रहणात् इहादियोगेऽपि ज्ञेयमिति॥ १५५॥

**बाल०**—पुरा। व्यक्तार्थमेतत्। भूतेश्वरादित्रयमिति भूतेश्वरभूतेशाधोक्षजाः। भूतेशादित्रयमिति वा पाठः। पुरा इत्यादौ पूर्वापरयोः परविधेर्बलवत्वात् इह योगे विकल्पाऽधोक्षजाभूतेश्वरौ न किन्तु पुरायोगे भूतेशादिचतुष्टयमिति। अत्रादाहरणे पुराऽयात् पुराऽयासीत् पुरा ययौ पुरा यातीति ग्रन्थान्तरे पाठ इति॥ १५६॥

**बाल०**—स्मेन। स्मशब्देन योगे सति तु परोक्षेऽपरोक्षे च अनद्यतनभूते अच्युतो भवति। स्मशब्दो भूतकालवाची। परत्वादिति। परत्वात् अच्युतस्यैव बलवत्वं। अतः पुरायोगेऽपि न भूतेश्वरादित्रयमिति॥ १५७॥

कदा त्वं कृष्णमद्राक्षीः द्रक्ष्यसि वा ? तत्राह—एष पश्यामि । पक्षे-यथाप्राप्तम् ।

**१५९. आशंसायां भविष्यति वर्त्तमानवद् भूतवच्च वा । क्षिप्रार्थं उपपदे कल्किः, आशंसार्थे विधिः ।**

कृष्णश्चेदागच्छति आगमत् आगमिष्यति वा सुखं पश्यामः । अद्राक्ष्म

---

समीपेभूते, वर्त्तमानस्य समीपे भविष्यति च धातो रुत्तरे वर्त्तमानवत् प्रत्यया भवन्ति । वत्करणं सम्पूर्ण सादृश्यार्थम् । वर्त्तमाने यत्रयत्र येनोपाधिना यादृक्प्रत्यया विहिता स्तत् सर्वेऽत्र विधीयन्त इत्यर्थः । तथाहि—ताच्छील्यरूपवर्त्तमाने—अलं कृञ इत्यादिना अलंपूर्वादेव कृञ इष्णु प्रत्ययो विधास्यते । तथा अर्हं द्विषोः वर्त्तमाने पूज्योमित्रयोरेव शतृ प्रत्ययः । एवं यद्विशेषणोपेतो यत्प्रत्ययो वर्त्तमाने विधास्यते तत्प्रत्ययस्थाने भूत-भविष्यतोस्तद्विशेषणोपेतस्य लटः प्राप्त्यर्थं वत् ग्रहणं बोध्यम् । प्रयोगश्च यथा—कदा कृष्णमलमकरोः, कदा कृष्णमलंकरिष्यसीत्युभयत्र—एषकृष्णमलंकरिष्णुरित्यादि । कदा इत्यादि प्रश्नवाक्यं भूतभविष्यद् बोधनार्थम् । उदाहरणे—एष पश्यामीत्यादौ एष अय-मित्यादि तु वर्त्तमानद्योतनाय । इदानीमेवापश्यम्, इदानीमेव द्रक्ष्यामीत्याद्यर्थः । एवं वर्त्तमाने क्तश्च । कदा आगच्छः ? कदा गमिष्यसि ? अयमागतोऽहम्, गच्छन्तमेव मां विद्धि इत्यर्थः । वर्त्तमान समीप इति किम्—कदा आगतो भवान् ? वर्त्तमानमासात् पूर्वस्मिन् मासे आगच्छम् ।

**अमृता०**—१५९. आशंसायामिति । अप्राप्तस्य प्रियार्थस्य प्राप्तीच्छा आशंसा, तस्यां गम्यमानायां धातो र्भविष्यति वर्त्तमानवद् भूतवच्च प्रत्ययो वा भवति । आशंसाया भविष्यत् कालो हि विषयः, तत एवोक्तं भविष्यतीति । तेन पक्षे भविष्यत् प्रत्ययश्च । क्षिप्रार्थ शब्दे उपपदे सति त्वाशंसायामपि कल्किरेव स्यात्; तथा आशंसार्थशब्दे उपपदे तु तत्र विधि रेव स्यान्नतु भूतवद् वर्त्तमानवद् वा । कृष्णश्चेदिति—अत्र द्वयोरपि वाक्ययोः कार्यकारणभाववतो राशंसा गम्यत इति भूत वर्त्तमान प्रत्ययौ । तत्रतत्र लुङ् लृटावेव नतु लङ् लिट् लुटः; सामान्यातिदेशे विशेषस्यानतिदेशादिति न्यायात् । क्षिप्रार्थ इत्यत्र

---

**बाल०**—प्रश्न । प्रश्नस्योत्तरे सति । ननुशब्दयोगे भूतेषु अच्युतः स्यात् । भूतेष्विति अद्यतनभूते अनद्यतनभूते परोक्षभूते अपरोक्षभूते चेत्यर्थः । नुश्च नश्च ताभ्यां योगे भूतेषु अच्युतो वा स्यात् । अपश्यः कृष्णमिति प्रश्नः । ननु पश्यामीत्युत्तरं ॥ १५८ ॥

**बाल०**—अन । कल्किर्भविष्यति कल्किः स्यात् । इदमपि आख्यातसूत्रानुवादरूपं । अनद्यतने बालकल्किविधानात् अनद्यतनेऽस्य विषयः । बलिविन्द्रो भविष्यतीति पदसंस्कार-वेलायामनद्यतनस्याविद्यमानत्वात् न बालकल्कि. । बलिविन्द्र इति पश्चात् प्रयोक्तव्यं । एवं श्वः करिष्यामीत्याद्यपि ।

अनद्यतने भविष्यति बालकल्किः स्यात् । इदमप्यनुवादरूपं । आशङ्कायां वाच्यायां

द्रक्ष्यामो वा। तथा कृष्णश्चेत् क्षिप्रमागमिष्यति त्वरितं द्रक्ष्यामः। तथा कृष्णश्चेदागच्छेत् तर्ह्याशंसे त्वरितं पश्येयम्।

## १६०. क्रिया सातत्य-सामीप्ययो र्यथाकालमनद्यतने भूतेश-कल्की।

यावज्जीवं हरिमसेविष्ट सेविष्यते वा। येयं द्वादश्यतिक्रान्ता तस्यां हरिमपूपुजत आगामिन्यां पूजयिष्यति च।

---

अर्थ ग्रहणेन तत पर्यायशब्दे उपपदेऽपि कल्किरिष्ट इति दर्शयति—त्वरितं द्रक्ष्याम इति। एवं शीघ्रादियोगेन च। तथा शंसापर्यायशब्द विधिरिष्टएव; यथा—इच्छामि तूर्णं पश्येयमित्यादि। परत्र क्षिप्रार्थोपपदे सत्त्वेऽपि आशंसार्थोपपदत्वेन कल्किमपवार्य विधिरेव प्रवृत्तः, अतश्च सर्वेषामपवाद एषः।

अमृता०—१६०. क्रियेति। सततस्य भावः सातत्यम्। क्रियायाः सातत्ये निरवच्छेदेनानुष्ठाने, तथा तस्याः सामीप्ये च गम्यमाने अनद्यतनभूत-भविष्यतोर्यथाक्रमं भूतेशकल्की स्याताम्। भूतेऽनद्यतने भूतेश्वरो विहितः, तथा भविष्यदनद्यतने बालकल्किः, तत्तदपवारकोऽयम्।

यावंज्जीवमिति—यावति कर्मणि विद्लृजीवाभ्यामिति णमुः कृत्। यावन्तंकालं जीवतीत्यर्थः, पेन प्राणधारणरूपक्रियायाः सातत्यम्।

---

अनद्यतने अद्यतने भविष्यति बालकल्किः स्यात्। आशङ्का संशयः। अनद्यतने विहितो बालकल्किरद्यतने न भवतीति सूत्रं कृतं। श्वः कृष्णमिति श्वःशब्दो भविष्यत्कल्यवाची। ह्योगतेऽनागतेऽह्नि श्वः परश्वस्तत्परेऽहनि इत्यमरात्। इयं ननु कदा गन्तेत्यत्राशङ्का व्यक्तैव यदा त्वाशङ्का वाक्येन गम्यते तदा बालकल्किर्न भवति। अतएव अवसायो भविष्यामि दुःखस्यास्य कदा स्महमिति भट्टिः। अवसायेऽन्तर्दुःखावसानसमयजिज्ञसाया वाक्यवाच्यत्वादत्राशङ्का वाक्यवाच्या न भवति किन्तु दुःखनिर्विण्णस्यैव तद्वाक्यमिति आशङ्का वाक्यगम्यैव भवति॥ १५९॥

बाल०—यावत्। यावच्छब्देन पुराशब्देन च योगे भविष्यति अच्युतः स्यात्। कदा कर्हिभ्यां योगे भविष्यति अच्युतः स्यात् कल्की च स्यातां। भविष्यति विहितावपि कल्की विशेषेणाच्युतेन बाधितौ स्यातामिति कल्की चेति कृतं। पश्यामीति द्रक्ष्यामीत्यर्थः। कदा कर्हिभ्यां योगे भूतविहितप्रत्ययाश्च भवन्तीति जुमरमतं। ननु यावदित्यव्ययमनव्ययमप्यस्ति तर्हि कस्यात्र ग्रहणमिति चेत्तत्राह अत्रेति। नेहेति अनव्ययत्वादिहाच्युतो न भवतीत्यर्थः। यावदासिष्यते इति यावद्वस्तु स्थास्यतीत्यर्थः। आसिष्यत इति आस उपवेशने॥ १६०॥

## १६१. सीमोक्ताववरस्मिन् विभागे भविष्यदनद्यतने कल्किः; कालविभागे चाहोरात्र सम्बन्धहीने, परस्मिस्तु वा।

योऽयमागोवर्द्धनाद् गन्तव्यः पन्थाः तस्य यदवरं राधाकुण्डं तत्र तदाराधनं करिष्यामः। तथा आगामिवत्सरस्य योऽवरो वैशाखस्तत्र हरिमाराधयिष्यामः। नेह—आगामि मासस्य योऽवरः पञ्चदशरात्रस्तत्र श्रीभागवतमध्येतास्महे। अत्र तु वा—आगामिवर्षस्याग्रहायण्याः परस्मिन् गीतां श्रोष्यामः श्रोतास्मः। क्षिप्रार्थ इत्यादिना नियमा उक्ताः।

## १६२. विधिः। तद्विषये क्रियातिपत्तौ त्वजितो भूतभविष्यतोः।

विभू इमौ। क्रियाया अनिष्पत्तिः क्रियातिपत्तिः।

---

**अमृता०—१६१.** सीमोक्ताविति। सीमाया उक्तौ अवरस्मिन् अचरमे देशविभागे सति अनद्यतनभविष्यति धातोः कल्किः स्यात्। सीमाया उक्तौ अवरस्मिन् कालविभागे अहोरात्र सम्पर्क हीने सति भविष्यदनद्यतने कल्किः स्यात् किन्तु कालस्य परस्मिन् विभागे तत्र कल्कि र्वा स्यात्। पक्षे यथाप्राप्तं बालकल्किः। आगोवर्द्धनादिति मर्यादा वचने आङ् युक्तात् पञ्चमी। इहापि बालकल्कि विषये कल्किर्नियम्यते। तदाराधनमिति राधाया आराधनम्। अवर वैशाखः अवरकालस्थो वैशाख इत्यर्थः। अवरः कनिष्ठ इति शब्दकल्पद्रुमः। नेहेति—पञ्चदशरात्रस्य कालस्य अहोरात्रात्मकत्वान्नात्र कल्किः किन्तु बालकल्किः सिद्ध एव। परस्मिन् काल विभागे उदाहरति—आगामीति। हायनस्य वत्सरस्य अग्रः अग्रहायणः, तेन युक्ता पौर्णमासी तस्याः, मार्गशीर्षस्य पौर्णमास्या इत्यर्थः। नियमा उक्ता इति—अपवादरूपा नियमा इतियावत्, दर्शिता एव तत्र व्याख्यायाम्।

**अमृता०—१६२.** विधिरिति। धातोर्विधिः स्यादित्यधिकारः। विधिविषये क्रियाया अनिष्पत्ते तु अजित लकारः स्यादित्यपरोऽधिकारः। सामान्यत उक्त्वा विशेषार्थे विधीयते—

---

**बाल०—**किं क। लब्धुमिच्छा लिप्सा तस्यां गम्यमानायां किंकतरकतमैर्योगे भविष्यति ते अच्युतः कल्की च भवन्ति। लिप्सा प्रश्नेनैव गम्यत इत्याह कृष्णदर्शनमिति। दर्शयतीत्यादि दृशेर्ण्यन्तस्य रूपं।

प्रश्न। प्रश्नस्योत्तरे किं कतरकतमैर्योगे भविष्यति ते अच्युतादयः। एवमिति। किम्शब्दात् अतरच्प्रत्यये कृते कतरशब्दः सिध्यति। तस्मादेवातमच्प्रत्यये कृते कतमशब्दः सिध्यति। लिप्सायामिति किं को मथुरां गमिष्यति॥ १६१॥

**१६३. हेतुतत्फलयो र्विधिस्तद्विषये कल्किश्च ।**

प्रभू चेमौ । तत्तन्मात्रे विधिकल्की, विधिविषये क्रियातिपत्तौ त्वजित इत्यर्थः । कल्किश्चात्र विधिविषय एव । एवमुत्तरत्रापि ।

वृन्दावनं चेद् गच्छेत् कृष्णं पश्येत् । एवं कल्किः । नेह—कृष्णं पश्यतीति नमस्कुरुते; इति शब्देनैव हेतुतत्फलद्योतनात् । एवं कृष्णं पश्यति तस्मान्नमस्करोतीत्यादि । क्रियातिपत्तौ—श्रीवृन्दावनं चेदगमिष्यत् कृष्णमद्रक्षत् । हेतुतत्फलयोरित्यधिकारमात्रं विधानसूत्रमपेक्षते, तेन सम्भावनायां यो विधि र्वक्ष्यते तमपेक्ष्येदमुदाहृतम् ।

**१६४. सम्भावनार्थधातूपपदे, यदित्यस्य प्रयोगेतु तद् विधिरेव ।**

---

**अमृता०**—१६३. हेत्विति । हेतुः कारणं, तत् फलं कार्यम् । हेतु फलयोः कारण कार्ययो र्गम्यमानयो र्धातो र्विधिः स्यात्, विधिविषये कल्किश्च भवति । इमौ विधिकल्की च प्रभुनामाधिकारौ । अनेन विधेर्भविष्यद् विषयत्वञ्च व्यञ्जितम् । तत्तन्मात्रे हेतु तत् फलमात्रे । तत्रैवार्थे विधिविषये क्रियातिपत्तिः प्रतीयते चेत्तदा अजितश्च स्यादित्यधिकारप्रपञ्चः ।

वृन्दावनमित्यादौ पूर्ववाक्ये हेतुः, उत्तरवाक्ये तु तत्फलं कृष्णदर्शनं लभ्यते । तत्तच्च कालविशेषबोधनं वाक्येनैव भवति, अतस्तदभावे नेति प्रत्युदाहरति—कृष्णं पश्यतीति । इह तु 'इति' शब्देन हि कार्यकरणभावद्योतनान्न विधि र्न वा कल्किः किन्तु अच्युत एव । एवं 'तस्मात्' पदेन हेत्वादि बोधनात् तत्र च न तौ । कार्यकारणभावे क्रियाऽनिष्पत्तौ अजितमुदाहरति—श्रीवृन्दावनमित्यादि । अत्र श्रीवृन्दावनगमनं कारणं, कृष्ण दर्शनं कार्यम्, तत्तच्च पुनरनिष्पन्नमेव, नहि सञ्जातमित्यर्थः । इह च वाक्येन हि क्रियातिपत्तिर्गम्यते । विधेरधिकारसूत्रमिदं न तु विधानसूत्रमिति स्फुटयति—विधानसूत्रमपेक्षत इति । सम्भावनायामिति—शक्तिसम्भावन इत्यनेन वक्ष्यते, तस्यैवायं विषय इति भावः ।

**अमृता०**—१६४. सम्भावनार्थेति । सम्भावनं क्रियासु योग्यतानिश्चयः । हेतुतत्

---

**बाल०**—वाञ्छि । वाञ्छितात् अन्यसिद्धौ गम्यमानायां च भविष्यति ते अच्युतादयो भवन्ति । यो दध्योदनमिति । वाञ्छितात् दध्योदनात् कृष्णदर्शनसिद्धिर्गम्यते । दध्योदनमिति दध्ना उपसिक्त ओदनो दध्योदनस्तं । वाञ्छितादन्यसिद्धिः प्रोत्साहनेनैव गम्यते इत्याह दातारमिति ॥ १६२ ॥

**बाल०**—विधा । विधातुरर्थो विधात्रर्थस्तस्य लक्षणात् ज्ञापकाचोत्तरे भविष्यति ते अच्युतादयः स्युः । लक्षणपदेनात्र लक्षणार्थको धातुर्लक्ष्यते । कृपयतीत्यादिना ण्यन्तस्य कृपेः रूपं कृपां करोतीत्यर्थे णिः ॥ १६३ ॥

सम्भावयामि अवकल्पयामि भवान् वृन्दावनं चेद् गच्छेत् कृष्णं पश्येत् द्रक्ष्यति वा। यत् प्रयोगे तु—सम्भावयामि यन्मथुरां गच्छेत् कृष्णं पश्येदित्येव। क्रियातिपत्तौ—अद्रक्षत्। एवमुत्तरेष्वपि अजितप्रयोगा मन्तव्याः।

**१६५. बाढार्थोताप्यो र्योगे विधिः, शक्तिसम्भावने चालं शब्दा-प्रयोगे तथा।**

**उत कृपयेत् अपि कृपयेत् कृष्णः। तथा अपि कृष्णं वशं कुर्यात्। नेह बिधिः किन्त्वधिकारात् कल्किरेव,—अलं कृष्णं वशीकरिष्यति।**

---

फलयो र्गम्यमानयोः सम्भावनार्थे धातूपपदे सति धातोरुत्तरे विधिकल्की स्याताम्। तत्रैवार्थे क्रियातिपत्ति र्गम्यते चेत्तदा अजितश्च स्यात्। तत्र यत्शब्द प्रयोगे तु सविधिरेव स्यान्न हि कल्किः। अर्थ ग्रहणात् तत्पर्यायेणोदाहरति—अवकल्पयामीति। अत्र सम्भावनार्थधातोः प्रयोगे सम्भावनं स्पष्टमेव, यत्र तु सम्भावनार्थं धातूपपदत्वाभावेऽपि सा गम्यते तत्रापि विधिर्भवति। यथा—मेघो गर्जति वृष्टिर्भवेदित्यादि। धातूपपदार्थस्य गम्यत्वेऽपि प्रयोगः सिध्यतीति—अश्रद्धामर्षयो रित्यादावग्रे सूचयिष्यते।

**अमृता०**—१६५. बाढार्थेति। बाढमतिशयः। तदर्थको य उतशब्दः, यश्च अपि-शब्दः तयो र्योगे धातोर्भविष्यति विधिः स्यात्। तथा शक्ति सम्भावने च भविष्यति विधिः स्यात्, यदि अलं शब्दस्य प्रयोगा न स्यात्तदा। कल्केरपवादः। उतकृपयेदिति—अतिशयेनकृपयेदित्यर्थः। अपि कृष्णमिति—कृष्णं वशाकर्त्तुं समर्थं इत्यर्थः। अयञ्चार्थः अपिना द्योत्यये, अलंशब्देन तु तदर्थे द्योत्ये न विधिः, किन्तु यथाप्राप्तं कल्किरिति दर्शितं प्रत्युदाहरणेन—अलमित्यादिना। केवल सम्भावनेऽपि विधिरेवेष्यते—मेघो गर्जति शीघ्रं वर्षेदित्यादि।

बाढार्थेति किम्—कृष्ण इदानीं गोष्ठे विराजते उत वृन्दावने? अपि भवान् कृष्णं द्रक्ष्यति? विकल्प प्रश्नौ गम्येते अत्र।

---

**बाल०**—मुहु। विधात्रर्थस्य लक्षणस्य मुहूर्त्तोपरितनत्वे सति। अत्र विषये विधिश्च स्यात्। मुहूर्त्तोपरितनत्वे घटिकाद्वयोद्ध्वंजातत्वे ॥ १६४ ॥

**बाल०**—वर्त्त। सामीप्य इति सामीपशब्दात् स्वार्थे तद्धितः वर्त्तमानसमीप इत्यर्थः। यद्वा वर्त्तमानसामीप्यं यत्र तस्मिन् वर्त्तमानसन्निहित इत्यर्थः। एवम्भुते भूते भविष्यति च वर्त्तमानवद्वा भवति, वर्त्तमाने यथा कार्यं भवति, तथा तयोरपि भवतीत्यर्थः। अद्राक्षीरिति भूतकालज्ञापनार्थं। द्रक्ष्यसीति भविष्यत्कालज्ञापनार्थं। एवं पश्यामीति युष्मदाद्यप्रयोगेऽपि लभ्यत इत्युक्तं अतोऽत्र अस्मदोऽप्रयोगेऽपि अस्मल्लाभ एष इति अस्मद्विशेषणं। ततश्च एवोऽहमिदानीमद्राक्षं द्रक्ष्यामि वेत्यर्थः। इदानीमित्यर्थलब्धमिति ज्ञेयं। पक्षे यथाप्राप्तमिति। भुतविहितो भविष्यत्विहितश्च प्रत्ययो भवतीत्यर्थः ॥ १६५ ॥

**१६६. इच्छार्थाद् वर्त्तमाने विध्यच्युतौ ।**

इच्छेदिच्छति कृष्णम् ।

**१६७. इच्छार्थधातुसत्त्वे, विधि-निमन्त्रणामन्त्राधोष्टि-संप्रश्न-प्रार्थनेषु च विधि-विधातारौ ।**

इच्छामि कृष्णं पश्येयं पश्यानि वा । विधिरज्ञातज्ञापनं प्रेषणञ्च । स च पुन र्द्विविधः, दृष्टार्थादृष्टार्थतया । यथा—स्ववृत्तिं कुर्यात्, कृष्णं भजेत् । निमन्त्रणं नियोगकरणम् । इहभुञ्जीथा वैष्णव ! आमन्त्रणं कामचारकरणम् । इहासीथाः । अधीष्टिः सत्कारपूर्विका व्यापारणा । गुरो ! मां कृष्णमुपदिशेः । संप्रश्नोऽनुज्ञा प्रार्थनम् । किं गीतामधीयीय श्रीभागवतं वा । प्रार्थने—लभेय हरिभक्तिम् । एवं स्ववृत्तिं करोत्वित्यादि ।

---

**अमृता०**—१६६. इच्छार्थादिति । इच्छाद्धातोरुत्तरे वर्त्तमाने काले विधिरच्युतश्च भवतः अच्युतमात्रे प्राप्ते विध्यर्थं सूत्रम् । अर्थग्रहणात् वष्टि उश्यात् कामयते कामयेत वाञ्छति वाञ्छेदित्याति च ज्ञेयम् ।

**अमृता०**—१६७. इच्छार्थेति । इच्छार्थस्य धातोः सत्त्वे विदयमानत्वे इच्छार्थ धातूपपदेष्विति यावत्, तथा विध्यादयर्थेषु च धातोरुत्तरे विधिविधातारौ भवतः । विधि-लक्षणमाह—अज्ञातज्ञापनमिति । दृष्टार्थेति—अर्थशब्दः प्रयोजनवाची । दृष्ट प्रयोजनकः अदृष्टप्रयोजनकश्चेति विधिर्द्विविधः । द्वाभ्यामेव वाक्याभ्यामर्थचतुष्टयमुदाहरति—स्ववृति करणोपदेशः अज्ञातज्ञापनम्, तथा लोकव्यवहारोपयोगाद् दृष्टार्थकश्च । कृष्णं भजेदित्यत्र प्रेरणं तथा परमार्थ व्यवहारोपयोगाददृष्टार्थकश्च । नियोगकरणमिति—इच्छाविरहेऽपि अधर्मलोकनिन्दादिदोष भयात् नियमेन करणं निमन्त्रणमित्यर्थः किन्तु प्रायो भोजने हि रूढीदम् । कामचारण करणमिति—काम चारेणेच्छाप्रकारेण करणमामन्त्रणम् । इच्छया हि यत् करणं, नत्वनिच्छया, अकरणेऽपि दोषाभावात् तदामन्त्रणमिति निमन्त्रणाद् भेदः । तत्तच्च करणं क्रिया कर्त्तु र्निमन्त्रितस्यामन्त्रितस्य वा जनस्य ज्ञेयं, भोजनोपवेशनादि फलभागित्वात् । न तूपदेष्टु रिति विवेचनीयम् । सत्कारपूर्विका आदरपूर्विका व्यापारणा अनुष्ठानम् । अनुज्ञा अनुमतिरित्यर्थः । पक्षे विधातृप्रयोगाश्चोन्नेयाः ।

---

**बाल०**—आशं । अप्राप्तस्य प्रियार्थस्य प्राप्तीच्छा आशंसा तस्यां गम्यमानायां भविष्यति वर्त्तमानवत् भूतवच्च कार्यं वा भवतः, पक्षे भविष्यद्विहितः प्रत्ययो भवतीत्यर्थः । उप समीपे स्थितं पदमुपपदं तस्मिन् । क्षिप्रार्थे शीघ्रार्थे उपपदे सति आशंसायां भविष्यति कल्किः स्यात् । क्षिप्रार्थोपपदसद्भावेऽपि आशंसार्थे उपपदे सति भविष्यति विधिः स्यात् । पूर्वसूत्रेण कल्कौ प्राप्ते विधानं । तथा कृष्णश्चेति पूर्वत्रःसम्भावनायां विधिः परत्रोदा-हरणमिति । त्वरितं शीघ्रं ॥ १६६ ॥

## १६८: प्रैषातिसर्ग प्राप्तकालत्वेषु विधातृ-विष्णुकृत्यौ ।

**प्रैषोऽत्र प्रेरणमात्रम्, अतिसर्गः कामचाराभ्यनुज्ञा। कृष्णं भज त्वम् । कामं भज त्वं कृष्णम् । कृष्णभक्तौ कालस्ते प्राप्तः कृष्णं भज त्रिष्वपि कृष्णो भजनीय इत्यादि । पृथग् विधातृग्रहणं प्राप्तकालत्वे प्राप्त्यर्थम् ।**

---

**अमृता०**—१६८. प्रैषेति। प्रैषश्च अतिसर्गश्च प्राप्तकालत्वञ्च तथा, तेषु अर्थेषु धातो र्विधातृलकारो विष्णुकृत्यप्रत्ययश्च भवति। तव्यादयो विष्णुकृत्या उक्ताः। कामचारेति—कामचारे इच्छाप्रवृत्तौ अभ्यनुज्ञा अनुमति रित्यर्थः। कृष्णभक्ताविति—भजनं भक्तिः, कृष्ण भजने तव कालः प्राप्त इत्यर्थः। त्रिष्वपीति—प्रैषादि त्रिषु अर्थेषु च कृष्णोभजनीय इत्यादि विष्णुकृत्यप्रयोगः कर्त्तव्य इत्यर्थः। प्रैषातिसर्गयो रर्थयो र्विधाता पूर्वेण हि सिद्धः, तथापीह पुनरुक्तिः प्राप्तकालत्वार्थे तस्य प्राप्त्ये इत्याह—पृथगिति। तदर्थं केवल विधातुरक्तौ तु विष्णकृत्यार्थः पुनरारम्भ आवश्यकः स्यात्, तेषां प्रैषादि त्रयविषयकत्वात्। अतस्तल्लाघवार्थमेकत्रैव सूत्रितमिति भावः।

---

**बाल०**—क्रिया। क्रियायाः सातत्ये सामीप्ये च गम्यमाने यथाकालं कालानतिक्रमेण अनद्यतने भूतेशकल्की भवतः। अनद्यतनभूते भूतेशो भवति अनद्यतनभविष्यति कल्किर्भवतीर्थः। यावज्जीवमिति णन्वन्तं। आगामिन्यां द्वादश्यां ॥ १६७ ॥

**बाल०**—सीमो। सीमाया उक्तौ अवरस्मिन् चरमे विभागे सति भविष्यदनद्यतने अनद्यतनभविष्यति कल्किः स्यात्। सीमोक्तौ अहोरात्रसम्बन्धहीने अवरस्मिन् कालस्य विभागे च सति भविष्यदनद्यतने कल्किः स्यात्। सीमोक्तौ परस्मिन् कालविभागेतु सति कल्किर्वा भवति। आ गोर्द्धवनादिति। आङत्र सीमायां गोवर्द्धनपर्यन्तमित्यर्थः। तस्य पथः। अवरं पश्चात्। तत्र कुण्डे। तदाराधनं। अवरोऽन्त्य। आराधयिष्यामि इति स्वार्थे णिः। नेहेति कल्किरिति शेषः। हायनस्य वत्सरस्याग्रः अग्रहायणः तेन युक्ता पौर्णमासी आग्रहारणी तस्या आग्रहायण्या इति मार्गशीर्षस्य पौर्णमास्या इत्यर्थः। क्षिप्रार्थ इत्यादिना नियमा उक्ता इति। आशंसायां भविष्यति वर्त्तमानवद्भूतवच्च वेत्यनेन अच्युतः भूतविहितप्रत्ययाः पक्षे कल्किश्च भवति। आशंसायां क्षिप्रार्थ उपपदे कल्किरेव स्यादिति नियमः। आशंसार्थ इति। क्षिप्रार्थोपपदसद्भावेऽपि आशंसार्थे उपपदे विधिरेव नतु कल्किरिति नियमः। ननु क्रियासातत्येत्यादेः सीमोक्तावित्यादेश्च कथं नियमत्वं यतः क्रियेत्यत्रानद्यतने भूतेशकल्क्योरप्राप्तौ सीमेत्यत्र भविष्यदनद्यतने च कल्केरप्राप्तौ तत्तत्प्राप्तिविहितत्वात् ते विधिसूत्रे एव भवतः। उच्यते। अनद्यतनभूते भूतेश्वरादिः प्राप्नोति अनद्यतनभविष्यति बालकल्किः प्राप्नोति पदसंस्कारवेलायामनद्यतनस्य अविद्यमानतया भूतेशकल्की अपि प्राप्नुतः अतस्तेषां प्राप्तौ नियमत्वं क्रियासातत्यसामीप्ययोर्यथाकालमनद्यतने भूतेशकल्की एव तवत इति। सीमोक्तावरस्मिन् विभागे भविष्यदनद्यतने कल्किरेवेति। एवं कालेत्यादेश्च नियमत्वं ज्ञेयं ॥ १६८ ॥

**१६९. मुहूर्त्तस्योपरि प्रैषादिषु विधिश्च। स्मयोगे त्वधीष्टौ च विधातैव।**

मुहूर्त्तस्योपरि कृष्णं भजेरित्यादि। तथा कृष्णं भज स्म कृष्ण-मुपदिश स्म।

**१७०. काल समयवेलाप्रयोगे यच्छब्देनयोगे विधिः।**

कालोऽयं यत् सेवेथाः कृष्णम्। एवं समयोऽयमित्यादि।

---

**अमृता०**—१६९. मुहूर्त्तस्येति। प्रैषादिषुगम्यमानेषु मुहूर्त्तस्योपरि कालार्थेधातो विधिश्च स्यात्। चकाराद् यथाप्राप्तं विधातृविष्णुकृत्यौ च स्याताम्। स्म शब्दयोगे तु प्रैषादौ वाधीष्टौ चार्थे विधातैव भवति नतु विधि र्न विष्णुकृत्यो वा। मुहूर्त्तस्योपरीति—मुहूर्त्तादधिककालं यावदित्यर्थः। इत्यादिपदेन अतिसर्ग प्राप्तकालार्थयो रुदाहरणीयौ। तत्तच्च यथा—मुहूर्त्तस्योपरि कामंभजे स्त्वं कृष्णम्। "मृयेयोर्द्ध्वं मुहूर्त्ताद्धि न स्यास्त्वं यदि मे गति"रिति भट्टिः। एवं विधातृविष्णुकृत्यौ च—कृष्णं भज, कृष्णो भजनीय इत्यादि। कृष्णं भज स्मेति—स्म योगे प्रैषोदाहरणम्, वाक्यान्तरस्त्वाधीष्टौ। एवं स्म योगेऽतिसर्ग प्राप्तकालार्थयोरपि विधाता हि बोध्यः। स्म शब्द इह वाक्यालङ्कारे प्रयुक्तः।

**अमृता०**—१७०. कालेति। काल समय वेला शब्दानां प्रयोगे यच्छब्दोपपदे सति धातो विधिः स्यात्। प्रैषाद्यर्था निवृत्ताः। भविष्यतीति तु वर्त्तते। अतः कृति वक्ष्यमाणस्य भविष्यदर्थ तुम्वोऽपवादोऽयं यच्छब्दयोगात्।

---

**बाल०**—विधिः। विधिः स्यात्। सूत्रमिदमनुवादरूपं। तद्धि। व्यक्तार्थमेतत्। इदमप्यनुवादरूपं। इमौ विध्यजितौ। क्रियातिपत्तिलक्षणमाह क्रियाया इति। सामान्यतो विधिसूत्रमुक्त कस्मिन्नर्थे स भवतीति विशेषसूत्रमाह॥ १६९॥

**बाल०**—हेतु। हेतुः कारणं। हेतुश्च तत्फलञ्च तयोर्गम्ययोर्विधिर्भवति। विधि-विषये कल्किश्च भवति। इमौ विधिकल्की। तत्तन्मात्रे हेतुतत्फलमात्रे गम्ये। विधिकल्की इति भवत इति शेषः। विधिविषयेत्यनेन अजितोऽपि हेतुतत्फले। एवं कल्किरिति। वृन्दावनं चेद्गमिष्यति कृष्णं द्रक्ष्यतीति। नेहेति विधिकल्की इति शेषः। हेतुमाह इति-शब्देनैवेति। एवं कृष्णं पश्यति तस्मान्नमस्करोतीति। अत्र तस्मादित्यनेनैव हेतुतत्फल-द्योतनं तेन न विधिकल्की। वृन्दावनं चेदगमिष्यत् कृष्णमद्रक्ष्यदिति हेतुतत्फलयोर्वृन्दावन-कृष्णदर्शनयोरनिष्पत्तिर्वाक्येनैव गम्यते। हेतुतत्फलयोरितीति कर्त्तृभूतं। अधिकारमात्र-मिति अधिकारमात्रोक्तमित्यर्थः। विधानसूत्रमिति कर्मभूतं। तं विधिं। इदमिति वृन्दावनं चेद्गच्छेत् कृष्णं पश्येदित्येतदित्यर्थः। तस्मादत्र सम्भावनायां विधिरिति भावः॥ १७०॥

## १७१. अर्हशक्त्यो र्विधि विष्णुकृत्य तृणः ।

कृष्णो रुक्मिणीमुद्वहेत् हरेदित्यादि ।

## १७२. आशिषि कामपालविधातारौ ।

कृष्णः कल्याणं क्रियात् करोतु कुरुताद् वा ।

## १७३. माङ् योगे सर्वापवादी भूतेशः ।

मा कृष्णं परित्याक्षीः । कथं मा भवतु तस्य पापम्, मा करिष्यति ? निरनुबन्धोऽयं माशब्दः ।

---

**अमृता०**—१७१. अर्हेति । अर्हतीति अर्हः, योग्य इत्यर्थः । अर्हे कर्त्तरि, शक्तौ च गम्य मानायां धातो विधिविष्णुकृत्यतृनः प्रत्यया भवन्ति । कृष्णो रुक्मिणीमुद्वहेदिति—रुक्मिण्या विवाहे कृष्णएव योग्य इत्यर्थः । हरेदिति—कृष्णस्यैव तस्या हरणे शक्तिरस्ति नान्यिस्येत्यर्थः । इत्यादिपदेन—कृष्णेनोद्वोढव्या उद्वहनीया, हर्त्तव्या हरणीया रुक्मिणी, कृष्णो रुक्मिणीमुद्वोढा हर्त्ता इति ।

**अमृता०**—१७२. आशिषीति । आशंसनमाशीः, अप्राप्तस्येष्टार्थस्य प्राप्तुमिच्छा आशीरित्यर्थः । तस्यां गम्यमानायां धातोः कामपालविधातारौ भवतः । तुह्यो स्तातृङा-शिषि वा सर्वत्रेति कुरुतात् प्रयोगः प्रागुक्तेन हि सिद्ध इति दर्शितम् ।

**अमृता०**—१७३. माङिति । माङ् इत्यव्यययोगे धातो र्भूतेश लकारः स्यात्, सच सर्व लकाराणामपवादः । ङइति । आशंकते—कथमित्यादि । मा योगोऽपि भूतेशाभाव इति विरोधः । सङ्गमयति—निरनुवन्ध इति । अयन्तु स्वभावतो मा शब्दो नतु माङ्, तेन न व्यभिचारः शङ्कयः । अत्प्रतिषेधो मा मास्म योग इति न धातोः पूर्वमत् ।

---

**बाल०**—सम्भा । हेतुतत्फलयोर्गम्यमानयोः सम्भावनार्थे धातुसम्बन्धिन्युपपदे सति पूर्वोक्तेऽर्थे विधिकल्क्यजिता भवन्ति । यदित्यस्य प्रयोगेतु तद्विधिरेव भवति, नतु कल्क्यजितौ । तद्विधिरिति स चासौ विधिश्चेति विग्रहः । सम्भावना तत्क्रियायोग्यता-निश्चयः । अवकल्पयामीति सम्भावयामीत्यर्थः । एवमिति उत्तरेषु लक्षणेषु मन्तव्या ज्ञातव्याः ॥ १७१ ॥

**बाल०**—वाढ । वाढमतिशयः तदर्थयोरुताप्योर्योगे विधिः स्यात् । सर्वेषामपवादोऽयं योगः । कल्किरपि न भवतीति सूचयतीति सूचयितुं विधिरिति कृतं । सम्भावने च गम्यमाने अलंशब्दस्याप्रयोगे विधिः स्यात् । उत कृपयेत् अपि कृपयेत् कृष्ण इति अतिशयमित्यर्थः । बाढार्थेति किं उत कृष्णो गमिष्यति अपि धास्यति सुखं । अत्र उतशब्देन प्रश्नो गम्यते । अपिशब्देन आच्छादनं गम्यते । अपि कृष्णं वशं कुर्यादिति अत्रापिशब्दः सम्भावनार्थः । नेह विधिरिति अलंशब्दप्रयोगादिति शेषः ॥ १७२ ॥

**बाल०**—इच्छा । वर्त्तमाने काले इच्छार्थाद्धातोरुत्तरे विध्यच्युतौ भवतः । अच्युतः सध्यत्येव । विध्यर्थसूत्रमिदं । इच्छेदिति इषु इच्छायां ॥ १७३ ॥

**१७४. मास्म योगे भूतेश्वरश्च ।**

मास्म कृष्णं त्यजः मास्म त्याक्षीः । व्यस्तेऽपीच्छन्ति केचित् । स्म करोन्मा, स्म कार्षीन्मा । पृथग् योगात् केवल मायोगे तु न स्यात् । माकृष्णं त्याक्षी रित्येव ।

**१७५. काल सामान्ये ।**

विभुरयम् ।

**१७६. अपि जात्वो र्योगे गर्हायामच्युतः ।**

अपि भवानवैष्णवंश्राद्धे भोजयति ? एवं जातु । तदेतत्पर्यन्तं

---

अमृता०—१७४. मास्मेति । मास्म शब्देनयोगे धातो र्भूतेशोभूतेश्वरश्च भवति । व्यस्ते विभक्ते, योगराहित्येऽपीत्यर्थः । लकरद्वयमेवेच्छन्तीति शेषः । प्रयोगश्च दृश्यते—कामक्रोधौ स्म मा पुष इति ।

अमृता०—१७६. अपीति । गर्हायां निन्दायां गम्यमानायां अपि योगे जातु योगे च काल सामान्ये धातो रच्युतः स्यात् । पूर्वं वर्त्तमान एव विहितोऽयं, इह तु गर्हायां

---

बाल०—इच्छार्थस्य धातोः सत्त्वे विद्यमानत्वे विध्यादिष्वर्थेषु च विधिविधातारौ भवतः । विधिलक्षणमाह विधिरज्ञातज्ञापनं प्रेषणश्चेति । सच विधिः । दृष्टार्थेति । दृष्टार्थतया अदृष्टार्थतया चेति । दृष्टार्थोऽदृष्टार्थश्चेत्यर्थः । अर्थशब्दः प्रयोजनवाची, दृष्ट-प्रयोजनकोऽदृष्टप्रयोजनकश्चेति । स्ववृत्तिं कुर्यादिति । अत्र विधेरज्ञातज्ञापनरूपता स्ववृत्तिकरणस्य व्यवहारमार्गसौष्ठवजनकत्वात् दृष्टार्थता च । कृष्णं भजेदिति । अत्र विधेरज्ञातज्ञापनरूपता कृष्णभजनस्य परमार्थमार्गसौष्ठवजनकत्वाददृष्टार्थता च । प्रेषणे त्वं पुष्पाणि चिनुयाः । निमन्त्रणलक्षणमाह निमन्त्रणमिति । नियोगो नियुक्तिः । नियोग-करणमत्र भोजनविषयकमेव ज्ञेयं । अन्यया प्रेषणनियोगकरणयोर्भेदो न स्यात् । आमन्त्रण-लक्षणमाह आमन्त्रणमिति । कामचारेण इच्छया करणमिति तस्याकरणे दोषाभावः । अधीष्टिलक्षणमाह अधीष्टिरिति । सत्कार आदरः, व्यापारणा नियुक्तिः, अनुज्ञा आज्ञा प्रार्थनं याच्ञा ॥ १७४ ॥

बाल०—प्रैष । प्रैषश्च अतिसर्गश्च प्राप्तकालत्वञ्च तेष्वथषु विधातविष्णुकृत्यौ भवतः । अतिसर्गलक्षणमाह अतिसर्ग इति । कामेति कामचारे इच्छाप्रवृत्तौ अभ्यनुज्ञेति । कृष्णं भज त्वमिति प्रैषोदाहरणं । कृष्णभक्तौ कृष्णभजने । त्रिष्वपीति प्रैषादिष्वित्यर्थः । प्रैषेऽतिसर्गे च पूर्वलक्षणेनैव विधाता प्राप्नोति । तथापि यदिह विधातृग्रहणं कृतं तत्फलमाह पृथगिति ॥ १७५ ॥

बाल०—मुहू । मुहूर्त्तस्योपरि प्रैषादिषु सत्सु विधातृविष्णुकृत्यौ विधिश्च भवति । स्मशब्दयोगेतु प्रैषादौ अधीष्टौ च अर्थे विधातैव भवति । इत्यादिपदेन विधातृविष्णु-

क्रियातिपत्तौ नित्यत्वेनाजितो ज्ञेयः। अथ भूते विकल्पेन भविष्यति तु नित्यत्वेन।

**१७७. विधिविषये क्रियातिपत्तौ भूतेऽजितो वा।**

प्रभुरयम्।

**१७८. कथं योगे गर्हायां विध्यच्युतौ वा।**

स कथमवैष्णवमन्त्रं जपेत् जपेति वा पक्षे यथा विहितश्च,—कथं जपिष्यति अजापीदित्यादि। विधिविषयेति—स कथमवैष्णवमन्त्रमजपिष्यत् जपेत् जपति वा। भविष्यति तु अजपिष्यदित्येव।

**१७९. किं कतर कतमैं र्योगे गर्हायां विधिकल्की।**

को नामावैष्णवं जपेत् जपिष्यति वा। एवं कतरोनामेत्यादि।

---

सर्वकाले विधीयते। अपि शब्देन हि गर्हा द्योत्यते। "गर्हा समुच्चय प्रश्न शंका सम्भावनास्वपि" इत्यमरः। जातु शब्दस्यार्थः कदाचित्। तेन गर्हा द्योतनाय शब्दान्तरमपेक्षतेऽयम्। जातु भवानवैष्णवं श्राद्धे भोजयति, तद् गर्हामहे इति। क्रियातिपत्तौ नित्यत्वेनाजित इति विधि विषय एव नतु सर्वत्रैति बोध्यम्।

**अमृता०**—१७७. विधीति स्पष्टार्थम्।

**अमृता०**—१७८. कथमिति। गर्हायां गम्यमानायां कथं शब्दयोगे काल सामान्ये धातो र्विध्यच्युतौ वा स्याताम्; पक्षे यथाप्राप्तश्च भूतभविष्यतो र्लकाराः। इह वाक्येन हि गर्हा गम्यते। आदिपदेन—कथं जपिता अजपत् जजाप इत्येते ग्राह्याः। क्रियातिपत्तौ भूते वा विधानात् अजापीत्अजपत् जजाप इत्येते च स्युः।

**अमृता०**—१७९. किमिति। गर्हायां गम्यमानायां कालसामान्ये किं कतर कतम शब्दै र्योगे धातो विधिकल्की स्याताम्। को नामेति—नामशब्दो गर्हा द्योतकाव्ययम्।

---

कृत्यावुदाहार्यौ। कृष्णं भज स्मेति प्रैषोदाहरणं। कृष्णमुपदिश स्मेति अधीष्टचुदाहरणं॥ १७६॥

**बाल०**—काल। कालसमयवेलानां प्रयोगे यच्छब्देन योगे सति प्रैषादावथ गम्यमाने विधिः स्यात्॥ १७७॥

**बाल०**—अर्ह। अर्हतीति अर्हो योग्यं अर्हे कर्त्तरि शक्तौ च गम्यमानायां विधिविष्णुकृत्यतृणो भवन्ति। कृष्णो रुक्मिणीमुद्वहेदिति! कृष्ण एव रुक्मिण्युद्वहनमर्हतीति गम्यते। कृष्णो रुक्मिणीं हरेदिति कृष्णस्यैव रुक्मिणीहरणे शक्तिरस्तीति गम्यते। इत्यादीत्यादिपदेन कृष्णेन रुक्मिण्युद्वोढव्या। कृष्णेन रुक्मिणी हर्त्तव्या कृष्णो रुक्मिण्या उद्वोढा। कृष्णो रुक्मिण्या हर्त्तेति॥ १७८॥

क्रियातिपत्तौ भूते—अजपिष्यत्, पक्षे जपेत् जपिष्यति वा। भविष्यति तु—अजपिष्यत्। एवमुत्तरत्राप्यजितो दृश्यः।

**१८०. अश्रद्धामर्षयो विधिकल्की।**

प्रभुरयम्। न श्रद्दधे कृष्णान्योऽग्रपूजां लभेत लप्स्यते वा। एवं नमर्षयामीत्यादि। सर्वत्राश्रद्धामर्षयो र्गम्यमानत्वेऽपि प्रयोगा ज्ञेयाः।

**१८१. किं किलास्त्यर्थयो र्योगे तु कल्किः।**

विध्यपवादः। नावकल्पयामि किं किल कृष्णेतरोऽग्रपूजां लप्स्यते। एवं नमर्षयामि न प्रत्येमि अस्ति नाम कृष्णेतर इत्यादि।

**१८२. यद् यदि यदा जातु योगे विधिः।**

---

नाम प्राकाश्य-सम्भाव्य-क्रोधोपगम कुतसने इत्यमरः। अवैष्णवमिति अवैष्णवमन्त्रमित्यर्थः। क्रियातिपत्तौ अजितः प्रयोज्यः।

**अमृता०**—१८०. अश्रद्धेति। अश्रद्धा असम्भावना, अमर्षः अक्षमा। तथोरर्थयोर्गम्यमानयोः कालसामान्येधातो विधिकल्की भवतः। नश्रद्दधे इति नसम्भावयामि, न विश्वसिमीत्यर्थः। नमर्षयामीति—न सहे नक्षमे इत्यर्थः। श्रद्धामर्षादिशब्दानामप्रयोगेऽपि तत्तदर्थे गम्ये च विधिकल्की भवत एवेत्याह—सर्वत्रेत्यादि। क्रियातिपत्तौ अजितः प्रयोक्तव्यः।

**अमृता०**—१८१. किं किलेति। अश्रद्धामर्षयो र्गम्यमानयोः किं किलेति शब्दस्य योगे अस्त्यर्थस्य शब्दस्य च योगे कालसामान्ये धातोः कल्कि स्यात्। अत्र किंकिलेति समुदायेन एकएव शब्दो निश्चितार्थद्योतकः। युधिष्ठिरस्य राजसूययज्ञारम्भे भीष्मोक्तिः—नावकल्पयामीत्यादि। अस्त्यर्थेति—अस्तीति अर्थो यस्य सोऽस्त्यर्थः, अस्ति भवति विद्यते, एभिर्योगे इत्यर्थः। अस्ति नाम कृष्णेतरः अग्रपूजां लप्स्यत इति योज्यम्। नाम सम्भावनायाम्। केचित्तु किं किलेति द्वौशब्दौ, तेन व्यवधानेऽपि—किं क्रमिष्यति किलैष वामन इति माघ इत्याहुः।

**अमृता०**—१८२. यदिति। अश्रद्धामर्षयो र्गम्यमानयो र्यदादि शब्दचतुष्टययोगे

---

**बाल०**—आशि। आशीरिष्टार्थस्याशंसनं आशंसनमिच्छा। तस्यां गम्यमानायां कामपालविधातारौ भवतः। सूत्रमिदमाख्यातसूत्रानुवादरूपं॥ १७९॥

**बाल०**—माङ्। व्यक्तार्थमेतत्। कथमिति कथं भूतेशो भवतीति विरोधः। सिद्धान्तमाह निरनुबन्ध इति॥ १८०॥

**बाल०**—मास्म। मास्मयोगे भूतेशो भूतेश्वरश्च भवति व्यस्तेऽपीति। व्यस्ते वैपरीत्ये योग्येऽपीत्यर्थः अस्माकं मते समस्ते योगे भवति। न स्यादिति भूतेश्वर इति शेषः॥ १८१॥

कल्क्यपवादः। न श्रद्दधे न क्षमे भवानपि कृष्णवद् यत् पूज्येत, यदि पूज्येत। एवं यदा जातु।

**१८३. यच्च यत्रयोश्च विधिः।**

कल्क्यपवादः। न श्रद्दधे न क्षमे यच्च कृष्णवदितरः पूज्येत, यत्र वा। अश्रद्धामर्षौ निवृत्तौ।

**१८४. यच्च यत्रयोगे गर्हायां विधिराश्चर्ये च।**

सर्वापवादः। यच्च भवान् कृष्णपक्षं विमुञ्चेत्तदेतदन्याय्यम्। अत्रेत्यादि। तथा यच्चेत्यादि, तदेतदाश्चर्यम्।

**१८५. यच्च यत्राभ्यामन्योपपदे त्वाश्चर्यावगतौ कल्कि यदिं विना।**

चित्रं कृष्णेतरः सर्वं वशयिष्यति। यदि प्रयोगे तु—चित्रं यदि स वशयेत्। उक्तोऽजितविकल्पः। अत्र पूर्वत्र च यत्र विधि विषयत्वाभाव स्तत्र क्रियातिपत्तौ नाजितः, तद्विषयत्वे तु यथोचितं ज्ञेयम्।

॥ इति कालसामान्यं निवृत्तम् ॥

---

कालसामान्ये धातो विधिः स्यात्। शृगाल वासुदेवं प्रति श्रीमदुद्धवोक्तिः—भवानपि कृष्णवदित्यादि।

अमृता०—१८३. यच्चेति। अश्रद्धामर्षयोरित्यनुवर्त्तितव्यम्। अन्यत् सुगमम्।

अमृता०—१८४. यच्च वत्रेति। गर्हाया माश्चर्ये च गम्यमाने यच्च यत्र शब्दयोर्योगे कालसामान्ये धातोर्विधिः स्यात्। कालत्रयेऽप्येवमेवप्रयोग इति सर्वलकारापवाद एषः। यच्च भवानपि कृष्णपक्षं मुञ्चेत् तदेतदाश्चर्यं चित्रमित्यादि योज्यम्। सूत्रत्रये विधिविषयत्वेन क्रियातिपत्तौ त्वजित उन्नेयः।

अमृता०—१८५. यच्चेति। यच्च यत्र शब्दाभ्यामितरस्मिन् शब्द उपपदे आश्चर्यस्य अवगति र्ज्ञानं चेत्तर्हि काल सामान्ये कल्कि स्याद् यदिशब्दवर्जम्। चित्रमिति—कृष्णाद् भिन्नः कोऽपि सर्वं वशीकरोतीति चित्रत्, सर्ववशीकारित्वधर्मस्य कृष्णैकनिष्ठत्वप्रसिद्धेरित्यर्थः। एवचित्रमन्धो नाम कृष्णं द्रक्ष्यति, मूको नाम श्रीगीतां पठिष्यतीत्यादि ज्ञेयम्। अत्र विधिविषयत्वविरहान्नाजित इत्याह—अत्र पूर्वत्र चेति।

---

बाल०—काल। अपि। गर्हा कुत्सा तस्यां गम्यमानायां अपिजात्वोर्योगे कालसामान्ये अच्युतो भवति। तदिति तस्मात्। अथेति अतः परमित्यर्थः। नित्यत्वेनेति अजितो ज्ञेय इति शेषः॥ १८२–१८३॥

बाल०—विधि। व्यक्तार्थमेतत्॥ १८४॥

## १८६. धातुसम्बन्धे प्रत्ययाः ।

**द्वयोर्धात्वर्थयो र्विशेषणविशेष्यभावे सति भिन्नकाला अपि प्रत्ययाः साधवो भवन्ति । कृष्णोऽयं मथुरां गतः श्वो भविता । मथुरायां वसन् यादवान् ददर्श । वर्त्तमाने तद्धितमतौ—कृष्णभक्तिमानयं भविता । अत्रास्य गमनक्रिया श्वः सत्तायुक्ता भविष्यतीत्याद्यर्थेषुलब्धेषु गमनादे-र्विशेष्यत्वं सत्तादेर्विशेषणत्वं सिध्यति । सोमयाजी तव पुत्रो जनिता इत्यत्र च जनिना जननक्रियानन्तरं सत्तोच्यते ।**

---

**अमृता०**—१८६. धात्विति । धातुशब्देन धात्वर्थो लक्ष्यत इति स्वयमेव स्पष्टयति वृत्तौ—द्वयो र्धात्वर्थयोरित्यादि । सम्बन्ध इह विशेषणविशेष्यभावरूपः, तस्मिन् सति । नाम्नो लिङ्गसंख्यादीव कालपुरुष वचनानि धातोरर्थविशेषाः, धातुं विना तेषां स्वतन्त्र-तया व्यवहारविरहात् । तानि च तिवादिप्रत्ययैरेवाभिव्यज्यन्ते इति प्रत्ययानां साधुत्व-मुक्तमिति ध्येयम् ।

कृष्णोऽयमित्यादौ गत इति भूते क्तः, भवितेति भविष्यति वालकल्किः । श्वः सत्तायुक्तं गमनमभूदित्यवगमात् भवनं विशेषणं, गमनन्तु विशेष्यमिति सम्बन्धः । तस्मात् गत इति भूत कालस्थ क्रियायाः प्रत्ययः, भवितेति भविष्यत् कालिक प्रत्ययेनाभिसम्बध्य-मानः साधु र्भवति । मथुरायामिति—इह दर्शनयुक्तो वास इत्यवगमात् दर्शनं विशेषणं, वासस्तु विशेष्यमिति सम्बन्धः । अतो वसन्निति वर्त्तमान शतृप्रत्ययो ददर्शेति भूताधोक्षज प्रत्ययेन सम्बद्धः सन् साधुर्वर्त्तते । वसन् ददर्शावतरन्तमम्वरादिति माघश्च ।

कालोपलक्षितो यो यः प्रत्ययो यत्र यत्र विहित स्तत्सर्वे गृह्यन्त इत्युपदिशति—एवं वर्त्तमाने तद्धितमतावति । कृष्णभक्ति—मानिति—कृष्णभक्तिरस्य अस्तीति वर्त्तमाने मतु विधास्यते । कृष्णभक्तिमत्त्वं सत्तायुक्तं भविष्यतीत्युपलब्धे भवन भक्तिमत्त्वयो र्विशेषण विशेष्यभावसम्बन्धः । तेन भक्तिमानिति वर्त्तमानप्रत्ययो भवितेति भविष्यत् प्रत्ययेनाभिसम्बद्धः साधु विद्यते । एवं सोमयाजीति—भूतकाले करणे यजे र्णिनि र्वक्ष्यते । अत्र जनिना जनधातुना जननक्रियाया अनन्तरं तस्य सत्ता उच्यते, अन्यथा जननात् परं भूते सति सोमयजनानुपपत्तेः । तस्मादयमर्थः—तवपुत्रस्य सोमयजनं सत्तायुक्तं भविष्यति, यस्तव पुत्रो जनिता स सोमयजनमवश्यं करिष्यतीति फलितार्थः । अतो जनन सोमयजनयो र्विशेषण विशेष्यभाव सम्बन्धे तत्तत्क्रियोत्तर भविष्यद् भूतौ प्रत्ययौ साधूभवत इति । अत्र नैयायिकास्त्वाहुः—सम्बन्धइति धात्वर्थावश्यकसम्बन्धे । अतीतकालविहितप्रत्ययेन तदावश्यकत्वं भासते । तेन भविष्यदुत्पत्तिकपुत्रे यद्यवश्यं सोमयजनकर्त्तृत्वं भासते तदैवायं प्रयोगइति ।

---

**बाल०**—गर्हायां गम्यमानायां कथंशब्दयोगे सति कालसामान्ये विध्यच्युतौ वा भवतः । अजितोऽनुवर्त्तते सोऽपि भूते विधिविषयक्रियातिपत्तौ वा भवतीति । अवैष्णवमिति अवैष्णवं मन्त्रमित्यर्थः ॥ १८५ ॥

## १८७. क्रिया समभिहारे कालत्रयेऽपि विधाता, तस्य हिस्वावेव, तौच तध्वं विषये वा ।

तत इत्येव शब्दः प्रयुज्यते, तदनन्तरं यथार्हं तद्धातुपदानुप्रयोगः । कर्त्तृ कर्मणोः प्रयोगस्तु तत् पूर्वतस्ततपरतो वा । क्रियायाः समभिहारः पौनःपुन्यमतिशयश्च, तत्रद्विरुक्ति र्वाच्या ।

पश्य पश्य इत्येवायं पश्यति कृष्णम् । एवमद्राक्षीत् द्रक्ष्यति वा । सेवस्व सेवस्व इत्येवायं सेवते । एवमसेविष्ट सेविष्यते वा । अर्थस्तु कृष्णं मुहुर्भृ शं वा पश्यतीत्यादिको ज्ञेयः । यङ् प्रत्ययस्त्वस्मिन्नेवार्थे विधीयमानोऽपि स्वयमेव समर्थत्वाद् द्विरुक्ति नापेक्षत इति भेदः ।

---

अमृता०—१८७. क्रियेति । क्रियायाः समभिहारे पौनः पुन्यातिशययोः कालत्रयेऽपि विधाता साधुः स्यात् । तस्य तु विधातुरष्टादशप्रत्ययेषु भध्ये हि स्वौ प्रत्ययौ ह्यादिश्येते । परपदिधातो र्विधातृस्थाने हिः, आत्मपदिधातो स्तत्र स्वःस्यादित्यर्थः । तौ च हि स्वौ मध्यमपुरुषबहुवचनत्रिषययो स्तु वा स्याताम् । परिभाषेयम् । तत इति हि युक्तात् स्वयुक्ताद् वा पदात् । द्विरुक्ति र्वाच्येति वक्तव्येत्यर्थः, आमीक्ष्ण्यवीप्सयो रित्यनेनेति शेषः । आभीक्ष्ण्यं पौनः पुन्यम् ।

पश्यपश्येति—अत्र पश्येति वर्त्तमाने विधाता, ततएव पश्यति इति वर्त्तमानस्यानुप्रयोगः । एवं द्वित्वबहुत्वयोश्च—पश्य पश्य इत्येव इमौ पश्यतः, इमे पश्यन्ति कृष्णमिति । एवमिति—पश्य पश्य इत्येवायमद्राक्षीत्, पश्य पश्य इत्येवायं द्रक्ष्यति कृष्णमिति । पूर्वत्र भूते विधाता साधुः, उत्तरत्र भविष्यति । ततएव अद्राक्षीत् द्रक्ष्यतीति भूतभविष्यतो र्लकारयोरनुप्रयोगौ । एवं द्वित्व बहुत्वयोश्च—पश्य पश्य इत्येवेमौ अद्राष्टाम्, इमे अद्राक्षुः । तथा पश्य पश्य इत्येवामू द्रक्ष्यतः, अमी द्रक्ष्यन्ति कृष्णमिति ।

अथात्मपद उदाहरति—सेवस्वेति । एवं द्वित्वबहूत्वयोः—सेवस्व सेवस्व इत्येवामू सेवेते, अमी सेवन्ते । एवञ्च भूते—सेवस्व सेवस्व इत्येवायमसेविष्ट, इमौ असेविषाताम्, इमे असेविषत । भविष्यति—सेवस्व सेवस्व इत्येवासौ सेविष्यते, अमू सेविष्येते, अमी सेविष्यन्त इति ।

एतद्विधप्रयोगस्य यङ्प्रत्ययेन सह भेदं दर्मयति—यङ्प्रत्ययस्त्विति । अस्मिन्नेवार्थे—

---

बाल०—किं । गर्हायां गम्यमानायां किमादियोगे कालसामान्ये विधिकल्की भवतः । अजितोऽनुवर्त्तते सोऽपि क्रियातिपत्तौ भूते वा भवति ॥ १८६ ॥

बाल०—अश्र । अश्रद्धा च अमर्षश्च तयोः । अश्रद्धामर्षयोर्गम्यमानयोः कालसामान्ये विधिकल्की भवतः । अत्र क्रमव्यवस्थानेष्टेत्युदाहरण एव व्यक्तं । न श्रद्दध

युष्मदस्मदोः कर्त्रोस्तु,—पश्य पश्य इत्येव त्वं पश्यसीत्यादिकमुदाहार्यम्। तौच तध्वं विषये वा। यथा—पश्यत पश्यत इत्येव यूयं पश्यथ कृष्णम्। पक्षे पश्य पश्येत्यादि। तथा सेवध्वं सेवध्वमित्येव यूयं सेवध्वे कृष्णम्। पक्षे सेवस्व सेवस्वेत्यादि।

## १८८. समुच्चित क्रिया वचनाद् विधात्रादिकं वा।

**कृष्णं पश्य रामं पश्यं श्रीदामानं पश्य इत्येवायं पश्यति, इमौ पश्यतः, इमे पश्यन्ति। अथवा कृष्णं पश्यति रामं पश्यति श्रीदामानं पश्यति इत्येवायं पश्यतीत्यादि। एवं युष्मदादि कर्त्तृषु सर्वेषु कालेषु वचनेषु चोन्नेयम्।**

---

क्रियासमभिहारेऽर्थे। स्वयमेव समर्थत्वादिति—अत्रायमभिप्रायः,—पौनः पुन्यातिशययो र्यङ् प्रत्ययो बिहितः, ततो तेनहि यङा तयोरर्थयो रुक्तत्वात् तत्तदर्थाभिव्यक्तये स्वयं यङेव समर्थ इति पृयक्तया समभिहार द्योतकाया द्विरुक्ते र्नावश्यकतेति।

मध्यमपुरुषे चोदाहरति—पश्य पश्येति। मुहु र्भृशं वा त्वं पश्यसि कृष्णमित्यर्थः। एवं पश्य पश्य इत्येव युवां पश्यथः। बहुवचने 'त' विषये दर्शयति—पश्यत पश्यतेति। वर्त्तमाने लोट् साधुः। अत्र तु वा विधानाद् यथाप्राप्त प्रयोगपक्ष एषः, विधान पक्षस्तु पश्य पश्येत्यादिः प्रथममुदाहार्यः। तत्र ध्वं विषये च दृष्टान्तयति—सेवध्वमिति। वर्त्तमाने विधाता साधुः। एवमुत्तमपुरुषेऽपि—पश्य पश्य इत्येवाहं पश्यामि, आवां पश्यावः, वयं पश्यामः। भूते भविष्यति चैवं प्रयोक्तव्यम्।

**अमृता०**—१८८. समुच्चितेति। समुच्चीयमाना अनेकक्रिया वक्तीति समुच्चित क्रियावचनः, तादृशाद्धातोरुत्तरे कालत्रये विधात्रादिकं वादिश्यते। विधात्रादिकमिति—विधातुः स्थाने हि स्वौ च वादिश्येते, तध्वं विषये च तौ वादिश्येते इति। कृष्णं पश्येति—तिस्रो दर्शनक्रिया अत्र समुच्चिता इति दृशधातोः समुच्चित क्रियावचनत्वम्। वर्त्तमाने विधाता साधुः, तस्य हि रादिष्टः। युष्मदादि कर्त्तृषु चोन्नेयमिति—तानि यथा—कृष्णं पश्य रामं पश्य श्रीदामानं पश्य इत्येव त्वं पश्यसि, युवां पश्यथः, यूयं पश्यथ। अथवा कृष्णं पश्यसीत्यादि। कृष्णं पश्य रामं पश्य सुवलं पश्य इत्येवाहं पश्यामि, आवां पश्यावः, वयं पश्यामः। अथवा कृष्णं पश्यामीत्यादि। एवं भूतभविष्यतोश्च। कृष्णं पश्य रामं पश्य सुवलं पश्य इत्येवायमद्राक्षीत, त्वमद्राक्षीः, अहमद्राक्षम्। तथा कृष्णं पश्य रामं पश्य सुवलं पश्य इत्येवासौ द्रक्ष्यति, त्वं द्रक्ष्यसि, अहं द्रक्ष्यामि। एवं वचनेषु च विकल्पेन च विभिन्नाः प्रयोगा ज्ञेयाः।

---

इति नाभिलषामीत्यर्थः। न मर्षयामीति न सहे इत्यर्थः। सर्वत्रेति। तस्मात् न श्रद्दध इत्यस्य न मर्षयामीत्यस्य च अनुक्तत्वेऽपि कृष्णान्योऽग्रपूजां लभेत लप्स्यते वेत्यादि प्रयोगा भवन्तीति॥ १८७॥

**१८९. अत्र सामानार्थं नानाधातु प्रयोगे सामान्यवचनधातुरनु प्रयुज्यते ।**

कृष्णं पश्य राममीक्षष्व श्रीदामानं विलोकय इत्येवायं निभालयतीत्यादि ।

**१९०. प्रहासे मन्यत्युपपदाद्धातोरुत्तमस्य मध्यमो मन्यतेश्च मध्यमस्योत्तमैक वचनम् ।**

एहि मन्ये कृष्णं द्रक्ष्यसि, दृष्टोऽसौ तव पित्रेति । प्रहासे इति किम्—

---

अमृता०—१८९. अत्रेति । अत्र क्रियासमुच्चये तुल्यार्थानामनेकधातूनां पूर्वत्र प्रयोगे तूत्तरत्र तेषां सर्वेषामर्थवाचकधात्वन्तरमनुप्रयुज्यते । कृष्णं पश्येति—पश्य इक्षष्व विलोकयेति त्रयाणामर्थो निभालधातौ विद्यते, दर्शनात्मकत्वेन सामान्यवचनत्वमस्य सिद्धम् । एवं पक्षे कृष्णं पश्यति राममीक्षते श्रीदामानं विलोकयति इत्येवायं निमालयतीद्यादि योज्यम् ।

अमृता०—१९०. प्रहास इति । प्रहास उपहासः, तस्मिन्गम्यमाने मन्यतौ उपपदे सति धातोरुत्तम पुरुषस्य स्थाने मध्यमपुरुष आदिश्यते, तथा उपपद भूतस्य मन्यते मध्यम पुरुषस्य स्थाने तूत्तमपुरुषैकबचनमेवादिश्यते । ईदृशो बिपर्ययादेशो हि साधुत्वं मतम् । ततोनुप्रयुक्तस्य धातो र्मध्यमपुरुषस्य वचनत्रयमेव भवतीति लब्धम् । मन्यते र्वचनाबगति स्त्वनुप्रयुज्यमान तद्धातो र्वचनानुसारादेवे भवेदिति सारः । मन्यतीति सविकरणनिर्देशो दिवादेरेव ग्रहणार्थः ।

एहीति—त्वं मन्यसे कृष्णमहं द्रक्षामीत्यर्थः । प्रहासत्व प्रति पादनाय—दृष्टोऽसाविति प्रतिवचनम् । अस्यायमर्थः—तव पित्रासौ दृष्ट इत्युक्तिकाले मुखनयनभङ्गीकरणं प्रहासे लक्षणम् । येन च—"तवपित्रा न दृष्टः कृष्ण" इति विपरीतलक्षणया व्यञ्जितम्; तथैवाहमपि न द्रक्ष्यामीत्यर्थोऽत्रावसित इति ।

एवं द्विवचने—एहि मन्ये कृष्णं द्रक्ष्यथः, दृष्टोऽसौ त्वत्पितामहेन । युवां मन्येथे कृष्णमावां द्रक्ष्याव इत्यर्थः । बहु वचनेऽपि यथा—एहि मन्ये कृष्णं द्रक्ष्यथ, दृष्टोऽसावित्यादि । यूयं मन्यध्वे कृष्णं द्रक्ष्यामो वयमित्यर्थः । तथाहि कवि प्रयोगः—"एहि मन्ये मृगाक्षीणामहंप्रेयान् भविष्यसि । स्यात् प्रेमविषय स्तासामक्ष्णा काणो भवादृशः । इत्यादिः ।

---

बाल०—किंकिल । अश्रद्धामर्षयोर्गम्यमानयोः किंकिलशब्दस्य अस्त्यर्थस्य च योगेतु कलिकः स्यात् । नावकल्पयामीति न सम्भवयामीत्यर्थः ।। १८८ ।।

बाल०—यद्यदि अश्रद्धामर्षयोर्गम्यमानयोर्यदादियोगे कालसामान्ये विधि स्यात् । यद्यादिसाहचर्यात् यदित्यव्ययमेव गृह्यते इति ज्ञेयं । न श्रद्दध इति कृष्णेतरं प्रति कोऽपि कथयति ।। १८९ ।।

**एहि मन्यसे, कृष्णं द्रक्ष्यामि, साधु मन्यसे। एवं मन्येथे मन्यध्वेऽपि। एहीत्यव्ययं सम्बोधने। तदेवं वैष्णवो भवति इत्याद्युदाहरणै र्वाक्यानि दर्शितानि।**

**॥ इति अच्युताद्यर्थाः ॥**

---

उपाहासाभावे वास्तवप्रयोगे तु मन्यते यथाप्राप्त द्विवचनादिकं च भवेदिति प्रत्युदाहरति—एहि मन्यस इत्यादि। एहीत्यव्ययमिति प्राचां हीदं मतम्। दीक्षितस्तु धातुरूपमिदमित्याह। तेन च "एतं मन्ये, एत मन्ये" इत्यादि रीत्या द्वित्व बहुत्वयो रुदाहरणे दर्शितवान्। वाक्यानि दर्शितानीति—दशलकाराणामेव प्रयोगा विशेषरूपेण वाक्यै दर्शिताः प्रागित्यर्थः।

॥ इति व्याख्याता अच्युताद्यर्थाः ॥

---

**बाल०**—यच्च। अश्रद्धामर्षयोर्गम्यमानयोर्यच्च-यत्रयोश्च योगे कालसामान्ये विधिः स्यात्। आश्चर्ये च गम्यमाने यच्च-यत्र-योगे विधिः स्यात्। अन्यायमनुचितं। एवं यत्रेत्यादि। तथा यच्च-भवान् कृष्णपक्षं विमुञ्चेत् तदेतदाश्चर्यमिति॥ १८९-१९०॥



अथ आत्मपदपरपदप्रक्रियाविशेषौ ज्ञेयौ ।

**१८१. भावे कर्मणिसर्वस्माद्धातोः स्यादात्मनेपदम् ।**
**ङिद्भ्य आत्मपदिभ्यश्च कर्त्तर्यपिविधीयते ।।**

अत्रात्मनेपदमिति विभुश्च । भूयते क्रियते कामयते एधते ।

**१८२. ञिद्भ्य उभयपदिभ्यो णेः कर्त्तृगामिक्रियाफले ।**

---

आख्यात प्रकरणे खलु कतिचित् प्रयोजनीयधातून् संगृह्य तद्रूप प्रदर्शनाय सामान्यत आत्मपदपरपदौ दर्शितौ। इह तु प्रकरणे विशेषेणतयो व्यवस्थां वक्तुमारभते। तत्र प्राचुर्यादात्मपदस्य विशेषव्यवस्थां प्रथममाह,—

**अमृता०**—१८१. भाव इति। भावे कर्मणि च वाच्ये सर्वस्माद्धातोरात्मपदं स्यात्। तथा ङिद्भ्यो धातुभ्यः, आत्मपदिभ्यश्च धातुभ्य उत्तरे वाच्ये चात्मपदं विधीयते, अनेनेति शेषः। अपिशब्दात् तेषां भावकर्मणो श्चात्मपदमव्याहतमेवेत्यर्थः। तदेष आख्यात-प्रकरणारम्भे भूधातौ यदुक्तं तस्यैव प्रपञ्चो ज्ञेयः। इह त्वनुक्ते सामान्यविधानस्य भानं स्यादिति। आत्मनेपदमिति पाणिनीयानां संज्ञा छन्दोऽनुरोधादिह प्रयुक्ता। प्रकरेऽस्मिन् विद्यार्थि हिताय सूत्र मात्रमनुष्टुप् छन्दोभि र्ग्रथितम्। आत्मनेपदमित्यधिकृत्य विधीयत इत्याह—आत्मनेपदमिति विभुश्चेति। चकारेण कर्त्तरीति च विभुरासमाप्तेः। कामयत इति—कमे र्णिङिति ङित्त्वादात्मपदम्। एधत इत्यात्मपदिधातुरेष पूर्वमुक्तः। आत्मपदिनो धातवो गण पाठाज् ज्ञातव्याः।

**अमृता०**—१८२. ञिद्भ्य इति। कर्त्तारं गच्छतीति कर्त्तृगामि, तादृशं क्रियाफलं यत्र तथा सति ञिद्भ्य उभयपदिभ्यश्च धातुभ्य स्तथा ण्यन्ताच्च धातोरात्मपदं विधीयते, कर्त्तरीति सर्वत्र योज्यम्। उभयपदिनो धातवश्च गणपाठे द्रष्टव्याः। कुरुते इति ञित्त्वाद्

---

**बाल०**—यच्च। आश्चर्यावगतौ अर्थे यदि विना यच्च-यत्राभ्यामन्यस्मिन्नुपपदे सति कालसामान्ये कल्किः स्यात्। चित्रं आश्चर्यं। वशयिष्यतीति वशं करिष्यतीत्यर्थः। स कृष्णेतरः। वशयेदिति यद्यदि-यदा-जातु-योगे त्रिधिरित्यनेन विधिः। अत्रेति। क्रिया-तिपत्तावििति क्रियातिपत्तावपीत्यर्थः। तद्विषयत्वे। यथोचितमिति कदाचिन्नित्यत्वेन कदाचिद्विकल्पेनेत्यर्थः। ज्ञेयमिति अजितविधानमित्यर्थः।। १८१ ।।

**बाल०**—धातु। धातुसम्बन्ध इत्यस्यार्थमाह द्वयोर्धात्वर्थयोर्विशेषणविशेष्यभावः।

कुरुते यजते कारयते । अत्र स्वार्थमिति गम्यम् ।

नेह—करोति यजति कारयति । अत्र परार्थमिति गम्यम् ।

**१९३. शब्दान्तरद्योतित्वे तु तत्फले स्याद् विभाषया ।**

**स्वार्थं कृष्णं यजते यजति वा । कर्त्तृगामीति निवृत्तम् ।**

---

डुकृञ् धातुरुभय पदी । यजतइति यजधातुः स्वभावत उभयपदी । कारयत इति ण्यन्ता-दुमयपदम् । अत्र स्वार्थमिति—अतिथिः पाकं कुरुत इत्यत्र पाक क्रियायाः फलमोदनं-अतिथेः स्वकीयार्थम् । तथा—यजन्ते कर्मिणो यज्ञैर्मघवन्तंसुरेश्वरमित्यत्र यजनस्य फलं स्वर्गोपभोगरूपं निजसुखार्थम् । अत्र कर्त्तृगामीति आख्यातवाच्य कर्त्तृपरंज्ञेयम्; तेन विष्णुमित्रो वैष्णवेम भिक्षां कारयत इत्यत्र अणि कर्त्तु वैष्णवस्य फलभागित्वाभावे तु न दोषः । नेहेति—पाकं करोति पाचकभृत्य इत्यत्र स्वाम्यर्थ एव ओदनः, पाचकस्तु वेतन-भाक् । तथा यजन्ति याजका देवमित्यत्र यज्ञ फलं स्वर्गलाभादि यज्ञस्वामिनएव नतु याजक पुरोहितानांमिति परार्थम् । एव विष्णुमित्र आचार्यस्य पाकं कारयति वैष्णवेन इत्यादौ च फलं परार्थमिति ज्ञेयम् ।

**अमृता०**—१८३. शब्दान्तरेति । तत्फले कर्त्तृवामिक्रियाफले शब्दान्तरेण उप-पदेन द्योतिते तु सति विभाषयात्मपदं स्यात् । उदाहरणे त्वत्र स्वार्थशब्देन हि क्रियाफलस्य कर्त्तृगामित्वं द्योत्यत इत्यात्मपदस्याप्राप्तेविभाषा वचनम् ।

---

कृष्णोऽयमिति गत इति भूते, भवितेति भविष्यति । मथुरायामिति वसन्निति वर्त्तमाने ददर्शेति भूते । वासो दर्शनयुक्त इति वासस्य विशेष्यत्वं कृष्ण भक्तिमानिति वर्त्तमाने, भवितेति भविष्यति । भक्तिमत्त्वं सत्तायुक्तं । भविष्यतीति भक्तिमत्त्वस्य विशेष्यत्वं सत्ताया विशेषणत्वं । भक्तिरस्यास्तीत्यर्थेमतुविधानात् मतुप्रत्ययस्य क्रियार्थता । अतो भक्तिमत्त्वस्य धात्वर्थवाचकता । अस्य कृष्णस्य । सोमयाजीति । जनिना जनधातुना जननक्रियायामनन्तरं अन्तर्भूता सत्ता उच्यते । ततश्च तव पुत्रस्य सोमयजनं सत्तायुक्तं भविष्यतीति । अत्र सोमयजनस्य विशेष्यत्वं । सोमयाजीति भूते । करणे यजो णिनिरिति णिनिः । जनितेति भविष्यति ॥ १९२ ॥

**बाल०**—क्रिया । क्रियासमभिहारे गम्यमाने कालत्रयेऽपि विधाता भवति । तस्य क्रियासमभिहारे विहितस्य विधातुः स्थाने हिस्वावेव भवतः । परपदिधातोर्विधातुः स्थाने हिर्भवति, आत्मपदिधातोर्विधातुस्तु स्वो भवतीति ज्ञेयं । तौ च हिस्वौ तध्वं विषये वा भवतः ।

परिभाषासूत्रमेतत् । तदा तदनन्तरं इत्येवेत्यनन्तरं । यथार्हं यथायोग्यं तद्धातु-सम्बन्धिनः पदस्य अनुप्रयोगो भवति । यस्माद्ध तौर्विधाता विधीयते तत्पतेन स परामृश्यते । कर्त्तृकर्मणोः प्रयोगन्तु तस्मादनुप्रयुक्तात् पदात् पूर्वस्मिन् तस्मात् परस्मिन् वा भवति ।

तत्र । तत्र क्रियासमभिहारे द्विरुक्तिर्वाच्या वक्तव्या । पश्य पश्येति । अत्र वर्त्तमाने

## १८४. धातोः क्रियाव्यतीहारे आत्मनेपदमिष्यते ।

व्यति षिञ्चते परस्परं सिञ्चतीत्यर्थः ।

---

**अमृता०**—१८४. धातोरिति । व्यतीहारो विनिमयः, सच एकाधिककर्त्तृविषयः । क्रियाया व्यतीहारे सति धातोः कर्त्तरि आत्मपदमिष्यते । व्यतिषिञ्चत इति—जलक्रीडायां कृष्णो यथा जलाञ्जलिभिः राधां सिञ्चति सापि तथैव कृष्णमित्यर्थः । तत्र च पुनः क्रियायाः सजातीयत्वे हि तदिच्छन्ति; तेन नेह—कृष्णः सिञ्चतिराधां सा तु तद्वञ्चयतीति ।

---

विधाता तस्य हिः, पश्येति ततो द्विरुक्तिः पश्येति ततो द्विरुक्तिः, पश्य पश्येति ततः इत्येव शब्दप्रयोगः यथार्हमित्युक्तं अतस्तदनन्तरं पश्यतीत्यस्यानुप्रयोगः तत्पूर्वतस्तत्परतो वेत्युक्तं, अतोऽनुप्रयुक्तात् पूर्वस्मिन् कर्त्तुः प्रयोगः तस्मात् परस्मिन् कर्मणः प्रयोगः । अनुप्रयुक्तात् पूर्वस्मिन् परस्मिंश्च उभयोरपि प्रयोगो भवति । यथा पश्य पश्येत्येवायं कृष्णं पश्यति, पश्य पश्येत्येव पश्यत्ययं कृष्णमिति । एवमिति । पश्य पश्यत्येवायमद्राक्षीत् कृष्णमिति । अत्र भूते विधाता अतोऽद्राक्षीदित्यस्यानुप्रयोगः । कृष्णं मुहुर्भृशं वा अद्राक्षीदित्यर्थः । पश्य पश्येत्येवायं द्रक्ष्यति । कृष्णमिति भविष्यति विधाता अतो द्रक्ष्यतीत्यस्यानुप्रयोगः कृष्णं मुहूर्भृशं वा द्रक्ष्यतीत्यर्थः । सेवस्वेति । अत्र विधातुः स्थाने स्वः कृष्णं मुहुर्भृशं वा सेवते इत्यर्थ इति मुहुः पुनः पुनः । अस्य विधानस्य यङ्प्रत्ययेन सह भेदमाह यङ्प्रत्ययस्त्विति । अस्मिन्निति क्रियासमभिहारे इत्यर्थः । समर्थत्वात् बलवत्त्वात् । कर्त्रोरिति कर्त्रोः सतोः । पश्येति । कृष्णं मुहुर्भृशं वा पश्यसीत्यर्थः । पश्यतेति । कृष्णं मुहुर्भृशं वा पश्यथेत्यर्थः । सेवध्वमिति कृष्णं मुहुर्भृशं वा सेवध्वे इत्यर्थः ॥ १८३ ॥

**बाल०**—समु । समुच्चिता या क्रिया तद्वचनाद्धातोरुत्तरे कालत्रये विधात्रादिकं वा भवति । क्रियाणां समुच्चये सति वा भवतीत्यर्थः । समुच्चयो मेलनं प्रत्येकसमन्वायकं वा । आदिकमित्यनेन हिस्वादिकं गृह्यते । कृष्णं पश्येति । अत्र वर्त्तमाने विधाता तस्य हिः । दर्शनक्रियात्र समुच्चिता अतो दृशधातोः समुच्चितक्रियावचनत्वं । कृष्णं पश्यति रामं पश्यति रामं पश्य श्रीदामानं पश्येत्येव इमौ पश्यतः इति कृष्णं पश्यतः रामं पश्यतः श्रीदामानं पश्यत इत्यर्थः । एवं इमे पश्यन्तीत्यत्रापि ज्ञेयं । कृष्णं पश्यतीति । विधात्रादीत्युक्ते पक्षे अच्युतएव । इत्यादीत्यादिपदेन कृष्णं पश्यतः रामं पश्यत श्रीदामानं पश्यत इत्येव इमौ पश्यत इत्यादि । एवमिति उन्नेयं अध्याहार्यं उदाहरणमिति शेषः । तद्यथा, कृष्णं पश्य रामं पश्य श्रीदामानं पश्यत्येव त्वं पश्यसि युवां पश्यथः यूयं पशद्यथ । अथवा । कृष्णं पशद्यसि रामं पशद्यसि श्रीदामानं पशद्यसीत्येव त्वं पशद्यसीत्यादि । कृष्णं पशद्य रामं श्रीदामानं पशद्येत्येवाहं पशद्यामि आवां पशद्यावः वयं पशद्यामः । अथवा । कृष्णं पशद्यामि रामं पशद्यामि श्रीदामानं पशद्यामीत्येवाहं पशद्यामीत्यादि । कृष्णं पशद्य रामं पशद्य श्रीदामानं पशद्येत्येवायं अद्राक्षीदित्यादि । कृष्णं पशद्य रामं पशद्य श्रीदामानं पशद्येत्येवायं द्रक्ष्यतीत्यादि च ॥ १८४ ॥

**१८५. हसि जल्पि पठादिभ्यो गति हिंसार्थकाच्च न ।**

व्यतिहसन्ति व्यति जल्पन्तीत्यादि । शब्दार्थमात्रान्नेति कातन्त्रः । तद्विस्तरस्त्वाख्यात चन्द्रिकासु । व्यतिगच्छन्ति व्यतिघ्नन्ति ।

**१८६. हरते र्न निषधः स्याद् वहेरपि नकुत्रचित् ।**

सं प्रहरन्ते सं विवहन्ते ।

**१८७. परस्परेतरेतरान्योन्ययोगे निषेधनम् ।**

परस्परं व्यतिलुनन्तीत्यादि । क्रियाव्यतीहारो निवृत्तः, आत्मनेपदन्त्वनुवर्त्तते ।

---

**अमृता०**—१८५. हसीति । हसि जल्पि पठादिभ्य स्तथा गत्यर्थात् हिंसार्थकाच्च धातोः क्रिया व्यतीहारे त्वात्मपद नेष्यते । शब्दार्थमात्रादिति—शब्दः अर्थोऽस्ति यस्य तादृशाद्धातुमात्रात् नात्मपदमिति कालापमतम् । तथैवाख्यातचन्द्रिकायां यथा,—शब्दार्थ हस वह हृ गति हिंसार्थकान्नतदिति । एवमेवमतं वोपदेव जुमरादीनामपि ।

**अमृता०**—१८६. हरते रिति हरते र्वहतेश्च क्रियाव्यतीहारे निषेधो न स्यात्, आत्म पदमेव स्यादित्यर्थः । तत्र वहते र्न सार्वत्रिक इति भावः । हरते र्गत्यर्थत्वात् तथा संप्रपूर्वस्य हिंसार्थत्वान्निषेधे प्राप्ते तत् पतिनिषेधोऽयम् । वहे स्तु गत्यर्थत्वादिति । संप्रहरन्ते सैनिका इति शेषः । संविवहन्त इति—कन्यां वरञ्च परस्परं प्रापयन्तीत्यर्थः ।

**अमृता०**—१८७. परस्परेति । परस्परादि शब्दै र्योगे आत्मपदस्य निरेधः स्यात् क्रियाव्यतीहारे । परस्परादि शब्दैरेव क्रियाव्यतीहारस्योक्तत्वात् तज्ज्ञापकात्मपदस्यानावश्यकत्वमिति भावः ।

उपेन्द्र विशेषसम्बन्धेन धात्वर्थस्य वैशिष्ट्यप्रसिद्धेरधुना तद्योगेन धातुविशेषाणामात्मपदित्वं दर्शयितुं प्रक्रमते—

---

**बाल०**—अत्र । अत्रेति । सामान्यवचनधातुरिति सर्वगतार्थवचनधात्वर्थान्तरमित्यर्थः । कृष्णं पशचेति । एवं कृष्णं पशचति राममीक्षते श्रीदामानं विलोकयतीत्यर्थः निभालयतीति भल निरूपणे चुरादिर्निपूर्वो दर्शने वर्त्तते ॥ १८५ ॥

**बाल०**—प्रहासः परिहासस्तस्मिन् गम्यमाने मन्यत्युपपदाद्धातोरुत्तरे उत्तमस्य स्थाने मध्यमो भवति. मन्यतेश्चोत्तरे मध्यमस्य स्थाने उत्तमैकवचनं भवति । मन्यतीति निर्द्देशो मनो ज्ञाने इतस्य दैवादिकस्यैव ग्रहणार्थः । एहीति मन्यस्ये इत्यत्र मन्ये इति द्रक्ष्यामीत्यत्र द्रक्ष्यसीति । प्रहासं प्रतिपादयितुं प्रतिवचनमाह दृष्टोऽसाविति । असौ कृष्णः साधू मन्यस इति प्रतिवचनं ॥ १८६ ॥

**बाल०**—भावे । भावे कर्मणि च वाच्ये सर्वस्माद्धातोरुत्तरे आत्मने पदं स्यात् । छन्दोऽनुरोधेन आत्मनेपदमित्युक्तमिति ज्ञेयं । एवमन्यत्रापि । परपरलक्षणेऽपि छन्दोऽस्त्येव

**१९८. नेर्विशः।**

**निविशते।**

**१९९. विपराभ्यां जेः।**

**विजयते पराजयते।**

**२००. क्रीञः पर्यववेः परात्।**

**परिक्रीणीते। एवं अव वि।**

---

**अमृता०**—१९८. ने र्विश इति। उपेन्द्रभूतात् नेरुत्तरस्मात् विशधातोरात्मपदं स्यात्; कर्त्तरि वाच्ये इति सर्वत्र योज्यम्। निविशत इति विशप्रवेशने तुदादिः। उपेन्द्र-भूतादेव, अन्यथा मधुनि विशन्ति भ्रमराः। अत्र नहि धातोरुपेन्द्रेण सम्बन्धः किन्तु अधिकरणेन। धातूपसर्गयोः सम्बन्धोऽन्तरङ्गः कारकादपीति विमर्शोविदुषाम्। प्रत्या-सन्नोपेन्द्रस्य हि ग्रहणम्, तेन व्यवधाने तु न—न्यभिविशतीत्येव। अता तु नहि व्यवधानं मन्यन्ते—वनं न्यविशत रामः।

**अमृता०**—१९९. विपराभ्यामिति। एताभ्यामुत्तरस्मात् जि धातोरात्मपदं स्यात्। कथं पराजयति सेना? परा उत्कृष्टा सेना जयतीत्यन्वयः कार्य इति।

**अमृता०**—२००. क्रीञइति। परि अव वि इत्येतेभ्य उत्तरस्मात् क्रीञ आत्मपदं स्यात्। परिक्रीणीत इति डुक्रीञ् द्रव्यविनिमये क्र्यादिः तत ञित्त्वादेव क्रियाफलस्य कर्त्तृगामित्वे आत्मपदं सिद्धमितीह तत् फलस्य अकर्त्तृगामित्वार्थं वचनम्। अकर्त्तभि-पायाथोऽयमारम्भ इत्यग्रिमसूत्रे वक्ष्यते, तच्चास्मादेवारभ्य प्रवर्त्तितव्यम्।

---

किन्तु मध्ये मध्ये उदाहरणं मन्दधियां सुखप्रतीत्यर्थं। तद्यथा। हसि-जल्पि-पठादिभ्यो गतिहिंसार्थकाच्च न। हरतेर्न निषेधः स्याद् वहेरपि च कुत्रचित्। मध्ये मध्ये उदाहरणं मतान्तरञ्च शब्दार्थमात्रान्नेति कातन्त्रविस्तर इति।

ङिद्भ्यः। ङिद्भ्य आत्मपदिभ्यश्च धातुभ्य उत्तरे कर्त्तर्यपि वाच्ये आत्मनेपदं विधीयते। धातूनामात्मपदित्वं गुण एव ज्ञेयं। भूयत इति भावे। क्रियत इति कर्मणि। कामयत इति णिङन्तत्वेन ङित्त्वादात्मपदं। एवं देङ मेङ पूङ डीङ शीङप्रभृतीनामपि ङित्त्वादात्मपदं ज्ञेयं। एधत इति एध वृद्धावित्यस्यात्मपदित्वं गण एव प्रसिद्धं॥ १९७॥

**बाल०**—ञिद्भ्यः। कर्त्तरि वाच्ये ञिद्भ्य उभयपदिभ्यो णेश्च उत्तरे कर्त्तृगामि-क्रियाफले आत्मनेपदं स्यात्। कर्त्तृगामीति क्रियाफले कर्त्तृगामिनि सतीत्यर्थः उभय-पदित्वमपि गण एव ज्ञेयं। कुरुते इति ञित्त्वात्। यजत इति उभयपदित्वात्। कारयत इति ण्यन्तत्वात्। क्रियाफलस्य कर्त्तृगामित्वं प्रतिपादयितुमाह अत्रेति॥ १९८॥

**बाल०**—शब्दा। तत्फले कर्त्तृगामिक्रिया फले शब्दान्तरेण द्योतिते त सति विभाषया विकल्पेन आत्मनेपदं स्यात्। यजत इति पूजयतीत्यर्थः॥ १९९॥

## २०१. आङो दाञो ने चेद् वक्त्रादिकस्य स्यात् प्रसारणम् ।

**आदत्त मृत्तिकां कृष्णो मुखं व्यादाच्च मायया ।**

**आदिग्रहणादस्य प्रसारण समान क्रियायामपि नस्यात् । विपादिकं व्याददाति, नदी कूलं व्याददाति । स्वीयाङ्गकर्मकादेव निषेधः ।**

**तेन—अन्यच्च किञ्चिद्वदनं व्यादेहीति दिशन्निव ।**
**व्याददे स हरि र्वक्त्रं वकस्यामरवैरिणः ॥**

---

**अमृता०**—२०१. आङ इति । आङ उत्तरस्माद्ददाते रात्मपदं भवति, चेत यदि स्वीय वदनादेः प्रसारणं विस्तृतिकरणं न गम्यते तदा । आदत्तेति भूतेश्वरः, खादितवानित्यर्थः । मुखं व्यादाच्च माययेति प्रत्युदाहरणम् । व्यादादिति—वि आङ् पूर्वस्य दाञो लङ् दिप्, मुखं प्रसारयामासेत्यर्थः । एतेन मृद् भक्षणलीला सूचिता । तत्रमायेति—स्वरूप शक्या योगमाययेति तत्त्वम् । करणे तृतीयेयम् । योगमाया हि कृष्णलीलायाः प्रधान सहायिकेति स्वीकारात् । कृष्णकर्त्तृकमृद् भोजनावसरे भर्त्सनपरया स्वमात्रा—मुखं व्यादेहीत्यादिष्टः कृष्णः—"माता मन्मुखेमृत्तिकां मा पश्यतु" इतीच्छन् मुखं व्यादात् । तदा तु नित्यं सेवावसरं प्रतीक्षमाणया योगमायेङ्गितज्ञया तदैश्वर्यशक्या कृष्णास्ये ब्रह्माण्डं दर्शितमिति श्रीभागवतीय सिद्धान्तः ।

आदिग्रहणफलमाह—आस्य प्रसारणसमानेत्यादि, आत्मपदमिति शेषः । विपादिका पादस्फोटः, तन्मुखंविस्तारयतीत्यर्थः । नदी कर्त्री, कूलं तीरं विदारयतीत्यर्थः । स्वीयाङ्ग कर्मकादिति—स्वीयञ्च तदङ्गञ्च स्वीयाङ्गम्, तदेव कर्म यस्य तथाभूतादेव दाञ आत्म पदनिषेधः क्रियते नतु अन्याङ्गकर्मकात्तस्मात् । तच्च दृष्टान्तयति—अन्यच्चेत्यादिना । अन्यच्च अधिकञ्च किञ्चिद् वदनं व्यादेहीति दिशन्निव आज्ञायन्निव (अनेनोपहासो गम्यते) सहरिः अमरवैरिणः सुरद्वेषिणो वकस्य तन्नाम्नोऽसुरस्य वक्त्रं व्याददे विस्तारयामास । तथाहि—नन्दीश्वर गिरेः पूर्वस्यां वकस्थलीति प्रसिद्धवनस्थल्यां वत्सपालैरनुक्रीडमानो गोपालः कंसादिष्टच्छद्मवेशं वकरूपिणमग्रेस्थितं दृष्ट्वा कौतुकात् तदन्तिकं जगाम । तमागतं दृष्ट्वा वकासुरेण तेन सहसा स्वतुण्डाभ्यामादाय निजगरेऽसौ, स्वकण्ठदेशं प्रविष्टेतु तस्मिन् महाज्वालामेनुभूय तूर्णमुज्जगरे च । पुनश्च रोषान्निजगरिषतोऽस्य तुण्डौ हस्ताभ्यां निगृह्य हरि र्गोपाल स्तद् वदनं व्याददे वपुश्च तस्य विपाठयामास, भीमसेनो यथा जरासिन्धुमिति श्रीभागवतीयवार्त्तानुसन्धेया ।

व्यादेहीत्यत्र अकर्त्तृगामिक्रियाफले विधानेनानेनात्मपदे प्राप्ते कर्त्तु र्वकस्य स्वाङ्गकर्ममूरवस्यप्रसारणान्नात्मपदं किन्तु यथाप्राप्तं परपदमेव । व्याददं इत्यत्र तु वदनंवकस्य, व्यादानकर्त्ता हरिरिति स्वीयाङ्गकर्मकत्वाभावादास्यप्रसारणेऽपि नात्मपदनिषेधः ।

---

**बाल०**—धातोः । क्रियाव्यतीहारेऽर्थे गम्यमाने धातोरुत्तरे कर्त्तरि वाच्ये आत्मनेपदमिष्यते । व्यतीहारः परिवर्त्तः । आत्मनेपदमिति स्पष्टतार्थं कृतमिति ज्ञेयं ॥ २०० ॥

अकर्त्रभिप्रायार्थोऽयमारम्भः। तेन—किं व्यादत्से विहग वदनमिति। अप्राप्तपक्षएव सूत्रविधानात् कर्त्तृगामिक्रियाफले भविष्यतीति पुरुषोत्तमः।

**२०२. क्षान्तौ ण्यन्तागमेः।**

आगमयतेऽपराधं कृष्णः, क्षमत इत्यर्थः। कालहरणेऽपि केचित्। आगमयस्व साधुमिति उदाहरन्ति च।

**२०३. नौतेः पृच्छे श्चाङ् यदि पूर्वतः।**

आनुते क्रोशतीत्यर्थः। आपृच्छते अनुज्ञार्थं याचत इत्यर्थः।

---

अर्त्तृभिप्रायार्थ इति—क्रियाफलस्य कर्त्तृगामित्वाभावे ह्यात्मपद प्राप्त्यर्थं एष आरम्भः, अन्यथा ञित्त्वेनैव तत्सिद्धे सत्यारम्भोऽयं निष्फलः स्यादितिभावः। ननु चैतद् विधिवलात् कर्त्तृगाभिक्रिया फले किं दाञादीनामात्मपदं बाधितमिति शङ्कां निराकरोति—तेन किं व्यादत्से विहग वदनमिति प्रयोगेण। तच्च पुरुषोत्तम मतोत्थापनेन दृढी करोति—अप्राप्तपक्ष इत्यादि। ञितां कर्त्तृगामि क्रियाफले प्रागात्मपदविधानात् तत्फलाभावे तु तन्न प्राप्नोतीति त्वप्राप्तावेवायमारम्भः, न त्वनेन पूर्वविधि वर्तित इत्येव सन्दर्भाशयः।

**अमृता०**—२०२. क्षान्ताविति। क्षमार्थे ण्यन्तादाङ् पूर्वाद् गमेरात्मपदं स्यात्। केचिदिति क्रमदीश्वरादयः। तथाहि तल्लक्षणम्—"आगमयतेः कालहरणे" इति। कालहरणं प्रतीक्षा। साधुमिति साधोरागमन कालं प्रतीक्षस्वेत्यर्थः। तथैव वार्त्तिककातन्त्र बोपदेवादे र्मतम्। क्षान्तौ किम्—गामागमयति गोपः, आनयतीत्यर्थः।

**अमृता०**—२०३. नौतेरिति। आङ् यदि पूर्वतः पूर्वस्मिन् स्यात्तदा नु धातोः प्रच्छ धातोश्चात्मपदं भवति। स्पष्टमुदाहरणम्।

---

**बाल०**—हसि। हस हसने। जल्प पठ व्यक्तायां वाचि। इत्यादिभ्यो गत्यर्थाद्धिंसार्थाच्च उत्तरे क्रियाव्यतीहारे आत्मनेपदं नेष्यते। शब्दार्थमात्रादिति। तद्विस्तरेति तत्पदेन कातन्त्रं परामृष्यते। एतदेव जुमरस्यापि मतं॥ २०१॥

**बाल०**—हर। हरतेर्निषेधो न स्यात्। वहेरपि कुत्रचित् निषेधो न स्यात्। संप्रहरन्त इति परस्परं प्रहरन्तीत्यर्थः। हिंसार्थत्वात् निषेधे प्राप्ते निषेधस्य निषेधविधानं। संविवहन्त इति कन्यां वरश्च परस्परं प्रापयन्तीत्यर्थः। गत्यर्थत्वात् निषधे प्राप्ते निषेधस्य निषेधविधानं॥ २०२॥

**बाल०**—पर। परस्परादियोगे निषेधनं निषेधो भवति आत्मनेपदस्येति शेषः। परस्परं लुनन्तीति परस्परं लुनन्तीत्यर्थं॥ २०३॥

**२०४. अन्वाङ्परिभ्यः क्रीडश्च ।**

अनुक्रीडते, एवं आ परि । अत्र सर्वत्रोपेन्द्रा एव गृह्यते नतु कृष्ण-प्रवचनीयादयो, गौणमुख्यन्यायेन । तेन नेह—कृष्णमनुक्रीडति ।

**२०५. समोऽकूजन इष्यते ।**

संक्रीडते । कूजनेतु—संकीडति शकटः ।

**२०६. शकेः सनन्तात् पृच्छायाम् ।**

हरिभक्तिं शिक्षते ।

**२०७. नाथे राशिषि तन्मतम् ।**

विष्णुभक्तेर्नाथते । याच्ञायान्तु तां नाथति । यदा तु द्विक्रियता—

---

**अमृता०**—२०४. अन्वाङिति । अनु आङ् परिभ्य उत्तरस्मात् क्रीडधातो रात्म पदं स्यात् । ननु श्रीदामा कृष्णमनुक्रीडतीत्यत्र कथं नात्मपदमिति चेत्तत्राह—अत्र सर्वत्रेत्यादि । अत्र प्रकरणे धातूनामात्मपदपरपदरूपधर्मविशेषो व्यवस्थीयते । सच धर्मो धातूनामन्तरङ्गात्मीयै रुपेन्दै रेव द्योत्यते । अनुरिह तु नोपेन्द्रः, किन्तु कृष्णप्रवचनीयः । कथंतदवध्रियते ? शब्दद्योतनात् । कृष्णमनु कृष्णेन सह क्रीडतीति स्फटमवगम्यते । अतो धात्वर्थद्यौतकत्वविरहादुपेन्द्रत्वाभावेन नात्मपदमितिभावः ।

**अमृता०**—२०५. समइति । कूजनमव्यक्तशब्दः, तदितरस्मिन्नथ सम उत्तर-स्मात् क्रीडते आत्मपदं स्यात् । संक्रीडति शकट इति—स्व चक्रद्वयेनाव्यक्तशब्दमुत्था-पयतीत्यर्थः ।

**अमृता०**—२०६. शकेरिति । पृच्छायामर्थे वर्त्तमानात् सनन्तशकधातोरात्मपदं स्यात् । सना सह शिक्षङिति यत् पूर्वं निपातितं तच्च एतदपेक्ष्यैवेति वेदितव्यम् । पृच्छायां किम्—शिक्षति वैराग्ये, तद्विषये शक्तोभवितुमिच्छतीत्यर्थः ।

**अमृता०**—२०७. नाथेरिति । आशीराशंसनं कामनेति यावत्, तस्यां गम्यमानायां नाथते रात्मपदं मतम् । विष्णुभक्तेर्नाथत इति—नाथृ याच्ञोपतातैश्वर्याशीःषु, नाथतेः

---

**बाल०**—नेः । उपेन्द्रात् नेरुत्तरस्माद्विश उत्तरे कर्त्तरि वाच्ये आत्मनेपदं भवति । निविशत इति विशप्रवेशने तुदादिः ॥ २०४ ॥

**बाल०**—विपराभ्यामुत्तरस्माज्जेरुत्तरे कर्त्तरि वाच्ये आत्मनेपदं स्यात् । विजयत इति जि जये भ्वादिः ॥ २०५ ॥

**बाल०**—क्रीञः । पर्यववेः परादुत्तरस्मात् क्रीञ उत्तरे कर्त्तर्यात्मनेपदं स्यात् । क्रियाफलस्य कर्त्तृगामित्वात् भावे आत्मनेपदार्थं वचनं कर्त्तृगामित्वेतु ञित्त्वादेवात्मनेपदं सिध्यतीति । परिक्रीणीत इति डु क्रीञ् द्रव्यविनिमये क्र्यादिः ॥ २०६ ॥

प्रेरणं वाञ्छा च, तदा वाञ्छाया आशीरूपतया आत्मपदं भवत्येव। "मार्गणैरथ तवप्रयोजनं नाथसे किमु पतिं न भूभृतः" इत्यादि महाकवि प्रयोगात्।

## २०८. हर्षे च जीविकायाञ्च कुलायकरणेऽपि च, अपस्किरः।

कर्म वा कामनायामिति कर्माभावपक्षे षष्ठी। विष्णुभक्ति सम्बन्धं कामयत इत्यर्थः। व्यावृत्तिं दर्शयति—याच्ञायान्त्विति। तां विष्णुभक्तिं प्रार्थयत इत्यर्थः।

प्राग् द्विकर्मकविचारे याचे द्विवृत्तित्वमुक्तम्। तदत्रापि नाथते र्याच्ञार्थे द्विवृत्तिता विवक्ष्यते चेत्तर्हि भवत्येवात्मपदमित्याह यदात्विति। तत्रहेतुः—वाञ्छाया आशीरूपतयेति। वाञ्छायाः कामनार्थकत्वात् तमर्थमपेक्ष्य आत्मपदस्यप्रवृत्तिः स्यादेवेत्यर्थः। एतच्च द्रढयति महाकवे र्भारवेः प्रयोगेण—मार्गणै रित्यादि। किरात वेशिनो महादेवस्य अर्जुनस्य च वाणाभ्यां युगपदेक पशौ विद्धेः, मिथः कलहे च सम्वृत्ते, अर्जुनंप्रति पशुपतेः (किरातस्य) उक्तिरियम् किरातार्जुनीये १३। ४९। अस्यार्थः—अथ मार्गणैः शरै श्चेत्तव प्रयोजनं तदा भूभृत एतत् पर्वतस्य पतिमस्मत् स्वामिनं किमु न नाथसे न प्रार्थयसे मार्गानिति शेषः। त्वयाप्रार्थिते सत्यसौ प्रभु र्बहून् वानान् ते दास्यति, किमिति ममैव-शरेण पशु र्गतासु रभूदिति मिथ्या जल्पसीति तात्पर्यम्। अत्रमार्गणान् वाञ्छन् स्वस्मै तद् दाने भूभृतः पतिं प्ररयेति कवे राशये नाथते रात्मपदं प्रयुक्तमिति दिक्।

**अमृता०**—२०८. हर्ष इति। हर्षे जीविकायां कुलायकरणे चार्थे अपस्किर आत्मपदं स्यात्। जीविका प्राणधारणवृत्तिः, कुलायकरणं नीड निर्माणम्, वासस्थानाविष्करण-मित्यर्थः। चतुष्पादिति—चतुष्पात् च शकुनिः। पक्षी च, चतुष्पाच्छकुनी, तौ कर्त्तारौ

---

**बाल०**—आङो। आङ उत्तरस्माद्धाञ् उत्तरे कर्त्तर्यात्मनेपदं स्यात्। चेद्यदि वक्त्रादिकस्य प्रसारणं स्यात्तदा आत्मनेपदं न स्यात्। वक्त्रं मुखं। आदत्ते गृहीत-वानित्यर्थः। मुखं व्यादाच्च माययेति निषेधोदाहरणं। व्याददाति प्रसारितवानित्यर्थः। आदिग्रहणादिति। आस्यं मुखं। स्यादिति निषेध इति शेषः। विपादिकां व्याददातीति विस्तारयतीत्यर्थः। पादस्फोटो विपादिकेत्यमरः। नदीति। नदी कर्त्री कुलं तटं व्याददाति विदारयतीत्यर्थः। स्वीयाङ्गेति। स्वीयश्च तदङ्गं चेति स्वीयाङ्गं स्वीयाङ्गं कर्म यस्य तस्माद्धाञ एव निषेधः आत्मनेपदस्येति शेषः। अन्यच्चेति अन्यच्च अपरञ्च। किञ्चिद्वदनं मुखं व्यादेहीति विस्तारय इति दिशन्निव आज्ञापयन्निव स हरिरमरवैरिणो देवशत्रोर्वकस्य वकासुरस्य वक्त्रं मुखं व्याददे विदारितवाम्। स्वीयाङ्गकर्मकत्वात् वदनं व्यादेहि इत्यत्र नात्मनेपदं। स्वीयाङ्गकर्मकत्वाभावात् वकस्य वक्त्रं व्याददे इत्यत्र न आत्मनेपदनिषेधः। अकर्त्रभिप्रायार्थ इति क्रियाफलस्य कर्त्तृगामित्वाभावे आत्मपदार्थः इत्यर्थः। अतः क्रियाफलस्य कर्त्तृगामित्वाभाव एव निषेध इति। किमिति। हे विहग वदनं किं व्याददत्से विस्तारयसि। अत्र क्रियाफलस्य कर्त्तृगामित्वान्न निषेष इति ॥ २०७ ॥

चतुष्पाच्छकुनिकर्त्तृकत्व एव ज्ञेयम् । निपातनात् सुट् । अपस्किरते । हृष्यन्, जीविकां कुर्वन्, नीडं कुर्वन् वा किञ्चित् प्रक्षिपतीत्यर्थः ।

**२०९. अनुहरते गतिताच्छील्य इष्यते ।**

पवनमनुहरते हनूमान् । ताच्छील्यमात्र इति तु भर्त्तृहरिपुरुषोत्तमौ ।

**२१०. शपे स्तु शपथे तत् स्यात् ।**

गुरवे शपते ।

---

यत्र स चतुष्पाच्छकुनि कर्त्तृक स्तस्यभाव स्तत्त्वम् । निपातनात् सुडिति—लक्षणाकरणात् सुट् निपात्यत इत्यर्थः । "अपाच्चतुष्पाच्छकुनिष्वालेखन" इत्यनेन श्रीपाणिनिः सुटं विदधाति, तत्र च किरतौ इत्यनुवर्त्तते । तत्रैव "किरते र्हर्ष जीविकाकुलाय करणोष्विति वच्यमिति" वार्त्तिकः । अप स्किरते वृषभः, हृष्टः पादेन मृत्तिकादिकं विक्षिपतीत्यर्थः । अपस्किरते मयूरः, निवासार्थीभक्षणार्थी वा किञ्चिदालेख्य विक्षिपतीत्यर्थः । चतुष्पाच्छकुनिकर्त्तृकत्व इत्येव, तेन नेह—वैष्णवः कुसुमान्यपकिरति कृष्णमभि, विकिरतीत्यर्थः ।

**अमृता०**—२०९. अनुहरतेरिति । गते स्ताच्छील्यं गति ताच्छील्यम्, गतिस्वभाव इत्यर्थः । तस्मिन्नर्थे गम्यमाने अनुपूर्वात् हरते रात्मपदमिष्यते । पवनमनुहरत इति—पवनस्य गति मनुकरोति, पवनवद् वेगेन गच्छतीत्यर्थः । ताच्छील्यमात्र इति—तया हि पुरुषोत्तमः—सादृश्यशीलने हृञस्तत् स्यात् । जलधिमनुहरतेसरः ॥ इति ॥ गत्यनुकरण इत्येव कालापाः । गतिताच्छील्य इति सौपद्माश्च ।

**अमृता०**—२१०. शपेरिति । शपथेऽर्थे वर्त्तमानात्शपधातोरात्मपदं भवति । शपथो मिथ्या निरसनम् । वाचा शरीर स्पर्शनं शपथ इति पाणिनिः । गुरुवे शपत इति—गुरुनामग्राहं शपथं कुर्वन् सत्यमिति ज्ञापयतीत्यर्थः । श्लाघ ह्नुङ् स्था शपामिति सम्प्रदानम् । कथं—सख्यः शपामि यदि किञ्चिदपि स्मरामीति भारविः ? वाचा शरीरस्पर्शनेन सत्यत्वज्ञापनाभावादिति केचित् । वस्तुतस्तु स्वाभिप्रायं प्रकाशयामीत्येवार्थो नतु सत्यत्वप्रतिपादनाय दिव्यकरणमिति ।

"प्रतिवाचमादत्त केशवः शपमानाय न चेदिभूभृते" इति माघे आक्रोशेऽपि यदात्मपदे शानो दृश्यते तत्तु—"परपदिनश्च शानस्ताच्छील्यवयः शक्तिषु" इति वक्ष्यमाण विशेष

---

**बाल०**—क्षान्तौ । ज्ञान्तावर्थे ण्यन्तादागमेरुत्तरे कर्त्तर्यात्मनेपदं स्यात् । कालेति । कालहरणे गम्यमाने ण्यन्तागमेरुत्तरे आत्मनेपदं भवतीति केचित् । केचिदिति क्रमदीश्वरादय इत्यर्थः । आगमयतेः कालहरणे इति क्रमदीश्वरलक्षणं । कालहरणं कालप्रतीक्षणं । आगमनस्व साधुमिति शोधनकालप्रतीक्षणं साधूं कारयेत्यर्थः ॥ २०८ ॥

**बाल०**—नौतेः । आङ् यदि पूर्वतः पूर्वस्मिन् वर्त्तते तदा नु स्तुतौ प्रछ ज्ञीप्सायां इत्येताभ्यामुत्तरे कर्त्तर्यात्मनेपदं स्यात् ॥ २०९ ॥

## २११. स्थो निर्णीतौ प्रकाशने, प्रतिज्ञायाम् ।

**स्थ इति प्रभुश्च । वैष्णवार्ये विचारस्तिष्ठते । कृष्णाय तिष्ठते गोपी । कृष्णं परमातिष्ठते श्रेष्ठत्वेन प्रतिज्ञां करोतीत्यर्थः ।**

## २१२. प्रावसंवेश्च ।

**प्रतिष्ठते । एवमव संवि ।**

---

विधानेन हि विहितमिति बोध्यम् । अत्र सूत्रे शपथार्थे आत्मपदमेव स्यादिति नियम्यते नत्वनेनोभयषदिनः शप धातोराक्रोशार्थे आत्मपदमपवार्यते ।

**अमृता०**—२११. स्थ इति । निर्णीति निश्चयः, विवादपदमींमांसेत्यर्थः । प्रकाशनं स्वाभिप्राय प्रकटनम् । प्रतिज्ञाअभ्युपगमः अङ्गीकार इत्यर्थः । एतेष्वर्थेषु तिष्ठते रात्मपदं स्यात् कर्त्तरि । धातूनामनेकार्थत्वात् निर्णयाद्यर्था तिष्ठतिना ह्यभिधीयन्ते । विचार स्तिष्ठत इति निर्णयत्वेनाश्रयत इत्यर्थः । संशय्य कर्णादिषु तिष्टते यः ( दुर्योधनः ) इति किराते । कृष्णायतिष्ठते गोपीति—तंप्रति स्वाभिरुचि स्वाभिलाषं वा प्रकटयतीत्यर्थः । श्लाधह्नुङ् स्थाशपामिति सम्प्रदानत्वम् । कृष्णं परमातिष्ठत इति—परत्वेन श्रेष्ठत्वेनातिष्ठते स्वीकरोतींत्यर्थः । एवं वेदं नित्यमातिष्ठते, नित्यत्वेन प्रतिजानीत इति पाणिनिः । अत्रार्थे तु आङ् पूर्व नियमो मन्यते ।

**अमृता०**—२१२. प्रावसमिति । अनिर्णयाद्यर्थमेतत् । प्रतिष्ठते प्रस्थानं करोतीत्यर्थः । अवतिष्ठते निस्तब्धः सन् तिष्ठतीत्यर्थः । एवं सन्तिष्ठते । वितिष्ठत इति चञ्चल उद्विग्नस्तिष्ठतीत्यर्थः ।

---

**बाल०**—अन्वाङ् । अन्वाङ्परिभ्य उत्तरस्मात् क्रीडउत्तरे कर्त्तर्यात्मनेपदं स्यात् । अत्रेति अत्र प्रकरणे सर्वत्र सत्वादिप्रकरणे कृष्णप्रवचनीयादय इत्यादिपदेन, मधुनि विशन्ति भ्रमरा इत्यदौ नेर्विश इति न प्रवर्त्तते । बहुवि जयति वनमित्यादौ पराजयति सेनेत्यादौ च विपराभ्यां जेरिति न प्रवर्त्तते । मधुनीति सप्तम्यन्तं । बहुवीति वन विशेषणं । विः पक्षी । परेति सेनाविशेषणं । कृष्णप्रवचनीयाद्यग्रहणे हेतुमाह गौणेति । कृष्णमनुक्रीडतीति कृष्णेन सह क्रीडतीत्यर्थः ॥ २१० ॥

**बाल०**—समो । अकूजनेऽर्थे सम उत्तरस्मात् । क्रीड उत्तरे आत्मनेपदमिष्यते । संक्रीडत इति सकर्मकं क्रीडतीत्यर्थः । कूजनेत्विति कूजनमव्यक्तध्वनिः । संक्रीडतीति अव्यक्तध्वनिं करोतीत्यर्थः ॥ २११ ॥

**बाल०**—शकेः । पृच्छायामर्थे वर्त्तमानात् सनन्तात् शकेरुत्तरे कर्त्तर्यात्मनेपदं भवति । शिक्षेतेति । शकः शिक्षङित्यनेन सना सह शकः शिक्षङादेशः । पृच्छेदित्यर्थः । ननु ञित्त्वादात्मनेपदं सिध्यत्येव तथापि किमर्थं लक्षणं कृतमिति न निश्चितं, पृच्छायामेव तवतीति नियमो न वाख्येयः, तथा सति ङित्त्वात् शिक्षत इति आख्यातप्रकरणे यदुक्तं तद्विरुद्धं स्यात् । किञ्च, पृच्छाया अन्यत्र आत्मनेपदस्यानभीष्टत्वञ्चेत्तर्हि शिक्षङो ङिदनु-

**२१३. अथोदोऽनूर्द्धचेष्टने ।**

हरिसेवायामुत्तिष्ठते, तत्रोत्सहत इत्यर्थः । अनूर्द्ध इति किम् ? आसानादुत्तिष्ठति कृष्णः । अचेष्टामात्रेऽपि न—हरिभक्तेः सुखमुत्तिष्ठति ।

**२१४. देवार्च्चा-सङ्गतिकृति-मैत्रीषु पथिकर्त्तरि ।**

मन्त्रस्य वरणत्वे चाकर्मत्वे चोपपूर्वकात् ।

भक्तो हरिमुपतिष्ठते । गङ्गा यमुनां, अर्जुनः कृष्णं, पन्थाः मथुरां,

---

**अमृता०**—२१३, अथेति । चेष्टा परिस्पन्दन लक्षणेन्द्रियव्यापारः । ऊर्द्धतरचेष्टायां सत्यां उत् पूर्वात् तिष्ठतेरात्मपदं स्यात् । तत्रोत्सहतइति उद्यमं करोतीत्यर्थः । नात्र ऊर्द्धचेष्टा प्रतीयते, अत आत्मपदम् । आसनादुत्तिष्ठतीत्यत्र चेष्टया ऊर्द्धवृत्तित्वान्नात्मपदम् । एवमुत्तिष्ठति विधुरित्यादौ च न । अचेष्टा मात्रेऽपीति—चेष्टाया विरहत्वेऽपि सूत्रकार्यं नप्रवर्त्तते; यतो नञा ऊर्द्ध चेष्टैव निषिध्यते नपुनश्चेष्टामात्रमिति । सुखमुत्तिष्ठतीति सुखमुत्पद्यत इत्यर्थः । सुखस्याप्राणित्वेन चेष्टाया अभावत्वान्नात्मपदमिति भावः ।

**अमृता०**—२१४. देवार्च्चेति । देवार्च्चा देवपूजनम्, सङ्गति कृतिरुपश्लेषो मेलनमित्यर्थः, मैत्री मित्रता, एषु अर्थेषु तथा पथिकर्त्तरि सति, मन्त्रस्य करणत्वे सति, अकर्मकत्वे च सति उपपूर्वात् तिष्ठते रात्मपदं स्यात् कर्त्तरि । क्रमेणोदाहरति—भक्त इत्यादिभिः । गङ्गा यमुनामुपतिष्ठते मिलतीत्यर्थः । अर्जुनः कृष्णमुपतिष्ठते इति तेन सह मित्रतां करोतीत्यर्थः । पन्था मथुरामुपतिष्ठत इति—अत्र पन्था एव कर्त्ता, मथुरां प्रयातीत्यर्थः । मन्त्रेण कृष्णमुपतिष्ठत इति तं पूजयतीत्यर्थः । कस्तर्हि देवार्च्चातो विशेषोऽस्य ? अन्यकरणत्वे भा भूत्—योवनेन नारायणमुपतिष्टति श्रीः, सन्निधिंगच्छतीत्यर्थः ।

---

बन्धत्वं च निरर्थकं स्यात् । हरिभक्तिं शिक्षेतेत्यादौ शकेरित्यादेर्विधिसूत्रत्वेन आत्मनेपदस्य सिद्धत्वात् । अथो वा आख्यातप्रकरणे आत्मपदप्रकरणस्याभावादेतत्सूत्रस्याप्यभावोऽतएतदपेक्ष्यैव तत्रात्मपदसुबोधाय ङित्वमिति साधु ॥ २१२ ॥

**बाल०**—नाथेः । आशीः कामना तस्यामर्थे वर्त्तमानात् नाथेरुत्तरे आत्मनेपदं मतं । आत्मपदित्वादात्मनेपदे सिद्धे नियमार्थं वचनं आशिष्येवेति । विष्णुभक्तेर्नाथत इति नाथ् याच्ञादिषु नाथतेः कर्म वा कामनायामिति कर्माभावपक्षे सम्बन्धषष्ठी विष्णुभक्तिमिच्छतीत्यर्थः । तां विष्णुभक्तिं नाथतीति याचत इत्यर्थः मार्गणैरिति । उ भो भूभूतः राज्ञः प्रेरयन्ति यदि तं पतिं न कामयसे तदा तव मार्गणैरन्वेषणैः किं न किमपीत्यर्थः । अत्र गौणे कर्मणि षष्ठी विष्णुदुहादेर्गौणे कर्मणि युक्तमित्युक्तत्वात् ॥ २१३ ॥

**बाल०**—हर्षे । हर्षे जीविकायां कुलायकरणे च विषये अपस्किर उत्तरे कर्त्तर्यात्मनेपदं स्यात् । जीविका वृत्तिः । पेषी कोषो द्विहीनेऽण्डं कुलायो नीडमस्त्रियामित्यमरः ।

वैष्णवो मन्त्रेण कृष्णं, हरिरनुव्रते उपतिष्ठते। लिप्सायामित्येके। भिक्षुरन्नमुपतिष्ठते उपतिष्ठति वा। स्थ इति निवृत्तम्।

## २१५. समः पृच्छति गम्यृच्छि-स्वृ-श्रुभ्यो वेत्तितस्तथा।

दृशेऽर्त्तेश्चाकर्मकत्वे।

---

हरिरनुव्रत इति—अनुव्रते अनुगते (शरणागते) जने उपतिष्ठते सन्निधानं करोति कृपयतीति भावः। वालिप्सायामिति वार्त्तिक-कातन्त्रादय आहुः। अन्नमुपतिष्ठत इति लब्धुमिच्छतीत्यर्थः।

**अमृता०**—२१५. समइति। अकर्मकत्वे सति सम्पूर्वेभ्यः प्रच्छ गमलृ ऋच्छ स्वृ श्रु विद दृश ऋ इत्येतेभ्य आत्मपदं स्यात् कर्त्तरि वाच्ये। स्वृ शब्दोपतापयोः, श्रुश्रवने, विद ज्ञाने। अर्त्तेरिति ऋ गति प्रापणयो र्भ्वादिः, ऋगतौ ह्वादि; द्वयोरपि ग्रहणम्। अर्त्ते ऋच्छे श्च कृष्णधातुके समृच्छते इति तुल्यरूपत्वाद् रामधापुके तयो रुदाहरणमाहरते—समृच्छिष्यत इति। इत्यादिपदेन—ऋ गतौ ह्वादेः समियृते, स्वृ—संस्वरते, श्रु-संश्रृणुते, विद्—संवित्ते, दृश—संपश्यते इति। अर्त्तेस्तु समारतेति—सर्त्तिशास्त्यर्त्तिभ्यो ङो भूतेशे कर्त्तरीति कर्त्तरि ग्रहणादात्मपदे ङः, ऋद्वयान्तदृश्योरिति गोविन्दः, अत् प्रसङ्गे वृष्णीन्द्रः। संविद्रत इति अन्ते प्रत्ययस्य रूपम्। अरामान्यवर्णादित्यादिना अन्ते प्रत्ययस्य नरामहरः, रुट् च वा।

ननु फलव्यापारयोरेकाधारवृत्तित्वे धातोरकर्मकत्वमुक्तम्, इह श्रु गमि वेत्ति प्रभृतीनां तदसम्भवात् कथमेषामकर्मकत्वे विधानमिति चेत्? श्रूयताम्—अकर्मकाः क्रिया श्चतुर्द्धा भवन्ति। यथोक्तम्—धातोरर्थान्तरे वृत्ते, धात्वर्थेनोपसंग्रहात्। प्रसिद्धे रविवक्षातः कर्मणोऽकर्मिका क्रिया॥ इति॥ क्रमेणोदाह्रियन्ते,—नदी वहति स्यन्दत इत्यर्थः, ओदनः पचति, सिध्यति प्रस्तुती धवतोत्यर्थः, जीवति, प्राणान् धारयतीत्यर्थः। इहोमयत्र धात्वर्थेनैव कर्म सग्रह इति प्रयोगो नावश्यकः। मेघा वर्षन्ति, देवा पिबन्तीत्यादौ जलं सुधामित्यादि कर्मणामवगमः प्रसिद्धेरेव। सकर्मकानामपि कर्माविवक्षा भावप्रत्यये भवत्येवेत्युक्तं प्राक्। —गम्यते मयेति, तत्र ग्राममित्यस्य योगस्तु पश्चाद् विवक्षया। यद्वा—हितान्न यः संश्रृणुते सकि प्रभुरिति भारविः। हितात् हितैषिणो जनात्, किंप्रभुः कुत्सितः

---

चतुष्पादिति चतुष्पाच्च शकुनिश्च चतुष्पाच्छकुनी तौ कर्त्तारौ यत्र स चतुष्पाच्छकुनिकर्त्तृकः तस्य भावस्तत्त्वं तस्मिन्। चतुष्पाद्वृषभादिः शकुनिः पक्षी। निपातात् सुडिति सुट् निपात्यत इत्यर्थः। अस्माभिर्यदुक्तं कालापाश्च प्रकारान्तरेण तदेवाह। यद्यथा। अपाच्चतुष्पाच्छकुनिषु हृष्टभक्ष्यनिवासार्थेष्वालेखने इति किर इत्यनुवर्त्तते। अपस्किरत इति। कृ विक्षेपे तुदादिर्वृषभः शकुनिश्चेति शेषः। चतुष्पात्कर्त्तृकत्वे अपस्किरते वृषभ इति हृष्यन् किञ्चित् प्रक्षिपतीत्यर्थः। चतुष्पाच्छकुनिकर्त्तृकत्वाभावादपस्किरति मनुष्य इत्यादौ न भवति। हृष्यन् किञ्चित् प्रक्षिपतीत्यर्थः॥ २१४॥

**अकर्मकत्व इति प्रभुश्च। संपृच्छते सङ्गच्छते समृच्छिष्यते इत्यादि। अर्त्तेस्तु समारत। अरामान्येत्यादौ वेत्ते रुट् तु वा, संविद्रते संविदते।**

## २१६. आङ् पूर्वात्तु यमे हनेः।

**आयच्छते आहते। सकर्मकत्वे तु—आयच्छति आहन्ति कंसम्।**

---

प्रभुरित्यर्थः। तेषु च प्रथमद्वये फलव्यापारयोरेकाधारवृत्तित्वमिष्टम्; तृतीयचतुर्थयोस्तु प्रसिद्ध्या अनभिप्रायेण वा कर्मणोऽविवक्षणात् वस्तुत स्तस्य सत्ता न लुप्यते। तस्मादकर्मत्व व्यपदेश इह गौण इति भिन्नाधारवृत्तित्वेऽपि नदोष इति दिक्।

अथमूलमनुस्रियते। अत्र संपृच्छत् इत्यादीनामर्थान्तरं गम्यते। यथा—संपृच्छते नवागताय, सम्वर्द्धनां कुरुत इत्यर्थः। सिद्धान्तोऽयं सङ्गच्छसे, सङ्गतो युक्तो भवतीत्यर्थः। गुरूपदेशात् संपश्यते, ज्ञानदृष्टिं लभत इत्यर्थः। "संश्रृणुष्व कपे! मत्कैः सङ्गच्छस्व वनैः शुभैः। समारन्तममाभीष्टाः संकल्पा स्त्वय्युपागते॥ इति भट्टिः। तत्र सश्रृणुष्वेति कर्माविवक्षा, सङ्गच्छस्वेति तेषुविहरेत्यर्थः। समारन्तेति सफला जाता इत्यर्थः। अथ कर्मपदस्यगम्यमानत्वे च दृश्यते। यथा तत्रैव—केनसंविद्रते वायो मैनाकाद्रि र्यथा सखेति, तत् सर्वे विदन्तीत्यर्थः। एवमन्येऽपि ज्ञातव्याः। अकर्मकत्व इति किम्—धर्मं संपृच्छति, मित्रंसङ्गच्छतीत्यादि।

**अमृता०**—२१६. आङिति। आङ् पूर्वाद् यमे द्नेश्च अकर्मकत्वे आत्मपदं स्यात्। आयच्छत इति यमु उपरमे, इषु गमियमामिति छादेशः, दीर्घो भवतीत्यर्थः। आहते पीडितो भवतीत्यर्थः। सकर्मकत्वे आयच्छति कंसमिति—शिखाग्राहमाकर्षणेन दीर्घी करोतीत्यर्थः। आहन्ति तंपीडयतीत्यर्थः।

ननु पूर्वोक्तानां पृच्छत्यादीनां कर्त्तृस्थक्रियत्वादकर्मकता भवतु नाम, यम हनादीनान्तु कर्मस्थक्रियत्वात् कथमकर्मकत्वं सम्भवेदिति चेत्? सत्यं यदपि पचादेरिव हनादेश्च क्रिया कर्मस्था हि प्रसिद्धा तथाप्यत्र क्रियाया व्यापारांशमात्रस्यैव विवक्षा क्रियते कर्त्रपेक्षया, नतु फलांशस्यापि। ततः फलाविवक्षातस्तदाश्रित कर्मणश्च विवक्षाभावादेषामकर्मकत्वं नतु तत्त्वतोऽकर्मकत्वमिति।

---

**बाल०**—अनु। गतेस्ताच्छील्यं गतिताच्छील्यं तस्मिन् गम्यमाने अनु पूर्वात् हृञ हरणे इत्यस्मादुत्तरे कर्त्तर्यात्मनेपदं इष्यते। ताच्छील्यं तत्स्वभावता। पवनमनुहरते हनूमानिति। पवनस्येव गमनमस्येत्यर्थः। पवनो वायुः सतु सनूमत्पिता॥ २१५॥

**बाल०**—शपेः। शपथेऽर्थे वर्त्तमानात् शप आक्रोश इत्यस्मादुत्तरे कर्त्तरि तदात्मनेपदं स्यात्। गुरवे शपत इति गुरुं प्रति शपथं कुर्वन् सत्यमिदमिति ज्ञापयतीत्यर्थः। श्लाघ ह्नुङ्-स्था-शपां ज्ञापयितुमिष्ट इत्यनेन सम्प्रदानं। शपथ इति किं अवैष्णवं शपति आक्रोशतीत्यर्थः॥ २१६॥

**२१७. उद्विभ्यां तपतेः ।**

उत्तपते वितपते । सकर्मकत्वे तु उत्तपति कंसम् ।

अकर्मकत्वं निवृत्तम् ।

**२१८. स्वाङ्गकर्मकाच्च यमादितः**

प्राण्यङ्गं मूर्त्तिमत् स्वाङ्गं विना द्रवविकारजे ।
तद्वत् प्राणिप्रतिकृतेरङ्गं स्वाङ्गमितीष्यते ॥

आयच्छते पाणिम् । विच्छिद्य पतितत्वेऽपि—आयच्छते छिन्नपाणिं वा । द्रवत्वे विकारत्वे च न—आयच्छति बुद्धिम् । प्राणिप्रति-

---

अमृता०—२१७. उदिति । सुगमम् । उत्तपते वितपते सूर्यः, दीप्यत इत्यर्थः । उत्तपति कंसमिति—तं सन्तापं तनोतीत्यर्थः ।

यमादीनामकर्मकत्वे व्यवस्थामुक्त्वा तद्विशेषमाह—

अमृता०—२१८. स्वाङ्गेति । स्वं अङ्गं कर्म यस्य स स्वाङ्गकर्मकः; तादृशाच्च यम हन तप इत्येतेभ्य आत्मपदं स्यात् । स्वाङ्गशब्दस्य परिभाषा माचष्टे—प्राण्यमित्यादि । प्राणिनामङ्गं स्वाङ्गमिष्यते इति प्रसिद्धमेतत् । बुद्ध्यादेरपि प्राण्यङ्गत्वेन स्वाङ्गत्वे प्राप्त तन्निरस्यति—मूर्त्तिमदिति । मृदुत्वकठिनत्वादि स्पर्शवती दृष्टिविषयाच मूर्त्ति स्तद्वत् तद्युक्तम् । पुन द्रवविकारयोश्च प्राणेरङ्गत्वात् तद् व्यावर्त्तयति—विनेति । किञ्च तद्वत् प्राणेः प्रतिकृतेः प्रतिमायाश्चाङ्गं स्वाङ्गमिष्यते ।

आयच्छते पाणिमिति—प्रसारयतीत्यर्थः । विच्छिद्य पतितत्वेऽपीति—इदानीं मूर्त्तित्वाभावेऽपि पूर्वतनस्थितिमपेक्ष्य स्वाङ्गत्वमिष्यत इति भावः । विकारो धातुवैषम्यं, तस्माज्जातत्वात् शोथस्य न स्वाङ्गता । हनितपी उदाहार्याविति—आहते स्वीयं शिरः कोपात्, उत्तपते स्वहस्तमित्यादि ज्ञेयम् ।

कथम—"गाण्डीवी कनकशिलानिभं भुजाभ्याजघ्नेविषमविलोचनस्य वक्ष" इति किराते स्वाङ्गकर्मकत्वविरहेऽप्यात्मपदम् ? एषत्वपप्रयोग इति जुमरभागवृत्तिकुलचन्द्राः । अतएव च्युतसंस्कार दोष एष इति साहित्यदर्पणः । कर्मणि प्रत्यय इत्येके । भेत्तुमिति तुम्वन्ताध्याहार इति चापरे । वस्तुतः अकर्मकविवक्षयैव प्रथममात्मपदं विधाय पश्चात्

---

बाल०—स्थो । निर्णीतौ गम्यमानायां स्थ उत्तरे प्रकाशने प्रतिज्ञायाश्च अर्थे वर्त्तमानात् स्थ उत्तरे च कर्त्तर्यात्मनेपदं स्यात् । निर्णीतिर्निर्णयः । प्रकाशनं स्वाभिरुचि-प्रकटीकरणं । प्रतिज्ञा अभ्युपगमः अङ्गीकार इति यावत् । वैष्णवाचार्ये विचारस्तिष्ठत इति । अत्र धातोरवस्थानमेवार्थः निर्णीतिस्तु गम्येति । कृष्णाय तिष्ठते गोपीति कृष्णं प्रति स्वाभिरुचिं प्रकाशयतीत्यर्थः श्लाघेत्यादिना सम्प्रदानं । कृष्णं परमातिष्ठत इति अङ्गीकरोतीत्यर्थः । परं सर्वपरं आङैवायमर्थो द्योत्यते ॥ २१७ ॥

मायामपितु स्यादेव—आयच्छते प्रतिमा पाणिम्। एवं हनितपो उदाहार्यौ।

**२१९. प्रादेरूहास्यतिभ्यां वा।**

समूहति समूहते। निरस्यति निरस्यते।

**२२०. ह्वः संनिव्युपतः सदा।**

संह्वयते इत्यादि।

**२२१. आह्वः स्पर्द्धे।**

कंसः श्रीकृष्ण माह्वयते।

---

कर्म विवक्षितम्, पच्यते मासानिति वदित्येवं सङ्गमयितव्यम्। एवम्—आहध्वं मा रघूत्तममिति च भट्टिप्रयोगः समाधातव्यः।

**अमृता०**—२१९. प्रादे रिति। प्राद्युपेन्द्रादूहतेः अस्येश्चात्मपदं वा स्यात्। प्रादेरिति अर्थानुरोधेन यथायोग्यमेव ग्राह्यम्। समूहते वितर्कयतीत्यर्थः। निरस्यति खण्डयति।

**अमृता०**—२२०. ह्वइति। सुगमम्। सदाग्रहणं पूर्वसूत्रस्थ वा निवर्त्त्य नित्यतार्थम्। ञित्त्वादात्मपदित्वे सिद्धे अकर्त्तृगामि क्रियाफलत्वे हि वचनारम्भो ज्ञेयः।

**अमृता०**—२२१. आह्व इति। स्पर्द्धायां पराभवेच्छयाह्वाने आङ्पूर्वात् ह्वयते रात्मपदं भवति। अकर्त्रभिप्राय इत्येव। स्पर्द्धायामिति किम्—गामाह्वयति गोपालः।

---

**बाल०**—प्राव। प्र अव सं वि इत्येतेभ्य उत्तरस्मात् स्थ उत्तरे कर्त्तर्यात्मनेपदं स्यात्। प्रतिष्ठत इति गच्छतीत्यर्थः॥ २१८॥

**बाल०**—अथो। अनूर्द्धचेष्टनेऽर्थे वर्त्तमानादुद उत्तरस्मात् स्थ उत्तरे कर्त्तर्यात्मनेपदं स्यात्। अनुदक्ष्वंश्च तच्चेष्टनश्चेति विग्रहः। ऊद्ध्र्वव्यतिरिक्ते चेष्टने इत्यर्थः। हरिसेवायामुत्तिष्ठते इति अचेष्टनमनूद्ध्र्वमेव। आसनादुत्तिष्ठति कृत्र इति अत्र चेष्टनमूद्ध्र्वं। अचेष्टामात्रेऽपि नेति अनूद्ध्र्वचेष्टन इत्युक्तत्वादिति शेषः। हरिभक्तेः सुखमुत्तिष्ठतीति उत्पद्यत इत्यर्थः। उत्पत्तेरचेष्टारूपत्वादत्र धातोरचेष्टनार्थत्वं॥ २१९॥

**बाल०**—देवा। देवार्चायां सङ्गतिकृतौ मैत्र्याञ्च अर्थे उपपूर्वकात् स्थ उत्तरे कर्त्तर्यात्मने पदं स्यात्। पथि कर्त्तरि सति मन्त्रस्य करणत्वे च सति अकर्मकत्वे च सति उपपूर्वकात् स्थ उत्तरे कर्त्तर्यात्मनेपदं स्यात्। देवार्चा देवपूजा। सङ्गतिकृतिः सङ्गमकरणं। मैत्री मित्रता। हरिमुपतिष्ठत इति पूजयतीत्यर्थः। गङ्गा यमुनामुपतिष्ठत इति उपश्लिष्यतीत्यर्थः। अर्जुनः कृष्णमुपतिष्ठत इति कृष्णेन सह मैत्रीं करोतीत्यर्थः। पन्था मथुरामुपतिष्ठत इति गच्छतीत्यर्थः। वैष्णवो मन्त्रेण कृष्णमुपतिष्ठते इति वशीकरोतीत्यर्थः। अन्यस्य करणत्वेतु न कृष्णमुपतिष्ठति यौवनेन गोपी वशीकरोतीत्यर्थः। हरिरनुव्रते उपतिष्ठतेऽत्र अनुगतजने कृपयतीत्यर्थः। लिप्सा। लब्धुमिच्छायां गम्यमानायां सत्यायुपपूर्वात् स्थः कर्त्तर्यात्मनेपदं स्यादित्येके॥ २२०॥

 

**२२२. गन्धने तु भर्त्सने यत्नसेवयोः ।**
**प्रकथे चोपयोगे च साहसे तु कृञो भवेत् ।**

कंसः कृष्णार्थमुत्कुरुते उदाकुरुते वा, हिंसापूर्वकं सूचयतीत्यर्थः । कृष्णपक्षमुत्कुरुते, भर्त्सयतीत्यर्थः । वैष्णवो गङ्गाजलस्योपस्कुरुते, सौगन्ध्यादिनाभिरुचितं करोतीत्यर्थः । भक्तः कृष्णमुपकुरुते प्रकुरुते वा, सेवते इत्यर्थः । कृष्णो गीतां प्रकुरुते, प्रकर्षेण कथयतीत्यर्थः । असंख्यं धनं प्रकुरुते, धर्माद्यर्थं विनियुङ्क्ते इत्यर्थः । गोप्य कृष्णं प्रकुर्वते, तत्र साहसात् प्रवर्त्तन्ते इत्यर्थः ।

**२२३. अधेः प्रसहने शब्दकर्मणोऽकर्मकाच्च वेः ।**

अधिकुरुते कंसं कृष्णः, अभिभवतीत्यर्थः । विकुरुते कण्ठस्वरम् । विकुरुते पयः ।

---

**अमृता०**—२२२. गन्धन इति । गन्धनादिष्वर्थेषु करोतेरात्मपदं स्यात् । कर्त्तरीत्यनुवर्त्तते । तु पादपूरणे । अकर्त्रभिप्राय इत्येव । गन्धनमपकारप्रयुक्तहिंसासूचनम् । यत्नः प्रतियत्नः, सतोगुणान्तराधानम् । गङ्गाजलस्योपस्कुरुत इति—कृञः कर्म वा प्रतियत्ने इति कर्माभावपक्षे षष्ठी । सेवनमनुवृत्तिः । उपयोगो धर्मादि प्रयोजने विनियोगः । अत्र उपेन्द्रनियमाभावेऽपि उत् आङ् उप प्र इत्येतेभ्य एव गन्धनादिषु करोतेरात्मपदमिष्यते नान्येभ्य इत्युपलभ्यते दृष्टान्तैः, व्याकरणान्तरेष्वपि तथैवोदाहृतत्वात् ।

**अमृता०**—२२३. अधेरिति । कृञइत्यनुवर्त्तते । अकर्त्रभिप्राये खलु । प्रसहने अभिभवे अधिपूर्वात् तथा शब्दकर्मकादकर्मकाच्च विपूर्वात् कृञ आत्मपदं स्यात् । स्पष्टान्युदाहरणानि । क्वचित् प्रसहनं क्षमा च—शत्रुमधि कुरुते, क्षमत इत्यर्थः ।

---

**बाल०**—समः । प्रछ ज्ञीप्सायां गमॢ गतौ ऋच्छ प्रापणे स्वृ शब्दोपतापयोः श्रु श्रवणे विद ज्ञाने दृशिर प्रेक्षणे ऋ गत्यादावित्येभ्यः कर्त्तर्यात्मपदं स्यात् । संपृच्छते सम्यग्जानाति संगच्छते मिलतीत्यर्थः । ऋ गतौ प्रापणे च भ्वादिः ऋ गतौ ह्वादिः द्वयोरपि ग्रहणविशेषात् कृष्णधातुके ऋऋच्छोः समानरूपत्वात् रामधातावुदाहरणं दर्शितं । आरामन्येत्यादावित्याख्यातसूत्रं संविद्रते इति बहुवचनान्तं ॥ २२१ ॥

**बाल०**—आङ् । आङ् पूर्वो यस्य तस्माद्यमेर्यमधातोर्हनेर्हनधातोश्च कर्त्तर्यात्मनेपदं स्यात । हनधातोरकर्मत्वार्थं कर्मकर्त्तृत्वं । ननु हिंसा कर्मस्था अतः कर्मस्थधात्वर्थत्वात् कर्मवद्भावे कथमकर्मकत्वं । उः । प्रधानाप्रधानयोः प्रधाने कार्यसम्पत्तय इति न्यायात् अतिदेशिककार्यमनित्यमिति न्यायाच्च कर्मवत्येऽप्यकर्मकत्वं । तपःकर्मकत्वे आत्मपदविधानं यकृतु तपःकर्मकस्येत्यादिना कर्त्तरि कर्मवत् कार्यं करणीयं । तपःकर्मकस्यात्मपदविधानादन्यत्राकर्मकत्वे आत्मपदं तदेवाह—॥ २२२ ॥

**२२४. पूजाचार्यकृति ज्ञानोत्क्षेपणेषु भृतौ व्यये ।**
**नीञो विगणने कर्त्तृस्थिते चामूर्त्तकर्मणि ॥**

**कृष्णः शास्त्रेषु नयते, स तेषु पदार्थान् सर्वसम्मानितान् कुर्वन् स्थापयतीत्यर्थः । उद्धवमुपनयते, आत्मानमाचार्यीकुर्वन् तत् समीपं प्रापयतीत्यर्थः । सर्वं नयते, निश्चिनोतीत्यर्थः । चक्रं दुष्टेषु उन्नयते, उत्क्षिपतीत्यर्थः । स कामानुपनयते, कामदानवेतनेनात्मसमीपी करोतीत्यर्थः । सर्वमुपनयने, धर्माद्यर्थं सर्वं विनियुङ्क्त इत्यर्थः । संकल्पं विनयते, तद्रूपमृणं निर्यातयतीत्यर्थः । क्रोधं विनयते दूरीकरोतीत्यर्थः । पुरुषोत्तमस्त्वाह—पूजायां, शास्त्रार्थं नयते, युक्तिभिः सम्मानयतीत्यर्थः । आचार्य कृतौ, उद्धवमुपनयते, आत्मवदाचार्यीकरोतीत्यर्थः । इति ।**

---

**अमृता०**—२२४. पूजेति । पूजाद्यर्थेषु गम्यमानेषु नीञ आत्मपदं स्यादकर्त्तृगामि क्रियाफले । तत्र पूजा सम्माननम् । उत्क्षेपणमुन्नयम् । भृतिः कर्ममूल्यं वेतनादि । विगणनं ऋणादेः परिशोधनम् । शास्त्रेषु नयते इत्यत्र शास्त्रशब्देन तत्रत्यविषया लक्ष्यन्ते, तेचोपपत्तिभिः स्थाप्यमानाः सम्मानिताः क्रियन्त इति फलितार्थः । उद्धवमुपनयत इति—स्वयमाचार्यः सन् उद्धवमीदृशेनविधिनात्मसमीपं प्रापयति येनासौ उपनेता आचार्यः सम्पद्यत इति प्रकृतार्थः । संकल्पं विनयत इति—"येयथा मां प्रपद्यन्ते तांस्तथैवभजाम्यहमि"त्यादिसंकल्परूपं ऋणं परिशोधयति, तद्भक्तान् तत्तद्भावोचितरसविषयेणानुगृह्णातीति भावः । पुरुषोत्तमस्य विवृतौ किञ्चिद् वैषम्ये दृष्टेऽपि फलन्तु तुल्यमेव । कर्त्तृस्थितइति—आख्यातवाच्यकर्त्तरि स्थितं अमूर्त्तवस्तु यदि नयतेः कर्मस्यात्तदा । कर्त्तृस्थित इति किम्—कृष्णो राधायाः कोपं विनयति । अमूर्त्तेति किम्—केशान् विनयति, अपसारयतीत्यर्थः । कर्मेति किम्—बुद्ध्या विनयति दूरीकरोतीत्यर्थः ।

---

**बाल०**—उद्विभ्यां चेति । स्वाङ्गकर्मकादनन्तरं वक्ष्यति च अतएवात्र कंसमिति प्रत्युदाहरणे कर्म दर्शितं । उद्विभ्यां स्वाङ्गकर्मकत्वे तपः आत्मपदं परसूत्रे भविष्यतीति ज्ञेयं । तथाच जुमरलक्षणं । स्वाङ्गकर्मकाच्चोद्वितपाङ् यमहन इति । ननु कथमेकस्य धातोरकर्मकत्वं सकर्मकत्वञ्च । उः । कर्मणोऽविवक्षयाऽकर्मकत्वं । तथाच जुमरः । शाब्दी ह्याकाङ्क्षा शब्देनैव प्रपूर्यते इत्यनुक्तं कर्मणि स्थितेऽप्यकर्मकत्वमिति ॥ २२३ ॥

**बाल०**—स्वाङ्ग । स्वकीयमङ्गं कर्म यस्य तस्मात् आङ्पूर्वाद्यमादेरात्मपदं भवति । प्राण्यङ्गमिति । द्रवं विकारजञ्च विना प्राणिनोऽङ्गं मुखादि स्वाङ्गमिष्यते इच्छाविषयीक्रियते । तत्र बुद्ध्यादेरपि प्राणिस्थत्वात्तस्य स्वाङ्गत्वं वारयितुमाह मूर्तिमदिति । काठिन्यादिस्पर्शविषयो मूर्त्तिस्तदभावाद्बुद्ध्यादेर्न स्वाङ्गत्वमिति । तथा द्रवविकारजयोरपि प्राण्यङ्गत्वात् स्वाङ्गत्वे प्राप्ते निवारयति विनेति । द्रवञ्च विकारजञ्च ते

## २२५. वृत्त्युत्साह स्फीततासु क्रमेः ।

क्रमेरिति प्रभुश्च । हरौ बुद्धिः क्रमते तद्भक्तस्य, वर्त्तते, न प्रति हन्यत इत्यर्थः । कृष्णभक्तये क्रमते, उत्साहं करोतीत्यर्थः । वैष्णवानां श्रीः क्रमते, बर्द्धत इत्यर्थः ।

## २२६. नोपेन्द्रतो विना परोपाभ्याम् ।

हरौ बुद्धिः प्रक्रामतीत्यादि । इह तु स्यात्—पराक्रमते उपक्रमते ।

## २२७. तथाङ् पूर्वाज्ज्योतिरुद्गम इष्यते ।

आक्रमते भानुः । उद्गमे किम्—आक्रामति गिरिं रविः, अवष्टभ्नातीत्यर्थः ।

---

**अमृता०**—२२५. वृत्तीति । वृत्त्याद्यर्थेषु क्रमतेरात्मपदं भवति । वृत्तिरप्रतिबन्धः । वैष्णवानां श्री र्भक्ति सम्पत् शोभा च वर्द्धते ।

**अमृता०**—२२६. नोपेन्द्रत इति । परा उप इत्येताभ्यामुपेन्द्राभ्यां विना अन्योपेन्द्रादुत्तरस्य क्रमतेरात्मपदं न स्यात्; परोपाभ्यामेवात्मपदं स्यान्नान्येभ्य इति । वृत्त्याद्यर्था अनुवर्त्तन्ते, तेन नियमएषः—सोपसर्गात् क्रमे वृ त्त्याद्यर्थेषु परोप पूर्वादेव नान्यपूर्वादिति । हरौ बुद्धिरिति—प्रक्रामति अप्रतिहता बर्द्धत इत्यर्थः । पराक्रमते—उत्सह्यते बर्द्धते वा । उपक्रमते आरम्भं करोतीत्यर्थः ।

**अमृता०**—२२७. तथेति । ज्योतिषां ग्रहनक्षत्रादीनामुद्गमे ऊर्द्धगमनेऽर्थे आङ् पूर्वात् क्रमेरात्मपदमिष्यते । आक्रामति गिरिमिति—उदयगिरिं नेदयति आश्रयतीत्यर्थः । अत ऊर्द्धगमनाप्रतीते र्नात्मपदम् । ननु कथं—"नभः समाक्रामति कृष्णवर्त्मना स्थित्वैक चक्रेण रथेन भास्करः", इति ? नात्र किलोर्द्धगमनमर्थः किन्तु व्याप्तिः, एकचक्रेणरथेन स्थित्वा नभो व्याप्नोत्यर्थः ।

---

विनेत्यर्थः । तत्र रक्तकफादेर्द्र वात्मकत्वात् न स्वाङ्गत्वं । विकारो धातुवैषम्यं तज्जातत्वात् शोथादेरपि न स्वाङ्गत्वमिति । प्राण्यङ्गं तथा स्वाङ्गं तद्वत् प्राणिप्रतिकृतेः प्रतिमाया अपि अङ्गं स्वाङ्गमिष्यते । आयच्छत इति यमुपरमे पाणिं उपयमयतीत्यर्थः । ननु छिन्नं पाणिं आयच्छते इत्यत्र पाणिस्थत्वाभावात् कथं स्वाङ्गत्वं नचेत् कथमात्मपदं अत आह विच्छिद्य पतितत्वेऽपीत्यादि । तथाच जुमरः । अतस्थं तत्र दृष्टं चेति तदानीं तत्रातत्स्थं अप्राणिस्थं किन्त्वादौ तत् प्राणिनि दृष्टमित्यर्थः । एवं हनितपी उदाहार्यौ इति आङ्पूर्वौ हनीतपी इति । एवं सति जुमरमतं न सङ्गतं तन्मते उद्विभ्यां तप आत्मपदं नाङस्तस्मात् उपेन्द्रस्तु प्रयोगानुसारेणोपकल्पनीयस्तेन सर्वं समञ्जसं ॥ २२४ ॥

**बाल०**—प्रादेः । ऊह वितर्के असु क्षेपणे इत्येताभ्यां प्रादेरुत्तराभ्यां आत्मपदं वा भवति ॥ २२५ ॥

**बाल०**—ह्वः । सुगमं ॥ २२६ ॥

**२२८. वेःपादविहृतौ तद्वत् ।**

**विक्रमते त्रिविक्रमः ।**

**२२९. आरम्भे प्रादुपात्तथा ।**

**प्रक्रमते उपक्रमते ।**

**२३०. अनुपेन्द्राद् विभाषा ।**

**क्रामति क्रमते । क्रमिर्निवृत्तः ।**

---

**अमृता०**—२२८. वेरिति । पादविहृतिः पादविक्षेपः, तस्मिन्नर्थे विपूर्वात् क्रमते रात्मपदं स्यात् । यद्यपि क्रमु पादविक्षेपे इत्येव पठ्यते तथापि धातूना मनेकार्थ दर्शनात् विपूर्वादयं नियमः । तेन पादविहृताविति किम्—अश्वेन विक्रामति युद्धे, विक्रमं प्रकाशयतीत्यर्थः ।

**अमृता०**—२२९. आरम्भइति सुगमम् । आरम्भेकिम्—पूर्वेद्यु: प्रक्रामति गच्छतीत्यर्थः, अपरेद्यु रुपक्रामति, समागच्छतीत्यर्थः ।

**अमृता०**—२३०. क्षनुपेन्द्रादिति । उपेन्द्ररहितात् क्रमते रात्मपदं वा भवति । ननु तर्हि उभयपदिषु पाठोऽस्य क्रियताम्, किमनेन विधानेनेति चेत् ? श्रूयताम्—कर्त्तृगामिक्रियाफले ह्युभयपदिनामात्मपदं व्यवस्थितम्, इह तु सामान्यतो विधानम्, अकर्त्रभिप्रायेऽपि यथा स्यात्तदर्थम् । कथं—वारिपूर्णा महीं कृत्वा पश्चात् प्रक्रमते गुरुरित्यात्मपदम् ? उपसर्ग प्रतिरूपकोऽयं संशब्दः, तेनानुपेन्द्रत्वे न दोष इति ।

---

**बाल०**—आह्वः । स्पर्द्धनं स्पर्द्धः तस्मिन् गम्यमाने आङ्पूर्वात् ह्वेञ्स्पर्द्धायामित्यस्मादात्मपदं स्यात् ।। २२७ ।।

**बाल०**—गन्ध । गन्धने अपकारप्रयुक्त्या हिंसासूचने प्रादेः कृञ आत्मपदं स्यात् । हिंसासूचकापकारप्रयोग इत्यर्थः । एवं भर्त्सनादावर्थेऽपि कृञ आत्मपदं भवेत् । उपयोगः धर्मादिविषयविनियोगः । उत्कुरुते प्रकुरुते वेत्यादौ उपेन्द्रान्तरं दर्शयित्वा यद्वेति उक्तमेतेनैतत् सूचितं नत्वन्योपेन्द्रेणार्थं बोधयतीति ।। २२८ ।।

**बाल०**—पूजा । पूजा सन्मानं, आचार्यस्य कृतिराचार्यकृतिः, विगणनं ऋणादिशोधनं, कर्त्तृस्थे चामूर्त्तकर्मणीति सामानाधिकरण्यं । एतेषु अर्थेषु वर्त्तमानान्नीञ आत्मपदं भवति । कृष्ण इत्यादि । सर्वसम्मानितान् कुर्वन् इत्यनेनात्मनः सम्मानितत्वं सुतरामेव सम्मानितोऽयं स्वयमपि धातूनामनेकार्थत्वात् उपेन्द्रस्याभिन्नत्वेऽपि भिन्नार्थः सम्पद्यते वाक्यार्थबोधकतामात्रस्य तात्पर्यात् । तद्रूपसङ्कल्परूपं ऋणं निर्यातयीतीत्यर्थः । सङ्कल्पः कर्म मानसमित्यर्थः ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहमिति भगवदुक्तेः । पुरुषोत्तमस्त्वाह इति स्वमतदार्ढ्याय ।। २२९ ।।

**बाल०**—वृत्त्युत्साह । वृत्तिरप्रतीघातः । वृत्त्युसाहादिषु क्रमतेः कर्त्तर्यात्मनेपदं स्यात् । तद्भक्तस्य वर्त्तते इति बुद्धिरित्याकर्षणीयं । कृष्णभक्तत्वे कृष्णभक्तिनिमित्तं । श्रीः सम्पत्तिर्लक्ष्मीः शोभा च ।। २३० ।।

२३१. ज्ञोऽकर्मकापह्नवार्थतः।

गङ्गाजलस्य जानीते। तत्त्वमपजानीते, गोपते इत्यर्थः।

१३२. संप्रतिभ्यां समुत्कण्ठा पूर्वक स्मरणं विना।

संजानीते जनं हरिः। भक्तायाभीष्टं प्रतिजानीते, प्रतिज्ञां करोतीत्यर्थः।

उत्कण्ठापूर्वक स्मरणे तु– हरिं संजानाति भक्तो हरेर्वा।

२३३. यत्नोपसान्त्वन ज्ञानभासनेषूपमन्त्रणे।
विमतौ चापि वदतेः।

वदेतेरिति प्रभुश्च। भक्तौ वदते वैष्णवः। हरि र्भक्तानुपवदते। भक्तो हरिं वदते। भासने तु—हरि र्भक्तौ वदते, तत्र प्रकाशमान स्तां-

---

**अमृता०**—२३१. ज्ञ इति। अकर्मकश्च अपह्नवार्थश्च अकर्मकापह्नवार्थः, रामकृष्ण-समासे विभाषयैकवद् भावः। तादृशात् ज्ञ आत्मपदं स्यात्, कर्त्तरीत्येव। तत्राकर्मकेऽ कर्त्रभिप्राये इति बोध्यम्। गङ्गाजलस्य जानीत इति—अज्ञानार्थस्य ज्ञः करणं वेति करणभाव पक्षे षष्ठी। अत्र जानातेः प्रवृत्त्यर्थः। तत्त्वमपजानीत इति—ज्ञात्वापि न प्रकाशयति, अपलपतीत्यर्थः। अपशब्देन हि अपह्नवार्थो द्योत्यते, केवल ज्ञाधातुना नायमर्थ उच्यते। "वाचः पल्लवयत्युमापतिधरः सन्दर्भशुद्धिं जानीते जयदेवः" इत्यत्र तु सकर्मकत्वेऽप्यात्मपदं, कर्त्तृगामिक्रियाफले—"ज्ञ उपेन्द्रविनाभावादिति" वक्ष्यमाणसूत्रस्य विषय इति ध्येयम्। अकर्मकेति किम्—कण्ठस्वरेण कृष्णं जानाति राधा।

**अमृता०**—२३२. समिति। समुत्कण्ठापूर्वकं स्मरणं विना सम्प्रतिभ्यां जानाते-रात्मपदं स्यात्। सकर्मकार्थमिदम्। संजानीत इति—पश्यन्ननुगृह्णातीत्यर्थः। प्रतिजानीत् इति प्रतिजानीत इति प्रतिज्ञार्थः। अथ संज्ञः कर्मणि तृतीया वेति पक्षे—हरि र्जनेन तंजानीते इति च प्रयोज्यम्। प्रत्युदाहरणे हरे र्वेति—स्मृत्यर्थदयेशामिति विभाषया सम्बन्धे षष्ठी।

**अमृता०**—२३३. यत्नेति। यत्न उत्साहः। यत्नादिष्वथेषु वदते रात्मपदं स्यात्। क्रमेणोदाहरति—भक्तावित्यादि। वैष्णवो भक्तौ वदत इति—भक्ति विषयकमुत्साहमा-विष्करोतीत्यर्थः। भक्तो हरिं वदत इति—ज्ञान पूर्वकं वदति, तंवदितुं जानातीत्यर्थः। भासनं दीप्तिः। तत्र हरिरिति—तत्र भक्तौ प्रकाशमानो दीप्यमानो हरि स्तां भक्तिं व्यनक्ति प्रकाशयतीत्यर्थः। उपच्छन्दयति प्रलोभयति। उपपूर्वक एवायमर्थो द्योत्यते।

---

**बाल०**—नोपेन्द्रतः। परोपाभ्यां विना अन्यस्मादुपेन्द्रात् परस्मात् क्रमतेः कर्त्तर्यात्मनेपदं स्यात्॥ २३१॥

**बाल०**—तथाङ्। तथाङ्पूर्वात् ज्योतिः सूर्यादिस्तस्य ऊर्द्ध्वं गमस्तस्मिन् तथा आत्मनेपदमिष्यते। आक्रामति गिरिमित्यत्रावलम्बनमात्रं नतूर्द्धगमनं विवक्षितं॥ २३२॥

व्यनक्तीत्यर्थः । उपमन्त्रणे—हरिर्गोपीमुपवदते, रहस्युपच्छन्दयति, लोभयतीत्यर्थः । पृच्छतोति वा । तथा विवदन्ते तर्कनिष्ठाः ।

**२३४. व्यक्तवाचां सहोक्तिषु ।**

संप्रवदन्ते वैष्णवाः । नेह—संप्रवदन्ति मयूराः ।

**२३५. अनोरकर्मकात्तत्र ।**

अनुवदते श्रीशुकस्य सूतः ।

**२३६. विप्रलापे विभाषया ।**

**विप्रवदन्ते विप्रवदन्ति वा स्मार्त्ताः । वदति निवृत्तः ।**

---

विमति मंतिभेदो विवादइति यावत् । विप्रवदन्ते तर्कनिष्ठा इति—मतिभेदेन विविधं वदन्तीत्यर्थः ।

**अमृता०**—२३४, व्यक्तेति । व्यक्तवाचां सहोक्तिः सहोच्चारणम् । तत्र वर्त्तमानाद् वदतेरात्मपदं स्यात् । ननु "वदव्यक्तायां वाचि" इत्येव स्वाभाविकोऽर्थः, किमत्र व्यक्त-वाचामिति विशेषणेन ? सत्यम्, प्रसिद्धार्थग्रहणार्थम् । मानवा हि व्यक्तवाच इति प्रसिद्धिः, तेषामेव सहोच्चारणे यथा स्यात् । अतएव प्रत्युदाहरणे संप्रवदन्ति मयूरा इत्युक्तम् । सहोक्तिष्विति किम्—कृष्णो वदति गोपान् ।

**अमृता०**—२३५. अनोरिति । तत्र—व्यक्तवाचि, अनोरुत्तरस्मादकर्मकाद् वदते रात्मपदं स्यात् । अनु सादृश्ये, पश्चाद् वा । श्रीशुको यथा श्रीपरीक्षित्सभायामवदत् तथैव तत्पश्चात् सूतो वदत इत्यर्थः । नैमिषारण्यक्षेत्रे शौनकादि मुनिसदसि श्रीभागवतस्य वक्ता सूत इति प्रसिद्धः । अकर्मकादिति किम्—पूर्वं यदुदितं तदनुवति, पश्चाद् वदतीत्यर्थः । व्यक्तवाचामित्येव, अन्यथा—अनुवदति वीणा वंश्याः ।

**अमृता०**—२३६. विप्रलाप इति । विप्रलापो विरोधोक्ति रित्यमरः । तत्र वर्त्तमानाद् वदते विभाषयात्मपदं स्यात् । विमतेरेव विशेषोक्तिरेषा । तेन व्यक्तवाचां सहोक्तिष्विति सर्वानुवर्त्तनात् प्राप्तस्य विभाषेयम् । कोनन् विशेषः ? उच्यते—विमतिः प्रलापमात्रम्; स च प्रलापो विचित्रभाषः, परस्पर विप्रतिषेधेन भाषश्चेति द्विधा भिद्यते । तत्र विचित्रभाषणे विमतिः पूर्वमुक्ता, विप्रतिषेधभाषणेऽत्रविभाषा क्रियत इति । तेन विप्रवदन्ते स्मार्त्ता इति—परस्परं विप्रतिषेधेन विरुद्धं वदन्तीत्यर्थः ।

---

**बाल०**—वेः पाद । पादविहृतिः पादविक्षेप इति स्मरणात् ॥ २३३ ॥

**बाल०**—आरम्भे । सुगमं ॥ २३४ ॥

**बाल०**—अनु । सुगमं ॥ २३५ ॥

**बाल०**—ज्ञोऽकर्म । अकर्मकश्चापह्नवार्थश्चेति कामकृष्णसमाससिद्धात् ज्ञः । गङ्गा-जलस्य जानीते इति ज्ञोऽबोधार्थस्य करणात् गङ्गाजलात् षष्ठी । तत्त्वं स्वरूपे सिद्धान्ते

## २३७. सृजेः श्रद्धावतः श्यश्च ।

वैष्णवो मालां सृज्यते । श्रद्धां विना तु सृजति इतिभट्टमल्लः । भूतेशे ते तु इण् इतिबर्द्धमानः, असर्जि मालां वैष्णवः ।

## २३८. अवाद् गुः ।

अवगिरते । गृणाते र्नेष्यते—अवगृणाति ।

## २३९. अङ्गीकृतौ समः ।

संगिरते ।

---

**अमृता०**—२३७. सृजेरिति । श्रद्धायुक्तस्य सृजतेरात्मपदं स्यात्, कर्त्तरि श्यविकरणश्च भवति । धात्वर्थो विसर्गः सृष्टिः, स चेत्श्रद्धाविशिष्टः स्यात्तदा इत्यर्थः । तेन वैष्णवो मालां सृज्यत इति—श्रद्धा पूर्वकं मालां करोतीत्यर्थः । स्वमतदार्ढ्याय प्रत्युदाहरणतया भट्टमल्ल आख्यातचन्द्रिकाकृत् । एवञ्च कर्त्तरिभूतेश ते इण् भवेदिति वर्द्धमानमिश्रमत प्रदर्शनेन तदेव स्वमतत्वेनाङ्गीकृतम् ।

**अमृता०**—२३८. अवादिति । अवात् परस्मात् गृनिगरणे इत्यस्मादात्मपदं स्यात् । अव गिरते शुकः ( पक्षी विशेषः ) शक्तून् । गृशब्दे इति क्र्यादौ पठितस्य त्वात्मपदं नेष्यते; तस्यावपूर्वस्य प्रयोगाभावादिति काशिका । अत्र पूर्वसूत्रस्थ "श्य श्च" इत्येनेन अवादित्यरामस्य सन्धि र्न कार्यः, छन्दोऽनुरोधात्, अनित्यं सूत्रनिर्देशे इत्याश्रयितव्यम्, येन श्लोक द्वितीयचरणो ग्रथ्यते सुतराम् । अग्रिम सूत्रेण तु सन्धिः कर्त्तव्य एव ।

**अमृता०**—२३९. अंगीकृताविति । ग्रइति वर्त्तते । समहर्वाद् गिरते रंगीकारे प्रतिज्ञायामात्मपदं स्यात् । शब्दो नित्य इतिसंगिरते, प्रतिजानीत इत्यर्थः । अंगीकृताविति किम्—संगिरति दध्योदनं गोपालः ।

---

इति । तत्त्वं स्वरूपं अपजानीते अपह्नुते जानातीत्यर्थः । संप्र । एतदारभ्य यत्र यत्र सूत्रं न व्याख्यायते, तत्र तत्र सुगममिति पदमुह्यं करणीयं । हरेर्वेति संज्ञो वा कर्मणो हरे षष्ठी ॥ २३६-२३७ ॥

**बाल०**—यत्न । यत्नपूर्वकमुपसान्त्वनमिति वा विग्रहः । यत्नं बहूद्यमं । भक्तौ वदते वैष्णवः । तस्यां प्रयत्नं करोतीत्यर्थः । यस्मिन्नेतन्नास्ति तन्मते । हरिर्भक्तानुपवदते यत्नपूर्वकं उपसान्त्वयतीत्यर्थः । भक्तो हरिं वदते जानातीत्यर्थः । तत्र भक्तौ तां भक्तिं । रहसि निर्जने उपच्छन्दयन् नानाप्रकाररहस्यवाक्यं कथयन् । विमतावुदाहरणं । तथा विवदन्ते तर्कनिष्ठाः । विमतिर्विप्रतिपत्तिर्विरोधोक्तिरिति यावत् ॥ २३८ ॥

**बाल०**—व्यक्त । अत्र सहशब्दस्तुल्यार्थः । संप्रवदन्ते तुल्यव्यक्तवाचः कुर्वन्तीत्यर्थः । नेहेति व्यक्तवाचामभावात् । व्यक्तवाचो हि मनुष्याः प्रसिद्धाः ॥ २३९ ॥

**२४०. उदः सकर्म चरते।**

**कर्मोच्चरते विष्णुभक्तः, उत्क्रम्य तिष्ठतीत्यर्थः। अकर्मकत्वे तु—वंशीध्वनिरुच्चरति।**

**२४१. तृतीया योगतः समः।**

**रथेन सञ्चरते हरिः।**

**२४२. दानः साचेच्चतुर्थ्यर्थे।**

**सेति तृतीया। विष्णुप्रसादं तद्विमुखैः सम्प्रयच्छते।**

---

**अमृता०**—२४०. उद इति। उत् पूर्बात्चरतेः सकर्मकादात्मपदं स्यात्। उत्क्रम्य गच्छतीत्यर्थः। अकर्मकत्वे तु—वंशीध्वनिं रुच्चरति उत्थितो भवतीत्यर्थः। एवं धूम उच्चरतीति च।

**अमृता०**—२४१. तृतीयेति। चरतेरित्यनुवर्त्तते। संपूर्वात् चरते स्तृतीयायुक्तादात्मपदं स्यात्। पृथगारम्भात् सकर्मेति विशेषणं नानुवर्त्तनीयम्। रथेन करणभूतेन चरतीत्यर्थः। ननु तृतीया योगत इति सामान्येनोक्तत्वात् हेतु सहार्थयोश्च कथं न व्याख्यायते? मैवं, योगशब्दस्य चरति रूप धात्वर्थेनान्वयात् करणे एव पर्यवसीयत तृतीया; क्रियया कारकाणामेवान्तरङ्ग सम्बन्धत्वेन योगः सिध्यति, उपपदविष्णुभक्तीनान्तु शब्दान्तरै योग इति प्रपञ्चितमेव प्राक्। अतएव "सञ्चरति युधि सह सैन्यै" रिति तथा "पुण्यैः सञ्चरति दिवि" इति क्रमात् सहार्थ हेतु तृतीयायोगे नात्मपदम्।

**अमृता०**—२४२. दानइति। तृतीया योगतः सम इति सर्वमनुवर्त्तते। सम्पूर्वाद् दानः तृतीया योगत आत्मपदं स्यात्, सा तृतीया यदि चतुर्थ्यर्थे विधीयते; अर्थाविशिष्टव्यवहारे सम्प्रयच्छतेरित्यनेन यदि सम्प्रदानस्याविवक्षया तृतीया विवक्ष्यते तदैवेत्यर्थः। ननु सत्रे अनुवृत्त्यापि सम उत्तरस्माद् दान आत्मपदं विधीतें, कथमिह प्रशब्दस्य व्यवधानेनोदाहृतमिति चेत्? अशिष्टव्यवहार इत्यादि सूत्रे सम्प्रयच्छतेरिति प्रशब्दग्रहणेन हि तज्ज्ञापितत्वादिह तदनुक्ति र्नहि दोषायेति। सम्प्रयच्छते इति दानो यच्छादेशः।

---

**बाल०**—अनोः। अनोरुत्तरस्मादकर्मत्वाद्वदतेः परस्मात् कर्त्तर्यात्मपदं स्यात्। अनु पश्चात्। अत अनुवदत इत्यत्र श्रीशुको यथा वदते तथैव तस्य पश्चात् सूत्रो वदते॥ २४०॥

**बाल०**—विप्र। विप्रलापो विरोधोक्तिः॥ २४१॥

**बाल०**—सृजेः। श्रद्धाविशिष्टस्य सृजेरात्मपदं श्य आगमश्च भवति। धात्वर्थः श्रद्धा तद्युक्तस्य सृजेरित्यर्थः। वैष्णव इति वैष्णवः सश्रद्धं यथा स्यात्तथा मालां करोतीत्यर्थः। स्वमतदार्ढ्याय श्रद्धायाः अन्यत्र परपदं भट्टमल्लस्य मतं दर्शितं। भूतेशे। भावे कर्मणि कर्मकर्त्तरि इण् आदेशः कर्त्तरि न प्राप्नोति तत्रापीण् बर्द्धमानमते॥ २४२॥

**२४३. स्वीकारे तूपयच्छतेः ।**

रुक्मिणीमुपयच्छते । स्वीकार इति दारकर्मण्येवेति काशिकादयः । स्वीकारमात्र इति तु पुरुषोत्तमः । उपायंसत नासवमिति भट्टिः ।

**२४४. अथ स्मृज्ञापश्यतीनां सनः ।**

सुस्मूर्षते जिज्ञासते दिदृक्षते ।

**२४५. अनुज्ञां विना तथा ।**

अनुजिज्ञासति ।

**२४६. प्रत्यङ्पूर्वं वर्जयित्वा श्रुव आत्मपदं सनः ।**

शुश्रूषते प्रशुश्रूषते । नेह—प्रतिशुश्रूषति आशुश्रूषति ।

---

**अमृता०**—२४३. स्वीकार इति । उपपूर्वाद् यमुउपरमेइत्यस्मादात्मपदं स्यात् स्वीकारेऽर्थे । स्वीकार इतीति—दारकर्मणि विवाह कर्मण्येवात्मपदं स्यादिति काशिकादय आहुः, कालापादयश्च । पुरुषोत्तमस्तु भाषावृत्तौ स्वीकारसामान्यमेव निर्दिशति स्म । तच्च भट्टिप्रयोगपुष्टत्वाल्लोकग्राह्यमिति स्वमतञ्चेदमिति बोध्यते । तत्रैवान्ये प्रयोगाः—उपायंस्त महास्त्राणि, शस्त्राण्युपायंसत जित्वराणीत्यादयः ।

**अमृता०**—२४४. अथेति । स्मृ ज्ञा दृशां सनन्तानामात्मपदं भवति । पूर्वधातुवत् सनः परपदादीत्युक्त नियमेन स्मरतेरप्राप्तौ विधीयते । जानाते स्तुज्ञोऽकर्मकापह्नवार्थं त इत्यादिसूत्रद्वयेन विहितमेवात्मपदम्, तथा पश्यतेश्च—समः पृच्छतिगम्यृच्छीत्यादिना । तत्तदर्थे सिद्धेऽपि सनि, अत्रतदितरार्थं एवानयो र्व्यवस्था, तेन सकर्मकाणामेवैषां सनि विधिरित्यवसीयते । धर्मं जिज्ञासते, कृष्णं दिदृक्षते, स्वप्नंवृत्तं सुस्मूर्षत इति ।

**अमृता०**—२४५. अनुज्ञामिति । अनुपूर्वं ज्ञाधातुं विना अन्यपूर्वस्य ज्ञा धातोः सनन्तस्य तथात्मपदंस्यात् । प्रतिषेधोऽयम् ।

**अमृता०**—२४६. प्रत्याङिति । प्रत्याङ् पूर्वं श्रुवं वर्जयित्वा अन्यपूर्वस्य श्रुवः सन आत्मपदं स्यात् । श्रृणोतेश्च—समः पृच्छतीत्यादिनैवात्मपदं विहितम् । अत इह सकर्मकस्य हि श्रुवः सन आत्मपदं विधीयत इति सम्पद्यते । प्रत्याङो र्वर्जनात् केवलस्यापीष्यते तदिति दर्शयति—शुश्रूषत इति, गुरुं सेवत इत्यर्थं ।

---

**बाल०**—अवाद्गुः । अत्र न छन्दः कथमिति न निर्द्धारयामः । गृधातोः क्विवन्तात् षष्ठी कृत्वा गुरिति निर्दिष्टं । यद्वा, अवाद्गुरिति लिपिकारेण कृतं अवाद्ग्रः इति पाठः सभ्यः अस्मिन् पाठे छन्दोदोषोऽपि नास्तीति । लक्षणे गॄ निगरणे इत्यस्य ग्रहणं नतु गॄशब्दे इत्यस्य तदेवाह गृणातेर्नेष्यते इति ॥ २४३ ॥

**बाल०**—अङ्गी । अङ्गीकारः प्रतिज्ञा अहमिदं दास्यामीत्यादिरूपा ॥ २४४ ॥

**बाल०**—उदः । उद इति श्लोकार्द्धैकचरणं ॥ २४५ ॥

**२४७. अयज्ञपात्रेतु युजेरजाद्यन्तादुपेन्द्रतः ।**

उद् युङ्क्ते प्रयुङ्क्ते । नेह—प्रयुनक्ति यज्ञपात्रम् ।

**२४८. समःक्ष्णौतेः ।**

संक्ष्णुते ।

**२४९. अनवने भुनक्तेः ।**

भुङ्क्ते उपभुङ्क्ते । अवने तु भुनक्ति पृथिवीं रामः, पालयतीत्यर्थः ।

---

**अमृता०**—२४७. अयज्ञेति । अच् सवश्वर आदौ अन्ते वा यस्य सः अजाद्यन्त स्तादृशादुपेन्द्रादुत्तरस्य युजेरात्मपदं स्यात्, यज्ञपात्रस्य प्रयोगं विना । उभयपदित्वाद् युजेः कर्त्रभिप्राये त्वात्मपदे सिद्धे अकर्त्रभिप्राये हि विधिरयम् । अजाद्यन्तेति किम्—दुर्युनक्ति निर्युनक्ति ।

**अमृता०**—२४८. सम इति । सम्पूर्वात् क्ष्णु तेजने धातोरात्मपदं स्यात्, सकर्मकादेव । संक्ष्णुते शस्त्रम् । अन्यथा—समः पृच्छतीत्यादिष्वेव पठ्येत ।

**अमृता०**—२४९. अनवनइति । अवनं रक्षणं पालनं वा । भुज अभ्यवहारपालनयो रित्यस्माद्धातो रक्षणार्थभिन्ने अर्थाद् भोगार्थे आत्मपदं स्यात् । स्तिपा निर्देशात् भुज कौटिल्ये तुदादे र्न ग्रहणम् ।

---

**बाल०**—तृतीया । इत्येकवचनं पृथग् युग्मचरणवत् । तृतीयया युक्तत्वात् समः परस्मादकर्मकाच्चरतेरुत्तरे कर्त्तर्यात्मनेपदं स्यात् । वारिपूर्णां महीं कृत्वा पश्चात् सञ्चरते गुरुरित्यत्र न चरधातो कर्म महीमिति किन्तु कृञः अतोऽकर्मत्वं । ननु तथापि संपूर्वात् तृतीयायोगे आत्मपदविधानात् कथमात्मपदं । उच्यते । पश्चादिति पदं अव्ययं तृतीयान्तं ज्ञेयं ।। २४६ ।।

**बाल०**—दानः । सेति तृतीयेति कथमिति चेत्तदैवं वाच्यं तृतीयायोग इत्युक्ते र्हेतो-स्तृतीया लभ्यतेऽतः सेति तृतीयेत्युक्तं । ननु तथापि तृतीयायोगत इति समस्तैकपदात् कथमेकदेश आकर्षणीयः । उच्यते । समस्तस्यासमस्तेन नित्यापेक्षेण सङ्गतिरिति न्यायात् । सेत्यनेन नित्यसापेक्षेण असमस्तेन सह समस्तस्य समस्तैकदेशस्य तृतीयेत्यस्य सङ्गतिर्मेलनं ज्ञेयं । सा तृतीया यदि चतुर्थ्यर्थे स्यात्तदा दान उत्तरे कर्त्तर्यात्मपदं स्यादित्यर्थः ।। २४७ ।।

**बाल०**—स्वीका । दारेति विवाहकर्मण्येवेति स्वीकारविशेषे एष तच्च वृत्तिकृतो नाभीष्टमिति पुरुषोत्तममतं प्रमाणं दर्शितं जुमरमतमप्येतत् । उपायंसतेति बहुवचनान्तं । आसवं मधु भ्रमरा नोपायंसत न स्वीकृतवन्तु इत्यर्थ ।। २४८ ।।

**बाल०**—अथ । स्मृ आध्याने, ज्ञा अवबोधने, दृशिर प्रेक्षणे, एषां सम्बन्धिनः सन आत्मपदं भवति ।। २४९ ।।

**२५०. अथ णेरणौ, यत् कर्म णौ सकर्त्ता चेद् भवेदाध्यानवर्जिते ।**

अण्यन्ते यत् कर्म तद् यदि ण्यन्ते कर्त्ता स्यात्तदा णे रात्मपदमित्यर्थः । अण्यन्ते--हरिरारोहति ताक्ष्यर्म्, ण्यन्ते तु—हरि मारोहयते ताक्ष्यर्ः । एवं हरिं पश्यति य स्तं स्वयमात्मानं दर्शयते हरिः । आध्यानमुत्कण्ठा पूर्वकं स्मरणम्, तत्र तु—स्मारयति भक्तान् हरिः ।

**२५१. मिथ्या शब्दोपपदतः पौनः पुन्ये कृञो णितः ।**

पदं मिथ्या कारयते, मुहुरशुद्धमुच्चारयतीत्यर्थः ।

**२५२. प्रलम्भे गृधि-वञ्च्यो र्णेः ।**

---

**अमृता०**—२५०. अथेति । स्वयमेव व्याख्यातं मूले—अण्यन्त इत्यादिना । ञिद्भ्य उभय पदिभ्य णे रित्यादिना कर्त्तृगामिक्रियाफले सिद्धमेवात्मपदम्; अतोऽकर्त्तृगामि-फलार्थमिदम् । स इति विधेयस्य कर्त्तु विशेषणत्वात् पुंलिङ्गः । उद्देश्यविधेययोः सामानाधिकरण्यत्वेऽपि तत्र लिङ्ग वचनयोः साम्यन्तु न तन्त्रम् । इह लिङ्गवैषम्यमधि-गतम् । वचन वैषम्यञ्च यथा—एको वृक्षः पञ्च नौका भवतीति । क्रिया पदन्तुनित्य-मुद्देश्यानुरूपमेव पुरुषं वचनञ्च भजतीत्यवधेयम् । ताक्ष्यं गरुडम् । करेणु रारोहयते निषादिनमिति माघे च । अणौ यत् कर्म णौ स कर्त्ता चेदिति किम्—भक्तो हरिं पश्यति, दर्शयति हरिं भक्तं भक्तिः । ननु कर्मण इह कर्त्तृत्व दर्शनात्—कर्म कर्त्तरि कर्मवदात्म-पदादीत्यनेन हि सिद्धमात्मपदमस्य, किमनेनेति चेत् ? भ्रान्तोऽसि; कर्मकर्त्तरि तत्र कर्मस्थक्रियत्वे हि हनदुहादीनामात्मपदादि विहितम्, इह तु कर्त्तृस्थक्रियत्वे तन्न प्राप्नोति । किञ्च तत्र क्रियमाण कर्मणः स्वयं सिद्धत्वे प्रतीयमाने तत्प्रयोग इष्यते, अत्र तु हेतुर्व्यापार एव तदपवादकः । अतो भिन्न विषयत्वादनभिधानाच्च कर्त्तरि नहि यगिणादय इति विवेच्यम् ।

**अमृता०**—२५१. मिथ्येति । मिथ्या शब्दोपपदात् ण्यन्त कृञ आत्मपदं स्यात् पौनः पुन्ये अर्थे । पदं मिथ्या कारयत इति—आत्मपदेन हि पौनः पुन्यद्योतनात् आभीक्ष्ण्य वीप्सयो रिति द्विरुक्ति र्न । मिथ्येति अव्ययमयाथार्थ्ये ।

**अमृता०**—२५२. प्रलम्भइति । प्रलम्भः प्रतारणम्, तस्मिन्नर्थे ण्यन्तयो र्गृधि-वञ्च्योरात्मपदं भवति । गर्द्धयत इति गृधु अभिकाङ्क्षायाम् । वञ्चयत इति वञ्चु गतौ । अत्र तु द्वयोरेव प्रलम्भनार्थः । वृद्धा काचिद् गोपी, जरतीति भावः । गोपाल !

---

**बाल०**—अनुज्ञां । अनुपूर्व-ज्ञाधातुं विना ज्ञ उत्तरवर्त्तिनः सनः कर्त्तर्यात्मपदं भवति ॥ २५० ॥

**बाल०**—तथा । तथेति पृथक् कृत्वा छन्दो वाच्यं । आतमपदप्रकरणेऽप्यात्मपदमिति छन्दोऽर्थं ॥ २५१ ॥

बालकृष्णं गर्द्धयते वञ्चयते वृद्धाः । प्रलम्भेकिम्—अहिं वञ्चयति ।

## २५३. कर्त्तृगामि फले त्वथ ।

प्रभुरयम् ।

## २५४. अपाद् वदः ।

अपवदते ।

## २५५. समुदाङ्भ्यो यमेरग्रन्थगौरवे ।

---

नृत्य नृत्य, नवनीतं दास्यामीत्युक्तितो नर्त्तिते कृष्णे तन्न ददातीति प्रतारयतीत्यर्थः। प्रलम्भइति किम्—अहिं सर्पं वञ्चयति परिहरति, विताडयतीति वा ।

**अमृता०**—२५३. कर्त्तृगामीति । अथ पुनः कर्त्तृगामिक्रियाफले आत्मपदं विधीयते सूत्रत्रयेण । प्रभुनामाधिकार एषः ।

**अमृता०**—२५४. अपादिति । कर्त्रभिप्राये अपपूर्वाद् वदते रात्मपदं स्यात् । वदते रुभयपदित्वात् कर्त्रभिप्राये सिद्धेऽप्यात्मपदे अप पूर्वाद् विशेषो नियम एषः। धनार्थी न्यायमपवदते, न्याय्यमपि अन्याय्यं करोतीत्यर्थः । तदभावे तु—द्वारिकावासिनो हरिमप वदन्ति स्म स्यमन्तकमणेः ।

**अमृता०**—२५५. समिति । सम् उत् आङ्भ्यो यमेः कर्त्रभिप्राये आत्मपदं स्यात् ग्रन्थ गौरववर्जितेऽर्थे । आङ्पूर्वात्तु यमे र्हने रिति द्वाभ्यां सूत्रभ्यामकर्मकात् स्वाङ्ग कर्मकाच्च यमे रात्मपदं विहितम् । इह तु सकर्मकार्थं कर्त्तृगामिक्रियाफलार्थञ्च वचनम् । मनः सयच्छत इति—इन्द्रिय विषयेभ्य उपरमयतीत्यर्थः । हरिभक्तिमुद् यच्छतइति—तत्रोद्यमं कुरुत इत्यर्थः । उत्आङ् पूर्वस्य यमेः सूचनार्थं प्रकाशयितुमाख्यात सूत्रं

---

**बाल०**—अयज्ञ । अच् आदौ अन्ते वा यस्य तस्मात् अर्थात् संनिर्दुर्रहितात् । तथाच यज्ञपात्रयोगे संनिर्दुरः प्रादेरिति । नेति यज्ञपात्रयोगे प्रत्युदाहरणं ॥ २५२ ॥

**बाल०**—समः । क्ष्नु तेजने तस्मात् शस्त्रमित्यादि कर्म ज्ञेयं । संक्ष्नुते शस्त्रं तीक्ष्नीकरोतीत्यर्थः ॥ २५३ ॥

**बाल०**—अनवने । अवनं रक्षणं पालनमिति यावत् । अनवने अपालनेऽर्थे भुनक्तेः कर्त्तर्यात्मपदं स्यात् । भुङ्क्तेऽन्नादिकं भक्षितीत्यर्थः । उपभुङ्क्ते गोपी कृष्ण उपभोगयतीत्यर्थः ॥ २५४ ॥

**बाल०**—अथ णेरणौ । तत् कर्म अण्यन्ते यत् कर्म प्रेरणे णौ सति स यदि कर्त्ता स्यात् । कर्मण उद्देशे यदिति क्लीवं कर्त्तुरुद्देशे पुमान् स इति उद्देश्यविधेयभावान्वयात् यथा पञ्च वृक्षा नौर्भवति भवन्ति च । आध्यानं स्मरणं, उत्कण्ठास्मरणमिति सम्मतं । तार्क्ष्यो गरुडः स चाण्यन्तेतु कर्त्ता । अत्र रुहिर्न्यग्भावनार्थः न्यग्भावनार्थे रुहधातौ णाविति कृते यादृगर्थः केवलेऽपि तादृगर्थः पचन-पाचना न्यग्भावनादिधात्वर्थः सर्वत्रैव ।

मनः संयच्छते। हरिभक्तिमुद् यच्छते। आयच्छते। सूचनार्थादित्यादि—उदायसत। ग्रन्थगौरवे तु—गीतामुद्यच्छति, भगवद्धर्मं वा।

## २५६. ज्ञ उपेन्द्रविनाभावात्।

कृष्णं जानीतेभक्तः। उपेन्द्रे तु—प्रजानाति। अकर्त्तृगामिफले तु—परस्य गां जानाति।

इतः परं निषेधः स्यात्, सामान्यवचने यथा—धरित्रीं दुदुहुः, केचित् स्वार्थं केचित् परार्थञ्चेति सामान्यवचनत्वम्।

## २५७. परानुभ्यां कृञ स्तद्वत्।

पराकरोति अनुकरोति।

---

स्मारयति—सूचनार्थादिति। एतेन सेः कपिलत्वाद् हरिवेण्वन्तेत्यादिना यमे मरामहर इति भावः। स्वीकारस्तु कैवलोपपूर्वाद् द्योत्यते, तत्र स्वीकारे तूपयच्छते रिति विधानात्। ग्रन्थस्य गौरवे विस्तारे तु नेति प्रत्युदाहरति—गीतामुद्यच्छतीति, विस्तारेण कथयतीत्यर्थः। ग्रन्थगोचरे इति च पाठान्तरम्।

**अमृता०**—२५६. ज्ञइति। विना रहितत्वं तस्यभावो विनाभावः, उपेन्द्रस्य विनाभावादुपेन्द्ररहितात् जानाते रात्मपदं स्यात् कर्त्रभिप्राये। पूर्वमनुपेन्द्रादपि अकर्मकादेव विहितम्; इह तु सकर्मकार्थो विधिः। अकर्त्रभिप्राये तु नेति प्रत्युदाहरति—परस्येति।

इतः परमिति। आत्मपदस्य निषेध उच्यते परपदविधानमुखेन। तच्च स्वार्थं परार्थञ्चेत्युभयसामान्ये विधीयते, तत्र दृष्टान्तः—दुदुहुरिति।

**अमृता०**—२५७. परेति। पर अनु पूर्वात् कृञ आत्मपदनिषेधः अर्थात् परपदं भवति। कर्त्रभिप्राये सिद्धमेवात्मपदम्, अकर्त्रभिप्राये च गन्धनादिषु तद्विहितम्। तस्य

---

तथाच। निष्पत्तिमात्रे कर्त्तृत्वं सर्वत्रैवास्ति कारके। व्यापारभेदापेक्षायां करणत्वादिसम्भव इति, अतः तार्क्ष्यस्य कर्त्तृत्वे धातोरकर्मकत्वं तस्मिन् सति अकर्मकेत्यादिना हरेः कर्मत्वं॥ २५५॥

**बाल०**—मिथ्या। णित इति पञ्चम्यास्तसि रूपं। पौनःपुन्येऽर्थे वर्त्तमानात् मिथ्याशब्दसमीपपदात् कृञ उत्तरस्माण्णेरुत्तरे कर्त्तर्यात्मनेपदं स्यात्। पदमिति कर्मपदं मिथ्याशब्दस्य आत्मपदनिमित्तत्वात् तन्निमित्तोपपदस्य तिङन्तस्यापि समासः, समासे मिथ्याशब्दस्य कर्मपदस्य कर्मपदस्य धातुभक्तत्वात् पदमिति कर्मान्तरं पदस्य मिथ्याकारक इत्यर्थः। तदेवाह मुहुरित्यादि॥ २५६॥

## २५८. क्षिपोऽभिप्रत्यतेः परात्।

अभिक्षिपति। एवं प्रति अति।

## २५९. प्राद् वहः।

प्रवहति। परितोभट्टमल्ल आह—परिवहति।

## २६०. परे मृषः।

परिमृष्यति।

## २६१. व्याङ् परिभ्यां रमः।

विरमति। एवं आ परि।

---

तस्य चापवादोऽयम्। परानुभ्यां कृञः कर्त्रभिप्राये अकर्त्रभिप्राये वा परपदमेव भवतीति फलितार्थः। एवमग्रे च बोद्धव्यम्। परानुभ्यामिति किम्—अन्य योगे यथाप्राप्तमेव स्यात् —प्रकुरुते, अपकरोति।

अमृता०—२५८. क्षिपइति। अभिप्रति अति पूर्वात् क्षिपतेः परपदं स्यात् सामान्य वचने। उभयपदित्वात् कर्त्रभिप्राये आत्मपदे प्राप्ते अभिप्रभृतिभ्यो स्तत् प्रतिषिध्यते। अन्येभ्यस्तु यथा प्राप्तं—प्रक्षिपते प्रक्षियते।

अमृता०—२५९. प्रादिति। प्रपूर्वादात्मपदस्यापवादः। प्रपूर्वात् किम्—आवहते प्रीतिं कृष्णे आवहति वा। तथा हि आख्यातचन्द्रिकायाम्—प्राद्वहेः मृषि वहोः परेरिति।

अमृता०—२६०. परेरिति। पूर्ववदपवादः। अन्यत्र परामृष्यते परामृष्यति।

अमृता०—२६१. व्याङिति। वि आङ् परि पूर्वाद् रमते रात्मपदापवादि परपदं स्यात् सामान्यवचने। आत्मपदित्वादप्राप्तौ विधानम्। अन्यत्र तु—अभिरमते।

---

बाल०—प्रल। प्रलम्भो विसन्वादस्तस्मिन्नर्थे गृधिवञ्चोरुत्तरस्माण्णेः परस्मिन् कर्त्तर्यात्मनेपदं भवति। बृद्धा गोपी पौर्णमासी वा। नवनीतं दास्यामि नर्त्तय नर्त्तिते न ददातीति वञ्चनं। तुभ्यं नप्त्रे नप्त्रीं समर्पयिष्यामि सन्ध्यायां मद्गृहं याहीति गर्द्धते लोभयति। गृधु अभिकाङ्क्षायां॥ २५७॥

बाल०—कर्त्तृगामि। तु पुनरपि अथानन्तरं कर्त्तृगामिक्रियाफले धातोरुत्तरे कर्त्तर्यात्मनेपदं स्यात्॥ २५८॥

बाल०—अपात्। सुगमं॥ २५९॥

बाल०—समु। ग्रन्थस्य गौरवं गुरुवदानयनं स्वीकरणमिति यावत्। अग्रन्थ इत्यनेन सिद्धे गौरवपदं पूर्वसूत्रसहितच्छन्दोऽर्थं। सूचनार्थादित्यादीति सेः कपिलविधान-लक्षणं॥ २६०॥

बाल०—ज्ञ। उपेन्द्रस्य बिनाभावात् अभात्। उपेन्द्रस्य बिनाभावोऽभावो यत्र तस्माद्धातोरित्यर्थः। ज्ञोऽप्रादेरित्यर्थः। श्लोकाद्यपादत्वात् अक्षराधिक्यं।

## २६२. उपात् ।

विष्णुदत्तमुपरमति, उपरमयतीत्यर्थः ।

## २६३. विभाषा चेदकर्मकः ।

उमरमति उपरमते, निवर्त्तत इत्यर्थः ।

## २६४. बुधे युधे र्नशि जनोः प्रद्रु श्रूणामिङोऽपि णेः ।

बोधयतीत्यादि । इङ्—अध्यापयति ।

---

**अमृता०**—२६२. उपादिति । रम इत्यनुवर्त्तते । उपपूर्वाच्च रमतेः परपदं स्यात् । रत्र रमते रन्तर्भावितण्यर्थत्वात् सकर्मकत्वं स्पष्टयति—उपरमयतीत्यर्थकथनेन । क्रीडातो निवर्त्तयतीति भावः । पृथक् सूत्र करणमुपात् सकर्मकार्थमुत्तर सूत्रार्थश्च ।

**अमृता०**—२६३. विभाषेति । उपादरम इत्यनुवर्त्तते । सचेदकर्मक स्तदा तु विकल्पेन परपदं स्यात् । पापादुपरमति उपरमते वा, निवृत्तो भवतीत्यर्थः । विनाशे च दृश्यते—धनमुपरमते उपरमति वा, निःशेषोभवसतीत्यर्थः ।

**अमृता०**—२६४. बुधेरिति । ण्यन्तेभ्यो बुधाद्यष्टधातुभ्य आत्मपदापवादं परपदं स्यात् । ञिद्भ्य उभयपदिभ्यो णे रित्यनेन कर्त्रभिप्राये आत्मपदे प्राप्ते तदपवादोऽयं विधीयते । विशेषश्चायमवगन्तव्यः येऽत्राकर्मका स्तेषाम्—अणौ ये स्युरकर्मका इत्यनेन परपदे सिद्धे वचनमिदमचित्तकर्त्तृकार्थम्; तथा येऽत्र चलनार्थाः (कम्पनार्थाः) तेषामनन्तराग्रिमसूत्रेण तत्सिद्धे विधानमेतत् यदा तेऽचलनार्था स्तदर्थमिति । यथा—नशि जनी अकर्मकौ—दुःखं नश्यति, नाशयते दुःखं हरिः । आनन्दो जायते, आनन्दं जनयति साधुसङ्गः । तथा प्रद्रुस्रूणां कम्पार्थः, परिस्पन्दनात्मकत्वात् । इह तु तदितरार्थः, यथा—प्रवते प्राप्नोतीत्यर्थः, प्रावयति कृष्णं भक्तिः । द्रवति बिलीयत इत्यर्थः, द्रावयति लौहमग्निः । स्रवति स्यन्दत इत्यर्थः, स्रावयति स्तन्यं वात्सल्यप्रेमा । इङस्तु आत्मपदपदापवादो विधिरिति ।

---

इतः परं परस्मिन् । दुदुहुः केचिदिति परस्परमित्यूह्यं । तेन कर्मव्यतीहारे आत्मपदप्राप्तौ निषेधः ॥ २६१ ॥

**बाल०**—परा । उभयपदित्वात् कर्त्तृगामिक्रियाफलादावात्मपदप्राप्तेस्तन्निषेधार्थं शेषसूत्रादिकं सेवादावर्थेऽपि च ॥ २६२ ॥

**बाल०**—क्षिप । दिवादिरयं परस्मैपद्येव तुदादेस्तु स्वरितेत्वात् प्राप्तमात्मनेपदं प्रतिषिध्यते इति जुमरटीका ॥ २६३ ॥

**बाल०**—प्रात् । स्वरितेत्वात् कर्त्तृगामिक्रियाफले प्राप्ते ॥ २६४ ॥

**२६५. कम्पाहारार्थं णेस्तद्वत् ।**

**वृक्षंकम्पयति, अन्नं भोजयति ।**

**२६६. अणौ ये स्युरकर्मकाः ।**
**सचित्तकर्त्तृकाश्चैव तेषां णेः ।**

**आस्ते शेते च कृष्णः, आसयति शाययति च कृष्णं माता । अचित्त-कर्त्तृकत्वेतु—नश्यति संसारः, नाशयति संसारं हरिः ।**

**२६७. (सूत्रयुग्मके),अत्ति पिवतिदम्यादीन् विनैव स्यान्निषेधिता ।**

---

**अमृता०**—२६५. कम्पेति । कम्पश्चलनं परिस्पन्दात्मकम्, आहारो भोजनम्, तत्तदर्थात् णे रात्मपदापवादि परपदं स्यात् कर्त्रभिप्राये । अत्र कम्पार्थानामकर्मकत्वादग्रिमसूत्रेण प्राप्ते अचित्तकर्त्तृकार्थं विधानम् । आहारार्थानान्तु सकर्मकार्थम् । वृक्षः कम्पते, पवनस्तं कम्पयति । एवं चलयति वेपयति एजयतीत्यादयः । शाल्यन्नं भुङ्क्ते कृष्णः, शाल्यन्नं भोजयति तं माता ।

**अमृता०**—२६६. अणाविति । ये धातवः अण्यन्ते अकर्मकाः सचित्तकर्त्तृकाश्च तेषां ण्यन्ते आत्मपदं बाधित्वा परपदं भवति कर्त्रभिप्राये । णेरिति हेतुण्यन्तस्यैव ग्रहणम् नतु चुरादेः, तत्र स्वाभाविकत्वेन अण्यन्तावस्थाया अभावात् । नामधातु णेस्तु पूर्वदशायां नामत्वात् नास्त्येव तत्प्रसङ्ग इति विवेच्यम् । अकर्मकाः सचित्तकर्त्तृकाश्चेति विशेषणद्वयं युगपदिष्टम् । ततएव प्रत्युदाहरति—नश्यति संसार इति । अत्राकर्मकत्वेऽपि अण्यन्त कर्त्ता संसार श्चित्तहीन इति पर पदेन न भवितव्यम्, किन्तु—बुधेर्युधे र्नसीत्यादिनैव परपदम् । अतः प्रत्युदाहरणमिदमेकदेशि । तस्मादेवं प्रत्युदाहृतं केनापि—शुष्यति सरः, शोषयते सर आतप इति ।

**अमृता०**—२६७. सूत्रयुग्मक इति—अनन्तरकथितसूत्रद्वये अत्ति प्रभृतीन् विना हि निषेधिता आत्मपदनिषेधः स्यात् । अत्ति प्रभृतीनां त्रिदृभ्य उभयपदिभ्यो णे रित्यनेन हि कर्त्रभिप्राये आत्मपदमेव सिद्धमस्तीति भावः । तत्र अत्तिपिवति धेटामाहारार्थत्वेन, नृतेस्तु चलनार्थत्वेन कम्पाहारार्थ णे रित्यनेन निषेधः प्राप्तः, दम्यादेस्तु सचित्तकर्त्तृकाकर्मकत्वेन—अणौ येस्यु रकर्मका इत्यनेन प्राप्तः । अनेन तु तयोरुपमर्दकात्मपदं स्थाप्यते ।

दमयतइति दमु उपशमे, घटादित्वाद् वामनः । आदि शब्देन प्राचीनैर्निर्दिष्टान् संगृह्णाति—आसयत इत्यादि । आसयत इति यसु प्रयत्ने, आयामयत इति यमु उपरमे,

---

**बाल०**—परेः । स्वरितेत्वात् कर्त्तृगामिक्रियाफले प्राप्ते ॥ २६५ ॥

**बाल०**—व्याङ् । अनुदात्तेत्वात् प्राप्ते ॥ २६६ ॥

**बाल०**—उपात् । उपपूर्वरमिर्विनाशे वर्त्तते यथा उपरतानि धनानि । निवर्त्तने च

**आदयते, पाययते, दमयते मनो वैष्णवः। आदिना—आयासयते आयामयते, परिमोहयते, रोचयते, नर्त्तयते, बादयते, वस निवासे-**

---

अनयो राङ् पूर्वत्व एव। परिमोहयत इति मुह वैचित्त्ये, परिपूर्वत्व एवास्य। रोचयत इति रुच दीप्तौ, वादयत इति वद व्यक्तायां वाचि; अस्य तु कर्माविवक्षया प्राप्ते निषेधः। वासयत इति वसनिवासे इत्यस्यैवेष्यते, लुग्विकरणालुग्विकरणयोरलुग्विकरणस्यैव ग्रहणम् नतु वस आच्छादने अदादेः। धापयत इति धेट् पाने। अकर्त्तृगामिक्रियाफले—शूपकारः पाचकः विप्रानादयति भोजयति। अत्रविप्रभोजनस्य यत्फलं तत्तुगृहाधिपते र्विष्णुमित्रस्य, नतु सूपकारस्य, तस्य वेतनभागित्वात्। कथं—रोचयति लोचनचकोरमिति जयदेवः? रुचिरत्राभिलाषार्थकः, तत्र पुनः क्रियाफलं न कर्त्तृगामि सार्थकत्वाभावादिति नासङ्गतिः।

यदपि प्रकरणेऽत्र कारकोपपदविभक्ति-लकारार्थात्मपदपर पदप्रक्रियारूपा श्चत्वारो विषया निर्णीताः, तदपि तेषु कारकस्य हि मुख्यत्वादाधिक्येन व्यपदेशा भवन्तीति न्यायेन प्रकरणस्य कारकनाम्नैव परिचय इति ज्ञातव्यम्।

ननु पूर्वोक्तषष्ठ्याद्यपवादकत्वेन उपपदविभक्तेः कारक प्रकरणान्तर्भवनमस्तु युक्तम्, आत्मपरपदविधे स्तथा अच्युतादिकालार्थ निर्णयस्य तु धात्वङ्गत्वात् धातुप्रकरण एव वक्तुमुचितमेतद्द्वयम्, व्याकरणान्तरेषु तथैव परिकल्पनं दर्शनादिति चेत्? सत्यं,

---

यथा अध्ययनादुपरतः। उभयथाप्यकर्मकत्वं। तस्माद्विभाषा चेदकर्मक इति विशेषणबलादेव। विप्रमुपरमतीत्यादौ तु प्रत्युदाहरणे उपसंप्राप्तिपूर्विकायां रतौ रमिर्वर्त्तते इत्यवगन्तव्यमिति सर्वसम्मतं तस्मात् संप्राप्तिपूर्वत्वात् सकर्मकत्वं। अतएवान्तर्भूत-ण्यर्थं स्वीकृत्याह विष्णुदत्तमुपरमति उपरमयतीत्यर्थः। उपसंप्राप्तिपूर्वकं क्रीडतीत्यर्थः।

विभाषा। पूर्वसूत्रेणैवास्यार्थकथनं द्रष्टव्यं।

बुधे। बुधादयोऽण्यन्ता एवोपात्ता एषां साहचर्यात् सर्वेण्यन्ता एव ग्राह्याः। अणाविति वक्ष्यमाणात्।

कम्पा। चलनार्थभोजनार्थयोर्णेरुत्तरे तद्वत् आत्मपदं न भवतीत्यर्थः।

अणौ। बुधादयोऽणिङन्ता एवोपात्ता एषां साहचर्याच्चेतनकर्त्तृत्वे अकर्मकाश्चाणिङन्ता एव ग्राह्या इति भाष्यादिमतं सूत्रेणोपनिबद्धं। सूत्रयुग्मके सूत्रद्वये। कम्पाहारार्थ इति अणौ ये स्युरिति च सूत्रद्वये।

अत्ति। अत्तेराहारार्थत्वात्। पिवतेरपि तथार्थात् दमधातोरादिपदेनायासादीनां ग्रहणं केषाञ्चित् चेतनकर्त्तृत्वे अकर्मकत्वात् केषाञ्चित् आहाराद्यर्थत्वादात्मपदाप्राप्ते प्रतिप्रसवसूत्रमिदं। आयासायामपरिमोहा रुचनृत्वदवसधेटाः दम्यादिपदग्राह्याः। कर्त्तृगामिक्रियाफले आत्मपदविधानात् अकर्त्तृगामिक्रियाफले प्रत्युदाहरणं। विप्रानादयति सूपकार इति यद्यपि फलाकाङ्क्षया बिना कर्त्तुं प्रवृत्त्यसम्भवस्तथापि यत् कर्त्तृगामीति कृतं तत् ज्ञापयति। फलपदेनात्र प्रधानफलमभिधीयते यथा यागक्रियायाः फलं यजमानस्य

**वासयते, धापयते । अकर्त्तृगामि फले—विप्रान् आदयति सूपकारः ।**

**॥ इति श्रीहरिनामामृताख्ये वैष्णवव्याकरणे विष्णुभक्त्यर्थ प्रकरणं चतुर्थं कारकं समाप्तम् ॥**

---

श्रूयताम्—कर्त्तृकर्मरूपं कारकं खलु आख्यातस्य वाच्यम्, आख्यातः पुनरात्मपदपरपद-स्वरूपः, तथा कालात्मकोऽच्युतादिश्च । ततः परम्परया अच्युतादि पुरःसर आत्मपदादिश्च कारकस्योपकारक एव सम्पद्यते । तस्मात् कारकान्तर्भाविण ह्येतयोश्च विशेषव्यवस्थाख्यानं नासङ्गतमिति ।

॥ इति श्रीहरिनामामृते वैष्णव व्याकरणे श्रीगोपालदास
विद्यारत्नविरचितायाममृतास्वादिन्यां कारकप्रकरण
व्याख्या सम्पूर्णा ॥

---

स्वर्गप्राप्तिः पाकक्रियायाः फलं भुक्त्वा तृप्तिरिति । दक्षिणा वेतनादिकन्तु न प्रधानं फलं । अतः क्वचित् कर्त्तृगामिफलं क्वचिन्नेति । अतएवाकर्त्तृगामिव्यावृत्त्यर्थं कर्त्तृगामीति विशेषणं सार्थकं ॥ २६७ ॥

इति श्रीहरिनामामृताख्यवैष्णवव्याकरणविष्णुभक्त्यर्थप्रकरणटीकायां श्रील-हरेकृष्णाचार्य-
विरचितायां वेदान्तभूषण-श्रीमद्गोपीचरणदासाख्यपरिशोधितायां बालतोषणी-
नाम्न्यां चतुर्थी कारकपादटीका समाप्ता । लिप्सायान्वा एक एतत्प्रभृतेः
कारकस्य तु । लक्षणस्य कृता व्याख्या श्रीजगन्नाथशर्मणा ॥



अथ कृदन्त प्रकरणम् ।

## १. धातुं सर्वमुपादाय सर्वं रूपं करोति यः ।
## कृत् स एवेति विस्मित्य तद्धर्मा कृत् प्रशस्यते ॥

गौरगोविन्दपादाब्जमत्तभृङ्ग ! सनातन !
रूप ! जीवक ! गोपाल ! रघुनाथ ! दयस्व मे ॥

स्वाद्याख्यातकृत्तद्धितात्मकप्रत्ययचतुष्टयानां मध्ये प्रथमद्वयं द्वाभ्यां प्रकरणाभ्यां सविशेषं विवृतम् । ततः क्रिया सम्बन्धविशेषिणं कारकं सप्रपञ्चं व्याख्याय, तत् प्रसङ्गे-कर्त्तृ कर्मणोः षष्ठी कृद्योगे इति सूचनात्, अथावसरप्राप्तं कृत् प्रकरणमुपक्रममाण स्तत् स्वरूपं वक्तुं श्लेषेण तस्य विष्णुसाधर्म्यमुपपादयति—

**अमृता०**—१. धातुमिति । यो महाविष्णुः सर्वं धातुं पृथ्यप्तेजोमरुद्व्योमरूपं सूक्ष्मरूपेणात्मनि स्थितं महाभूतपञ्चकं उपादाय व्यक्तीकृत्य तेनहि सर्वं रूपं प्राकृतचराचरात्मकं करोति सृजति स्वमायाशक्तिद्वारेति शेषः, सएव कृत् यथार्थकर्त्ता इति विस्मित्य त्रिस्मयं लब्ध्वा तद्धर्मा सएव धर्मः ( सर्वधातुग्रहणपूर्वक सर्वरूपादानरूपः ) यस्य तादृशः कृत् प्रत्ययः प्रशस्यते प्रकर्षेणाख्यायते । कृत् प्रत्ययश्च—शब्दयोनिभूतं ( भ्वादिलक्षणं ) सर्वं धातुमुपादानतयादाय नामात्मकं सर्वं रूपं विदधातीति सृष्टिलीलोपलक्षितेन विष्णुना सह कृतः साधर्म्यलाभात् कृदनुशीलनञ्च विष्णु स्मरणस्यावश्यम्भावितया वैष्णवजनहित करत्वं सम्पत्स्यत इत्याशयः । श्लेष्मादि रसरक्तादि महाभूतानि तद्गुणाः । इन्द्रियान्यश्म विकृतिः शब्दयोनिश्च धातवः ॥ इत्यमरः ॥

**बाल०**—धातुं । नाम्न उत्तरे तद्धितप्रत्यया विधेया नाम्नस्तु कृत्प्रत्यसिद्धत्वमेव स्वरूपमतः कृत्प्रकरणमारभमाणः कृतो विष्णुधर्मत्वं प्रतिपाद्य तत्कथनस्य शुभादृष्ट-जनकतां भङ्ग्या सूचयन् कृत्प्रत्ययस्य कथ्यमानत्वमाह धातुमिति । यः कोऽप्यनिर्वचनीयः पुरुषः सर्वं धातुं पृथिव्यप्तेजोवाय्वाकाशरूपं उपादाय गृहीत्वा सर्वं रूपं स्थावरजङ्ग-मात्मकं करोति उत्पादयति स एव कृत् कर्त्ता इति विस्मित्य आश्चर्यं कृत्वा तद्धर्मा तदेव सर्वधातुग्रहणपूर्वकसर्वरूपकरणमेव धर्मः यस्य स कृत् प्रशस्यते प्रकर्षेण संकीर्त्यते । एवम्भूतो महाविष्णुरेव भवति । अथच यः कोऽपि प्रत्ययः सर्वं धातुं शब्दयोनिरूपं भूवादि-दशगणपठित सनाद्यन्तञ्च उपादाय सर्वं रूपं नामात्मकं करोति सोऽपि कृत् एवम्भूतः कृत्प्रत्ययो भवति, इति विस्मत्य विस्मयं लब्ध्वा तद्धर्मा तत्तस्य विष्णोर्धर्म इव धर्मः यस्य

**२. धातोः कृद् बहुलं कर्त्तरि।**

धातोरुत्तरे कृत्प्रत्ययो बहुलं स्यात्। स च कर्त्तरीत्यधिक्रियते। वासुदेवोऽयम्।

**३. वर्त्तमानादौ शतृशानावच्युताभौ फलान्तर प्रयोगे परपदात्मपदयोः।**

शदित्यन्ये। ऋशावितौ, शवादिः। ततश्च भवत् इति स्थिते, नामसंज्ञायां प्रत्ययेषु विष्णुभक्तिमात्रवर्जनात् कृत्तद्धितयोरपि नामत्वं सिद्धम्। ततश्च "प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः" इति न्यायेन धात्वंशस्यापि तदन्तर्भूतत्वात् तेन मिलित्वा नामत्वं सिद्धम्।

---

अमृता०—२. धातोरिति। धातोरुत्तरे कृत्प्रत्ययो बहुलं यथा स्यात्तथा भवति कर्त्तरि वाच्ये। वासुदेवाख्यः अधिकारोऽयमाप्रकरणपरिसमाप्तेः। यत्र तु भावे कर्मणि वा विधास्यते तत्र कर्त्तरीत्यस्यापवादो ज्ञेयः।

अमृता०—३. वर्त्तमानादाविति। वर्त्तमानादौ काले फलान्तर प्रयोगेसति धातोरुत्तरे कर्त्तरि परपदात्मपदयो र्यथाक्रमं शतृशानौ प्रत्ययौ भवतः, तौ च अच्युताभसंज्ञौ स्याताम्। परपदात्मपदयोरिति षष्ठी, तेन परपदस्य स्थाने शतृ, आत्मपदस्य स्थाने शानः स्यादित्यर्थः। फलान्तरप्रयोग इति—वाक्यसाकाङ्क्षापूरकतया क्रियान्तरस्य प्रयोगे सतीत्यर्थः, क्रियासाध्यस्य हि फलत्वेन निरूपितत्वात्। यद्यपि विष्णुनिष्ठादिकतिपय प्रत्ययवर्जं कृदन्तमात्रस्य सामान्यतः क्रियान्तरसाकाङ्क्षत्वमुक्तं प्राक् तथापि क्रियान्तरस्य गम्यत्वेऽपि अन्ये प्रत्यया भवन्ति, शतृशानौ तु क्रियान्तरस्य साक्षात् प्रयोग एव

---

सविष्णुधर्मा कृत् कृत्प्रत्ययः प्रशस्यते प्रकर्षेण कथ्यते इति। विष्णुर्धातुमुपादाय सर्वं रूपं करोति कृत्प्रत्ययोऽपि तमुपादाय तत् करोतीति कृतो विष्णुधर्मत्वं। श्लेष्मादि रसरक्तादि-महाभूतानि तद्गुणाः। इन्द्रियाण्यश्मविकृतिः शब्दयोनिश्च धातवः। इति नानार्थवर्गः। रसरक्तादीत्यत्रादिपदेन त्वगसृङ्मांसमेदोऽस्थि मज्जा-शुक्राणि धातव इत्यन्योक्तं गृहीतं। तद्गुणा महाभूतक्षित्यादीनां गुणास्तेहि शब्दस्पर्शरूपरसगन्धाः॥ १॥

बाल०—धातोः। धातोरिति पञ्चम्यन्तं। बहुलमिति क्रियाविशेषणं। सचेति सच कृत्प्रत्ययः कर्त्तरि वाच्ये भवति। इतीति एतत् सूत्रमित्यर्थः। इत्यधिक्रियते इति अधिकारसूत्रमेतदित्यर्थः॥ २॥

बाल०—वर्त्त। वर्त्तमानादौ काले धातोरुत्तरे फलान्तरप्रयोगे सति कर्त्तरि वाच्ये परपदात्मपदयोर्विषये शतृशानौ बहुलं भवतः, तौ अच्युताभौ अच्युताभसंज्ञौ। फलान्तरेति फलान्तरस्य वाक्यसमापकत्वेन प्रयोगे सतीत्यर्थः। परपदात्मपदयोरिति षष्ठीद्विवचनान्तं

**ततो वैष्णवो भवन् विराजते, वैष्णवो भवन्तौ विराजेते, वैष्णवाभवन्तो विराजन्ते। एवं मालां कुर्वन् विराजते, कुर्वाणः। श्रीकृष्णं भजता जितम्, श्रीकृष्णं भजतः शिवम्। सम्बोधने च— हे कुर्वन्, पा पाने पिवन्। भौवादिकस्यैव पिवादेशो घ्रादीनां साहचर्यात्। पा रक्षणे पान् पान्तौ।**

---

विधीयेते नतु तस्य गम्यमाने। क्रियात्वनामत्वयो र्युगपदेवेष्टत्वादेतयोः क्रियास्वरूपेणात्मपदादिस्थानीयत्वम् वर्त्तमानादिकालभागित्वञ्च; नामत्वांशे तु कारकभागित्वम्। उभावेव स्वरूपौ विशेषणतया व्यवह्रियेते; अतएवासमापिकाक्रिया क्रियास्वरूपेण स्वविशेष्यभूतां समापिकाक्रियां नित्यमेतावपेक्षेते, नामस्वरूपेण च स्वविशेष्यभूतं कारकमिति विवेकः।

ऋशावितौ इति—ऋराम इत् नुम् प्राप्त्यर्थः, शराम इत् शिवत्वेन कृष्णधातुकत्व स्थापनार्थः। ततः शप् कृष्ण धातुक इति शप्। ननु अच्युताभसंज्ञत्वादेव शवादिसिद्धेः शित्करणं निष्फलमिति चेत्? मैवं, शिवत्वाभावेन पः पिव इत्याद्यादेशानामनुत्पत्तेः। नचाच्युताभत्वेन कृष्णधातुकत्वात् शपि कृते शिवत्वमपि सिध्येदिति वाच्यम्, अत्र सिद्धेऽपि तस्मिन्, अदादौ शपो महाहरत्वात् सन् घ्नन् प्रभृति पदानि नैव सिध्येयुः, अच्युताभस्य निर्गणत्वं दुर्घटत्वादिति। तस्मादपृथु कृष्णधातुको निर्गुण इति च यथा चरितार्थं स्यात्तदर्थञ्चशित् करणं ज्ञेयम्।

कृदन्तस्य नामत्वमुपपादयन् युक्तिमाह—नामसंज्ञायामित्यादि। 'अधातु विष्णुभक्तिकमर्थवन्नाम इत्युक्तलक्षणे प्रत्ययेषु स्वाद्याख्यात कृत्तद्धितेषु मध्ये स्वाद्याख्यातरूप विष्णुभक्तिमात्रस्य वर्जनादवशिष्टयोः कृत्तद्धितयोः प्रत्यययो र्नामत्वं सुतरां सिद्धम्। ततः प्रकृति र्धातुरूपा, प्रत्ययः कृद्रूपः, तौ प्रत्ययार्थं साधन (कारक) प्रधानरूपमर्थं सह युगपद्ब्रूत इति न्यायार्थः। अनेन न्यायेन धात्वंशस्य गौणतया कृदन्तर्भूतत्वात् प्रत्ययांशस्य च प्राधान्यात् धात्वंशेन मिलित्वा कृदन्तस्य नामार्थं सिद्धमित्यर्थः।

भवन्निति—भू शतृ शप्, गोविन्दः। ततो भवत् शब्दात् सु, चतुर्भुजानुबन्धत्वान्नुम्, सो हरः, सत्सङ्गान्तहरः। विराजत इति—भवन्निति वैष्णवस्य समानाधिकरणं (विशेषणं) असमापिका क्रिया च। ततो वाक्यसमापकत्वेन (आकाङ्क्षापूरकत्वेन) फलान्तर द्योतिकाया विराजत इति क्रियायाः प्रयोग इति भावः। एवं भवन्तावित्यादौ विशेष्यानुरूपं लिङ्गवचनादिश्चानुसन्धेयम्। कुर्वन्निति—शपोऽपवाद उः, गोविन्दः, अरामस्य उरित्यादि साधनरीतिराख्यातवज् ज्ञेया। मालामिति कर्म अनुक्तं कर्त्तरि

---

शतृप्रत्ययः परपदस्य विषये भवति, शानप्रत्यय आत्मपदस्य विषये भवति इत्यर्थः। ततश्च शतृप्रत्ययः परपदीनां शानप्रत्ययः आत्मपदीनामिति। शवादीति शिवत्वात् कृष्णधातुकत्वं। ततश्च शप् कृष्णधातुक इति शप्। ननु मात्रालाघवमात्रेण पुत्रोत्सववन्मननात् अतृ-आनावच्युताभाविति कृते अच्युताभत्वेन कृष्णधातुत्वात् शपादि सिध्येत् ततो भवन्

**फलान्तरेत्यादि किम् ? वैष्णवः करोति । सकर्मकात्तदप्रयोगेऽपि क्वचित्—सन् विद्यमानो घटमानोऽसो ।**

---

शतुर्विधानात् । एवं श्रीकृष्णमिति । श्रीकृष्णं भजतः जनस्य शिवम् वास्तव कल्याणं भवतीत्यर्थः । नामत्वमेव स्पष्टयति—सम्बोधने चेति ।

फलान्तरं विना तौ न स्यातामिति व्यावृत्त्या दर्शयति—वैष्णवः करोतीति । अत्रैकक्रियासाध्यमेकमेव फलं विवक्षितमिति नह्येवं प्रयोगः सूत्रविषय इत्यर्थः । तस्मादेककर्त्तृकयोः समकालिकयोः क्रिययोरेव विषयः अच्युताभ इति निष्कर्षः । ननु कथं वैष्णवः करोति गच्छति चेत्यपि प्रयोगो दृश्यते ? इष्टापत्तिरियम्, निषेधाभावात् । अतएवाधिकारसूत्रे धातोः कृद्बहुलमित्युक्तम् । यदा प्रयोक्तुरप्रवृत्ति स्तदा धातुस्वरूपेण हि तिष्ठतीति न दोषः ।

अकर्मकादिति—अकर्मकादिह सत्ता प्रधानादेव धातो स्तदप्रयोगे फलान्तराप्रयोगेऽपि क्वचित् तौ भवतः, बाहुल्यादित्यर्थः । तेन असौ सन्, अस्तीत्यर्थः; विद्यमानो विद्यत इत्यर्थः, घटमानो घटत इत्यर्थः । सन् इति—अस् शतृ, श्नमस्त्योररामहरो निर्गुण इत्यरामहरः, अन्यत् साधनंसमानम् । विद्यमान इति—विद सत्तायां दिवादिः, आत्मपदित्वात् शानः, अतो मुगाने इत्यग्रिमसूत्रेणमुगागमः । घटमान इति—आत्मपदित्वात् शानः पूर्ववत् ।

---

गच्छन्नित्याद्यपि सिध्येतर्हि शतृशानौ कथमिति चेत्तदैवं समाधेयं । भवन्नित्यादौ सिद्धेऽपि जुहोत्यादिगणे इयृच्छन्नित्यत्रादादित्वेन शपोऽभावात् नारायणस्य स्थाने अर्त्ते ऋच्छ इत्यनेन ऋच्छादेशो न स्यादतः शतृशानाविति अच्युताभाविति पदं वर्त्तमाने भूरिप्रयोगार्थं । नामेति प्रत्ययेष्विति प्रत्ययानां मध्ये इत्यर्थः । ततश्च कृत्तद्धितयोर्नामत्वात् । प्रकृतीति । प्रकृतीत्यादि न्यायेन प्रत्ययार्थस्यैव प्राधान्यं भवति, अतो धात्वंशस्य भुव इत्यस्यापि तदन्तर्भूतत्वात् प्रत्ययान्तर्भूतत्वात् तेन धात्वंशेन मिलित्वा नामत्वं सिद्धमिति कृत्प्रत्यस्येति शेषः । कुर्वन्निति डु कृञ करणे तनादेः शपोऽपवाद उरिति उः । गोविन्दः करोत्यरामस्य उर्निर्गुण इति अरामस्य उः उद्वयं वः । ततः कुर्वच्छब्दात् सुँ चतुर्भुजानुबन्धत्वान्नुम् सोर्हरः सत्सङ्गान्तहरः । श्रीकृष्णमिति भजता जनेन जितमत्र सर्वमिति कर्मोह्य तत्त्वनुक्तं समापकजितस्य भावे विहितत्वात् श्रीकृष्णं भजतः शिवमिति भजतो जनस्य शिव मङ्गलं । अत्र क्रियान्तरमध्याहार्यं । सम्बोधने हेति उदाहरणं दर्श्यते इति शेषः । पिबन्निति पः पिब इत्यादिना पिबादेशः कथं न भवतीति चेत्तत्राह भौवादिकस्यैव पिबादेश इति हेतुमाह घ्रादीनां साहचर्यादिति । वैष्णवः करोतीत्यत्र फलान्तरप्रयोगाभावः । अकर्मकादिति अकर्मकाद्धातोरुत्तरे तस्य फलान्तरस्य अप्रयोगेऽपि क्वचित् शतृशानौ भवतः, बहुलमित्युपादानादिति शेषः । सन्निति अस भुवि श्नमस्त्योररामहरो निर्गुण इत्यनेन अरामहरः । विद्यमान इति विद सत्तायां दिवादिरात्मपदी अतो मुगान इति मुक् अतो मुगान इति सूत्रमतिनिकट एव वक्ष्यते, अतः, असिद्धरूपं न त्याज्यमिति प्रतिज्ञायां न विरोधः । घटमान इति घट चेष्टायां भूवादिरात्मपदी ॥ ३ ॥

४. अतो मुगाने ।

पचमानं वैष्णवं पश्य ।

५. मा युक्ताच्छतृशानावाक्रोशे ।

मा पचन्नवैष्णवो विष्णो नैंवेद्यम्, मा पचत्वित्यर्थः ।

६. क्रियायाश्चिह्ने हेतौ च शतृशानौ ।

तिष्ठन् हरिं स्तौति । हरिं भजन् मोदते ।

---

**अमृता०**—४. अत इति । आने प्रत्यये परे अरामादुत्तरे मुक्इत्यागमः स्यात् । उकावितौ मराम शेषः । किदागमत्वेन प्रकृतिसम्बन्धी मुगेषः, अन्यथा शानस्य अच्युताभत्वेन अआ वमोरिति प्राप्येत ।

**अमृता०**—५. मा युक्तादिति । आक्रोशे गम्यमाने फलान्तराप्रयोगेऽपि मा युक्ताद्धातोः शतृशानौ स्याताम् । सानुबन्धोऽयं माशब्दः, "माङ्याक्रोशे" इतिवार्त्तिक निर्देशात् । सकर्मकार्थो विधि स्तथा माङ् योगे सर्वापवादी भूतेश इति शासनात् वर्त्तमाने अप्राप्ते तत्प्राप्त्यर्थश्च । विष्णो नैंवेद्यं—विष्णवे निवेदनीयमन्नादि । केचिदत्र विभाषामाहुः ।

**अमृता०**—६. क्रियाया इति । चिह्नं लक्षणम्, हेतुर्जनकः । अन्यक्रियायाः चिह्ने हेतौ चार्थे वर्त्तमानाद्धातोः शतृशानौ भवतः । तिष्ठन् स्तौतीत्यत्र कर्त्तु र्वैष्णवस्य स्थिति स्तस्य स्तुति क्रियाया श्चिह्नम्, अवस्थाविशेष इत्यर्थः । तिष्ठन्निति—पः पिव इत्यादिना ष्ठा धातोः तिष्ठादेशः । एवंशयानो भुङ्क्ते शिशु रित्यादि । हरिं भजन् मोदत इत्यत्र भजनं मोद क्रियाया हेतुः, भजनहेतुको मोद इत्यर्थः । एवमधीयान काशीमधिवसतीत्यादि । अध्ययनहेतुकः काशीवासः । क्रियाया इतिकिम्—द्रव्यगुणयो श्चिह्ने हेतौ वा मा भूत्—यः सर्वान् नमस्यति स वैष्णवः; इह द्रव्यचिह्ने तथा यदुत्प्लवते तल्लधु इत्यत्र गुणचिह्ने न तौ । एवं तयो र्हेतौ च प्रतिषेधो ज्ञेयः ।

---

**बाल०**—अतो । आने परे अत उत्तरे मुग् भवति । उकावितौ । पचमानमिति डु पच ष पाके भुवादिरुभयपदी । क्वचिन्न । मुगिति शेषः । अपि शाकं पचानस्येति जुमरादिमतं । अस्मन्मते कृद्बहुलत्वाद्द्रष्टव्यमिति ॥ ४ ॥

**बाल०**—मायुक्ता । आक्रोशे गम्यमाने फलान्तराप्रयोगेऽपि मायुक्ताद्धातोरुत्तरे शतृशानौ भवतः । नैवेद्यमन्नादि ॥ ५ ॥

**बाल०**—क्रिया । धात्वर्थे भिन्नायाः क्रियायाश्चिह्ने हेतौ च सति धातोरुत्तरे शतृशानौ भवतः । यस्य धातोरर्थश्चिह्नं हेतुश्च तस्माद्धातोरुत्तरे शतृशानौ भवत इत्यर्थः । चिह्नं ज्ञापकं हेतुर्जनकः । तिष्ठन् हरिं स्तौतीति । अत्र स्थितिः स्तुतिक्रियायाश्चिह्नं अतः स्थाधातोः शतृप्रत्ययः । तिष्ठन्निति पः पिव इत्यादिना स्थस्तिष्ठः । हरिं भजन् मोदत

**७. आत्मपदस्थानीयत्वाद् बाहुल्याच्च शानकानौ भावकर्मणोश्च, भावकृद् ब्रह्मणि ।**

**८. उपेन्द्रात् कृन्नस्य सर्वेश्वरात् परस्य णत्वं, भाभू पुना कमि गमि प्यायि वेप वर्जम् ।**

---

**अमृता०**—७. आत्मेति। शानकानौ भावकर्मणोश्च स्याताम्, तत्र हेतुः—आत्मपद स्थानीयत्वादिति। आत्मपदस्थाने शान इत्युक्तम्, कानश्चात्मपद स्थाने विधास्यते। भाव कर्मणी अपि आत्मपदादेव विधीयेते, भावे कर्मणि सर्वस्माद्धातोः स्यादात्मने पदमिति स्मरणात्। अतः शानकानौ भाव कर्मणोश्च भवत इत्यायातम्। तथापि भावकृतः सर्ववचनार्हत्वात्—"प्रथमपुरुषैकवचनमेव भावे" इत्युक्तनियम इह व्यभिचरतीति विचारेणापरितुष्यन् पुन हेत्वन्तर मुपन्यस्यति—बाहुल्याच्चेति। आदावेवाधिकार सूत्रे बहुल पद निवेशात् कर्त्तुरप्रवृत्तौ भावस्य कर्मणो वा प्रवृत्ति र्भवतीति भावः। भावकृद् ब्रह्मणीति—भाव वाच्ये विहितः कृत्प्रत्ययो ब्रह्मणि वर्त्तत इत्यर्थः। प्रथमपुरुषैकवचनमेव भावे इत्युक्त नियमस्तु कृति न प्रवर्त्तते किन्तु आख्याते एव। कृदभिहितो भावो द्रव्यवत् प्रकाशते इति विशेष परिभाषा बलात्। विशेषस्त्वग्रे वक्ष्यते।

**अमृता०**—८. उपेन्द्रादिति। पूर्वोक्तनिमित्तभूतादुपेन्द्रादुत्तरस्य पुनः सर्वेश्वरपरस्य कृदन्तनस्य णत्वं भवति। असमानविष्णुपदत्वादप्राप्ते विधानम्। तत्र भा दीप्तौ, भू सत्तायां, पूञ् पवने, कमु कान्तौ, गमलृ गतौ, ओप्यायी वृद्धौ, टुवेपृ चलने इत्येतान् वर्जयित्वा अन्येभ्यो धातुभ्य उत्तरस्य कृन्नस्य णत्वं भवतीत्यर्थः।

---

इत्यत्र भजनं मोदक्रियाया हेतुरिति भजधातोः शतृप्रत्ययः। क्रियाया इति किं। यः पठति स विष्णुदत्तः। अत्र पठनं विष्णुदत्तस्य ज्ञापकं नतु क्रियायाः। चिह्ने हेतौ चेति कि। पचति च पठति च ॥ ६॥

**बाल०**—आत्म। शानकानौ भावकर्मणोश्च भवतः। हेतुमाह आत्मेति। शानकानयोरात्मपदस्थानीयत्वेऽपि प्रथमपुरुषैकवचनाभावाद्भाववाच्ये न सम्भवतीति अपरितुष्य हेत्वन्तरमप्याह बाहुल्याच्चेति। कानो वक्ष्यते। शानकानौ आत्मपदस्थाने भवत इति तयोरात्मपदस्थानीयत्वं। भावकृद्ब्रह्मणि वर्त्तते। उपेन्द्रादुत्तरस्य कृत्प्रत्ययसम्बन्धिनो नस्य सर्वेश्वरपरभूतस्य णत्वं भवति। भा दीप्तौ भू सत्तायां पुञ पने कमु कान्तौ गमलृ गतौ ओ प्यायि वृद्धौ टु वेपृ चलने इत्येतान् वर्जयित्वा उपेन्द्रादुत्तरस्य सर्वेश्वरपरभूतस्य कृन्नस्य णत्वं वा भवति ॥ ७॥

**बाल०**—णेर्वा। ख्या प्रकथन इत्यस्माद्विहितस्य कृन्नस्य णत्वं वा भवति। उपेन्द्रादुत्तरस्येत्यादि सर्वत्र योज्यमेव। नरामोद्भवाद्विहितस्य कृन्नस्य णत्वं भवत् ईश्वरादेरेव नरोमोद्भवाद्भवति नान्यस्मादिति। विष्णुजनादेरीश्वरोद्भवाद्विहितस्य कृन्नस्य णत्वं वा भवति। प्रगीयमाणमिति गै शब्दे भावे शानः, दामोदरमास्थापिवतेत्यादिना आरामस्य

**९. णे र्वा ख्यातेश्च।**

**१०. नरामोद्धवादीश्वरादे रेव।**

**११. विष्णुजनादेरीश्वरोद्धवाद् वा।**

---

**अमृता०**—९. णेरिति। उपेन्द्रादुत्तरात् ण्यन्तधातोः ख्यातेश्च कृदन्तनरामस्य सर्वेश्वर परस्य णत्वं विभाषया स्यात्।

**अमृता०**—१०. नरामेति। नरामोद्धव श्चेद्धातु स्तर्हि सामर्थ्याद्वि विष्णुजनान्त इति लभ्यते, तदा ईश्वरादेरेव तादृशाद्धातोरुत्तरे विहितस्य कृतो नरामस्य णत्वं स्यादुपेन्द्रात् सर्वेश्वरपरात्। पूर्वस्यैव विशेष एषः।

**अमृता०**—११. विष्णु इति। विष्णुजन आदिः, ईश्वर उद्धवश्च यस्य तादृशाधातोरुत्तरे स्थितस्य कृन्नस्य णत्वं वा भवति, उपेन्द्रात् सर्वेश्वरपरात्। पूर्वस्यैव विशेषः। तत्र

---

ईरामः। भावकृतो ब्रह्मत्वं णत्वं। प्रगीयमाण इति कर्मणि शानः। सर्वेश्वरात् परस्येति किं प्रभग्नः। प्रभग्न इति भन्जो आमर्दने क्तः ओरामेत्वात् विष्णुनिष्ठा तस्य नः अनिरामेतामित्यादिना नरामहरः विष्णुनिष्टादेः शस्य स्थानिवद्भावात् चवर्गस्य कवर्गः। प्रभायमानमिति भावे शानः ॥ ८ ॥

**बाल०**—ण्यन्ते। ण्यन्ते च भादौ णत्वं न भवति। प्रभाप्यमानमिति अर्त्तिह्रीब्लीरीक्नुयीक्ष्माय्यारामेभ्यः पुक् यलोपो गोविन्दश्च णौ दरिद्रां विनेति पुक्। पुनेति श्नानिर्देश इति तस्मात् क्र्यादेरेव णत्वं न भवति। पूङस्विति पूङ् पवन इत्यस्य भूवादेस्त्विवत्यर्थः। प्रपवमाणमिति कर्त्तरि शानः। णेर्वेतस्य उदाहरणं दर्शयति णेस्त्विति। एवं ख्येति। तदुदाहरणं यथा प्रख्याप्यमाणः प्रख्याप्यमानो वेति। नरामेतीति। नरामो कृवादीश्वरादेरेवेत्यस्योल्लेखः। प्रेङ्ख्यमाणमिति इखि गतौ ईश्वरादित्वादत्र णत्वं। प्रकम्प्यमानमिति कपि चलने ईश्वरादित्वाभावादत्र न णत्वं। नौ कृतेत्विति नरामोद्धवधातुत्वं न स्यात्, किन्तु खरामोद्धवधातुत्वं स्यादिति तत्र तु विकल्प एवेति णेर्वेत्यनेनेति शेषः। उन्भ पूरण इत्यस्य इत्यनन्तरं ण्यन्तस्येति ज्ञेयं। अण्यन्तस्य तु अस्माकं मतेऽपि नित्यं प्रोम्भणमिति उन्भ पूरणे तुदादिः। इविरिति अन्तस्थान्त इति अविष्णुवर्ग्यरामान्त इत्यर्थः। प्रेण्वनमिति इवि व्याप्तौ इरामेत्वान्नुम् अतो भाव इति अनः वंणवपरत्वाभावात् अविष्णुपदान्तस्येत्यादिना नस्य न विष्णुचक्रं। अत्र ईश्वरादित्वेऽपि पूर्वोक्तनिमित्तत्वाभावात् न णत्वं यत उक्तं पूर्वोक्तनिमित्तत्वे सत्येव षत्वणत्वे इति सवश्वरादेरितरव्यवधानात् पूर्वोक्तनिमित्तत्वाभावः। विष्णुजनादेरित्यादेरुदाहरणं दर्शयति विष्ण्विति। प्रगूहमाण इति गूह सम्वरणे भ्वादिरुभयपदी कर्त्तरि शानः शप् गोविन्दः गोह ओ ऊ सर्वेश्वर इति ओरामस्य ऊरामः मूक् णत्वं ॥ ९ ॥

**बाल०**—आसः। आस उपवेशन इत्यस्माद्विहितस्य शानस्य स्थाने ईनो भवति ॥१०

**बाल०**—पर। ताच्छील्यवयःशक्तिषु गम्यमानासु आत्मपदिनः परपदिनश्चोत्तरे

**वैष्णवेन प्रगीयमाणं वर्त्तते। वैष्णवेन प्रगोयमाणोहरिः प्रीणाति। भादि निषेधः किम्—प्रभायमानम्।**

**१२. ण्यन्ते च न।**

**प्रभाप्यमानम्। पुनेति श्नानिर्देशः, ततः पूञः प्रपूयमानम्। पुङस्तु णत्वमेव—प्रपवमाणम्। णेस्तु—प्रगाप्यमाणः प्रगाप्यमानो वा। एवं ख्या। नरामेति—प्रेङ्ख्यमाणमित्यत्रैव णत्वं, नतु प्रकम्प्यमानमित्यत्र। णौ कृते तु नरामोद्धव धातुत्वं न स्यात् तत्र तु विकल्प एव,—**

---

सामान्यतः प्रथमसूत्र मुदाहरति—प्रगीयमाणमिति। अत्र भावे शानः। प्र इति निमित्तभूत उपेन्द्रः, तस्मात् सर्वेश्वरादि व्यवधानेऽपि सर्वेश्वरात् परस्य शानप्रत्ययस्य नस्य णत्वम्। उत्तरत्र कर्मणि शानः, तेन हरिरिति कर्म उक्तम्।

**अमृता०**—१२. ण्यन्त इति। भादीनां ण्यन्तत्वेऽपि तदुत्तरस्य कृन्नस्य णत्वं न स्यात्। णेर्वेत्यनेन प्राप्ते निषेधः। प्रभाप्यमानमिति—अर्त्ति ह्रीत्यादिना पुक्। प्रपूयमानमिति—निषेधेषु पुनेति श्ना निर्देशात् क्र्यादेरेव पूञः कृन्नस्य णत्वं निषिध्यते, अतो भ्वादे स्तु स्यादेव—प्रपवमाणमिति, कर्त्तरि शानः। प्रगाप्यमाण इति पूर्ववत् ण्यन्तात् पुक्। ख्यातेः प्रख्याप्यमाणः प्रख्याप्यमानो वा। नरामेति सूत्रप्रतीकः, नरामोद्धवादिति सूत्रमुदाहरतीत्यर्थः। प्रेङ्खयमाणमिति—इखि गतौ, भावे शानः, धातुरीश्वरादिः इरामेत्त्वान्नुमि कृते नरामोद्धवत्वम्, तत स्तत्परस्य कृन्नस्य णत्वम्। प्रकम्प्यमानमित्यत्र नरामोद्धवत्वेऽपि ईश्वरादित्वाभावान्नणत्वम्।

णौ कृते त्विति—णौ कृते सति णिरेवान्ते स्थितः, ततः खरामस्य उद्धवत्वान्न हि तत्सूत्रप्रवृत्तिः, किन्तु णेर्वेत्यनेन विभाषा, णेर्हरः। प्रोम्भणमिति—भावे अनः कृत्, अस्य च नित्यं णत्वं मन्यते काशिकादिषु। तत्र—"इजादेः सनुमः" इति सूत्रे नुम् ग्रहणमनुस्वारोपलक्षणार्थमिति सिद्धान्तस्य अनुगुणमुदाहरणम् प्रोम्भोणमित्यादि दर्शितम्।

---

शानो भवति। ताच्छील्यं तत्स्वभावता फलनिरपेक्षया प्रवृत्तिस्ताच्छील्यमिति च। शानस्य आत्मपदस्थानीयत्वात् परपदिनो न प्राप्नोतीति विधानं। भक्तं भजमान इति अत्र ताच्छील्यं गम्यते भजधातोरुभयपदित्वादात्मपदित्वं परपदित्वञ्च। कवचं विभ्राण इति अत्र कवचधारणेन वयो गम्यते कवचो वर्म। विभ्राग इति डु भृञ धारणपोषणयोर्जुहोत्यादिरुभयपदी शाने कृते द्विर्वचनं नर ऋरामस्याराम इति ऋरामस्याराम हरिखड्गस्येत्यादिना नरस्य हरिघोषस्य हरिगदा। भृञ आमि चेति अरामस्येरामः ऋद्वयं रः। रावणं निघ्नान इति। अत्र रावणनिहननेन शक्तिर्गम्यते निघ्नान इति हन हिंसागत्योः परपदी गम हन जन खन घसामित्यादिना उद्धवादर्शनं हनो हस्य घो णिण्णयोरिति हस्य घः ॥ ११ ॥

**बाल०**—वेत्तेः। विद ज्ञाने इत्यस्माद्विहितस्य शतृप्रत्ययस्य स्थाने वसुर्वा

प्रेङ्ख्यमाणः प्रेङ्ख्यमानो वा। उन्भ पूरण इत्यस्य प्रोम्भणमित्यत्रापि नित्यमिति काशिकादिमतम्। इवेरन्तस्थान्तस्य तु प्रेण्वनमित्यत्र न णत्वम्, पूर्वोक्तनिमित्तत्वाभावात्। विष्विति—प्रगूहमाणः प्रगूहमानो वा।

**१३. आसः शानस्य ईनः।**

आसीनः।

**१४. परपदिनश्चशानस्ताच्छील्यवयःशक्तिषु।**

भक्तं भजमानः, कवचं बिभ्राणः, रावणं निघ्नानः।

---

इवेरिति—इवि व्याप्तौ इत्यस्यान्तो वरामः अन्तस्थः, तेन तस्य वैष्णवत्वाभावात् अविष्णुपदान्तस्येत्यादिना नुमो नस्य न विष्णुचक्रम्, तदभावे च णत्वमेव। अधुना पूर्वनिमित्ते ररामे स्थितेऽपि णरामव्यवधानात् परस्य कृन्नस्य न णत्वमिति भावः। अन्तिममुदाहरति—प्रगूहमाण इत्यादि। गूह सम्बरणे, अत्र विष्णुजन आदिः, उद्धवश्चेश्वर इति विभाषित णत्वम्। सर्वेश्वरात् परस्येति किम्—प्रभुग्नः।

अमृता०—१३. आस इति। आसउपवेशने इत्यस्मादुत्तरस्य शानस्य ईन इत्यादेशः स्यात्। आदेशाभावे सति आसान इत्यनिष्टरूपं सिध्येत।

अमृता०—१४. परपदिन इति। ताच्छील्यं तत्स्वभावता, वयः शरीरावस्था यौवनादि, शक्तिः सामर्थ्यम्। एतेष्वर्थेषु गम्यमानेषु परपदिनो धातोश्च शानः स्यात् कर्त्तरि। चकारादात्मपदिनश्च। शानस्यात्मपदविषयत्वादप्राप्ते विधानम्। भक्तं भजमान इति—भक्तजनभजनं कृष्णस्य शीलम्, ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहमिति स्वप्रतिज्ञानुरोधात्। कवचं बिभ्राण इति—कवचो वर्म। अत्र कवचधारण योग्यं यौवनं वयो गम्यते। बिभ्राणइति—डुभृञ् जुहोत्यादिः, शपो महाहरः, द्विर्वचन, नरऋरामस्य अरामः, हरिघोषस्य हरिगदा नरस्य, भृञ आमिचेति नरारामस्येरामः, ऋद्वयं रः। रावणं निघ्नान इति—नि-हन, शपो महाहरः, अपृथु कृष्णधातुक इति निर्गुणत्वेन शानस्य कंसारि सर्वेश्वरत्वम्, ततो गम हनेत्यादिना उद्धवादर्शनम्, हनो हस्य घः। ताच्छील्याद्यभावे तु भक्तं भजन्निर्वृतिं लभते हरिः।

---

भवति। वेत्तेरिति निर्देशो विदलृ लाभ इत्यादेर्निरासार्थः अकर्मत्वेऽपि शतुर्वसुर्भवतीति शेषः॥ १२॥

बाल०—शतृ। भविष्यति च काले धातोरुत्तरे शतृशानौ भवतः। तत्पूर्वं शतृशानाभ्यां पूर्वं स्यश्च भवति। करिष्यन्निति ऋराम हनिभ्यामिट् स्ये इति इट्॥१३॥

बाल०—अर्हः। पूज्ये वाच्ये अर्हं उत्तरे शतृ भवति। अर्हन्निति अर्ह पूजायां भ्वादिः पूज्य इत्यर्थः। पूज्य इति किं। अवैष्णवो दुःखमर्हति॥ १४॥

## १५. वेत्तेः शतु र्वसु र्वा ।

विदन् विद्वन् कृष्णम् । अकर्मकत्वेऽपि—विद्वान् पण्डितः ।

## १६. शतृशानौ भविष्यति च तत्पूर्वं स्यश्च ।

करिष्यन् करिष्यमाणः ।

---

**अमृता०**—१५. वेत्तेरिति । विदज्ञाने इत्यस्मादुत्तरे शतृप्रत्ययस्य स्थाने विभाषया वसु रादिश्यते । विद्वानिति—नुम् सत्सङ्गान्तहरादि साधनं समानं, सान्तसत्सङ्गत्वादुद्धवस्य त्रिविक्रम इतिविशेषः । अकर्मकत्वेऽपीति—कर्माविवक्षायामपि वेत्ते र्वसु र्वा स्यादित्यर्थः । श्तिपा निर्देशात् सत्ता लाभविचारार्थानान्तु वसु र्नैव भवतीति भावः ।

वर्त्तमानादादित्यत्र आदिपदनिवेशफलं दर्शयति —

**अमृता०**—१६. शतृ इति । भविष्यति च काले धातोरुत्तरे शतृशानौ भवतः, चकाराद् वर्त्तमाने सिद्धावेव तौ । तदा ताभ्यां पूर्वं स्यश्चागमः स्यात् । भविष्यति विहितानां सत्यादि प्रतिरूपकः प्रत्ययएषः । करिष्यन्निति—ऋरात हनिम्यामिति इट् षत्वञ्च ।

---

**बाल०**—इङ् । कृच्छ्रं कष्टं कष्टरहिते कर्त्तरि वाच्ये इङ्धारिभ्यामुत्तरे शतृप्रत्ययो भवति । अधीयन्निति इङ् अध्ययने । इकिङौ नित्यमधिपूर्वौ । शतृ शप् महाहरः । योगविभागेन सन्धि निर्वर्त्त्य पश्चादियादेशः । ङित्वात् शतृप्रत्यो न भवतीति विधानं । धारयन्निति धृङ् धारणे णिः ततः शतृ क्रियाफलस्य कर्त्तृगामित्वात् शतृप्रत्ययो न भवतीति विधानं । कृच्छ्रत्वेत्विति कर्त्तुरिति शेषः । कृच्छ्रशब्दोऽत्र धर्मिवचनः ॥ १५ ॥

**बाल०**—द्विषः । शत्रौ वाच्ये द्विष उत्तरे शतृप्रत्ययो भवति । द्विषन्निति द्विष अप्रीतौ अदादिः शत्रुरित्यर्थः शत्राविति किं । औषध द्वेष्टि । अर्हदादश्चेति द्विषच्छब्दोऽर्हदादिश्चेत्यर्थः । यद्वा, फलान्तराप्रयोगे सद्विद्यमानघटमाना भवन्तीति पूर्वमुक्तं तदभिप्रेत्याह अर्हदायश्च फलान्तरं नापेक्षन्त इति फलान्तरमिति क्रियान्तरमित्यर्थः । रूढशब्दत्वादित्युट्टङ्कितेन शब्दभेदानप्याह मुख्येत्यनेन । मुख्य एव शब्दः स्यात्, लाक्षणिक एव शब्दः स्यादिति सर्वत्र योज्यं । तत्रेश्वरेच्छासङ्केतितो मुख्यो यथा घटपदादिः । लक्षणासङ्केतितो लाक्षणिको यथा गङ्गातटादिः । गौणवृत्तिप्रतिपाद्यो गौणः यथा अग्निमाणवकादिः । उपचारेण लक्षित औपचारिकः यथा सत्या इत्यत्र सत्यभामादिः शब्दानुकरणादिश्च । आधुनिकसङ्केतितो रूढः यथा डित्थडवित्थादिः । योगरूढवृत्तिप्रतिपादितो योगरूढो यथा पङ्कजादिः । यौगिकवृत्तिबोध्यो यौगिकः यथा पाचकादिः । इत्यत्र मुख्यरूढयोरवान्तरभेदः अभिधासङ्केतितत्वेन तुल्यत्वात् । लाक्षणिकगौणयोरप्यवान्तरभेदः गौणवृत्तेर्लक्षणैकदेशप्रभेदात् ॥ १६ ॥

**१७. अर्हः शतृ पूज्ये ।**

अर्हन् ।

**१८. इङ् धारिभ्यां शत्रकृच्छ्रकर्त्तरि ।**

**अधीयन् श्रीभागवतम्, धारयन् वेदान् । कृच्छ्रत्वे तु—कष्टेनाधीयानः ।**

---

**अमृता०**—१७. अर्ह इति । पूज्ये प्रशंसायामर्थे अर्हतेः शतृ भवति । नियमोऽयमितरार्थे मा भूदिति । तेन चौरः शास्तिमर्हतीत्यत्र योग्यार्थे न शतृ ।

**अमृता०**—१८. इङिति । अकृच्छ्रः सुखसाध्यो धात्वर्थो यस्यकर्त्तुः सोऽकृच्छ्रकर्त्ता, तस्मिन्नर्थे इङ् अध्ययने, धृङ् अवस्थाने ण्यन्तः, इत्येताभ्यां शतृ स्यात् । इङ आत्मपदित्वात् शान एव प्राप्तः, धृङोण्यन्तत्वात् शतृ शानौ चोभौ प्राप्तौः, ततोऽत्रार्थे शतृमात्रं नियम्यते । अधीयन्निति—इकिङौ नित्यमधिपूर्वौ, अदादित्वात् शपो महाहरः, योगविभगेन सन्धि विश्लिष्य इयादेशः, पुनश्च सन्धिः ।

---

**बाल०**—न नारा । नारायणादुत्तरस्य शतृप्रत्ययस्य कृष्णस्थाने परे नुम् न भवति । नारायणात् ब्रह्मणस्तु शतुः कृष्णस्थाने परे नुम् वा भवति । ददिति डु दाञ दाने जुहोत्यादिः श्ना-नारायणयोररामहरो निर्गुणकृष्णधातुक इति अरामहरः । जक्षदिति जक्ष भक्षहसनयोः अदादिः जक्षादिरपि नारायण इति नारायणत्वं । ददन्तीति ब्रह्मतो जस्शसोः शिरिति जस् शस् शिः ।। १७ ।।

**बाल०**—शप् श्या । ईप्रत्यये परे शप्श्याभ्यामुत्तरस्य शतृप्रत्ययस्य नुम् भवति । ईप्रत्यये परे शेषाद्द्वयात्तु उत्तरस्य शतृप्रत्ययस्य नुम् वा भवति । शेषादिति शप्श्याभ्यामन्यस्मादित्यर्थः । ईप्रत्यय इत्युक्तं स एव क इति चेत्तत्राह चतुर्भुजानुबन्धादिति । वक्ष्यते इति तद्धितप्रकरण इति शेषः । उक्त इति नामविष्णुपदप्रकरण इति शेष. । तस्माद्द्वयोरेवात्र ग्रहणमिति । क्रीडन्तीति क्रीड विहारे भ्वादिः । दीव्यन्तीति दिवु क्रीडादिषु दिवादिः । लक्ष्मीत्वसूचनार्थं गोपश्रेणीत्युक्तं ब्रह्मत्वस्य द्विवचनान्तत्वस्य च सूचनार्थं गोपकुले इत्युक्तं । न दृश्यते चेति क्वचित् नुन् न दृश्यते च बाहुल्यादिति शेषः । प्रावृषि वर्षाकाले अर्द्धरात्रे गते सति असौ नीलमेघः परि सर्वतोभावेन मन्दं मन्दं यथा स्यात्तथा गर्जति । तद्गर्जनमुत्प्रेक्ष्यते अपश्यतीत्यनेन । गौर्यथा वत्समपश्यती सतो हुङ्करोति तथैव विभावरी रात्रिर्वत्समिवेन्दुविम्बमपश्यती सती हुङ्कारं करोतीत्यर्थः । अपश्यतीत्यत्र अपश्यन्तीति भवितुमर्हति । अरामहरस्येति अन्यथा शतुररामोत्तरता न स्यात् । तुदतीति तुद व्यथने तुदादित्वात् अपः शः अरामः हर ए अयोरविष्णुपदान्त इत्यरामहरस्य निमित्तमरामः पूर्ववच्च । ततश्च पक्षे नुम् तुदन्तीति । ता दीप्तौ अदादिः । सा गोपश्रेणी ते वा गोपकुले वा । अदतीति अद तक्षणे । अत्र प्राङ्निमित्ताभावात् नुमोऽभावः ।। १८ ।।

## १६. द्विषः शतृ शत्रौ ।

द्विषन् ।

अर्हादयश्च फलान्तरं नापेक्षन्ते, रूढत्वात् ।

---

अमृता०—१६. द्विष इति । शत्रौ वाच्ये द्विष उत्तरे शतृप्रत्ययः स्यात् । द्विषन्नित्यत्र कंसं कंसस्य वेति कर्म अध्याहार्यम् । शत्राविति किम्—प्रणयेन प्रियां द्वेष्टि । वैशिष्ट्यमाचष्टे—अर्हादयश्चेति । फलान्तरमित्यनेन सत्साधकक्रियान्तरमाक्षिप्यते । आदि शब्दः परवर्त्ति सूत्रद्वयस्थानां इङ् धारि द्विषां ग्राहकः । चकारः पूर्वोक्तानकर्मकांश्चाकर्षति—सन् विद्यमान इत्यादि । तत्र हेतुः—रूढत्वादिति । रूढ शब्दस्तवत् स्वोत्पत्तिनिमित्तभूतं प्रकृति प्रत्यय योगार्थमपि नापेक्षते किमुत फलान्तरमिति भावः ।

रूढत्वादित्यनेन उद्गताकाङ्क्षं शिष्यं प्रति शब्दभेदानाह—मुख्य इत्यादि कारिकया । शब्दमात्रस्य तिस्र एव शक्तयः, यथा अभिधा लक्षणा व्यञ्जना चेति । एभिर्वृत्तिभि र्यथाक्रमं मुख्य लाक्षणिक व्यञ्जकाः शब्दा बोधयन्ति इति पूर्वमेवोक्तम् । अत्राभिधया शक्त्या—अस्माच्छब्दादयमर्थो बोद्धव्य इतीश्वरेच्छासंकेतितः शब्दः, उच्चारणमात्रेण सहजप्रतीतो मुख्यः । अथ लक्षणा—मुख्यार्थबाधे तद्युक्तो ययान्यार्थः प्रतीयते । रूढेः प्रयोजनाद् वासौ लक्षणा शक्तिरर्पिता ।। इति साहित्यदर्पणे ।। लक्षणया वृत्त्या बोधितोऽर्थः शब्दश्च लाक्षणिकः । यथा—गङ्गायां घोष इत्यत्र गङ्गाशब्देन तत्तीरो बोध्यते । अथ व्यञ्जना—अभिधायां लक्षणायाञ्च स्वंस्वमर्थं प्रकाश्य विरतायां सत्यां यया वृत्त्या तदितरोऽर्थः प्रतीयते सा व्यञ्जना । सा पुनः संयोग-साहचर्य-सामर्थ्यादि स्तथा वक्तृबोद्धव्य देश कालादेश्च पर्यालोचनपुरःसरं मुख्याद्यर्थं बाधित्वापरार्थं बोधयति । अर्थश्चासौ व्यञ्जकः शब्दश्च सः । यथा—सकौस्तुभो भाति विधुरित्यत्र कौस्तुभ शब्दसंयोगेन विधुः कृष्ण एव नतु चन्द्रः । यथा वा भोजनकाले सैन्धवमानयेत्युक्ते सैन्धव शब्देन तत्कालोचितलवणस्यैव बोधो नतु सिन्धुदेशीय घोटकस्य; इत्यालङ्कारिकाः । नैयायिकास्तु—अभिधा लक्षणयोरेवान्तर्भूता व्यञ्जना नतु पृथग्वृत्तिरित्याहुः । तद् दृष्ट्या हि भूले कारिकायां पृथक्तया न पठितः सः । ततोऽभिधालक्षणातिरिक्तशक्तेरनङ्गीकारात् सर्वे हि शब्दा मुख्यलाक्षणिकयोरेवान्तर्भवन्तीति पर्यवसितम् । तथा हि सादृश्यगुणयोगाद् गौणीवृत्तिश्च कैश्चित् स्वीक्रियते, तद्युक्तः शब्दोगौणः । सोऽपि लाक्षणिकान्तर्भूत एव मन्तव्यः । यथा—पुरुषः सिंहः, अग्नि र्माणवक इत्यादयः । एवञ्चारोपवान् शब्द औपचारिक उच्यते, सोऽपि लाक्षणिकभेदविशेषः । यथा—मञ्चाः क्रोशन्ति, भिक्षा मथुरां वासयतीत्यादौ ।

रूढादयस्तु मुख्यस्यावान्तरभेदाः । यत्र प्रकृति प्रत्ययो र्योगे अवयवार्थएव बुध्यते स यौगिकः, यथा पाचकः कृष्ण इत्यादयः । यत्रावयवशक्तिनिरपेक्षतया समुदायशक्त्या विशिष्टार्थो बुध्यते स रूढः, यथा गौः मण्डप इत्यादिः । यस्तु अवयवशक्तिसद्भावेऽपि समुदायशक्तिमपेक्षते स योगरूढः । यथा पङ्कजः । अत्र पंकेजनि कर्त्तृत्वसत्त्वेऽपि तादृश

मुख्यो लाक्षणिको गौणः शब्दः स्यादौपचारिकः ।
रूढो वा योगरूढो वा यौगिकः शब्द एव च ॥

**२०. न नारायणाच्छतु नुम् ब्रह्मणस्तु कृष्णस्थाने वा ।**

दद‍त् ददतौ, जक्षत् जक्षतौ, ददन्ति ददति ।

**२१. शप् श्याभ्यां शतु नुम् ई प्रत्यये शेषाद्वयात्तु वा ।**

चतुर्भुजानुबन्धाँल्लक्ष्यामीप् वक्ष्यते, ब्रह्मण औ ई चोक्तः । क्रीडन्ती दीव्यन्ती गोपश्रेणी गोपकुले वा । नदृश्यते च,—

---

कर्त्तृत्ववत् पदार्थसमुदायं शैवालशम्बुकादि व्यावृत्य पद्मपदार्थे हि रूढीभवतीत्युभयधर्मवत्त्वात् योगरूढउच्यते । शक्तस्यैव ( मुख्यस्यैव ) यौगिकादिभेदचतुष्टयमिति सिद्धान्तमुक्तावली । तेचाभिधादि प्रतिपाद्याः शब्दानामर्था व्याकरणादित एवोपलभ्यन्ते, कोषाप्तवाक्यादितश्चेति विवृतमेव प्राक् ।

**अमृता०**—२०. नेति । नारायणसंज्ञकादुत्तरस्य शतृप्रत्ययस्य कृष्णस्थाने नुम् न स्यात्, ब्रह्मणस्तु कृष्णस्थाने अर्थाद् जस्शसो र्नुम् वा भवति । अचश्चतुर्भुजानुबन्धानाञ्चेति प्राप्तनुमः प्रतिषेधः । ददिति—डु दाञ् दाने, जुहोत्यादित्वाद् द्विर्वचने नारायण त्वम्, श्नानारायणयो रारामहरो निर्गुण कृष्णधातुक इत्याराम हरः । जक्षदिति—जक्षादिरपि नारायण इत्युक्तविधानान्ननुम् । ददन्तीति—ब्रह्मतो सस्शसोः शिः, तस्य कृष्णस्थानत्वाद् विकल्पितो नुम् ।

**अमृता०**—२१. शबिति । इप्रत्यये परे शप् श्ताभ्यां विकरणाभ्यामत्तरस्य शतृ प्रत्ययस्य नुमागमः स्यात्, शेषाद्वयादुत्तरस्य तु शतु र्नुम् विभाषया भवति । ईप्रत्यय इति परनिमित्तं विवृणोति—चतुर्भुजानुबन्धादिति । चतुर्भुजानुबन्धात् शब्दात् लक्ष्म्यामीप् प्रत्ययो वक्ष्यते तद्धिते, तस्मिन् परे, ब्रह्मणो द्वित्वे ईप्रत्यये च परे नुम् विधीयते, तयोः कृष्णस्थानत्वविरहादप्राप्ते विधानम् । शेषाद्वयादिति—शप् श्याभ्यामितरो योऽद्वय स्तस्मात् ।

नन्विह किं तुदादेः शविकरणस्य अरामं तथा क्रयादेः श्ना विकरणस्य आरामञ्चोद्दिश्य अद्वयशब्दः प्रयुक्तः, उतान्यदुद्दिश्य ? ओम् तुदादेरिति यथार्थम्, नतु क्रयादेरिति ॥

---

**बाल०**—जीर्य । भूते भूतकाले चकाराराद्वर्त्तमानादौ जीर्यतेरुत्तरे अतृप्रत्ययो भवति । जरन्निति जॄ वयोहानौ दिवादिः बृद्ध इत्यर्थः । प्रवयाः स्थविरो बृद्धो जीनो जीर्णो जरन्नपीत्यमरः । शतृप्रत्यये जीर्यन्निति भवति ॥ १९ ॥

**बाल०**—परो । परोक्षातीते काले परपदात्मपदयोः क्वसु-कि-काना भवन्ति । ते अधोक्षजाभसंज्ञाः । परपदात्मपदयोरिति पूर्ववद्व्याख्येयं । तत्र क्वसुकी परपदस्थानीयौ कान आत्मपदस्थानीयः । प्रयच्छन्दसा एते इति । तस्माद्भाषायामेतेषां प्रयोगप्राचुर्यं नास्तीति द्विर्वचनादीति भवतीति शेषः ॥ २० ॥

गतेऽर्द्धरात्रे परिमन्दमन्दं गर्जत्यसौ प्रावृषि नीलमेघः ।
अपश्यती वत्समिवेन्दुबिम्बं विभावरी गौरिव हुङ्करोति ॥

इति पाणिनि मुनेः काव्यम् । अरामहरस्यनिमित्तमरामः पूर्ववच्च । तुदती तुदन्ती भाती भान्ती करिष्यती करिष्यन्ती, सा ते वा । अन्यत्र तु—अदती कुर्वती ।

---

श्नानारायणयो रारामहर इत्यस्थान्तरङ्गत्वादरामलोपे तत् प्रसङ्गाभावात् । ननु च आरामादित्येवास्तु, कथमद्वयादिति ? श्रूयताम्—अद्वयादिति विकरणावयवादेवेति न तन्त्रम्, धात्ववयवादप्यारामात् शतु र्नुमिष्टः, अत एव भान्तीति दृष्टान्तो न्यस्त इत्यवधेयम् ।

गोपश्रेणीति—लक्ष्मीत्वज्ञापनार्थं विशेष्यमिदम्, गोपकुले इति तु ब्रह्मणो द्वित्व-सूचनार्थम् । नदृश्यते चेति—आगम शासनस्य अनित्यत्वात् कृतकार्यस्य च बाहुल्यात् क्वचिन्नुम्विधि व्यभिचरतीत्यर्थः । पाणिनिमुनि रचितकाव्यात् तद्व्यभिचारं दर्शयति—गत इत्यादि । अस्यार्थः—प्रावृषि वर्षासु अर्द्धरात्रे गते सति असौ नीलमेघः परि सर्वतोभावेन मन्दमन्दं यथा स्यात्तथा गर्जति । गर्जन मेवोत्प्रेक्षते—अपश्यतीत्यादिना । गौरिव विभावरी रात्रिः, वत्समिव इन्दुबिम्बं अपश्यती अलक्षयन्ती सती हुम् इत्यव्यक्त शब्दं करोतीव । अत्र दृशधातो र्भ्वादित्वेन नित्यं नुमा भवितव्यम् ।

शेषाद्वयादित्युदाहरति—तुदतीत्यादि । अरामहर एअयोरविष्णुपदान्त इत्यरामे हरे तस्य परनिमित्तरूपस्य अरामस्य पूर्ववत्त्वमनने नुम्भावः, तदमनने तु शतु रद्वयपरत्व-विरहान् नुमोऽभाव इति विभाषेति भावः । करिष्यन्तीति—भविष्यति विहितात् शतुः पूर्वं स्यः, तस्यापि, शेषाद्वयत्वविवक्षणाद् वा नुम् । प्रत्युदाहरति—अन्यत्रेति । अद-तीत्यादौ अद्वयादुत्तरं शतुरभावान्ननुमित्यर्थः । एवं सुन्वती रुन्धती जानतीत्यादि च ज्ञेयम् । ईप्रत्यये इति किम्—क्रीडत्वं तुदता । कृष्णस्थाने नारायणेभ्यो निषेधादन्येभ्यस्त नित्यं नुम्—क्रीडन् क्रीडन्तौ दीव्यन् जानन्नित्यादि ।

---

**बाल०**—नरे । वसौ परे नरे कृते न कृतेऽपि एकसर्वेश्वरात् आरामान्तात् घसेश्चैव इड् भवति । नान्येभ्य इति अन्येभ्य उत्तरे इट् न भवति नियमादिति शेषः । एकसर्वेश्वरा-दिति एकः सर्वेश्वरो यस्येति विग्रहः । कृ सृ भृ वृस्तु द्रु स्रु श्रुभ्य एवाधोक्षजमात्रे नेडित्युक्तं अतोऽन्येभ्यः सर्वेभ्य इट् स्यादिति नियमसूत्रं कृतं । भेजिवानिति तृफलभजत्रपां इत्यादिना अरामस्य एवं नरादर्शनञ्च अतो नरे कृतेऽप्येकसर्वेश्वरत्वं भाजयाञ्चकृवानिति ण्यन्ताद्भजधातोः क्वसुः अनेकसर्वेश्वरकाशिभ्यामधोक्षजे इति आम्, आमः कृभ्वस्तयो-ऽनुप्रयुज्यन्ते इति कृञोऽनुप्रयोगः । आदिवानिति अद भक्षणे क्वसुः द्विर्वचनं ततो नरादेर-रामस्य त्रिविक्रमस्तस्मान्नुड् द्विविष्णुजने धातावित्यनेन त्रिविक्रमस्तस्मिन् कृते दशावतार इत्यनेन त्रिविक्रमोऽतोऽत्रापि नरे कृतेऽप्येकसर्वेश्वरत्वं, तन्नैवेद्यं कृष्णनैवेद्यं । आदयाञ्च-

## २२. जीर्यतेः रतृ भूते च ।

जरन् जरन्तौ ।

---

अमृता०—२२. जीर्यतेरिति । जीर्यतेरुत्तरे अतृप्रत्ययः स्यात् भूते च काले । चकाराद् वर्त्तमान-भविष्यतोश्च । जरन्निति—जॄष वयोहानौ दिवादिः, निर्गुणत्वादि बाधाविरहेन धातोरन्तस्य गोविन्दः । जरन् वृद्ध इत्यर्थः । अत्र चकारस्य द्विधासमुच्चयार्थः, तेन जीर्यते रतृ शतृ च भवतीति परामर्शः, शतृ प्रत्यये तु कंसारित्वात् ऋरामस्येर्—जीर्यन् इति ।

---

क्रुवानिति पूर्ववत् । वसोरिति वसोर्वस्य उत्वे सति निषेधप्राप्तेर्हेतोरिटोऽपायो निवृत्तिर्भवति । निषेधप्राप्तौ हेतुमाह निमित्तत्वाभावादिति । उरामस्य इटि निमित्तत्वं नास्तीति । ततश्च शसि भेजुषः आदुषः इति । वसोर्वस्य उर्भगवतीति उत्वं । ददिवानिति दाधातोः क्वसुः आरामान्तत्वादिट् । दरिद्रामासिवानिति दरिद्रा दुर्गतौ आरामान्तत्वामिट् प्राप्तौ कृतेऽप्यकृतेऽपि य इत्यनेनामो नित्यत्वात् अनेकसर्वेश्वरकाशीत्यनेन आम् अतो आरामन्तत्वेऽपि नेट् अस्तेरनुप्रयोगः । इटश्चेति आराम इटश्चेत्यर्थः । वसौ आरामहरश्च । जक्षिवानिति घसलृ अदन इत्यस्य अद घसलृर्भूतेश सनोरधोक्षजेतु वेत्यनेन अदादेश घसलृ इत्यस्य च रूपं गम हन जन खन घसामित्यादिना उद्धवादर्शनं घस्य कः वसिघस्योः षः इति षत्वं ।। २१ ।।

बाल०—अर्त्तेः । क्वसौ परे अर्त्तेर्गोविन्दो भवति । गोविन्दे कृते त्रिविक्रमः । ततश्च एकसर्वेश्वरत्वामिट् । बभूवानिति भूनरस्य भोऽधोक्षज इति भूनरस्य भः भस्य वः । भुवो भूविति । भूवो भूव् भूतेशाधोक्षजसर्वेश्वर इत्यस्योल्लेखः । बभूवुष इति शसि । श्व दृ इत्यत्र वामनो वेति अधोक्षज इति शेषः । शशर्वानिति सत्सङ्गाद्दचदन्तस्य ऋच्छेर्ऋ रामान्तानाञ्चेत्यादिना गोविन्दः । जजागर्वानिति जागर्त्तेर्गोविन्दः । सर्वत्रेत्यादीत्यादिना गोविन्दः । जजागृवानित्येक इति तन्मते गोविन्दो न भवतीति । भनूजो इति भनूजो आमर्दने । बभज्वानिति अनिरामेतामित्यादिना उद्धवनरामहरः । अत्रेति अत्र क्वसौ विकल्पयन्तीति पूर्वाचार्या इति शेषः । छस्य शो वस्य उट् हरिवेणौ क्वौ कंसारिवैष्णवे च इति सूत्रं । अत्र सूत्रे क्वाविति क्विपो रूपं तस्यैकदेशसाम्येन क्वसोरपि ग्रहणमिति छस्य श इत्यनेन नित्यै शोट्प्राप्ते विकल्पयन्तीति । विच्छीति । विच्छ गतौ । सङ्कर्षण एवेति तस्मात् प्रच्छधातोश्छरामस्य शोऽपि न भवतीति पूर्वाचार्यमतं । पपृच्छ्वानिति ग्रहिज्येत्यादिना सङ्कर्षणः । कलापमतन्तु चिन्त्यमिति तस्मात कलापमते पप्रश्वानिति । तन्मते ग्रहिज्येति सूत्रे प्रच्छोऽग्रहणात् सङ्कर्षणोऽपि स्यादतः पप्रच्छ्वानित्यपि । दिविति दिवु क्रीडादिषु । प्राचीनमते उट्पक्षे दुद्युवानिति भवतीति ज्ञेयं । दिदिवुष इति बसोर्वस्य उत्वे कृते निमित्तापायात् पुनर्वराम इति । दिद्युष इति निमित्तापाये नैमित्तापाये नैमित्तिकस्याप्यपाय इति नेष्यत इति ।। २२ ।।

**२३. परोक्षातीते क्वसु कि काना अधोक्षजाभ संज्ञाः परपदात्मपदयोः ।**

प्रायश्छान्दसा एते । उकावितौ, अधोक्षजाभत्वाद्विर्वचनादि ।

**२४. नरे कृतेऽप्येकसर्वेश्वरादारामान्तात् घसेश्चैवेड् वसौ नानेभ्यः ।**

---

**अमृता०**—२३. परोक्षेति । परोक्षे भूते क्वसु कि कान प्रत्यया भवन्ति परपदात्मपदयोः स्थाने, ते चाधोक्षजाभसंज्ञकाः स्युः । तत्र क्वसु-की परपदस्थानिकौ, कर्त्तर्येव, कान आत्मपद स्थानिकः, कर्मण्यादौ चेत्युक्तं कारके । कित् करणात् कपिलत्वम्, तेन सङ्कर्षण उद्धवनरामहरादिश्च सिध्यति । उरामइत् नुमर्थः । प्रायश्छान्दसा एत इति—प्रायो ग्रहणात् छन्दसि (वैदिके) प्रयोगबाहुल्यं लभ्यते, भाषायामपि क्वचिदिति । अतश्च भाषार्थं—"अच्युताभे"त्यादि षष्ठी निषेधसूत्रे अधोक्षजस्यापि ग्रहणं कृतम् । एषान्तु आख्यातवन्मुख्यत्वं मन्यन्ते, आकाङ्क्षा पूरकत्वादिति ।

**अमृता०**—२४. नरे कृत इति । क्वसौ प्रत्यये परे द्विर्वचनेन नरे कृतेऽपि य एकसर्वेश्वरयुक्त स्तस्मात्, आरामान्ताच्च धातो स्तथा घसेश्च एव इड् भवति, नान्येभ्यो धातुभ्य इति नियमः । कृसृभृवृ इत्यादीनामधोक्षजे नेट्, अन्येभ्यस्त्वनिड्भ्योऽपीडिति नियमेनात्रापि इटि प्राप्ते पुनः क्वस्वर्थ एष विशेषो नियमः कथितः ।

भेजिवानिति—तृफलभजत्रपामित्यादिना अरामस्य एत्वं, नरादर्शनञ्च, ततः सनरस्य धातो रेकसर्वेश्वरवत्त्वादिट् । भाजयाञ्चकृवानिति—भजधातो ण्यन्तात् क्वसु, आम्, अनुप्रयोगादय आख्यातवज्ज्ञेयाः । सनरस्यानेकसर्वेश्वरत्वान्नेट् । कृष्णमिति कर्मण्यनुक्ते द्वितीया, क्वसोः कर्त्तरि विधानात्, अच्युताभविष्णुनिष्ठेत्यादिना षष्ठी निषेधः । आदिवानिरि—अद भक्षणे, नरादेरारामस्य त्रिविक्रमः, ततः सन्धिनाआराम इत्येकसर्वेश्वरत्वादिट् । सर्वत्र चतुर्भुजानुबन्धत्वान्नुम् । भगवति रूपं दर्शयन् पूर्वविधिं स्मारयति—वसोरिति । वसोर्वस्य उ भगवतीत्येन उरामे सति, नेट् य-सर्वेश्वरयो रिति निषेधप्राप्ते

---

**बाल०**—गमे । गमलृ गतौ हन-हिंसागत्योः विदलृ लाभे दृशिर् प्रेक्षणे विशप्रवेशने इत्येतेभ्य उत्तरे वसौ परे इड् वा भवति, क्वासाविति वा पाठः । जग्मिवानिति गम हन जन खन घसामित्यादिना उद्धवादर्शनं जग्मुषः भेजुष इतिवत् । इडभावपक्षे जगन्वानिति । जग्मुष इति वसोर्वस्य उरामे कृते निमित्तापायान्नरामस्य मरामः उद्धवादर्शनं । जघ्निवानिति उद्धवादर्शनं हन्तो हस्य घः । नुमा निर्देश इति विदलृधातोर्मुचादित्वात् नुम् भवतीति । श्नमा निर्देश इति पाठः क्वचित् दृश्यते सत्वभस्य एव ।। २३ ।।

**बाल०**—ईयि । वृत्तिमाह इटेति । एते ईरिवस्प्रभृतयः इटा त्रिविक्रमादिना च सह निपात्यन्ते । ईयिवानिति इन गतौ क्वसुः निपातादिट् । एतिहुवोर्यवौ कृष्णधातुक

एष भेजिवान् कृष्णम्, भाजयाञ्चकृवान्, आदिवान् तन्नैवेद्यम्, आद्याञ्च-कृवान्। वसो र्वस्य उत्वे निषेधप्राप्तेरिटोऽपायो निमित्तत्वाभावात्। भेजुषः, आदुषः। ददिवान्, दरिद्रामासिवान्। मतान्तरे ददरिद्रिवान्, तन्मते अत्रेटश्च निषेधः। जक्षिवान्। ऋगतौ, द्विर्वचनादि।

## २५. अर्त्तेर्गोविन्दः क्वसौ।

आरिवान्। नान्येभ्य इट्— बभूवान्। वसो र्वस्यउर्भगवति, भुवो

---

हेतोः, निमित्तस्य वसो र्वंरामस्य अपायान्नैमित्तिकस्य इटश्चापाय इत्यर्थः। एवं पेचिवान् आशिवान् ऊषिवान् ऊचिवानित्यादयः।

आरामान्तादुदाहरति—ददिवानिति। डुदाम् दाने, इटि सति आरामहरः कंसार सर्वेश्वर रामधातुके इटि उसि चेत्यारामपरः। नचेह निमित्तापायान्नैमित्तिकस्य इटोऽपायः शङ्कनीयः, सन्निपातलक्षणात्। तथा हि—इटं दृष्ट्वा आरामहरस्योत्पत्ते रारामहर इड्विनाशाय न प्रवर्त्तत इति। दरिद्रामासिवानिति—अनेकसर्वेश्वरत्वादाम्, अत्र अनुप्रयोगस्य कृतद्विर्वचनस्य एकसर्वेश्वरत्वादिट्, नत्वारामान्त लक्षणत्वात्, आमन्तत्वेन तद्-विरहात्, तेन कृञोऽनुप्रयोगे तु नेट्—दरिद्राञ्चकृवान्। मतान्तरइति काशिकामत इत्यर्थः। तन्मते आमो निषेध इटश्चेति। "दरिद्राते रार्द्धधातुके लोपो वाच्य" इति वार्त्तिकानुसारेणारामहरे इटः प्राप्ति र्नास्तीति तदभिप्रायः। तथैव प्रक्रियाकारः। केषाञ्चिन्मते तु आम् वा। एवमारामात्—पपिवान् ययिवान् तस्थिवानित्यादयः। "गवि तस्थिवांसम्", "पदमातस्थुषा त्वया" इत्यादि लौकिक काव्येषु च दर्शनात्। जक्षिवानिति —घसॢ अदने, इटि कृते तस्य प्रत्ययसम्बन्धित्वाद् गम हन इत्यादिना उद्धवादर्शनं, यादवमात्रे हरिकमलम्, वसि घस्योः ष इति षत्वम्।

अमृता०—२५. अर्त्तेरिति। क्वसु प्रत्यये परे अर्त्ते र्गोविन्दो भवति। कपिलत्वा-दप्रासे विधानम्। गोविन्दे कृते नरारामस्य त्रिविक्रमः, कृतद्विर्वचनस्य एकसर्वेश्वरत्वादिट्।

---

एवेति नियमात् नयादेशः। ततो द्विर्वचवने कृते इयादेशः त्रिविक्रमः। ईयुष इति शसि। प्रभृतिशब्दं विवृणोति दासृंसहमिहामिति। दास्वानिति दासृ दाने निपातातद्विर्वचनाभावः। साह्वानिति सह मर्षणे निपाताद्द्विर्वचनाभावः त्रिविक्रमश्च आत्मपदिनः क्वसुप्रत्ययो निपातादेवेति ज्ञेयं। मीढ्वानिति मिह सेचने निपाताद्द्विर्वचनाभावः त्रिविक्रमश्च। रेधिवानिति रधहिंसायाञ्च अत्र निपातान्नुमाभावः। रधेर्न नुम् अधोक्षजवर्जितेटीत्युक्त-मतोऽरधिजभोर्नुम् सर्वेश्वर इत्यनेन नुम् स्यात् किर्वक्ष्यते। कानमाह, अथ कान। चक्राण इति डु कृञ् करणे कर्त्तरि कानः द्विर्वचन नर-श्चरामस्यारामः कवर्गनरस्य चवर्गः। जजागराणमिति जागर्त्तेर्गोविन्द इत्यादिना गोविन्दः॥ २४॥

बाल०—अन्। वृत्तिमाह अनुवचो निपातः। अनूचानः इति वच परिभाषणे

भूव्,—वभूवुषः। शॄदॄ इत्यनयो र्वामनो वेति—शश्रृवान् शशर्वान्। जागृ—जजागर्वान्, जजागृवानित्येके।

भञ्जो वभज्वान्। अत्र छवयोः शोटौ विकल्पयन्ति। विच्छविविच्छवान् विविश्वान्। सङ्कर्षण एव—पपृच्छ्वान्। कालापमतन्तु चिन्त्यम्। दिव—यवयो र्हरो बले दिदिवान्, भगवति दिदिवुष इत्यादि। मतान्तरे दुद्यूषः।

## २६. गमहनविन्द दृशविशिभ्य इड् वा वसौ।

जग्मिवान् जग्मुषः, धातो र्मो नः—जगन्वान् जग्मुषः। जघ्निवान्

---

प्रत्युदाहरति—नान्येभ्यइडिति। वभूवुष इति—भगवति वसो र्वस्य उत्वे सर्वेश्वरपरत्वेन भुवो भूवादेशः। शशर्वानिति—शॄ हिंसायाम्, वामनाभाव पक्षे सत्सङ्गादच् दन्तस्य ऋच्छे ॠ रामान्तानाञ्चेति गोविन्दः। जजागर्वानिति–जागर्त्ते र्गोविन्दः सर्वत्रेति गोविन्दः। जजागृवानिति प्रक्रिया कौमुदी, तन्मते न गोविन्दः। वोपदेव वृत्तिकारैस्तु पक्षद्वयमेव दर्शितम्। वभज्वानिति—अनिरामेतामित्यादिना उद्धवनरामस्यहरः। अत्रेति—वोपदेवादयः शोटौ विकल्पयन्ति। तथा—"वकारादौ किङिति च्छ्वोः शूटौ वेति केचित्" इति प्रक्रियायां धृतम्। तन्मते विच्छ धातो र्विकल्पेन छस्य शः। स्वमते तु तत् प्राप्तिरेव नास्ति, छस्य शो वस्य ऊठित्यादौ पर निमित्तेषु मध्येऽत्र कस्याप्यासद्भावात्, तथापि प्राचीनमतगौरवादङ्गीकृतम्। सङ्कर्षण एवेति—अत्रग्रहि ज्येत्यादिसूत्र वलेनहि संकर्षण प्राप्ति र्वरीवर्त्तीति किं शस्य श कल्पनयेति, भावः। कालापमतन्तु चिन्त्यमिति—"प्रच्छादीनां परोक्षायामिति" तन्निषेधसूत्रम्, तत्र "न" इत्यनुवर्त्तते, पप्रच्छतुः वव्रश्चतु रित्याद्युदाहरणानि च दृश्यन्ते। ततः क्वसौ विशेषविध्रेरनुल्लेखात् पृच्छतेः सङ्कर्षणो न प्राप्नोतीति तैरसमाहितत्वात् चिन्त्यम्। ददिवानिति-वोपदेवादि मते ऊठ्पक्षे—दुद्यूवानिति च। तत्र प्रथम—मूठ् पश्चाद्द्विर्वचनम्। भगवति दिदिवुष इति—वसो र्वस्य उत्वे निमित्तापायात् पुन र्वराम एवागतः। मतान्तर इति वोपदेवादिमते ऊठ् पक्षे।

**अमृता०**—२६. गमेति। वसौ परे गमादिभ्यः पञ्चभ्य उत्तरे इट् वा स्यात्। नरे कृतेऽपीत्यादिनियमेन गमादीनामिटोऽप्राप्ते विभाषेयम्। जग्मिवानिति—गम्लृ गतौ, इटि कृते गमहनेत्यादिनोद्धवादर्शनम्, इटोऽपि परसम्बन्धित्वादिह कंसारित्वात्। जगन्वानिति—इडभावपक्षे। जग्मुष इति—वसो र्वस्य उत्वे निमित्तापायात् पुनर्नरामस्य मरामः, उद्धवादर्शनं षत्वञ्च। जघ्निवानिति—हन हिंसा गत्योः, नराद्धन्तेर्हस्य घः, तत इटि उद्धवादर्शनम्।

---

परपदिनोऽपि निपातात् कानः। अनूचानः प्रवचने साङ्गेऽधीतिगुरोस्तु य इत्यमरः। प्रवचने वेदे॥ २५॥

जघन्वान् जघ्नुष इत्यादि । विन्देति नुमा निर्देशः, विविद्वान् विविदिवान् ।

## २७. ईयिवस् प्रभृतयः ।

इटा त्रिविक्रमादिना चैते क्वस्वन्ता निपात्यन्ते । सोपेन्द्रत्वेऽपि-समीयिवान् । ईयुषः । दाशृसहमिहां दाश्वान् साह्वान् मीढ्वान् निपात्यन्ते । रध रेधिवान् ।

अथ कानः । चक्राणो रासं कृष्णः । कर्मणि—कृष्णेन चक्राणो रासः । भावे—कृष्णेन चक्राणम् जजागराणम्, जजाग्राणमित्यपि केषाञ्चित् ।

---

नुमा निर्देश इति-तुदादौ मुचादित्वान्नुम्, तेन नुमा निर्देशेन विदलृ लाभे इत्यस्यैव ग्रहणमिति ज्ञापितम्, तेन ज्ञानार्थस्य तु विविद्वानित्येव । विशेः—विविशिवान् विविश्वानिति । दृशेश्चेति वार्त्तिकम्; तेन ददृशिवान् ददृश्वानिति ।

**अमृता०**—२७. ईयिवसिति । मूले हि व्याख्यातम् । तत्र कस्यचिदिटा निपातः, कस्यचित्तु त्रिविक्रमादिनेति बोध्यम् । तत्र इणो द्विर्वचने तदेकात्मकेन सह त्रिविक्रमे च कृते एकसर्वेश्वरत्वादिट् सिध्यति । ततो धातोरीदूतोरियुवावित्यनेन वामनइय् सम्पद्यते, तस्मात त्रिविक्रमेण सह ईयिवानिति निपातितम् । एति हुवो यंवौ कृष्णधातुक एवेति नियमादत्र तु यराम प्राप्तिरेव नास्तीति विवेच्यम् । सोपेन्द्रत्वेऽपीति—उपेन्द्ररहिततया निपातः कृतः, अतस्तत् सहितत्वे संशये सति तन्निरासाय वचनम् । प्रभृति पदं विवृणोति—दाशृसहमिहामिति । त्रिविक्रमादिनेत्यत्र आदिपदेन दाश्वान्प्रभृतीनां द्विर्वचनाभावो लभ्यते । दाशृ दाने । साह्वानिति—द्विर्वचनाभावः, त्रिविक्रम, आत्मपदिनोऽस्य क्वसुरिति त्रितयंनिपातफलम् । मीढ्वानिति—मिह सेचने, द्विर्वचनाभाव स्त्रिविक्रमश्च निपातफलम् । रेधिवानित्यत्र निपातान्नुमभावः ।

किप्रत्ययो वक्ष्यते । अथ कानमुदाहरति । चक्राण इति—कर्त्तरि, साधनन्तु आख्यात सूत्रैरेव । आत्मपदस्थानीयत्वात् कानो भाव कर्मणोश्च भवतीति प्रागुक्तानुसारं दृष्टान्तयति—कर्मणीत्यादि । जजागरणमिति—जागर्त्तेर्गोविन्दः सर्वत्रेति कपिलत्वेऽपि गोविन्दः । जागर्त्तेः कानचि गुणो वेति केचिदिति प्रक्रियाकारः, अतस्तेषां मते जजाग्राणमित्यपि सिध्यतीति भावः ।

---

**बाल०**—क्तवतुः । भूते काले धातोरुत्तरे क्तवतुर्भवति । क्रीडितवानिति इटो रामधातुक इति इट् चतुर्भुजानुबन्धत्वान्नुम् अत्वसन्तोद्धवस्येत्यादिना त्रिविक्रमः ॥ २६ ॥

**बाल०**—क्तो । भूते काले धातोरुत्तरे भावकर्मणोर्वाच्ययोः क्तो भवति । स्नातमिति स्ना शौचे भावे क्तः भावकृद्ब्रह्मणीति ब्रह्मत्वं । स्तुत इति ष्टुञ स्तुतौ कर्मणि क्तः ॥२७॥

**२८. अनूचानः कर्त्तरि ।**

अनुवचो निपातः ।

**२९. क्तवतु भूते ।**

उकावितौ । क्रीडितवान् कृष्णः । कृतवान् क्रीडाम् । क्रीडितवन्तौ रामकृष्णौ ।

**३०. क्तो भूते भाव-कर्मणोः ।**

स्नातं कृष्णेन । स्तुतो विष्णु र्वैष्णवैः ।

---

**अमृता०**—२८. अनूचान इति । अनुपूर्ववचः कर्त्तरि कान प्रत्ययेन अनूचान इति निपात्यते । परपदिनोऽपि वचः कानविधानं हि निपातफलम् । अनूचान इति—सङ्कर्षणः, द्विर्वचनं, त्रिविक्रमश्च ।

**अमृता०**—२९. क्तवतुरिति । भूते काले धातोरुत्तरे क्तवतु प्रत्ययो भवति, सच कर्त्तरीति वेदितव्यम् । उराम इत् नुमर्थः, कराम इत् कपिलत्वार्थः । क्रीडितवानिति—इट् रामधातुक इतीट्, चतुर्भु जानुबन्धत्वान्नुम्, ततः अत्वसन्तोद्धवस्येत्यादिना त्रिविक्रमः । कृतवानिति—आख्यातप्रकरणोक्तानिट्कारिकानुसारत एव इट् प्रवर्त्तनीयः । तेन एक-सर्वेश्वरत्वान्नेट्, कपिलत्वान्नगोविन्दः । अनेनाख्यातवन्मुख्यत्वमस्य दर्शितम् । क्रीडामिति कर्म अनुत्तम, कर्त्तरि क्तवतो विधानात् । अच्युताभविष्णुनिष्ठेत्यादिना निषेधात् कर्मणि न षष्ठी । क्रीडितवन्ताविति द्विवचनेन क्तवतोः कारकविशेषणत्वञ्च सूचितम् । एवं क्तस्य च ज्ञेयम् ।

**अमृता०**—३०. क्त इति । भूतकाले धातोरुत्तरे भाव-कर्मणो वाच्ययोः क्तप्रत्ययो भवति । कइत् कपिलार्थः । तत्राकर्मकेभ्यो भावे, सकर्मकेभ्यस्तु कर्मणि चेति योज्यम् । क्वचित् सकर्मकेभ्यश्च कर्माविवक्षायां भावेऽपि स्यादिति स्मर्त्तव्यम् । अत्रभाव-कर्मणोरिति त्वाधिक्येन व्यपदेशः कृतः, कर्त्तर्यपि भवतीति वक्ष्यते । स्नातमितिभावे क्तः, भावकृद् ब्रह्मणीति ब्रह्मत्वम् । स्तुत इति—कर्मणि क्तः, कपिलत्वाद् गोविन्दाभावः । इह भाव-कर्मणोरेवोक्तत्वात् कर्त्तरि अनुक्ते तृतीया ।

---

**बाल०**—अती । अतीतादौ काले विहितौ क्त क्तवतु विष्णुनिष्ठासंज्ञौ भवतः । संज्ञा-सूत्रमेतत् अतीतादावित्युपादानात् वक्ष्यमाणस्य वर्त्तमानक्तस्यापि विष्णुनिष्ठत्वं ।। २८ ।।

**बाल०**—क्षियः । क्षियः कर्त्तरि विहितायां विष्णुनिष्ठायां परस्यां क्षियस्त्रिविक्रमो भवति । क्षिय इति । क्षि क्षये भ्वादिः क्षिनिवासगत्योः तुदादिर्द्वयोरेव ग्रहणं आक्रोशे दैन्ये च गम्यमाने तु त्रिविक्रमो भवति । आक्रोशः शापः । तस्मात् त्रिविक्रमात् परस्य तरामस्य स्थाने नो भवति । क्षिधातुरिति क्षयार्थ इत्यर्थः । अन्तर्भूतण्यर्थ इति अन्तर्भूत-ण्यर्थत्वात् सकर्मक इत्यर्थः । केवलश्चेति अन्तर्भूतण्यर्थशून्यत्वादकर्मकश्चेत्यर्थः । क्षीणवान् कामं वैष्णव इति अत्रान्तर्भूतण्यर्थः ।। २९ ।।

**३१. अतीतादौ क्त-क्तवतू विष्णुनिष्ठा संज्ञौ ।**

निष्ठेत्यन्ये ।

**३२. क्षियस्त्रिविक्रमो विष्णुनिष्ठायां कर्त्तरि, आक्रोशदैन्ययोस्तु वा, तस्मात्तरामस्य नः ।**

क्षिधातुर्द्विविधः, अन्तर्भूतण्यर्थः केवलश्च । क्षीणवान् कामं वैष्णवः । क्तः कर्त्तरि च वाच्यः । क्षीणायुर्भव क्षितायुर्वा । क्षीणोऽयं वैष्णवः क्षितो वा । भावकर्मणो स्तु—क्षितं कामेन वैष्णवस्य, क्षितः कामो वैष्णवेन ।

---

**अमृता०**—३१. अतीतेति : अतीतादौ काले विहितौ क्त-क्तवतू प्रत्ययौ विष्णुनिष्ठा संज्ञकौ भवतः । आदिपदनिवेशेन वर्त्तमाने च विष्णुनिष्ठत्वं समोहितमित्यग्रे व्यक्तं भावि ।

**अमृता०**—३२. क्षिय इति । कर्त्तरि विष्णुनिष्ठायां क्षियः त्रिविक्रमः स्यात्, आक्रोशदैन्ययोरर्थयोस्तु तत्र त्रिविक्रमो वा स्यात् । अपि च तस्मात् त्रिविक्रमात् परस्य निष्ठातरामस्य नरामो भवति । क्षि क्षये इत्यकर्मक धातुः प्रसिद्धः, तत इह तद्विशेषमाह—क्षिधातु द्विविध इति । क्षीणवानिति—अन्तर्भूतण्यर्थत्वेन सकर्मकत्वे कर्त्तरि क्तवतुः । ननु क्तो भाव-कर्मणोरित्युक्तं, कथं तस्य कर्त्तरि प्रयोग सम्भावना ? तदसम्भवे च कर्त्तरीति न वक्तव्यमिति चेत्तत्राह—क्तः कर्त्तरि च वाच्य इति । वाच्यो वक्ष्यत इत्यर्थः, गत्यर्थाकर्म श्लिषेत्यादिनेति शेषः । क्षीणायुरिति—क्षीण आयु र्यस्येति विग्रहः । क्षीण इत्यकर्मकत्वादुक्तसूत्रेण कर्त्तरि क्तः । अत्राक्रोशो गम्यते । क्षीणोऽयमित्यत्र दैन्यम् । क्षित इति त्रिविक्रमाभाव पक्षे, अतएव तरामस्य न नरामः । भावकर्मणोस्तु न त्रिविक्रमो न वा नत्वमित्युदाहरति—क्षितमित्यादि ।

---

**बाल०**—क्तः । क्तः कर्त्तरि च वाच्यः वक्ष्यते इत्यर्थः । क्षीणायुर्भवेति गत्यर्थाकर्मकश्लिषस्थास-वसजनरुहजीर्यतिभ्यः क्तः कर्त्तरि चेति क्तः । अत्राक्रोशो गम्यते । क्षीणोऽयं वैष्णव इति अत्र दैन्यं गम्यते । क्षितः कामो वैष्णवेनेति अत्रान्तर्भूतण्यर्थत्वात् कर्मणि क्तः ॥ ३० ॥

**बाल०**—श्रिञो । कपिले परे श्रिञ् सेवायामित्यस्मात् जागृवर्जं चतुर्भुजान्ताचोत्तरे इट् न भवति, उर्नुत इति उर्नुञ् आच्छादने । क्षुत इति टुक्षुशब्दे । ऊ ऋरामान्तरुस्नु-णुशीयुनुक्ष्नुश्विडीश्रिभिः । वृङ् वृञ्भ्याञ्च विनैकाचः स्वरान्ता धातवोऽनिटः । इत्युक्तमतः श्रिभूक्ष्णूणामिट् स्यादिति निषेधविधानं । जागरित इति जागृ निद्राक्षये ॥ ३१ ॥

**बाल०**—रदाभ्यां । रदाभ्यामुत्तरस्य विष्णुनिष्ठातस्य पूर्वदस्य च स्थाने नो भवति । दां विनेति, दाधोतोर्विष्णुनिष्ठातस्य पूर्वदस्य च नो भवति । दावर्जनस्य फलमग्रे

## ३३. श्रियो जागृवर्जं चतुर्भुजान्ताच्च नेट् कपिले।

श्रितः भूतः ऊर्णुतः क्षुतः। जागर्त्तेस्तु जागरितः।

## ३४. रदाभ्यां विष्णुनिष्ठा तस्य पूर्वदस्य च नो दां विना, नुद-विनत्ति-त्रा-घ्रा-ह्री-उन्दीभ्यो वा।

---

**अमृता०**—३३. श्रिय इति। इडधिकृतविशेषविधिरेषः। कपिलप्रत्यये परे श्रिय उत्तरे जागृवर्जं चतुर्भुजान्ताच्च धातोरुत्तरे इट् न स्यात्। आख्यते प्रोक्तानिट् कारिकया एतेषामिटि प्राप्ते तन्निषेधविधानमेतत्। ऊर्णुत इति—एकाच्त्वाभादिटि प्राप्तेऽनेन निषिद्धः। जागर्त्ते रपि तेनैव हेतुना प्राप्तस्येटो ऽत्रापाकरणाय जागृवर्जमित्युक्तम् चतुर्भुजान्तादिति किम्—शयितः, शयित्वा। कपिलइति किम्—श्रयिता, श्रयितुं, श्रयितव्यम्।

**अमृता०**—३४. रदाभ्यामिति। ररामात् दरामाच्चोत्तरस्य विष्णुनिष्ठातस्य स्थाने नराम आदिश्यते, तस्मिन् सति पूर्वस्थ दरामस्य च नरामादेशः स्यात्। तत्र दाधातो स्तु नरामो न भवति, अग्रे विशेषाभिधानात्। नुदादिभ्यः षड्भ्य उत्तरे विष्णुनिष्ठातस्य पूर्वदस्य च नरामो वादिश्यते। तत्र च नुद विनत्ति उन्दीनामन्त्यदरामस्य निष्ठा तस्य च विभाषया नादेशः, शेषानान्तु दरामाभावात् निष्ठा तस्यैव तादृशादेशो वेदितव्यः। तत्र पुनः त्राघ्रा इत्यनयो र्हरिमित्रयुगित्यादि वक्ष्यमाणविधिना नित्यं नरामे प्राप्ते ह्रीधातोर-प्राप्ते च विकल्प एषः।

शीर्ण इति—शॄ हिंसायाम्, पूर्वसूत्रेण इड्निषेधः, ॠरामस्येर कंसारौ इति ररामे सति तस्य नः, णत्वञ्च, ततो धातो रवः प्रागिति त्रिविक्रमः। एवं विस्तीर्णः निगीर्ण इत्यादयः। भिन्नइति—भिदिर् विदारणेः सहजानिट्, तस्य पूर्व दस्य च नः, एवं छिन्नः

---

वक्तव्यं नुद प्रेरणे विद विचारे त्रैङ् पालने घ्रा गन्धोपादाने ह्री लज्ज्वायां उन्दी क्लेदने इत्येतेभ्य उत्तरस्य विष्णुनिष्ठातस्य नो वा भवति, पूर्वदस्य च नः। सन्नियोगशिष्ट नरामद्वयविधानं यदा विष्णुनिष्ठातस्य नो भवति। तदैव पूर्वदस्य च नः, यत्र पुनर्दरामो नास्मि, तत्र विष्णुनिष्ठातस्य नः। नदविनत्युन्दीनां पूर्वेण त्राघ्रा इत्यतयोरपि हरि-मित्रेत्यादिना वक्ष्यमात्रसूत्रेण प्राप्ये ह्रीत्यस्याप्राप्ते विभाषा। शीर्ण इति शॄ हिंसायां ॠरामस्येर् कंसारावितीर् धातोरव इति त्रिविक्रमः। भिन्न इति भिदिर विदारणे सहजानिट् तस्य दस्य च नः। नुन्न इति सहजानिट् तस्य दस्य च नः। नुन्न इति सहजा-निट्त्वान्नेट्। एवं विन्न इति च। विनत्तीति निर्देशात् विद सत्ताया मित्यस्य नित्यं। विन्न इति च॥ ३२॥

**बाल०**—आ ई। विष्णुनिष्ठायां परस्यां आरामानुबन्धादीरामानुबन्धात् विकल्पित इट् यस्य तस्मात् टु ओ श्वि गतिवृद्ध्योः इत्यस्मात् आङ्पूर्वात् श्वस प्राणने इत्यस्मात्

शॄ-शीर्णः, भिन्नः, नुन्नः, नुत्तः, विन्नः वित्तः, त्राणः त्रातः, घ्राणः घ्रातः, ह्लीणः ह्लीतः ।

## ३५. आईरामानुबन्धाद् विकल्पितेटः श्वयते राश्वसे र्वमेश्च नेड् विष्णुनिष्ठायाम् ।

उन्नः उत्तः । नवर्जं तवर्गस्थस्य इत्युक्ते रत्रतु मूर्द्धन्यत्वं क्षुण्णः ।

---

भिन्न इत्यादि । नुन्न इति नुदप्रेरणे, तस्य पूर्वदस्य च नः, तदभावपक्षेनुत्त इति । विन्नइति—श्ममा निर्देशात् विद विचारणे इत्यस्य हि विकल्पो विहितः । विद्यते विन्दते श्च विन्नमिति नित्यम् । तथा वित्तमिति निपातश्च वक्ष्यते, वेत्तेस्तु विदित इत्येव । अत्र इटो व्यवधानतया निष्ठा तस्य न नत्वं, दरामपूर्वत्वाभावात् ।

**अमृता०**—३५. आईरामेति । विष्णुनिष्ठायां परस्यां आरामानुबन्धात् ईरामानुबन्धात्, विकल्पितेटः, तथा टुओश्वि गति-वृद्धचोः, आङ्शासु इच्छायां, टुवमु उद्गिरणे, इत्येतेभ्यश्चोत्तरे इडागमो न स्यात् । उन्नइति—उन्दी क्लेदने, ईरामानुबन्धत्वानेट्, अनिरामेतामित्युद्धवनरामहरः । क्षुण्ण इति—क्षुदिर् सम्पेषणे, तस्य पूर्वदस्य च नित्यं नः, ततः षात् परस्य पूर्वं नस्य—"तवर्गस्थस्य नस्य न णत्वमिति निषेधे तत्र" नवर्जेति विशेषण-निवेशात् नरामस्थस्य पूर्वनस्य णत्वम्, तस्मिंश्च सति टवर्गयुक्तत्वेन षात् परस्येत्यादिना परनरामस्य ( प्रत्ययनरामस्य ) च णत्वं जातमिति विशदः । एवं ओविजी—उद्विग्नः, ओलजीलग्नः । एवमारामानुबन्धात्—ञिमिदा–मिन्नं, ञिस्विदास्विन्नमित्यादि । विकल्पितेटः—प्रसूतः विधूतः गूढ इत्यादयः ।

---

टुवम उद्गिरणे इत्यस्माच्च उत्तरे इट् न भवति । उन्न इति ईरामानुबन्धत्वान्नेट् अनिरामेतामित्यादिना नरामहरः । मूर्द्धन्यत्वं णत्वं । क्षुण्ण इति क्षुदिर् सम्पेषणे सहजानिट् तस्य दस्य च नः, णत्वं, नवर्जं तवर्गस्थस्य नस्य न णत्वमिति सूत्रं ॥ ३३ ॥

**बाल०**—हरि । हरिमित्रयुक्सत्सङ्ग आदिर्येषां ते हरिमित्रयुक्सत्सङ्गादयस्ते च ते आरामान्ताश्च तेभ्य. ल्वादेः ओरामेतश्च उत्तरस्य स्थाने नो भवति । भ्वादिगणः । दुनोति, टु दु उपतापे गु पुरीषोत्सर्गे इत्येतयोर्विष्णुनिष्ठातस्य स्थाने नो भवति, तयोस्त्रिविक्रमश्च । द्राण इति द्रा कुत्सायां । ग्लान इति ग्लै हर्षक्षये लून इति लूञ छेदने श्रिञो जागृवर्जेत्यादिना इड् निषेधः ॥ ३४ ॥

**बाल०**—पूञो । पूञ् पवन इत्यस्य विष्णुनिष्ठातस्य स्थाने विनाशेऽर्थे एव नो भवति नान्यत्र । पूत इति पवित्र इत्यर्थः । ज्योति ज्या वयोहानौ ल्वादिः । दुगताविति प्रसादे भ्रम इति । प्रसादे व्याकरणविशेषे । हेतुमाह अमरेति । दु गतावित्यस्य ग्रहणे सति अमरकोषकविकल्पद्रुमादिभिः सह विरोधः स्यादिति । तथाहि, सन्तप्तो धूपितधूपायितौ च दूनश्चेत्यमरकोषः । दुष्टोऽनुताप इति कविकल्पद्रुमः । टुरामौ रामनरामा इतः

**३६. हरिमित्रयुक् सत्सङ्गाद्यारामान्त-ल्वादिभ्य ओरामेतश्च विष्णुनिष्ठा तस्य नः, दुनोति-ग्वो स्त्रिविक्रमश्च ।**

द्राणः ग्लानः लूनः ।

**३७. पूञो विनाशएव ।**

पूनः, नष्ट इत्यर्थः । अन्यत्रतु पूतः । ज्या—ग्रहिज्येति सङ्कर्षणः,

---

**अमृता०**—३६. हरिमित्रेति । हरिमित्रयुक् यः सत्सङ्गः, स आदि र्येषामारान्तानां ते हरिमित्र युक्सत्सङ्गाद्यारामान्ताः तेभ्यः, ल्वादे स्तथा ओरामेतश्चोत्तरे विष्णुनिष्ठा तस्य स्थाने नराम आदिश्यते । टुदु उपतापे गु पुरोषोत्सर्गे इत्यनयो स्त्रिविक्रमश्च भवति, चकारात् एताभ्यां निष्ठा तस्य नरामादेशश्च । द्राण इति द्रा कुत्सायाम् । ग्लान इति ग्लै हर्षक्षये, लून इति लूञ् छेदने, सर्वे सहजानिटः । ल्वादिरिति—क्र्याद्यन्तर्गतः, लूञ् इत्यारभ्य । ल्यी च श्लेषणे इति यावदेकविंशतिः । तत्र स्तॄञ् कॄञ् वॄञ् शॄ प्रभृति दीर्घ ऋरामान्तेभ्यो रदामित्यनेनैव नत्वं सिद्धम्, अत स्तदितरेभ्य एव तस्य नराम प्राप्त्यमिह ल्वादीनां ग्रहणमिति विवेचनीयम् ।

**अमृता०**—३७. पूञ इति । पूञ् पवने इत्यस्य विष्णुनिष्ठा तस्य स्थाने नरामो भवति विनाशार्थे एव नत्वन्यार्थे । जीन इति ज्या वयो हानौ, ल्वादित्वात् पूर्वोक्तसूत्रेण नः । प्रसादे भ्रम—प्रसादो नाम प्रक्रिया कौमुद्या व्याख्या ग्रन्थो विट्ठलाचार्य विरचितः ।

---

ओरामेत्वाद्विष्णुनिष्ठातस्य नः नरामेत्त्वात् स्वादित्वं । विष्णिवति । विष्णुनिष्ठाया आदेशस्य नरामस्य षत्वादन्यत्र स्थाने स्थानिवद्भावः । स्थानिवत्त्वं तरामवत्त्वं । इष्ट इति पूर्वाचार्यैरिति शेषः । अतो वैष्णवस्य परत्वं । ततश्च चवर्गस्य कवर्गः । भुग्न इति ओरामेत्वाद्विष्णुनिष्ठातस्य नः । षत्वमत्रतु न स्यादिति षत्वादन्यत्रेत्युक्तत्वादिति शेषः । चवर्गस्य कवर्ग इति स्थानिवद्भावादिति शेषः । प्रहीन इति दामोदरेत्यादिना ईरामः । दिवादौ वर्त्तमानाः षूङादयो व्रीङन्ता धातव ओरामेतो भवन्ति, ओरामेत्त्वात्तेषां विष्णुनिष्ठातस्य स्थाने नो भवति । तद्गणो यथा । षूङ दूङ दीङः प्रोक्ता धीङमीङौ रीङस्तथा । णीङ डीङ वृञश्चैते ओरामेतः षूङादयः । षूङ प्राणिगर्भविमोचने दूङ परितापे दीङ क्षये धीङ अनादरे मीङ हिंसायां रीङ श्रवणे लीङ श्लेषणे डीङ विहायसां गतौ व्रीङ वरणे । एते नव षूङादयः ॥ ३५ ॥

**बाल०**—डीङो । विष्णुनिष्ठातस्य नो भवतीति, प्रतिपादितमेव इट् च न भवति, ऊ ऋरामान्तेत्यादौ डीङोऽपि वर्जनमुक्तमत इट् स्यादिति निषेधविधान । दिवादेरोरामेत्वादिङनिषेधश्च तस्यैव तेन ज्ञादेस्तु डयित इति केषाञ्चिन्मतं । अस्माकं मतेत्विटः परसम्बन्धित्वेन कपिलत्वाद्गोविन्दो न भवति । किन्त्वातिदेशिकविधेरनित्यत्वात् टिदागमः परसम्बन्धीति क्वचिद्व्यभिचरति च तस्मादिटः परसम्बन्धित्वं खण्डयित्वा पृथक् रामधातुमननेन एवम्बिधादौ स्थाने गोविन्दोऽपि भवितुमर्हति सर्वत्रेति ॥ ३६ ॥

श्याशिवव्याजेति त्रिविक्रमः जीनः। टुदु उपतापे दूनः। दु गताविति प्रसादे भ्रमः। अमर कोष कवि कल्पद्रुमादि विरोधात्। गूनः। विष्णु निष्ठादेशस्य षत्वादन्यत्र स्थानिवद्भाव इष्टः। तेन चवर्गस्य कवर्गे भुजो भुग्नः। ओव्रश्च् सङ्कर्षणः, विष्णुनिष्ठा तस्य नः, स्कोः सत्सङ्गाद्यो हरः, छशो राजित्यादिना प्राप्तं षत्वमत्रतु नस्यात्, ततश्चवर्गस्य कवर्गः, णत्वं वृक्णः। ओहाङ्—प्रहीणः। दिवादौ षूङादयो वृङन्ता ओरामेतः। सूनः दूनः।

**३८. डीङो नेट् च।**

डीनः लीनः दीनः।

---

तस्य भ्रमत्वमुपपादयति—अमरकोषेत्यादिना। तथाहि—"सन्तापितस्तु सन्तप्तो धूपितो धुपायितौ च दूनश्चे"त्यमरेण सन्ताप पर्याये दूनो निवेशात्तस्य उपतार्थएव स्वीकृतः। कविकल्पद्रुमे तु स्पष्टं यथा—टुद्नोऽनुतापे इति। तत्र टुराम इत् इवर्थः ओराम इत् निष्ठा तस्य नरामार्थः, नरामइत् स्वादित्वबोधनार्थः। गून इति दूनवत्। ननु भुजो धातोः ओरामेत्त्वाद् विष्णुनिष्ठा तस्य नरामे सति कथं चवर्गस्य कवर्गः, वैष्णवपरत्वाभावादिति चेत्? तत्र सिद्धान्तमाह—विष्णुनिष्ठादेशस्येत्यादि। विष्णुनिष्ठाया य आदेशो नरामादिरूपः स स्थानिवद् भवति षत्वविधिं विनेति पूर्वाचार्याणां मतम्। अतः स्थानिवत्त्वेन वैष्णवपरत्वात् कवर्गसिद्धौ न बाध इति भावः। ओ व्रश्चिति—उपदेशे धातुर्दन्त्यमध्य एव। अतः सङ्कर्षणे नरामादेशे च सति सत्सङ्गादेः सस्य च हरे छशोरित्यादिना षत्वं प्राप्तम्, तत्तु न भवति, वैष्णवपरत्वाभावात्, षत्वादन्यत्र हि स्थानिवद्भाव इष्ट इत्युक्तेः। ततो हि चरामस्य करामः, नरामस्य करामः, नरामस्य णत्वञ्चेति वृक्णः। प्रहाण इति—दामोदरमास्थेत्यादिना ईरामः। दिवादौ षूङादयो नव ओरामेतः। यथा,—सूङ् दूङ् दीङ् धीङ् मीङ् रीङ् लीङ् डीङ् वृङः सूङादयः सर्वे ओरामेत इति। ओरामेत्त्वादेषां विष्णु निष्ठा तस्य नराम इत्यर्थः।

**अमृता०**—३८. डीङ इति। अस्मादुत्तरे इट् च न स्यात्, चकार उक्तं नत्वमाकर्षति। आख्यातोक्तानिट् कारिकया प्राप्त इडत्र निषिद्धः। अन्ये तु तयैव सहजानिटः सिद्धाः।

---

**बाल०**—स्फायः। विष्णुनिष्ठायां परस्यां स्फायी बृद्धावित्यस्य स्थाने स्फीर्वा भवति। स्फोत इति ईरामानुबन्धत्वा न्नेट्। स्फात इति यवयोर्हरो बल इति य लुक्॥ ३७॥

**बाल०**—श्यैङः। द्रवकाठिन्ये हिमत्वे च वाच्ये विष्णुनिष्ठायां परस्यां श्यैङ् गतावित्यस्य सङ्कर्षणो भवति। हिमत्वे शीतलत्वे। प्रतेरुत्तरस्य श्यैङस्तु द्रवकाठिन्ये

**३९. स्फायः स्फी र्वा विष्णुनिष्ठायाम् ।**

स्फीतः स्फातः । उच्छी विवासे, व्युष्टा रजनी, अतिक्रान्तेत्यर्थः ।

**४०. श्यैङः सङ्कर्षणो द्रवकाठिन्ये हिमत्वे च, प्रतेस्त्वन्यत्र च, अभ्यवाभ्यामेव वा विष्णुनिष्ठायां, विष्णुनिष्ठा तस्य नो, नतु हिमत्वे ।**

शीनं घृतम् । हिमत्वे तु शीतं जलम् । द्रव्येतादिभ्यामन्यत्र— संश्यानो

---

अमृता०—३९. स्फाय इति । विष्णु निष्ठायां परस्यां स्फायी वृद्धौ इत्यस्य स्थाने स्फी र्वादिश्यते । स्फीत इति—ईरामानुबन्धत्वान्नेट् । स्फात इति—यवयो हरो बल इति यरामहरः । व्युष्टेति—ईदित्त्वान्नेट्, छस्य शः, छशो रिति षः, निष्ठा तस्य टवर्गश्च ।

अमृता०—४०. श्यैङ इति । विष्णुनिष्ठायां परस्यां श्यैङ् गतौ इत्यस्य द्रवकठिन्ये हिमत्वे चार्थे सङ्कर्षणो भवति, प्रतेरुत्तरस्य तस्य पूर्वार्थद्वये तथान्यत्र चार्थे सङ्कर्षणः स्यात्, केवलाभ्यां अभ्यवाभ्यां उत्तरस्य तस्य तु सङ्कर्षणो वा स्यात् तेष्वेवार्थेषु । श्यैङो विष्णुनिष्ठातस्य नरामो भवति हिमत्वं विना । हरिमित्रयुगितिपूर्वेण हि नत्वं सिद्धमस्ति, तत्तु हिमत्वं विनेति नियम्यतेऽत्र । शीनं घृतमिति—हिमत्वेन हेतुना द्रवावस्थातः काठिनतां प्राप्तमित्यर्थः । श्या श्वि व्या ज्याभ्य इति सङ्कर्षणस्य त्रिविक्रमः । शीतमिति

---

हिमत्वे अन्यत्र च वाच्ये सङ्कर्षणो भवति । अभ्य-प्रतेः । विष्णुनिष्ठायां परस्यां केवलाभ्यामभ्यवाभ्यामुत्तरस्य श्यैङः सङ्कर्षणो वा भवति । विष्णु । श्यैङोविष्णुनिष्ठातस्य स्थाने नो भवति, हिमत्वेतु नो न भवति । शीनं घृतमिति द्रवावस्थायाः काठिन्यं गतमित्यर्थः । सङ्कर्षणे कृते श्याश्विव्याज्याभ्यां सङ्कर्षणस्य त्रिविक्रम इति त्रिविक्रमः । शीतमिति शीतलमित्यर्थः । द्रवेत्यादिभ्यां द्रवकठिन्यहिमत्वाभ्यां । संश्यान इति अत्र सङ्कर्षणस्यैवाभावः । विष्णुनिष्ठातस्य नो भवत्येव । प्रतिशीनो गौरिति शीतात् संकुचित इत्यर्थः । प्रतिशीनो द्रव इति काठिन्यं गत इत्यर्थः । एवमवेति । अवश्यान अवशीन इति । समवश्यान इति । समवश्यान इति अत्रावश्यं समुपेन्द्रेण मिश्रत्वमतः सङ्कर्षणाभावः ।।३८

बाल०—दिवो । दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु इत्यस्य विष्णुनिष्ठातस्य स्थाने नो भवति, विजिगीषायामर्थे वर्त्तमानस्य तु नो न भवति । अश्वो । अपादानाभावे सति अश्वो विष्णुनिष्ठातस्य स्थाने नो भवति । इवन्तत्वादिति । दिव धातोरिति शेषः । सनि विकल्पितेडिति विकल्पितेट्त्वात् विष्णुनिष्ठायामिडभावः । द्यून इति छस्य शो वस्य उट् हरिवेणावित्यादिना वस्य उट् । द्यूतमिति अत्र विजिगीषा धात्वर्थः । समक्न इति अञ्चु गतिपूजनयोः गत्यर्थत्वात् अनिरामेतामित्यादिना नरामहरः सङ्गत इत्यर्थः । पूजायान्तु न लोपाभाव उक्तः । उदक्त इति अत्रापादानसद्भावः, उद्गतः इत्यर्थः । ञि फलेति ञि फला विसरणे ।। ३९ ।।

गौः, शीतात् सङ्कुचित इत्यर्थः। प्रत्यादिभ्यस्तु—प्रतिशीनो गौ र्द्रवो वा। अभिश्यानः अभिशीनः, एवमव। एवकारात् समवश्यानः।

**४१. दिवो विष्णुनिष्ठा तस्य नो, नतु विजिगीषायाम्; अञ्चोऽनपादाने।**

इवन्तत्वात् सनि विकल्पितेट् द्यूनः। विजिगीषायां द्यूतम्। अञ्चः समक्नः। अपादाने तु उदक्तः कृष्ण आसनात्। ञि फला। आरामानुबन्धः।

---

हिमार्थत्वान्न नादेशः। संश्यान इति—द्रवकाठिन्यार्थ विरहिततया (सङ्कोचार्थतया) न सङ्कर्षणः, हिमार्थाभावत्वेन नादेशस्तु निर्बाधः। प्रते स्त्वन्यत्र चेति—प्रतिशीनं पुष्पं, म्लानत्वं गतमित्यर्थः। अभ्यवाभ्यामेवेत्यत्र एवकारनिवेश फलं दर्शयति—समवश्यान इति। अत्रावात् पूर्व समः संयोगात् न सङ्कर्षणः।

**अमृता०**—४१. दिव इति। दिवु क्रीडादिषु इत्यस्मादुत्तरस्य विष्णुनिष्ठा तस्य नरामादेशः स्यात्, तस्य विजिगीषार्थे तु स न भवति। अञ्चु गति-पूजनयोरित्यस्य चेदयादानेनान्वयो न स्यात्तदा तत्परस्य निष्ठा तस्य नराम आदिश्यते। सनिविकल्पितेडिति—तेन आई रामानुबन्धाद् विकल्पितेट इत्यादिना विष्णुनिष्ठायामिडभावः। द्यून इति—दस्य शो वस्य ऊठ् इत्यादिना ऊठ्। समक्न इति—संपूर्वाञ्चते र्गत्यर्थत्वात् कर्त्तरि क्तः। पूजायां नलोपाभाव इत्युक्तत्वात्र नलोपः, पूर्ववत्स्थारिवत्त्वेन चवर्गस्य कवर्गः। उदक्त इति च कर्त्तरि क्तः, अपादानेनान्वयात् निष्ठा तस्य न नः। एवं कर्मण्यपि न—उदक्तं जलं कूपाद् वैष्णवेन। पूजायान्तु—अञ्चितः कृष्णः कुरुपाण्डवैः।

---

**बाल०**—चर। चर गतावित्यस्य फलधातोश्च अरामस्य स्थाने ते परे उर्भवति। चरधातोरुदाहरणमग्रे वक्ष्यते। प्रफुल्त इत्यारामानुबन्धान्नेट्। फलितेति बालकल्कि-ता इट् अत्रेटा व्यवधानात् न तरामस्य परता॥ ४०॥

**बाल०**—फुल्लोत्। वृत्तिमाह ञिफलादीनामेते निपाता इति। ननु यदि फुल्लादयो निपात्यन्ते तर्हि कथं फुल्लवानित्यादि न भवत्विति चेत्तत्राह प्रकरणादिति। विष्णुनिष्ठायाः प्रकरणात् इदं सूत्रं विष्णुनिष्ठोपलक्षणं विष्णुनिष्ठाग्राहकमित्यर्थः। तेन हेतुना यथासम्भवं सम्भवानतिक्रमेण क्तवतापि ज्ञेयमिति शेषः। फुल्ल इति निपातात्। ञि फलः फुल् विष्णुनिष्ठातस्य नश्च। क्षीबृ इति क्षीबृ मदे क्षीव इति निपातात् तरामस्यारामः मत्त इत्यर्थः। क्षीववानिति क्षीवितवान् इत्येके। कृश इति कृश तनुकरणे निपातात् तरामस्यारामः तनुरित्यर्थः। उल्लाघ इति व्याधिनिर्मुक्त इत्यर्थः। उल्लाघो निर्गतो गदादित्यमरः। नान्योपेन्द्रादिति। उत्फुल्लसंपुल्लयोः पृथक् पाठादुल्लाघेति सोपेन्द्रनिर्देशाच्चेति शेषः। इत्यादीत्यादिपदेन संलाघित इत्यादि ज्ञेयं। कथमिति प्रफुल्लपुण्डरीकाक्षमिति मुखमित्यस्य विशेषणं पुण्डरीकं शुक्लपद्मं। सिद्धान्तमाह पश्चादिति।

**४२. चर फलयो रस्य उस्ते ।**

प्रफुल्तः । तइति किम्—फलिता । फल निष्पत्तौ—फलितः । क्तीति तस्यां भ्रमः ।

**४३. फुल्लोत्फुल्लसंफुल्लाक्षीवकृशोल्लाघाः ।**

ञि फलादीनामेतेनिपाताः । प्रकरणाद् विष्णुनिष्ठोपलक्षणमिदम्; तेन यथासम्भवं क्तवतावपि । फुल्लः फुल्लवान् । क्षीवृ—क्षीवः क्षीवबान् । कृशः—कृशः कृशवान् । लाघृङ् सामर्थ्ये— उल्लाघः उल्लाघवान् ।

---

अमृता०—४२. चरेति । तरामेपरे चर-फलयो र्धात्वोः अरामस्थाने उराम आदिश्यते । प्रफल्त इति—आरामानुबन्धत्वान्नेट् । फलितेति बालकल्के: प्रयोग: । तत्र-इटा व्यवधानान्न हि तरामपरत्वमित्युरामो न । फल निष्पत्तौ इत्यस्य तु आरामानु बन्धत्वविरहादिटो न बाधा । तस्यां प्रक्रियाकौमुद्यां भ्रम इति—उणादौ दोष सम्भवात् । यथा—"सर्वधातुभ्यः ष्टण्" ( त्र ) इत्यत्र नेड्वन् ति त्रादौ" इतीनिषेधात् "फुल्त्र" इत्येवं रूपं सर्वसम्मतम्, किन्तु तन्मते "फल्त्र" इत्येव सिध्यति प्रत्ययस्य कित्त्वाभावादिति ।

अमृता०—४३. फल्लेति । ञिफलादीनां फुल्लादयो निपात्यन्ते । तत्र फुल्लादयः क्तप्रत्ययेन निपातिताः, क्तवतौ तु ते निपातादेशा भवन्ति न वेति संशये प्राह—विष्णु-निष्ठोपलक्षणमिति । तत्र हेतुः—प्रकरणादिति । विष्णुनिष्ठा प्रकरणे निपातस्योक्तत्वात् क्तवतावपि एते निपाता भवन्तीत्यर्थः । तत्रापि यथासम्भवमेव नतु सर्वत्र । तेन वक्ष्यमाण भीम-भीष्माविति निपातादेशौ तु क्तवतौ नैवेष्टौ इति लक्षितव्यम् ।

फुल्ल इति—विष्णुनिष्ठातस्य लरामएव निपातफलम्, उत्वन्तु पूर्वतो हि सिद्धम् । क्षीव इति—क्षीवृ मदे, कर्त्तरि क्तः, निपातबलान्निष्ठा तरामस्य अरामः, इडभावश्च, मत्त इत्यर्थः । कृश इति—कृश तनुकरणे, कर्त्तरि क्तः, निपातफलं पूर्ववत्, क्षीणाङ्ग इत्यर्थः । उल्लाघ इति—पूर्ववदेव निपातकार्यं, नीरोग इत्यर्थः । नाम्योपेन्द्रादिति—उत्फुल्लादौ यथानिर्देशमेवोपेन्द्राः प्रयोक्तव्या इत्यर्थः । स्वयमाशङ्क्य समाधत्ते—पश्चात् समासेनेति ।

---

प्रकृष्टं फुल्लं प्रफुल्लमिति कुप्रादयो मध्यपदलोपश्च । ततश्च प्रफुल्ले पुण्डरीके अक्षिणी यत्रेति पीताम्बरसमासः कर्त्तव्यः ॥ ४१ ॥

बाल०—निर्वो । निर्वो निर्वाणो निपात्यते, वाते वाच्येतु न, वाते वाच्ये विष्णु-निष्ठातस्य नो न भवतीत्यर्थः । निर्वाणो मुनिरिति मुक्तो वभूवेत्यर्थः । निर्वाणो मुनिवह्न्यादौ निर्वातस्तु गतेऽनिल इत्यमरः । अनभिधानात् क्तवतौ न भवतीति ज्ञेयं । मुक्तिवाचकस्तु निर्वाणशब्दो अनप्रत्ययान्तो ब्रह्म मुक्तिः कैवल्यनिर्वाणमित्यमरः ॥ ४२ ॥

बाल०—निर्वि । निर उत्तरस्य विद सत्तायामित्यस्य कृतमूर्द्धन्यो निपात्यते कृत-

नान्योपेन्द्रात्,—प्रफुल्त इत्यादि। कथं—प्रफुल्लपुण्डरीकाक्षं यः पश्यति हरेर्मुखमिति ? पश्चात् समासेन।

४४. निर्वो निर्वाणो नतु वाते।

वा गति-गन्धनयोः। निर्वाणो वह्नि र्मुनि र्वा। वाते तु निर्वातो वातः।

४५. निर्विण्णो निर्विद्यतेः।

कृतमूर्द्धन्यो निपात्यते।

४६. सिनः कर्म कर्त्तरि बन्धेर्ग्रासे।

सिञ् बन्धने। सिनो ग्राहः स्वयमेव।

---

यद्वा फुल्ल विकसने इति धातोः "पचादेरत्" इत्यपि वक्तुं शक्यते। पश्चात् समासपक्षे—प्रकृष्टं फुल्लं प्रफुल्लं, प्रफुल्ले पुण्डरीके इव अक्षिणी यत्र तन्मुखमित्यर्थः।

**अमृता०**—४४. निर्व इति। निपूर्व वाते निर्वाण इति निपात्यते, तस्य वायौ वाच्ये तु नरामो न भवति। विष्णुनिष्ठा तस्य नरामस्तु लक्षणेन न प्राप्नोतीति निपातः क्रियते। तत्र च गत्यर्थस्य ह्येतन्निपातो नतु गन्धनार्थस्य। निर्वाणो वह्निरिति—इह गतेरुपशमार्थो लक्ष्यते। निर्वाणो मुनि रित्यत्रापि स एवार्थः, मुक्तइतिभावः। निर्वातो वात इति—वायो र्गति निरुद्धेत्यर्थः।

**अमृता०**—४५. निर्विण्ण इति। निर्पूर्व विद्यते निर्विण्ण इति कृतमूर्द्धन्यो निपात्यते। दरामान्तत्वाद् विष्णुनिष्ठा तस्य पूर्वदस्य च नरामः सिद्ध एव, किन्तु कृष्णः सर्वेश्वरात् परो नास्तीति मूर्द्धन्यत्वाप्राप्ते तदर्थो हि निपातः।

**अमृता०**—४६. सिन इति। बन्धे ग्रासे अर्थे कर्मकर्त्तरि सति सिञः सिन इति निपात्यते। विष्णुनिष्ठा तरामस्य नरामो निपातफलम्। ग्रासः सिनो बद्ध इत्यर्थः। ग्रास इति किम्—सितः पाशेन मृगः। कर्म कर्त्तरीति किम्—केवलकर्मणि तु न स्यात्, सितो ग्रासोरामेण।

---

मूर्द्धन्य इति कृतणत्व इत्यर्थः। विष्णुनिष्ठातस्य दस्य च नः सिध्यत्येव किन्तु णत्वमेव निपात्यते इत्यर्थः॥ ४३॥

**बाल०**—सिनः। बन्धे ग्रासे कर्मकर्त्तरि सति सिनो निपात्यते। अत्र सिञ बन्धने इत्यस्यैव ग्रहणमिति सूचयितुं बन्ध इत्युक्तं। सिन इति निपातात् विष्णुनिष्ठातस्य नः बद्ध इत्यर्थः ग्रास इति किं सितो वृषभः स्वयमेव। कर्मकर्त्तरीति किं सितो वैष्णवेन ग्रासः॥ ४४॥

**बाल०**—शुषो। शुष शोषण इत्यस्य विष्णुनिष्ठातस्य स्थाने को भवति। पचो डु पचष पाक इत्यस्य विष्णुनिष्ठातस्य स्थाने वो भवति। क्षायः क्षै धातोर्विष्णुनिष्ठातस्य स्थाने मो भवति। शुष्क इति सहज्रामिट्त्वान्नेट्। क्षामः कृशः॥ ४५॥

**४७. शुषो विष्णु निष्ठा तस्य कः, पचो वः, क्षायो मः ।**

शुष्कः, पक्व, क्षै क्षये क्षामः ।

**४८. प्रस्तीमादयः प्रपूर्वस्य स्त्यायो निपात्यन्ते ।**

प्रस्तीमः प्रस्तीमवान्, प्रस्तीतः प्रस्तीतवान् ।

**४९. न ध्या ख्या पॄमदि मूर्च्छिभ्यो नः ।**

---

**अमृता०**—४७. शुष इति । शुष शोषणे इत्यस्माद् विष्णुनिष्ठा तस्य करामं आदिश्यते, डुपचष पाके इत्यस्मात् तस्य वरामः, तथा क्षैधातोश्च तस्य मरामआदिश्यते । क्षामइति—चतुर्व्यूहान्तानामारामान्तपाठोऽशिवे इत्यारामः ।

**अमृता०**—४८. प्रस्तीमेति । प्रपूर्वस्य स्त्यायः प्रस्तीमादयस्त्रिविक्रमादिना निपात्यन्ते । स्त्याय इयि स्त्यै शब्दसंघातयोः, तस्य स्तीभावो निष्ठातस्य विभाषया नरामश्च निपातफलम् ।

**अमृता०**—४९. नध्येति । ध्यादि पञ्चभ्यो विष्णुनिष्ठातस्य न रामो न स्यात् । ध्या ख्या इत्येतयो र्हरिमित्रयुगित्यादिना, पॄ मदि मूर्च्छीनां रदाभ्यामित्यादिना निष्ठातस्य नरामे प्राप्ते तत्तत् प्रतिषेधोऽयम् । ध्यात इति ध्यै चिन्तायां, आरामान्तपाठेः । पूर्त्त इति —पॄ पालनपूरणयोः; श्रियो जागृवर्जं चतुर्भुजान्ताच्चेति नेट्, ओष्ठोद्भवस्येति उर्, धातो

---

**बाल०**—प्रस्ती । प्रपूर्वस्य स्त्यायः स्थाने विष्णुनिष्ठया सह प्रस्तीमादयः निपात्यन्ते । प्रपूर्वस्येत्यादिकं वृत्तिर्वा । प्रस्तीम इति ष्टचै स्तै शब्दसंघातयोर्निपातात् स्त्यायः स्तीर्विष्णुनिष्ठातस्य नश्च । प्रस्तीत इति निपातात् स्त्यायः स्तीः ।। ४६ ।।

**बाल०**—न ध्या । ध्यादिभ्य उत्तरस्य विष्णुनिष्ठातस्य स्थाने नो न भवति । ध्यात इति ध्यै चिन्तायां हरिमित्रयुगित्यादिना प्राप्ते निषेधः । एवं ख्यात इत्यत्र च । ख्यात इति ख्या प्रकथने चक्षिङादेशश्च । पूर्त्त इति पॄ पालनपूरणयोः । ओष्ठोद्भवस्य ॠत उर् रदाभ्यामित्यादिना प्राप्ते निषेधः । एवं मत्त इत्यत्र च । मत्त मदी हर्षे इरामानुबन्धत्वान्नेट् । मूर्त्त इति मूर्च्छा मोहसमुच्छ्राययोः आरामानुबन्धत्वान्नेट् रदाभ्यामित्यादिना प्राप्ते निषेधः । ओष्ठोद्भवस्येति विशेषणत्वादिति न ॠत उर् इति शेषः । ओष्ठचेति ओष्ठचोद्भवस्येत्यस्य विशेषणत्वात् धातुविशेषणत्वादित्यर्थः । विशेषादिति वा पाठः । समीर्ण इति ॠरामस्येर् कंसाराविती‍र् ।। ४७ ।।

**बाल०**—वित्तं । भोग्ये प्रतीते च वाच्ये वित्तं निपात्यते । वित्तं धनमिति द्रव्यं वित्तमित्यमरः । सूत्रे लिङ्गवचनमतन्त्रमित्याह वित्तः कृष्ण इति प्रतीत इत्यर्थः । प्रतीते कथित ख्यात-वित्त-विज्ञात विश्रुता इत्यमरः । निपातात् विष्णुनिष्ठातस्य दस्य च नो न भवति ।। ४८ ।।

**बाल०**—भीम । भयानके भयङ्करे वाच्ये साधू इति निपात्येते इत्यर्थः । दारुणं भीषणं भीष्मं घोरं भीमं भयानकमित्यमरः । निरः । विष्णुनिष्ठायां परस्यां निर

ख्यातः ख्यातः पूर्त्तः मत्तः। राच्छवयो र्हरः क्वौ कंसारिवैष्णवे च—मूर्त्तः। ॠ गतौ क्र्यादिः, ओष्ठ्योद्भवस्येति धातु विशेषणत्वात् समीर्णः।

## ५०. वित्तं भोग्ये प्रतीते च।

वित्तं धनम्, वित्तः कृष्णः।

---

खः प्रागिति त्रिविक्रमश्च। मत्त इति—मदी हर्षे, ईरामानुबन्धत्वान्नेट्। मूर्त्त इति—छस्य हरे पूर्ववत् त्रिविक्रमः। ननु सम् पूर्व ॠधातोः सत्यपि मरामपूर्वत्वे कथमोष्ठ्योद्भवस्य ॠतउरिति नप्रवर्त्तते? तत्र हेतुमाह—धातुविशेषणत्वादिति। अत्र मरामस्तूपेन्द्रस्य, नतु धातोरङ्गम्, अतः सामान्यविधिना इर् स्यादिति भावः। समीर्ण इति—चतुर्भुजान्तत्वान्नेट्, ॠरामस्येर्, त्रिविक्रमश्च।

**अमृता०**—५०. वित्तमिति। भोग्ये प्रतीते (ज्ञाने) च वाच्ये विदऌ लाभे इत्यस्य क्तप्रत्ययेन वित्तिमिति निपात्यते। रदाभ्यामिति विष्णुनिष्ठा तस्य पूर्वदस्य च यः प्राप्तो नराम स्तस्याभाव इडभावश्च निपातफलम्। वित्तः कृष्ण इति ज्ञात इत्यर्थः। भोग्यादौ किम्—विन्नमिष्टं, लब्धमित्यर्थः।

---

उत्तरस्मात् कुष उत्तरे इट् स्यात्। निरः कुषो वेडिति विकल्लितेडयमिति विकल्पितेट्त्वात् विष्णुनिष्ठायामिट्निषेधः स्यादिति इड्विधानमिति भावः। निष्कुषित इति कुष निकर्षे ररामस्य विष्णुसर्गे कृते निर्दुर्वहिःप्रादुराविश्चतुरामिति विष्णुसर्गस्य यः। अत्र समासकार्येतु षसौ च वक्ष्येते इति सन्धिप्रकरणे उक्तमतोऽसिद्धरूपं न त्याज्यमिति प्रतिज्ञायां न विरोधः॥ ४९॥

**बाल०**—वसति। क्त्वाविष्णुनिष्ठयोः परयोर्वसतिक्षुधिभ्यामुत्तरे इट् स्यात्। लुभो। क्त्वाविष्णुनिष्ठयोः परयोः व्याकुलीकरणेऽर्थे वर्त्तमानात् लुभ उत्तरे इट् स्यात्। अञ्चे। पूजायामर्थे वर्त्तमानादञ्चेरुत्तरे इट् स्यात्। क्लिश। क्त्वाविष्णुनिष्ठयोः परयोः क्लिशपूङ्भ्यामुत्तरे इड् वा स्यात्। ङरामः पूञो निवृत्यर्थः। उषित इति वस निवासे वचिस्वपियजादीनामित्यादिना सङ्कर्षणः वसिघस्योः ष इति षत्वं सहजानिटत्वादिट् न स्यादितीड्विधानं। क्षुधित इति क्षुध बुभुक्षायां सहजानिट्। विलुभितानामिति। लुभ विमोहने व्याकुलीकृतानामित्यर्थः। विलुभिता इति विशृङ्खला भूता इत्यर्थः। इषु सह लुभ रुष रिष इड् वात इति विकल्पितेट्त्वं अतो विष्णुनिष्ठायामिड् निषेधः स्यादितीड्विधानं। क्त्वितु इषु सहेत्यादिना विकल्पे प्राप्ते व्याकुलीकरणे नित्यतार्थं विधानं। लुब्ध इति। लुभगार्द्ध्ये गार्द्ध्यमाकाङ्क्षा। अञ्चित इति अन्चु गतिपूजनयोः उरामेतो वेट् क्त्वीति वक्ष्यते अतो विकल्पितेट्त्वात् विष्णुनिष्ठायामिड्निषेधः स्यादिति पूजायामिड्विधानं। क्त्वितितु। पूर्वपरयोः परविधिर्बलवानित्यनेन उरामेत्वसामर्थ्याद्विकल्प एवेड् भवति, अतः पूजायां अङ् क्त्वेति च भवति। पूजायामङ् क्त्वेति क्रमदीश्वरन्यासकाराभ्यामप्युदाहृतं। अतः वसतीत्यादिसूत्रचतुष्ट मध्ये पूर्वसूत्रद्वये क्त्वाविष्णुनिष्ठयोर्ग्रहणं

## ५१. भीम-भीष्मौ भयानके साधु ।

## ५२. निरः कुष इड् विष्णुनिष्ठायाम् ।

निरः कुषो वेडिति विकल्पतेडयं, निष्कुषितः ।

## ५३. वसति क्षुधिभ्यामिट् क्त्वा-विष्णुनिष्ठयोः, लुभो व्याकुलीकरणे, अञ्चेः पूजायाम्, क्लिश-पूङ्भ्यां वा ।

---

अमृता०—५१. भीमेति । भयानके भीतिप्रदे अर्थे ञि भीभये धातोः क्तप्रत्ययेन भीम्-भीष्मौ निपात्येते । निष्ठा तस्य स्थाने म-ष्म भावौ निपात फले । दानवो भीमदर्शन इति प्रयोगः । भयानक इति किम्—कृष्णाद् भीतः कंसः ।

अमृता०—५२. निर इति । निर् पूर्व कुषनिष्कर्षे इत्यस्माद् विष्णुनिष्ठायामिट् स्यात् । विधानप्रयोजनमाचष्ठे—निरः कुषइत्यादि । अनेनास्य विकल्पितेट् त्वं पूर्वमुक्तम्, अत इह—आई रामानुबन्धाद् विकल्पितेट इत्यादिना इडभावः प्रसक्तः, तत् प्राप्त्यर्थः पुनरारम्भएषः । निष्कुषित इति—उपेन्द्रररामस्य विष्णुसर्गः, ततो निदुर्बहिरित्यादि वक्ष्यमाण समासकार्येण षत्वम् ।

अमृता०—५३. वसतीति । क्त्वा-विष्णुनिष्ठयोः परयोः वसतेः क्षुध्यते श्चोत्तरे एट् स्यात् । तयोः परयोः व्याकुलीकरणार्थे लुभः, पूजायामञ्चतेश्चोत्तरे इट् स्यात् । तयोः परयोः क्लिश-पूङ्भ्यामुत्तरे इड् वा स्यात् । तत्र वसति क्षुध्यतोः सहजानिट् त्वादप्राप्ते विधानम् । लुभतेः—इषु सहलुभेति विकल्पितेट् त्वाद् विष्णुनिष्ठायां निषेधे प्रसक्ते तस्य प्राप्त्यर्थम्, क्त्वा प्रत्यये तु विकल्पे प्राप्ते नित्यतार्थम्, अञ्चतेः—"उरामेतो वेट् क्त्वि" इति वक्ष्यमाणेन विकल्पितेट् त्वादप्राप्ते प्राप्त्यर्थम्, क्त्वा प्रत्यये तु नित्यतार्थम् वचनम् ।

---

प्रयोजनं क्त्वाग्रहणन्तु जलस्थलवृष्टिवदिति । अक्त इति अनिरामेतामित्यादिना नरामहरः । क्लिशितः क्लिशू विबाधने क्र्यादिः क्लिशः उपतापे दिवादिर्वा क्र्यादिः स्वरतिसूतिसूयति धूञूदित इड्वेति विकल्पितेट् त्वाद्विष्णुनिष्ठायामप्राप्ते विभाषा । क्त्विर्वतितु उदित्वादेव विभाषा अपरिहार्यैव दिवादेस्तु विष्णुनिष्ठायां क्त्वि च नित्यं प्राप्ते विभाषा ॥ ५० ॥

बाल०—पूङः । पूङ सेड्विष्णुनिष्ठा कपिलो न भवति । पवित इति पूङ् पवने श्रित्रो जागृवर्जं चतुर्भुजान्ताच्च नेट् कपिल इत्यनेन निषेधे प्राप्ते विभाषा । कपिलत्वाभावाद्गोविन्दः ॥ ५१ ॥

बाल०—शीङ । शीङ स्वप्ने ञि ष्विदा स्नेहनमोचनयोर्भ्वादिः ष्विदा गात्रप्रक्षरणे दिवादिर्द्वयोरेव ग्रहणं । ञि मिदा स्नेहने ञि क्ष्विदा मोक्षणे ञि धृषा प्रागल्भ्ये इत्येतेषां सेड् विष्णुनिष्ठा कपिलो न भवति । शयित इति कपिलत्वाभावाद्गोविन्दः ॥ ५२ ॥

उषितः क्षुधितः । कृष्णेन विलुभितानां गोपीनां केशा विलुभिताः । गार्द्ध्ये तु लुब्धः । अञ्चितः, गतौ अक्तः । क्लिशितः क्लिष्टः ।

**५४. पूङः सेड्विष्णुनिष्ठा न कपिलः ।**

पवितः पूतः ।

**५५. शीङ् ष्विदि मिदि क्ष्विदिधृषः सेड् विष्णुनिष्ठा न कपिलः ।**

शयितः ।

---

क्लिशू विबाधने क्र्यादिः, ऊदित्त्वेन विकल्पितेट्त्वादत्र निषेधे प्राप्ते विभाषा वचनम् । क्त्वा प्रत्यये तु सिद्ध एव विकल्पितेट् । तत्र तु क्लिश उपतापे दिवादे श्चरितार्थता, तस्य विष्णुनिष्ठायां क्त्वि च नित्यमिट् प्राप्नोतीति विभाषाविधानमिदम् । पूङश्चतुर्भुजान्तत्वादुभयत्र निषेधे प्राप्ते विकल्पविधानम् ।

उषितइति—वचिस्वपि यजादीनामिति सङ्कर्षणः, वसिघस्योरिति षत्वम् । वस्तेस्तु सिद्ध एवेट्—वसितः । विलुभितानामिति—लुभ विमोहने तुदादिः । विमोहनमाकुलीकरणम् । केशा विलुभिताइति विश्रृङ्खलीकृता इत्यर्थः । गतौ तु अक्त इति—अनिरामित्यादिना उद्धवनरामहरः । अपादानसम्बन्धविवक्षया निष्ठातस्य नात्र नत्वम् ।

**अमृता०**—५४. पूङइति । पूङ् पवने इत्यस्य सेड् विष्णुनिष्ठा कपिलो नभवतीति विशेष एषः तेन गोविन्दः । अनिट् पक्षे तु कपिल एव, पूत इति ।

**अमृता०**—५५. शीङिति । शीङ् स्वप्ने, ञिस्विदा गात्र प्रक्षरणे, ञिमिदा स्नेहने, ञिक्ष्विदा स्नेहन मोचनयोः, ञिधृषा प्रागल्भ्ये इत्येतेषां सेड्विष्णुनिष्ठा कपिलो न भवति । अयमपि विशेषविधिः । तत एषां गोविन्दः । शयित इति—अकर्मकत्वात् कर्त्तरि क्तः ।

ञिष्विदादीनामारामेत्वात् आईरामानुबन्धानात्यादिना इटो निषेधे प्राप्ते विशेषव्यवस्थामाह—

---

**बाल०**—आर । आरम्भे च गम्यमाने विष्णुनिष्ठा भवति । अत्र क्तस्तु कर्त्तरि च भवति, अत्रेति निर्द्धारणे सप्तमी विष्णुनिष्ठायामित्यर्थः । आरम्भे भावे च विहितायां विष्णुनिष्ठायां परस्यां आरामानुबन्धाद्धातोरुत्तरे इड् वा स्यात् । आ इरामानुबन्धादित्यादिना निषेधे प्राप्ते विभाषा । जपि । आरम्भभावयोर्विहितायां परस्यां जपिवमोश्च सम्बन्धे इड् वा स्यात् । जपितः जप्तः वमितः वान्त इत्युदाहरणं । द्यु तादाविति द्यु तादिगणे वर्त्तते इत्यर्थः । एवं पुषादाविति । प्रस्वेदितवानिति प्रशब्द आरम्भद्योतकः । प्रस्वेदित इति आरम्भे कर्त्तरि क्तः । स्वेदितमिति भावे । पक्ष इति इडभावपक्षे इत्यर्थः । प्रसिन्न इति रदाभ्यामित्यादिना विष्णुनिष्ठातस्य दस्य च नः । सिन्नमिति भावे ॥ ५३ ॥

**बाल०**—क्षमा । क्षमार्थान्मृषधातोरुत्तरात् विष्णुनिष्ठा कपिलो न भवति । मर्षित इति मृष क्षमायां कपिलत्वाभावाद्गोविन्दः । अगमृषितमिति कपिलत्वाभावाद्गोविन्दाभावः । अपमृषितमित्यस्यार्थमाह अपमृष्टमिति । हेतुमाह धातूनामिति ॥ ५४ ॥

**५६. आरम्भे च विष्णुनिष्ठा, अत्र क्तस्तु कर्त्तरि च, आरामानुबन्धादिड् वा विष्णुनिष्ठायारम्भ-भावयोः, जपि-वमोश्च ।**

ञि ष्विदा द्युतादौ, ष्विदा पुषादौ । ञिष्विदा द्युतादौ पुषादौ चेत्येके । प्रस्वेदितवान् प्रस्वेदितः कृष्णः । स्वेदितं गोपीभिः । ञिमिदा स्नेहने — प्रमेदित इत्यादि । पक्षे प्रस्विन्नः स्विन्नमित्यादि ।

---

**अमृता०**—५६. आरम्भे चेति । आरम्भे च विष्णुनिष्ठा भवति, अत्रार्थे क्तस्तु कर्त्तरि च विधीयते । चकारात् भवकर्मणोश्च । आरम्भार्थे भावे च विहितायां विष्णुनिष्ठायामारामानुबन्धाद् धातो र्जपिवमोश्चोत्तरे इड् वा स्यात् । प्रस्वेदित इति—कर्त्तरि क्तः, प्रशब्द इहारम्भार्थ द्योतकः । स्वेदितमिति भावे । एवं प्रक्ष्वेदितः प्रक्ष्विण्णः क्ष्विण्णम् । प्रधर्षितः प्रधृष्टः धृष्ठम् । जपि वमोः—प्रजपितः प्रजप्तः जप्तम्, प्रवमितः प्रवान्तः वान्तमिति ।

---

**बाल०**—उरा । भौवादिकादुरामोद्धवाद्धातोरुत्तराद्भावे आरम्भे च विहिता बिष्णुनिष्ठा कपिलो वा भवति । द्योतितमिति द्यु त दीप्तौ भ्वादिः उरामोद्धवः । भावे क्तः कपिलत्वाद्भावे गोविन्दः । प्रद्योतित इति आरम्भे चेत्यादिना कर्त्तरि क्तः । द्यु तितं प्रद्यु तित इति कपिलत्वाद्गोविन्दाभावः । म्रक्तमिति म्रचु गतौ उरामेतो वेट् क्त्वीति वक्ष्यते अतो विकल्पितेट् त्वात् विष्णुनिष्ठायामिडभावः ।। ५५ ।।

**बाल०**—णेर्हरो । विष्णुनिष्ठायां परस्यां णेर्हरो भवति । भावित इति ण्यन्तात् क्तः इट् णेर्हरः । अडिडादाविति विशेषणात् णेर्हरोऽनिडादौ रामधातुक इत्यनेन प्राप्ते विधानं । सङ्कर्षणत्रिविक्रमाविति वचिस्वपियजादीनामित्यादिना सङ्कर्षणः । श्याश्विव्याज्याह्वां सङ्कर्षणस्य त्रिविक्रम इत्यनेन त्रिविक्रमः । शून इति टु ओ श्वि गतिवृद्ध्योः ओरामेत्वाद्विष्णु निष्ठातस्य नः । आश्वस्त इति श्वसप्राणने, अत्रेति केचिदिति क्रमदीश्वरादय इत्यर्थः । व्याङ् श्वसिति क्रमदीश्वर लक्षणं । विश्वस्त इत्यपि केचिदिति यदुक्तं तत्र हेतुमाह विश्वासयुक्त इति । विश्वासयुक्ते विश्वस्तो वर्त्तते स विश्वस्तशब्दस्त्रिषु लिङ्गेषु वर्त्तते वाच्यलिङ्गत्वात् विधवास्त्रियामपि वर्त्तते तदा स्त्री स्त्रीलिङ्गः विश्वस्तेति । वान्त इति टु वमु उद्‌गिरणे हरिवेण्वन्तोद्धवस्य त्रिविक्रमः क्वौ कंसारिवैष्णवे चेति उद्धवस्य त्रिविक्रमः मस्य विष्णुचक्रं विष्णुचक्रस्य हरिवेणुः । गूढ इति गृहु सम्बरणे । स्वरति सूति सूयति धुञ्दित इड्वेति विकल्पेट् त्वमतो विष्णुनिष्ठायामिडभावः । हस्य टः, तस्य धः, धस्य टः, टस्य हरः, पूर्वस्य त्रिविक्रश्च । वन्विति वनु याचने । उदित इत्यत्र उरामेत इति ज्ञेयः । हरिवेण्वन्तति अनेन हरिवेणुहरः । तत इति तनु विस्तारे पूर्ववत् । ननु यदि विकल्पितेटो विष्णुनिष्ठायामिड् न भवति, तर्हि कथं धावितः धावितवान् पतितः पतितवान् इत्यादि भवत्विति चेत्तत्राह नृतीकृत्यादेरिति । नृतीकृत्यादेरिड् वा से सिं बिना इति विकल्पितेट् त्वं अतो नृती गात्रविक्षेपे कृती छेदने

## ५७. क्षमार्थान्मृषो विष्णुनिष्ठा न कपिलः ।

मर्षितः । अक्षमार्थात्—अपमृषितं वाक्यमाह, अपमृष्टमशुद्धमिति यावत्, धातूनामनेकार्थत्वात् ।

---

**अमृता०**—५७. क्षमार्थादिति । क्षमार्थाद् मृष धातोरुत्तरे विष्णुनिष्ठा कपिलो न भवति, इट् तु नित्यमेव । मर्षितइति—कपिलत्वाभावाद् गोविन्दः । अप मृषितमिति—कपिलत्वाद् गोविन्दाभावः । ननु मृष क्षमायामिति धातोः स्वाभाविक एव क्षमार्थः, किमनेन विधानेनेति चेत् ? तत्राह—धातूनामनेकार्थत्वादिति । तेन असुद्धार्थश्चास्य दृश्यते, अतस्तदर्थनिरासाय सूत्रकरणमिति । अपमृष्टमिति तु मृजूष शुद्धावित्यस्य रूपम्, ऊरामानुबन्धत्वान्नेट् ।

---

इत्यादेर्विष्णुनिष्ठायामिड्निषेधः सिद्ध एव अत ईरामेत्वमनर्थकं अतोऽनित्यज्ञापकमिति । धौत इति छस्य श इत्यादिना वस्य ऊट् अद्वयादूटो वृष्णीन्द्रः शुद्धौ तु इड् निषेध एवेति भावः । पतलृ इति । पतलृ गतौ पतित इति, इवन्त ऋध भ्रस्ज दन्भु श्रि ऊर्नु यौति भवति ज्ञपि सनि तनि पति दरिद्राभ्य इड् वा सनीति विकल्पितेट्त्वं तथापि अनित्यत्वादिट् । मन्वित मनु बोधने ऊरामेत्वाद्विकल्पितेट्त्वं । अनेकसर्वेश्वरादिडिति अनित्यत्वादेवेति शेषः । अनेकसर्वेश्वरादिति पाठः क्वचिद्दृश्यते सत्वसभ्यः अनित्यत्वस्यैव हेतुत्वात् (क) संज्ञपित इति ण्यन्ताज्ज्ञपेः क्त इट् णेर्हरः इवन्तेत्यादिना विकल्पेट्त्वं । दरिद्रित इति दरिद्रा दुर्गतौ दरिद्रातेराराामहर इत्यादिना आरामहरः अत्रापि इवन्तेत्यादिना विकल्पितेट्त्वं ॥५६॥

**बाल०**—क्षुब्धा । मन्थादौ वाच्ये क्षुभादीनां धातुनां विष्णुनिष्ठया सह क्षुब्धादयः साधव इत्यर्थः । साधव इति निपात्यन्ते इत्यर्थः । क्षुभिति । क्षुभ सञ्चलने क्षुब्ध इति निपातादिडभावः । मन्थ इति मन्थदण्डे इत्यर्थः । वैशाखमन्थ-मन्थान मन्थानो मन्थदण्डक इत्यमरः । आदिशब्दो विवृणोति लगे लग्नः सक्त इत्यादिना । लगे इति लगे सङ्गे । लग्नं इति निपातादिडभावो विष्णुनिष्ठातस्य नश्च सक्त इति युक्त इत्यर्थः । म्लेच्छिति म्लेच्छ अव्यक्तायां वाचि म्लिष्टमिति निपातादिडभाव एरामस्य इरामस्य इरामश्च । अस्पष्ट इति अस्पष्टवचन इत्यर्थः । अथ म्लिष्टमविस्पष्टमित्यमरः । रेभृ इति रेभृ शब्दे रिब्धमिति निपातादिडभाव एरामस्य इरामश्च । फाण्टमिति निपातादिडभावः, हरिवेण्वन्तोद्धवस्येत्य-नेन त्रिविक्रमश्च टवर्गयुक्तत्वात्तरामस्य टरामः सिध्यत्येव । उदकसम्पर्कात् जलसंसर्गात् विभक्तः पृथग्भूतो रसो यस्य तादृशे ईषदुष्णे अल्पतप्ते कषाये रसविशेसे निर्यासे वा । निर्यासेऽपि कषायोऽस्तीति नानार्थवर्गः । निर्यासः क्वाथः । फाण्ठमिति पाठोऽपि दृश्यते किन्तु काष्ठशब्दस्य कषायविशेषवाचिता नास्ति । अनायासकृतं फाण्टमित्यमरः । त्रि धृषा । ञि धृषा प्रागल्भ्ये शसु हिंसायां इत्येतयोः अविनीतएव वाच्ये धृष्टविश्वस्तौ साधु । अविनीतं प्रगल्भः । धृष आरामानुबन्धत्वात् शस उरामेत्वाद्विष्णुनिष्ठायामिड्निषेधे सिद्धे नियमार्थं वचनमिदं अविनीत एवेति तेनाप्रगल्भे धर्षितो विशसित इति । दृहे । स्थूलश्च

## ५८. उरामोद्धवाद् भौवादिकाद्भावारम्भयोः सेड् विष्णुनिष्ठा न कपिलः ।

**द्योतितं कृष्णेन, प्रद्योतितोरामः । पक्षे—द्युतितं प्रद्युतितः । सेडिति किम्—म्रुचु—म्रुक्तः । एवं म्लुचु प्रभृतयः ।**

---

**अमृता०**—५८. उरामेति । भौवादिको धातुरुरामोद्धवश्चेत् तदा तदुत्तरे आरम्भभावयो र्विहिता विष्णुनिष्ठा कपिलो वा स्यात् । द्योतितमिति—द्युतदीप्तौ, भावे क्तः, कपिलत्वाभावे गोविन्द्रः । प्रद्योतित इत्यारम्भे क्तः, पक्षे कपिलत्वान्नगोविन्दः । भ्रुक्त इति—उदितो वेट् क्त्वि वक्ष्यते, ततो विष्णुनिष्ठायामिटो निषेधः । एवं रुचितं वस्तु । भौवादिकादिति किम्—गुधवेष्टने दिवादिः—गुधितम्, कुच तुदादिः—संकुचितं कमलम् । उरामोद्धवादिति किम्—मिशितं धृणितम् ।

---

बली च तयोर्वाच्ययोर्दृंन्धू हिंसायामित्यस्य दृढः साधुः । दृढ इति अनिरामेतामित्यादिना नरामहरः हस्य ढः तस्य धः धस्य ढः ढस्य हरः ऋरामस्य नेति त्रिविक्रमनिषेधः । शक्तस्थूलौ त्रिषु दृढाविति नानार्थवर्गः । ऊरामेत्वाद्विष्णुनिष्ठायामिड् निषेधे सिद्ध इदमपि नियमार्थं स्थूलबलिनोरेवेति तेनान्यत्र दृंहितइति । कषेः । कृच्छ्रे गहने च वाच्ये कष हिंसायामित्यस्य कष्टं साधु । इडभाव एव निपातफलं । कृच्छ्रं दुःखं गहनं दुष्प्रवेशस्थानं । कानन समे इत्यमरः । कष्टेतु कृच्छ्रग्रहने इति नानार्थवर्गः । कृच्छ्रगहनयोरेव इडभावः । तेनान्यत्र कषितं सुवर्णमिति । कष्टोऽग्निः कष्टं व्याकरणमित्यादौ कारणे कार्योपचारात् कष्टशब्दप्रयोग इति ज्ञेयं । संवि । संविनिपूर्वस्य अर्द गतौ याचने च इत्यस्य विष्णुनिष्ठया सह समर्णः व्यर्णः न्यर्णः साधवः । इडभाव एव निपातफलं रदाभ्यामित्यादिना विष्णुनिष्ठातस्य दस्य नः सिध्यत्येव । अभ्य । निकटे वाचे अभिपूर्वस्य अर्देरभ्यर्णः साधुः । अत्रापि निपातफलमिडभावः । उपकण्ठान्तिकाभ्यर्णा इत्यमरः । श्रा । क्षीरादिपाके वाच्ये श्रा इत्यस्य शृतं साधु । क्षीरं दुग्धं आदिपदेन घृतादेर्ग्रहणं । श्रा इत्यस्येति श्रा पाके अदादिः श्रैं पाके भ्वादिर्द्वयोरेव ग्रहणं । पाके क्षीराज्यपयसां शृतमित्यमरः । आज्यं घृतं, पयो जलं । क्षीरादिपाकादन्यत्र श्राणा यवागूः । हरिमित्रयुगितादिना विष्णुनिष्ठातस्य नः णत्वं । यवागूरुष्णिका श्राणेत्यमरः । परि । अधिपे वाच्ये वृहि वृद्धावित्यस्य परिवृढः साधुः । अधिपः प्रभुः । परिवृढोऽधिप इत्यमरः । निपातादिडभावो नरामहरश्च । अन्यत्र परिबृंहित इति । ण्यन्त । अध्ययनेऽर्थे वर्त्तमानस्य ण्यन्तस्य वृत्तेर्वृत्तं साधु । वृत्तमिति वृतु वर्त्तने णेर्हरः सिध्यत्येव किन्तु गोविन्दनिवृत्तिरिड् निवृत्तिश्च निपातफलं । घुष्ट । अविशब्दनेऽर्थे वर्त्तमानस्य घुषधातोर्घुष्टं साधु । घुषिर् धातुर्भ्वादिश्च भ्वादिः शब्दार्थः चुरादिर्विशब्दनार्थः । विशब्दनं शब्देन स्वाभिमताविस्करणं । सूत्रे लिङ्गवचनमतन्त्रमित्याह घुष्टा रज्जुरिति । अत्र घुषधातुर्घर्षणार्थः । घुषितमिति चुरादित्वेऽपि णेरभावः अनित्यत्वात् । प्रकटितेति प्रकटितोऽभिप्रायः यत्रेति विग्रहः ॥ ५७ ॥

**बाल०**—दान्त । दमु शमु उपशमे पूरी आप्यायने छद अपवारणे इत्येषां ज्ञपेर्दसु

५८. णेर्हरो विष्णुनिष्ठायाम् ।

भावितः । श्वयतेराश्वसे वंमेश्चे ति नेट्, सङ्कर्षण-त्रिविक्रमौ—शूनः आश्वस्तः । तत्र विश्वस्त इत्यपि केचित् । विश्वासयुक्ते विश्वस्तस्त्रिषु स्त्री विधवा स्त्रियामिति रुद्रकोषात् । वम-वान्तः गुहू-गूढः । वनु—उदितो वेट् क्त्वि इति वक्ष्यते, ततो नेट्, हरिवेण्वन्त सहजानिटामित्यादि—वतः ततः ।

---

अमृता०—५८. णेर्हर इति । विष्णुनिष्ठायां परस्यां णेर्हरःस्यात् । अत्र ण्यन्तत्वे सर्वेषां धातूनामनेकसर्वेश्वरत्वादिडागमेन भवितव्यम् अत आख्यातप्रकरणोक्तानिड्विधानं नात्र प्रवर्त्तनीयम् । भावित इति—ण्यन्तात् कर्मणि क्तः, इटि सति णे र्हरः । विश्वस्त इत्यपि केचिदिति—वोपदेव क्रमदीश्वरादयः । तदपि चानुमोदते—कोषवचनेन—विश्वासयुक्तइत्यादि । वान्त इति—हरिवेण्वन्तोद्धवस्येत्यादिना त्रिविक्रमः, मस्य बिष्णुचक्रम्, पुन तस्य हरिवेणुः । गूढ इति—ऊरामेत्त्वात् स्वरति सूतीत्यादिना विकल्पितेट्त्वम्, ततो निष्ठायामिड्निषेधः, हस्य ढः, निष्ठा तस्य धः, ठवर्गे च ढः, ढस्यहर स्त्रिविक्रमश्च । तत इति—तनुविस्तारे, वतवन्नरामहरः । ननु यदि विकल्पितेटो धातो र्विष्णुनिष्ठायामिड् निषिद्ध स्तर्हि कथं धावितः धावितवान्, पतितः पतितवानित्यादि सिध्यति, तत्र तत्र च विकल्पितेट् त्वं लक्षणसिद्धमिति चेत् ? तत् समाधत्ते—नृतीकृत्यादेरित्यादि युक्त्या । नृतीकृत्यादेरिड् वा से सिं विनेति विकल्पितेट्त्वमुक्तम्, ततो विष्णुनिष्ठायां तेषामिड्निषेधः सिद्ध एव, तदा नृतीकृत्यादेरीरामेत् करणस्य निष्फलत्वमापद्ये त्, आईरामानुबन्धादित्यादि लक्षणेनेटो निषेधात् । किन्तु तथा न मन्तव्यं, किं तर्हि ? विकल्पितेट इत्यादि लक्षणं—विष्णुनिष्ठायामिड् निषेधलक्षणमनित्यमित्येव ज्ञापयति । कथं बुध्यते तत् ? विकल्पितेट इत्यनेन यदा विष्णुनिष्ठायामिड् निषेधस्यानित्यतानिबन्धना प्रवृत्ति र्न जायते तदा ईरामानुबन्धत्वेन प्रवृत्ति र्भवतु इति । अतस्तेषामीरामेत्करणं सार्थकमेव । प्रकृते—

---

उपक्षये स्पश बाधनस्पर्शनयोः इत्येतयोश्च णौ दान्तादयो वा निपात्यन्ते । ज्ञपिर्हेतुण्यन्तः । दान्त इड्निवृत्तिर्निपातफलं इड्निवृत्त्यनन्तरं हरिवेण्यन्तोद्धवस्य त्रिविक्रमः । क्वौ कंसारिर्वैष्णवे चेति उद्धवस्य त्रिविक्रम. मस्य विष्णुचक्रं विष्णुचक्रस्य हरिवेणुः एवं । शान्त इति पूर्ण इति इड्निवृत्त्यनन्तर विष्णुनिष्ठातस्य नः । छन्न इति इड्निवृत्त्यनन्तरं विष्णुनिष्ठातस्य दस्य च नः । ज्ञप्त इति निपातादिड् निवृत्तिः । दस्त इति निपातादिड् निवृत्तिर्वृष्णीन्द्र निवृत्तिश्च । एवं स्पष्ट इति । दमित इति । घटादित्वादुद्धवस्य वामनः । इत्यादीत्यादिपदेन शमितः पूरितः ज्ञपित इति शमितच्छदित ज्ञपितेषु घटादित्वाद्वामनः ॥ ५८ ॥

बाल०—रुष्य । विष्णुनिष्ठायां परस्यां रुष्यादिभ्य उत्तरे इड् वा भवति रुष्ट इति रुष रोषे । इषु सह लुभ रुष रिष इड् वा ते इति विकल्पितेट्त्वं अतो विष्णु-

नृतौ कृत्यादेरीरामेत्त्वं विकल्पितेट् इत्यस्यानित्यत्वे ज्ञापकम्। तेन धावु गति शुद्धयोः—धावितः धावितवान्। शुद्धौ तु धौतः धौतवान्। पत्लृ—पतितः पतितवान्। मनु—मनितः मनितवान्। अनेक सर्वेश्वरादित्वादिट्,—संज्ञपितः दरिद्रित इत्यादि।

## ६०. क्षुब्धादयो मन्थादौ साधवः।

क्षुभ, क्षुब्धो मन्थे। लगे—लग्नः सक्ते। म्लेच्छ—म्लिष्टमस्पष्टे। रिभृ शब्दे-

---

विकल्पितेट इति लक्षणस्यानित्यत्वात् धावु पत्लृ प्रभृते निष्ठायामिडमभीष्टमिति फलितार्थः।

शुद्धौ तु धौत इति—शुद्धाद्यर्थे त्विड्नेष्यते, तथैव प्रयोगलाभात्। धौत इति—छस्य श इत्यादौ वस्य ऊठ्, अद्वयादूठो बृष्णीन्द्रः। एवं पतलृधातोश्च सनन्ते—"इवन्त ऋधभ्रसज" इत्यादिना विकल्पविधानात् विष्णुनिष्ठायामिड्निषेधे प्राप्तेऽपि तद्विधेरनित्यत्वेन भवत्येवेट्, तथैव मनित इति। अत्र चेदमवधेयम्—अर्थद्वयवतोधातोरनित्यनित्यत्वोभयधर्मत्वमिष्यते। तेन पत-मनोरेकैकार्थवत्त्वारनित्यतैव। प्रयोग एव प्रमाणशिरोमणिः, अतश्च तदनुसारि व्याकरणमिति मर्म। अथ एतावता यइड् निषिद्धो विभाषितो वा, स त्वेक सर्वेश्वर धातूनधिकृत्य, ततोऽनेक सर्वेश्वराणामिड् भवत्येवेत्याह—अनेक सर्वेश्वरत्वादिति। ण्यतत्वे सति अनेकसर्वेश्वरत्वादिटि सत्येव णेर्हरो विधीयते। एतेन इवन्त ऋध इत्याटिना सनि ज्ञपे दरिद्रातेश्च विकल्पितेट्त्वेन निष्ठायामिड्निषेधस्य शङ्का निर्मूलीकृतेति सन्ध्ययम्।

अमृता०—६०. क्षुब्धादयइति। मन्थादावर्थे क्षुभादीनां धातूनां विष्णुनिष्ठया सह क्षुब्धादयो निपात्यन्ते। क्षुब्धइति क्षुभसञ्चालने, निपातादिडभावः। मन्थो विलोडन दण्डः, द्रवद्रव्यसंपृक्तः शक्तु र्वा। अन्यत्र क्षुभितं दधि मन्थेन। क्षुब्धा जनता, क्षुब्ध उदधिरित्यादित्वागमशासनस्यानित्यत्वादिति दीक्षितः। लग्नइति निपातादिडभावो निष्टातस्य नरामश्च। सक्तः युक्त इत्यर्थः। अन्यत्र लगितो गुरुणा शिष्य मिलित इत्यर्थः। म्लिष्टमिति—म्लेच्छ अव्यक्तवाचि, निपातादिडभावः, एरामस्य इरामश्च, छशो राजित्यादिना षत्वं, निष्ठातस्य टवर्गत्वञ्च। अन्यत्र म्लेच्छितमसदाचरितमित्यर्थः। रिब्धमिति रेभृशब्दे, ध्वनिरित्यर्थः। निपातादिडभावः, एरामस्य इरामश्च। हरिघोषात् तस्यधः पूर्वभस्य हरिगदा च। अन्यत्र रेभितं रासभेन। फाण्टमिति फणगतौ, इडभावो

---

निष्ठायामिड् निषेधे प्राप्ते विभाषा। हरीति। अनेन उद्धवस्य त्रिविक्रमः आन्त इति अत्रापि नित्यमिटि प्राप्ते विभाषा। ज्वरत्वरेति अनेन ससर्वेश्वरस्य वस्य ऊट्। तूर्ण इति ञि त्वरा सम्भ्रमे आरामानुबन्धत्वादिड्निषेधे प्राप्ते विभाषा। संघुष्ट इति घुषिर् धातुः शब्दार्थो विशब्दनार्थश्च अत्रापि नित्यमिटिप्राप्ते विभाषा। आस्वान्त इति स्वशब्दे उद्धवस्य त्रिविक्रमः अत्रापि नित्यमिटि प्राप्ते विभाषा॥ ५९॥

रिब्धं स्वरे। फण गतौ—फाण्ट मुदकसंम्पर्काद् विभक्तरसे, ईषदुष्णे कषाये च। जि धृषा-शसो धृष्ट-विशस्तावविनीत एव। दृहे दृढः स्थूलवलिनोः। कषेः कष्टं कृच्छ-गहनयोः। सं नि वि पूर्वस्यार्दः समर्णः व्यर्णः न्यर्णाः। अभ्यर्णस्तु निकटे। श्रा इत्यस्य शृतं क्षीरादि पाके। परिवृंहेः परिवृढोऽधिपे। ण्यन्तस्य वृत्ते—वृत्तमध्ययने, वृत्तं

---

निपातात्, हरिवेण्वन्तोद्धवस्य त्रिविक्रमः, टवर्गश्च। अत्र ईषदुष्ण इति रसस्य हि विशेषणं ज्ञेयम्, तस्य द्वावेवार्थौ—जल तम्पर्कात् पृथग्भूतकदुष्णरसः, कषायश्चेति। कषायो निर्यासः क्वाथ इत्यर्थः। सोऽप्यपक्वः अपिश्च बोध्यः। अन्यत्र फणितं गतमित्यर्थः। धृष्टइति—ञिधृषा प्रागल्भ्ये, आरानुबन्धत्वादिड्निषेधः सिद्धएव, अर्थनियमार्थो निपातः, अविनीत उद्धतस्वभावः, तेनान्यत्र—धर्षिता परिचारिका लाञ्छितेत्यर्थः। आरम्भे कर्त्तरि, आरामानुबन्धादिड्वा, शीङ् स्विदिमिदीति कपिलत्ववारणाद् गोविन्दः।

विश्वस्त इति—विपूर्व शसु हिंसायाम्, अस्य चोरामानुबन्धादिड् निषेधः सिद्धः, अर्थनियमे हि निपातः। तेनान्यत्र विशसितः पशुः। दृढइति—दृन्ह हिंसायाम्, स्थूलो मांसलः, स च निर्बलोऽपि सम्भवेत्, बलवांस्तु कृशोऽपि दृढ इति भेदः। अत्र इडभावो निपातफलम्, नलोप ढत्वादयस्तु सिद्धा एव, तेनान्यत्र दृंहितः पशु व्याधेन। कष्टमिति कष हिंसायाम्, कष्टं व्याकरणम्, कष्टं वनमिति यथाक्रममर्थः। निपातादिडभावः, अन्यत्र कषितं सुवर्णम्। समर्णादीनाञ्च निपातादिडभावः। जर्द गतौ याचने च धातुः, रदाभ्यामिति निष्ठा तस्य पूर्वदस्य च न सिद्ध एव। संनिवि पूर्वेति किम्—शोकेन भृशमर्दितः। अभिपूर्वस्य तु तस्य निकटार्थे हि निपातः। तेनान्यत्र—शीतेनाभ्यर्दितो वृद्धः, पीडित इत्यर्थः। मृतमिति—श्रापाके अदादिः, श्रापाके भ्वादि द्वयोरेव ग्रहणम्, श्तिपादिना निर्देशाभावात्। साराम ररामस्य ऋभावो निपातफलम्, तस्मिंश्च सति निमित्तापायात् हरिमित्रयुगिति निष्ठातस्य नरामाभावः। क्षीरादीति आदिशब्देन घृत-जलयो र्ग्रहणम्। पाके क्षीराज्यपयसां शृतमित्यमरात्। अन्यत्र श्राणा यवागूः, यवागू रुष्णिकाश्राणेत्यमरः। "शृतश्च कलम्बीशाक" इत्यादि प्रयोगश्च विरलं दृश्यते।

परिवृढ इति—परि पूर्वः वृहि वृद्धौ, अधिपः प्रभुः, इडभावो नरामहरश्च निपातफलम्, ढत्वादिकन्तु सिद्धमेव। अन्यत्र—परि बृंहितं भक्तनिष्ठया। वृत्तमिति—ण्यन्तस्य वृतुवर्त्तन इत्यस्य णेर्हरः सिद्ध एव, किन्तु गोविन्दविरहः इडभावश्च निपातकार्यं। अन्यत्र —सद्धर्मो वर्त्तितः श्रीभगवता व्यासेन। घुष्टमिति घुषिर् शब्दे भ्वादिः, घुषिर् विशब्दने

---

**बाल०**—हृष्ट। विस्मये प्रतिघाते लोम्नो हर्षे च वर्त्तमानस्य हृष तुष्टावित्यस्य हृष्टहृषितौ साधू। हृषु अलीके इत्यस्य ग्रहणमिति केचित् पक्षे इडभाव एव निपातफलं। अप। पूजायामर्थे वर्त्तमानस्य चायृधातोरपचितापचायितौ साधू। अपचायित इति सिद्धत्येव निपातादपचित इत्यपि भवतीति। हृष्टस्येत्यर्थमाह विस्मितस्येति स्वकर्तृक-

श्रीभागवतम्, अधीतमित्यर्थः । घुष्टमविशब्दने, घुष्टा रज्जु घृष्टेत्यर्थः । विशब्दनेतु घुषितं वाक्यम् । शब्देन प्रकटिताभिप्रायमित्यर्थः ।

## ६१. दान्त शान्त पूर्ण च्छन्न ज्ञप्त दस्त स्पष्टा णौ वा निपात्यन्ते ।

पक्षे दमित इत्यादि । तथा दसु-दासितः, स्पश-स्पाशितः ।

## ६२. रुष्यमवमत्वरसंघुषास्वनेभ्यो वेड्विष्णुनिष्ठायाम् ।

रुष्टः रुषितः । अम गतौ, हरिवेण्वन्तेत्यादि दीर्घः—आन्तः अमितः ।

---

चुरादिः, द्वयोरपि ग्रहणम् । इडभावो निपातफलम् । आदि शब्देन अन्ये च ज्ञेयाः । तथाहि—स्वन शब्दे—स्वान्तं मनः, निपातादिडभावः । अन्यत्र स्वनितोमृदङ्गः । मृदङ्ग ध्वनिशब्दे भ्वादि श्चुरादिश्च (घटादिः) ध्वान्तं तमः । निपातादिडभावः पूर्ववद् दीर्घः । अन्यत्र ध्वनितोऽर्थः, व्यञ्जित इत्यर्थः । बाहृ प्रयत्ने, ऋरामइत्, वाढमतिशयः । अन्यत्र वाहितं प्रयत्तमित्यर्थः ।

अमृता०—६१. दान्त इति । णौ दम्यादि सप्तानां विष्णुनिष्ठया सह दान्तादयो वानिपात्यन्ते । दान्त इति—दमु उपशमे णिः, सर्वत्र इडभावो निपातफलम् । णिलोपे इड् निषेधे च जाते हरिवेण्वन्तोद्धवस्य त्रिविक्रमः । पक्षेदमितः । एवं शमु शान्तौ शान्तः शमितः । अनयो र्घटादित्वम् । पूर्ण इति—पूरी आप्यायने दिवादिः, पूर चुरादि द्वयो र्ग्रहणम् । ततो णिः, इड्निषेधे णि लोते च सति रदाभ्यामिति नत्वम्, पक्षे पूरितः । छन्न इति अपवारणे, तेनैव नत्वम्, पक्ष छादितम् । निपातादिड् विरहः सर्वत्र । कथं ज्ञापित इति ? ज्ञपे र्घटादित्वाभावे सिद्धम् । दस्त इति—दसु उपक्षये दिवादिः, इडभावः उद्धवस्य वामनश्च निपातकार्ये घटादित्वाभावात् । स्पष्ट इति—स्पश बाधन-स्पर्शनयो र्भ्वादिः, स्पशनं ग्रन्थनम्, पूर्ववन्निपातफलम् ।

अमृता०—६२. रुषीति । विष्णुनिष्ठायां परस्यां रुष्यादिभ्यः पञ्चभ्य उत्तरे इड् वा भवति । रुष्ट इति—रुष हिंसायां, इषु सह लुभेत्यादिना विकल्पितेट् त्वात् निष्ठायामिड् निषेधे प्राप्ते विभाषा विहिता । आन्त इति—अमरोगे चुरादे र्निरासाय स्वयमाह—

---

जलसेकानन्तरं गोपीकर्त्तृकजलसेकेन पराभूतस्येत्यर्थः । हृषितस्येत्यादि वेति जलकेलौ हृषितस्य कृष्णस्य हृषित लोमेति वेत्यर्थः । चायृ इति चायृपूजानिशामनयोः । अपचित इति पूजित इत्यर्थः ॥ ६०॥

बाल०—अध्या । आध्याङ्पूर्वस्य रुह जनी प्रादुर्भावे इत्यस्य रुहधातोः क्त-प्रत्ययसिद्धस्य अध्यारूढस्याधिको वा साधुः । विस्तरमते अध्यारूढस्याधिकादेश इति विष्णुभक्त्यर्थप्रकरणे उक्तं । अतो विस्तरमतानुसारेणैवैतत् सूत्रं कृतमिति ज्ञेयं ॥ ६१ ॥

बाल०—प्यायः । विष्णुनिष्ठायां परस्या प्यायः स्थाने पीर्भवति । पीनमिति ओ प्यायी वृद्धौ ओरामेत्वाद्विष्णुनिष्ठातस्य नः । एवं पीनो बाहुरिति पीनपिन्नीतु स्थूलपीवरे

वान्तः वमितः छस्य श इत्यादो ज्वर त्वर सृव्वव-मवान्तु ससर्वेश्वरस्य-
तूर्णः त्वरितः, संघुष्टः संघुषितः, आस्वान्तः आस्वनितः ।

**६३. हृष्ट हृषितौ विस्मये प्रतिघाते । लोम्नो हर्षे च, अपचिता-पचयितौ पूजायां निपात्यन्ते ।**

जलकेलौ मृष्टस्य कृष्णस्य हृष्टं लोम, विस्मितस्य प्रति हतस्य वेत्यर्थः । हृषितस्य इत्यादि वा । चाय्—गोपीभिरपचितः कृष्णः, अपचायितो वा ।

**६४. अध्यारूढस्याधिको वा साधुः ।**

---

अमगताविति, भ्वादि रित्यर्थः । अत्र नित्यमिटि प्राप्ते विभाषा वचनम् । तूर्ण इति—ञित्वरा सम्भ्रमे, आरामानुबन्धत्वेन नित्यमिड् निषेधे प्राप्त्यै विभाषा । संघुष्ट इति—घुषिर् चुरादिः, पूर्वमविशब्दषे निपातितम्, इह तु संपूर्वस्य तस्य विशब्दने नित्यमिटि प्राप्ते विकल्पेन विधीयते । आस्वान्त इति—आङ् पूर्व स्यन शब्दे, नित्यमिटि प्राप्ते विकल्पः, हरिवेण्वन्तोद्धवस्य त्रिविक्रमः :

**अमृता०**—६३. हृष्टेति । विस्मयाद्यर्थ त्रयेविषये हृष तुष्टौ धातो हृष्ट-हृषितौ निपात्येते निष्ठया सह, पूजायामर्थे अप पूर्व चाय् पूजा निशामनयोरित्यस्य अपचिता-पचायितौ निपात्येते । विशेषणस्य हृष्ट शब्दस्यार्थमाचष्टे—विस्मितस्य प्रतिहतस्य वेति, तथाभूतस्य कृष्णस्येत्यर्थः । अत्र इडभावो निपातकार्यम् । हृषितन्तु सिध्यत्येव । प्रति-हतस्य पराभूतस्य । अपचित इति—इडभावः चिभावश्च निपातकार्यं, यवयो हरो वल इति यलापः, अपचायित इति सिध्यत्येव ।

**अमृता०**—६४. अध्येति । अध्याङ् पूर्वस्य रुह जनी प्रादुर्भव इत्यस्य क्त प्रत्यये अध्यारूढ इति यद्रूपं सिध्यति, तस्य स्थाने अधिक इति वा निपात्यते । विस्तरस्य मतेन हि अध्यारूढस्याधिकादेश इति विष्णुभक्तःयर्थ कथन प्रकरणे प्रोक्तम्, अत स्तन्मतानुरूपं सूत्रितमिदम् ।

---

इत्यमरः । स्वाङ्गा । स्वाङ्गदन्यत्र वाच्ये प्यायः स्थाने पीर्वा भवति । प्यान इति यवयोर्हरो वल इति यलुक् । स्वेदो घर्मः । घर्मो निदाघः स्वेदः स्यादित्यमरः । स्वाङ्ग-लक्षणं विना द्रवविकारजे इत्युक्तं । अतः स्वेदस्य द्रवरूपत्वान्न स्वाङ्गता । सोपे । सोपेन्द्रस्य प्यायः स्थाने पीर्न भवति । प्रप्यान इति यलुक् ॥ ६२ ॥

**बाल०**—आङ् । अन्धूधसोर्वाच्ययोः आङ्पूर्वस्य प्यायः स्थाने पीः स्यादेव । अन्धुः रूपः । पुंस्येवान्धुं प्रही कूप इत्यमरः । उध स्त्रीगवीस्तनः । उधस्तु क्लीवमा-पीनमित्यमरः ॥ ६३ ॥

**बाल०**—ह्लादेः । क्तिविष्णुनिष्ठयोः परयो ह्लादेर्वामनो भवति । ह्लन्नं इति ह्लादी मुदे ईरामानुबन्धत्वान्नेट् विष्णुनिष्ठातस्य दस्य च नः ॥ ६४ ॥

### ६५. प्यायः पी विष्णुनिष्ठायाम् ।

पीनं मुखम् । स्वाङ्गादन्यत्र वा, प्यानः पीनः स्वेदः । सोपेन्द्रस्य तु न——प्रप्यानः ।

### ६६. आङ् पूर्वस्यान्धूधसोः स्यादेव ।

आपीनोऽन्धुः, आपीनमुधः ।

---

**अमृता०**—६५. प्याय इति । विष्णुनिष्ठायां प्यायः स्थाने पीरित्यादेशो भवति । पीन इति—ओ प्यायी वृद्धौ, ओरामेत्त्वाद् विष्णुनिष्ठा तरामस्य नरामः । एवं पीनं वक्षः । स्वाङ्गादन्यत्र वेति—पीरित्यादेश इति शेषः । प्यान इति—यवयोहरो बल इति यलोपः । स्वाङ्गलक्षणे विनाद्रवविकरजे इत्युक्तेःस्वेदस्तु न स्वाङ्गम् । सामान्येन निषिष्य विशेषमाह—

**अमृता०**—६६. आङिति । अन्धूधसो र्वाच्ययोः आङ् पूर्वस्य प्यायः पीः स्यादेव । एवकारः प्रागुक्त सामान्यनिषेधस्य व्यावृत्त्यर्थः । अन्धुः कूपः, उधो गोस्तनम् । पुंस्येवान्धुः प्रहीकूपः, उधस्तु क्लीवमापीनमित्यमरः ।

---

**बाल०**—द्यति । कपिल-तरामे परे द्यतिस्यतिमास्थामन्त इरामो भवति । मेति माङ् माने मा माने मेङ् प्रणिदाने त्रयाणामेवात्र ग्रहणं । शा । शो तनुरुरणे छो छेदने इत्येतयोः कपिलतरामे परे अन्त इरामो वा भवति । दधा । कपिलतरामे परे दधातेः स्थाने हिर्भवति । दधातेरिति निर्देशात् धेट् पान इत्यस्य अग्रहणं । दामो । कपिलतरामे परे दामोदरस्य दस्य स्थाने दद्भवति । दामोदरस्येत्यनेन दान दाङ् देङां ग्रहणं ददादेशो दरामान्तः । अतएव रदाभ्यामित्यादौ दां विनेत्युक्तं पूर्वोचार्यैर्ददादेशस्य दान्तत्वमुक्तमतो ग्रन्थकारैरपि ददादेशस्य दान्तत्वमभिप्रेत्य दां विनेत्युक्तं । क्रमदीश्वरादिभिस्तु ददादेशस्य तान्तत्वमुक्तमतः प्रयोजनाभावात् दावर्जनमपि तेर्न कृतमिति ज्ञेयं । उपे । उपेन्द्रसर्वेश्वरादुत्तरस्य दामोदरस्य दन्तु कपिल तरामे परे आरामहरो भवति । चतुः । कपिलतरामे परे चतुःसनान्तस्य उपेन्द्रस्य त्रिविक्रमश्च भवति । दित इति दो अवखण्डने । सित इति सो अन्तकर्मणि । स्थित इति ष्ठा गतिनिवृत्तौ ॥ ६५ ॥

**बाल०**—श्यतेः । संपूर्वस्य शो तनुकरणे इत्यस्य व्रते गम्ये संशितं वाच्यं । हित इति डु धाञ् धारणपोषणयोः । दत्त इति डु दाञ् दाने । प्रत्तः इति आरामहरे कृते यादवमात्रे हरिकमलमिति दरामस्य तरामः । नीत्तः सूत इति आरामहरस्त्रिविक्रमश्च । सुवीति । सु वि नि अव अनु इत्येतभ्य उत्तरस्य दामोदरस्य दः क्ते परे अरामहरो वा भवतीति केचित् । सूत्तमिति आरामहरपक्षे त्रिविक्रमः । आरामहराभावपक्षे सुदत्तमिति । अपेरिति । अनेन अपेरादिहरः । पिनद्धमिति नह बन्धने सहजानिट् नहो धः इति हस्य धः । गीतमिति गै शब्दे ईत्वं । पीतमिति पा पाने । जनेति अनेन नरामस्यारामः ।

**६७. ह्लादे र्वामनः क्ति-विष्णुनिष्ठयोः ।**

ह्लन्नम् ।

**६८. द्यति स्यति मा स्थामिः, शाछोर्वा, दधाते र्हिः दामोदरस्य दो दद्, उपेन्द्रसर्वेश्वरात्त्वाराम हरः, चतुःसनोपेन्द्रस्य च त्रिविक्रमः कपिलतरामे ।**

दितः, सितः, मितः, स्थितः, शितः शातः, छितः छातः ।

**६९. श्यतेः संशितं व्रते वाच्यम् ।**

हितः दत्तः नीत्तः सूत्तः । सु विन्यवानुभ्य आराम हरः क्ते वेति

---

**अमृता०**—६७. ह्लादे रिति । क्तौ विष्णुनिष्ठायां परस्यां ह्लादेर्वामनः स्यात् । क्ति वंक्ष्यते । ह्लन्नमिति—ह्लादी अव्यक्त शब्दे सुखे च, ईरामानुबन्धत्वादिडभावः, रदाभ्यामिति नद्वयम्, सुखितं शब्दितं वेत्यर्थः ।

**अमृता०**—६८. द्यतीति । कपिलतरामे परे द्यति स्यति मास्था इत्येतेषामन्त्यवर्ण स्थाने इराम आदिश्यते, शो छो इत्यनयोरन्त्य इरामो वादिश्यते, दधाते र्हिश्च स्यान्नित्यम्, दामोदर संज्ञकस्य दधाते र्ददित्यादिश्यते, उपेन्द्रीयसर्वेश्वरात् परस्य दामोदर दाधातोस्तु आरामहरः स्यात्, चतुःसनान्तोपेन्द्रस्य त्रिविक्रमश्च भवति, चकारादराम हरश्च भवति । दित इति—दोऽवखण्डने, दामोदर मास्थेत्यादिना विधीस्यमानस्य ईरामस्य तथा दामोदरस्य दो दद् इत्यस्य चापवादोऽयम् । सित इति षोऽन्तकर्मणि । मित इति—मा, माङ् माने, मेङ् प्रणिदाने इति त्रयाणां ग्रहणम् । स्थित इति ष्ठा गति निवृत्तौ । शित इति शो तनु करणे, एवं निशित इत्यपि ।

**अमृता०**—६९. श्यते रिति । संपूर्वस्य शोधातो व्रते वाच्ये तु संशितमिति नित्यं वक्तव्यम् । नित्यपदं शाछो र्वेति वा निवृत्तयेऽध्याहार्यम् । संशितो वैष्णवो धृतव्रत इत्यर्थः । हित इति—डुधाञ् जुहोत्यादिः । दत्त इति डुदाञ् दाने । अनयोः ईत्वापवादः । प्रत्तइति—तुशब्दो भिन्नोपक्रमे, तेन केवलारामहरो नतु ददादेशः, उपेन्द्रसर्वेश्वरात्

---

जातमिति जनी प्रादुर्भावे ईरामानुबन्धत्वान्नेट् । खातमिति खनु अवदारणे उरामेत्वान्नेट् । सातमिति षनु दाने ।। ६६ ।।

**बाल०**—अदो । कपिलतरामे यपि च परे अदः स्थाने जग्धिर्भवति । जग्धमिति अद भक्षणे सहजानिड् तरामस्य धरामे कृते विष्णुजनाद्विष्णुदासस्यादर्शनं सवर्गे विष्णुदास इति धस्य लुक् ।। ६७ ।।

**बाल०**—अन्नं । ओदने वाच्ये अन्नं साधु । ओदने वाच्ये जग्धिर्न भवतीति भावः ।। ६८ ।।

केचित्। सूत्तं सुदत्तम्। अपेरादीति—पिनद्धं अपिनद्धम्। धेट्—दामोदर मास्थेतीत्वम् धीतं गीतं पीतम्। जन खन सनामित्यादि, जातं खात सातम्।

**७०. अदो जग्धिः कपिल तरामे यपि च।**

इराम इत् जग्धम्।

---

परत्वादिति भावः। धातोरारामहरे कृते यादवमात्रे हरिकमलम्। नीत्त इति—आरामहरे चतुःसनोपेन्द्रस्य त्रिविक्रमः। एवं सूत्तः। सुवीति—क्त प्रत्यये सुविनि अव अनु इत्येतेभ्य उत्तरस्य दामोदरस्यारामहरो वा स्यादिति केचिदाहुः, पक्षे दोदद्। क्तवतौ तु नित्यं—सूत्तवानिति। एवं वीत्तंविदत्तमित्यादि ज्ञेयम्। अपेरिति—अनेप धाञः अपिहितं पिहितमिति। पिनद्धमिति—नह बन्धने, नहो ध इति हस्य धत्वम्।

दामोदर संज्ञकस्य दो ददादेशात् धा धातोस्तु नादेशः, अत्र पुन र्धधातेः हि रिति विशेषं व्यवस्थाप्यविशिष्टस्य रूपंदर्शयति—धेटिति। ददादेशाभावे पूर्वदिष्टमेव स्यादित्याह—ईत्वमिति। गीतमिति गैशब्दे, पीतमिति पापाने। जन खनेति—तत्रैव वैष्णवादि कंसारि सनो नित्यमिति वचनादत्र नरामस्य नित्यमारामः। जातमिति जनी प्रादुर्भावे, ईरामानुबन्धत्वादिड्निषेधः। खातमिति—उदित्त्वाद् विकल्पितेट इतीड्निषेधः। सातमिति षणु दाने, पूर्ववत्।

**अमृता०**—७०. अद इति। कपिलतरामे यपि च परे अदः स्थाने जग्धिरादिश्यते। जग्धमिति—अद भक्षणे, निष्ठा तरामस्य हरिघोषात्तथो र्ध इति—

---

**बाल०**—गत्य। गत्यर्थादकर्मकात् श्लिषादिभ्यश्चोत्तरे कर्त्तरि च वाच्ये क्तो भवति। कर्त्तरि चेति भावकर्मणोः कर्त्तरि चेत्यर्थः। शीङादीनामकर्मणां पुनरुपादानं उपेन्द्रसम्बन्धेन सकर्मकत्वे क्तविधानार्थं अकर्मकत्वेतु अकर्मकादेव क्तः सिध्यति। गत इति गमॢ गतौ सहजानिट् हरिवेणुहरः। प्राप्त इति आपॢ व्याप्तौ सहजानिट्। स्नात इति स्ना शौचे अकर्मकः। आश्लिष्ट इति श्लिष आलिङ्गने सहजानिट्। गोवर्द्धनमधिशयित इति शीङ् स्वप्ने अधि शीङस्थासामाधारः कर्मेति गोवर्द्धनस्य कर्मत्वं। एवं वृन्दावनमधिष्ठित इत्यत्र च। अधिष्ठित इति ष्ठा गतिनिवृत्तौ। द्यतिस्यतिमास्थामिरिति आरामस्येरामः उपेन्द्रां सुवतेः षत्वमित्यादिना षत्वं। उपासित इति आस उपवेशने उपपूर्व आसधातुः सेवार्थः। तदभोजनमुपोषित इति वस निवासे वचिस्वपीत्यादिना सङ्कर्षणः। वसतिक्षुधिभ्यामिट् न क्त्वा विष्णुनिष्ठयोरितीट्। उपान्वध्याङ्भ्यो वस आधारकर्मेति कर्मत्वं गवादभोजनकाले उषित इत्यर्थः। अनुजात इति जनी प्रादुर्भावे वैष्णवाद्योः कंसारिसनोर्नित्यमिति नरामस्यारामः जननेनानुगत इत्यर्थः। आरूढ इति रुह जन्मनि प्रादुर्भावे च सहजानिट् हस्य ढः तस्य धः धस्य ढः ढस्य हरः पूर्वस्य त्रिविक्रमश्च। अनुजीर्ण इति। जॄष वयोहानौ ऋरामस्येर् त्रिविक्रमः। श्रिञो जागृवर्जेत्यादिना इड्निषेधः विष्णुनिष्ठातस्य नः णत्वं जारितवानित्यर्थः॥ ६९॥

## ७१. अन्नमोदने साधु ।

## ७२. गत्यर्थाकर्म श्लिष शीङ् स्थास वस जन रुह जीर्यतिभ्यः क्तः कर्त्तरि च ।

---

**अमृता०**—७१. अन्न मिति। अद भक्षणे धातो र्विष्णुनिष्ठया सह अन्नमिति साधु स्यादोदने वाच्ये एव न किन्तु जग्ध्यादेशः। अद्यते खाद्यते यत् तदन्नमिति व्युत्पत्तौ खाद्यवस्तुमात्रं बोधयेतान्नशब्दः, तन्निराशाय साधुत्वम्। अन्नं तण्डुलविकारः। पचाम्यन्न चतुर्विधमिति गीतायान्तु आर्षः।

**अमृता०**—७२. गत्यर्थादिति। गत्यर्थात् अकर्मकात् श्लिषादिसप्तभ्यश्चोत्तरे कर्त्तरि च वाच्ये क्तप्रत्ययो भवति, चकाराद् यथाप्राप्तं भव कर्मणोरपि। अकर्मकत्वेनैव श्लिषादीनां क्ते सिद्धेऽपि पुनरुपादानमुपेन्द्रयोगे एषां सकर्मकत्वेऽपि तत्प्राप्त्यर्थम्। गत इति गमलृगतौ सहजानिट्, हरिवेणु हरः। प्राप्त इति अपूर्व आपलृ व्याप्तौ। क्तस्य कर्त्तरि विधानात् कर्त्ता कृष्णः उक्तः, कर्म त्वनुक्तम्। स्नात इति स्नाशौचे अकर्मकः। आश्लिष्ट इति—आङ्श्लिष आलिङ्गने। अधिशयित इति—शीङ् स्वप्ने, शीङ् स्विदि मिदीति कपिलत्वनिषेधाद् गोविन्दः, अधि-शीङ् स्थासामित्यधिकरणस्य गोवर्द्धनस्य कर्मता। अधिष्ठित इति—अधि-ष्ठा गति निवृत्तौ, पूर्ववदाधारस्य कर्मत्वम्। उपासित इति—उप-आस उपवेशने धातोः सेवार्थः। तेन कृष्णो गा असेविष्टेत्यर्थः। तदभोजनमुपोषित इति—तत् शब्देन गवां परामर्शः, तासामभोजनं यावत कालमुपोषित उपवासं कृतवानित्यर्थः।

---

**बाल०**—क्वचि। क्वचित् उक्तेभ्योऽन्यस्मिन्नपि धातौ कर्त्तरि च क्तो भवति। भुक्ता इति भुज पालनाभ्यवहारयोः सहजानिट्। पीता इति पा पाने ईत्वं। विभक्ता इति भज सेवायां सहजानिट्। व्यवसिता इति सोऽन्तकर्मणि द्यतिस्यतीत्यादिना आरामस्येरामः। प्रतिपन्ना इति पद गतौ सहजानिट्। अत्र गत्यर्थता नास्तीति उक्तेभ्योऽन्यत्वं। आश्रिता इति श्रिञ सेवायां श्रिञ इत्यादिना इड्निषेधः। पक्षे इति कर्मणि भावे चेत्यर्थः। सकर्मकाणां कर्मणि अकर्मकस्य भावे। इत्यादीत्यादिपदेन मथुरा प्राप्ता यमुनायां स्नातममुना गोपी आश्लिष्टा कृष्णेन गोवर्द्धनोऽधिशायित इत्यादि ॥ ७० ॥

**बाल०**—अक। अकर्मकात् गत्यर्थात् भोजनार्थाच्च उत्तरेऽधिकरणे च वाच्ये क्तो भवति। आसितं गतं भुक्तमिति आस्यते गम्यते भुज्यते यत्रेति अधिकरणं वृन्दावनमुक्तं। कृष्णस्येति अधिकरणवाचिक्तस्य योगे कर्त्तरि कर्मणि च वाच्ये षष्ठीति कर्त्तरि षष्ठी ॥ ७१ ॥

**बाल०**—ञिरो। ञिरामानुबन्धात् बुध्यर्थात् इच्छार्थात् पूजार्थाच्च उत्तरे वर्त्तमाने काले क्तो भवति। ञि क्षिदेति ञि क्षिदा मोचने। क्षिण्ण इति आरामानुबन्धत्वान्नेट्। ञि इन्धीति ञि इन्धी दीप्तौ। इद्ध इति उद्धवनरामहरः। वैष्णवानामिति वैष्णवैर्बुध्यते मन्यते ज्ञायतेऽयमित्यर्थः। वर्त्तमाने भावे च क्तस्य योगे कर्त्तरि षष्ठी वेति कर्त्तरि षष्ठी।

**मथुरा गतः, मथुरां प्राप्तः, यमुनायां स्नातोऽसौ, गोपीमाश्लिष्टः कृष्णः। गोवर्द्धनमधिशयितः, वृन्दावनमधिष्ठितः, गा उपासितः, तदभोजनमुपोषितः, राममनुजातः, कदम्बमारूढः, कालीयविषमनुजीर्णः।**

## ७३. क्वचिदन्यत्रापि।

---

उपोषित इति—उप-वस निवासे, वचि स्वपीति सङ्कर्षणः, वसतिक्षुधिभ्यामितीट्, उपान्वध्याङ्भ्यो वस इत्याधारस्य कर्मता। अनुजात इति—अनु-जनी प्रादुर्भावे, अनुयोगे सकर्मकः, वैष्णवादिकंसारिसनो र्नित्यमिति नस्य आरामः। न च कृष्णप्रवचनीयै योगे द्वितीयेयमिति भ्रमितव्यम्, अत्र लक्षणाद्यर्थानामनुपयोगात्। पश्चात् सादृश्ययो रनु रित्यमरात् पश्चाज्जात इत्यर्थोऽनुना द्योत्यते।

आरूढइति—रुह जन्मनि प्रादुर्भावे, आङ्योगे सकर्मकः, हस्य ढः, निष्ठा तरामस्य धः, टवर्गः, ढस्यहरः, पूर्वस्य त्रिविक्रमः। अनुजीर्ण इति—जॄष वयोहानौ, ॠरामस्येर्, त्रिविक्रमः, चतुर्भुजान्तादिड्निषेधः, रदाभ्यामिति निष्ठातस्य नः, णत्वञ्च।

**अमृता०**—७३. क्वचिदिति। क्वचिदुक्तेभ्योन्यत्रापि कर्त्तरि क्तः स्यात्, बाहुल्यादिति भावः। भुक्ताइति—भुज अभ्यवहार पालनयोः, चवर्गस्य कवर्गः। पीता इति—पा पाने, दामोदर मा स्थेति ईः। विभक्ता इति—वि-भज सेवायाम्। व्यवसिता इति—वि-अवपूर्व षोऽन्त कर्मणि, द्यतिस्यतीत्यादिना आरामस्येरामः, उद्युक्ता इत्वर्थः। प्रतिपन्ना इति—प्रति पूर्वपद गतौ, रदाभ्यामिति नत्वम्, अत्र ज्ञानार्थः। आश्रिता इति—आ-श्रिञ् सेवायाम्। श्रिय इत्यादिना इड्निषेधः।

---

बुद्ध इति बुध अवगमने सहजानिट्। मत इति मन ज्ञाने सहजानिट् हरिवेणुहरः। ज्ञात इति ज्ञा अवबोधने। इष्ट इति इषु इच्छायां विकल्पितेट्त्वान्नेट्। वाञ्छित इति वाछि इच्छायां इष्यते वाञ्छ्यते इत्यर्थः। पुजित इति पूज पूजायां पूज्यते अर्च्यते इत्यर्थः।

वादिति। चशब्दोपादानात् अनुक्तादपि धातोरुत्तरे वर्त्तमाने क्तो भवति। शीलित इति शील समाधौ। रक्षित इति रक्ष पालने। क्षान्त इति क्षमु सहने उरामेत्वाद्विकल्पितेट्त्वं ततो नेट् त्रिविक्रमः। आक्रुष्ट इति क्रुश आह्वाने सहजानिट्। जुष्ट इति जुषी प्रीतिसेवनयोः ईरामानुबन्धत्वान्नेट्। रुष्ट रुषित इति रुष रोषे। रुष्यमवमत्वरसंघुषास्वनेभ्यो वेट् विष्णुनिष्ठायामिति वेट्। अभिव्यामृत इति हृञ् हरणे। अक्रान्त इति क्रमु पादविक्षेपे उरामेत्वान्नेट् त्रिविक्रमः। शयित इति शीङ् स्वप्ने। गुप्त गुपू रक्षणे उरामेत्वाद्विकल्पितेट्त्वं अतो नेट्। तृप्त इति तृप प्रीणने सहजानिट्॥ ७२॥

**बाल०**—अलं। प्रतिषेधार्थयोरलं खल्वोर्योगे भावे वाच्ये क्त्वा वा भवति क इत्। क्त्वा मान्तश्च कृदव्ययं भवति, भावे इत्युक्त्वा पुरुषोत्तमोक्तमुदाहरणरूपेण दर्शयन् तदेव द्रढयति अत्र यथाह पुरुषोत्तम इति। पुरुषोत्तमोक्तमाह तुमर्थं इत्यनुवर्त्तते इति। एतेन

यथा—भुक्ताः पीताः विभक्ताः वैष्णवाः, व्यवसिताः प्रति पन्नाः आश्रिता इत्यादयः। पक्षे—मथुरागतेत्यादि।

**७४. अकर्मकगतिभोजनार्थेभ्यः क्तोऽधिकरणे च।**

कृष्णस्यासितं गतं भुक्तं वृन्दावनम्।

---

पक्षे इति—कर्त्तुरभावेऽर्थात् कर्मणि भावे च यथाप्राप्तं क्तः सिद्ध इति दर्शयति—मथुरा गतेत्यादि। इत्यादिपदेन—मथुरा प्राप्ता, यमुनायां स्नातममुना, गोपी कृष्णेनाश्लिष्टा, गोवर्द्धनमधिशयितः, वृन्दावनमधिष्ठितम्, गाव उपासिताः, तदभोजनमुपोषितम्, कदम्ब आरूढः, कालीयविषमनुजीर्णं कृष्णेनेति।

अमृता०—७४. अकर्मकेति। अकर्मकात् गत्यर्थात् भोजनार्थाच्च धातोरुत्तरे अधिकरणे च वाच्ये क्तप्रत्ययः स्यात्; चकाराद् यथाप्राप्तं भावकर्म कर्त्तृष्वपि सिद्धः। तत्राकर्मकेभ्यः कर्त्तृभावयोश्च गत्यर्थेभ्यः कर्त्तृकर्मभावेषु च, भोजनार्थेभ्यः कर्मभावयोश्चेति ज्ञेयम्।

कृष्णस्यासितमिति—आस्यते उपविश्यते यत्र तदासितं वृन्दावनम्। अत्राधिकरणमेवोक्तम्, अधिकरणवाचि क्तस्ययोगे कर्त्तरि कर्मणि च षष्ठीति कर्त्तरि कृष्णे षष्ठी। गतमिति—गम्यते यत्र तद् वृन्दावनमित्यनुषङ्गः। भुक्तमिति भुज्यते यत्र तद् वृन्दावनम्। कर्त्तरि षष्ठी सर्वत्र। इह कर्मविवक्षा चेत् तत्रापि फलानामिति षष्ठी भवेदिति दर्शितमेव कारकप्रकरणे। गतमित्यत्र तु कर्मण एवाधिकरणात् पृथक् कर्मविवक्षा नहि सम्भवेदित्यवधेयम्। किञ्च आख्यातस्य कर्त्तृकर्मभावातिरिक्त वाच्यत्वाभावाद् भावद्वारेणैवाधिकरणस्य वाच्यत्वमिति प्राक् च प्रपञ्चितम्।

---

भावे भवतीति सिद्धं। ननु तुमर्थ इत्यनेन भावे भवतीति कथं लभ्यते इति चेत्तत्राह यदिति। तद्यस्मात् अव्ययविधाने अव्ययार्थविधाने तुमश्च भावे अर्थ इति शेषः। इत्युक्तमिति पुरुषोत्तमेनेत्यर्थः। तुमर्थ इत्यनुवर्त्तते इत्यनन्तरं इतिशब्दप्रयोग उचित इति ज्ञेयं। कृत्वेति डु कृञ् करणे। भावे हीति सकर्मकाद्धातोरुत्तरे भावे प्रत्यये कृते सति चेद्यदि कर्मापेक्षा भवति, तदा सकर्मकस्य धातोः कर्मसम्बन्धो भवत्येवेति। हिशब्दोऽत्र वाक्यालङ्कारे। अतः खलूक्त्वा खलु वाचिकमिति अवाचिकं न वक्तव्यमित्यर्थः। सन्देशवाग्वाचिकं स्यादित्यमरः। तदेति। तत्तस्मात् एवमिति खलूक्त्वा खलु वाचिकमितिवदित्यर्थः। दामोदर इति दामादरे इति दामोदरस्य दो ददित्यस्योल्लेखः। पूर्वत्र परत्र वा अलं खल्वोर्योगे सति क्त्वा वा भवतीति न नियमः। अतएव अलं दत्वा दत्त्वालं खलु दत्वा खल्विति। तस्येति। अवैष्णवाय विष्णुनिर्माल्यस्य अदानेन भवितव्यमित्यर्थ। प्रतिषेधार्थयोरिति किं। अलङ्कारः भावे घण् अत्रालशब्दो भूषणार्थः॥ ७३॥

बाल०—एक। एककर्त्तृकयोः क्रिययोः प्रयोगे अथवा एककर्त्तृकयोः क्रिययोः सत्योः पूर्वकालस्थधातोरुत्तरे क्त्वा भवति। हरीति अनेन हरिवेणुहरः। नत्वेति नम

## ७५. ञिरामेतो बुद्धीच्छा पूजार्थेभ्यश्च क्तो वर्त्तमाने च ।

**ञिक्षिदा क्षिण्णः, ञिइन्धी इद्धः, वैष्णवानां बुद्धः मतः ज्ञातः इष्टः वाञ्छितः पूजितः अर्चितः ।**

---

**अमृता०**—७५. ञिरामेत इति । ञिरामानुबन्धात् बुद्ध्यर्थात् इच्छार्थात् तथा पूजार्थाच्च धातोरुत्तरे वर्त्तमाने च काले क्तप्रत्ययः स्यात्, चकारादतीते प्रोक्त एव । बुद्धि ज्ञानम्, इच्छा मतिः, पूजा सत्कारः ।

क्षिण्ण इति—ईरामानुबन्धत्वान्नेट्, रदाभ्याविति नत्वं, ततो णत्वञ्च । इद्ध इति—ईरामानुबन्धत्वान्नेट्, उद्धवनरामहरः । बुद्धइति—बुध अवगमने, तस्य धः, पूर्वधस्य च हरिगदा। मत इति—मनु ज्ञाने, हरिवेणुहरः । इष्ट इति—उरामेत्त्वेन विकल्पितत्वादिह नेट् । वाञ्छित इति—वाछि इच्छायाम्, अनिरामेतामिति विशेषण निवेशादिह नोद्धवनरामहरः । एवं विदितः अवगतः प्रतीतः उपलब्धः उष्टः ईप्सितः काङ्क्षितः लषितः स्पृहितः आशंसितः कान्तः कामयितः मानितः समाजितः महितः आराधित इत्यादयश्च वेदितव्याः ।

चकारस्यानुक्तसमुच्चयार्थश्च स्फुटयति—चादनुक्तादपीति । अनुक्तादपि धातोरुत्तरे वर्त्तमाने क्तो भवति, स च शिष्टप्रयोगानुसारादेव ग्राह्यो नतु यदृच्छावशादिति तद् गणं समाचिनोति—शीलित इत्यादि सार्द्धपद्येन । शीलित इति शील समाधौ, क्षान्त इति क्षमु सहने, उरामेत्त्वेन विकल्पितेट् त्वादिह नेट्, हरिवेण्वन्तोद्धवस्येति त्रिविक्रमः । आक्रुष्ट इति आङ्—क्रुश आह्वाने । जुष्ट इति—जुषी प्रीति-सेवनयोः, ईरामानुबन्धत्वान्नेट् । रुष्टः रुषित इति—रुषरोषे, रुष्यमवमेति वेट् । अभिव्याहृत इति—अभि-वि-आङ् पूर्वं हृञ् हरणे । प्रक्रान्त इति-प्र-क्रमु पादविक्षेपे, क्षान्तवत् । गुप्तइति गुपूरक्षणे ऊदित्वान्नेट् । तृप्त इति तृपू प्रीणने, पूर्ववन्नेट् । एतेषां बुद्धीच्छाद्यर्थाभावाद् वर्त्तमानेऽप्राप्ते

---

प्रभावे शब्दे च सहजानिट् । द्वित्वमिति क्रिययोरित्यस्येत्यर्थः । एकत्वमिति पूर्वकालस्थधातोरित्यस्येत्यर्थः । न तन्त्रमिति न नियतमित्यर्थः । तेन नत्वा स्तुत्वा भजतीति । अत्र तिसृणां क्रियाणां एककर्त्तृकत्वं अतः पूर्वकालस्थधातुद्वयात् क्त्वा । भजनापेक्षया स्तवस्य पूर्वत्वं अतः स्तुधातोः पूर्वकालस्थत्वं । स्तुत्वेति ष्टुञ् स्तुतौ । कथमिति यद्यस्मात् गृह्णातीति चिनोतीत्यर्थः । सिद्धान्तमाह हेतुप्रयोगेणैवेति । पूर्वकालत्वप्रतीतेरिति क्त्वा न भवतीति शेषः । उक्तार्थानामप्रयोग इति न्यायात् न भवतीति भावः । एककर्त्तृकयोरिति किं गते अवैष्णवे भुङ्क्ते वैष्णवः । पूर्वकालस्थेति किं नमति स्तौति च ॥ ७४ ॥

**बाल०**—परा । परत्वे अवरत्वे च गम्ये धातोरुत्तरे क्त्वा भवति, पूर्वसूत्रेणाप्राप्ते विधानं । बाल्यमिति बाल्यं कौमारं । कौमारं पञ्चमाब्दान्तं पौगण्डं दशमावधीति । अतिक्रम्येति क्रमु पादविक्षेते क्त्वा क्त्वो यप् । ततो बाल्यात् । क्त्वा यप् वक्ष्यत इति, क्त्वो यवनञ्पूर्वे समास इत्यनेनेति शेषः । अलब्ध्वेति नञ पूर्वलभः क्त्वा नञोऽरामशेष-

चादनुक्तादपि—

शीलितो रक्षितः क्षान्त आक्रुष्टो जुष्ट इत्यपि ।
रुष्टश्च रुषित श्चोभावभिव्याहृत इत्यपि ।
प्रकान्तः शयितो गुप्तस्तृप्त इत्यादयः स्मृताः ॥

## ७६. अलं खल्वोः प्रतिषेधार्थयो र्योगे क्त्वा वा भावे ।

क्त्वा मान्तश्च कृदव्ययम् । अत्र यथाह पुरुषोत्तमः,—तुमर्थं इत्यनु वर्त्तते यावदव्ययकृतां विधानम्, तुमर्थश्च भाव इत्युक्तमिति ।

अलं कृत्वा, खलु कृत्वा, न कर्त्तव्यमित्यर्थः । भावेऽपि हि प्रत्यये

---

वचनम् । चकाराद् मूतेऽप्येषां क्तः स्यादेव । यथा—जनै रविदितविभवो भवानीपति रिति भारविः । परस्परेण विज्ञातस्तेषूपायनपाणिष्विति कालिदासः । सपुण्य कर्मा भुवि पूजितो नृपै रिति सुश्रुतः । समाहितैरप्यनिरूपित इति माघः । ननु प्रयोगाएव-मादयो वर्त्तमान एवेति चेत् ? मैवं, तत्र कर्त्तरि विभाषया षष्ठी विधानात् केनापि तु कविना तस्या अप्रयुक्तत्वात्—तृतीयैवातीतकालक्तस्य ज्ञापिकेति मन्तव्यम् ।

**अमृता०**—७६. अलमिति । प्रतिषेधार्थौ यौ अलं खलुशब्दौ तयो र्योगे भाववाच्ये क्त्वा प्रत्ययो वा स्यात् । कइत् कपिलार्थः । पूर्वोक्तं स्मारयति—क्त्वा मान्तश्च कृद-व्ययमिति । "अलं खल्वोः प्रतिषेधयोः प्राचांक्त्वा" इति श्रीपाणिनेः सूत्रे भाव इत्यनुक्तेः स्वसूत्रेभावग्रहणं कपोलकल्पितमिति कस्यचित् शङ्कानिवृत्त्यर्थं पुरुषोत्तम लेखमुट्टङ्कयति—अत्रेति । अव्ययकृतां विधानं यावत् शेषपर्यन्तं तुमर्थे इत्यधिकारो वर्त्तते । तत्रैव सूत्रे "तुमर्थो भावे" इत्युक्तमस्ति । अतश्च सर्वाण्यपि कृदव्ययानि भावेहि विधीयन्त इति सुतरामवगम्यते ।

कृत्वेति—डुकृञ् करणे, कपिलत्वाद् गोविन्दाभावः । अत्र कर्त्ता वैष्णवे—नेत्युह्यः । भावे प्रत्ययविधानेन न कर्मापेक्षा, तद् विवक्षा चेत् भवत्येव तदित्याह—भावेऽपीति । खलूक्त्वेति प्रयोगो माघस्य, यथा—सम्प्रत्यसाम्प्रतंवक्तुमुक्ते मुसलपाणिना । निर्द्धारितेऽर्थे लेखेन खलूक्त्वा खलु वाचिकम् । इत्युद्धववाक्यम् । लेखेन पत्रादिना अर्थे कर्त्तव्ये निर्द्धारिते सति वाचा तत्प्रकाशनेनालम् । हलधरेण हि कर्त्तव्यो निर्णीतः, अतो मम परामर्शोऽत्र निरर्थक इतिश्लोकाभिप्रायः । अत्र प्रथमः खलु निषेधे, द्वितीयो वाक्यालङ्कारे । "निषेध-वाक्यालङ्कारजिज्ञासानुनये खलु" इत्यमरः । अच्युताभविष्णुनिष्ठेत्यादिना अव्यययोगे

---

सर्वेश्वरे नु नुट् च समास इति नञोऽरामशेषः । अत्र असिद्धरूपं न त्याज्यमिति प्रतिज्ञाया व्यभिचारो जात इति ज्ञेयं । अथवा अशब्दोऽयं निषेधार्थ इति । अवरेति पश्चादित्यर्थः । ननु स्वृत्वा धृत्वेत्यत्र स्वरति सूति सूयति धूञ्दित इड्वेत्यनेन पक्षे इट् कथं न स्यादिति चेत्त्राह श्रिञ इति । श्रिञो जागृवर्जत्यस्य कपिल एव विषय इति विशेषत्वं ॥ ७५ ॥

सकर्मकाद्धातोः कर्म सम्बन्धो भवत्येव,—खलूक्त्वा खलु वाचिकमिति। तदेवमप्युदाह्रियते,— दामोदरस्य दो दद्—अवैष्णवाय विष्णुनिर्माल्यमलं दत्त्वा, दत्त्वालं,खलुदत्त्वा,दत्त्वा खलु,तस्य दानं न कर्त्तव्यमित्यर्थः। अवैष्णव गृहे अलं भुक्त्वा वैष्णवेन, खलु भुक्त्वा वा, तत्र वैष्णवस्य भोजनेन न भवितव्यमित्यर्थः। पक्षे तस्य दानेनालं दानेन खल्वित्यादि।

## ७७. एक कर्त्तृकयोः क्रिययोः पूर्वकालस्थधातोः क्त्वा।

हरिवेण्वन्तेत्यादि–कृष्णं नत्वा स्तौति वैष्णवः। द्वित्वमेकत्वं वा न तन्त्रं।

---

वाचिक मित्यत्र कर्मणि षष्ठोनिषेधः, पश्चात् कर्मविवक्षायां प्रयुक्तमिदम्, कृत्प्रत्ययस्य भावेविहितत्वादनुक्तञ्च। वाचा निष्पन्नं वाचिकम्।

अथ अलं खलु शब्दयोरुपपदत्वे हि केचित् क्त्वा प्रत्ययं विदधति, तत्तु न सर्वेषां सम्मतमिति सूचयति—एवमप्युदाह्रियत इति, पाचीनैरिति शेषः। तेनैतत् शब्दयोः पूर्वत्र परत्र वा स्थिति रित्यत्र न कोऽपि नियम इत्यर्थः दामोदरस्य दोददिति सूत्रे कपिल तरामस्य परनिमित्ततया निर्देशादत्रापि तत् कार्यं भवेदिति दर्शयति—अलं दत्त्वेति। इहापि पश्चात् कर्मविवक्षा। सूत्रोक्त विकल्प पक्षमुदाहरति भावार्थविहित प्रत्ययान्तरेण—तस्येति। दानेनेति भावे अन प्रत्ययो वक्ष्यते। भावत्वेऽपि तस्य द्रव्यप्राधान्यात् वारणार्थ शब्दयोगे तृतीया। प्रतिषेधार्थयोरिति किम्—अलङ्कार इति भावे घण् वक्ष्यते। किञ्च अयं क्त्वा क्रियान्तरं नापेक्षते, नञर्थ शब्दस्य ह्याकाङ्क्षापूरक सामर्थ्यादिति बोध्यम्।

**अमृता०**—७७. एकेति। एकः कर्त्ता ययोस्तादृशयोः क्रिययोः प्रयोगे पूर्वकालस्थस्य धातोरुत्तरे क्त्वा प्रत्ययः स्यात्। परकालस्थित क्रियाया एव वाक्यसमापकत्वात् पूर्वकालस्थ क्रिया क्त्वाप्रत्ययान्ता त्वसमापिकेत्यायाति। नत्वेति—नम प्रह्वत्वे, हरिवेण्वन्त सहजानिटामिति मरामहरः। अत्र पूर्वं नमस्कारः पश्चात् स्तुति र्बोध्यते। पूर्वकालस्थ धातोरेकस्मादेवोत्तरे क्त्वा भवतीति न नियम इति स्पष्टयति—द्वित्वमेकत्वं वेति। इह भजनस्य प्राग् नमनं स्तुति श्चेति क्रियाद्वयमस्तीतिद्वाभ्यामेव क्त्वा स्यात्। एवमनेकेभ्योऽपि यथा—स्नात्वा पूजयित्वा परिक्रम्य नत्वा च हरिं भुङ्क्त इत्यादि। आशङ्क्य समाधत्ते—हेतुप्रयोगेणैवेति। यदित्यव्ययं हेतौ, यत्तद् यतस्ततोहेतावित्यमरात्। यद् यस्माद्धेतोरयं तुलसीं गृह्णाति तस्मादित्यव्यभिचारि ज्ञापकेन हेतुना कृष्णपूजनरूपं

---

**बाल०**—तत्। क्वचित्तत्कालेऽपि क्त्वा भवति। मुखमिति काश्रृ दीप्तौ दिवादिरात्मपदी क्त्वा क्त्वो यप्। अत्र प्रकाशस्य न पूर्वकालीनत्वप्रतीतिः किन्तु यत्र काले हासस्तत्रैव मुखप्रकाश इति॥ ७६॥

**बाल०**—व्यतीति। व्यतिहारः परिवर्त्तस्तदर्थान्मेङ उत्तरे अपूर्वकालेऽपि क्त्वा भवति। अपमित्येति मेङ् प्रतीदाने क्त्वा क्त्वो यप्। क्षियस्त्रिविक्रमोमयतेरिरामो वा

नत्वा स्तुत्वा भजति। कथं—यदयं तुलसींगृह्णाति तस्मात् कृष्णं पूजयिष्यतीति न क्त्वा ? हेतुप्रयोगेणैव पूर्वकाल प्रतीतेः।

## ७८. परावरत्वे गम्येऽपि।

बाल्यमतिक्रम्य हरेः पौगण्डम्, ततः परमित्यर्थः। क्त्वो यप् वक्ष्यते। अलब्ध्वा गिरिं गङ्गा, गिरेरवरेत्यर्थः। श्रियो जागृवर्जेत्यस्य परत्वाद् विशेषत्वाच्च नित्यमिडभावः—स्वृत्वा, धूत्वा।

## ७९. तत् कालेऽपि क्त्वा क्वचित्।

मुखं प्रकाश्य हसति हरिः।

---

कार्यमनुमीयत इत्यर्थः। तत्र हेतोरुपलब्धे स्तस्य च पर्वसिद्धत्वात् तत् क्रियायाश्च पूर्व कालस्थत्वं सिध्यतीति भावः। एककर्त्तृकयो रिति किम्—वैष्णवे भुक्तवतिगति रागतः। पूर्वकालस्थेति किम्—नमन् स्तौति, नौति यदा तदैव स्तौतीत्यर्थः। "रथे च वामनं दृष्ट्वा पुनर्जन्म न विद्यत इत्यादौ तु एककर्त्तृत्वनिर्वाहार्थं स्थितस्य विद्यमानस्य वा जनस्य इत्याद्यध्याहार्यम्।

**अमृता०**—७८. परावरत्व इति। परत्वे अवरत्वे वा गम्ये धातोरुत्तरे क्त्वा प्रत्ययः स्यात्। अप्राप्ते विधानम्। उदाहरणन्तु स्पष्टम्। अलब्ध्वेत्यत्र गङ्गा स्थितेति शेषः। गिरेरवरेति पूर्वस्थेत्यर्थः। अलब्ध्वेति—डु लभष धातोः क्त्वा, तस्य च नञा समासो वक्ष्यते। ननु स्वृत्वा धूत्वा इत्यादौ स्वरति सूतीत्यादिना विभाषया कथमिड् न स्यात्? तत्र सिद्धान्तमाह—परत्वादित्यादि। स्वरतीत्यादौ प्रत्यय सामान्यं खलु निमित्तम् इह तु केवलंकपिल इति विशेषत्वमस्य।

**अमृता०**—७९. तत्कालेऽपीति। क्वचित् तत्काले मुख्यक्रियायाः समानकालेऽपि क्त्वा स्यात्। अप्राप्ते वचनम्। प्रकाश्येति—प्रपूर्वकाशृदीप्तौ, क्तो यप्। यदैव हास स्तदैव मुख प्रकाशो नतु तत् पूर्वकाले। एवं पात्रं ज्ञनत्कृत्यपतति, विश्वं व्याप्य तिष्ठति, विष्णु रित्यादयश्च।

---

यपीति वक्ष्यमाणसूत्रेण आरामस्येरामः वामनात्तुक् पृथाविति तुक्। अत्रापि असिद्धरूपं न त्याज्यमिति प्रतिज्ञाव्यभिचारो जातः। अपमायेति वा पाठः। याचित्वा अपमयतेश्चेति। अत्र एककर्त्तृकयोरित्यादिना याचृधातोः क्त्वा॥ ७७॥

**बाल०**—स्कन्द। क्त्व परस्मिन् स्कन्दस्यन्दयोर्नरामहरो न भवति। स्कन्त्वेति स्कन्दिर् गतिशोषणयोः सहजानिट्। स्यन्त्वेति स्यन्दु श्रवणे पक्षे ऊदित्त्वात् स्वरतीत्यादिनेट् स्यन्दित्वेति॥ ७८॥

**बाल०**—सेट्। मृड् सुखने तुदादिः क्र्यादिश्च मृद क्षोदे कुष निष्कर्षे क्लिशू विबाधने क्र्यादिः क्लिश उपतापे दिवादिर्द्वयोरेव ग्रहणं। वद व्यक्तायां वाचि, वस

**८०. व्यतिहारार्थान्मेङोऽपूर्वकालेऽपि वा क्त्वा ।**

पूर्वं याचते ततोऽपमयते, अपमित्य याचते, याचित्वा अपमयते वा ।

**८१. स्कन्द स्यन्दयो र्नरामहरो न क्त्वा ।**

स्कन्त्वा, स्यन्त्वावास्यन्दित्वा ।

---

**अमृता०**—८०. व्यतिहारार्थादिति । व्यतिहारः परिवर्त्तः, तदर्थाद् मेङ उत्तरे अपूर्वकाले परस्मिन् कालेऽपि विभाषया क्त्वा भवति । अप्राप्ते विकल्पविधिः । पक्षे यथाविधानं पूर्वकाले च । अपमित्येति—अप पूर्व मेङ् प्रणिदाने, प्रणिदानं विनिमयः, प्रत्यर्पणञ्च । क्त्वो यप् । मयतेरिरामो वा यपीति, वामनात्तुक् पृथाविति च वक्ष्यते । याचित्वा अपमयत इति यथाप्राप्तं पूर्वकालेक्त्वा ।

**अमृता०**—८१. स्कन्देति । क्त्वा प्रत्यये परे स्कन्दिर् स्यन्दू इत्यनयो र्नरामहरो न स्यात् । अनिरामेतामित्यादिनोद्धवनहामहरे प्राप्ते प्रतिषेधः । स्यन्दित्वेति—ऊदित्त्वेन स्वरति सूतीति वेट् त्वादिठ पक्षे ।

---

निवासे इत्येतान् विना क्त्वा कपिलो न भवति । शयित्वेति कपिलत्वाभावाद्गोविन्दः । मृडित्वेति कपिलत्वाद्गोविन्दाभावः । गुधमपि पठन्तीति वर्जन इति शेषः । गुधित्वेति गुध परिवेष्टने । रुदवेत्तीति । रुदवेत्तिमुषग्रहिष्वपि प्रच्छः क्त्वा सनौ कपिलाविति सूत्रं ॥ ७९ ॥

**बाल०**—नरा । नराम उद्धवो यस्य तस्मादेव थफान्ताद्धातोरुत्तरे सेट् क्त्वाप्रत्ययः कपिलो वा भवति । नियमोऽयं । वञ्चि । वञ्चु गतौ लुञ्च अपनयने ऋत घृणायां सौत्रा धातवः । त्रि तृषा पिपासायां मृष क्षमायां इत्येतेभ्यः कृशेश्च उत्तरः सेट् क्त्वाप्रत्ययः कपिलो वा भवति । सेट्क्त्वा न कपिलत्वान्नरामहरः । श्रन्थित्वेति कपिलत्वाभान्नराम-हराभावः । गुस्फित्वेति गुस्फ ग्रन्थे पूर्ववत् । वचित्वा वञ्चित्वेति धातूनामनेकार्थत्वात् प्रलम्भनमत्रार्थः । ऋतित्वेति आय ईयङ् कमेर्णिङ् च रामधातुके वेति सूत्रमस्ति अतः ऋतेरीयङ् इति पक्षे न ईयङ् कपिलत्वाद्गोविन्दाभावः, पक्षे गोविन्दः । अर्त्तित्वेति । एवं कृशित्वा कर्शित्वा इति । यववर्जितेति । यवर्जितविष्णुजनान्ताच्चतुःसनोद्धवाद्विष्णु-जनादेः सेट् क्त्वा सनौ कपिलौ वेति सूत्रं । पूतीभावे पवित्रीभवने । कोथित्वेति कपिलत्वाभावाद्गोविन्दः । एवं रेफित्वेति । संसित्वेति । स्रंसित्वेति स्रन्सु अधःपतने कपिलत्वाभावान्नरामहराभावः । विकल्प एवेति थफान्तत्वाभावादिति शेषः । द्योतित्वा द्युतित्वेति द्युत दीप्तौ । वसतीति अनेनेट् । वसतिक्षुधिभ्यामित्यादीत्यादिपदेन लुभादीनां ग्रहणं । क्षोधित्वेति क्षुध बुभुक्षायां ॥ ८० ॥

**बाल०**—जॄ । क्त्व परस्मिन् जॄव्रश्चिभ्यामुत्तरे इट् स्यात् । जरित्वेति जॄष वयो-हानौ श्रिञो जागृवर्जेत्यादिना निषेधे प्राप्ते विधानं । ऋरामेति अनेन पक्षे इटस्त्रिविक्रमः जरीत्वेति । व्रश्चित्वेति ओव्रश्चू छेदने ऊरामेत्वादिटि विकल्पे प्राप्ते नित्यतार्थं वचनं ।

**८२. सेट् क्त्वा नकपिलो मृड मृद कुष श्लिष वद वसो विना।**

शयित्वा। मृडित्वा, गुधमपि पठन्ति—गुधित्वा, रुद वेत्तीति कपिलः— रुदित्वा।

**८३. नरामोद्धवादेव थफान्तात् सेट्क्त्वा कपिलो वा, वञ्चि-लुञ्च्यृति तृति मृषि कृशेश्च।**

श्रथित्वा श्रन्थित्वा, गुफित्वा गुम्फित्वा, वचित्वा वञ्चित्वा, ऋतित्वा अर्त्तित्वा। कृश तनुकरणे—कृशित्वा कर्शित्वा। नियमोऽयम्, ततो

---

अमृता०—८२. सेडिति। विशेषवचनम्: मृडादि षट्कं विना अन्येभ्यः सेट् क्त्वा कपिलो न भवति। मृड सुखने तुदादिः क्र्यादिश्च, मृद क्षोदे, कुष निष्कर्षे, क्लिश विबाधने क्र्यादिः, क्लिश उपतापे दिवादिश्च, वद व्यक्तायां वाचि, वस निवासे इत्येतेषान्तु सेट् क्त्वा कपिलः स्यादेव। शयित्वेति—कपिलत्वाभावाद् गोविन्दः। एवं देवित्वा वर्त्तित्वा जोषित्वेत्यादयः। सेत्युदाहरति—मृडित्वेत्यादि। कपिलत्वान्न—गोविन्दः। एवं वदवसोः सङ्कर्षणः—उदित्वा उषित्वा, वसति क्षुधिभ्यामितीट्। गुध परिवेष्टने इत्यपि पठन्ति, वर्जनेष्विति शेषः। रुदवेत्तिमुषग्रहि स्वपिप्रच्छः क्त्वा सनौ कपिला विति कपिलत्वान्न गोविन्द इत्यर्थः।

अमृता०—८३. नरामेति। नराम उद्धवो यस्य तादृशादेव थान्तात् फान्ताच्च फातोरुत्तरे सेट् क्त्वा कपिलो वा भवति। तथा वञ्चु लुञ्च ऋत तृष मृष कृशभ्यश्चोतरे सेट् क्त्वा कपिलो वा भवति। पूर्वसूत्रेण निषेधे प्राप्ते विभाषोक्तिरियम्। श्रथित्वेति—श्रथ मोचने, कपिल पक्षे नरामहरः। कपिलत्वविरहपक्षे श्रन्थित्वेति। एवमन्येऽपि ज्ञेयाः। ऋतित्वेति ऋत घृणायां सोत्रः। नरामोद्धवानामेव थफान्तानां विधिरेष इत्याह—नियमोऽयमिति। तत्र एवकार प्रयोगेण नियमो लभ्यते। अतो नरमोद्धवरहितस्य थान्तकुथधातोः

---

सेट् क्त्वा न कपिलो मृडमृदकुषक्लिशवदवसो विनेति कपिलत्वनिषेधः, अतो ग्रहिज्येत्यादिना न सङ्कर्षणः। वृश्चित्वेति पाठः क्वचिद्दृश्यते सत्वपाट एव॥ ८१॥

बाल०—उरा। क्त्वा परस्मिन् उरामेद्धातोरुत्तरे इड् वा भवति। शमित्वेति शमु उपशमे। शान्त्वेति इडभावपक्षे। क्रन्त्वा क्रान्त्वेति क्रमु पादविक्षेपे क्त्वं तु क्रमो वेति पाक्षिकस्त्रिविक्रमः। क्रमित्वेति इट्पक्षे। क्लिशित्वेति सेट् क्त्वा न कपिल इत्यादौ क्लिशो वर्जनमुक्तमतो न कपिलत्वनिषेधः अतो न गोविन्दः। परित्वेति अत्र कपिलत्वनिषेधः, अतो गोविन्दः॥ ८२॥

बाल०—जान्त। वैष्णवादिक्त्वि परस्मिन् जान्तधातोर्नशधातोश्च उद्धवनरामहरो वा भवति। अक्त्वेति अन्जू व्यक्तिम्रक्षणगतिषु ऊदित्वाद्विकल्पितेट्। नरामहराभावपक्षे अङ्क्त्वेति। भक्त्वेति भन्जो आमर्दने सहजानिट्। नष्ट्वेति नश अदर्शने मस्जिनशोर्नुम्

नरामोद्धवत्वाभावे तु, यववर्जित-विष्णु जनान्तादिति पक्षेऽपि न कपिलः । कुथपूतीभावे,—कोथित्वा, रिफ हिंसादौ—रेफित्वा । थफान्तादेव नियमादन्यत्र तु सेट् क्त्वा न कपिल इतिप्रवर्त्तते, संस्रित्वा । इह तु यववर्जितेति विकल्प एव,—द्योतित्वा । वसति क्षुधिभ्या-मित्यादि,—क्षोधित्वा क्षुधित्वा इत्यादि ।

**८४. जॄ-व्रश्चिभ्यामिट् क्त्व ।**

जरित्वा । ॠराम-वृभ्य इट स्त्रिविक्रमो वा नतु परपदसौ कामपाला-धोक्षजयोश्च इति, जरीत्वा, व्रश्चित्वा ।

**८५. उरामेतो वेट् क्त्व ।**

शमित्वा । हरिवेण्वन्तोद्धवस्यत्रिविक्रमः क्वी कंसारि वैष्णवे च, क्त्व

---

यव वर्जितेत्यादिना प्राप्तविकल्पोऽपि न भवति किन्तु पूर्वोक्तसामान्यसूत्रेण कपिलत्वनिषेध एव । एवं रिफश्च । थफान्तानां हि नियम एष नान्येषामिति स्फुटयति—थफान्तादेवेति । स्रंसित्वेति—स्रन्सु अधः पतने, कपिलत्वाभावान्न नरामहरः । अत्र नरामोद्धवत्वमस्त्येव किन्तु थफान्तत्वाभावान्न विभाषा । तेनायं विवेकः—थफान्तादन्यत्र सेट् क्त्वा न कपिल इत्येव, तत्रापि यव-वर्जितविष्णुजनान्ताच्चतुः सनोद्धवादित लक्षितादन्यत्र हि प्रवर्त्तते । तदेवोदाहरति—द्योतित्वेति विभाषा पदे । अत्र चतुः सनादि विशेषणलक्षितत्वेन तद् बिकल्प एवेति भावः । इत्यादिपदेन लुभाञ्चोः—लोभित्वा लुभित्वा, अञ्चित्वा ।

**अमृता०**—८४. जॄ-व्रश्चिभ्यामिति । क्त्वा प्रत्यये परे आभ्यामिट् स्यात् । श्रियो जागृ वर्जं चतुर्भुजान्ताच्चेति जीर्यते निषेधे प्राप्ते, वृश्चते ॠरामेत्त्वाद् विकल्पे प्राप्ते नित्य विधानमेतत् । जरित्वेति—कपिलत्वाभावान्न ॠरामस्येर् । व्रश्चित्वेति—अत्र न सङ्कर्षणः, उभयत्र सेट् क्त्वा न कपिल इति कपिलत्वनिषेधः ।

**अमृता०**—८५. उरामेत इति । क्त्वा प्रत्यये परे उरामानुबन्धाद्धातोरिट् वाभवति ।

---

वैष्णव इति नुम् नरामहरः । नरामहराभावपक्षे नष्ट्वेति । रधादेरिड् विकल्पितेट्त्वमतो नशित्वेति च । अनूजूधातोरिट्पक्षे अञ्जित्वेति । खात्वेति खनु अवदारणे । इट् पक्षे खनित्वेति । वैष्णवादित्वाभावान्नोत्रारामः । दित्वेति दोऽवखण्डने । हित्वेति डुधाञ् धारणपोषणयोः ॥ ८३ ॥

**बाल०**—जहा । क्त्व परस्मिन् जहातेः स्थाने हिर्भवति । हित्वेति ओ हाक त्यागे । जहातेरिति निर्देशः ओ हां गताबित्यस्य निरासार्थः ॥ ८४ ॥

**बाल०**—क्त्वो । समासे सति अनञ्पूर्वधातौ विहितस्य क्त्वः स्थाने यव् भवति ।

तु क्रमो वा, शान्त्वा। क्रान्त्वा क्रमित्वा। क्लिश पुङाभ्यां वेति वेट्, क्लिष्ट्वा क्लिशित्वा पूत्वा पवित्वा।

**८६. जान्त-नशोरुद्धव नरामहरो वा वैष्णवादि क्त्व।**

अक्त्वा अङ्क्त्वा, भक्त्वा भङ्क्त्वा, नष्ट्वा नंष्ट्वा। वैष्णवादीति किम्— अञ्जित्वा। जनखन सनामित्यादि, खात्वा खनित्वा। द्यति स्यतीतीत्वं, दित्वा, दधाते र्हिः हित्वा।

**८७. जहाते र्हिः क्त्व।**

हित्वा। अदो जग्धिः—जग्ध्वा।

---

शमित्वेति शमु उपरमे, इट् पक्षे, अनिटि तु त्रिविक्रमः। क्रान्त्वेति—क्रमु पादविक्षेपे। क्लिशित्वेति—सेट् क्त्वा न कपिल इत्यादौ क्लिशे वर्जनात् कपिलत्वम्। पूङस्तु कपिलत्वाभावाद् गोविन्दः। अनिटि तु कपिलः।

**अमृता०**—८६. जान्तेति। वैष्णवादि क्त्वपरे, अथादिट् रहित क्त्वा प्रत्यये परे जान्त धातो र्नश धातोश्च उद्धव नरामहरो वा स्यात्। नित्यं हरे प्राप्तेऽयं विकल्पविधिः। अक्त्वेति—अनूजू म्रक्षण व्यक्ति कान्ति गतिषु, ऊदित्त्वाद् विकल्पितेट्, अनिटि नरामहरे रूपम्, तदभावे—अङ्क्त्वेति। इटि तु न नरामहरः, वैष्णवादि क्त्वा विरहात्। नष्टेति— नश अदर्शने, सस्जि नशो र्नुम् वैष्णव इति नुम्, अनेन तस्यहरः, पक्षे तदभावः, पक्षे च रधादे रिड् वा—नशित्वा। दित्वेति—दोऽवखण्डने, कपिलतरामपरत्वादिरामादेशः। एवं डुधाञ्—हित्वेति।

**अमृता०**—८७. जहातेरिति। क्त्वा प्रत्यये परे ओहाक् त्यागे इत्यस्य हि रित्यादेशो भवति। जहातेरिति निर्देशात् ओ हाङ् गतौ इत्यस्य निरासः कृतः।

---

नञ्पूर्व्वात्त्विति वक्ष्यते अतो नञ्पूर्व इति समास इत्यस्य विशेषणमिति न वाच्यं। अनञ्पूर्वादिति वा पाठः। समासलक्षणमाह अन्तर्भिन्नपदत्वेऽपीति॥ ८५॥

**बाल०**—उपे। उपेन्द्रश्च उर्यादिश्च व्यन्तश्च आजन्तश्च पूर्वपदञ्च तानि कृदन्तेन सह समस्यन्ते। पूर्वं। पूर्वपदन्तु अमन्तमेव अव्ययकृदन्तेन समस्यते। नियमोऽयं। कृदिति। इदं सूत्रं पूर्वत्रापि आहरतीति तस्मादुक्तकृत्प्रत्ययान्तेनापि अनेन समासो भवतीति। उदाहरणानि ज्ञेयानीति। तानि यथा। प्रभवन् पराभवन् प्रकुर्वाणः प्रभेजिवान् प्रचक्राणः प्रक्रीडितवान् संस्तुतः उरीकुर्वत् इत्यादीनि। अन्तरङ्गेति अनेन स्वादेर्महाहरः॥ ८६॥

**बाल०**—वाम। पित् पृथुरतस्मिन् परे वामनादुत्तरे तुक् भवति उकावितौ। क्रमेण उदाहरणानि दर्शयति उपेन्द्र इत्यादिना। पराभूयेति भू सत्तायां। उरीकृत्य उररीकृत्येति डुकृञ् करणे। उरीति। उरी उररी च अङ्गीकारविस्तारयोर्वर्त्तते। श्रदिति। श्रदित्या-

दयोऽनुकरणशब्दा उर्यादयो भवति चेद्यदि इतिशब्दपरा न स्युः। कारि। शास्त्रार्थस्य समाधानं यस्मात् तादृशपद्ये वर्त्तमानः कारिकाशब्दः उर्यादिर्भवति। पद्यं श्लोकः। उदाहरणन्तु कारिकाकृत्येति। यत्रतु कारिकाशब्दः णकप्रत्ययान्तस्तत्र कारिकां कृत्वेति भवति। पुरो। अग्रादौ वर्त्तमानः पुरःशब्द उर्यादिर्भवति। पुरःशब्द सान्तोऽव्ययं उदाहरन्तु पुरस्कृत्येति। पुरस्कृत्येति नमःपुरमोर्गतिसंज्ञयोः कृञीति विष्णुसर्गस्य सः। सद। अभ्यर्हितविषयः प्रीत्या सम्भ्रम आदरस्तत्र वर्त्तमानः सच्छब्द उर्यादिर्भवति। अनादरे वर्त्तमानः असच्छब्दश्च उर्यादिर्भवति, अनादरस्तिरस्कारः। उदाहरणन्तु सत्कृत्य असत्कृत्येति। सच्छब्दस्य आदरार्थत्वाभावेतु सत्कृत्वा काष्ठं गत इति शोभनं विद्यमानं वा कृत्वेत्यर्थः। अलं। भूषणेऽर्थे वर्त्तमानोऽलंशब्द उर्यादिर्भवति। उदाहरणन्तु अलङ्कृत्येति। भूषण इति किं अलं भुक्त्वा न भोक्तव्यमित्यर्थः। हस्ते। उपयमने वाच्ये हस्ते पाणौ च उर्यादिर्भवति। उपयमनं विवाहः। विवाहोपयमौ समावित्यमरः। हस्ते पाणौ इत्येतौ सप्तम्यन्तौ विवाहानुकृतौ सप्तम्यप्तानुकरणसामर्थ्यात् समासे कृते न स्वादिमहाहरः। एतावव्ययौ इति केचित्। उदाहरणन्तु हस्तेकृत्य पाणौकृत्येति विवाहं कृत्वेत्यर्थः। स्वीकारमात्र इतितु क्रमदीश्वरादयः। हस्तेकृत्य महास्त्राणीति भट्टिरपि। उपयमन इति किं हस्ते कृत्वा परस्य मालां वर्त्तते। प्राध्वं। बन्धनहेतावानुकूल्ये वर्त्तमानः प्राध्वं शब्द उर्यादिर्भवति। बन्धनहेताविति बन्धनस्य हेतुरिति विग्रहः। प्राध्वमिति मरामान्तमव्ययं। जीवि। तत्सादृश्ये विषये जीविकोपनिषदौ उर्यादी भवतः। जीविका जीवनोपायः उदनिषत् तत्त्वज्ञानहेतुर्विद्या। जीविकाशब्दोदाहरणं वक्ष्यते। उपनिषच्छब्दोदाहरणं यथा उपनिषत्कृत्य उपनिषदमिव कृत्वेत्यर्थः। तत्सादृश्य इति किं जीविकां कृत्वा व्याधो गतः। अदः। अदःशब्द उर्यादिर्भवति। यदि तत्पूर्वकं अदःपूर्वकं परं प्रति नो ज्ञाप्यते नोच्यते वा। अदःशब्दः सर्वादिगणस्थः। अस्तं। अदर्शनार्थोऽस्तंशब्द उर्यादिर्भवति। अस्तंशब्दोऽव्ययं। उदाहरणन्तु अस्तं कृत्येति। एतत्। सर्वं कृञि कृञ्धातौ परे वर्त्तमानं सत् उर्यादि भवति। परिभाषासूत्रमेतत्। कृञीत्युपलक्षणं तेन पुरोऽग्रादाविति धा-धातोरपि प्रवर्त्तते। अतएव तुरासाहं पुरोधाय धाम स्वायम्भुवं ययुरिति कालिदासः। अन्त। हन्तौ हनधातौ परे अन्तशब्द उर्यादिर्भवति। परिग्रहेऽर्थेतु सति न भवति। कणे। तृप्तयां गम्यमानायां हन्तौ परे कणेशब्दो मनःशब्दश्च उर्यादिर्भवति। अच्छे। गत्यर्थे वदधातौ च परे आभिमुख्यवचनं अभिशब्दार्थं वा। अच्छेति उर्यादिर्भवति। उदाहरणन्तु अच्छगत्य अच्छसृत्येति अभिमुखं गत्वेत्यर्थः। अच्छोद्येति च अभिमुखमुदित्वेत्यर्थः।

तिरो। अन्तर्द्धिवचनस्तिरःशब्द उर्यादिर्भवति। उदाहरणन्तु तिरोभूयेति व्यवहितो भूत्वेत्यर्थः। अन्तर्द्धिवचनतिति किं तिरोभूत्वा गतः वक्रो भूत्वेत्यर्थः।

कृञि। कृञि तु परे अन्तर्द्धिवचनस्तिरःशब्दः उर्यादिर्वा भवति। उदाहरणन्तु तिरस्कृत्य तिरस्कृत्वा इति। तिरसस्त्वगतौ च वेति विष्णुसर्गस्य सः। इतः। इतः परं कृञि परे विकल्पो भवति उर्यादित्वस्येति शेषः। उपा। सामर्थ्याध्याने वर्त्तमाने उपाजेशब्दः अन्वाजेशब्दश्च कृञि परे उर्यादी वा भवतः। अर्थाभियक्तये सामर्थ्याधान इत्युक्तं

## ८८. क्त्वो ल्यबनञ्पूर्वे समासे ।

ल्यप् इति पाणिनिः ।

---

अमृता०—८८. क्त्वो यविति । न नञ् अनञ्, सपूर्वो यस्य सः अनञ्पूर्वः, तथाभूते समासे क्त्वा स्थाने यप् आदिश्यते । समासोऽत्र क्त्वा प्रत्ययेनैव, नञ् च पर्युदासः, सादृश्यार्थः । तेन नञ्भिन्न तत् सदृशाव्यय पूर्वत्वे सति यबादेशो नान्यथेति फलितार्थः । अग्रिमसूत्रेण समासो विधास्यते । तत्र क्त्वाप्रत्ययेन समासः रुपेन्द्रोर्यादि व्यन्ताजन्तानामेव, पूर्वपदानान्तु तेन सह समासादर्शनात् । परमकृत्वादयस्तु—बाहुल्यादिति वक्ष्यते ।

अथ समास लक्षणमाह—

---

न्तवर्थान्तरनिवृत्तये अनयोरर्थान्तराभावात् । उदाहरणन्तु उपाजेकृत्य उपाजेकृत्वा अन्वाजेकृत्य अन्वाजेकृत्वेति । साक्षा । प्रसिद्धार्थाः साक्षादादयः शब्दाः कृञि परे उर्यादयो वा भवन्ति । उदाहरणन्तु साक्षात् कृत्वेत्यादि । उरसि । अन्तःकरणे वर्त्तमानौ उरसि मनसि शब्दौ कृञि परे उर्यादी वा भवतः । मध्य । मध्येशब्दः पदेशब्दश्च कृञि परे उर्यादिर्वा भवति । स्पर्शार्थेतु न भवति । निव । वचनाभावे वर्त्तमानो निवचनेशब्दः कृञि परे उर्यादिर्वा भवति ।

एत इति । एते उर्यादयः शब्दाः । दुर्गमोदाहरणानीति दर्श्यन्ते इति शेषः । श्रदितीति सूत्रोल्लेखः । नेहेतीति शब्दपरत्वादिति शेषः । प्राध्वङ्कृत्येति । रामः श्रीरघुनन्दनः । उत्तरकाशलान् अयोध्यावासिनः । प्राध्वङ्कृत्येत्यस्यार्थमाह अनुकूल्येनेति । अदः कृत्या गच्छेति । अत्र परं प्रति ज्ञापना भूता अतो नोर्यादित्वं । अदः कृत्वा गच्छतीति चेति । अत्र परं प्रति उक्तिर्भूता अतो नोर्यादित्वं एतदेवाह परं प्रति वक्तीति । कृत्वा वा उरसि कृत्वा चा । अन्तःकरण इति किं । उरसि कृत्वा हस्तं शेते हस्तौ वक्षसि कृत्वेत्यर्थः । श्रुतिं स्वरं व्याचष्टे कथयति । कृत्वा मध्ये कृत्वा वा श्रीकृष्णस्येति मनः पदे कृत्वेत्यर्थः । हस्तमिति मध्ये पदे वेति श्रीकृष्णस्येति शेषः । निवचनेकृत्येत्युक्तं निवचने कृत्वेति च ज्ञेयं वचनं नियम्येत्यर्थः । अथेति । इत्यर्थे विरिति । अभूत तद्भावे कृभ्वस्तियोगे विरित्यनेनेति शेषः कृभ्वस्तीनां योगं विना विप्रत्ययो न भवति । अतोऽवैष्णवं वैष्णवं कृत्वेत्ति कृञो योग उक्तः । कृञोऽनुप्रयोग इति यदुक्तं तन्नावकलितं अनुप्रयोगस्य प्रसङ्गाभावात् । वेर्हर इति केवलस्य प्रत्ययस्य वेर्हर इत्यनेनेति शेषः । किन्तु तद्धितप्रकरणे विः सर्व इदिति वक्ष्यते । अतोऽत्रापि विः सर्व ईदिति पाठ उचितः । पूर्वारामस्य इराम इति अद्वयस्य वा वीराम इत्यनेनेति शेषः । सत्याकृत्येति सत्यदथपथ इत्यनेन च मयैतद्ग्रहीतव्यमिति निश्चित्येत्यर्थः ॥ ८७ ॥

बाल०—मिलि । तुकि विषये मिलित्वादेशः परवद्भवति । अधीत्येति । इङ् अध्ययने । मिलित्वादेशस्य ईरामस्य इरामवत्त्वं अतस्तुक् । प्रेत्येति । इन् गतौ मिलित्वादेशस्य एरामस्य इरामवत्त्वात् तुक् । ननु अधीत्य प्रेत्येत्यादौ तुकि कृते पश्चान्मिलित्वादेशः करणीयः किमनेन सूत्रेणेति चेत्तत्रोच्यते मिलित्वादेशे कृते निमित्तापाये नैमित्तिकस्याप्यपाय इति न्यायेन तुग्निवृत्तिर्भवत्वित्याशङ्का स्यात् तन्निरासार्थं वचनं ॥ ८८ ॥

८९. अन्तर्भिन्न पदत्वेऽप्येक नामत्वेन योजनं समासः ।

९०. उपेन्द्रोर्यादि-व्यन्ताजन्त-पूर्वपदानिकृदन्तेन समस्यन्ते, पूर्व-पदन्त्वमन्तेनैवाव्ययकृदन्तेन ।

---

**अमृता०**—८९. अन्तरिति । अन्त मध्ये भिन्नानि पृथक् पदानि यस्य सः अन्तर्भिन्न पदः, तस्य भाव स्तत्त्वम् । तस्मिन् सति द्वयो बहूनां वा पदानामेक शब्दतया योजनं तमास उच्यते । सम्यक् आस्यते समासः संक्षेप एकीकरणमिति पर्यवसितार्थः । सच षड् विधः, यथोक्तम्,—सुपां सुपा तिङा नाम्ना धातुवाथ तिङां तिङा । सुवन्तेनेति विज्ञेयः समासः षड्विधो बुधैः ॥ इति वैयाकरण भूषणे ॥ तत्र सुपां सुपेति—पदद्वयमेव सुवन्तम्, राज पुरुष इत्यादिषु । सुपां तिङ ति—पूर्वपद सुवन्तं, उत्तरपदं तिङन्तम्, प्रभवति पर्य-भूदित्यादिषु । सुपां नाम्नेति—विश्वकार इत्यादिषु । गति कारकोपपदानां कृद्भिः सह समास वचन प्राक् सुबुत्पत्तेरिति प्राचीन परिभाषया सुबुत्पत्तेः प्रागर्थान्नामावस्थायामेव पूर्वपदे न समासः स्यात् । अयमुपपदसमासः प्राचाम् । सुपां धातुना—उत्तरपदं धातुमात्रं नतु सुप् तिङन्तम्, प्रधीः सभ्राडित्यादिषु, क्विवन्त शब्दस्य नामत्वेऽपि धातुत्वस्वीकारात् । अयन्तु गति समासः प्राचाम् । अथ तिङां तिङ ति—पिवतखादता यजत नमता इत्यादिषु । तिङां सुवन्तेन—स्तुहि-कृष्णः, जहि जोह इत्यादिषु । एषु च प्रथमः पञ्चमः षष्ठश्च समासप्रकरणे वक्ष्यन्ते द्वितीयस्तु मूले स्पष्टतया नोक्तः, किन्तु "नित्यं धातूपसर्गयो"रिति परिभाषातः सन्धिनित्यत्वेन समासोऽपि ज्ञापितः, यतं एकाधिक शाब्दिकसन्धेर्नित्यता समासस्य ज्ञापिकैव । उपसर्ग विधौ च—प्रादय उपेन्द्रसंज्ञा धातुयोगे इत्यत्र धातुना सह योगे समास इत्येव पर्यवसीयते । अथ तृतीय चतुर्थी कृत् समासौ, तदर्थं कृदन्तेन सह कस्य कस्य वा समासो भवतीति बोधयितं परिभाषा सूत्रमाचष्टे,—

**अमृता०**—९०. उपेन्द्रेत्यादि । उपेन्द्रश्च उर्यादिश्च व्यन्तश्च आजन्तश्च पूर्वपदश्चेति तथा, तानि कृदन्तेन सह समस्यन्ते । एषां कृद्भिः समासः कृत्समास उच्यते । कृत्सूत्राद्य सप्तम्यन्तं पूर्वपदमिति वक्ष्यते, उपपदमिति प्राञ्चः । तत्रपूर्वपदेन कृतां समास उपपद समासः कथ्यते, कारकसमासश्च तदन्तर्गत एव, कारकमन्तरेणोपपदादर्शनात् । इदन्तु कृत्समास सुबोधाय सामान्य सूत्रम्, विशेषास्तु समासप्रकरणे वक्ष्यन्ते । तत्र प्रायः सर्वे हि कृतसमासाः कृष्णपुरुषान्तर्गता ज्ञेयाः । विशेष स्तत्रैव व्यक्तोभावी । तत्र च पूर्वपदानां समासे विशेषमाह—पूर्वपदन्त्विति । अमन्तेन एवाव्ययकृदन्तेन सह पूर्वपदं समस्यते ।

---

**बाल०**—नञो । समासे सति नञोऽरामशेषो भवति । सर्वेश्वरेतु परे सति नुट् च भवति । आख्यातेनु आक्षेपे गम्यमाने नञोऽरामशेषः भवति सर्वेश्वरे तु नुट् च । अकृत्येति । नञ इत्यनेन समासः नञ्पूर्वत्वात् न क्त्वो यप् । अनीक्षित्वेति नञोऽरामशेषो नुट् च । हरिमभजसि अनेधित्वमिति अत्राक्षेपो गम्यते । हरिं न भजसि अतः न एधि पृथिव्यां न तिष्ठेत्यर्थः ॥ ८९ ॥

कृत्सामान्यग्रहणात् पूर्वत्रापीदमारोहति, उदाहरणानि तु ज्ञेयानि।
अन्तरङ्गस्वादे र्महाहर एकपदत्वारम्भे।

तु कारोभेदे, एवकारोऽवधारणे। अव्ययकृदन्तेन तु यदा पूर्वपदं समस्यते तदा अमन्तेनैव। एवकारश्च द्विधावधारकः। प्रथमं तावत्—पूर्वपदस्य समासः अमन्तेन एवाव्ययकृदन्तेन नतु अपराव्यय कृदन्तेनेति। तेन अन्यथैवंकथमित्थंसु डुकृञइत्यादौ विधिमन्यथा कृत्वा, यथा कृत्वा इत्यादि क्त्वाप्रत्ययाव्यधानान्तु अन्यथा प्रभृतिभिः पूर्वपदै र्न समासः। द्वितीयश्च यथा—अमन्ते—नाव्ययेन यत्तुल्यविधानं पूर्वपदं तस्य एव समासो यथा स्यात्, अमन्तेन चान्येन च यत्तुल्यविधानमुपपदं तस्यमाभूदिति। अतश्च—अग्रे प्रथमं पूर्वं सु क्त्वा-णमू इत्यग्रे विधास्यमानानाम् पूर्वं नामं अग्रे नाममित्यादौ समासाभावो वक्ष्यते। अग्रे प्रभृति पूर्वपदानां तत्र न केवलं णमुप्रत्ययेन तुल्यविधानमपितु क्त्वा प्रत्ययेन चेति न समासः।

अथ मूलमनुसरामः। पूर्वत्रापीदमारोहरीति—इदं कृत्समास विधानं पूर्वत्र उक्तेष्वपि प्रत्ययेषु प्रयुज्यत इत्यर्थः। तदुदाहरणानि च यथा—प्रभवन् उपकुर्वाणः सभेजिवान् प्रचक्राणः अनुजातः अधीतवानित्यादीनि। उरीकुर्वन्नित्यादीनि च। सर्वेगतिसमासा एते।

अन्तरङ्गेति। एकपदत्वस्यारम्भे एकपदीभावे अन्तरङ्ग स्वादे र्महाहरः स्यादित्याख्यातशेषे प्रोक्तम्। इह तु पूर्वपदस्थ विभक्तिमपेक्ष्य पुनरुच्यते। उपेन्द्रादि चतुर्णामव्ययत्वेन—अव्ययात् स्वादे र्महाहरइत्यनेन हि स्वादि महाहरः सिद्ध इति विवेच्यम्।

**बाल०**—हरि। यपि परे नान्तान् धातून् वर्जयित्वा हरिवेणुहरविधिर्वा भवति। आगत्य आगम्येति। गमलृ गतौ अत्र नित्यं प्राप्ते विभाषा। प्रणत्य प्रणम्येति। नम प्रह्वत्वे शब्दे च। मान्तानान्तु नित्यमेवेति हरिवेण्वन्तसहजानिटामित्यादिनेति शेषः। प्रहत्य वितत्य संमत्येति हन हिंसागत्योः तनु विस्तारे मनु ज्ञाने सर्वत्र नरामहरन्तुक् च। कथमिति। वितृत्येति तृणु अदने विक्षित्येति क्षिणु हिंसायां अनयोस्तवर्गान्तत्वं न दृश्यते तर्हि कथं न विकल्प इत्ययमत्र विरोधः। सिद्धान्तमाह ऋद्वय इति। तृणु धातौ ऋद्वये ररामांशद्भावात् रषाभ्यां टुस्तवर्गज इति प्रवर्त्तते। क्षिणु धातौ सर्वेश्वरादिव्यवधानेऽपि रषयोर्निमित्तत्वात् रषाभ्यां टुस्तवर्गज इति प्रवर्त्तते। अतष्टवर्गान्तत्वेऽपि तवर्गान्तत्वमिति नित्यमेव हरिवेणुहरः। तृणु धातौ ऋरामे ररामांशसद्भावात् टवर्गान्तस्य तवर्गान्तजातत्वं। क्षिणु धातौ सर्वेश्वरस्य व्यवधाने यरामस्य णत्वविधौ न निमित्तत्वं। अदो जग्धिरिति अदो जग्धिः कपिल तरामे यपि चेत्यनेनेति शेषः। अस्मिन् प्रकरणे नामधातुप्रत्ययानामादेशस्य तज्जातिवद्भावः सवत्रैव वर्णानां तद्वच्छक्तिवद्भावो यत्र मंस्यते तत्रैवेत्युक्तत्वात् कृद्बाहुल्याच्च क्त्वादेशस्य यपः क्वचित् स्थानिवद्भावः क्वचिन्नेत्यभिप्रायः तस्मात् आगत्येत्यादौ यपः स्थानिवत्त्वं विहायेत्यादौ नेति भावः। आरामपक्षे प्रजायेति, आरामाभावपक्षे प्रजन्येति। प्रजत्येति पाठः क्वचिद्दृश्यते सत्वपपाठ एव। ननु विहायेत्यत्र जहातेः स्थाने हिः कथं न स्यादिति चेत्तत्राह अन्तरङ्गत्वादिति। प्रकृत्याश्रितत्वादन्तरङ्गत्वं निमित्तापायादिति नैमित्तिकस्याप्यपायः स्यादिति शेषः। अतः अदो जग्धिः

## ८१. वामनात्तुक् पृथौ ।

उपेन्द्रे—प्रकृत्य परिभूय। उर्यादौ—उरीकृत्य उररीकृत्य । उर्यादिगणः— उरी उररी चाङ्गीकार-विस्तारयोः । श्वदित्यादयोऽनुकरण शब्दा न चेदिति शब्दपराः। कारिका शास्त्रार्थ समाधानपद्ये। पुरोऽग्रादौ । सदसच्छब्दावादरानादरयोः। अलंभूषणे। हस्ते पाणौ चोपयमने। प्रध्वं बन्धनहेतावानुकूल्ये। जीविकोपनिषदौ तत्सादृश्यते। अदस्तत् पूर्वं यदि परं प्रति न ज्ञाप्यते नोच्यते वा। अस्तमदर्शनार्थम्। एतत् सर्वं कृञि, कृञि परे सति उर्यादिः । अन्त र्हन्तौ ननु परिग्रहे। कणे मनसी हन्तौ तृप्त्याम् । अच्छेत्याभिमुख्यवचनमभिशब्दार्थं वा गत्यर्थे वदे च । तिरोऽन्तर्द्धि वचनं कृञि तु वा ।

---

अमृता०—८१. वामनादिति । पृथौ प्रत्यये परे वामनादुत्तरे तुगागमः स्यात् । उकावितौ, कइत् कपिलत्वार्थः । अग्निचिदित्यादि सिध्यर्थः, यपितु क्त्वा-स्थानिकत्वात् सिद्धमेव कपिलत्वम् । वामनादिति किम्—विधूय, सम्भूय । पृथाविति किम्—कृतम् ।

समासमुदाहरति—उपेन्द्र इत्यादिना । प्रकृत्येति—उपेन्द्रस्य कृता (क्त्वा प्रत्ययेन) समासः, डुकृञ् धातोः क्त्वो यप्, वामनात्तुक् । उरीकृत्येति—उर्यादिः कृतासमासः, सर्वत्र समासत्वात् क्तो यप् । अथ उर्यादिगणमर्थसहितमाचष्टेटे—उरीत्यादि । उर्यादि रव्ययम् ।

करिकेति—शास्त्रार्थस्य समाधानं येन भवति तादृशि पद्ये वाच्ये कारिका शब्द उर्यादिः स्यात् । णक प्रत्ययान्तकारिका शब्दस्तु न,—कारिकां कृत्वेति । अग्रादावर्थे वर्त्तमानः पुरः शब्दोऽव्ययमुर्यादिः । आदिना प्राच्यां दिशि प्रथम काले अतीते चार्थे इति भरतः । अनव्ययत्वे तु न, पुर् शब्दस्य शसिपुर कृत्वालभत कीर्त्ति राजा । सदसदिति—आदरः प्रीत्यतिशयः, अनादरः परिभवौदासीन्यमिति वामनः । हस्ते पदे च सप्तम्यन्त प्रतिरूपकौ निपातौ, समासेऽपि सप्तम्या अलुक् । विवाहोपयमौ समावित्यमरः । एतत् सर्वं कृञोति—विञाच् प्रत्ययौ कृभ्वस्ति योगे भवतः, तत्साहचर्यात् उर्यादीनामपि तैरेव प्रयोगः सिद्धः, तथापि आधिक्येन व्यपदेशा भवन्तीति न्यायात् कृञ्योगे प्रयोग प्राचुर्याभिप्रायेणोक्तिरियम् । तेन पुरस्कृत्य पुरोभूय इत्यादयः प्रयुज्यन्ते, पुरोधायेत्यादिश्च दृश्यते । अन्तरिति—हन्तौ हनधातौ परे सत्यपरिग्रहार्थे अन्तः शब्द उर्यादिः । कणेइति

---

कपिल-तरामे यपि चेत्यस्मिन् सूत्रे यवग्रहणं कृतमिति शेषः । न स्युरिति प्रयोजनाभावादिति शेषः ॥ ८० ॥

बाल०—दामो । यपि क्विपि च परे दामोदरादेरन्तस्य ईरामो न भवति । दामोदर-घ्रास्थागापिवतीत्यादिना प्राप्ते निषेधः । विधायेति डु धाञ् धारणपोषणयोः । निमित्तापाये

इतः कृञि विकल्पः, कृञिपरे एतेषां वक्ष्यमाणानां उर्यादित्वं वा। उपाजे अन्वाजे च सामर्थ्याधाने। साक्षान्मिथ्या लवणं वशे प्रादुर् आविस् नमश्च प्रसिद्धार्थाः उरसि मनसी अन्तःकरणे। मध्ये पदे नतु स्पर्शे। निवचने वचनाभावे इति। एतेउपेन्द्रवदाख्याते कृति च धातोः प्राक् प्रयोज्या गतिसंज्ञाः।

तत्र दुर्गमोदाहरणानि। श्रदिति—श्रत् कृत्य, स्त्रित्कृत्य। नेह—श्रदिति कृत्वा। प्राध्वमिति—प्राध्वङ्कृत्य स्थितोरामः सर्वानुत्तर कोशलान्, आनुकूल्येन बद्ध्वा इत्यर्थः। जीविका कृत्य, जीविकामिव कृत्वेत्यर्थः। अदः कृत्य गच्छति। नेह—अदः कृत्वा गच्छ त्वम्, अदः कृत्वा गच्छतीति वा परं प्रति वक्ति। अन्तर्हत्य, मध्ये हत्वेत्यर्थः। नेह—अन्तर्हत्वा परिगृह्येत्यर्थः। वणेहत्य कृष्णं पश्यति, मनो हत्य कृष्णं पश्यति, तृप्तिं यावदित्यर्थः। उरसि कृत्य कृत्वा वा, निश्चित्ये-

---

विभक्तिप्रतिरूपकमव्ययम्। अच्छेति—गत्यर्थधातौ वद धातौ च परे अच्छ शब्द उर्यादिः स्यादाभिमुख्यार्थे अभिशब्दार्थे वा वाच्ये। अभिशब्दस्य आभिमुख्यातिरिक्तौ वीप्सेत्थम्भूत रूपार्थाविधिकौ, अतः पृथगुक्तिः। तिरोऽन्तर्द्धिवचनमिति—अन्तर्धानं व्यवधानं, तदर्थे तिरः शब्दो नित्यमुर्यादिः, कृञि परे तु विभाषयेत्यर्थः। तिरोभूय तिरोधाय। तिरः कृत्वा तिरस्कृत्वा, तिरःकृत्य तिरस्कृत्य। तिरस स्त्वगतौ च वेति सरामो वक्ष्यते।

इतः कृञि विकल्प इति। कृञि परे एते वक्ष्यमाणा उर्यादयो वा स्युः। ततः समासश्च विकल्पेन भवतीति भावः। सामर्थ्याधान इति दुर्बलस्य बलाधाने इत्यर्थः। लवणमिति मान्ताव्ययम्। मध्ये पदे एतौ च विभक्तिप्रतिरूपकौ, निर्वचने इति च सप्तमी-प्रतिरूपकम्। एत इति—एते उर्यादयः शब्दा उपेन्द्रा इवधातोः प्राक् प्रयोज्याः, आख्याते कृति च गतिसंज्ञां लभन्ते। अत एवैषां समासो गतिसमासतयोच्यते। आख्याते—उरीकरोतीत्यादि ज्ञेयम्।

तत्र दुर्गमोदाहरणानीति—सुगमानि तु त्यक्तानि। तानि च कानिचिदुदाह्रियन्ते। सत्कृत्य, असत्कृत्य। मैथिलीं हस्तेकृत्य पाणौ कृत्य गौरवमाप रामः। अच्छ गत्य अच्छोद्य, द्याभिमुख्येन गत्वा उक्त्वा चेत्यर्थः। अव्ययत्वेएव, नान्यथा—उदकमच्छं कृत्वा

---

नैमित्तिकस्याप्यपायः स्यादिति न दधातेर्हिः। निपायेति पा पाने। पीङ इति पीङ पाने दिवादिः। मिनातीति अनेन आरामान्तपाठः। प्रमायेति मीङ् हिंसायां। निमायेति डु मिञ् प्रक्षेपणे। विलायेति लीङ् श्लेषणे। लीयतिलीनात्योर्वेति आरामान्तपाठः पक्षे विलीयेति। निमायेत्यनन्तरं दामोदरादेरिति किमिति क्वचिद्दृश्यते तत्तु न संगच्छते

त्यर्थः । एवं मनसि । श्रुतिं मध्येकृत्य गीतां व्याचष्टे कृत्वा वा । एवं श्रीकृष्णस्य पदे कृत्य मनः शेते । नेह—हस्तं मध्ये पदे वा कृत्वा कृष्णं भूषयति, एवं निवचने कृत्येति ।

अथ व्याच्यौ तद्धितौ । अवैष्णवं वैष्णवं कृत्वेत्यर्थे विः, कृञ् प्रयोगः, वेर्हरः, पूर्वारामस्य ईरामः—वैष्णवीकृत्य । आच्—सत्याकृत्य । पूर्वपदं वक्ष्यते ।

## ६२. मिलित्वादेशः परवत्तुकि ।

अधीत्य प्रेत्य । नञ्पूर्वात्तु—

---

पिवति । रुग्न उपाजे कृत्य स्नाति, उपाजे कृत्वा वा, सबलो भूत्वेत्यर्थः । एवमन्वाजे कृत्येत्यादि । लवणं कृत्य लवणं कृत्वा वा तक्रं पिवति । अमात्यं वशे कृत्य वशे कृत्वा वा राजानमभिभवति शत्रु रिति ।

अथमूलमनुस्त्रियते । श्रदिति प्रतीक्ग्रहणम्, एवमग्रेऽपि बोध्यम् । उत्तरकोशलान् अयोध्यावासिन इत्यर्थः । अदः कृत्वेति—अत्र परं प्रतिज्ञापनान्नोर्यादित्वम् । कणेहत्येति—तदन्यार्थे तु कणे हत्वा मनो हत्वा गतः, प्रत्याख्यातो विषण्णश्च सन्नित्यर्थः । उरसि कृत्येति—अन्तःकरणादन्यत्र तु—पाणिमुरसि कृत्वा शेते । नेहेति—स्पर्शार्थत्वान्नोर्यादिः । निवचने कृत्येति वाचं नियमेत्यर्थः ।

अथ व्याचौ तद्धिताविति—अभूत तद्भावे कृभ्वस्ति योगे विरति वि प्रत्ययः, आच् कृञ् योगे इति आच् प्रत्ययश्च विधास्यते । वैष्णव शब्दात् विः, उक्तानामप्रयोग इति "अवैष्णवं कृत्वा" इत्यनयोरप्रयोगः । वेर्हर इति—केवलस्य प्रत्यय वे र्हर इत्यनेन । पूर्वारामस्येराम इति—अद्वयस्य वावीरामे इत्यनेन । सत्याकृत्येति—सत्यादशपथे इत्यनेन पूर्वोक्तार्थे आच् । निश्चित्येत्यर्थः ।

**अमृता०**—६२. मिलित्वेति । तुकि विषये पूर्वपरयो र्मिलित्वादेशः परवत् मन्यते । अधीत्येत्यत्र एकात्मके मिलित्वा य स्त्रिविक्रमादेशः सतु परवदर्थाद् वामनवद् मन्यते । परवदित्यनेन धातोरेव वामनवदिति सूचितम्, अन्यथा तुगागमासम्भवात् । प्रेत्येत्यत्र च मिलित्वादेशो य एरामः सपरवद् धातोरिरामवद् मन्यत इत्यर्थः ।

---

इति ज्ञेयं मेतीत्यनेन मामाङोर्ग्रहणात् । दामोदरमास्थागापिवतीत्यादिसूत्रस्य । विलायेति प्रत्युदाहरणमितितु कश्चिदाचष्टे तन्नोचितं । सूत्रे दामोदरादेरिति पाठस्यानुक्तत्वात् आख्यातप्रकरणे एव प्रत्युदाहरणस्योक्तत्वाच्च । अजेर्वीत्यादीति । अजेर्वी घणं विना रामधातुके बलेतु वा यपि चेति सूत्रं । उदज्येति अज गतौ क्षेपणे च पक्षे उद्वीयेति । णेर्हरइति णेर्हरोऽनिडादौ रामधातुके इत्यनेनेति शेषः । विचार्येति ण्यन्ताच्चरधातोः क्त्वा ॥ ६१ ॥

## ९३. नञो ऽरामशेषः, सर्वेश्वरे तु नुट् च समासे, आख्याते त्वाक्षेपे।

अकृत्वा अनीक्षित्वा। आख्याते—हरिमभजसि, अनेधित्वम्।

---

क्तो यवनञ्पूर्वसमास इति यत् परिभाषितम्, तत्र "अनञ्पूर्व" इत्यंश निवेशस्य फलं दर्शयति—नञ् पूर्वात्त्विति। नञ् पूर्वात्तु क्त्वा-प्रत्ययस्य यबादेशो न भवतीति फलितार्थः।

**अमृता०**—९३. नञ इति। समासे सति नञः अरामः शिष्यते, नञौ इतौ, सर्वेश्वरे परे तु नु-ट्-चागमः स्यात्। आख्याते परे तु आक्षेपे निन्दायां विषये अराम नुटौ आदिश्येते। अकृत्वेत्यादौ नञ् पूर्वसमासत्वात् क्त्वा स्थाने न यवादेशः। आख्यात इति—हरिं नभजसि, नैतदुचितम्, अतस्त्वमनेधि पृथिव्यां न तिष्ठ भ्रियस्वेत्यर्थः। समास इति किम्—असुरो न प्रीणाति हरिम्।

---

**बाल०**—लघु। यपि परे लघुपूर्वाद्धातोः परस्य णेः स्थाने अय् भवति। आप्नो। आप्नोतेरुत्तरस्य णेः स्थाने अय् वा भवति। विगणय्येति। गण संख्याने अदन्तश्चुरादिणिः अरामहरः। अन्तहरे न गोविन्दवृष्णीन्द्राविति वृष्णीन्द्रनिषेधः क्त्वा क्त्वो यप् णेरयः। प्रणमय्येति नम प्रह्वत्वे शब्दे च प्रेरगे णिः वृष्णीन्द्र घटादित्वाद्वामनः क्त्वा क्त्वो यप् णेरय्। प्रापय्येति आपलृ व्याप्तौ प्रेरणे णिः। परिवृढमिति विगृह्येति वाक्यं कृत्वेत्यर्थः। अथवा परिवृढमाचष्टे इति इत्यत्र वाक्ये विगृह्य परिविगृह्य परिभागं कृत्वेति वृढशब्दादिति पारिशेष्यात् वृढशब्दादेवेति नतु परिवृढशब्दादित्यर्थः। णिः क्रियत इति मुण्डमिश्रेत्यादिनेति शेषः। परिवृढशब्दाण्णिर्न भवति इति युक्त्या साधयति। संग्रामयुद्ध इतीति इत्यस्येत्यर्थः। तस्मादेव सोपेन्द्रादिति नान्यस्मात् सोपेन्द्रादित्यर्थः क्त्वान्तेनेति व्रढयित्वेत्यनेनेत्यर्थः। परिव्रढय्येति णौ कृते अनेकसर्वेश्वरस्य संसारहर इति संसारहरः पृथुमृद्वादेः ऋरामस्य रश्चेति ऋरामस्य रः क्त्वा। क्त्वान्तेन समासात् क्त्वो यप् परिवृढशब्दाण्णौ सति समासाभावात् क्त्वो यप् न स्यादिति भावः। परिवृढय्येति पाठो बहुषु पुस्तकेषु दृश्यते, किन्तु स लिपिकारप्रमादकृतः रविधानस्यापरिहार्यत्वात्। परेरिति परेर्धातुत्वाभावात् परेः पाक् नादागमः किन्तु परत एव पर्यव्रढयदिति ण्यन्ताद्धुतेश्वरादिप्। इत्यादि चेति सिद्धमिति शेषः। असंग्रामयदिति शेषः। असंग्रामयदिति सोपेन्द्रस्यैव धातुत्वात् उपेन्द्रात् पूर्वमदगागमः। संप्रधाप्येति डु धाञ धारणपोषणयोः पुक् क्त्वा क्त्वो यप् णेर्हरः लघुपूर्वत्वाभावान्न अयः। निगुह्येति गूह सम्बरणे णिः अत्तीत्यादिना णिः गोविन्दः। गोह् ओ ऊ सर्वेश्वरे इति ओरामस्य ऊरामः क्त्वा क्त्वो यप् णेर्हरः॥ ९२॥

**बाल०**—क्षियः। यपि परे क्षि क्षये इत्यस्य त्रिविक्रमो वा भवति। अस्मिन्नेव परे मेङ् प्रतीदान इत्यस्यान्तस्य इरामो वा भवति। सूत्रे इराम इत्यत्र इरामश्चेति वा पाठः॥ ९३॥

## ९४. हरिवेणुहर विधिर्वा यपि नान्तवर्जम् ।

आगत्य आगम्य, प्रणत्य प्रणम्य। नान्तानान्तु नित्यमेव--प्रहत्य वितत्य संमत्य। कथं तृणु–वितृत्य, क्षिणु–विक्षित्य इति न विकल्पः ? ऋद्वये ररामांश-सद्भावात् सर्वेश्वरादि व्यवधानेऽपि रषयो र्निमित्तत्वात् "रषाभ्यां टुस्तवर्गज" इति प्रवर्त्तते। अदो जग्धिः प्रजग्ध्य। जन खन सनामिति--प्रजाय प्रजन्य। अन्तरङ्गत्वात् प्राग् जग्धौ प्राप्तेऽपि निमित्तापायाद् यद् ग्रहणम्, तेन जहाते हि रित्यादयो न स्युः—विहाय।

---

**अमृता०**—९४. हरीति। यप् प्रत्ययेपरे नान्तान् धातून् वर्जयित्वा अन्येषां हरिवेणुहर विधि र्वा भवति। आगत्येति—गमलृगतौ क्त्वा यप्, स्थानिवत्त्वेन कंसारित्वात् हरिवेण्वन्त सहजानिटामित्यादिना नित्यं हरिवेणुहरे प्राप्ते विकल्पविधानमेतत्। प्रहत्येति—हन हिंसागत्योः, सूत्रे नान्तानां वर्जनात् यथा प्राप्तं नित्यमेव हरिवेणुहरः। वितत्येति तनु विस्तारे, संमत्येति मनु ज्ञाने। कथमित्यादिनाशङ्का सिद्धान्तयति—ऋद्वय इत्यादि। तृणु धातोः ऋरामे ररामांश सद्भावेन रनिमित्तत्वात् तथा क्षिणु धातोस्तु सर्वेश्वर व्यवधानेऽपि षनिमित्तत्वात् रषाभ्यां टु स्तवर्गज इति विज्ञायते, अत एतयो र्भूतपूर्व दन्त्यनत्वावगमान्नित्यं हरिवेणु हरो भवतीति भावः।

ननु यपः क्त्वा स्थानिकत्वात् विहायेत्यत्र जहाते हिक्त्वीति कथं न प्रवर्त्तत इति चेत्तत्राह—अन्तरङ्गत्वादित्यादि। अदो जग्धिः कपिलतरामे यपि चेत्यत्र प्रकृतिमाश्रित्य वर्त्तमानस्य जग्ध्यादेश विधेरन्तरङ्गत्वात् पूर्वमेव तदादेशः सिध्यति, तथापि तत्र यद् यपि चेति पृथगुक्तम् तदेतज्ज्ञापयति—प्रकरणेऽस्मिन् साक्षान्निमित्तापाये नैमित्तिकस्य चापायकलनात् तत् कार्यं न भवेदिति। क्त्वा स्थाने यवादेशस्येह कंसारित्वांशे हि स्थानिवत्त्वं मन्तव्यं नतु साक्षात् ररनिमित्तांशेऽपीति फलितार्थः। तेन साक्षात् क्त्वाप्रत्ययरूपनिमित्तत्वाभावात् जहाते हि रित्यादेशो न स्यादित्यर्थः। आदि पदेन—यपि द्यतिस्यति मास्थांमित्यादि सूत्रोक्तं किमपि कार्यं न प्रवर्त्तते, तरामरूपनिमित्तापायात्। यथा—दो-अवदाय, स्था-आस्थाय; मा-अनुमाय, धा-निधाय, दा-प्रदाय, सुदायेत्यादयः। एव प्रक्रम्येति न त्रिविक्रमः, तथा—आपृच्छ्य प्रदीव्य इत्यादौ न ऊठ्।

---

**बाल०**—वेञ्। यपि परे व्येञादीनां सङ्कर्षणो न भवति। परि यपि परे परिसंभ्यामुत्तरस्य व्येञः सङ्कर्षणो वा भवति। प्रवायेति वेञ तन्तुसन्ताने। प्रव्यायेति व्येञ सम्बरणे वचिस्वपीत्यादिना सङ्कर्षणे प्राप्ते निषेधः। प्रज्यायेति ज्या वयोहानौ ग्रहिज्येति सङ्कर्षणे प्राप्ते निषेधः। त्रिविक्रम इति श्याश्विव्याज्याह्वां सङ्कर्षणस्य त्रिविक्रम इत्यनेनेति शेषः॥ ९४॥

## ६५. दामोदरादेरीरामो न यपि क्विपि च ।

विधाय निपाय । निपीयेति तु पीङोरूपम् । मिनाति मिनोतीत्यादि–प्रमाय निमाय । विलाय विलीय । अजे वींत्यादि––उदज्य उद्वीय । णेर्हरः––विचार्य ।

## ६६. लघुपूर्वात् परस्य णेरय् यपि, आप्नोते र्वा ।

विगणय्य प्रणमय्य, प्रापय्य प्राप्य । परिवृढमाचष्टे इति विगृह्य वृढ शब्दादेव णिः क्रियते । संग्राम युद्धे इति चुरादि पाठात्तस्मादेव सोपेन्द्राण्णे रुत्पत्तिः । ततश्च परिशब्दस्य क्त्वान्तेन पश्चात् समासात्

---

**अमृता०**—६५. दामोदरादेरिति । यपि क्विपि च प्रत्यये परे दामोदरादे रन्त्य ईरामो न स्यात् । विष्णुजनरामधातुक कंसारि रूपपरनिमित्तत्वादीरामे प्राप्ते निषेधः । विधायेति डुधाञ् जुहोत्यादिः । निपायेति पा पाने, मिनाति मिनोतीत्यादिना यपि आरामान्तपाठः । प्रमायेति मीङ् हिंसायाम् । निमायेति डुमिङ् प्रक्षेपणे । विलायेति लीङ् श्लेषणे, लीयति लीनात्योर्वेति विभाषया आरामान्तपाठः, पक्षे विलीय । अजे वींत्यादौ वले तु वा यपि चेति यव् ग्रहणाद् विकल्पेन वी भावः । वि चार्येति ण्यन्ताव् चर धातो र्यप् ।

**अमृता०**—६६. लध्विति । लघुः पूर्वे यस्य तादृशाद्धातोः परस्य णेः स्थाने अयादेशः स्याद् यपिपरे, आप्नोतेः परस्य णेरय् वादिश्यते । विगणय्येति—गण संख्याने अदन्त श्चुरादि णिः, अराम हरः, अन्तहरे न गोविन्द वृष्णीन्द्रविति वृष्णीन्द्रनिषेधः, णेरय् । प्रणमय्येति—णम प्रह्वत्वे, हेतु णिः, वृष्णीन्द्रेऽपि घटादित्वाद् वामनः, णेरय् । प्रापय्येति–आपलृ व्याप्तौ, प्रेरणणि, अयोऽभावपक्षे प्राप्येति णेर्हरः । षरिवृढमाचष्ट इति—विगृह्य विच्छिद्य, त्रिभागं कृत्वेत्यर्थः । चरिव्रढय्येति—वृढ शब्दात् तत् करोति तदाचष्टे इत्यर्थे णिः, अनेक सर्वेश्वरस्य संसार हरः, पृथुमृद्वादेः ऋरामस्य रश्च, क्त्वा, ततः परिणा क्त्वान्तस्य समासे क्त्वो यप् । धातोः पूर्वमत् इति शासनेन परिशब्दात् परमेव अदागमः । असंग्रमयदित्यत्र तु सोपेन्द्रस्यैव धातुस्वरूपत्वादुपेन्द्रात् पूर्वमेवादागम इति भेदः । संप्रधा-

---

**बाल०**—क्त्वार्थे । आभीक्ष्न्यविशिष्टेऽर्थे वर्त्तमानाद्धातोरुत्तरे क्त्वार्थे णमुश्च भवति । आभीक्ष्ण्यलक्षणमाह आभीक्ष्ण्यं पौनःपुन्यं इति ॥ ६५ ॥

**बाल०**—आभी । आभीक्ष्ण्येति वाच्यमिति वक्ष्यते इत्यर्थः । स्मारं स्मारमिति स्मृ-चिन्तायां अन्तस्य -वृष्णीन्द्रः नृसिंहे इति वृष्णीन्द्रः । आभीक्ष्ण्यवीप्सयोरित्यनेन द्विरुक्तिः पुनः पुनः स्मृत्वेत्यर्थः । गमं गममिति गमलृ गतौ णिः वृष्णीन्द्रः ण्यन्तात् णुमः घटादित्वाद्वामनः णेर्हरः द्विरुक्तिः । त्रिविक्रमपक्षे गामं गाममिति । लभेरिति लभेर्णुम् णम्बिणोर्वा सोपेन्द्रस्य तु नित्यमिति सूत्रं । लम्भं लम्भमिति डु लभष प्राप्तौ णुम् ।

परिव्रढय्येति सिद्धम् । परेर्धातुत्वाभावात् पर्यव्रढयदित्यादि च । संग्रामयतेस्तु असंग्रामयत् । लघुपूर्वात् किम्––संप्रधाप्य निगूह्य ।

**९७. क्षियस्त्रिविक्रमो मयते रिरामो वा यपि ।**

प्रक्षीय प्रक्षित्य, अपमित्य अपमाय ।

**९८. वेञ् व्येञ् ज्यानां न सङ्कर्षणो यपि. परिसंभ्यां व्येञो वा ।**

प्रवाय प्रव्याय प्रज्याय । परिव्याय, नित्यत्वात्तुकं बाधित्वा श्यांश्वि व्याज्येति त्रिविक्रमः––परिवीय, संव्याय संवीय ।

---

प्येति—डु धाञ्, णौ सति पुक्, क्त्वो यप्, लघु पूर्वत्वाभावात्तु न णेरय् किन्तु तस्य हरः । निगूह्येति—गुहू सम्वरणे, णौ गोविन्दः, गुह ओ ऊ सर्वेश्वर इत्यूरामः, ततो लघुपूर्वत्वाभावान्न णेरय् किन्तु हरः । एवं नय् हय् प्रभृतौ च णौ वृष्णीन्द्रस्यावश्यस्थितित्वात् लघुपूर्वात्वाभावेन अयादेशाभाव इत्यवधेयम् ।

**अमृता०**—९७. क्षिय इति । यपि परे क्षि धातो स्त्रिविक्रमो वा स्यात्, तस्मिन् परे मयतेरिरामादेशश्च वा स्यात् । प्रक्षीयेति क्षि क्षये, पक्षे प्रक्षित्येति वामनात्तुक् । अपमित्येति मेङ् प्रणिदाने । इरामादेशाभाव पक्षे त्वारामान्तपाठः ।

**अमृता०**—९८. वेञिति । यपि परे वेञादि त्रयाणां सङ्कर्षणो न स्यात्, परिसंभ्यामुत्तरस्य व्येञस्तु स वा भवति । यपः कपिलत्वात् कंसारित्वाच्च प्राप्ते सङ्कर्षणे निषेधोऽयक्ष विभाषा च प्रवायेति—वेञ् तन्तुसन्ताने, वचिस्वपि यजादीनामिति प्राप्तौ निषेधः, तत आरामान्तपाठः । प्रव्यायेति व्येञ् सम्वरणे, पूर्ववत् । प्रज्यायेति ज्या वयोहानौ, ग्रहि ज्येत्यादिना प्राप्त सङ्कर्षणस्य निषेधः परि समपूर्वात्तु वा ननु सङ्कर्षण पक्षें वामनात् तुगिति, सङ्कर्षणस्य त्रिविक्रमश्चेति विप्रतिषेधे परस्तुगेव कार्यमिति चेत्तत्राह—नित्यत्वादिति । नेह तुल्यबलता किन्तु त्रिविक्रमविधिरेव नित्यता, कृतेऽपि न कृतेऽपि तुकि, त्रिविक्रमस्यावश्यम्भावित्वात् । एवं संपूर्वात् संव्यायेत्यादि ।

---

णुमाभावपक्षे लाभं लाभमिति । सोपेन्द्रस्य तु नित्यमिति प्रलम्भं प्रलम्भमित्येव । भोजं भोजमिति भुज पालनाभ्यवहारयोः । पायं पायमिति पा पने आतो युगिणि नृसिंहकृति चेति युक् । णमुश्चेत्युक्तमतमाह पक्षे स्मृत्वा स्मृत्वा इत्यादीति ।। ९६ ।।

**बाल०**—अपा । णमु परे अपादुत्तरस्य गुरोः स्थाने गार वा भवति । अपगोरं अपगोरमिति गुरी उद्यमे । मुहुरिति पुनः पुनरित्यर्थः । पूर्वपदं वक्ष्यते इत्युक्तं तदेवाह ।। ९७ ।।

**बाल०**—कृत् । कृदसूत्राणामादिस्थितं सप्तम्यन्तं पदं पूर्वपदमुच्यते ।। ९८ ।।

**९९. क्त्वार्थे णमु श्चाभीक्ष्ण्ये ।**

णमुल् इति पाणिनिः । आभीक्ष्ण्यं पौनः पुन्यम् । आभीक्ष्ण्ये वीप्सादिषु च द्वित्वं वाच्यम् । स्मारं स्मारं कृष्णं नमति । घटादीनामित्यादौ णिपूर्वयो र्णम्विणोस्तु त्रिविक्रमो वा । गमं गमं, गामं गामं वा । लभेर्णु मित्यादि-- लम्भं लम्भं, लाभं लाभं, प्रलम्भं, प्रलम्भं प्रलम्भं । भोजं भोजं, पायं पायं । पक्षे स्मृत्वा स्मृत्वेत्यादि ।

**१००. अपाद् गुरो गार् वा णमौ ।**

अपगारं अपगारं, अपगोरं अपगोरं वा, मुहुरुद्यम्येत्यर्थः ।

---

**अमृता०**—९९. क्त्वार्थ इति । पौनःपुन्यार्थे वर्त्तमानाद्धातोरुत्तरे क्त्वार्थे णमु प्रत्ययश्च स्यात्, चकारात् क्त्वा च । णराम उरामश्चेतौ, अम् शेषः । णराम इत् वृष्णीन्द्रार्थं, उराम इत् प्रत्ययमरामस्य स्थित्यर्थः । आभीक्ष्ण्ये वीप्सायां तथा सामीप्य सादृश्यादिषु चार्थेषु द्वित्वं वाच्यं वक्ष्यते, समासप्रकरणस्यान्ते । स्मारं स्मारमिति—स्मृ चिन्तायां, अन्तस्य वृष्णीन्द्रः, आभीक्ष्ण्य-वीप्सयोरिति द्विरुक्तिः । पक्षे स्मृत्वा स्मृत्वेति क्त्वा च, पुनः पुनरतिशयेन वा स्मृत्वेत्यर्थः । लभेरिति—लभे र्नुम् णम्विणो र्वा सोपेन्द्रस्य तु नित्यमिति नुम् सूत्रम् । पायमिति पा पाने, आतो युक् । क्त्वार्थे इत्यनेन एककर्त्तृकयोः पूर्वकाल इत्येव बोध्यते । तेनेह न—विप्रः स्तौति भक्तो नमति हरिम् ।

**अमृता०**—१००. अपादिति । अपादुत्तरस्य गुरी उद्यमे इत्यस्य गार् वादिश्यते णमु प्रत्यये परे । गोविन्दापवादार्थ आदेशः ।

---

**बाल०**—अमन्त । अमन्तस्वाद्वर्थे पूर्वपदे सति धातोरुत्तरे णमुर्भवति, अमश्च महाहरो न भवति । स्वादुङ्कारमिति पूर्वपदन्त्वमन्तमेवाव्ययकृदन्तेनेति समासः । अमो महाहरनिषेधात् अन्तरङ्गेत्यादिना नेह महाहरः । स्वाद्वर्थे इत्युक्तं अत आह । एवं मिष्टङ्कारं लवणङ्कारं इति लवणशब्दोऽपि स्वाद्वर्थः । स्वादुशब्दस्विति त्रिविक्रमो नेष्यते इति णुम्विधान इति शेषः । त्रिविक्रमस्त्रिविक्रमान्तः । स्वादूकृत्येति अस्वादु स्वादु कृत्वेत्यर्थे अभूततद्भावे कृभ्वस्तियोगे विरिति विः सर्व इत् अन्त्यस्य त्रिविक्रमः व्यन्तस्य क्त्वान्तेन समासः क्त्वो यप् त्रिविक्रमान्तत्वादत्र णमुर्न भवति । अत्र क्वचित् स्वादुं कृत्वेति प्रत्युदाहरणं दृश्यते, किन्तु यन्त्यस्य क्त्वान्तेनावश्यमेव समासो भवतीत्येतन्न सिध्यतीति ज्ञेयं । त्रिविक्रमान्तत्वादेव स्वाद्वीं कृत्वा इत्यत्रापि णमुर्न भवति ॥ ९९ ॥

**बाल०**—कृतो । व्यक्तार्थमेतत् । क्त्वा चेत्यत्र णमुं बाधित्वा क्त्वा चेति शेषः । किन्त्विति उत्सर्गसिद्धत्वात् सामान्यसिद्धत्वात् । नापेक्षत इति क्त्वाप्रत्ययइति शेषः । स्वादुं कृत्वेत्यसमस्तं । अत्र यपो बाधकः क्त्वा इत्यभिप्रेत्य स्वादुं कृत्वेति केचिदुदाहरन्ति तत्तु न संगच्छते णमुप्रकरणत्वात् ॥ १०० ॥

**बाल०**—अभू । अमन्तस्वाद्वर्थे पूर्वपदे सति अभूततद्भावेऽर्थे क्त्वास्थाने णमुर्भवति

**१०१. कृत् सूत्राद्यं सप्तम्यन्तं पूर्वपदम् ।**

उपपदं प्राञ्चः । परिभाषेयम् ।

**१०२. अमन्तस्वाद्वर्थे णमुरमश्च न भराहरः ।**

स्वादुङ्कारं हरयेऽर्पयति । एवं मिष्टकारं लवणङ्कारम् । स्वादु शब्दस्तु त्रिविक्रमो नेष्यतेऽत्र,—स्वादू कृत्य यवागूं भुङ्क्ते । कृतो बाहुल्यात् क्त्वा च । किन्तूत्सर्गसिद्धत्वात् पूर्वपदं नापेक्षत इति न समासः । स्वादुं कृत्वा ।

---

अमृता०—१०१. कृदिति । कृत्सूत्राणामादिस्थितं सप्तम्यन्तं पदं पूर्वपदाख्यं भवति, तच्च कृता समस्यते इति प्रागेवोक्तम् ।

अमृता०—१०२. अमन्तेति । अमन्ते स्वाद्वर्थे शब्दे पूर्वपदे सति धातोरुत्तरे क्त्वार्थे णमुः स्यात्, तस्य स्वाद्वर्थशब्दस्य अमो महाहरश्च न स्यात् : आभीक्ष्ण्य इति तु निवृत्तम् । स्वादुङ्कारमिति—स्वादुं-कृ+णमुः, णित्त्वाद् वृष्णीन्द्रः । स्वाद्वर्थ शब्दस्येह सप्तम्यन्तत्वेन पूर्वपदत्वात्—पूर्वपदन्त्वमन्तेनैवाव्ययकृदन्तेनेति णमुप्रत्ययेन समासः, तत्र चान्तरङ्ग-स्वादे महाहर इत्ययो महाहरः प्राप्त इति स निषिद्धोऽनेन । अर्थ शब्दनिवेशनादन्ययोगेऽपि णमु र्भवतीत्याह—एवं मिष्टङ्कारमित्यादि । अत्र मुख्यक्रियोत्तरप्रत्ययेन हि कर्त्ताभिधीयते, णमुस्तु भावे इति विज्ञेयम् । त्रिविक्रमो नेष्यत इति—णमु विधाने पूर्वपदस्येति शेषः । एतदुक्तिस्तु पूर्वपदस्य अमो महाहरमेव ज्ञापयति, अमन्ते तयैव समासस्येष्टत्वात् । स्वादू-कृत्येति—अस्वादुं स्वादुं कृत्वेत्यर्थे अभूत तद्भावे कृभ्वस्तियोगे विः, वेर्हरः, अद्वयस्य वावीरामः, अन्यस्य त्रिविक्रम इत्युरामस्य त्रिविक्रमः । व्यन्तस्य क्त्वान्तेन समासे क्त्वोयप्, किन्तु अमन्तत्वाभावान्न णमुः ।

"धातोःकृद्बहुलमि"त्युक्तत्वाद् णमुविषये क्त्वा च भवेत् । वस्तुत एक कर्त्तृकयोः पूर्वकालस्थधातोरुत्तरे क्त्वा प्रत्ययस्येव णमोरपि विषयत्वात् वक्ष्यमाण "वाऽसरूप" विधिना हि णमोः स्थाने क्त्वा सिध्यति, तथापि बाहुल्यादिति हेतुस्तु छात्राणां बुद्धि वैचित्र्यर्थं ज्ञेयम् । समासस्तु न भवतीत्याह—उत्सर्गसिद्धत्वादिति । धातुसामान्यात् क्त्वा विहित इति तस्योत्सर्गत्वम्, णमुस्तु धातु विशेषेभ्य इति विशेषत्वमेवास्येति भावः ।

---

अमो महाहरश्च न भवति, स्त्री चेत् पुम्वच्च भवति । अस्वाद्वीं स्वाद्वीमिति उरामान्त गुणवचनात् खरु-सत्सङ्गोद्धववर्जाद्वेति ईप् । स्वादुङ्कारमिति पूर्वपदमित्यादिना समासः ॥ १०१ ॥

बाल०—अग्रे । अग्रे पूर्वं प्रथमं पूर्वं सु पूर्वपदेषु सत्सु धातोरुत्तरे क्त्वार्थे क्त्वाणमू भवतः । अग्रे नत्वेति अग्रे नाममिति चासमस्तं । एवं पूर्वं प्रथममिति । तदुदाहरणं यथा पूर्वं नत्वा पूर्वं नामं वा व्रजति प्रथमं नत्वा प्रथमं नामं वा व्रजतीति पूर्वं नत्वेत्यादिकञ्चा-समस्तं । सर्वत्र समासाभावं नियमबलेन साधयति अत्रेति । अग्रे इति सप्तम्यन्तं अतः

**१०३. अभूततद्भावे पुम्वच्च ।**

अस्वाद्वीं स्वाद्वीं कृत्वा भुङ्क्ते स्वादुङ्कारम् ।

**१०४. अग्रे प्रथमं पूर्वंसु क्त्वा-णमू ।**

कृष्णमग्रे नत्वा अग्रेनामं वा व्रजति । एवं प्रथमं पूर्वम् । अत्रअगेनत्वेत्यत्र पूर्वपदन्त्वमन्तेनैवेति नियमान्ने समासः । प्रथममित्यादि शब्दौ मान्ताव्ययरूपौ । *

---

**अमृता०**—१०३. अभूतेति । अमन्तस्वाद्वर्थे शब्दे पूर्ववद्दे अभूततद्भावे अर्थे क्त्वा स्थाने णमुः स्यात्, अमो महाहरश्च न, लक्ष्मी चेत् पुम्वच्च भवति । स्वाद्वीमिति—स्वादु शब्दात् उरामान्तगुणवचनादित्यादिना विकल्पेन ईप् प्रत्ययः । णमौ पुम्वद् भावे च पुनः स्वादुशब्दोऽमन्तः प्रत्यावृत्तः समासश्च ।

**अमृता०**—१०४. अग्रइति । अग्रे प्रथमं पूर्वं शब्देषु पूर्वपदेषु धातोरुत्तरे क्त्वा-णमू प्रत्ययौ भवतः । नाममिति णमप्रह्लत्वे । एवं कृष्णं प्रथमं नत्वा प्रथमं नामं वा, पूर्वं नत्वा पूर्वं नामं वा व्रजति । णमो भवि विधानात् कृष्णमिति पश्चात् प्रयुक्तकर्म अनुक्तम् । इह समासाभावे हेतुमाह—पूर्वपदन्त्वमन्तेनैवेति नियमादिति । तत्र एवकारसामर्थ्यात् केवल-ममन्तेनाव्ययकृता सह विहितं यत् पूर्वपदं तस्यैव समास इष्ट इति तत्र प्रपञ्चितमेव । इहतु अग्रेप्रभृति पूर्वपदानि क्त्वाप्रत्ययेन च तु सह तुल्यविहितानि,अर्थादग्रे प्रभृतीनि न केवलमत्र णमोः पूर्वपदानि, अपि तु क्त्व प्रत्ययस्य चेति न समास इति तात्पर्यम् । अग्रे इति सप्तमी प्रतिरूपकमव्ययम् । प्रथमं पूर्वमिति द्वयोरमन्ततया प्रतीतौ तन्निराकरोति—मान्ताव्ययरूपाविति । स्वरूपत एतौ मान्तौ, अव्ययशब्दौ च, न किन्तु कृदव्ययरूपा विति भावः ।

---

असमन्तत्वाभावान्न समासः । प्रथममित्यादिशब्दावित्यत्र पूर्वमित्यादिशब्दाविति ज्ञेयं । पूर्वमित्यस्य प्रथमोक्तत्वात् । अमो महाहर इति अव्ययात् स्वादेर्महाहरः इति अव्ययात् स्वादेर्महाहर इत्यनेनेति शेषः । इति नामान्ताविति तस्मादमन्तत्वाभावादत्रापि न समास इति भावः ॥ १०२ ॥

**बाल०**—कर्मणि । कर्मणि पूर्वपदे सति आक्रोशे गम्यमाने डु कृञ उतरे खमुण् भवति । ख ड णा इत इति अम् शेष इति शेषः ॥ १०३ ॥

---

* वङ्गमुद्रित ग्रन्थे तु कृत्समासविधानसूत्रम्—"पूर्वपदन्त्वमन्तमेवाव्ययकृदन्तेन" इत्थमपपठितम् । तस्य च सङ्गतये तदेवात्र पुनरुल्लिख्य—"प्रथममित्यादिशब्दौमान्ताव्ययरूपत्वादमो महाहर इति नामन्तौ" इत्येवं केनचित् प्रक्षिप्तम् । प्राचीनहस्तलिखितग्रन्थाद् यः पाठो मयोपनिबद्धः सएव सर्वव्याकरणानुरूपः सुसङ्गतश्च । मुद्रितपाठ स्वीकारे तु—चक्रेन हन्ति, शय्याया उत्थाय, पार्श्वयो-रूपपीड्यइत्यादिषु तृतीया पञ्चमी सप्तम्यन्त पूर्वपदानाममन्तत्वाभावात् समासाभावः प्रसज्यत इति

**१०५. कर्मणि डुकृञः खमुण्णाक्रोशे ।**

**खउणा इतः, अम्शेषः ।**

**१०६. सर्वेश्वरान्तपूर्वपदस्यानव्ययस्य मुम् वामनश्च खिति ।**

**उमावितौ, मरामशेषः । उपेन्द्रोर्य्यादीत्यादिना समासः । अवैष्णवङ्कारमाक्रोशति, अवैष्णवोऽसीत्युक्त्वाक्रोशतीत्यर्थः । करोतिरिहोच्चारणे ।**

**१०७. णमुः ।**

**विभुरयम् ।**

---

**अमृता०—१०५.** कर्मणीतीति । कर्मणि पूर्वपदे सति आक्रोशे गम्यमाने कृञधातोः खमुण् प्रत्ययः स्यात् । खित्करणमुत्तरार्थम् ।

**अमृता०—१०६.** सर्वेश्वरेति । खिति प्रत्यये परे अव्ययवर्जितस्य सर्वेश्वरान्तपूर्वपदस्यमुमागमः स्यात्, त्रिविक्रमस्य वामनश्च स्यात् । समास इति पूर्वपदस्य अव्यमकृता समासः, खमुणः अम्शेषान्मान्तत्वेनाव्ययत्वम्, ततएवामन्ताव्ययत्वेनानेनसह पूर्वपदस्य समासप्राप्तिरिति भावः । अवैष्णवङ्कारमिति—अन्तस्य वृष्णीन्द्रो नृसिंहे । कृधातुरिह कथनार्थः, धातूनामनेकार्थत्वादित्याह—करोतिरिति । वामनोदाहरणन्तु नासिकन्धम इत्यादौ दर्शयिष्यते ।

**अमृता०—१०७.** णमु रित्यधिकार सूत्रम् ।

---

**बाल०—**सर्वे । खिति परेऽनव्ययस्य सर्वेश्वरान्तपूर्वपदस्य मुम् भवति वामनश्च भवति । मुम एकवर्णत्वाभावादन्तेन प्रवर्त्तत इतीह ज्ञेयं किन्तु मित्करणादन्तसर्वेश्वरात् प्रवर्त्तते । उमावितौ इति मरामशेषः । अवैष्णवङ्कारमिति । अन्तस्य वृष्णीन्द्रो नृसिंहे इति वृष्णीन्द्रः । अवैष्णवोऽसीत्युक्त्वेति फलितार्थकथनं अवैष्णवमुक्त्वेति अक्षरार्थः । ननु अवैष्णवङ्कारमित्यस्य अवैष्णवोऽसीत्युक्त्वत्यर्थः कथं भवत्विति चेत्तत्राह करोतिरिति । वामनोदाहरणमग्रे वक्ष्यते ॥ १०४ ॥

**बाल०—**णमु । सुगमं ॥ १०५ ॥

**बाल०—**अन्य । अन्यथैवं कथमित्थं सु पूर्वपदेषु सत्सु तत्तन्मात्रार्थे वर्त्तमानात् डु कृञ उत्तरे णमुर्भवति । तत्तन्मात्रार्थ इति अन्यथादीनामेवार्थ इत्यर्थः । एतेन कृञो गतार्थत्वमुक्तं । एवं एवङ्कारमित्यादीत्येव पाठः । विधिमिति विधिशास्त्रोक्तक्रमं । अत्र कृञोऽर्थो वर्त्तते अतो णमु न भवति ॥ १०६ ॥

**बाल०—**यथा । असूयया प्रतिवचनं असूयाप्रतिवचनं तस्मिन् गम्यमाने यथातथयोः

---

बहुहस्तेभ्यः स्खलित एव प्रकृत पाठ इति विवेच्यम् । आलोडितसर्वव्याकरणस्य धुरन्धर पण्डितस्य ग्रन्थकर्त्तुस्तु एतादृश्यनवधानता अज्ञता वा न जातु सम्भावनीयाल्पबुतिभिरित्यलम् ।

**१०८. अन्यथैवं कथमित्थं सु डुकृञस्तत्तन्मात्रार्थे ।**

हरिमन्यथाकारमर्चयति, अन्यथार्चयतीत्यर्थः । एवङ्कारमित्यादि । कृञोऽर्थे तु—विधिमन्यथा कृत्वा हरिमर्चयति ।

**१०९. यथातथयो जुकृञोऽसूया प्रतिवचने ।**

यथाकारं तथाकारमर्चयतु किं तवानेन ? तत्तन्मात्रार्थ एव । विधिं यथा कृत्वाऽयमर्चयतु किं तवानेन ?

---

**अमृता०**—१०८. अन्यथेति । अन्यथादि चतुर्षु पूर्वपदेषु तत्तन्मात्रार्थेवर्त्तमानाद् डुकृञउत्तरे णमुः स्यात् । अन्यथादि चतुष्टयमव्ययम् । तत्तन्मात्रार्थे इति—अन्यथादीनामेवार्थे, मात्रशब्देन कृञः स्वीयार्थो निराक्रियते । एवं कथङ्कारं इत्थंकारं एवङ्कारमर्च्चयति । कृञः स्वार्थं तु णमुर्नेति प्रत्युदाहरति—विधिमिति । क्त्वा प्रत्ययस्याव्ययकृदन्तत्वेऽपि अमन्तत्वाभावान्न समासः ।

**अमृता०**—१०९. यथेति । असूयया प्रतिवचने प्रत्युत्तरे गम्यमाने यथा तथा शब्दयोः पूर्वपदयोस्तत्तन्मात्रार्थे डुकृञो णमु र्भवति । प्रष्टुमनर्होऽपि केनचित् पृष्टः, तत्र कश्चित् प्रतिवक्ति—यथाकारमित्यादि । प्रश्नानुरूपा ह्यसूया गम्यते प्रतिवचने । यथाकारमर्च्चयत्वित्यादौ यथाच्चर्चयत्वित्यादिरर्थोः । विधिमिति—अत्र कृञः स्वार्थत्वान्नणमुः । असूया प्रतिवचन इति किम्—यथा कृत्वा कृष्णमयमर्च्चयति तथा द्रक्ष्यसि, नेह णमुः ।

---

पूर्वपदयोः सतोर्डुकृञ उत्तरे णमुर्भवति । प्रतिवचनं प्रत्युत्तरं । अयं कथमर्चयति इति केनापि कश्चिद्दृष्टः सन् असूयया प्रतिवक्ति । यथाकारमिति । यथाकारं तथाकारमर्चयत्विति यथा तथा अर्चयत्वित्यर्थः । विधिमिति अत्र कृञोऽर्थो विद्यते, अतो न णमुः । असूयाप्रतिवचन इति किं । कथमयं भुङ्क्ते इति प्रश्ने प्रतिवक्ति यथा कृत्वा भोक्ष्यते तथा द्रक्ष्यसीति स्वरूपाख्यानमेतत् ॥ १०७ ॥

**बाल०**—कर्मणि । सुगमं ॥ १०८ ॥

**बाल०**—दृशि । साकल्येऽर्थे गम्यमाने कर्मणि पूर्वपदे सति दृशिविदिभ्यामुत्तरे णमुर्भवति । वैष्णवदर्शमिति पूर्वपदन्त्वमन्तमित्यादिना समासः । नन्वर्थकथने यावतो वैष्णवानित्यादिना शसन्तनिर्देशात् पूर्वपदन्त्वमन्तमित्यनेन कथं समास इति चेत् केनाप्युच्यते तदैवं समाधेयं । वैष्णवमित्यादौ वैष्णवपदस्य जातिपुरस्कारेणैकवचनत्वं तस्मादेकत्वेऽपि बहुबोधकत्वात् अर्थदर्शनाय शसन्तस्यादोषः समासस्याप्यविरोधः । अथवा तत्र अमन्तपदं कर्मोपलक्षणं । अत्र कर्मणीत्यधिकारात् अर्थकथने बहुवचनान्तदर्शनाच्च नहि कर्मणीत्युक्ते केवलामन्तं प्राप्नोतीति सर्वं समञ्जसमिति । अमन्तमित्युपलक्षणमिति वक्ष्यते च स्वयमेव ग्रन्थकृता । वेत्ति विन्दति विन्ते वेत्यनेन विद ज्ञाने विदलृ लाभे विद विचारे एषाणामेव ग्रहणमिति सूचितं । सामान्यग्रहणेऽपि विद सत्तायामित्यस्य न ग्रहणं तस्याकर्मकत्वेन कर्मोपपदत्वाभावात् अतएव जयादित्येनोक्तं यं यं जानाति लभते विचारयति वा तं तं भोजयतीति । साकल्ये इति किं वैष्णवं दृष्ट्वा भोजयति ॥ १०९ ॥

**११०. कर्मणि ।**

प्रभुरयम् ।

**१११. दृशि विदिभ्यां साकल्ये ।**

वैष्णवदर्शं प्रणमति, वैष्णवेदं भोजयति । यावन्तो वैष्णवान् पश्यति वेत्ति विन्दति विन्ते वा तावत इति सर्वानिवेत्यर्थः ।

**११२. यावति विद्लृ जीवाभ्याम् ।**

यावद्वेदं भुङ्क्ते, तत्र नाग्रहं करोतीत्यर्थः । यावज्जीवं हरिं भजति ।

---

**अमृता०**—११०. कर्मणीति । अधिकारसूत्रम् । कर्मणि पूर्वपदे सति वक्ष्यमाणस्थलेषु णमु प्रत्ययो भवतीत्यर्थः ।

**अमृता०**—१११. दृशीति : कर्मणि पूर्वपदे साकल्ये कृत्स्नतायामर्थे दृशिविदिभ्यामुत्तरे णमुः स्यात् । सकलस्य भावः साकल्यम् । वैष्णवदर्शमिति—पूर्वपदन्त्वमन्तेनैवेति समासः । तेन दृष्टिपतितान् सर्वानित्यर्थः । वैष्णववेदमिति—विशेषाभिधानराहित्यात् यावत् सम्भवं विदो ग्रहणमिति दर्शयति—वेत्तीत्यादिभिः । जानाति लभते विचारयति वेत्यर्थः । सत्तार्थकस्य त्वकर्मकत्वात् कर्माधिकारे तस्य नोपयोग सम्भव इत्यग्रहणम् । साकल्य इतिकिम्—वैष्णवं दृष्ट्वा भोजयति ।

**अमृता०**—११२. यावतीति । यावति कर्मणि पूर्वपदे विदलृजीवाभ्यामुत्तरे णमु र्भवति । यावद्वेदमिति—यत् परिमितं लभते तावदेवभुङ्क्ते, अनासक्त्या हि विषयग्रहणं भक्तानां धर्म इतिभावः । यदृच्छालाभसन्तुष्ट इत्यादि श्रीभगवदुक्तेः । यावज्जीवमिति—जीव प्राणधारणे धातुरकर्मकः, कालाध्वभावदेशानामिति यावच्छब्दस्य कर्मता ।

---

**बाल०**—यावति । कर्मणि यावति पूर्वपदे सति विदलृ लाभे जीव प्राणधारणे इत्येताभ्यामुत्तरे णमुर्भवति । यावज्जीवमिति । अत्र यावच्छब्दस्य कालवाचित्वात् कालाध्वभावदेशानामित्यादिना कर्मत्वं ॥ ११० ॥

**बाल०**—चर्मो । कर्मणोश्चर्मोदरयोः पूर्वपदयोः सतोः पूरेरुत्तरे णमुर्भवति । पूरेरिति प्रेरणण्यन्तात् पूरि आप्यायने इत्यस्मादित्यर्थः । अण्यन्तस्याकर्मकत्वात् । वृष्टि । कर्मणि पूर्वपदे सति ण्यन्तात् पूरेरुत्तरे णमुर्भवति उरामहरश्च वा भवति समुदायेन चेद्वृष्टिप्रमाणमवगम्यते । वस्त्रा । वस्त्रवाचके कर्मणि पूर्वपदे सति क्नोपेरुत्तरे णमुर्भवति समुदायेन चेद्वृष्टिप्रमाणमवगम्यते । क्नोपेरिति ण्यन्तात् क्नुयि शब्दे उन्धे चेत्यस्मादित्यर्थः । चर्मपूरमिति पूरयित्वेत्यर्थः । एवमुदरपूरमिति । गोष्पदप्रमिति गोष्पदं पूरयित्वेत्यर्थः । गोष्पदं गोभिः सेविते गोष्पदप्रमाणे चेति समासादिप्रकरणे वक्ष्यते । वस्त्रक्नोपमिति अर्त्ति ह्री व्ली री क्नुयीत्यादिना पुक् यलोपो गोविन्दश्च वस्त्रं क्नोपयित्वेत्यर्थः । चेलक्नोपमिति । चेलं वस्त्रं । इत इति उपमानपर्यन्तमिति कर्मकर्त्रुपमान इति सूत्रं वक्ष्यते तत्पर्यन्तमित्यर्थः । धातव इति येभ्यो णमुर्विधीयते तत्र वेत्यर्थः ॥१११॥

**११३. चर्मोदरयोः पूरे, वृष्टि प्रमाणे ऊरामहरश्च वा, वस्त्रार्थे क्नोपेः ।**

चर्मपूरं तिलान् ददाति, उदरपूरं वैष्णवान् भोजयति। गोष्पद-प्रं वृष्टो देवः, गोष्पदपूरं वा। वस्त्र क्नोपं चेलक्नोपं वा वृष्टः। इत उपमान पर्यन्तं णम्वन्तधातवोऽनुप्रयुज्यन्ते।

**११४. निमूलसमूलयोः कषः ।**

निमूलकाषं कषति।

---

**अमृता०**—११३. चर्मेति। कर्मणो श्चर्मोदरयोः पूर्वपदयोः पूरयतेरुत्तरे णमुः स्यात् वृष्टि प्रमाणे शब्दे कर्म पूर्वपदयोः पूरयतेरुत्तरे णमुः स्यात्, तत्र पूरेरूराम हरश्च वा स्यात्, तथा वस्त्रार्थशब्दे कर्मपूर्वपदे ण्यन्तात् क्नुयी धातोरुत्तरे णमुर्भवति। चर्मपूरमिति—पूरी आप्यायने, प्रेरण णेर्णमुः, णेर्हरः, चर्मपूरयित्वेत्यर्थः। गोष्पद प्रमिति—गोष्पदशब्द इह वृष्टेः परिमापकः, ऊरामहरपक्षे रूपमिदम्, तदभावे गोष्पदपरमिति। गोष्पदं पूरयित्वा वृष्टः, स्वल्प वृष्ट इतिभावः। गोभिः सेविते गोपदप्रमाणे च गोष्पदमिति सुटा निपातः। वस्त्रक्नोपमिति—क्नुयी शब्दे ण्यन्तः, अर्त्ति ह्रीत्यादिना युक् यलोपो गोविन्दश्च। वस्त्रं क्नोपयित्वेत्यर्थः। यादृशि वर्षणे वस्त्रं क्नोप्यते शब्दाय्यते तादृशं वृष्ट इति भावः। इह तत् काले क्त्वावत् समकाले णमु ज्ञेयः।

इत इति—णम्वन्तधातो रनुप्रयोगाधिकार वाक्यमेतत्।

**अमृता०**—११४. निमूलेति। कर्मणो निर्मूल समूलयोः पर्वपदयोः कष उत्तरे णमुः स्यात्। कष धातुरनुप्रयुज्यते च। निमूलकाषमिति—कष हिंसायाम्, मूल शून्यं यथा स्यात्तथा कषतीति क्रियाविशेषणं कर्म। समूलमितितु साकल्ये अव्ययीभावः, मूलपर्यन्तं हिनस्तीत्यर्थः।

---

**बाल०**—निमू। कर्मणोर्निमूलयोः पूर्वपदयोः सतोः कष उत्तरे णमुर्भवति। तदेवानुप्रयुज्यते। निमूलकाषं कषतीति कष हिंसायां। अत्र कषो गतार्थत्वं ज्ञेयं। ततश्च निमूलं कषतीत्यर्थः। एवं समूलकाषं कषतीति॥ ११२॥

**बाल०**—शुष्क। कर्मसु शुष्कचूर्णरुक्षेषु पूर्वपदेषु सत्सु पिष उत्तरे णमुर्भवतति। पिषो गतार्थत्वं ज्ञेयं। शुष्कपेषं पिनष्टीति पिष्लृ सचूर्णने शुष्कं पिनष्ठीत्यर्थः। इत्यादीत्यादिपदेन चूर्णपेषं पिनष्ठीति। चूर्णपेषं पिनष्ठीति प्रयोग ओदनं पचतीतिवत्॥ ११३॥

**बाल०**—समू। कर्मणि समूले पूर्वपदे सति हन उत्तरे णमुर्भवति। अकृ। कर्मणि अकृते पूर्वपदे सति डु कृञ उत्तरे णमुर्भवति। जीवे। कर्मणि जीवे पूर्वपदे सति ग्रह उत्तरे णमुर्भवति। हन-कृञ-ग्रहां गतार्थत्वं ज्ञेयं। समूलघातमिति हन्तेस्तो नृसिंह इति नस्य तः हन हस्य घो णिण्णयोरिति हस्य घः वृष्णीन्द्रः समूलं निजघानेत्यर्थः। अकृतकारं चकारेति

**११५. शुष्क चूर्ण रुक्षेषु पिषः ।**

शुष्कपेषं पिनष्टीत्यादि ।

**११६. समूलेहनः, अकृते जुकृञः, जीवे ग्रहः ।**

समूलघातं निजघानकंसम् । अकृतकारं चकार । जीवग्राहं जग्राह । पूर्वपदन्त्वमन्तेनैवेत्यादिना समासः । कर्मणीति निवृत्तम् । *

**११७. करणे ।**

प्रभुरयम् ।

---

**अमृता०**—११५. शुष्केति । शुष्कचूर्णरुक्षेषु पूर्वपदेषु सत्सु पिष उत्तरे णमुः स्यात् तदनुप्रयोगश्च भवति । शुष्कपेषमिति—पिषलृसंचूर्णने, शुष्कं पिनष्टीत्यर्थः । एवं चूर्णपेषं रुक्षपेषं पिनष्टीति ।

**अमृता०**—११६. समूल इति । समूलेकर्मपूर्वपदे हन उत्तरे, अकृते कर्मपूर्वपदे डुकृञः उत्तरे तथा जीवे कर्मपूर्वपदे ग्रह उत्तरे णमु र्भवति । समूलघातमिति—हनो हस्य घो णिण्णयोरिति घत्वं, वृष्णीन्द्रः, हन्ते स्तो नृसिंह इति नस्य तः, समूलं निजघानेत्यर्थः । अकृतकारमिति—अकृतं अकार्यं केनापिकर्त्तुमशक्यं चकार कृष्णः । जीवग्राहमिति—जीवं जग्राह, दैत्यानामिति शेषः ।

**अमृता०**—११७. करण इत्यधिकार सूत्रम् ।

---

अकृतं चकारेत्यर्थः । अकृतमिति सर्वैरिति शेषः । जीवग्राहं जग्राहेति जीवं जग्राहेत्यर्थः । समूलघातमिति समूलान्नचबधीदित्यर्थः । अरीन् शत्रून् ।। ११४ ।।

**बाल०**—करणे । सुगमं ।। ११५ ।।

**बाल०**—हनः । करणे पूर्वपदे सति हन उत्तरे णमुर्भवति । हनो गतार्थत्वं ज्ञेयं । चक्रेण हन्तीत्यर्थकथनं चक्रघातं हन्तीत्युदाहरणं । पूर्वपदस्त्वमन्तमेवेति नियम उक्तः अतश्चक्रघातमित्यादौ केवलसूत्रेण समासो भवतीति नावकलितं । अथवा समन्तमित्युपलक्षणमेवेत्युक्तमतस्तेनैव समासो ज्ञेयः । यद्वा, कृद्बाहुल्यात् करणोपपद इति सूत्रकरणाच्च पूर्वपदस्त्वमन्तमिति नियमोऽत्र व्यभिचरति उपेन्द्रार्यादीति सामान्यसूत्रमपि प्रवर्त्तते इति केवलसामान्येन समासः । नन्वत्र कृद्बहुलं कथं सम्भवति सत्यमुच्यते । यथा भाष्यादौ धर्मिणो बहुलत्वाद्धर्मस्यापि बाहुल्यमिति प्रसिद्धं तदिव कृद्बाहुल्यात् कृत्कार्यस्यापि बहुलता अतोऽत्र कृद्बाहुल्येन कृत्कार्यस्य बहुलत्वं स्वीकृतमिति न कश्चिद्विरोध इति । एवमुत्तरत्रापि ज्ञेयं ।। ११६ ।।

---

* अत्रापि केनचित्—"अमन्तमित्युपलक्षणमेव, तेन औशसोरपि ग्रहणम्, समूलघातं न्यवधीदरींश्चेति भट्टिः" इत्यपपाठः प्रक्षिप्तः । पूर्वपदन्त्वमन्तेनैवाव्ययकृदन्तेनेति यथार्थ पाठे न कोऽपि विरोधापत्तिः, अमतेन्नेति अव्यय कृतो विशेषणं, पूर्वपदस्यामन्तत्वेन औ शसन्तत्वे वा न कापि हानि रिति धीः ।

## ११८. हनः ।

चक्रेण हन्ति चक्रघातं हन्ति ।

## ११९. स्नेहद्रव्ये पिषः ।

स्नेहद्रव्यमार्द्रताहेतुः । घृतपेषंपिनष्टि ।

## १२०. हस्तार्थे वर्त्ति ग्रहिभ्याम् ।

हस्तवर्त्तं वर्त्तयति, करग्राहं गृह्णाति ।

---

**अमृता०**—११८. हनइति । करणे पूर्वपदे सति हन उत्तरे णमुः स्यात् । चक्रघातं हन्तीत्येव उदाहरणम्, चक्रेण हन्तीति तु वाक्यमर्थकथनम् । पूर्ववद् हन्ते र्घत्वादयः ।

**अमृता०**—११९. स्नेहेति । स्नेह द्रव्ये करणे पूर्वपदे रिषउत्तरे णमुर्भवति । स्नेह द्रव्यस्य लक्षणमाह—आर्द्रताहेतुरिति । येनापरं द्रव्यमर्द्रं भवति तत् स्नेहद्रव्य मुच्यते, घृत तैलादिकम् । एवं तैलपेषं, उदकपेषं पिनष्टीत्यादि ।

**अमृता०**—१२०. हस्तार्थ इति । हस्तवाचिशब्दे करणपूर्वपदे वर्त्ति-ग्रहिभ्यामुत्तरे णमुः स्यात् । वर्त्तिरिह ण्यन्तः, हस्तेन वर्त्तयतीत्यर्थः । अर्थग्रहणात् करवर्त्तं पाणिग्राह-मित्यादि चोन्नेयम् ।

---

**बाल०**—स्नेह । करणे स्नेहद्रव्ये पूर्वपदे सति पिष उत्तरे णमुर्भवति । पिषो गतार्थत्वं ज्ञेयं । स्नेहद्रव्यलक्षणमाह स्नेहद्रव्यमार्द्रताहेतुरिति । घृतपेषं पिनष्टीति घृतेन पिनष्टीत्यर्थः । आर्द्रताहेतुरित्युक्तमत उदपेषं पिनष्टीत्यपि उदकेन पिनष्टीत्यर्थः । धिपेष-वासवाहनेष्विति उदकस्य उदः ।। ११७ ।।

**बाल०**—हस्ता । करणे हस्तवाचके पूर्वपदे सति वर्त्तिग्रहिभ्यामुत्तरे णमुर्भवति । वर्त्तिग्रह्योर्गतार्थत्व ज्ञेयं । वर्त्तिर्ण्यन्तः । हस्तवर्त्तं वर्त्तयतीति हस्तेन वर्त्तयतीत्यर्थः । करग्राहं गृह्णातीति करणे गृह्णातीत्यर्थः ।। ११८ ।।

**बाल०**—स्वे । करणे स्वे पूर्वपदे सति पुष पुष्टावित्यस्मादुत्तरे णमुर्भति, पुषो गतार्थत्वं ज्ञेयं । स्वेन पुष्णातीत्यर्थकथनं स्वपोषं पुष्णातीत्युदाहरणं । स्वे इत्यनेनेहेति । उदाहरणाति यथा । आत्मपोषं पुष्णाति आत्मीयपोषं पुष्णोति स्वीयपोषं पुष्णाति धनपोषं पुष्णाति गोपोषं पुष्णाति ज्ञातिपोषं पुष्णाति पितृपोषं पुष्णातीत्यादीनि । अर्थास्तु आत्मना पुष्णातीत्यादयः । अयमत्र भावः । भावः स्वशब्दोऽत्र अभिधेयपरः अतः, स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये त्रिस्वोऽस्त्रियां धन इति नानार्थवर्गात् स्वशब्देन ज्ञात्यात्मा-त्मीयधनानि लब्धानि तत्र च ज्ञात्यादीनां स्वरूपाणां पर्यायाणाञ्च ग्रहणमिति ज्ञातिशब्देन पित्रादेरपि ग्रहणं सिद्धं, आत्मीयशब्देन स्वादेरपि ग्रहणं सिद्धं, आत्मीयशब्देन स्वीयादे-रपि ग्रहणं सिद्धं, धनशब्देन गवादेरपि ग्रहणं सिद्धमिति ।। ११९ ।।

**बाल०**—चक्रे । चक्रे बन्ध इति गुप्तौ बन्धातीति च अर्थकथनं । बध्नातीत्यत्र

**१२१. स्वे पुषः ।**

स्वेनपुष्णाति स्वपोषं पुष्णाति । स्वे इत्यनेनेह आत्मात्मीय-धन-गो ज्ञाति पित्रादिष्वप्युदाहार्यम् । करण इति निवृत्तम् ।

**१२२. चक्रे बन्धः ।**

चक्रबन्धं बद्धः । गुप्तौ बध्नाति गुप्तिबन्धं बध्नातीत्यादयस्तु संज्ञायां ज्ञेयाः । इह मयूरिकाबन्धंबद्धः, चाण्डालिकाबन्धं बद्धः, इत्युपमाने कर्मणि णमुरिति भाष्यम् ।

---

**अमृता०**—१२१. स्वइति । स्वशब्दे करणे पूर्वपदे पुष उत्तरे णमु र्भवति । शब्द इह अर्थपरः, तेन तस्य आत्मात्मीय धन ज्ञातिष्वर्थचतुष्टयेष्वपि प्रयोगा उदाहार्या इत्याह—स्वइत्येनेनेति । ततश्च आत्मपोषमात्मीयपोषं धन पोषं ज्ञाति पोषं पुष्णातीति । अथात्मीयार्थे गोपोषमिति तथा ज्ञात्यर्थे पितृपोषं मातृपोषमिति च प्राचीनै रुदाहृतम् । स्वीयपोषं रैपोषमिति च ।

**अमृता०**—१२२. चक्र इति । चक्रशब्दे पूर्वपदे ( अधिकरगे ) बध्नातेरुत्तरे णमुः स्यात् । चक्रे भ्रमौ मण्डले वा बध्नातीति चक्रबन्धं बद्धः । ननु गुप्तिबन्ध प्रभृतयश्च दृश्यन्ते प्रयोक्तुं, कथमिह केवलचक्रशब्दो गृहीत इति चेत्तत्राह—संज्ञायामिति । संज्ञा शब्दास्तु यादृच्छिकव्युत्पन्नाः, अतो नानुशासनमपेक्षन्ते तइति भावः । इह संज्ञाशब्देषु मध्ये मयूरिकाबन्धादि द्वयन्तु उपमाने कर्मणि णम्वन्तमिति भाष्ये प्रोक्तं, तेन मयूरिकामिव बद्ध इत्याद्यर्थो बोध्यः ।

---

शिष्टप्रयोगानुसारेण निपातनात् नरामहरः । किम्वा वधि बन्धने इत्यनेन तुल्यार्थस्य वधधातोर्वानुप्रयोग इति समाधेयं । चक्रबन्धं बद्धः गुप्तिबन्धं बध्नातीत्यादयो नम्वन्तप्रयोगास्तु संज्ञायां ज्ञेयाः, तस्मादेतदर्थं लक्षणकरणमप्रयोजनकमेवेति भावः । इत्यादय इत्यादिपदेन क्रौञ्चबन्धं बद्धः अट्टालिकाबन्धं बद्धः इत्यादिग्रहणं । इहेति उक्तानां मध्ये मयूरिकाबन्धं बद्धः । इत्यादिद्वये उपमाने कर्मणि णमुरिति भाष्यकारमतं भाष्यमते मयूरिकामिव बद्ध इत्याद्यर्थो ज्ञेयः । बद्ध इति कर्त्तरि क्तः ।। १२० ।।

**बाल०**—कर्त्रो । कर्त्रोर्जीवपुरुषयोः पूर्वपदयोः सतोर्नशिवहिभ्यामुत्तरे णमुर्भवति । अत्र क्रमो ज्ञेयः । नशिवह्योर्गतार्थत्वं ज्ञेयं । जीव एव सन्नट इत्यर्थकथनं पुरुषः सन् वहतीत्यर्थकथनं । वहतिरत्र कर्मकरणार्थ इति जुमरमतं ।। १२१ ।।

**बाल०**—ऊद्ध्र्वे । ऊद्ध्र्वे कर्त्तरि पूर्वपदे सति शुषिपूरिभ्यामुत्तरे णमुर्भवति । शुषिपूर्योर्गतार्थत्वं ज्ञेयं । ऊद्ध्र्वः शुष्यतीत्यर्थकथनं । ऊद्ध्र्वं इति ऊद्ध्र्वः सन्नित्यर्थः । ऊद्ध्र्वशोषमिति शुष शोषणे । ऊद्ध्र्वपरं पूर्यत इति ऊद्ध्र्वः सन् पूर्यत इत्यर्थः ।। १२२ ।।

## १२३. कर्त्रो र्जीवपुरुषयो र्नशि-बहिभ्याम् ।

जीव एव सन्नष्टः जीवनाशं नष्टः । पुरुषः सन् बहति पुरुषवाहं बहति । पुरुषः प्रेष्योभूत्वा बहतीत्यर्थ इति जयादित्यः ।

## १२४. ऊर्द्ध कर्त्तरि शुषि पूरिभ्याम् ।

ऊद्ध्वः शुष्यति उद्ध्वं शोषं शुष्यति । एवंमूद्ध्वपूरं पूर्यते । पूरी आप्यायने दिवादावात्मपदी ।

## १२५. कर्मकर्त्रु पमाने ।

रत्नमिव निहितः रत्ननिधायं निहितः कृष्णः । अज इव नष्टः अजनाशं

---

**अमृता०**—१२३. कर्त्रोरिति । जीवपुरुषयोः कर्तृभूतयोः पूर्वपदयो र्यथासंख्यं नशिबहिभ्यामुत्तरे णमु भवति । नष्ट इति—नश अदर्शने कर्त्तरि क्तः, छशोरिति षत्वम्, मसजिनशोरिति नुम्, कंसारि परत्वात् तस्य लोपश्च । प्रेष्यो भूत्वेत्यनेन प्रयोज्य कर्तृत्वमस्य व्यञ्जितम् ।

**अमृता०**—१२४. ऊर्द्धेति । ऊर्द्धे शब्दे कर्त्तरि पूर्वपदे शुषिपूरिभ्यामुत्तरे णमुः स्यात् । ऊर्द्धशोषं शुष्यति तरुरित्यर्थः । ऊर्द्धं पूरं पूर्यते स्वर्ण लतिकेत्यर्थः ।

**अमृता०**—१२५. कर्मेति । उपमीयते येन तदुपमानम्, यत्तुपमीयते तदुपमेयम् । कर्मोपमाने कर्त्रुपमाने च पूर्वपदे सति धातुसामान्यादुत्तरे णमु र्भवति । रत्नमिव निहित निहित इति त्वर्थोक्तिः, रत्ननिधायं निहितम् इत्येवोदाहरणम् । निधायमिति—नि-धाञ्, आतो युक् । रत्नशब्द इह कर्मणः कृष्णस्योपमानम् । निहित इति—नि-धाञ् कर्मणि क्तः, दधाते र्हिः, रक्षित इत्यर्थः । यशोदया इति कर्तृपदमुह्यम् । अजनाशमिति—अज शब्द इह कर्त्तुः कंसस्योपमानम्, नष्ट इति कर्त्तरि क्तः । व्यवधानेऽपीति—णम्वनुप्रयोगयो र्मध्ये

---

**बाल०**—कर्म । उपमीयते येन तदुपमानं कर्मोपमाने कर्त्रुपमाने च पूर्वपदे सति धातोरुत्तरे णमुर्भवति, धातोर्गतार्थत्वं ज्ञेयं । रत्नमिव निहित इत्यर्थकथनं । रत्ननिधायमिति डु धाञ धारणपोषणयोः आतो युगिणि नृसिंहकृति चेति युक् । रत्नशब्दोऽत्र कर्मणः कृष्णस्य उपमानं । अज इव नष्ट इत्यर्थकथनं । अजशब्दोऽत्र कर्त्तुः कंसस्योपमानं । अजश्छागः । व्यवधानेऽपीति दृश्यत इति अनुप्रयोग इति शेषः । घृतनिधायमिति घृतमिव उदकं निदधातीत्यर्थः ॥ १२३ ॥

**बाल०**—इतो । इतः परं विकल्पेन समासो भवति ॥ १२४ ॥

**बाल०**—तृती । तृतीयान्ते पूर्वपदे सति उपदंशेरुत्तरे णमुर्भवति । विकल्पेन समासश्च । द्विती । एकं कर्म यस्य स एककर्मकः द्वितीयधात्वेककर्मकस्तस्माद्धिसार्थाद्धातोरुत्तरे तृतीयान्ते पूर्वपदे सति णमुर्भवति विकल्पेन समासश्च । आमलकोपदंशं भुङ्क्ते इति दन्श दंशने । आमलकी वृक्षविशेषः तस्यां फलमामलकं तस्यात्र करणत्वमेव

नष्टः कंसः । व्यवधानेऽपि दृश्यते—घृतनिधायमुदकं निदधाति । निवृत्तोऽनुप्रयोगः ।

## १२६. इतोविकल्येन समासः ।

विभुरयम् ।

## १२७. तृतीयायामुपदंशे द्वितीयधात्वेककर्मकाच्च हिंसार्थात् ।

---

साकांक्षितपदस्य व्यवधानेऽपीत्यर्थः । घृत विधायमिति—उदकं घृतमिव निदधाति, जल विरलस्थले इति भावः । निवृत्त इति—निमूल समूलयोः कष इत्यारम्भ या धात्वनु प्रयोगस्यानुवृत्ति रासीत् सात्र परिसमाप्तेत्यर्थः । एष्वनुप्रयोगेषु सर्वे णम्वन्त धातवो गतार्था ज्ञेयाः, अनुप्रयुक्तधातुभिरेव मुख्यार्थ बोधनात् ।

**अमृता०**—१२६. इत इत्यधिकार आणमुपरिसमाप्तेः ।

**अमृता०**—१२७. तृतीयायामिति । तृतीयान्तशब्दे पूर्वपदे उपदंशे रुत्तरे णमुः स्यात् तथा द्वितीय धातोः द्वितीयधातुसम्बन्धिनमेकं कर्म यस्य तादृशात् हिंसार्थाद् धातोश्चोत्तरे

---

विवक्षितं । समासाभावपक्षे, आमलकेनोपदंशमिति । भक्तमन्न । दण्डोपघातं गाः कालयतीति हनधातोः कालयतेश्च गाव एव कर्माणि अतो द्वितीयधातुना सह हनधातो-रेककर्मकता । कालधातुश्चुरादिर्विक्षेपार्थ इत्यन्यैरुक्त ग्रन्थकारैश्चुरादौ गणनार्थत्वेन लिखितः । समासाभावपक्षे दण्डनोपघातमिति । दण्डेनोपहत्येति । अत्र हन्तेर्व्याघ्रः कर्म, कालयतेर्गावः कर्माणीति न णमुः किन्तु क्त्वैव ।। १२५ ।।

**बाल०**—सप्त । सप्तम्यन्ते तृतीयान्ते च पूर्वपदे सति उपपूर्वात् पीडअवगाहन इत्यस्मात् रुधिर आवरणे कृष विलखनाकर्षणयोरित्येताभ्याञ्चोत्तरे णमर्भवति विकल्पेन समासश्च । धातु । सन्निधानगतो आयामगतौ च गम्यमानायां सप्तम्यन्ते तृतीयान्ते च पूर्वपदे सति धातुमात्रादुत्तरे णमुर्भति, विकल्पेन समासश्च । सन्निधानं सन्निकर्षः सन्निधिः सन्निकर्षणमित्यमरः । आयामोदैर्घ्यं दैर्घ्यमायाम आरोहमित्यमरः । पार्श्वोपपीडमिति बाहुमूले उभौकक्षौ पार्श्वमस्त्री तयोरध इत्यमरः । रुधधातोर्महाकविप्रोक्तमुदाहरणं दर्शयति, हस्तरोधं दधद्धनुरिति । विशेषानुपादानादिति । रुधिकृषिभ्यामित्येवोक्तमतो विशेषानुपादानं सर्वत्रैवेति । तत्र जयादित्यमते गोस्वामिचरणानां सम्मतिर्नास्तीति पूर्वमेव भट्टिप्रयोगो दर्शितः । पक्ष इति समासाभावपक्ष इत्यर्थः । इत्यादिरिति इत्यादिरसमासो ज्ञेय उत्तरत्र च एवं क्रमेण असमासो ज्ञेय इत्यर्थः । समासो ज्ञेय इति पाठस्त्वसभ्यः । हस्तग्राहं नृत्यति रास इति । अत्र सन्निधानगतिर्गम्यते पक्षे हस्ते हस्तेन वा ग्राहं नृत्यति रास इति । द्व्यङ्गुलोत्कर्षमिति । अत्रायामस्य गतिर्गम्यते । गतिः सञ्चारः । आयामगतौ चेत्यत्र आयामे चेति वा पाठः । दण्डिकामिति लघुदण्डमित्यर्थः । द्वयोरङ्गुल्योः समाहार इति द्व्यङ्गुलं । द्व्यङ्गुलत्र्यङ्गुले साधुनी इति तद्धितप्रकरणे वक्ष्यते । पक्षे, द्व्यङ्गुले द्व्यङ्गुलेन वा उत्कर्षमिति ।। १२६ ।।

आमलकोपदंशं भुङ्क्ते, आमलकेनोपदंशं भुङ्क्ते वा भक्तम्। दण्डोपघातं दण्डेनोपघातं वा गाः कालयति। एक कर्मकादिति किम्—दण्डेनोपहत्य व्याघ्रं गाः कालयति।

## १२८. सप्तमीतृतीययोरुपपीडाद् रुधिकृषिभ्याश्च, धातुमात्रात्तु सन्निधानगतावायामगतौ च।

पार्श्वोपपीडंशेते। हस्तरोधं दधद्धनुरिति भट्टिः। पाणिकर्षं कंसं निन्ये। विशेषानुपादानात् पाण्युपकर्ष मित्यपीति पुरुषोत्तमः। सर्वत्रैवोप-

---

णमु भवति, विकल्पेन समासश्च। आमलकोपदंशमिति—दन्श दंशने, आमलक्या फलमामलकम्। आमलकेनोपदंशमित्यसमासपक्षे। भक्तं भोज्यं वस्तु। अत्रामलकं भोजनं प्रतिकरणम्, उपदंशस्य तु कर्म। तेनोपदंशिना सह शाब्दसम्बन्धविरोधादर्थे सम्बन्धेन हि पूर्वपदत्वमामलकस्य ज्ञेयम्। तस्य तृतीयान्तत्वेऽपि उपदंशिना सह कर्मसम्बन्धस्यानपह्नार्यत्वादेव "करणे" इत्यनुक्त्वा "तृतीयायामि"त्युक्तमिति परामर्शः। दण्डोपघातमिति—उप—हन+णमुः। अत्र द्वितीयधातुः कालयतीति, तदीयं यत् कर्म गोरिति तदेवैकं कर्म हनधातोश्च, अतो द्वितीयधातुना हन्तेरेक कर्मकत्वात्णमुः। कालयतीति—कलविक्षेपे चुरादिः, यस्तु कलगतौ संख्यानेचेति पठ्यते सोऽदन्तः, अत्र तस्य तु नग्रहणम्। प्रत्युदाहरति—दण्डेनोपहत्य व्याघ्रमिति। अत्र हन्ते कर्म व्याघ्रः, गास्तु कालयते रित्यत एक कर्मकत्वविरहान्न णमुः, किन्तु एककर्तृक धातोः पूर्व काले क्त्वा।

**अमृता०**—१२८. सप्तमीति। सप्तम्यन्ते तृतीयान्ते चोपपदे सति उपपूर्वात् पीडते रुत्तरे तथा रुधि कृषिभ्याश्चोत्तरे णमुः स्यात्। सप्तम्यन्ते तृतीयान्ते चोपपदे धातुमात्रादुत्तरे णमुर्भवेद् यदि सन्निधानगतिः आयामगति र्वा गम्यमाना स्यात्। सर्वत्र विभाषया समासश्च। सन्निधिः सन्निधानं निकटम् आयामस्तु दैर्घ्यम्। पार्श्वोपपीडमिति—पार्श्वे पार्श्वेन वोपपीड्येत्यर्थः। हस्तरोधमिति—हस्ताभ्यां हस्तयो वा रुद्धा इत्यर्थः। पाणिकर्षमिति—पाणिना पाणौ वा कर्षित्वेत्यर्थः। अत्रत्रयाणामेव उपेन सह सम्बन्धइत्याहुः केचित्, अपरे तु पीडतेरेव नत्वितराभ्यामिति मतभेदे स्थिते भट्टि प्रयोगएव प्रमाणावतंस इति तन्मतमनुसरतः पुरुषोत्तमस्य युक्तिमङ्गीकरोति–विशेषानुपादानादिति। उपनिपातस्य विशेषेण न ग्रहणात् सामान्यत्वेन उपेन योगे अयोगे वा णमुः स्यात्, तेन तद् योगेऽपि प्रयोज्यमिति भावः। एवं हस्त रोधं हस्तोपरोधं, पाणिकर्षं पाण्युपकर्ष मित्यादौ सिद्धे न

---

**बाल०**—अपा। त्वरायां गम्यमानायां अपादाने कर्मणि च पूर्वपदे सति धातोरुत्तरे णमुर्भवति विकल्पेन समासश्च। शय्योत्थायमिति उदस्थास्तम्भोः सस्य हर इति सस्य हरः। त्वरया मुखप्रक्षालनमपि न करोतीत्यर्थः। पक्षेशय्याया उत्थायमिति। भृङ्गग्राहमिति त्वरया दण्डग्रहणमपि न करोतीत्यर्थः। पक्षे भृङ्गं ग्राहमिति। अत्वरायाञ्चेति अत्वरायाञ्च णमुर्दृश्यते। एकवर्जमिति एकं वर्जयित्वेत्यर्थः॥ १२७॥

पूर्वत्वे सतीति जयादित्यः। पक्षे—पार्श्वे पाश्वन वोपपीडमित्यादि। उत्तरत्र चासमासो ज्ञेयः। एवं हस्तग्राहं नृत्यति रासे। द्व्यङ्गुलोत्कर्षं दण्डिकां छिनति।

## १२९. अपादाने कर्मणि च त्वरायाम्।

शय्योत्थायं गां दोग्धि, शृङ्गग्राहं गां वारयति हरिः। अत्वरायाञ्च दृश्यते,—एकवर्जमिति, धातुविष्णुभक्तिवर्जमिति।

---

कोऽपि विरोध इति ग्रन्थाशयः। तथैव भागवृत्तौ भर्त्तृहरिः। जयादित्यस्तु काशिकाया-मुपशब्दः प्रत्येक मभिसम्बध्नातीत्याह। तदेवोद्दिशति—सर्वत्रैवेति। हरदत्त-माधव-दीक्षिताश्च जयादित्यानुसारिणः।

धातुमात्रादित्युदाहरति—हस्तग्राहमिति। हस्ताभ्यां हस्तयो र्वा गृहीत्वा गोप्यौ रासे नृत्यतीत्यर्थः। असमासे हस्ताभ्यां ग्राहमित्यादि। इह सन्निधानगति गम्यते। द्व्यङ्गुलोत्कर्षमिति—द्वयो रङ्गुल्योः समाहारो द्व्यङ्गुलम्, तेन उत्कर्ष्येत्यर्थः। तस्मिन्नुत्कृष्येति वा। दण्डिका क्षुद्रदण्डः, अल्पार्थे कः। पक्षे दव्यङ्गुलेनोत्कर्षमित्यादि। अत्र आयामोऽर्थः।

**अमृता०—१२९.** अपादान इति। त्वरायां गम्यमानायामपादाने कर्मणि च पूर्वपदे सति धातुमात्रादुत्तरे णमु भवति, विभाषया समासश्च। त्वरा शीघ्रता। शय्योत्थाय-मिति—उदः स्था-स्तम्भोः सस्य हरः, आतो युक्, शय्याया उत्थायेत्यर्थः। एवं खलु त्वरते यदवश्य कर्त्तव्यादिकमपि नापेक्षत इत्यर्थः। शृङ्गग्राहमिति—ग्रह उपादाने, वृष्णीन्द्रः। एवं नाम त्वरते यद् दण्डादि ग्रहणेऽप्यवसरं न प्राप्नोतीत्यर्थः। पक्षे शय्याया उत्थायं, शृङ्ग गाहमिति च। अत्वरायाञ्च दृश्यत इति—तत्तु प्रायः कर्म पूर्वपदे हि प्रयुज्यते। एकवर्ज मित्यादि—एकं वर्जतित्वा, धातुविष्णुभक्ती वर्जयित्येत्यर्थः।

---

**बाल०**—जीव। जीवनाहेतौ परिक्लिश्यमाने च स्वाङ्गे कर्मणि पूर्वपदे सति धातो-रुत्तरे णमुर्भवति, विकल्पेन समासश्च। जीवनाहेताविति जीवनस्य अहेतुरिति विग्रहः। परिक्लिश्यमाने पीड्यमाने। अक्षिनिकोचमिति कुचकौटिल्ये तुदादिः। अक्षि चक्षुः। अक्षि न जीवनस्य हेतुः। पक्षे, अक्षिणी निकोचमिति। उरःपेषं युध्यत इति उरो वक्षः। अत्र उरसः परिक्लिश्यमानत्वं। युध संप्रहारे दिवादिरात्मपदी। उरःशब्दस्य ब्रह्मत्वात् पक्षेऽपि उरः शेषमिति। एवं शिरःपेषं युध्यते इति। शिर उत्क्षिप्येति। शिरसो जीवना-हेतुत्वं परिक्लिश्यमानत्वञ्च नास्तीति न णमुः। शिरो मस्तकं॥ १२८॥

**बाल०**—कर्म। कर्मणि पूर्वपदे सति विश प्रवेशने पतॢ गतौ स्कन्दिर गतिशोषण-योरित्येतेभ्य उत्तरे णमुर्भवति विकल्पेन समासश्च। चेद्यदि द्रव्यस्य व्याप्तिर्भवति यदिच क्रियायाश्च नित्यता भवति। व्याप्तिः साकल्येन सम्बन्धः। गेहप्रवेशमास्त इति अत्र द्रव्यस्य गेहस्य व्याप्तिः प्रतीयते। क्रियाया नित्यतायामुदाहरणान्तरं ज्ञेयं। असमास इति,

## १३०. जीवनाहेतौ परिक्लिश्यमाने च स्वाङ्गकर्मणि ।

अक्षिनिकोचं हसति । उरः पेषं युध्यते । नेह—शिर उत्क्षिप्य पश्यति ।

## १३१. कर्मणि विशिपतिपदिस्कन्दिभ्यो द्रव्यस्य व्याप्तिश्चेत् क्रियायाश्च नित्यया चेत् ।

---

**अमृता०**—१३०. जीवनेति । जीवनस्य अहेतु रनिमित्तं जीवनाहेतुः, तादृशि स्वाङ्गकर्मणि पूर्वपदे, तथा परितः क्लिश्यमाने च स्वाङ्गकर्मणि पूर्वपदे धातोरुत्तरे णमुः स्यात् । अक्षि निकोचमिति—कुच कौटिल्ये, अक्षि संकुच्येत्यर्थः । नहि अक्षि जीवनस्य हेतुः, नन्तष्टेऽपि जीवो जीवतीत्यर्थः । उरः पेषमिति—यथाशक्ति वक्षः पीडयित्वा युध्यत इत्यर्थः । उरसो जीवनहेतुत्वेऽपि सम्यक् क्लेशार्थं पृथक् ग्रहणम् । नेहेति—शिरस्तु जीवनहेतुः, परिक्लिष्टता चेह नास्तीत्युभयथा प्रत्युदाहरणम् ।

**अमृता०**—१३१. कर्मणीति । चेद् यदि द्रव्यस्य व्याप्तिः, क्रियायाश्च नित्यतास्यात् तर्हि कर्मणि पूर्वपदे विशि पति पदि स्कन्दिभ्य उत्तरे णमु भवति, विभाषया समासश्च । तत्र द्रव्याणां विश्यादि क्रियाभिः साकल्येन सम्बन्धो व्याप्तिः, क्रियायास्तु नैरन्तर्यमाभीक्ष्ण्यं वा नित्यता । व्याप्तावुदाहरति—गेह प्रवेशमिति । द्वारकायां हरि युगपद् गेहं गेहं प्रविश्यास्ते इति नारदो ददर्श । असमासपक्षे हि द्विरुक्तिः, आभीक्ष्ण्य-वीप्सयो रिति विधिसामर्थ्यात्, समासपक्षेतु तेन ह्याभीक्ष्ण्यवीप्सयोरुक्तत्वादुक्तानामप्रयोग इत्यतो न द्विरुक्ति रितिभावः । एवं क्रियाया नित्यत्वेऽपि गेह प्रवेशयित्येवोदाहरणम्, असमास पक्षेतु क्रियाया द्विरुक्तिरिति भेदः, गेहं प्रवेशं प्रवेशमास्ते इति ।

ननु यद्याभीक्ष्ण्यमेव क्रियानित्यता तर्हि—क्त्वार्थं णमुश्चाभीक्ष्ण्ये इत्यनेन विहित एव तदर्थं णमुः, किमर्थमिह पुनरुच्यत इति चेत् ? सत्यं, तत्रधातु सामान्यात् केवलाच्च विहितः, इह तु विश्यादि चतुर्भ्य एव, पुनः कर्मपूर्वपदेभ्यश्च एभ्यो विधानमिति विशेषत्व मेवास्य, क्त्वार्थे ह्युभयत्र णमुरित्यत्र न विरोधः। तेनात्र उपपद समासार्थं विशेष-

---

असमासपक्षे द्विरुक्तिर्भवति । आभीक्ष्न्यवीप्सयोरित्यनेनैव द्विरुक्तिर्भवति, किन्तु समासपक्षे न भवतीति व्यञ्जयितुं असमासे द्विरुक्तिरित्युक्तं ।। १२९ ।।

**बाल०**—क्रिया । क्रियाव्यवधानं यत्र तादृशे कालवाचके कर्मणि पूर्वपदे सति असु क्षेपणे त्रि तृषा पिपासायामित्येताभ्यामुत्तरे णमूर्भवति, विकल्पेन समासश्च । द्व्यहात्यासमिति पक्षे द्व्यहमत्यासमिति । द्व्यहतर्षमिति पक्षे द्व्यहंतर्षमिति । द्वयोरह्नोः समाहारमिति द्व्यहः । राजाहसखिभ्य इति केशवारामः ।। १३० ।।

गेह प्रवेशमास्ते। असमासेद्विरुक्तिः—गेहं गेहं प्रवेशमास्ते हरिः। एवं पत्यादयः।

**१३२. क्रिया व्यवधानेकाले कर्मण्यस्यति-तृषिभ्याम्।**

द्व्यहात्यासं भुङ्क्ते, द्व्यह तर्षं पिवति, द्व्यहमतिक्रम्येत्यर्थः।

**१३३. नामशब्दे कर्मण्यादिशि-ग्रहिभ्याम्।**

नामादेशमाचष्टे, नामग्राहं स्तौति हरिम्।

**१३४. उपात् किरतौ सुट् च विक्षिप्य लवणे।**

उपस्कारं लुनाति।

---

विधानमिदमिति सुष्टु वक्तव्यम्। एवं पत्यादय इति—लतानुपातं कुसुमान्यगुह्लादिति भट्टिः। मण्डपानु प्रपादं विद्यते। नद्यवस्कन्दमाचामति। असमासपक्षे—लतां लतामनुपातं, लतामनुपातमनुपातं वेत्यादि ज्ञेयमू।

**अमृता०**—१३२. क्रियेति। क्रियाया व्यवधानं यत्र तादृशि कालवाचिनि शब्दे पूर्वपदे कर्मभूते सति अस्यति-तृषिभ्यामुत्तरे णमु: स्यात्, विकल्पेन समासश्च। द्व्यहात्यासमिति—असु क्षेपणे, अद्यभुक्त्वा द्व्यहमत्यास्य ( अतिक्रम्य ) पुनर्भुङ्क्त इत्यर्थः। पक्षे द्व्यहमत्यासम्। द्वयोरह्नोः समाहारः द्व्यहः समासान्त टप्रत्यय सिद्धः। अत्र अत्यासनेन भुजि क्रिया व्यवधीयते तच्च दिनद्वयात्मक कालं यावदिति द्व्यहस्य कर्मता। द्व्यहतर्षमिति—अद्य पीत्वा द्व्यहं तृषित्वा पुनः पिवतीत्यर्थः। पक्षे द्व्यहं तर्षमिति।

**अमृता०**—१३३. नामेति। नाम शब्दे कर्मणि पूर्वपदे सति आदिशे ग्रहेश्चोत्तरे णमु: स्यात् विकल्पेन समासश्च। नामादेशमिति—आङ् पूर्व दिश अतिसर्जने नामानिगृहीत्वाचष्ट इत्यर्थः। पक्षे नामान्यादेशमिति। नामग्राहमिति—पक्षे नामानिग्राहमिति।

**अमृता०**—१३४. उपादिति। विक्षिप्य छेदन अर्थे गम्यमानेउपादुत्तरस्मात किरतेः णमु: स्यात्, किरतौ परे उपादुत्तरे सुट् चागमः स्यात्। उपस्कारं लुनातीति—कृविक्षेपे विक्षिप्य छिनत्तीत्यर्थः। "उपात् सुट् किरतौ छेदने"—इत्याख्यात सूत्रेण सुट् प्राप्नोति, इह तु विक्षिप्य लवण इति विशेषः, णमु विधानार्थश्चकारः।

---

**बाल०**—नाम। नामशब्दे कर्मणि पूर्वपदे सति आदिशि ग्राहिभ्यामुत्तरे णमुर्भवति बिकल्पेन समासश्च। नामादेश इति दिश अतिसर्जने (दाने)। पक्षे नामान्यादेशमिति। नामग्राहमिति पक्षे नामानि ग्राहमिति ॥ १३१ ॥

**बाल०**—उपात्। विक्षिप्य लवणे गम्यमाने उपादुत्तरस्मात् किरतेरुत्तरे णमुर्भवति। किरतौ परे उपादुत्तरे सुट् च भवति। लवनं छेदनं। उपस्कारं लुनाति इति कृ विक्षेपे विक्षिप्य लुनातीत्यर्थः ॥ १३२ ॥

**बाल०**—क्त्वा णमू। सुगमं ॥ १३३ ॥

**१३५. क्त्वा णमू ।**

**प्रभुरयम् ।**

**१३६. अव्यये करोतेरयुक्ताख्यायाम्, तिर्यचि क्रिया समाप्तौ ।**

**व्रजेश्वर: ! पुत्रस्ते जात इति नीचैः कृत्वाचष्टे, नीचैः कृत्य, नीचैः कारं वा । उच्चैराख्यानमिह युक्तम् ।**

---

**अमृता०**—१३५. क्त्वा णमू इत्यधिकार आप्रकरण परिसमाप्तेः ।

**अमृता०**—१३६. अव्यय इति । अयुक्ताआख्या गम्यते चेत्तर्हि अव्यये पूर्वपदे करोतेरुत्तरे क्त्वा णमू भवतः । तथा क्रिया समाप्तौ गम्यमानायां तिर्य्यक् शब्दे पूर्वपदे करोतेरुत्तरे तौ स्याताम् । उभयत्र विभाषया समासश्च भवति । यद्यपि प्रकरणेऽस्मिन् क्त्वा भवत्येव तथापीह तत् पृथक् कथनं पूर्व पदेन सह समासार्थं ज्ञेयम् । ननु अत्राव्ययस्य क्त्वा प्रत्ययेन सह तुल्यविधानात् 'पूर्वपदन्त्वमन्तेनैवाव्ययकृदन्तेन' इत्येवकारवलतः कथं

---

**बाल०**—अव्य । अयुक्ताख्यायां गम्यमानायां अव्यये पूर्वपदे सति करोतेरुत्तरे क्त्वा-णमू भवतः । क्त्वान्तस्य णम्वन्तस्य च विकल्पेन समासश्च । अयुक्ताख्या अनुचिताख्यानं । तिर्य । क्रियासमाप्तौ गम्यमानायां तिर्यचि पूर्वपदे सति करोतेरुत्तरे क्त्वा-णमू भवतः । क्त्वान्तस्य णम्वन्तस्य च विकल्पेन समासश्च । व्रजेश्वरेति सम्बोधने । व्रजेश्वरो नन्दः । आचष्टे ब्रवीति । क्त्वान्तस्य समासपक्षे नीचैःकृत्वेति । णम्वन्तस्य समासपक्षे असमासपक्षे च नीचैकारमिति । नीचै शब्दोऽव्ययं । युक्तमुचितं आवेदयन्त इति । रामवियोगशोकान्मृतं क्षितिपालं उच्चैःकारमावेदयन्त इत्यन्वयः । क्षितिपालं दशरथं । समासपक्षे असमासपक्षे च उच्चैकारमिति । अत्र क्त्वापक्षौ च ज्ञेयाविति । उच्चैःकृत्य उच्चैः कृत्वेति । उच्चैःशब्दोऽप्य यय । प्रियत्वेऽपीति । उच्चैःशब्दयोगे अप्रियत्वे अयुक्तमाख्यानं विद्यत एव प्रियत्वेऽपि अयुक्तमाख्यानं दृश्यते । कृष्णेति सम्बोधने । काचिद्गोपी । नीचैरिहाख्यानं युक्तं, किन्त्वाख्यानस्य प्रियत्वमस्त्येवेति । प्रक्रियातु चिन्त्येति । प्रक्रियाकार उच्चैःशब्दप्रयोगे प्रियत्वे अयुक्तमाख्यानं न मन्यत इति । तिर्यक्कृत्य गत इति समाप्य गत इत्यर्थः । तिरोऽञ्चतीति तिरःशब्दपूर्वादञ्चतेः क्विप् नरामहरः । सहस्य सध्रिः समः समिस्तिरस्तिरिरचीत्यनेन तिरसस्तिरिः इरामस्य यरामः इति क्विवन्तस्तिर्यक्शब्दः । इत्यादीत्यादिपदेन तिर्यक् कृत्वा तिर्यक्कारमिति । अव्ययस्य तिर्यगित्यस्य प्रयोगोऽयं योगः प्रवर्त्तत इति कैश्चिदुक्तं, किन्तु दिक्शब्दत्वाभावादत्र व्याकरणेऽव्ययत्वं न सिध्यतीति ज्ञेयं ।। १३४ ।।

**बाल०**—तस् । तस्प्रत्ययान्तस्वाङ्गे पूर्वपदे सति कृभूभ्यामुत्तरे क्त्वा णमु भवतः । क्त्वान्तस्य णम्वन्तस्य च विकल्पेन समासश्च । मुखत इति सप्तम्यन्तात् तसिप्रत्ययस्तद्धितः । इत्यादीत्यादिपदेन मखतः कृत्वा मखतःकारं मखतोभूय मखतो भूत्वा मुखतोभावमिति ।। १३५ ।।

आवेदयन्तः क्षितिपालमुच्चैः—
कारं मृतं रामवियोग शोकात्। —इति भट्टिः।

अत्र क्त्वापक्षौ च ज्ञेयौ। नीचैरिहाख्यानं युक्तम्। प्रियत्वेऽप्ययुक्तं दृश्यते। यथा—कृष्णः! काचित् त्वय्यनुरक्तास्ति इत्युच्चैः—कारमाचष्टे, उच्चैः कृत्वा, उच्चैः कृत्य वा। प्रक्रिया तु चिन्त्या। तथा—तिर्यक् कृत्य गत इत्यादि।

## १३७. तस् प्रत्ययान्तस्वाङ्गे कृभूभ्याम्।

---

समासः? पूर्वव्याख्या विरोधएव जात इति चेत्? सत्यमवधीयताम् पूर्वनियमानुसारेण क्त्वा णम्वो रिह समासप्राप्ति र्नास्ति, अथ च दृश्यन्ते प्रयोगाः, ततोऽप्राप्तविभाषेयमिति बोध्यम्।

व्रजेश्वरः श्रीनन्दः। युक्तत्वंकथयति—उच्चैराख्यानमिति। शुभ सन्देशस्य प्रायो व्यक्तमुच्चैः कथनं युक्तम्, अशुभस्य तु नीचै रिति नीति र्हि दृश्यते लोके, तद्वैपरीत्ये त्वयुक्तमित्याशयः। अशुभस्योदाहरणं भट्टि प्रयोगेण दर्शयति—आवेदयन्त इति। क्वचित्तु प्रियमपि रहसि नीचै र्वक्तुमुचित मित्युदाहरति—कृष्णेति। काचित् गोपललना राधेत्यर्थः। प्रियत्वेऽप्यनुरागव्यञ्जक सम्वादस्य गुरुजनकर्णगोचरे त्रपाजनकत्वादिह व्यक्ततयोच्चैः कथनमनर्हमिति भावः। प्रक्रिया तु चिन्त्येति—तत्र 'अव्ययेअयथाभिप्रेताख्याने' इति मुनि सूत्रस्य विवृतौ—"अप्रियस्योच्चैः प्रियस्य नीचैः कथने" इत्येवमुक्तत्वात् दोष आपतेत्। यतः काचित्तय्यनुरक्तास्तीत्युदाहरणे तदुक्ते र्व्यभिचारो नापलपितुं शक्यते, तस्मात् तथाभूतं व्याख्यानं चिन्त्यं न निरवद्यमित्यर्थः। अयुक्ताख्यायामिति किम्—उच्चैः कृत्वाचष्टे पुत्रस्ते जात इति। तिर्यक्कृत्यगत इति—तिर्यक्शब्दः क्विवन्तो वक्ष्यते, स च वक्रार्थः। अग्रे स्थितं पार्श्वतः कृत्वा गत इत्यर्थः। एवं तिर्यक्कारं गतः, तिर्यक् कृत्वा गत इति च। क्रियासमाप्ताविति किम्—तिर्यक् कृत्वा दण्डं गतः।

**अमृता०**—१३७. तसिति। तस्प्रत्ययान्तशब्दे स्वाङ्गभूते पूर्वपदे सति कृभूभ्यामुत्तरे क्त्वा णमू भवतः, उभयो र्विभाषया समासश्च स्यात्। मुखतः कृत्येति—मुखशब्दात् सप्तम्यर्थे तसि स्तद्धितः। इत्यादिपदेन—मुखतः कारं, मुखतः कृत्वा, पृष्ठतोभावं, पृष्ठतो-

---

**बाल०**—नाना नानेत्यव्यये। धार्थप्रत्ययान्ते च पूर्वपदे सति अभूततद्भावेऽर्थे कृभूत्यामुत्तरे क्त्वा-णमू भवतः। क्त्वान्तस्य च णम्वन्तस्य च विकल्पेन समासश्च। इत्यादीत्यादिपदेन नाना कृत्वा नानाकारं नानाभूय नानाभूत्वा नानाभावमिति। द्विधाकृत्वेति क्रियाप्रकारवृत्तेः संख्याया धा इत्यनेन धाप्रत्ययः। आदिपदेन द्विधाकृत्वा द्विधाकारं द्विधाभूय द्विधाभूत्वा द्विधाभावमिति। धार्थप्रत्यय इत्युक्त अत आह। एवं द्वेधा द्वैधमिति। तदुदाहरणं। द्वेधा कृत्वेत्यादि द्वैधं कृत्वेत्यादि। द्विधा त्रिधा स्थाने द्वेधा द्वैधमित्यादिश्चेति तद्धितप्रकरणे वक्ष्यते॥ १३६॥

मुखतः कृत्य गत इत्यादि ।

**१३८. नानेत्यव्यये धार्थप्रत्यये चाभूततद्भावे ।**

अनाना नाना कृत्वेत्यर्थे नानाकृत्यगत इत्यादि । तथा द्विधाकृत्ये त्यादि । एवं द्वेधा द्वैधम् ।

**१३९. तूष्णीमि भुवः ।**

तूष्णीम्भूयास्त इत्यादि ।

**१४०. अन्वच्यानुकूल्ये ।**

---

भूय, पृष्ठतोमूत्वा । स्वाङ्ग इतिकिम्—सर्वतः कृत्वा गतः । तस्ग्रहणं किम्—मुखीभूय गत इति नित्यं समासः ।

**अमृता०**—१३८. नानेति । अभूततद्भावे गम्यमाने नाना इत्यव्यये पूर्वपदे, तथा अभूततद्भावे धार्थप्रत्यये च पूर्वपदे कृ भूभ्यामुत्तरे क्त्व णभूभवतः, विकल्पेन तयोः समासश्च स्यात् । इत्यादिपदेन—नाना कृत्वा नानाकारं गतः, नानाभूय नानाभावं नाना भूत्वागत इति । द्विधा कृत्येति—क्रिया प्रकारवृत्तेः संख्याया धा इति धा प्रत्ययस्तद्धितः । आदि पदेन द्विधाकारं द्विधा कृत्वा, द्विधाभूय द्विधाभावं द्विधाकृत्वा । अर्थग्रहणफलं दर्शयति—द्वेधेति । द्वेधाकृत्य द्वेधाकारं द्वेधा कृत्वा, द्वैधकृत्य द्वैधकृत्वा द्वैधकारमिति ।

**अमृता०**—१३९. तूष्णीमीति । तूष्णीम् शब्दे पूर्वपदे भुव उत्तरे क्त्वा णमू स्याताम्, विभाषया समासश्च स्यात् । एव तूष्णीम्भूत्वा तूष्णीम्भावमिति च ।

**अमृता०**—१४०. अन्वचीति । आनुकूल्ये गम्यमाने अन्वक् शब्दे पूर्वपदे भुव उत्तरे

---

**बाल०**—तूष्णीमि । तूष्णीमि पूर्वपदे सति भुव उत्तरे क्त्वा-णमू भवतः । क्त्वान्तस्य णम्वन्तस्य च विकल्पेन समासश्च । भुव इति कृतं कृञो निवृत्त्यर्थं अन्यथा तस्याप्यनुवृत्तिः स्यात् । अदिपदेन तूष्णीम्भूत्वा तूष्णीम्भावमिति ॥ १३७ ॥

**बाल०**—अन्व । आनुकूल्ये गम्यमाने अन्विति पूर्वपदे सति भुव उत्तरे क्त्वा-णमू भवतः क्त्वान्तस्य णम्वन्तस्य च विकल्पेन समासश्च । अन्वग्भूयेति अनुकूलो भूत्वेत्यर्थः । आदिना अन्वग्भूत्वा अन्वग् भावमिति ॥ १३८ ॥

**बाल०**—तुमू । तत्क्रियार्थत्व इति अर्थशब्दः प्रयोजनवाची धात्वर्थस्य प्रयोजनत्वे सतीत्यर्थः । एतदेवाह यस्माद्धातोरिति । ते हीति । ते हि पाणिनीयाहि वो स्थाने अकमादिशन्ति योः स्थाने अनं आदिशन्ति झस्य स्थाने अन्तमादिशन्ति अतो णक-णवुनोरैक्यं । द्रष्टुमिति । दृशिर प्रेक्षणे सृजिदृशोरम् कपिलवैष्णव इत्यम् ऋरामस्य रः । सेवितुमिति सेवृ सेवने ॥ १३९ ॥

अन्वग्भूयास्त इत्यादि। उक्ता विकल्प समासाः। क्त्वाणम् च निवृत्तौ।

## १४१. तुमु णकौ तत् क्रियार्थत्वे।

क्रिया धात्वर्थः। उणावितौ। यस्माद्धातो स्तुमुणकौ क्रियेते—तस्यैव धातो रर्थो यदि प्रयोजनं तदा तुमु-णकौ भवतः। तुमुन् ण्वुलौ इति

---

क्त्वा णम् स्याताम्, विकल्पेनसमासश्च। अन्वग्भूयेति—अनुकूलो भवेत्यर्थः। एवमन्वग्भूत्वा अन्वग्भावमास्त इति च। विकल्पसमासा उक्ता अर्थात्तदधिकारो निवृत्तः, तथा क्त्वा णम्वो श्चाधिकारो निवृत्तः।

---

**अमृता०**—१४१. तुम्विति। तत्क्रियाया स्तुम्वन्ताया: णकान्तायाश्च क्रियायाः अर्थत्वे प्रयोजनत्वे सति धातुसामान्यादुत्तरे तुमु णकौ प्रत्ययौ भवतः। स्वयमेव सूत्रार्थं विवृणोति—यस्मादित्यादिना। तत्र प्रयोजनं मुख्यक्रियाया एवेति शेषः। तौ च भविष्यति काले प्रयुज्येते। मान्तत्वात् तुमु प्रत्ययोऽव्ययम्, अतो भावे हि विधीयते सः, णकस्तु कर्त्तरीति वेदितव्यम्। पाणिनीया वु स्थाने अक इत्यादित्यादिशन्ति, युस्थाने च अन इति, झस्य स्थाने अन्त इति त्वाख्याते। तिप् तस् फि रिति प्रथममुपदिम्य फेरवयवस्य (झस्य) अन्तादेशं कुर्वन्ति। तेन तन्मतेऽपि तुमुन् ण्वुलोः नणला इतः, वुस्थाने अकादेशेन तुमु अक इत्येव प्रत्यय स्वरूपोऽवशिष्यते। तस्मात् प्रत्ययस्वरूप अविशेष एव। एवं नन्द्या-दिभ्यो ल्युरिति विधाय युस्थाने अन इत्यादिशन्तीति स्वरूपत ऐक्यम्। द्रष्टुमिति—

---

**बाल०**—इच्छा। इच्छार्थे धातौ शक्यादौ धातौ कालादौ शब्दे च योज्ये सति धातोरुत्तरे तुमुरेव भवति। सूत्रे योज्य इत्युक्त्वा तत्फलमाह योज्यग्रहणमिति। योज्य इत्यनुक्ते इच्छार्थादीनां पूर्वपदत्वेनैव योजना स्यात् इदानीन्त्वेतेषां योग एव भवतीति। शकॢ शक्तौ ञि धृषा प्रगल्भ्ये ज्ञा अवबोधने ग्लै हर्षक्षये घट चेष्टायां रभ राभस्ये डु लभ ष प्राप्तौ क्रमु पादविक्षेपे गमॢ गतौ सह मर्षणे अर्ह पूजायां सत्तार्थो भूप्रभृतिः। शकॢ शक्तावित्यस्य तदर्थस्य च ग्रहणमिति तु जुमरमतं। एतेन धृषादीनामपि अर्थग्रहणं ज्ञेयमिति। कालादौ योज्य इति सामान्यत उक्त्वा तत्र विशेषमाह कालादाविति। दर्शनादीति। दर्शनादिश्चासौ धात्वर्थश्चेति विग्रहः। तद्धातोरिति दृश्यादिधातोरित्यर्थः। कालोऽयं द्रष्टुमिति कालस्य प्रयोजनं दर्शनमिति। मन्तुं मन इति मनसः प्रयोजनं ज्ञानमिति। द्रष्टुं चक्षुरिति चक्षुषः प्रयोजनं दर्शनमिति। श्रोतुं श्रवणमिति श्रवणस्य प्रयोजनं श्रवणमिति कर्णेन्द्रियमित्यर्थः। कर्णशब्दग्रहौ श्रोत्रं श्रुतिः स्त्री श्रवणं श्रव इत्यमरः। वक्तुं जड इतिच मशकार्थोऽयं धूम इतिवद्दृश्यते इति। मशकार्थो धुम इत्यत्र यथा मशकस्य प्रयोजनता नास्ति, तथात्र वचनस्य प्रयोजनता नास्तीति। तथाच मशकार्थ इति मशकवारणार्थोऽयं धूम इत्यर्थः। तदिव वक्तुमित्यत्र वचनासमर्थोऽयं जड इत्यर्थः। तथेति। समर्थपर्याये योज्येऽपि तुमुर्भवति। आदिशब्दादेवेति शेषः॥ १४०॥

**बाल०**—कर्म। कर्मणि पूर्वपदे सति तुम्वर्थे अण् भवति। कृष्णसेव इति उपेन्द्रा-

पाणिनीयाः। तेहि वोरकं योरनं झस्यान्तमादिशन्ति। द्रष्टुं सेवितुं हरिं व्रजति, दर्शकः सेवको व्रजति। दर्शनार्थं सेवनार्थमित्यर्थः।

**१४२. इच्छार्थेशक्यादौ कालादौ च योज्ये तुमुरेव।**

**योज्यग्रहणं पूर्वपदत्वनिरासार्थम्। द्रष्टुमिच्छति वष्टि वाञ्छति वा, तथा द्रष्टुं शक्नोति धृष्णोतीत्यादि। शक-धृष-ज्ञा-ग्ला-घट-रभ-लभ-क्रम-सह-अर्ह-सत्तार्थः शक्यादिः।**

**कालादौ तु योज्ये दर्शनादिधात्वर्थो यदि कालादेः प्रयोजनं स्यात्तदा तत्तद्धातो स्तुमु र्मन्तव्यः। कालोऽयं द्रष्टुं, समयो वेला वा। आदि शब्दान्मन्तुंमनः, द्रष्टुं चक्षुः, श्रोतुं श्रवणमित्यादि। वक्तुं जड इति च**

---

दृशिर् प्रेक्षणे, सृजि दृशोरम्। अत्र गमनक्रियायाः प्रयोजनं कृष्णदर्शनम्। सेवितुमिति गमनस्य प्रयोजनं कृष्णसेवनम्। एवं दर्शकः सेवक इत्यत्र च ज्ञेयम्।

**अमृता०**—१४२. इच्छार्थ इति। इच्छार्थे धातौ, शक्यादौ धातौ तथा कालादौ शब्दे च योज्ये धातोरुत्तरे तुमुरेव भवति। एवकारादिह णको व्यावर्त्तितः। सूत्रे योज्य शब्द ग्रहणस्य प्रयोजनमाचष्टे—पूर्वपदत्वनिरासार्थमिति। तेन इच्छार्थधातूनां शक्यादि धातूनाञ्च पूर्वतः परतो वा योगे तुमु विधीयते, एककर्त्तृत्वविषये इति वेदितव्यम्। शक्यादीन् विवृणोति—शक धृषेत्यादिमिरेकादशभिः। तत्रेच्छार्थे योगे द्वितीयार्थे तुमुः पर्यवसीयते शक्यादौ तु चतुर्थ्यर्थे। कालादे र्योगे तत् क्रियार्थत्वे, तदेव स्फुटयति—कालादौत्वित्यादिना। पूर्वपदत्वानिरासेऽपि तुमः अव्ययरूपस्यामन्तत्वाभावात् (उमन्तत्वात्) समासो नैवप्राप्नोति, अमन्तेनैवाव्ययकृदन्तेनेति नियमात्, तदपि अन्य साहचर्यादिव पूर्व पदत्वंनिरासितम्, तच्च मूलधृत योज्य पदेनावगन्तव्यम्।

कालोऽयं द्रष्टुमिति—कालस्य प्रयोजनं दर्शनम्, अस्मिन् काले खलु दर्शनं कर्त्तव्यं, कालान्तरे तद्दर्शनायोगसम्भवादिति भावः। कालादावित्यत्र आदिपदेनान्यांश्च संगृह्णाति—मन्तुं मन इत्यादि। मननमेव मनसः प्रयोजनम्, एवं दर्शनमेव चक्षुषः, श्रवणमाकर्णनेव श्रवणस्य प्रयोजनम्। ननु वक्तुं जड इत्यत्र जडस्य प्रयोजनन्तु वचनं न सम्भवेत्, तत् कथं प्रयुज्यते ? तत्र सङ्गतिं दर्शयति—मशकार्थं इति। अत्र मशकशब्दो मशकाभावे लाक्षणिकः, तेन मशकनिवृत्तये धूम इतिवत् वचनाभावाय जडोऽयमिति च प्रयुज्यते।

---

दित्यादिना समासः। कृष्णं सेवितुमित्यर्थः। कृष्णगाय इति। आतो युगिणि नृसिंहकृति चेति युक् कृष्णं गातुमित्यर्थः। बाहुल्यादिति आदिपदेन कृष्णं गातुमिति॥ १४१॥

**बाल०**—प्रादि। प्रादिव्यवहितेऽपि कृच्छार्थे दुरि पूर्वपदे सति भावकर्मणोर्वाच्ययोर्धातोरुत्तरे खल् भवति। कृच्छ्रं कष्टं। अकृ। प्रादिव्यवहितेऽपि कृच्छार्थदुरि पूर्वपदे सति भावकर्मणोर्वाच्ययोर्धातोरुत्तरे खल् भवति। कृच्छ्रं कष्टं। अकृ। प्रादिव्यव-

मशकार्थोऽयंधूम इतिवद् दृश्यते। तथा समर्थ पर्याये– समर्थो भोक्तुं, पर्याप्तो भोक्तुं, अलं भोक्तुमित्यादि च।

**१४३. कर्मण्यण् तुम्वर्थे।**

कृष्णसेवो याति। कृष्णगायो याति। बाहुल्यात् कृष्णं सेवितुमित्यादि।

**१४४. प्रादिव्यवहितेऽपि कृच्छ्रार्थदुरि स्वल् भावकर्मणोः, अकृच्छ्रार्थे ईषति सौ च।**

**अराम शेषः।**

---

शक्यादिषु शक्नोते स्तदर्थस्य च योगे तुमु रिष्यत इत्याह—समर्थपर्याय इति। समर्थो भोक्तुमिति भोजनाय समर्थ इत्यर्थः। द्रष्टुं धृष्णोति जानाति ग्लायति घटते आरभते लभते प्रक्रमते सहते अर्हतीति। सत्तार्थानाम्—द्रष्टुमस्ति विद्यते भवतीति।

**अमृता०**—१४३. कर्मणीति। कर्मणि पूर्वपदे सति धातोरुत्तरे तुम्वर्थे अण् प्रत्ययः स्यात्। कृष्णसेव इति कृष्णं सेवितुमित्यर्थः। गमनस्य प्रयोजनमिह कृष्णसेवा। एवं कृष्णगाय इति—गै शब्दे, आरामान्त पाठः, आतो युक्। उपेन्द्रोर्य्यादीत्यादिना पूर्वपदस्य कृता (अणा) समासः। कर्मपूर्वत्वे तुमोऽपवादः अण् विहितः, तथापि कृतो बाहुल्यात् तुमुश्च स्यादित्याह—बाहुल्यादिति। समासस्तु न, अनभिधानात्।

**अमृता०**—१४४. प्रादीति। प्राद्युपेन्द्र व्यवहितेऽपि कृच्छ्रार्थे दुरि पूर्वपदे भावकर्मणोर्वाच्ययो र्धातोरुत्तरे खल् प्रत्ययः स्यात्, तथा प्रादि व्यवधानेऽपि अकृच्छ्रार्थे ईषति सौ च पूर्वपदे धातोरुत्तरे खल् भवति,—भावकर्मणोरेव। ख इत् अरामशेषः।

---

हितेऽपि कृच्छ्रार्थे ईषति सौच पूर्वपदे भावकर्मणोर्वाच्ययोर्धातोरुत्तरे खल् भवति। खलावितौ ॥ १४२ ॥

**बाल०**—उपे। खल्घणोः परयोरुपेन्द्रादुत्तरस्य लभेर्नुम् भवति। घण् वक्ष्यते। अन्योपेन्द्ररहिताभ्यां सुदुर्भ्यामुत्तरस्य लभेर्नुम् न भवति। कृच्छ्र इति उदाह्रियते इति शेषः। दुष्प्रलम्भमिति। भावेऽत्र प्रशब्देन व्यवहितत्वं अतो नुमपि। अपिशब्दादव्यवहितत्वेऽपि दुर्लभमिति। अत्र नुमो निषेधः। दुष्प्रलम्भो दुर्लभ इति कर्मणि कृच्छ्रेण लभ्यत इत्यर्थः अकृच्छ्र इति उदाह्रियत इति शेषः। ईषत्प्रलम्भमिति भावेऽत्र प्रशब्देन व्यवहितत्वं। अव्यवहितत्वे ईषलभं इति। एवं सुप्रलम्भं सुलभमिति। नुम्विधानसूत्रे अनव्ययस्येत्युक्तमतोऽत्र न नुम्। ईषत्प्रलम्भ इत्यादि कर्मणि अकृच्छ्रेण लभ्यत इत्यर्थः। भक्तिमता जनेन। अतिसुलम्भः अतिदुर्लम्भ इति। अत्र अन्योपेन्द्रसहितत्वात् न नुम्निषेधः। कथमिति। सिद्धान्तमाह पश्चादिति। सुदुर्लभ इति। अत्र अन्योपेन्द्रसहितत्वाभावान्नुम्निषेध एव॥ १४३ ॥

**बाल०**—मिमी। डु मिञ् प्रक्षेपणे मीङ हिंसायां लीङ श्लेषणे ली श्लेषणे इत्येषां खलनोः परयोरात्वनिषेधः स्यात्। डु मिञ्मीङोर्मिनातिमिनुते मीयते। दीङारामान्तपाठः

**१४५. उपेन्द्राल्लभेर्नुम् खल्-घणो र्न सुदुर्भ्यामन्योपेन्द्र रहिताभ्याम्**

कृच्छ्रे—दुष्प्रलम्भं दुलभं भवता। दुष्प्रलम्भः दुर्लभः कृष्णो भवता। अकृच्छ्रे—ईषत् प्रलम्भं ईषल्लभं सुप्रलम्भं सुलभं भवता। ईषत् प्रलम्भः ईषल्लभः सुप्रलम्भः सुलभः कृष्णो भक्तिमता। अन्योपेन्द्ररहिताभ्यामिति किम्—अतिसुलम्भः अतिदुर्लम्भः। कथमतिसुलभः अतिदुर्लभः ? पश्चादतिना समासः। अन्येति किम्—सुदुर्लभः।

**१४६. मिमीलियां खलचोरात्वनिषेधः।**

दुर्निमय इत्यादि।

---

**अमृता०**—१४५. उपेन्द्रादिति। खल्घनोः प्रत्यययौः परयोः उपेन्दादुत्तरस्य लभेर्नुमागमः स्यात्। अन्योपेन्द्ररहिताभ्यामर्थात् केवलाभ्यां सुदुर्भ्यामुत्तरस्य लभेर्नुम् नस्यात् तयोः परयोः कृच्छ्रं कष्टं, तत्रोदाहरति—दुष्प्रलम्भमिति। अत्र भावे, प्रशब्दव्यवहितेऽपि खल्। खित्त्वेऽपि पूर्वपदस्य अव्ययत्वान्न नुम्। धातोस्तु नुमनेन सूत्रेण। अपि शब्दादव्यवहितेऽपि खल् दुर्लभमिति, केवलदुरुत्तरलभेरिह न नुम्। दुष्प्रलम्भइति—कर्मणि, कृच्छ्रेणलभ्यते कृष्ण इत्यर्थः। अतिसुलम्भ इति—अन्योपेन्द्र सहितत्वान्नुम्। तत्रान्योपेन्द्रेति सुदुर्भ्यामन्योपेन्द्र रहितत्वमेवेष्टं, तयोरन्योऽन्ययोगे तु न नुमिति प्रत्युदाहरति—सुदुर्लभ इति।

**अमृता०**—१४६. मिमीलयामिति। खलि अलि च प्रत्यये परें डुमिञ् प्रक्षेपणे, मीङ् हिंसायां लीङ् ली श्लेषणे इत्येषां चतुर्णां आत्वं नस्यात्। प्रथम द्वयोः—मिनति मिनोति दीङामित्यादिना प्राप्तमात्वं निषिद्धम्, अपरयोः—लियति लिनात्यो वेति विभाषया प्राप्ते निषेधः। घनोऽपवादः अल् वक्ष्यते। दर्निमय इति—मिनातेः मिनोतेश्च

---

इत्यादिना लोङ्लियोलीयतेलिनोत्योर्वेत्यनेन आत्वे प्राप्ते निषेधः। अनो वक्ष्यते। दुर्निमय इति प्रादिव्यवहितेऽपीत्यादिना कर्मणि खल्॥ १४४॥

**बाल०**—दुरा। अभूततद्भावेऽर्थे दुरादौ पूर्वपदे सति कर्तृपूर्वपदाद्भुव उत्तरे कर्मपूर्वपदात् डु कृञ उत्तरे खल् भवति। पूर्ववदित्यनेन कृच्छ्रार्थे दुरि अकृच्छ्रार्थे ईषति सौ चेति भावकर्मणोरिति च लब्धं। कर्तृकर्मणी इति तत्तद्विशेषणे ज्ञेये इति उपचारेणेति भावः। कर्तृपूर्वं भुव इति उदाहरणं दर्श्यते इति शेषः। दुर्भक्तम्भवमिति भावे सर्वेश्वरान्तपूर्वपदस्यानव्ययस्य मुम् वामनश्च खितीत्यनेन मुम्। ईषद्भक्तम्भवं सुभक्तम्भवमिति च भावे पूर्वं कृच्छ्रभक्तस्य भवतः। सम्प्रति अकृच्छ्रेण भक्तिरित्यर्थः। कर्मपूर्वं डु कृञ इति उदाहरणं दर्श्यते इति शेषः। अदुर्भक्तः अकृच्छ्रभक्तः दुर्भक्तः कृच्छ्रभक्तः दुर्भक्तङ्कार इति कर्मणि। ईषद्भक्तङ्कर इति। अनीषद्भक्तः ईषद्भक्तः कृच्छ्रभक्तः ईषद्भक्तः अकृच्छ्रभक्तः। एवं असुभक्तः सुभक्त इति ज्ञेयं॥ १४५॥

**१४७. दुरादौ कर्त्तृ पूर्वपदाद्भुवः, कर्मपूर्वपदाद् डुकृञश्चाभूत-तद्भावे पूर्ववत् खल् ।**

कर्त्तृकर्मणी अत्र तत्तद्विशेषणे ज्ञेये। तत्र कर्त्तृ पूर्वपदाद् भुवः–अदुर्भक्तेन दुर्भक्तेन भूयते इत्यर्थे दुर्भक्तम्भवं भवता। पूर्वमकृच्छ्रं भक्तस्य भवतः, सम्प्रति कृच्छ्रेण भक्तिरित्यर्थः। एवमनीषद् भक्तेन इषद्भक्तेन भूयते–ईषद्भक्तम्भवं सुभक्तम्भवम्। कर्मपूर्वपदात् डु कृञः—अदुर्भक्तो दुर्भक्तः क्रियते—दुर्भक्तङ्करः, एवमीषद्भक्तङ्करः। असुभक्तः सुभक्तः क्रियते—सुभक्तङ्करो वैष्णवो भवता।

**१४८. आरामादनः खलर्थे नतु खल् ।**

दुर्याणं हरिपदं भवता। दीङश्चारामान्त पाठात् दुरुपादानम्।

---

प्रयोगः आदिपदेन दुर्मयः दुर्निलयः दुर्लय इति। एवं सुनिमयः सुमयः ईषन्मयः सुलयः इषल्लय इत्यादि च ज्ञेयम्।

**अमृता०**—१४७. दुरादाविति। अभूत तद्भावे अर्थे दुरादौ शब्दे पूर्वपदे सति कर्त्तृ पूर्वपदाद भुव उत्तरे, कर्म पूर्वपदात् डुकृञ उत्तरे च खल् भवति। पूर्ववदित्यनेन कृच्छ्रार्थे दुरि अकृच्छ्रार्थे ईषति सौ च भाव कर्मणो रिति लभ्यते। कर्त्तृपूर्वपदत्वे भावे कर्म पूर्व पदत्वे कर्मणीति बोध्यम्। कर्त्तृकर्मणी तत्तद्विशेषणे इति—भूकृञो यथा संख्यं कर्त्तृकर्मणी विशेषणे इत्यर्थः। तेन कर्त्तृपूर्वपदं यस्य तादृशद् भुवः खल्, भुवोऽव्यवहित-पूर्वं कर्त्तृपदं स्थातव्ययम्, दुरादयस्तु ततः प्रागिति भावार्थः। एवं कर्म पूर्व पदं यस्य तादृशात् कृञः कृञोऽव्यवहित प्राक् कर्म खल्, खित्तात् सर्वस्वरान्त पूर्वपदस्यानव्ययस्येति मुम्। एवमीषद्भक्तम्भवं सुभक्तम्भवञ्च भावे। दुर्भक्तङ्कर इति कर्मणि, अदुर्भक्तः अकृच्छ्र-भक्तो दुर्भक्तः कृच्छ्रभक्तः क्रियत इत्यर्थः। एव मन्ये च ज्ञेयाः।

**अमृता०**—१४८. आरामादिति। आरामाद्धातोरुत्तरे खलर्थे अर्थात् कृच्छ्राकृच्छ्रार्थे अन प्रत्ययः स्यात्, खल् तु न स्यात्। कृतो बाहुल्यात् खलपि सम्भवेदिति तन्निरासाय खलित्यपवाद वचनम्। दुर्याणमिति–हरिपदं गोलोकादि हरे र्धाम कृच्छ्रेण यायत इत्यर्थः।

---

**बाल०**—आरा। आरामान्ताद्धातोरुत्तरे खलर्थे अनो भवति खल्तु न भवति। कर्मण्यण् तुम्वर्थे इत्यत्र कृष्णं सेवितुमित्यादि चेत्युक्तं। अत्रतु तथा न भवतीति सूचयितुं नतु खलिति कृतं। दुर्याणमिति कृच्छ्रेण यायते इत्यर्थः। हरिपदं गोलोकादि। दुरुपादान-मिति दीङ् क्षये। मीनातीत्यादिना आरामान्तपाठः॥ १४६॥

**बाल०**—अद। दरिद्राभिन्नादारामान्तादिति वाच्यं तस्माद्दरिद्राधातोरुतरे अनोन भवतीत्यर्थः। ईषद्दरिद्रमिति अकृच्छ्रार्थे ईषति सौ चेत्यनेन भावे खल् दरिद्रातेरामहर इत्यादिना आरामहरः॥ १४७॥

**१४९. अदरिद्रातेरिति वाच्यम् ।**

इषद् दरिद्रं भवता । अकृच्छ्रेण भवतो दारिद्यमित्यर्थः ।

**१५०. शासियुधि दृशि धृषि मृषिभ्यश्चानो वा खलर्थे ।**

दुःशासनः दुर्योधन इत्यादि ।

**१५१. विध्याद्यर्थे तव्यानीय यत् क्यप् ण्यत् केलिमा विष्णु कृत्यसंज्ञा भाव-कर्मणोः ।**

---

आरामान्तपाठादिति—मिनाति मिनोति दीङामित्यादिना दीङ् क्षये इत्यस्य आरामान्त-पाठः, दुर् उप आ पूर्वः । अत्र प्रादीनां व्यवधानेऽपि खल् ।

**अमृता०**—१४९. अदरिद्रातेरिति । दरिद्रातः अन्यारामान्तादेव खलर्थे अनः स्यादिति वक्तव्यम् । ततो दरिद्राते स्तु खलेव भवतीत्यर्थः । ईषद्दरिद्रमिति—अकृच्छ्रार्थे ईषति सौ चेति खल्, दरिद्रातेरारामहरः ।

**अमृता०**—१५०. शासीति । शासुप्रभृति पञ्चभ्यः खलर्थे अन प्रत्ययो वा स्यात् । आदिपदेन—दुर्दशनः दुर्धर्षणः दुर्मर्षण इति । एते असान्तोः, खलन्ते तु—दुःशासः दुर्योधः दुर्दर्शः दुर्धर्षः दुर्मर्ष इति । एवं सुशासनः सुयोधन इत्यादि, ईषच्छासन इत्यादि च ज्ञेयम् । तथा भावे च प्रयोगा वेदितव्याः ।

**अमृता०**—१५१. विध्याद्यर्थ इति । भाव-कर्मणो र्वाच्ययोः विध्याद्यर्थेषु तव्यानीयादयः षट् प्रत्यया भवन्ति, ते च विष्णुकृत्यसंज्ञकाः स्युः । आदि शब्देन प्रथमतो विधेः साहचर्येण कथितानां निमन्त्रणामन्त्रणाधीष्टि संप्रश्न प्रार्थनानां ग्रहणम् । तदतिरिक्ता-श्चार्थान् स्वयमेव विवृणोति—प्रैषाति सर्गेत्यादि सूत्रद्वयेन । ते च विष्णुभक्तार्थप्रकरणे

---

**बाल०**—शासि । शासु अनुशिष्टौ युध संप्रहारे दृशिर प्रेक्षणे ञि धृषा प्रागल्भ्ये मृष क्षमायां इत्यतेभ्यश्चोत्तरे खलर्थे अनो वा भवति, पक्षे खल् एव । आदिपदेन दुर्दर्शनः दुर्धर्षणः इति । दुःशासः दुर्योधः दुर्दर्श इत्यादि च ॥ १४८ ॥

**बाल०**—विध्या । भावकर्मणोर्वाच्ययोर्विध्याद्यर्थे तव्यानीयादयो भवन्ति ते विष्णुकृत्यसंज्ञाः । विध्यद्यर्थ इत्युक्त्वा तत् स्पष्टयितुं विष्णुभक्तयर्थप्रकरणोक्तसूत्रद्वयमाह प्रैषातिसर्गेत्यादि अर्हशक्त्योरित्यादीति । प्रैषातिसर्गप्राप्तकालत्वेषु विधातृविष्णुकृत्या-वित्येकं सूत्रं । अर्हशक्त्योर्विधिविष्णुकृत्यतृण इति द्वितीयं । तव्यानीयाविति तत्र तव्यानीयौ दर्श्यते इत्यर्थः । एताविति । एतौ तव्यानीयौ सामान्यौ तस्मात् सर्वधातुभ्य एव भवत इति भावः । एधितव्यमिति । एध वृद्धौ वैष्णवेनेत्यत्र छेदः । भक्तव्य इति भज सेवायां ॥ १३९ ॥

**बाल०**—सर्वे । भावकर्मणोर्वाच्ययोः सर्वेश्वरान्तधातोरुत्तरे यद्भवति । चेयेति चिञ चयने ॥ १५० ॥

कृत्यसंज्ञा इति प्राञ्चः । प्रैषातिसर्गेत्यादि, अर्ह-शक्त्योरित्यादि । तव्यानीयौ । एतौ सामान्यौ । एधितव्यं एधनीयं वैष्णवेन । भक्तव्यो भजनीय स्त्वया कृष्णः ।

## १५२. सर्वेश्वरान्तधातो र्यत् ।

चेया भक्ति स्त्वया हरेः ।

## १५३. वाऽसरूपोऽस्त्रियाम् ।

---

प्रोक्त, अत इह तत् प्रतीक् गृहीतम् । प्रथमे प्रैषः अतिसर्गः प्राप्तकालत्वञ्चेति बिषया स्त्रयः, द्वितीये अर्हः शक्तिश्चेति द्वौ, एतेषु पञ्च विषयेषु तथा पूर्वोक्तषट्सु च तव्यादयो भावे कर्मणि च प्रयुज्यन्ते । विधि विषये तु प्रायो भविष्यत् काले प्रयोग एषामिति च स्मर्त्तव्यम् ।

एतौ सामान्याविति—धातु सामान्यात् ( सर्वस्मात् ) एव एतौ भवत इत्यर्थः । अन्येषां परपरोक्तविशेषसूत्रै विधीयमानत्वात् । एधितव्यमित्यादि—एध वृद्धौ भावे तव्यानीयौ, वैष्णवेन एध्येत एध्यतामित्यर्थः । तस्य एधनं ( उन्नतिः ) उचितम्, तस्य एधनं भूयादिति च तात्पर्यम् । भक्तव्यः भजनीय इति—भज सेवायां कर्मणि तव्यानीयौ ।

अमृता०—१५२. सर्वेश्वरान्तादिति सुगमम् । अत्र सर्वेश्वरान्तेति सामान्येन गृहीतम् विशेषेण तु ऋद्वयविष्णुजनाभ्यांण्यत्, उद्वयाण्यदावश्यके इति सूत्रद्वयेन वक्ष्यते । तस्मात् तदितर सर्वेश्वरान्तादेव धातो र्यत् प्रत्ययः स्यादिति वेदितव्यम् । चेयेति—चिञ् चयने, कर्मणि यत्, धातोरन्तस्य गोविन्दः ।

अमृता०—१५३. वाऽसरूप इति परिभाषा सूत्रम् । समानं रूपं यस्य स सरूपः, न सरूपः असरूपः । सूत्रार्थं स्वयमेव विवृणोति—अस्त्रियामित्यादिना । असरूपस्यार्थः—भिन्नाकारावशेष इति । प्रत्ययानामनुबन्धंहित्वावशिष्टभागश्चेत् अपवादप्रत्ययेन सह भिन्नाकारः सन् तेन बाधितः स्यात् तथापि सामान्योऽपि स वा भवतीत्यर्थः । उतसर्गा-

---

बाल०—वाऽस । असरूप इति । समानं रूपं यस्येति विग्रहे समानस्य सः । असरूप इति न सरूपोऽसरूपः । इत्यस्यार्थमाह भिन्नेति । भिन्नाकारोऽवशेषो यस्येति विग्रहः । उत्सर्गापवादन्यायेनेति । उत्सर्गापवादयोरपवादो बलवानिति न्यायबलवत्त्वेन अपवादस्य बाधकत्वं दुर्बलत्वेन उत्सर्गस्य बाध्यत्वमिति ॥ १५१ ॥

बाल०—क्त । क्तप्रभृतिषु प्रत्ययेषु तु वासरूपो विधिर्न भवतीति वाच्यं । अत इति हेतुर्निर्देशः विधिमूलक एवेति ज्ञेयं । बाध्योऽपि कृद्वास्यादित्युक्तमतः सर्वेश्वरान्त-धातोरुत्तरे यत्प्रत्ययेन बाध्यस्तव्यादयोऽपि भवन्तीति । धातुग्रहणादिति सूत्रे धातुशब्दो-पादानादित्यर्थः । पिपक्षितव्यमिति । सनन्तात् पचधातोस्तव्यः इट् आरामहरो रामधातुक क्षयरामहरः लाक्षणिकसवश्वरान्तत्वात् न यत् ॥ १५२ ॥

अस्त्रियां विहितोऽसरूपो भिन्नाकारावशेषः उत्सर्गापवाद न्यायेन बाध्योऽपि कृद् वा स्यात् ।

## १५४. क्त अन तुमु खलर्थेषु वाऽसरूपविधिर्नेति वाच्यम् ।

पवादयो रपवादः सर्वत्र बलवान्, ततोऽपवाद विषयमुत्सर्गो नाभिनिविशत इत्येवोत्सर्गस्य धर्मः, कृताञ्च केषाञ्चिदुत्सर्गाणामपवादविषयेऽपि प्रवृत्ति रिष्यते, साच वचनमन्तरेण न सिध्यतीति तदर्थं विधानमेतत् । एवञ्च यस्मिन् पक्षे विशेषो बाधको न भवति तस्मिन् विषये प्रतिबन्धाभावात् सामान्यमपि भवतीति निष्कर्षार्थः।

अस्य चानित्यतां व्यनक्ति—

**अमृता०—१५४.** क्त अनेति । क्त तुमुखलर्थाः प्रत्यया उक्ताः, भावे अनो वक्ष्यते, एतेषु तु वाऽसरूपविधि र्न स्यादिति वक्तव्यम्, तत्र तत्र यथाप्राप्तएवप्रत्ययः स्यादित्यर्थः।

परिभाषाफलमाह—अतस्तव्यादयोऽपीति । धातुसामान्याद् विधानेन तव्यानीययोः सामान्यत्वमुक्तं प्राक्, सर्वेश्वरमात्राश्रयत्वेन यत् प्रत्ययस्य विशेषत्वम्, तथापि यत् प्रत्यय विषये तव्यानीयौ वा भवत इत्येव फलम् । अनयो भिन्नाकारावशेषत्वाद् विभाषा प्रवृत्तिः । एवञ्च नन्दयादेरनो वक्ष्यते, विशेषत्वेऽपि तत्र सामान्यावपि णक तृलौ वा भवतः यथा नन्दनः नन्दकः नन्दयितेति । असरूप इति किम् ? ऋद्वयविष्णुजनाभ्यामिति ण्यद् वक्ष्यते, तमपेक्ष्य ( तद्विषये ) सामान्यो यत् प्रत्ययस्तु न स्यात्, किन्तु बलवत्तया ण्यदेव—कार्यमिति । अनयो र्यरामावशेषात् सरूपत्वम् । एवञ्च कर्मण्यनुपेन्द्रादारामात् कः—मुक्तिद इति । तत्र कर्मण्यन् इति सामान्यं न प्रवर्त्तते, तयोःअरामावशेषेण सरूपत्वात् । अस्त्रियामिति किम् ? विष्णुनिष्ठासेट्केत्यादौ प्रत्ययान्ताच्चेति भावे लक्ष्म्यां ङाप् वक्ष्यते, ईहा, चिकीर्षा इत्यादि । तत्र सामान्यः क्ति लक्ष्म्यां भाव इत्यनेन क्ति र्न स्यात् । एवं क्रिया व्यतीहारे णः, व्यबहासीत्यत्रापि क्ति र्न भवेदिति ।

अथ क्त अनतुमु खलर्थेषु विषयेषु वाऽसरूपविधि र्नेष्यते, तत्र तत्र यथानिर्दिष्ट सामान्यविशेषयो स्तत्तत् स्वरूपेण हि प्रवृत्ति र्ज्ञेया । तथाहि—क्तो भावकर्मणोः भावे तु ब्रह्मण्येव, तद् विषये घण् प्रत्ययस्तु न स्यात् किन्तु पुंस्येव । अत एतत् परिभाषा चरितार्थाय हि घण्णल्थुकयः पुंसीति विशेषविधानं स्थापयिष्यते । तत् क्रियार्थत्व तुमु णकौ, तद् विषये इच्छादौ योज्ये तु णको न स्यात्, ततएव एवकारेण तत्र णको व्यावृत्तः । आरामादनः खलर्थे इति खल् विषये अन एव स्यान्नतु खल्, अतएव दाढ्यार्थं तत्र "नतु खल्" इत्युक्तम् । अत्र क्तादयो भावकर्मविहितप्रत्यया हि गृह्यन्ते, तुमु खलर्थयोः साहचर्यात् । तेन कर्त्रादौ विहितस्य क्तस्य नात्र निषेध विषय इत्यवधेयम् ।

---

**बाल०—**प्रति । भूतपूर्वात् प्रतिपदोक्तसर्वेश्वरान्तादुत्तरे पश्चात् प्रत्ययान्तरेण सर्वेश्वरान्तत्वेऽपि यद्भवति । भूतपूर्वादिति समासादिप्रकरणे केवलसमासश्च दृश्यते इत्युक्त्वा भूत. पूर्वं भूतपूर्व इति वक्ष्यते । दित्स्यामिति सनन्ताद्दित्स्यधातोर्यत् । एवं धित्स्यमिति । अत्र प्रतिपदोक्तसर्वेश्वरान्तत्वस्य भूतपूर्वत्वं ।। १५३ ।।

अत स्तव्यादयोऽपि, चेतव्या । धातु ग्रहणात् प्रति पदोक्तस्यैव ग्रहणम् । नेह—पिपक्षितव्यम् ।

**१५५. प्रतिपदोक्त सर्वेश्वरान्तात्तु भूतपूर्वादपि ।**

दित्स्यं धित्स्यम् ।

**१५६. आ ए यति ।**

देयं गेयं । परत्वाद् दरिद्रेयमित्यपीति कालापाः ।

---

किञ्च ताच्छील्याद्यर्थेषु ये कर्त्तरि विशेषा वक्ष्यन्ते—तेष्वपि वाऽसरूपविधि र्नेष्ट इति परिभाषेन्दु शेखरः । अपि च व्यवस्थित विभाषेयमनित्या । तेन क्विप धातुमात्रा दिति सामान्यमपि कर्त्तरि विहितेन केनापि प्रत्यय विशेषण नासौ बाध्यते । एवञ्च अनो भावे इति सामान्चमपि भाव विहितेन केनापि विशेषेण नासौ बाध्यते विभाषा वचनेन वेति विवेच्यम् ।

यत् प्रत्ययविधान सूत्रे धातु ग्रहणस्य फलमाह—प्रतिपदोक्तस्यैवेति । पिपक्षितव्य-मिति सनन्तपचधातो र्लाक्षणिक सर्वेश्वरान्तात् यत् प्रत्ययस्तत्र न भवति किन्तु सामान्य-त्वेन तव्यानीयौ ।

**अमृता०**—१५५. प्रतीति । भूत् पूर्वात्प्रतिपदोक्तसर्वेश्वरान्तादुत्तरे प्रत्ययान्तरेण पुनः सर्वेश्वरान्तत्वेतु यद् भवत्येव । दित्स्यमिति—सन् प्रत्ययेनादिष्टात् दित्सधातो र्यत्, अरामहरो रामधातुके । एवं धितस्यमिति च । अनयोः सन्प्रत्ययात् पूर्व दा धा स्वरूपाभ्यां प्रति पदोक्तसर्वेश्वरान्तत्वात् यत् ।

**अमृता०**—१५६. आ ए इति । यत् प्रत्यये परे आरामस्य स्थाने एरामो भवति । आ इति लुप्त षष्ठीकः एइति लुप्तप्रथमाकः । देयमिति—डु दाञ् दाने, गेयमिति गैशब्दे, उभयत्र भावे यत् । परत्वादिति—आए—यतीति विधानस्य परत्वात् दरिद्रा धातोरुत्तरे इदमपि भवति, अपिकारेण दरिद्रातेरारामहरः सन् युक् टन वर्जित रामधातुके इत्यनेन आरामहरः—दरिद्रयमिति । अत्र किञ्चिदपपठितं भाति, यतः कलापस्यमूलेटीका सु वा कुत्राप्येतत्सिद्धान्तो नोपलभ्यत इत्यनुसन्धेयम् ।

---

**बाल०**—आ ए । आ इति सूत्रबलेन लुप्तषष्ठी । यदि परे आरामस्य स्थाने एरामो भवति । देयमिति डु दाञ दाने सर्वेश्वरान्तधातोर्यदिति यत् । गैशब्दे गेयमिति । परत्वा-दिति दरिद्राधातोरारामहरो भवतीति । दारिद्यमिति सर्वसम्मतं किन्तु परत्वादेरामोऽपि भवतीति कालापानां मतं ।। १५४ ।।

**बाल०**—शका । भावकर्मणोर्वाच्ययोः शकादिभ्यश्चोत्तरे यद्भवति । वक्ष्यमाणेति । ऋद्वयविष्णुजनाभ्यां ण्यदिति वक्ष्यते तदपवादोऽयं योगः । शक्यमिति शकॢ शक्तौ । यज्यमिति यज देवपूजादौ । शस्यमिति शसु हिंसायां । यत्यमिति यती प्रयत्ने । सह्यमिति सह मर्षणे ।। १५५ ।।

## १५७. शकादिभ्यश्च यत् ।

वक्ष्यमाण ण्यदपवादोऽयम् । शक्यं जन्यं शस्यं यत्यं सह्यम् ।

## १५८. हनो यद् वा तस्य बधश्च ।

बध्यं, पक्षे ण्यद् वक्ष्यते ।

## १५९. पवर्गान्ताद् यत् ।

जप्यं कोप्यम् ।

---

अमृता०—१५७. शकादिभ्य इति । भाव-कर्मणो र्वाच्ययोः शकादिभ्यश्चोत्तरे यत् स्यात् । ण्यदपवादोऽयमिति—ऋद्वयविष्णुजनाभ्यामिति यो ण्यद् वक्ष्यते तस्यापवाद एष इत्यर्थः । शक्यमिति—शकॢ शक्तौजन्यमिति जनी जन्मप्रादुर्भावयोः, शस्यमिति शम हिंसायाम्, सह्यमिति सह मर्षणे ।

अमृता०—१५८. इन इति । भावकर्मणो र्वाच्ययो र्हन उत्तरे यत् प्रत्ययो वा स्यात् यत् पक्षे हनो बधादेशश्च भवति ।

अमृता०—१५९. पवर्गान्तादिति स्पष्टम् । अयमपि ण्यदपवादः । जप्यमिति जप मानसे च, कोप्यमिति कुप रोषे, लघूद्धवस्य गोविन्दः ।

---

बाल०—हनो । भावकर्मणोर्वाच्ययोर्हन उत्तरे यद्वा भवति । यत्पक्षे तस्य स्थाने बधश्च ॥ १५६ ॥

बाल०—पव । भावकर्मणोर्वाच्ययोः पवर्गान्ताद्धातोरुत्तरे यद्भवति । अयमपि ण्यदपवादः । जप्यमिति जप मानसे च । कोप्यमिति कुप रोषे ॥ १५७ ॥

बाल०—अङो । यति परे आङ उत्तरस्माल्लभेरुत्तरे नुम् भवति । उपात् । स्तु गतौ गम्यमानायां उपादुत्तरस्माल्लभेरुत्तरे नुम् भवति । आलम्भ्य इति पवर्गान्ताद्यदिति यत् । आङ इति किं लभ्यः । यतीति किं आलब्धव्यः । उपलम्भ्यो हरिरिति स्तुतिरत्र गम्यते स्तुताविति किं । उपलभ्यं पुष्पं ॥ १५८ ॥

बाल०—अनु । व्यक्तार्थमेतत् । उपेन्द्रादिति । उपेन्द्रादुत्तरेभ्य एतेभ्यो यत् न भवतीत्यर्थः । अनुपेन्द्रादित्यत्र अनुपेन्द्रेभ्य इति वा पाठः । गद्यमिति गद व्यक्तायां वाचि । एवं मद्यं चर्यं । यम्यमिति यमधातोः पवर्गान्तत्वेन यति सिद्धे नियमार्थमुपादानं । अनुपेन्द्रादेवेति अतो नियाम्यमित्यत्र ण्यदेव । कथमिति सिद्धान्तमाह चौरादिक-णेरिति । औत्पत्तिकत्वेनेति स्वतःसिद्धत्वेनेत्यर्थः । प्रतिपदोक्तसर्वेश्वरान्तत्वाद्यदिति नत्वनेनेति शेषः । नियम्यमिति घटादित्वाद्धामनः ॥ १५९ ॥

## १६०. आङो लभेर्नुम् यति, उपात् स्तुतौ ।

आलम्भः पशुः, यज्ञे घात्य इत्यर्थः । उपलम्भ्यो हरिः ।

## १६१. अनुपेन्द्रेभ्यो गदमद चर यमेभ्यो यत् ।

गद्यं । कथं नियम्यं ? चौरादिकणेरप्यौत्पत्तिकत्वेन प्रतिपदोक्त सर्वेश्वरान्तत्वाद् यत् ।

---

**अमृता०**—१६०. आङ इति । यत् प्रत्यये परे आङउत्तरस्य लभते र्नुमागमः स्यात्, स्तुतौ गम्यमानायामेव उपात् परतो लभते र्नुम् भवति । आलम्भ्य इति—पवर्गान्तादिति कर्मणि यत् । आङ इति किम्—लभ्यः । स्तुतौ किम्—उपलभ्यं भगवत्तत्त्वम् । उभय योगेऽपि नुम्—उपालम्भ्यो निन्दकः, तिरस्कार्य इत्यर्थः ।

**अमृता**—१६१. अनुपेन्द्रेभ्यइति । उपेन्द्ररहितेभ्यो गदादि चतुर्भ्यो ण्यदपवादो यत् स्यात् । गद्यमिति गद् व्यक्तायां वाचि । एवं मद्यं चर्यं यम्यमिति । यमेस्तु पवर्गान्तत्वेन हि सिद्धे पुनरत्रोपादानं नियमार्थं, तेन सोपेन्द्राद् ण्यदेव । आशङ्का समाधत्ते —चौरादिकणेरिति औत्पत्तिकत्वात् स्वाभाविकत्वादित्यर्थः । तस्मात् सर्वेश्वरान्त धातो र्यदित्यनेन हि यद् विधीयते, नियम्यमिति घटादित्वाद् वामनः । ण्यति कृतेऽपि रूपं तदेव ।

---

**बाल०**—नञ् । गर्ह्ये अर्थे नञ्पूर्वस्य वदधातोरवद्यं । गर्ह्यं निन्द्यं । तस्मादगर्ह्येऽर्थे नञ् पूर्वाद्वदेरुत्तरे यद्भवतीत्यर्थः । एवमन्यत्रापि ज्ञेयं । वृञ् । प्रतिबन्धं विना स्वीकार्यायां वाच्यायां वृङ् सम्भक्तौ वृञवरणे इत्येतयोर्वर्या साधुः । प्रतिबन्धो निवारणादिरूपो विघ्नः पतिम्बरायामित्येके इति । पतिम्बरा स्वयम्बरा । अथ स्वयम्बरा, पतिम्बरा च वर्या चेत्यमरः । क्यप् वक्ष्यत इति एतिस्तुशासुवृञदृजुषः क्यवित्यनेनेति शेषः । वृत्येति वामनात्तुक् पृथाविति तुक् । कन्या प्रतिबन्धं बिना स्वीकार्या न भवतीति न यत् । वार्या ऋत्विज इति । आग्नीध्राद्या धनैर्वार्या ऋत्विजो याचकाश्च ते इत्यमरः । वार्या इति वरणीया इत्यर्थः । तस्मात् लक्ष्म्यामेव यदिति भावः । व्यभिचरति चेति । लक्ष्म्यामेव यद्भवतीति यत् प्रतिपादितं तद्व्यभिचरति च । भट्टिप्रयोगं व्यभिचारस्थं स्थानरूपेण दर्शयति सुग्रीव इति । ऋष्यमूकेऽनवद्योऽस्ति पण्यभ्रातृबधः कपिः । सुग्रीवो नाम वर्योऽसौ भवता चारुविक्रम इति रघुनाथं प्रति जटायुक्तं पद्यं । अन्वयार्थौ यथा । ऋष्यमूके तन्नाम्नि पर्वते सुग्रीवो नाम अनवद्योऽनिन्द्यः कपिरस्ति असौ भवता वर्यं वरणीयः पण्यभ्रातृबध इति चारुविक्रम इति सुग्रीव इत्यस्य विशेषणं पण्यो भ्रातुर्बलिनो बन्धो यस्येति विग्रहः । रामवर्योऽसाविति पाठान्तरे रामेति सम्बोधने । इत्यत्रेत्यत्र छेदः । मुख्येऽपीति । मुख्येऽर्थेऽपि यत् दृश्यते वृष्णिवर्यं इति वृष्णिमुख्य इत्यर्थः ।। १६० ।।

**बाल०**—वह्यं । वहनभ्य करणे वाच्ये वह्यं साधु । वहन्त्यनेनेति वह्यं शकटादि । अन्यत्र वाह्यं वहनीयमित्यर्थः । सुगमत्वादिति । नञ्पूर्ववदेरित्यादौ यथा धातुर्निर्देशः कृतः तथात्र न कृतः । अकरणे हेतुमाह सुगमत्वादिति ।। १६१ ।।

## १६२. नञ्पूर्वस्य वदेरवद्यं गर्ह्ये, वृङ् वृञो र्वर्या प्रतिबन्धं विना स्वीकार्यायाम् ।

पतिम्बरायामित्येके । आवन्तोऽयं यत् प्रत्ययः । प्रतिबन्धेतु वृञ्वरणे क्यप् वक्ष्यते—वृत्या कन्या । लक्ष्मी निर्देशः किम् ? वृङ् संभक्तौ ण्यद् वक्ष्यते—वार्या ऋत्विजः । व्यभिचरति च–सुग्रीवोनाम वर्योऽसौभवता चारु विक्रम इत्यत्र (भट्टि काव्ये ६।५०) । मुख्येऽपि दृश्यते, वृष्णिवर्य इत्यादौ च ।

## १६३. वह्यं वहनस्य करणे ।

सुगमत्वादत्र धातुनिर्देशो न कृतः । एवमुत्तरत्रापि ।

---

**अमृता०**—१६२. नञिति । गर्ह्ये कुत्सायामर्थे नञ्पूर्वस्य वदते अवद्यमिति तथा प्रतिबन्धरहित स्वीकार्यायामर्थे वृङ् वृञोः लक्ष्म्यां वर्या इति यत्प्रत्ययेन निपात्यते । प्रतिबन्धो बिघ्नः । पतिम्बरायामिति—या कन्या स्वयमेव पतिं वृणोति सा स्वयम्वरा पतिम्वरा चोच्यते । स्वयम्बरा पतिम्बरा च वर्या चेत्यमरादेकार्थत्वमेषाम् । यत् प्रत्ययान्त वर्यशब्दादाप लक्ष्म्याम् । वृत्येति—एतिस्तु इत्यादिना क्यप्, वामनात्तुक् । वार्या ऋत्विजइति—ऋद्वय विष्णुजनाभ्यामिति ण्यत्, वृष्णीन्द्रः । आग्नीध्राद्या धनै र्वार्या ऋत्विजो याजकाश्च ते इत्यमरः । व्यभिचरति चेति—अविशेषेण वरण मात्रे अस्त्रियामपि दृश्यते इत्याशयः । सुग्रीव इति–ऋष्यमूकेऽनवद्योऽस्ति पण्यमातृबधः कपिः इति पूर्वार्द्धम् । अस्यार्थश्च—ऋष्यमूकनाम्नि पर्वते सुग्रीव नामा महाविक्रान्तः अनिन्द्यः कपिरस्ति, सपुन र्भ्रातृबध विनिमयेन मित्रताभिलाषी, भवता ( रामेण ) असौ सुग्रीवो वरणीय इति रामं प्रति कबन्धस्योक्तिः । नअवद्यः अनवद्यः अपहंणीय इत्यर्थः । इह वरणसामान्यमर्थः । गर्ह्ये इति किम्—क्यप्–अनुद्यं, अकथ्यमित्यर्थः । मूख्येऽपीति श्रेष्ठार्थेऽपीत्यर्थः ।

**अमृता०**—१६३. वह्यमिति । वहनस्य करणे वाच्ये वह्यमिति यत्प्रत्ययेन साधु स्यात् । वहृत्यनेनेति वह्यं शकटादिकम्, अन्यत्रण्यत् बाह्यं वहिरङ्गमित्यर्थः ।

---

**बाल०**—पण्यं । विक्रेये वाच्ये पण्यं साधु । पण्यमिति पण व्यवहारे स्तुतौ च । विक्रेयं पणितव्यञ्च पण्यमित्यमरः । अन्यत्र पाण्यं स्तोतव्यमित्यर्थः । अर्यः । स्वामिनि वैश्ये च वाच्ये अर्यः साधुः । अर्य इति ऋ गतौ प्रापणे च भ्वादिः । ऋ गतौ ह्वादिर्वा । स्यादर्यः स्वामि- वैश्वयोरिति नानार्थवर्गः अन्यत्र आर्यः सान्दीपनिः । अत्र ण्यदेव । उप । प्राप्तो गर्भावसरो यया तस्यां वाच्यायां उपसर्या साधुः । उपसर्येति सृ गतौ । कन्योपसर्या प्रजने, इत्यमरः । गर्भग्रहणे कन्या प्राप्तकाला गौरुपसर्योच्यते इत्यर्थः । गव्येवेति न नियमः तेन उपसर्या वडवेति । अजर्यः । सङ्गमस्य अक्षयत्वे सति कर्त्तरि वाच्ये अजर्यं साधु । सूत्रे लिङ्गवचनमतन्त्रमित्याह अजर्य इति । अजर्य इति नञ्पूर्वाद् जष धातोर्यत् । सङ्गमाक्षयत्व इति किं । अजरिता कम्बलः ॥ १६२ ॥

**१६४. पण्यं विक्रेये, अर्यः स्वामि-वैश्ययोः, उपसर्या प्राप्तगर्भावसरायाम्; अजर्यः कर्त्तरि सङ्गमाक्षयत्वे ।**

अजर्यः कृष्णसङ्गमः, न जीर्यतीत्यर्थः ।

**१६५. आचर्यमगुरौ ।**

गुरौ तु आचार्यः ।

**१६६. क्रय्यं क्रयार्थप्रसारिते ।**

अन्यत्र क्रेयम् ।

**१६७. क्षय्य जय्यौ शक्यार्थे ।**

अन्यत्र क्षेयजेयौ ।

---

**अमृता०**—१६४. पण्यमिति । विक्रेये विक्रीतव्ये वाच्ये पण्यमिति यत् प्रत्ययेन साधुर्भवति । अन्यत्रपाण्यं स्तोतव्यम् । अर्थ इति—ऋगतौ प्रापणे चेत्यस्य स्वामिनि वैश्ये च वाच्ये अर्थ इति साधुः स्यात् । अन्यत्र अर्यं पूज्य इत्यर्थः । उपसर्येति—प्राप्तो गर्भावसरो यया तस्यां वाच्यायां उपपूर्वस्य सृगतौ इत्यस्य उपसर्या निपात्यते । शब्दोऽयं गवादौ प्रयुज्यते । अजर्य इति—सङ्गमस्याक्षयत्वे सति कर्त्तरि वाचचे जृष वयो हानौ इत्यस्य अजर्य इति निपातः स्यात् । सर्वत्र यत् प्रत्ययेनार्थं बिषये हि निपातो ज्ञेयः । सङ्गमाक्षयत्व इति किम्—अजरिता कम्बलः, अचिर निर्मित इत्यर्थः ।

**अमृता०**—१६५. आचर्य इति स्फुटम् । आचार्यइति ण्यत्, धर्मप्रवर्त्तकइत्यर्थः ।

**अमृता०**—१६६. क्रय्यमिति । जनानां क्रयार्थं प्रसारिते द्रव्ये वाचचे डुक्रीञ् द्रव्य विनिमये इत्यस्य क्रय्यमिति यता निपात्यते । कृतगोविन्दस्य अय् भावो निपातफलम् । क्रेयमित्यपि यत्प्रत्ययान्तम् । क्रये प्रसारितं क्रय्यं क्रेयं क्रेतव्यमात्रक इत्यमरः । अप्रसारितमपि क्रेयत्वेनाभिधीयत इति भावः ।

**अमृता०**—१६७. क्षय्येति । क्षि क्षये, जि जये, अनयोरय्भावः शक्यार्थश्च निपातं फले । क्षेतुं शक्यः क्षय्यः, जेतुं शक्यः जय्य इत्यर्थः । क्षयार्हः जयार्हं इत्यर्थे तु क्षेयः जेय इति ।

---

**बाल०**—आचर्य । अगुरौ वाच्ये आचर्यं साधु । आचर्यमिति चेर गतौ । गुरौ तु आचार्यः इत्यत्र ण्यत् । मन्त्रव्याख्याकृदाचार्य इत्यमरः ॥ १६३ ॥

**बाल०**—क्रय्यं । क्रयार्थं प्रसारिते वस्तुनि वाच्ये क्रय्यं साधु । क्रय्यमिति डु क्रीञ द्रव्यविनिमये निपातात् यत् । एरामस्य अय् च क्रेयमिति अत्र यदेव । क्रये प्रसारितं क्रय्यं क्रेयं क्रेतव्यमात्रके इत्यमरः ॥ १६४-१६५ ॥

**बाल०**—ऋद्वय । भावकर्मणोर्वाच्ययो ऋद्वयान्तात् विष्णुजनान्ताच्च धातोरुत्तरे ण्यद्भवति । कार्यमिति डु कृञ करणे अन्तस्य वृष्णीन्द्रो नृसिंहे इति वृष्णीन्द्रः । वाह्यमिति वह प्रापणे ॥ १६६ ॥

**१६८. ऋहलोर्ण्यत् । ऋद्वयविष्णुजनाभ्यां ण्यत् ।**

कार्यं वाह्यम् । हनो हस्य घः, हन्ते स्तः, घात्यम् ।

**१६९. चजोः कगौ घिण्ण्यतो रज-वज-व्रज-कवर्गादिवर्जम् ।**

पाक्यं रोग्यम् । नेह वाज्यं व्राज्यं गर्ज्यं । अजेर्वीभावात् ण्यति नोदाहरणम् ।

---

अमृता०—१६८. ऋद्वयेति । भाव कर्मणो र्वाच्ययोः ऋद्वयान्तात् विष्णुजनान्ताच्च धातोरुत्तरे ण्यत् प्रत्ययो भवति । ण इत् यतोऽपवादोऽयम् । कार्यमिति डुकृञ् करणे, अन्तस्य वृष्णीन्द्रः । वाह्यमिति वंह प्रापणे ।

अमृता०—१६९. चजोरिति । घिति (घइत् प्रत्यये) ण्यति च परे अन्य चरामस्य करामः, अन्त्य जरामस्य गरामश्चादिश्यते, किन्तु अज गत्यादौ, वजव्रज गतौ इत्येतेषां तथा कवर्गादि धातूनाञ्च घिति ण्यति च परे चजोः कगौ न भवतः । पाक्यमितिडुपच्चष पाके, रोग्यमिति रुजो भङ्गे । गर्ज्यमिति कवर्गादित्वान्न गत्वम्, गर्जशब्दे धातुः । नोदाहरणमिति—नप्रत्युदाहरणमित्यर्थः । घिति घण् शोकः त्यागः इत्यादि । अजे स्तु घणि वीभावस्याभावात् गत्वे प्राप्ते निषेधः, तत्र आज इत्येव रूपम् ।

---

बाल०—चजोः । घिति ण्यति च परे अज गतौ क्षेपणे च वज व्रज गतौ एतान् कवर्गादिञ्च वर्जयित्वा चजोः गतौ भवतः पाक्यमिति डु पच ष पाके । रोग्यमिति रुजो भङ्गे । गर्ज्यमिति गर्ज शब्दे कवर्गादित्वान्न जस्य गः । अजेरिति उदाहरणमिति प्रत्युदाहरणमित्यर्थः । प्रत्युदाहरणमिति वा पाठः ।। १६७ ।।

बाल०—न क । आवश्यकेऽर्थे विहिते ण्यति परे कगौ न भवतः अव । विष्णु-कृत्यान्ते परे अवश्यमो मस्य हरो भवति । तेन । तेन विष्णुकृत्यन्तेन सह अवश्यमः समासो भवति । अवश्यपाच्यमिति । विशेषानुपादानात् ऋद्वयविष्णुजनाभ्यां ण्यदित्यनेन आवश्यकार्थे ण्यत् । संहितायामेवेति । संहितायामेव अवश्यमो मस्य हरो भवति । संहिता समासः । अवश्यमिति । हि यतः अत्र समासाकरणात् न मस्य हरः ।। १६८ ।।

बाल०—मोच्य । मुचलृ मोक्षणे रुच दीप्तौ शुच शोके टु याचृ याच्ञायां यज देवपूजादौ त्यज वयोहानौ वर्ज वर्जने पूजायां इत्येतेषां ण्यता सह मोच्यादिषु चतुर्षु करामाभाव एव निपातफलं । याज्यादिचतुर्षु गरामाभाव एव निपातफलं । प्रयो । शक्यार्थे प्रयोज्य नियोज्यौ निपात्येते । प्रयोज्य इति प्रयोक्तुं शक्य इत्यर्थः । एवं नियोज्य इति । नियोज्यकिङ्करप्रैष्यभुजिष्यपरिचारका इत्यमरः । गरामाभाव एव निपातफलं । वञ्चा । गतावर्थे वञ्चचोऽञ्चचश्च निपात्यते । वञ्चच इति वञ्चु गतौ गम्य इत्यर्थः । करामाभाव एव निपातफलं । एवमञ्चच इति । वाच्यं । अपदसङ्घातेऽर्थे वाच्यं निपात्यते । सङ्घातः समूहः । वाच्यमिति वचपरिभाषणे वक्तव्यमित्यर्थः । करामाभाव एव निपातफलं । भोज्यं । भक्ष्ये वाच्ये भोज्यं निपात्यते गरामाभावो निपातफलं । निपात्यन्त इति

**१७०. न कगावावश्यकार्थे ण्यति, अवश्यमो मस्यहरो विष्णुकृत्ये, तेनतस्य समासः ।**

अवश्य पाच्यम् । संहितायामेव, अवश्यं वक्तव्यमिति भाष्यसंस्कृतम् ।

**१७१. मोच्य रोच्य शोच्य याच्य त्याज्य याज्य वर्ज्यार्च्यपूज्याः साधवः, प्रयोज्य-नियोज्यौ शक्यार्थे, वञ्च्याञ्च्यौ गतौ, वाच्यमपदसंघाते, भोज्यं भोक्ष्ये निपात्यन्ते ।**

---

**अमृता०**—१७० न कगाविति । आवश्यकार्थविहिते ण्यत् प्रत्यये परे चजोः कगौ न स्याताम् । विष्णुकृत्ये परे अवश्यमित्यव्ययस्य मराम हरः स्यात्, तेन विष्णु कृत्यान्तेन अवश्य शब्दस्य समासश्च भवति । कृत् सूत्राद्य सप्तम्यन्तं पूर्वपदमिति नियमेन अवश्यं शब्दस्य पूर्वपदत्वाभावात् समासाप्राप्ते इह तदर्थं वचनम् । उद्वयाण्ण्यदावश्यक इति वक्ष्यते, बाहुल्याद विष्णु कृत्या विहिताः, विधिश्चावश्यकर्त्तव्यत्वं, अतः सर्वत्र खलु विष्णुकृत्ये आवश्यकार्थो द्योत्यत इति सुवचत्वेऽपि स्पष्टतार्थं विधानम् ।

संहितायामेवेति—परसन्निकर्षे समासएव इत्यर्थः । तेन तद्भावे भाष्यधृतं प्रत्युदाहरणमाहरति–अवश्यं वक्तव्यमिति । समासेसति अवश्य वाच्यमित्येवं स्यादित्यर्थः ।

**अमृता०**—१७१. मोच्येति । मुच्लृ प्रभृतीनां मोच्यादयो ण्यत् प्रत्ययान्ताः साधवो भवन्ति । मुच्लृमोक्षणे, रुच दीप्तौ, शुच शोके, टुयाचृ याच्ञायामित्येतेषां करामाभावो निपातफलम् । त्यज त्यागे, यजदेवपूजादिषु, वर्ज वर्जने, पूजपूजायामित्येषां गरामाभावः । अर्च्येति—ऋच स्तुतौ तुदादिः, ऋरामोद्भवात् क्यपि प्राप्ते ण्यद् विधानं कत्वाभावश्च निपातफलम् । अर्च पूजायामित्यस्य ण्यति कत्वाभावो वृष्णीन्द्राभावश्च निपातकार्यम् । प्रयोज्येति—एतौ शक्यार्थे निपात्येते, तेन प्रयोक्तुं शक्य इत्यर्थे प्रयोज्य इति । एवं नियोज्यो भृत्यः, गत्वाभावो निपातात् । वाञ्च्येति—गत्यर्थे वञ्चु अञ्चु इत्यनयो

---

प्रयोज्यादय इति शेषः । अन्यत्रेति अन्यस्मिन्नर्थ इत्यर्थः । प्रयोग्य इत्यादिषु प्रयोग्य-वङ्क्याङ्क्यवाक्यभोग्येषु । यथास्वं यथायोग्यं । तेन चरामस्य कः जरामस्य ग इति । प्रयोग्यनियोग्यौ प्रेरणीयमात्रे । वङ्क्यो वञ्चनीये । अङ्क्यः पूजनीये । वाक्यं पदसमूहे । तिङ् सुरन्तचयो वाक्यमित्यमरः ॥ १६८ ॥

**बाल०**—उद्व । भावकर्मणोर्वाच्ययोः आवश्यकेऽर्थे उद्वयादुत्तरे ण्यद्भवति । पूर्वेणा-प्राप्ते विधानं । (क) अवश्यनाव्या इति नु स्तुतौ अवश्यमो मस्य हरो विष्णुकृत्य इति मस्य हरः । भागवता भक्ताः । अत्र याव्या इत्यपि क्वचिद्दृश्यते तस्मिन् सति मिलनीया इत्यर्थः । अवश्यलाव्या इति लूञ छेदने । आवश्यक इति किं नव्यं लव्यं सर्वेश्वरान्तत्वाद्य-देव । गम्यत्वेऽपीति । आवश्यकार्थस्य गम्यत्वेऽपि ण्यद्भवति । बैष्णवैरिति । अत्रा-वश्यम्भावो गम्यते ॥ १७० ॥

अन्यत्र प्रयोग्य इत्यादिषु यथास्वं कगौ ।

१७२. उद्वयाद् ण्यदावश्यके ।

ओद्वयस्यावावौ प्रत्यये, अवश्यनाव्या भागवताः, अवश्यलाव्या देतेयाः । गम्यत्वेऽपि, वैष्णवैः शुचिभिर्भाव्यम् ।

१७३. यु रपि वपि लपि त्रपि चमिभ्य आसुनोतेश्च ण्यत्, दम्भे र्नस्य च हरः ।

याव्यंराप्यमित्यादि । षुञ् आसाव्यम् । दम्भिश्चौरादिका इति पाणिनीयाः । दम्भु सौवादिका इतिकालापाः । दाभ्यम् ।

---

वञ्च्याञ्च्यौ निपात्येते, करामाभावो निपातकार्यम् । वाच्यमिति—पदसमूहार्थादन्यार्थे वच परिभाषणे धातो र्वाच्यमिति निपात्यते, करामाभावो निपात फलम् । भोज्यमिति—भोक्ष्ये वाच्ये भुज अभ्यवहार पालनयोरित्यस्य भोज्यमिति निपात्यते, गरामाभावो निपातात् । प्रयोग्यमित्यत्रादिपदेन वङ्क्य अङ्क्य वाक्य भोग्या ज्ञेयाः । प्रयोग्य नियोग्यौ प्रेरणीयार्थमात्रे, वङ्क्यो वञ्चनीये, अङ्क्यः पूज्ये, वाक्यं पदसमूहे, भोग्यं वित्तादौ यथायोग्यं कगौ वेदितव्यौ ।

**अमृता०**—१७२. उद्वयादिति । आवश्यकर्थे व्यक्ते द्योत्ये वा उद्वयान्तधातोरुत्तरे ण्यत् स्यात् । पूर्वेणाप्राप्ते विधिरयं यतोऽपवादः । अवश्यनाव्या इति—नुस्तुतौ, भागवता भगवत्परायणाभक्ता इत्यर्थः । लाव्या इति लूञ् छेदने । आवश्यक इति किम्—लव्यं लव्यं, सर्वेश्वरान्ताद् यदेव । गम्यत्वेऽपीति—अवश्यमिति विनापि तदर्थे द्योत्ये च ण्यत् स्यात् । शुचिभिर्भाव्यमिति—वैष्णवैरवश्यं पवित्रै र्भवितव्यमित्यर्थः ।

**अमृता०**—१७३. युरपीति । युप्रभृतिसप्तभ्यश्च भावकर्मणो र्ण्यद्भवति, दम्भेर्नस्य हरश्च स्यात्, चकारात् ण्यत् च । यु-आषुञोः सर्वेश्वरान्तत्वाद्, अन्येषांपवर्गान्तत्वान्नित्यं यति प्राप्ते ण्यद्विधानं तदपवादः । दाभ्यमिति—नरामहरेकृते उद्धवारामस्य वृष्णीन्द्रः ।

---

**बाल०**—यु रपि । यु मिश्रणामिश्रणयोः डु वप् बीजतन्तुसन्ताने रप लप व्यक्तायां वाचि चमु अदने इत्येतेभ्यः आङ्पूर्वात् षुञ अभिषवे इत्यस्माच्च उत्तरे भावकर्मणोर्वाच्ययोर्ण्यद्भवति । युधातोरासुनोतेश्च सर्वेश्वरान्तत्वादन्येषां पवर्गान्तत्वाद्यति प्राप्ते ण्यद्विधानं । दम्भे । दम्भ दम्भे इत्यस्मादुत्तरे ण्यद्भवति नस्य हरश्च । सौवादिकइति स्वादिरित्यर्थः । दाम्यमिति नस्य हरे कृते उद्धवारामस्य वृष्णीन्द्रो नृसिंह इति वृष्णीन्द्रः ॥ १७१ ॥

**बाल०**—भज । भज सेवायां जप मानसे च यज देवपूजादौ एतेभ्य आङ्पूर्वात् नम प्रह्वत्वे शब्दे चेत्यस्माच्च उत्तरे यद्वा भवति, पक्षे ण्यदेव । भजयजोर्विष्णुजनान्तत्वान्नित्यं ण्यति प्राप्ते विकल्पे यद्विधानं । जपानम्योस्तु पवर्गान्तत्वाद्यति नित्यं प्राप्ते विभाषा । भाग्यमिति चजोः कगावित्यादिना जस्य गः । एवं जाप्यं जप्यं याज्यं यज्यमिति ॥ १७२ ॥

**१७४. भज जप यजानमिभ्यो यद् वा ।**

**भाग्यं भज्यम् । आनाम्यं आनम्यम् ।**

**१७५. माङः पाय्यं परिमाणे ।**

**परामाय्यमिदम् ।**

---

**अमृता०**—१७४. भजेति । भजादिभ्यश्चतुर्भ्य उत्तरे यत् प्रत्ययौ वा स्यात् । तत्र भज यजो विष्णुजनान्तत्वांन्नित्यं यति प्राप्ते विकल्पेन यद्विधानं, जपानम्योस्तु पवर्गान्तत्वान्नित्यं यति प्राप्ते विभाषया ण्यद् विधानं ज्ञेयम् । भाग्यमिति—भजसेवायां, चजोः कगाविति जस्य गः । एव जाप्यंजप्यं, यजें र्गत्वाभावेन निपातः—याज्यं यज्यम् ।

**अमृता०**—१७५. माङ इति । परिमाणे अर्थे माङ्माने धातो; पाय्यमिति साधुः, ण्यद्विधानं मरामस्यपरामश्चनिपात फलम्, आतो युक् तुण्यति सिद्ध एव ।

---

**बाल०**—माङः । परिमाणे वाच्ये माङ माने इत्यस्य पाय्यं साधु । ण्यद्विधानं मरामस्य परामविधानञ्च निपातफलं । यौतवं द्रुवयं पाय्यमिति मानार्थकं त्रयमित्यमरः ।। १७३ ।।

**बाल०**—कुण्ड । क्रतुर्यज्ञस्तस्मिन् वाच्ये कुण्डपाय्यसञ्चाय्यौ साधू । कुण्डपाय्य इति कुण्डपूर्वस्य माङो निपातफलं पूर्ववत् । सञ्चाय्य इति संपूर्वस्य चिञः ण्यद्विधानं ऐरामस्य आय् च निपालफलं । प्राणा । दुर्मतिनिष्कामयोर्वाच्ययोः प्राङ्पूर्वस्य नीङः प्राणाय्यः साधुः । ण्यद्विधानं ऐरामस्य आय् च निपातफलं । संनि । हविर्विशेषे वाच्ये संपूर्वस्य नियः सान्नाय्यं साधु हविर्होतव्यं द्रव्यं । ण्यद्विधानं ऐरामस्य आय् समो ऽरामस्य त्रिविक्रमश्च निपातफलं । सान्नाय्यं हविरित्यमरः । आन । दक्षिणाग्नौ वाच्ये आङ्पूर्वस्य नयतेरानाय्यः साधुः । ण्यद्विधानं ऐरामस्य आय् च निपातफलं । दक्षिणाग्निर्गार्हपत्यहवनीयौ त्रयोऽग्नय इत्यमरः । यो गार्हपत्यादानीय दक्षिणाग्निः प्रणीयते । तस्मिन्नानाय्य इति चामरः । निचि । निवासे वाच्ये निपूर्वचिञो निकाय्यः साधुः । ण्यद्विधानं चेः किः ऐरामस्य आय् च निपातफलं । निकाय्यनिलयालया इत्यमरः । चित्य । चेतव्ये वह्नौ वाच्ये चित्यः साधुः । ण्यद्विधानं वृष्णीन्द्राभवस्तुक् च निपातफलं । अस्य क्यप्प्रकरणे लिखनमुचितमिति ज्ञेयं, तथा सति वृष्णीन्द्राभावत्तुकोरयत्नसाध्यता स्यात् । अग्नि । तच्चयने अग्निचयने वाच्ये अग्निचित्या साधुः । निपातफलं पूर्ववज्ज्ञेयं स्त्रीत्वन्तु अभिधानात् । अस्यापि क्यप्प्रकरणे लिखनमुचितं । अमा । तिथिविशेषे वाच्ये अमापूर्वस्य वसेः अमावास्या अमावस्या च साधुः । अमेति । अमाशब्दः सहार्थः । अत आह सहेति । इतीति इत्यर्थे इत्यर्थः । अत्र ण्यद्विधानं युद्विधानञ्च निपातफलं स्त्रीत्वन्त्वभिधानात् ।। १७४ ।।

**बाल०**—गुपेः । हेमरूप्यव्यतिरिक्ते धने वाच्ये गुपेः कुप्यं साधु । हेम सुवर्णं । गुपेरिति गुप गोपनकुत्सनयोः गुपू रक्षणे द्वयोर्ग्रहणं गोविन्दाभावो गरामस्य करामविधानञ्च

**१७६. कुण्डपाय्य-सञ्चाय्यौ क्रतौ, प्राणाय्यो दुर्मति-निष्कामयोः, सन्निय: सान्नाय्यं हविर्विशेषे, आनयतेरानाय्यो दक्षिणाग्नौ। निचिञो निकाय्यो निवासे, चित्यश्चेतव्ये वह्नौ; अग्निचित्या तच्चयने। अमापूर्व-वसे रमावास्यामावस्ये तिथि विशेषे.**

**अमा सह वसत श्चन्द्रसूर्य्यावस्यामिति ण्यद् यद्भ्यामावन्ताभ्यां सिध्यतः।**

---

**अमृता०**—१७६. कुण्डेति। क्रतु यंज्ञ विशेषः, तस्मिन्नभिधेये कुण्डपाय्य-सञ्चाय्यौ यद्ण्यद्भ्यां निपात्येते। कुण्डेनपीयते सोमोऽस्मिन् कुण्डपाय्यः क्रतुः। पिवते र्निपातात् युक्। सञ्चीयते सोमोऽस्मिन् सञ्चाय्यः क्रतुः। निपातेन ण्यत् अयादेशश्च। प्राणाय्य इति—दुर्मतिरप्रीति विषयः, निष्कामो वीतस्पृहः, एतयोरर्थयोः प्र-आङ् पूर्वात् नयते र्ण्यता अयादेशेन च प्राणाय्य इति निपात्यते। प्राणाय्य श्चौरः, प्राणाय्योऽन्ते वासी विरक्तइत्यर्थः। सन्निय इति—हवि र्हवनीय द्रव्यम्। हविर्विशेषे वाच्ये संपूर्वाद् नयते र्ण्यता अयादेशेन, उपेन्द्रदीर्घेण च सान्नाय्यं निपात्यते। होमार्थमग्निं प्रति सम्यङ् नीयत इति सान्नाय्यम्। आनयतेरिति—दक्षिणाग्नौ वाच्ये आनयते र्ण्यता अयादेशेन च आनाय्यइतिनिपात्यते। अन्यत्र आनेयं तुलसीमाल्यम्। निचिञ इति—निवासे वाच्ये निपूर्वात् चिनोते र्ण्यता अयादेशेन कत्वेन च निकाय्यः साधुः स्यात्। निचीयते धान्यादिकमस्मिन्निति निकायः, अधिकरणे वाच्ये निपातोऽयम्। चित्य इति–संग्रहणीय वह्नौ वाच्ये चयते र्यता तुगागमेन च चित्यः साधुः। अग्निचित्येति—तस्यैवाग्निचयनेऽर्थे यता तुगागमेन अग्निचित्या निपात्यते, भावे आवन्तोऽयं निपातः, पूर्वस्तुकर्मणि। अमेति–अमा शब्दः सहार्थोऽव्ययम्। अधिकरणे वाच्ये तिथिविशेषार्थे ण्यत् प्रत्ययेनाक्तेन च अमावास्येति, तथैव यत् प्रत्यान्तेन अमावस्येति च निपात्यते।

---

निपातफलं। ताभ्यां यदन्यत् तत् कुप्यमित्यमरः। ताभ्यामिति हेमरूप्याभ्यामित्यर्थः। अस्यापि क्यप्प्रकरणे लिखनमुचितं। भिद्यो। नदभेदे कर्त्तरि वाच्ये भिद्योद्ध्यौ साधू। गोविन्दाभावादित्यस्यापि सिध्यतीत्यनेनान्वयः। तस्माद् भिद्य इत्यत्र गोविन्दाभावो निपातफलं। उद्ध्य इति उद्झ उत्सर्गे झरामस्य धरामो निपातफलं अत उक्तं दध-मध्यत्वादिति। दधेति सारामनिर्देश उच्चारणार्थः। भिद्योद्ध्यौ नदविशेषौ। अस्यापि क्यप्प्रकरणे लिखनमुचितं। तथा सति भिद्य इत्यत्र गोविन्दाभावस्यायत्नसाध्यता स्यात्। कर्त्तरीत्यनुक्तेऽप्यसङ्गतिर्न भवतीति ज्ञेयं ॥ १७५ ॥

**बाल०**—पुष्य। नक्षत्रविशेषे वाच्ये पुष पुष्टौ सिधु संराद्धौ इत्येतयोः पुष्यसिद्धौ साधू। गोविन्दाभावो निपातफलं। पुष्यतु सिध्यतिष्यावित्यमरः। अस्यापि क्यप्प्रकरणे लिखनमुचितं। विपू। मुञ्ज वाच्ये वेरुत्तरस्य पूञ पवन इत्यस्य विपूयः साधुः। वृष्णीन्द्राभावो निपातफलं। पूङ पवन इत्यस्य ह्वादेरयं प्रयोग इति जयादित्यजिनेन्द्रौ।

**१७७. गुपेः कुप्यं अहेमरूप्यधने, भिद्योद्ध्यौ नदभेदे कर्त्तरि।**
**भिनत्ति कूलं भिद्य इति गोविन्दाभावो निपातः। उज्झति कूलं उद्ध्य इति दधमध्यत्वात् सिध्यति।**

**अमृता०**—१७७. गुपेरिति। हेमः सुवर्णः, हेमरौप्येतरे धने वाच्ये गुपेः कुप्यं निपात्यते, यत्प्रत्ययेन कत्वेन च निपातः। भिद्येति—कर्त्तरि वाच्ये नद विशेषे चार्थे भिद्य उद्ध्यश्च यता निपात्येत। अपरे तु क्यप् प्रत्ययेन निपातयन्ति, तत्र निपातस्य न सम्यक् चरितार्थत्वमनुभूयत इति यत् प्रत्ययेन हि निपातमभिप्रेत्याह—गोविन्दाभावो निपात इति। क्यपि च सति स्वतएव गोविन्दनिवृत्तिः स्यादिति भावः।

वस्तुतः कर्त्तरि नदार्थ निपातफलम्। तनान्यत्र—भेद्यः शत्रुः, उज्फं कैतववैष्णवैः, त्याज्यमित्यर्थः। तटविध्वंसी नदो भिद्यः, तथाकूलमपहाय दूरे प्रवहमाणो नद स्तु उद्ध्य उच्यते। अस्य दध मध्यत्वं निपातफलम्। गुपू रक्षणे, भिदिर् विदारणे, उज्फ उत्सर्गे।

अस्यापि क्यप्प्रकरणे लिखनमुचितं। विनी। कल्के वाच्ये वेरुरस्य नीञो विनीयः साधुः। कल्कस्तैलादिकल्कः। वृष्णीन्द्राभावो निपातफलं। अस्यापि क्यप्प्रकरणे लिखनमुचितं। जित्यो। महति हले वाच्ये जित्यः साधुः। हलं लाङ्गलं। ण्यद्विधानं वृष्णीन्द्राभावस्तुक् च निपातफलं। अस्यापि क्यप्प्रकरणे लिखनमुचितं। युग्यं। वाहने वाच्ये युजिर योग इत्यस्य युग्यं साधु। वाहनं करि-तुरङ्गादि गोविन्दाभावो निपातफलं। सर्वं स्याद्वाहनं यानं युग्यं पत्रञ्च धोरणमित्यमरः। दधा। सामिधेन्यां ऋचि वाच्यायां दधातेर्धाय्या साधुः। ण्यद्विधानं निपातफलं। ऋक् सामिधेनी धाय्या च या स्यादग्निसमिन्धने इत्यमरः। परि। अग्निविशेषेषु वाच्येषु परिचय्यादयः साधवः। परिचाय्य इति परिपूर्वस्य चिञः ण्यद्विधानं ऐरामस्य आय् च निपातफलं। एवं उपचाय्य इति। समूह्य इति संपूर्वस्य वहः सङ्कर्षणस्य त्रिविक्रमश्च निपातफलं समूह्यः परिचाय्योपचाय्यावग्नौ प्रयोगिन इत्यमरः। अञ्जेः। घृते वाच्ये अनुज म्रक्षणादिषु इत्यस्य आज्यं साधु। नरामहरो गत्वाभावश्च निपातफलं। वृष्णीन्द्रस्तु नरामहरे कृते सिध्यत्येव। घृतमाज्यं हविः सर्पिरित्यमरः। गृह्यचो। अस्वैरिणि वाच्ये ग्रहेः गृह्यः साधुः। अस्वैरी अधीनः। सङ्कर्षणो गोविन्दाभावश्च निपातफलं। अस्य क्यप्प्रकरणे लिखनमुचितं तथा सति सङ्कर्षण-गोविन्दाभावयोरयत्नसाध्यता स्यात्। अधीनो निघ्न आयत्तोऽस्वच्छन्दो गृह्यकोऽप्यसा-मित्यमरः। गृहासक्ताः पक्षि-मृगाश्छेकास्ते गृह्यकाश्च त इत्यमरः। साधव इति पुष्यादय इति शेषः॥ १७६॥

**बाल०**—अनु। अनुपेन्द्रे उपेन्द्रव्यतिरिक्ते पूर्वपदे सति भावकर्मणोर्वाच्ययोर्वद उत्तरे यत्क्यपौ भवतः। भुवः। अनुपेन्द्रे सति भावे वाच्ये हन उत्तरे क्यप् भवति। हनो नरामस्य तश्च। कृष्णवद्या इति कर्मणि यत् कृष्णोद्या इति कर्मणि क्यप् सङ्कर्षणः उपेन्द्रेत्यादिना समासः। सत्यवद्य इति सत्यं वदतीत्यर्थः। रघुत्तमो रघुनाथः (लक्षणः)। उपेन्द्रे तु प्रवाद्यमित्यत्र ण्यदेव भवति ब्रह्मणो भाव इत्यर्थकथनं। उपेन्द्रे तु प्रभव्यं।

**१७८. पुष्य-सिद्ध्यौ नक्षत्रविशेषे, विपूयो मुञ्जे, विनीयः कल्के, जित्यो महति हले, युग्यं वाहने, दधाते र्धाय्या सामिधेन्यामृचि, परिचाय्योपचाय्य समूह्या अग्निविशेषेतु, अञ्जे राज्यं घृते, गृह्योऽस्वैरिणि साधवः ।**

**१७९. अनुपेन्द्रे वदो यत् क्यपौ, भुवः क्यप्भावे, हनस्तश्च ।**

कृष्णेनोद्यन्ते कृष्णवद्या गीताः कृष्णोद्याः । बाहुल्यात् कर्त्तरि च,

---

**अमृता०**—१७८. पुष्येति । नक्षत्रविशेषे वाच्ये पुष्यः सिद्ध्यश्च साधू भवतः । पुष पुष्टौ, सिधु संराद्धौ इत्येतयो र्यता गोविन्दाभावेन च निपातः । मुञ्जे वाच्ये विपूर्वपूञ् पवने इत्यस्य यता गोविन्दाभावेन च विपूय इति साधुः स्यात् । अन्यत्र ण्यति विपाव्यम् । कल्के वाच्ये विपूर्व नीञ् प्रापणे इत्यस्य यता गोविन्दाभावेन च विनीय इति साधुर्भवति । अन्यत्र तु विनयो राजा । जित्य इति—जिजये, यता तुगागमेन निपातः । अन्यत्र जेयो रिपुः । युग्यमिति—युजिर् योगे, ण्यता गुणाभावेन निपातः । सर्वं स्याद् वाहनं यानं युग्यं पत्रञ्च धोरणमित्यमरः । अन्यत्र योग्यो भृत्यः । धाय्येति—सामिधेनी ऋक् समित् प्रज्वालको मन्त्र विशेषः । ण्यता युगागमेन चावन्तो निपातः । परिचाय्येति—परि पूर्वस्य उपपूर्वस्य चिनोते ण्यंता अयादेशेन निपात्येते एतौ, यज्ञाग्नि विशेषेऽर्थे । तथा समपूर्ववहते ण्यंत्-सङ्कर्षण-त्रिविक्रमैः समूह्यः साधुः स्यात् । अञ्जेरिति–अन्जू म्रक्षणादिषु धातो र्घृते वाच्ये ण्यत्-गत्वाभाव-नरामहरेः आज्यमिति निपात्यते । गृह्य इति ग्रह उपादनिधातोरस्वैरिणि (अधीने) अर्थे यत् सङ्कर्षणाभ्यां गृह्यः साधुर्भवति ।

**अमृता०**—१७९. अनुपेन्द्रइति । उपेन्द्र व्यतिरिक्ते पूर्वपदे भावकर्म वाच्ययो र्वद धातोरुत्तरेयत् क्यपौ भवतः । अनुपेन्द्रे पूर्वपदे भाव वाच्ये भुव उत्तरे क्यप् स्यात्, हन्ते भावे क्यप् भवति, तस्य नस्य तरामश्च भवति । पूर्वपदेऽप्राप्ते यद् विधानम् । कृष्णवद्येति कर्मणि यत्, कृष्णोद्यति कर्मणि क्यप् सङ्कर्षणः, उपेन्द्रोर्यादीत्यादिना पूर्वपदसमासः ।

---

ब्रह्मणो हननमित्यर्थकथनं । ब्रह्महत्येति स्त्रीत्वं कथमिति चेत्तत्राह स्त्रीत्वमभिधानादिति उपेन्द्रे तु प्रघात्य ॥ १७७ ॥

**बाल०**—एति । इन् गतौ ष्टुञ स्तुतौ शासु अनुशिष्टौ वृञ वरणे दृङ आदरे जुषी प्रीतिसेवनयोः इत्येतेभ्त उत्तरे क्यप् भवपि । वृञो ञरामः वृङ सम्भक्ता वित्यस्य निरासार्थः । आवश्यकेऽपीति । आवश्यकेऽर्थेऽपि स्तुधातोरुत्तरे क्यविष्यते अवश्यस्तुत्य इति अवश्यमो मस्य हरः । शायः शिषिति शासः शिष् कंसारिविष्णुजनङ्योरित्यनेनेति शेषः । आङः शास्वित्यादेरिति । आङः शासु इच्छायामित्यात्मपदिनो न ग्रहणं धात्वन्तरतया पृथक्पाठादिति आख्याते दर्शितं । आशास्यमित्यत्रापि अनेनैव क्यप् । उपेयमिति सर्वेश्वरान्तत्वाद्यगोविन्दः उपेन्द्राद्यहर एओरामयोरिनेधौ बिनेति आरामहरः ॥ १७८ ॥

सत्यवद्यो रघूत्तमः। ब्रह्मणो भावो ब्रह्मभूयम्। ब्रह्मणो हननं ब्रह्महत्या, स्त्रीत्वमभिधानात्।

**१८०. एति स्तु शासु वृञ् दृ जुषः क्यप्।**

वामनात्तुक्—इत्यः स्तुत्यः। आवश्यकेऽपीष्यते, अवश्य स्तुत्यः। शासः शिष्-शिष्यः। वृत्यः आदृत्यः जुष्यः। आङः शास्वित्यादेराख्यात दर्शितत्वान्नशिषादेशः, आशास्यं, ईङ्गतौ उपेयम्।

**१८१. शंसि दुहिगुहिभ्यो वा क्यप्।**

शस्यं शंस्यं, दुह्यं दोह्यम्।

---

सत्यवद्य इति—सत्यंवदतीत्यर्थे कर्त्तरि यत्, रघूत्तम इह लक्ष्मणः, भट्टि प्रयोग एषः। ब्रह्मभूयमिति भावे क्यप्, कपिलत्वाद् गोविन्दाभावः, ब्रह्मत्वमित्यर्थः। ब्रह्महत्येति भावे क्यप्। स्त्रीत्वमभिधानादिति—लोके कथनात् लोकव्यवहारादित्यर्थः ब्रह्महत्या सुरापानमित्यादि प्रयोगदर्शनात्। अनुपेन्द्र इति किम्—उपेन्द्रे तु ण्यदेव-प्रवाद्यः, भाव्यः संभाव्यः घात्यः संघात्यः। एभ्यस्तु भावे ण्यत् न भवति, विधानाभावात्।

**अमृता०**—१८०. एतीति। इण गतौ प्रभृत्युक्त षड्भ्यः क्यप् प्रत्ययो भवति। इत्यः स्तुत्य इति यतोऽपवादः। शिष्य इति ण्यतोऽपवादः, वृत्यइति च। सानुबन्ध निर्देशात् वृङ्संभक्तावित्यस्य निरासः आदृत्यइति दृङ आदरे, ण्यदपवादः। जुष्य इति जुषी प्रीति सेवनयोः ण्यदपवादः। आङ्पूर्वस्य शासु इत्यस्यात्मपदिनो नहि भवति शिषादेश इत्याह—आख्यातदर्शितत्वादिति। धात्वन्तरतया तस्य पृथक् पाठादिति तत्रैवोक्तम्। ननु कथंउपेयमिति दृश्यते इति भ्रान्त्या इणो रूपमिदं मन्यमानंप्रति प्राह—ईङ्गताविति। इण्गतावित्यस्य रूपे सति तुगागमेन उपेत्यमित्येवं हि भवितव्यम्। उपेयमिति—सर्वेश्वरान्ताद् यत्, गोविन्दः, उपेन्द्राद्वय हरः।

**अमृता०**—१८१. शंसीति। एतेभ्यः क्यप् प्रत्ययो वा स्यात्, पक्षे ऋद्वयविष्णुजनाभ्यामिति ण्यत्। शस्यमिति क्यपि अनिरामेतामिति नरामहरः। दुह्यमिति क्यपि गोविन्दाभावः। एवं गुह्य गोह्यमिति।

---

**बाल०**—शंसि। शन्सु स्तुतौ दुह प्रपूरणे गुहू सम्बरणे एतेभ्य उत्तरे क्यप् वा भवति, पक्षे ण्यदेव। शस्यमिति अनिरामेतामिति नरामहरः। एवं गुह्य गोह्यमिति॥ १७९॥

**बाल०**—ऋरा। कृपव्यतिरिक्तात् ऋरामोद्धवाद्धातोरुत्तरे क्यप् भवति। वृत्विति वृतु वर्त्तने। वृध्यमिति वृधु वृद्धौ। कल्प्यमिति कृप सामर्थ्ये ण्यत्। कृपे ऋ लृ इति ऋरामस्य लृरामो गोविन्दश्च॥ १८०॥

**१८२. ऋरामोद्धवादकृपः क्यप् ।**

वृतु-वृत्यं, वृधु-वृध्यं, कृपेस्तु कल्प्यम् ।

**१८३. खनः खेयं निपात्यते, पाणौ सृजे र्ण्यत्, समवपूर्वाच्च ।**

पाणिसर्ग्या माला । समवेति संघातेनैव प्रयोगः-समवसर्ग्या रज्जुः ।

**१८४. भृञः क्यप् नतु पत्न्यां, संभृञो वा, कृवृषिभ्याञ्च ।**

भृत्यः संभृत्यः संभार्यः । कृत्यं कार्यं, वृष्यं वर्ष्यम् । पत्न्यान्तु भार्या ।

---

**अमृता०**—१८२. ऋरामेति । कृपं वर्जयित्वा ऋरामोद्धवाद्धातोरुत्तरे क्यप् स्यात् । वृत्यमिति वृतुवर्त्तने, वामनात्तुक् । कल्प्यमिति—कृपू सामर्थ्ये ण्यत्, कृपे ऋ लृः गोविन्दश्च ।

**अमृता०**—१८३. खन इति । निपात्यत इति निपातनादेव क्यप्, अरामस्य एत्वञ्च । खेयन्तु परिखेत्यमरः । पाणाविति—पाणि शब्देपूर्वपदे सृजेरुत्तरे ण्यत् स्यात्, समवपूर्वाच्च तस्माद् ण्यदेव स्यात् भावकर्मणोः । पाणिसर्ग्येति—पाणिभ्यां सृज्यतइति कर्मणि ण्यत्, चजोः कगाविति जस्य गत्वम् । संघातेनैवेति—तत एकैक प्रयोगेण तु क्यवेव, संसृज्यं कृष्णविमुखेन, तेन संसारिणा भवितव्यमित्यर्थः ।

**अमृता०**—१८४. भृञ इति । पत्नीवर्जिते वाच्ये डुभृञ् धारण पोषणमोरित्यस्मात् क्यप् स्यात् । संपूर्वात्तु तस्मात् क्यप् वा भवति, पक्षेण्यत् । डुकृञ्करणे, वृषु सेचने ।

---

**बाल०**—खनः । खनु अवदारणे इत्यस्य खेयं निपात्यते । क्यब्विधानं नरामस्य एरामविधानञ्च निपातफलं । अरामहरस्तु अरामहरः ए अयोरविष्णुपदान्ते इत्यादिना सिध्यत्येव । खेयन्तु परिखेत्यमरः । पाणौ । पाणौ पूर्वपदे सति सृज विसर्गे इत्यस्मादुत्तरे ण्यद्भवति । ऋरामोद्धवत्वात् क्यपि प्राप्ते ण्यद्विधानं । सम । समवपूर्वाच्च सृजेरुत्तरे ण्यद्भवति । पाणिसर्ग्येति कर्मणि ण्यत् । चजोः कगावित्यादिना जस्य गः । पाणिना सृज्यते इत्यर्थः । सङ्घातेनैव प्रयोग इति । एतेन समुदायस्य समवेतस्य पूर्वत्वे सति सृजेर्ण्यद्भवतीति सूचितमतः संपूर्वादवपूर्वाच्च सृजेर्ण्यत् भवति । समवसर्ग्येति समवसृज्यते इत्यर्थः ।। १८१ ।।

**बाल०**—भृञः । डु भृञ धारणपोषणयोः इत्यस्मादुत्तरे क्यप् भवति । पत्न्यां वाच्यायान्तु भृञ उत्तरे क्यप् न भवति । संभृ । संपूर्वाद्भृञ उत्तरे क्यप् वा भवति पक्षे ण्यदेव । कृ । डु कृञ करणे वृषु सेचने इत्येताभ्याञ्चोत्तरे क्यप् वा भवति पक्षे ण्यदेव । भृत्य इति वामनात्तुक् पत्न्यान्तु भार्येति, अत्र ण्यत् । पत्नी पाणिगृहीती च द्वितीया सहधर्मिणी । भार्या जायेत्यमरः ।। १८२ ।।

**बाल०**—मृजेः । मृजू ष शुद्धावित्यस्मादुत्तरे क्यप् वा भवति पक्षे ण्यदेव ऋरामोद्धवत्वान्नित्यं क्यपि प्राप्ते विभाषा । मार्ग्य इति मृजेवृष्णीन्द्र इत्यनेन वृष्णीन्द्रः ।। १८३ ।।

**१८५. मृजेः क्यप्वा ।**

मृज्यः, णत्वं-मार्ग्यः ।

**१८६. मृषोद्यादयः कर्मादौ साधवः ।**

मृषा उद्यते मृषोद्यं, रोचते रुच्यः, कृष्टे पचति पाकमाप्नोति कृष्टपच्यो वृह्यादिः । न व्यथते अव्यथ्यः ।

**१८७. राजसूयादयस्तु संज्ञा शब्दाः ।**

---

इत्येताभ्याञ्च क्यप् वा स्यात्, पक्षे ण्यदेवा भृत्य इति—कर्मणि क्यप्, वामनात्तुक्, सेवक इत्यर्थः । पत्न्यान्तु ण्यदेव भवतीति दर्शयति—भार्येति । पत्नीपाणि गृहीती च द्वितीया सहधर्मिणी भार्या जायेत्यमरः ।

**अमृता०**—१८५. मृजे रिति । मृजूष शुद्धौ इत्यस्मादुत्तरे क्यप् वा भवति, पक्षे ण्यत् । ऋरामोद्धवत्वेन नित्यं क्यपि प्राप्ते विभाषा । मार्ग्य इति मृजे वृंष्णीन्द्र इत्यनेन वृष्णीन्द्रः ।

**अमृता०**—१८६. मृषोद्यादय इति । कर्मादौ वाच्ये एते निपात्यन्ते । मृषा मिथ्या । मृषोद्यमिति कर्मणि क्यप्, मिथ्या वाक्यमित्यर्थः । अनुपेन्द्रे वदो यत् क्यपाविति विकल्पे प्राप्ते निपातात् क्यवेव । मृषा पूर्वपदत्वे क्यवेव स्यान्नतु यदित्येव निपातफलम् । रुच्य इति निपातेन कर्त्तरि क्यप् । कृष्टे कर्षणे सति पचति फलतीत्यर्थः । निपातात् कर्त्तरि क्यप्, तथैव अव्यथ्य इति ।

**अमृता०**—१८७. राजसूयेति । राज्ञा सूयते इह इति राजसूयो यज्ञविशेषः, कर्मणि क्यप् । आदि पदेन सूसर्त्तिभ्यां क्यप्, सर्त्ते रुत्वं सुवतेः रुडागमो वा, सरति—सुवति वेति सूर्यः ।

---

**बाल०**—मृषो । कर्मादौ वाच्ये मृषोद्यादयः साधवः । मृषा मिथ्या । मृषोद्यमिति कर्मणि क्यप् । अत्र यदभाव एव निपातफलं । मृषा पूर्वाद्वद उत्तरे क्यप् । एव भवति नतु यदिति । रुच्य इति निपातात् कर्त्तरि क्यप् । कृष्ट इति । पचतीत्यर्थमाह पाकं प्राप्नोति इति । कृष्टपच्य इति निपातात् कर्त्तरि क्यप् । कृष्ट इति भावे क्तः कर्षण इत्यर्थः । पाकं परिपाकं । अव्यथ्य इत्यत्रापि निपातात् कर्त्तरि क्यप् ।। १८४ ।।

**बाल०**—राज । राजसूयादयस्तु संज्ञाशब्दा इति । संज्ञाशब्दत्वादेतेषां अर्थकथनं न बहुप्रयोजनकमिति अर्था नोक्ताः किन्तु क्यवन्तत्वनैव निपातीया इति भावः ।। १८५ ।।

**बाल०**—अनु । अनुपेन्द्रे पूर्वपदे सति वाह्यायां पक्षे च वाच्ये ग्रहेरुत्तरे क्यप भवति । पक्षः पक्षाश्रितः । तस्यामेव लक्ष्म्यामेव । ततो मथुरातः । तत्पक्षाश्रितः । कृष्णपक्षाश्रितः ।। १८६ ।।

**१८८. अनुपेन्द्रे ग्रहेः क्यप् वाह्यायां पक्षे च ।**

लक्ष्मीनिर्देशात् तस्यामेव । मथुरा गृह्या सेना, ततो वाह्येत्यर्थः । कृष्णगृह्यस्तत्पक्षाश्रित इत्यर्थः ।

**१८९. इज्या व्रज्या कृत्या भावे क्यवन्ताः साधवः, समज्यादयः संज्ञायां साधवः ।**

**समजन्त्यस्यां समज्या सभाः, निषद्या आपणः, निपत्या पिच्छलभूमिः । विदन्त्यनया विद्या, सूयतेऽस्यां सोमः सूत्या, शय्यतेऽस्यां शय्या ।**

---

**अमृता०**—१८८. अनुपेन्द्र इति । उपेन्द्र व्यतिरिक्ते पूर्वपदे सति वाह्यायां पक्षे च वाच्ये ग्रहेरुत्तरे क्यप् स्यात् । लक्ष्मीनिर्देशादिति—तेन लिङ्गान्तरे न भवतीति भावः । ततो वाह्येति मथुरातो बहिर्भूतेत्यर्थः । पक्षशब्द इह तद्धितान्तः, पक्षे भवः पक्षः, केशवारामः । अतएव तदर्थमाह—तत्पक्षाश्रित इति । एवमर्जुनगृह्यः कृष्णः ।

**अमृता०**—१८९. इज्येति । इज्यादयस्त्रयो भाववाच्ये क्यवन्तेन निपात्यन्ते, समज्यादयस्तु संज्ञायां क्यवन्तेन साधवो भवन्ति । सर्व एव ङावन्तनिपाताः । इज्यत इति इज्या, यजनमित्यर्थः, यजते भावे क्यप्, संकर्षणः । प्रव्रज्यत इति प्रव्रज्या सन्न्यसनमित्यर्थः । क्रियत इति कृत्या करणमित्यर्थः । प्राक् कर्मणि कृत्यं निपातितम्, इहतु भावे लक्ष्म्यामिति विशेषः । समजन्ति मिलन्तीत्यर्थः । आपणः क्रयविक्रय स्थानम् । सोम इति सूयतेः कर्म । एते क्यपि लक्ष्म्यां ङावन्ता निपात्यन्त इत्यग्रे च वक्ष्यते ।

---

**बाल०**—इज्या । अत्र क्वचित् पुस्तके चत्वारि निपातसूत्राणि दृश्यन्ते प्रकरणानुसारेण तान्यत्रैव वक्तुमुचितानि च किन्तु तत्साध्यप्रयोगाणामग्रे वक्ष्यमाणत्वात् तानि अप्रयोजनकानि भवन्तीति ज्ञेयं । इज्या व्रज्येज्या कृत्या भावे क्यवन्ताः साधवः । सम । समाज्यादयः संज्ञायां साधवः । समजन्त्यस्यां समज्या सभा निषद्या आपणः । निपत्या पिच्छिलभूमिः । विदन्त्यनया विद्या सूयतेऽस्यां सोमः सूत्या शय्यतेऽस्यां शय्या ।। १८७ ।।

**बाल०**—इत्या । इत्या भावकरणयोः साधुः । भृत्या । भृत्यादयः भावे साधवः । भरणं भृत्या । आसनं उपवेशनं आस्या । इत्यादीति आपणः क्रयविक्रयस्थानं । सोमो लताविशेषः ।। १८८ ।।

**बाल०**—भव्य । भव्यादय कर्त्तरि च साधवः । भव्य इति भवतीत्यर्थः एवं सर्वत्र ज्ञेयं निपातात् कर्त्तरि यत् । गेय इति निपातादत्रापि कर्त्तरि यत् । आ ए यति इत्यनेन एरामः प्रवचनीय इति निपातात् कर्त्तर्यनीयः । एवमुपस्थानीय इति । अन्य इति निपातात् कर्त्तरि ण्यत् । जनिवध्योरित्यादिना वृष्णीन्द्रनिषेधः । आप्लाव्य इति प्लुङ गत्यर्थः निपातात् ण्यत् । एवमापात्य इति ।। १८९ ।।

**१९०. इत्या भावकरणयोः साधुः, भृत्यादयो भावे साधवः ।**

भरणं भृत्या, आसनं उपवेशनं आस्या इत्यादि ।

**१९१. भव्य - गेय - प्रवचनीयोपस्थापनीय - जन्या प्लाव्यापात्या कर्त्तरि च ।**

वैष्णवो मथुरायां भव्यः, भवतीत्यर्थ इत्यादि । हरे र्गेयः हरिंगायतीत्यर्थः । पक्षे मथुरायां भव्यमित्यादि ।

---

**अमृता०**—१९०. इत्येति । भाव करणयो र्वाच्ययोः इण्गतौ इत्यस्य इत्या इति-ङावन्तः साधुः, भृत्यादयस्तु भावे एव ङावन्ताः साधवो भवन्ति । एति स्तु इत्यादौ भाव कर्मणोर्विहितः, इह तु भावकरणयो रिति भेदः । तेन एति गच्छत्यनया इत्या पन्था इत्यर्थः, भावे गमनम् । भृत्याप्रभृतीनां भावे ब्रह्मणि प्राप्ते अत्र लक्ष्म्यां साधुत्वम् ।

**अमृता०**—१९१. भव्येति । भव्यादयः सप्तकर्त्तरि च वाच्ये साधवः स्युः । चकारेण भावकर्मणोरपि । भव्य इति निपातात् कर्त्तरि यत् । गेय इत्यत्रापि कर्त्तरि यत् निपातात् । अत्र हरे रिति कर्मणि षष्ठी, कर्त्ता भक्त इत्यूह्यः । गेयो माणवकः साम्नामिति काशिकोदाहरणम् । ननु विष्णुकृत्यानां कर्त्तरि षष्ठी वा इत्येव लब्धम्, उभय प्राप्तौ विष्णु कृत्ये न षष्ठीति निषेधश्च कृतः, ततः कर्मणि षष्ठ्या विधानाभावात् कथमत्र कर्मणि षष्ठी दर्शितेति चेत् ? सत्यम्, उच्यते—कृद् योगे कर्त्तरि कर्मणि वा षष्ठीविधेरनुक्तत्वमेव विषयः । यत्र कर्त्तानुक्तः, भावकर्मादि तूक्तं तत्रकर्त्तरि षष्ठी, यत्र भाव कर्माद्यनुक्तं, कर्त्ता तूक्तः तत्र कर्मादौ हि षष्ठी विधीयते । विष्णुकृत्याः प्रायो भावकर्मणोरेव भवन्ति, ततः कर्त्तुरनुक्तत्वात् तमपेक्ष्य तत्र हि षष्ठी विहिता, कर्मण उक्तत्वात् तत्र तु षष्ठ्याः प्राप्तिरपि नास्ति । इह पुनः कर्त्तरि विशेष वचनेन विष्णुकृत्यस्य विधानात् स एवोक्तः कर्म त्वनुक्तमिति तत्र षष्ठ्याः प्राप्त्यवसरो निर्बाध इति ।

एवं प्रवचनीयो गुरुः श्रीभागवतस्य, उपस्थानीयः शिष्यो गुरोः । अनयो र्निपातात् कर्त्तर्यनीयः । असौ जायते इति जन्यः: कर्त्तरि ण्यत्, जनिबध्यो र्मन्तानाञ्चेति वृष्णीन्द्र निषेधः । असौ आप्लाव्यः आपात्यः, अनयोश्च कर्त्तरि ण्यत् । पक्षे इति कर्मभावयो-रित्यर्थः । तत्रेत्यादि पदेन हरिर्गेयो भक्तेन, प्रवचनीयं भागवतं गुरुणा, उपस्थापनीयो गुरुः शिष्येण, अनेन जन्यं आप्लाव्यं आपात्यमिति ।

---

**बाल०**—धेनु । धेनुम्भव्या साधुः । धेनुम्भव्येति धेनुषु भवतीत्यर्थे निपातात् कर्त्तरि यत् पूर्वपदात् मुम् च ॥ १९० ॥

**बाल०**—केलि । कर्मकर्त्तरि वाच्ये धातोरुत्तरे केलिमो भवति । क इत् । भिदेलिमा इति स्वयमेव भिद्यन्ते इत्यर्थः । माषा व्रीहयः । पचेलिमा इति स्वयमेव पच्यन्त इत्यर्थः ॥ १९१ ॥

## १९२. धेनुम्भव्या साधुः ।

धेनुषु भवतीति ।

## १९३. केलिमः कर्म कर्त्तरि ।

भिदेलिमा माषाः, पचेलिमा स्तण्डुलाः । उक्ता विष्णु कृत्याः ।

## १९४. बाहुल्यात् करणादौ च ते ।

स्नायते येन तत् स्नानीयमामलक्यादि । दीयते यस्मै स दानीयो विप्रः । आपतति यस्मात् स आपत्यो भृगुः । रम्यते यस्मिन् तत् रमणीयं वृन्दावनम् । तिष्ठते निर्णीयते विवादो यत्र स स्थेयः ।

---

अमृता०—१९२. धेमुम्भव्येति । कर्त्तरि यत् मुगागमश्च साधुत्वात् । धेनुम्मवया गोरोचना ।

अमृता०—१९३. केलिम इति । कर्मकर्त्तरि वाच्ये धातोरुत्तरे केलिमः स्यात्, कइत्, एलिमः शेषः । भिदेलिमा इति—स्वयमेव भिद्यन्त इत्यर्थः । एवं स्वयमेव पच्यन्ते पचेलिमा इत्यादि ।

अमृता०—१९४. बाहुल्यादिति । कृतो बाहुल्यात् ते विष्णुकृत्याः करणादौ च वाच्ये सिध्यन्ति । स्नानीयमिति करणे अनीयः, दानीयइति सम्प्रदाने । आपात्य इत्यपादाने ण्यत् । रमणीमिति स्थेय इति चाधिकरणे सिद्धौ । तिष्ठत इति स्थो निर्णीतौ प्रकाशन इत्यात्मपदम् । स्थेय इति यदन्तः । अत्रैव कृति सर्वेषां कारकाणामुक्तत्वं लब्धम् । आदौ भावकर्मणोः, ततः कर्त्तरि, इह च करणादौ विष्णुकृत्या विहिताः । अत्र विष्णुकृत्य प्रत्ययानां कर्त्रादि वाच्येषु विहितत्वात् तत्तत् प्रत्ययैरेव कर्त्रादय उक्ता इति बोध्यम् ।

---

बाल०—बाहु । बाहुल्यादिति । कृद्बाहुल्यात् ते विष्णुकृत्या करणादौ वाच्ये भवन्ति । स्नानीयमिति करणे अनीयः । आमलक्यादीति अदिपदेन तैलातेर्ग्रहणं । दानीय इति सम्प्रदाने अनीयः । आपात्यं इति अपादाने ण्यत् । भृगुरुच्चप्रदेशः । प्रपातस्त्वतटो भृगुरित्यमरः । रमणीयमिति अधिकरणे अनीयः । तिष्ठत इति निर्णीतावात्मपदं अत आह निर्णीयत इति । अन्यैरिति शेषः । निर्णीयत इति फलितार्थकथनमेवेति ज्ञेयं । निर्णीतो भवतीति वा पाठः । स्थेय इति अधिकरणे यत् । आ ए यतीति एरामः ॥ १९२ ॥

बाल०—वास्त । वासकर्त्तरि वाच्ये वास्तव्यो वृष्णीन्द्रेण साधुः कर्त्तरि तव्यविधानं वृष्णीन्द्रश्च निपातफलमिति भावः । वासकर्त्तरीत्यत्र कर्त्तरीति वा पाठः ॥ १९३ ॥

बाल०—णक-। कर्त्तरि वाच्ये धातोरुत्तरे णक-तृनौ भवतः । णवुन्तृचौ पाणिनिरिति । ते वोरकमादिशन्तीत्युक्तमतो णक-णवुनोरैक्यं । जगत इति कर्मणि षष्ठी । बोढेति वह प्रापणे सहिवहोररामस्य ओरामो ढलोप इति ओरामः । घातक इति हनो हस्य घो णिण्णयोरिति घत्वं हन्तेस्तो नृसिंहे इति तत्वं ॥ १९४ ॥

# १८५. वास्तव्यो वासकर्त्तरि वृष्णीन्द्रेण साधुः ।

**अमृता०**—१८५. वास्तव्य इति । वस निवासे इत्यस्य तव्यप्रत्ययेन वृष्णीन्द्रेण च वास्तव्य इति निपात्यते । वृन्दावनस्य वास्तव्योऽयमित्येवं प्रयोगः ।

**बाल०**—नाम । नामधातोर्हनो न घत्वं तत्वञ्च न भवति । हननीयक इति हननमिच्छतीत्यर्थे यमिच्छति तस्मात् क्यन् । विष्णुभक्तिमहाहरः अद्वयस्य ई कानीति ईरामः । क्यन्नन्ताण्णकः । नृसिंहस्य हनः परवर्तित्वाभावादेव वत्वं तत्वञ्च न भवतीति भावः आतो युगिति । नृसिंहक्कति चेत्यस्योल्लेखः । कुटितेत्यादीनि आख्यातसूत्रेभ्यः सिध्यन्तीति आख्यातसूत्रेभ्य इत्युक्तं । कुटितेति कुट कौटिल्ये कुटादेरनृसिंहनिर्गुण इति इटि निर्गुणत्वमतो न गोविन्दः । कोटक इति नृसिंहत्वान्नात्र निर्गुणत्वं । शमक इति शमु उपशमे जनिवध्योर्मान्तानाञ्चचम्यमिकमिवमिषमिरमिनमिगमां न वृष्णीन्द्र इति कृति चेति वृष्णीन्द्रनिषेधः । यमेस्तु यामक इति वर्जनादिति शेषः । पापचक इति यङन्तात् पापच्यधातोर्णकः विष्णुजनात् सारामयस्य हरो रामधातुके इति सारामयस्य हरः । न वृष्णीन्द्र इति, अत उक्तं अन्तहरेण गोविन्दवृष्णीन्द्राविति । स्थानीति । स्थानिवद्भावात् वृद्धिर्न भवतीति प्रसादेऽपि दृश्यते । प्रक्रियातु चिन्त्येति । अत्र वृद्धिर्भवतीति प्रक्रियामतं । चक्रपाणेस्त्विवति । यङ् महाहरान्तश्चक्रपाणिसंज्ञ इति । पापचक इत्यत्र यङो महाहरः कृतः, अतो वृष्णीन्द्रः । दरिद्रायक इति, आतो युगित्यादिना युक् । दरिद्रातेरारामहर इत्यादौ युको वर्जनात् न आरामहरः । दरिद्रितेति इटि कृते आरामहरः । क्रमीति । क्रमिगमिक्तपिवृत्वादीनां धातूनां इट्सूत्रेषु इट्सम्बन्धिसूत्रेषु आत्मपदेन आत्मपदपदेन तत्कारणं आत्मपदकारणमपि गृह्यते इति बहूनां पण्डितानां मतं । गम्यादीनामिट्-सूत्रेषु आत्मपदपदेन उत्कारणं न गृह्यते इति केषाञ्चिन्मतं । तस्मात् केषाञ्चिन्मते क्रमेरिट्सूत्रे आत्मपदेन तत्कारणं न गृह्यत इति आयातं । तत्र स्वयमाह क्रमेस्त्विवति । क्रमेस्तु कर्त्तर्येव इट् नेष्यते इति आत्मपदकारणसद्भाव इति शेषः । प्रक्रन्ता उपक्रन्ता इति स्नुक्रमिभ्यामिङ् नात्मपद एवेति इट्सूत्रं । अत्र आत्मपदाभावेऽपि आत्मपदकारणयोः षयोः सद्भावात् धातोरात्मपदित्वं आत्मपदिभ्य आत्मपदानीति तृन्प्रत्ययस्यात्मपदत्वमतस्तस्मिन् परे कर्त्तरि नेट् । प्रक्रमितव्यमिति । अत्र आत्मपदकारणसद्भावेऽपि कर्त्तर्येवेति नियमादिट् । गम्यादेरिति गम्यादेरिट्सूत्रेषु आत्मपदपदेन सर्वस्मिन् वाच्ये तत्कारणं खल्वति गृह्यते । खल्वपीत्यव्ययसमुदायोऽतिनिश्चयार्थः । स जिगंसितेति संपूर्वात् समन्तात् गमस्तृन् सनन्ताद्धातोरिट् सरामादिरामधातुके नात्मपद इति इट्सूत्रं । अत्र आत्मपदाभावेऽपि आत्मपदकारणस्य सनः सद्भवान्नेट् । केषाञ्चिन्मते संजिगमिषितेति तन्मते आत्मपदाभावादिट् । चिकलृप्सिता चिकल्पिषितेति सनन्तात् चिकलृप्स-धातोस्तृन् सनन्तादिट् कृपेर्नेट् सरामादिबालकल्क्योरात्मपदाभाव इति इट्सूत्रं । अत्र आत्मपदाभावेऽपि आत्मपदकारणस्य सनः सद्भावात्तस्मिन् कारणे आत्मपदकार्योपचरात् न इडनिषेधः, किन्तु स्वरति सूतीत्यनेन ऊरामेत्वादयद्विकल्कितेट्त्वं तस्यैव व्यवस्थापकं कृपेर्नेट् इति सूत्रं, तस्मात् पदद्वयं स्वमतमपि ज्ञेयं । पूर्वधातुवत् सनः परपदादीत्युक्तं

## १९६. कर्त्तरि ।

प्रभुरयम् ।

## १९७. णक तृलौ ।

ण्वुल् तृचौ पाणिनिः । करोतीति कारकः कर्त्ता जगतः । वह—वोढा, हन-घातकः ।

---

**अमृता०**—१९६. कर्त्तरीति । पुनरधिकारोक्ति र्भावकमाधिकार निवृत्तये ।

**अमृता०**—१९७. णकेति । कर्त्तरि वाच्ये सर्वधातुभ्य उत्तरे णकः तृल् च भवति । णलावितौ । ण्वुल् तृचौ पाणिनिरिति—पाणिनीया वोरकमादिशन्तीत्युक्तम्, ततः कार्यतः साम्यमेव । जगत इति कर्मणि षष्ठी । वोढेति—वह प्रापणे, तृल् हस्य ढः, हरिघोषात्त-थोधः, टवर्गः, ढस्य हरः, सहिवहो रिति अरामस्य ओरामः । घातक इति–हनहिंसागत्योः, णकः हनोहस्य घः, हन्ते स्तो नृसिंह इति तरामः ।

---

अतः कृतधातुसन आत्मपदकारणत्वं । केषाञ्चिन्मते चिकलृप्सितेत्येव भवतीति पृथकत्वेन नोक्तं । विवर्त्तिषितेति सनन्ताद्विवृत्सधातोस्तृन् सनन्तादिट् । वृतुंवृधुश्रृधुस्यन्दूभ्यो नेट् सरामे आत्मपदाभाव इति इट् सूत्रं । अत्र आत्मपदाभावेऽपि आत्मपदकारणस्य सनः सद्भावात् न इड् निषेधः । केषाञ्चिन्मते विवृत्सितेति तन्मते आत्मपदाभावादिड् निषेध एव । संजिगंसितेति चिकलृप्सितेति च प्रथममुक्तमतो विवृत्सितेत्यपि प्रथममुक्तं । वस्तु-तस्तु । विवर्तिषितेति प्रथमं वक्तुमुचितमिति ज्ञेयं ।। १९५ ।।

**बाल०**—बाहु । बाहुल्यादिति बाहुल्यात् कर्मणि वाच्येऽपि णको भवति ह्रियत इति उह्यत इत्यर्थः ।। १९६ ।।

**बाल०**—नद्या । कर्त्तरि वाच्ये नन्द्यादेरुत्तरे अनो भवति । नन्दिर्ण्यन्तः । ल्युः पाणिनिरिति । ते योवनमादिशन्तीत्युक्तमतोऽनल्व्यारैक्यं । नन्दन इति टु नदि समृद्धौ ण्यन्तादने कृते णेर्हरः नन्दयतीत्यर्थः, नन्दनः कश्चित् । जनार्दन इति अर्द हिंसायां जननामानमसुरमर्दितवान् जनार्दनः श्रीकृष्णः । मधुसूदन दति । सूद क्षणनं हिंसा । मधुं सूदत इत्यर्थः । मधुरसुरविशेषः मधुसूदनः श्रीकृष्णः । मधुशब्दस्य मकरन्दवाचित्व-मप्यस्ति, अतो मधुसूदनशब्दो भ्रमरवाचकोऽपि । मदन इति मदी हर्षे णिर्वृ ष्णीन्द्रः घटादित्वाद्वामनः ण्यन्तादनः णेर्हरः मदयतीत्यर्थः, मदनः कन्दर्पः तपन इति तप सन्तापे तपतीत्यर्थः, तपनः सूर्यः । पतन इति पतलृ गतौ पततीत्यर्थः । विरोचन इति रुच दीप्तौ ण्यन्तादनः विरोचयतीत्यर्थः । विरोचनः सूर्यः । दर्पण इति दृप गर्वे दृप्यतीत्यर्थः, दर्पणो मुकुरः । संक्रन्दन इति क्रदि आह्वाने रोदने च संक्रदन्तीत्यर्थः । संक्रन्दन इन्द्रः । सङ्कर्षण इति कृष विलेखनाकर्षणयोः संकर्षतीत्यर्थः । सङ्कर्षणो बलदेवः । पवन इति पूङ पवने पवत इत्यर्थः, पवनो वायुः । विभीषण इति ञि भी भये णिभियो भीषादेशो ण्यन्तादनः णेर्हरः विभीषयते इत्यर्थः । विभीषणो रावणानुजः । रमण इति रमु क्रीडायां

## १९८. नामधातुहनो न घत्वं न च तत्वम् ।

हननीयकः । आतोयुक् दायकः । एवमाख्यातसूत्रेभ्यः—कुटिता कोटकः शमकः, यमेस्तु यामकः । पापचक इत्यत्राप्यन्तहरान्नवृष्णीन्द्रः स्थानिवद्भावात्, इति प्रसादेऽपि, प्रक्रिया तु चिन्त्या । चक्रपाणेस्तु पापाचकः पापचिता दरिद्रायकः दरिद्रिता इत्यादि ज्ञेयम् ।

---

अमृता०—१९८. नामेति । नामधातुत्वमापन्नस्य हनो घत्वं तत्वञ्च न स्यात्, नृसिंह प्रत्यये इति शेषः । हननीयक इति—हननमिच्छतीत्यर्थे क्यनि अद्वयस्त ईः, ततो हननीय धातो र्णकः । अत्र हनधातोरव्यवहितपरे नृसिंहप्रत्ययाभावान्नघत्वादिकमित्येव तत्र बीजम् ।

आख्यातसूत्रेभ्य इति—वक्ष्यमाणाः प्रयोगा आख्यातसूत्रेभ्य एव सिध्यन्तीति शेषः । कुटितेति—कुलो नृसिंहत्वाभावात् कुटादे रनृसिंहो निर्गुण इति गोविन्दाभावः । कोटक इत्यत्रतु णकप्रत्ययान्तत्वाद् गोविन्दः । शमक इति शमु उपशमे णकः, जनि बध्यो मन्तानाञ्चेत्यत्र कृति चेत्युक्तत्वादिह नृसिंह कृति नवृष्णीन्द्रः । यामक इति तु यमे स्तत्रैव वर्जनाद् वृष्णीन्द्र एव । पापचक इति—यङन्त पापच्य धातो र्ण्यकः, विष्णुजनात् साराम यस्य हरो रामधातुक इति यस्य हरे हरस्य स्थानि वद् भावात् अन्तहरे न गोविन्द वृष्णीन्द्राविति निषेधः प्रवर्त्तते, अतः परामस्थारामस्य वृष्णीन्द्र निषेधः ।

प्रसादेऽपीति—प्रक्रिया कौमुदी टीकाप्रसादनाम्नी । तत्र भाष्यवचनमुद्धृत्य अल्लोपस्य स्थानिवत्त्वान्न वृद्धिः—पापचक इत्येव समर्थितम् । प्रक्रियायान्तु—"नधातु लोपे इत्यत्र इक एव गुणवृद्धिनिषेधात् पापाचक" इत्येवं सिद्धान्तिम् । तत्तु न युक्तं भाष्य विरोधादिति सूचयन्नाह चिन्त्येति । चक्रपाणौ तु यङो महाहरत्वेन लुप्तावयवस्य स्थानिवत्त्वभावाद् नृसिंह प्रत्यये गोविन्दवृष्णीन्द्रयो र्न निषेध प्रसक्तिरित्याशयः । दरिद्रायक इति आतो युक् । दरिद्रितेति—दरिद्रातेरारामहर इत्यादिनारामहरः । पूर्वत्र नु युक वर्जनान्नारामहरः ।

इट् सूत्रेष्विति—आख्यातप्रकरणोक्तेड्विधायकसूत्रेषु क्रम्यादीनामात्मपदेन आत्मपदस्य कारणञ्च गृह्यत इति बहवो मन्यन्ते । केचित्तु गम्यादीनामात्मपदेन तत्कारणं न

---

निर्वृष्णीन्द्रः घटादित्वाद्रामनः ण्यन्तादनः णेर्हरः रमयतीत्यर्थः, रमणः पतिः । ल्युरिति । ल्युरिति । अयं ल्युप्रत्ययः संज्ञायां भवतीति काशिकामतं । तत्र चेति । तत्र संज्ञायां ल्युः कर्त्तरि वाच्ये भवति । ल्युप्रत्ययान्तः पुंसि वर्त्तते इत्यमरमतं । तत्र चेति । तट्टीका अमरटीका । तस्मात् पुंस्त्वस्य टीकासम्मतत्वमप्यायातं । किन्त्विति । तस्मात् नन्दनं वनमित्यत्र क्षीरस्वामिना यदुक्तं तत्र भट्टौ च पुंस्त्वस्य च व्यभिचारो दृश्यते इति । क्षीरस्वामी अमरटीकाकारः ॥ १९७ ॥

## २००. नन्द्यादे रनः ।

**ल्युः पाणिनिः । नन्दनः जनार्दनः मधुसूदनः मदनः तपनः पतनः विरोचनः दर्पणः संक्रन्दनः सङ्कर्षणः पवनः विभीषणः रमणः । ल्युरयं संज्ञायामिति काशिका । तत्र च ल्युः कर्त्तरीति पुंस्त्वविधावमरः । तत्र च नन्द्यादे र्ल्युरिति सर्वापि तट्टीका, किन्तु नन्दनं वनमित्यत्र नन्दय-**

---

**अमृता०**—२००. नन्द्यादे रिति । कर्त्तरि वाच्ये नन्दि प्रभृतिभ्य उत्तरे अन प्रत्ययः स्यात् । नन्दद्यादि रयंगणो धातुपाठसन्निवेशे न गृहीतः किन्तु नन्दन वाशन प्रभृति प्रातिपदिक गणादुद्धृत्य प्रकृतयो निर्दिश्यन्ते । नन्द्यादिभ्यः संज्ञायामेव अनः स्यादिति प्रयोजनं, णक तृलौ त्वसंज्ञायामिति । नन्दन इति टुनदि समृद्धौ ण्यन्तः, णेर्हरः, नन्दयतीत्यर्थः । नन्दनो विष्णुः, आनन्दो नन्दनो नन्द इत्यादि महाभारतम् । नन्दनः सुत इति मेदिनी च । जनार्दन इति—अर्द हिंसायाम्, जन नामानमसुरमर्दयते स्मेति जनार्दनः कृष्णः । यद्वा अर्द गतौ याचने च, जनान्शरणागतान् अर्दते याचते सेवकरूपेण स्वान्तिके इच्छतीत्यर्थः । मधुसूदन इति—सूद हिंमने, मधु नामानं दैत्यं सूदते हिनस्तीति श्रीकृष्णः । यद्वा मधु मकरन्दं सूदत इति भ्रमरः । एतौ कर्मण्यन् इत्यस्य बाधकौ । मदनइति मदी हर्षे ण्यन्तः, बटादित्वाद् वामनः, कन्दर्पइत्यर्थः । तपतीति तपनः सूर्यः । पततीति पतनं स्खलनं पापमित्यर्थः । विरोचयतीति विरोचनो भानुः, रुच दीप्तौ ण्यन्तः । दृप्यतीति दर्पणो मुकुरः, दृप हर्ष मोचनयोः । संक्रन्दयति रिपुस्त्रीरिति संक्रन्दन इन्द्रः, क्रदि आह्वाने रोदने ण्यन्तः । सम्यक् कर्षतीति सङ्कर्षणो बलदेवः । पवनो वायुः । विशेषेण भीषयते इति विभीषणो रावणानुजः । रमणः पतिः, रमु क्रीडायां ण्यन्तः । वाशनः दूषणः साधनः वर्द्धनः शोभनः सहनः दमनः जल्पनः लवण इत्येते च नन्दद्यादौ पठ्यन्ते ।

ल्युरयं संज्ञायामिति—संज्ञायामेव कर्त्तरि ल्यु र्भवेदिति हि काशिकामतम्, न किन्तु तत्र लिङ्गं निर्दिष्टमिति भावः । अमरस्तु ल्युःसंज्ञायां कर्त्तरीमनिजित्यादि वचनं लिङ्गनिर्णये पुंस्त्वप्रकरणे ग्रथितवान् । तत्र च सर्वेतट्टीकाकृतः कर्त्तरि नन्द्यादे र्ल्युरित्याहुः, अतश्च पुंसीति तैरप्यनुमतम् । तत्तु सव्यभिचारम्, यतः स्वर्गवर्गे—सुतो मातलि र्नन्दनं वनमित्यत्र देवेन्द्रस्योपवनार्थे नन्दनशब्दो नपुंसकतया निर्दिष्टः अमरेणैव । तत्र च क्षीरस्वामी तट्टीकायां नन्द्यादे र्ल्युरित्युवाच । अतो नन्द्यादेर्ल्यु र्भवन्नपि नपुंसके च स्यादिति

---

**बाल०**—गमि । व्यक्तार्थमेतत् । व्रजं गमीति निपातात् भविष्यति णिनिर्वृष्णीन्द्राभावश्च । आधमर्ण्येत्यादिना षष्ठीनिषेधः । गामीत्यादौ निपातात् भविष्यति णिनिः । स्थायीति पूर्ववत् । प्रतिबोधीति बुध अवगमने । प्रयायीति या प्रापणे युक् । भावीति भू सत्तायां । आदिपदेन शिष्टप्रयोगानुसारेणान्यत्रापि णिनिर्विधेयः ।। १९९ ।।

**बाल०**—पचा । कर्त्तरि वाच्ये पचादेरुत्तरे अत् भवति । पच इति पचतीत्यर्थः । वद इति वद व्यक्तायां वाचि । देव इति दिवु क्रीडादिषु । मेष इति मिष स्पर्द्धायां । सेव

तीति ल्युरिति क्षीरस्वामो । 'नन्दनानि मुनीन्द्राणां रमणानि वनौकसाम्' इति नन्द्यादि प्रकरणे भट्टिः ।

**२०१. ग्रहादेर्णिनिः ।**

आदेर्णइत्, इन् इतिस्थिते, इनहन्नित्यादि त्रिविक्रमः । ग्राही स्थायी ।

**२०२. गमि गाम्यादयस्तु भविष्यति साधवः ।**

**व्रजं गमी गामी, स्थायी प्रतिबोधी प्रयायी भावीत्यादि ।**

---

तन्मतमायतम् । तदेव युक्तमिति प्रतिपादयन् भट्टि प्रयोगमुपन्यस्यति—नन्दनानीत्यादि । एतेन संज्ञायामिति मतस्य च व्यभिचारो दर्शितः । यथा हि तत्र टीकायाम्—नन्दनानि नन्दकानि, रमणानि मनोहराणीति मल्लिनाथः । तस्मादसंज्ञायाञ्च नन्द्यादेरनः प्रयुज्यते—इत्यपि ग्रन्थकृत आशयो ज्ञेयः ।

**अमृता०**—२०१. ग्रहादेरिति । ग्रहादेरुत्तरे कर्त्तरि णिनि प्रत्ययः स्यात् । ग्रहादिरपि न धातुपठितो गणः । ग्राहीति—ग्रहउपादाने, गृह्णातीत्यर्थः । नृसिंह परत्वाद् वृष्णीन्द्रः । स्थायीति—आतो युक्, तिष्ठतीत्यर्थः । उत्साही उद्वासी मन्त्री सम्मर्दी निरक्षी निश्रावी निवापी निशायी अयाची अव्याहारी अव्राजी अवादी अवासी अकारी अहारी अविनायी विशयी विषयी अपराधी उपरोधी अभिभावी परिभवी परिभावी इत्येते च ग्रहादौ बोध्याः । एषु निरक्षादय श्चत्वारो निपूर्वा एव, अयाच्यादयः अष्टौ नञ् पूर्वा एव, विषये देशे, अभिमावी तु भूते प्रयुज्यते । केचिदत्र वृष्णीन्द्राभावेऽपि निपातिताः ।

**अमृता०**—२०२. गमीति । सुगमम् । कर्त्तरीत्येव । व्रजं गामीति निपाताद् भविष्यदर्थः । व्रजंगमीति वृष्णीन्द्राभावश्च । व्रजं गमिष्यतीत्यर्थः । आधमर्ण्ये भविष्यदर्थे णक णिन्योर्योग इति कर्मणि षष्ठी निषेधः । प्रति बोधीति बुधअवगमने । प्रयायीति या प्रापणे, युक् । भावीति भूसत्तायां वृष्णीन्द्रः । एतेषां भविष्यदर्थं एव निपातफलम् ।

---

इति सेवृ सेवने । चर इति चर गतौ । चल इति चल कम्पने । पत इति पतलृ गतौ । हन इति हन हिंसागत्योः ।। २०० ।।

**बाल०**—चरा । अत्प्रत्ययान्तानां चरादीनां द्विर्वा भवति, नरस्यान्तस्य स्थाने अरामश्च भवति । चराचर इति चराचरो जङ्गमः । अदिपदेन चलाचलः पतापतः वदावद इत्यपि भवतीति मतं ।। २०१ ।।

**बाल०**—हन्ते । अत्प्रत्ययान्तस्य हन्तेर्द्विर्वा भवति । नरामस्यारामश्च घत्वञ्च । घत्वञ्चेति नरे नारायणे चेत्यर्थः । घनाघन इति । शत्रुघातुकमत्तेभवर्षुकाब्दा घनाघना इति नानार्थवर्गः । पट विस्तारे चुरादिर्ज्ञेयः । अस्य अत्प्रत्ययान्तपटस्यतु पटूपट इति साधुरिति शेषः । पक्षे पटश्च । हेतुमाह णेरिति । पटूपट इति चुरादिणेरनित्यत्वात् तदभावः । अत्प्रत्ययान्तस्य द्वित्वं नरस्यान्तस्य ऊरामश्च । अत्र णेरभावो ग्रन्थकृतामभीष्टः अत एवाह पक्षे पटश्चेति । जुमरमते पटापटः पाटश्च ।। २०२ ।।

**२०३. पचादेरत् ।**

अच् पाणिनिः । पचः देवः मेषः सेवः चरः वदः चलः पतः हनः ।

**२०४. चरादीनामत् प्रत्ययान्तानां द्विर्वा नरस्यारामश्च ।**

चराचर इत्यादि ।

**२०५. हन्तेर्हस्य घत्वञ्च ।**

घनाघनः । पट विस्तारे चुरादिः, अस्य तु पट्टपटः । पक्षे पटश्च णेरनित्यत्वात् । जुमरमते तु पाटः । पटापट इत्यादि ।

---

**अमृता०**—२०३. पचादेरिति । पचादे रुत्तरे कर्त्तरि वाच्ये अत् प्रत्ययो भवति, अरामशेषः । पच इति डुपचष पाके, पचतीत्यर्थः । मेष इति मिष स्पर्द्धायाम् । वपः तपः नदः वसः भषः प्लवः गरः तरः जरः मरः क्षमः कोयः व्रणः नर्त्तः दर्शः सर्पः दर्पः दम्भः जारः भरः श्वपच इत्येते च पचादयः । पचादिराकृतिगण इति वहव आहुः ।

**अमृता०**—२०४. चरेति । चरादीनामत्प्रत्ययान्तानां विभाषया द्वि र्भवति। द्वित्वे च नरस्यान्तस्य स्थाने आरामश्च स्यात् । चराचरः स्थावर जङ्गमः । एवं चलाचलः पतापतः वदावद इति, पक्षे चर इत्यादीनां स्थितिः ।

**अमृता०**—२०५. हन्तेरिति । चरादिषु हन्ते रत्प्रत्ययान्तस्य हस्य घत्वञ्च भवति, चकारात् नरान्तस्य अरामस्य आरामश्च स्यात्, घत्वन्तु नरनारायणयोरेव । घनाघनइति—शक्रधातुकमत्तेभवर्षुकाब्दा घनाघना इत्यमरः । पक्षे पट इति—णेरनित्यत्वेनोद्धवारामस्य न वृष्णीन्द्र इत्यर्थः । जुमरमते तु वृष्णीन्द्रः, नरारामस्य न ऊत्वम्, किन्तु पाटापाट इत्येवम् । पटापट इति स्वमते ।

---

**बाल०**—रात्रि । व्यक्तार्थमेतत् । रात्रौ अटतीति रात्रिमटो रात्र्यटश्च । निपातादत् । रात्रिमट इत्यत्र पूर्वपदात् मुम् च । तिमिङ्गिल इति गॄ निगरणे इति तिमिं गिलतीति निपातादत् ॠरामस्य इर् पूर्वपदात् मुम् च गिरो रोल इत्यनेन लत्वन्तु सिध्यत्येव । तिमिर्मत्स्यविशेषः तिमिङ्गिलोऽपि मत्स्यविशेषः ॥ २०३ ॥

**बाल०**—ईशो । कर्त्तरि वाच्ये ईशोद्धवात् कॄ विक्षेपे प्रीञ तर्पणे गॄ निगरणे ज्ञा अवबोधने इत्येतेभ्यश्चोत्तरे को भवति क इत् । क्षिप इति क्षिप प्रेरणे कंसारित्वाद्-गोविन्दाभावः । बुध इति बुध अवगमने । बुधो ग्रहविशेषः पण्डितश्च । भूरुह इति रुह जन्मनि प्रादुर्भावे च । भूरुहो वृक्षः । किर इति ॠरामस्येर् कंसाराविति इर् । किरः पक्षी । प्रिय इति । धातोश्चतुःसनस्येयुवौ सर्वेश्वर इति इय् । गिर इति ॠरामस्येर् । ज्ञ इति आरामहरः कंसारिसर्वेश्वर-रामतुके इटि उसि चेति आरामहरः । बाहुल्यादिति । बाहुल्यात् वाऽसरूपोऽस्त्रियामित्यनेन णक तृनौ व तेन क्षेपकः क्षेप्तेति ॥ २०४ ॥

**बाल०**—उपे । उपेन्द्रे पूर्वपदे सति कर्त्तरि वाच्ये आरामान्तधातो रुत्तरे को

## २०६. रात्रिमट रात्र्यट तिमिङ्गलादयः साधवः ।

## २०७. ईशोद्धव किरति प्रीणाति-गृ.ज्ञाभ्यः कः ।

**कइत् अरामशेषः । क्षिपः बुधः भूरुहः किरः प्रियः गिरः ज्ञः । बाहुल्यात् क्षेपकः क्षेप्ता ।**

---

**अमृता०**—२०६. रात्रिमिति । अत् प्रत्ययेन रात्रिमटादयो निपात्यन्ते । रात्रौ अटतीत्यर्थे रात्रिमटः रात्र्यट इति च साधू । पूर्वत्र मुमागमश्च निपातफलम् । तिमिङ्गल- इति—तिमिं मत्स्यविशेषं गिलतीति जलजन्तुविशेषः, मुमागमो निपातफलम् । गॄनिगरणे निपातात् ॠरामस्येर् मुम् च । आदि शब्देन रात्रिश्चरः रात्रिचर इत्यपि ज्ञेयम् ।

**अमृता०**—२०७. ईशेति । कर्त्तरि वाच्ये इशोद्धवाद्धातो रुत्तरे तथा कॄप्रभृति चतुर्भ्यश्चोत्तरे कप्रत्ययः स्यात् । कइत् कंसारित्वार्थः । क्षिप इति—क्षिप क्षेपणे, कंसारित्वाद् गोविन्दाभावः । एवंबुध अवगमने, बुधः पण्डितो ग्रह विशेषश्च । भूरुह इति—रुह जन्मनि प्रादुर्भावे, भुविरोहतीति वृक्ष इत्यर्थः । एते ईशोद्धवाः । ज्ञइति—आराम हरः कसारि सर्वेश्वर रामधातुक इत्यादिना आरामहरः । बाहुल्यादिति—वाऽसरूपोऽस्त्रिया- मित्यनेन सामान्ययो र्णकतृलोश्च प्रवृत्तिरिति भावः ।

---

भवति । सुग्ल इति ग्लै हर्षक्षये । अत्र भाविनि भूतवदुपचारादारामान्तपाठः । आरामहर इत्यादिना आरामहरः । गोघ्न इति बाहुल्यात् कः । गमहनजनखनघसामुद्धवादर्शनं कंसारिसर्वेश्वरे ङ विनेति उद्धवादर्शनं हस्य घत्वं । स्वर्गेषुपशुवाग्वज्र इत्यमेरोक्तत्वात् गोशब्देनात्र वाग्जले गृह्येते । अतिथिर्ना गृहागते इत्यमरः ॥ २०५ ॥

**बाल०**—धेट् । कर्त्तरि वाच्ये धेट्प्रभृतिभ्य उत्तरे शो भवति श इत् । शिवत्वात् कृष्णधातुकत्वमिति तस्मात् सर्वत्र शपि कृते अरामहरः ए अयोरविष्णुपदान्ते इति अरामहरः कर्त्तव्यः । धय इति । धेट् पाने शिवत्वान्नारामान्तपाठः ए अयः । पिव इति पा पाने पः पिवः । जिघ्र इति घ्रा गन्धोपादाने घ्रो जिघ्रः । धम इति ध्माशब्दाग्नि- संयोगयोः ध्मो धमः । पश्य इति दृशिर प्रेक्षणे दृशेः पश्यः । संयोगादित्यत्र साहचर्यादिति वा पाठः । पिवतेरेवेति ग्रहणमिति शेषः । पापेति पा रक्षणे तृन् ॥ २०६ ॥

**बाल०**—अनु । उपेन्द्राभावे सति लिप उपदेहे विदलृलाभे इत्येताभ्यां धृञ धारणे पॄ पूरणे विद वेदनाख्याननिवासेषु विद ज्ञाने वाउत्पूर्वं एजृ कम्पने चिती संज्ञाने । ण्यन्तेभ्य एतेभ्यः सातेर्ण्यन्तात सतृ सुखे सह मर्षणे इत्याच्च उत्तरे शो भवति । ददा । उपेन्द्राभावे सति ददातिदधातिभ्यामुत्तरे शो भवति णश्च । ज्वला । उपेन्द्राभावे सति ज्वलादेरुत्तरे णातौ भवतः । प्रा । प्रादेरुत्तरस्मात् ज्वलादेरुत्तरे अत् भवति । ज्वलादि- गणः । भू । उपेन्द्राभावे सति भुदुनीभ्यश्चोत्तरे णातौ भवतः । लिम्प इति कृष्ण- धातुकत्वात् तस्य शः अरामहरः मुचादेर्नुम् श इति णुम् । विन्द इति पूर्ववत् नुम् । धारय इति ण्यन्तात् शः शपः कृष्णधातुकत्वात् न णेर्हरः गोविन्द ए अय अरामहरः ।

**२०८. उपेन्द्रे आरामान्तात् कः ।**

सुग्लः प्रज्ञः । बाहुल्यात् गौर्हन्यते यस्मै स गोघ्नोऽतिथिः ।

**२०९. धेट् पा घ्रा ध्मा दृशिभ्यः शः ।**

शइत् अरात शेषः । शिवत्वात् कृष्णधातुकत्वम् । धयः पिवः जिघ्रः धमः पश्यः । धेट् संयोगात् पिवतेरेव, पाते स्तु पाता ।

**२१०. अनुपेन्द्रे लिपि विद्लृ धारि पारि वेद्युदेजि चेति साति**

---

**अमृता०**—२०८. उपेन्द्र इति । उपेन्द्रे पूर्वपदे सति आरामान्ताद् धातोरुत्तरे कर्त्तरि वाच्ये कः स्यात् । सुग्ल इति—ग्लैहर्षक्षये, इह भाविनि भूतवदुपचर्य आरामान्तत्वम्, रामधातुके आरामहरः, सुष्ठु ग्लायतीत्यर्थः । एवं प्रकृष्टं जानातीति प्रज्ञः । गोघ्न इति—बाहुल्यात् हनः कः, गमहनेत्यादिनोद्धवादर्शनं, हस्य घत्वञ्च ।

**अमृता०**—२०९. धेटिति । कर्त्तरि वाच्ये धेट् प्रभृतिभ्यः पञ्चभ्यः श प्रत्ययो भवति । शिवत्वादिति—शरूप कृष्णधातुके सति शप्, ततः सर्वत्र अरामहर एअयो रविष्णु पदान्त इत्यरामहरः कार्यः । धय इति धेट् पाने, शिव परत्वान्नारामान्तपाठः, शप्, अरामहरः, एअय् । पिव इति—शिव परत्वेन पिवादेशः एवं घ्रा धातोः जिघ्रः, ध्मा इत्यस्य धमः, दृशेः पश्यश्चादेशाः । पातेरिति पा रक्षणे अदादे रित्यर्थः । अत्र दृशे रीशोद्धवत्वेन कप्रत्यये प्राप्ते तदपवादः शविधिः । केचिदुपेन्द्र इति चानुवर्त्तयन्ति । तेन उद्धयः विधयः सुपिवः संजिघ्रः विधमः प्रपश्य इत्यादयश्च । तत्र तूपेन्द्रे आरामान्तादिति कस्यापवादः ।

**अमृता०**—२१०. उनुपेन्द्र इति । उपेन्द्ररहितेभ्यो लिप्यादि नवभ्य उत्तरे कर्त्तरि

---

आदिपदेन पारयः वेदयः उदेजयः चेतय इति । सातय इति पूर्ववत् । एवं साहय इति । दद इति शे कृते शप् जुहोत्यादेरदादित्वात् । तस्य महाहरः । जुहोत्यादेः पूर्ववद्द्विर्वचनं शब्लुकीति द्विर्वचनं श्नानारायणयोरारामहरो निर्गुणकृष्णधातुक इति आरामहरः । दार इति णे केते युक् । एवं दधः धाय इति । ज्वालः ज्वल इनि । ज्वल दीप्तौ । चालः चल इति चल कम्पने । विपुलमिति पुल महत्त्वे । अस्य ज्वलादित्वं कुटादित्वञ्च अतः कुटादेरनृसिंहनिर्गुण इत्यनेन गोविन्दाभाव इति । भावः भव इति । भावः पदार्थः । भवो रुद्रः । दुनोतेरेवेति ग्रहणमिति शेषः । दावः दव इति । दवदावौ वनारण्यवह्नी इति नानार्थवर्गः । नायः नय इति । नीञ प्रापणे ॥ २०७ ॥

**बाल०**—नौ च । नौ पूर्वपदे सति लिपेरुत्तरे शो भवति । निलिम्पा इति पूर्ववत् ॥ २०८ ॥

**बाल०**—गवा । गवादौ पूर्वपदे सति विन्दतेरुत्तरे संज्ञायां शो भवति । गोविन्द इति गां विन्दतीत्यर्थः । अरविन्दमिति अरं शीघ्रं विन्दति अर्थात् प्रकाशमित्यरविन्दं पद्मं ॥ २०९ ॥

**साहेः शः, ददाति दधातिभ्यां णश्व, ज्वलादे र्णातौ; प्रादे स्त्वत्, भू दुनीभ्यश्च ।**

**लिम्पः विन्दः धारय इत्यादि । सातिः सौत्रः-सातयः । तथा ददः दायः दधः धायः । तथा ज्वालः ज्वलः चालः चलः प्रज्वलः प्रचलः । विपुलमित्यादि । भावः भवः, दुनोतेरेव दावः दवः नायः नयः ।**

---

शप्र प्रत्ययः स्यात् । अनुपेन्द्रे ददाति दधातिभ्यामुत्तरे णप्रत्ययश्च शप्रत्ययश्च स्याताम् । ज्वलादे रुत्तरे णः अत् च स्याताम्, प्राद्युपेन्द्रादुत्तरस्मात्तु ज्वलादे रत् प्रत्यय एवभवति, तेषां पचादिषु पाठादिति भावः । उपेन्द्ररहितेभ्यो भूदुनीभ्यश्चोत्तरे णः अत् च भवतः ।

लिम्पइति—कृष्णधातुक परत्वात् तुदादे शपः शः, आरामहरः, मुचादेरिति नुम्, लिम्पतीत्यर्थः । एवं विन्दः । धारय इति—ण्यन्त धृ धातोः शः, कृष्णधातुकपरत्वेन णे र्हरो न, गोविन्दः, एअय्, अ राम हरः । इत्यादि पदेन पारयः वेदयः उदेजयः (एजृ कम्पने), चिते र्ण्यन्तात् चेतयः, सातयः, ण्यन्त सहेः साहयइति । अनुपेन्द्र इतिकिम्—उपेन्द्रे तु ईशोद्धवेति क एव—प्रलिपः संविद इत्यादि । दद इति—शेकृते शपि च कृते अदादेः शपो महाहरः द्विर्वचनं, श्ना-नारायणयो रित्यारामहरः । दाय इति—णः, आतो युक् । सरूपत्वाद् वाऽसरूपविधिना अयाप्ते णस्य विधानानम् । एवं दधाते रपि ज्ञेयम् । ज्वाल इति णः, ज्वल इति अत् । एवमन्ये च ज्ञेयाः । ज्वालादि गणः—ज्वलदीप्तावित्यारभ्यः कम गतावित्यन्तः त्रयस्त्रिशत् । प्रज्वल इत्यादि—उपेन्द्रयुक्तत्वात् अत् । पलगतौ । दुनोतेरिति स्वादेरेव ग्रहणम्, दुर्गतावित्यस्य तु णकः—दावकः । दावो दवश्च अरण्य वह्निः । प्रभावः प्रभवः विनयः अनुनय इत्यादयस्तु पश्चात् समासेन निष्पन्नाः ।

---

**बाल०**—आरा । व्यक्तार्थमेतत् । आसं । कर्त्तरि वाच्ये आसंभ्यामुत्तरस्मात् श्रुव उत्तरे णो भवति । अव । अवादुत्तरयोर्हृसोः सम्बन्धे णः स्यात् कर्त्तरि । अते । व्यक्तार्थमेतत् । हाय इति ओ हाक् त्यागे णे कृते युक् । व्याध इति व्यध ताडने । श्वस इति श्वस प्राणने । देह दति उपचर्यादर्शनयोरदादिः । लेह इति लिह आस्वादने । श्लेष इति श्लिष आलिङ्गने । को न स्यादिति । परत्वादपवादत्वाच्चेति शेषः । उपेन्द्रे आरामान्तात् इत्यनेन कः कथं न भवतीति शङ्का स्यादित्युक्तं को न स्यादिति । अवश्याय इति श्यैङ् गतौ अवपूर्वस्य श्यैङो व्यधादित्वं ग्रन्थकृतामभिप्रेतमन्यथा आरामान्तत्वे पूर्वेणैव उदाहृतं स्यात् । अवश्यायन्तु नीहारस्तुषारस्तुहिनं हिममित्यमरः । स्रु गताविति दन्त्य-सरामादिः । शृणोतेस्त्विवति श्रु श्रवणे इत्यस्यत्वित्यर्थः । आस्रव इति पदादित्वादत् । विपरीतस्तु भ्रम भ्रम इति । आश्रवशब्दस्य तालव्य-मध्यत्वमास्रव-शब्दस्य दन्त्य-मध्यत्वञ्च भ्रमइत्यर्थः । अथवा श्रु गताविति तालव्यादिरप्यस्ति, किन्तु श्रवणार्थश्रुवः आश्रवः गत्यर्थश्रुवस्तु आश्रव इत्येव भ्रमः । अवहार इति हृञ हरणे । अवसाय इति सोऽन्तकर्मणि युक् । अस्यापि व्यधादित्वादेव णः कर्त्तव्यः नतु आरामान्तात्वात् । अत्याय इति इन गतौ । प्रत्याय

## २११. णौ च लिपेः शः ।

निलिम्पा देवाः ।

## २१२. गवादौ विन्दतेः शः संज्ञायाम् ।

गोविन्दः अरविन्दम् ।

## २१३. आरामान्ताद् व्यधादेश्च णः, आसंभ्यां श्रुवः, अवतो हृसोरतेरिणः ।

हायः व्याधः श्वासः देहः लेहः श्लेषः । को न स्यात् अवश्यायः, सुगतौ आस्रावः संस्रावः । शृणोतेस्तु वचने स्थित आश्रव इत्यमरः । विपरीत

---

अमृता०—२११. णौ चेति । णौ अपेन्द्रे पूर्वपदे च लिपेः शप्रत्ययः स्यात् । पूर्वेणाप्राप्ते अत्र विधानम् । पूर्ववदेव साधनम् ।

अमृता०—२१२. गवादाविति । गवादौ पूर्वपदे सति कर्त्तरि विन्दतेः शः स्यात् । संज्ञायामेव । गोविन्द इति—गां पृथिवीं विन्दति उद्धरतीति यद्वा गोवर्द्धनगिरिधारणेन गाः विन्दते परित्रायत इति गोविन्दः कृष्णः । अन्या च निरुक्ति समासे वक्ष्यते—गवामिन्द्रत्वेन सुरभिदेवेन्द्राभ्यामभिषेकत्वाद् गोविन्द इति । अरविन्दमिति—अरं शीघ्रं विन्दति प्रस्फुटित, अरान् कालचक्रांशान् विन्दतीति वा, अरविन्दं पद्मम् ।

अमृता०—२१३. आरामान्तादिति । कर्त्तरि वाच्ये आरामान्ताद्धातो व्यधादेश्चोत्तरे णः स्यात्, आसं पूर्वस्रु गतौ इत्यस्माच्च णः स्यात्, अव पूर्वाभ्यां हृञ् हरणे सोऽन्तकर्मणि इत्येताभ्यां, तथा अति पूर्बादिण् गतावित्यस्माच्च णप्रत्ययो भवति । हाय इति—ओहाक् त्यागे, आतो युक्, जहातीत्यर्थः । विध्यतीति व्याधः, श्वसितीति श्वासः, देग्धीति देह इत्याति व्यधादौ दिहादि त्रयाणामीशोद्धवेत्यादिना कः प्राप्नोतीति तन्निरस्यति—कोन स्यादिति । उपलक्षणमिदम्, उपेन्द्रे आरामान्तादिति प्राप्तः कोऽपि न स्यात्—श्यैङ् गतौ व्यधादिः, अवश्यायः । आश्रव इति श्रुश्रवणे, पचादेरत् ।

---

इत्यपि दृश्यते इति । तस्मात् प्रतिपूर्व इनधातोरपि णो भवतीति । अवतानवितानाविति तनु वस्तारे । इति चेति दृश्यत इति शेषः ॥ २१० ॥

बाल०—ग्राह । ग्राह इति ग्रह उपादाने व्यधावित्वादेव णः स्यादिति किन्तु जलचरवाच्य एव निपातफलं । ग्राहो जलचरे वर्त्तते । ग्रहोऽवहार इत्यमरः ॥ २११ ॥

बाल०—नृती । नृती गात्रविक्षेपे खनु अवदारणे इत्येतयोः रन्ज रागे इत्यस्य च शिल्पिनि कर्त्तरि वाच्ये टको भवति । ट इत् । पाणिनिरिति । ते वोरकमादिशन्ति ॥२१२

बाल०—गाय । गै शब्दे इत्यस्य शिल्पिनि कर्त्तरि वाच्ये थक-टणनौ भवतः

स्तु भ्रमः । अवहारः अवसायः अत्यायः । प्रत्याय इत्यपि दृश्यते, अवतान वितानाविति च ।

**२१४. ग्राहो जलचरे साधुः ।**

**२१५. नृति-खन्योष्ठकः शिल्पिनि रन्जेश्च ।**

ष्वुन् पाणिनिः ।

**२१६. गायते स्थक-ट्णनौ ।**

नर्त्तकः खनकः । तथा गायकः गायनः ।

---

विपरीतस्तु भ्रम इति—आस्राव इति णप्रत्ययान्तस्य तालव्यमध्यत्वं तथा आश्रव इत्यत् प्रत्ययान्तस्य दन्त्य मध्यत्वञ्च भ्रम इत्यर्थः । अव हरतीति अवहारः, अवस्यतीति अवसायः, युक् । अत्येतीति अत्यायः । प्रतिपूर्वादपि इणो णो दृश्यत इत्यर्थः । प्रत्ययस्तु अल् प्रत्ययान्तः । तनु विस्तारे इत्यस्य च णप्रत्ययेन अवतान वितानौ दृश्येते तथा उत्तान सन्तानौ च ।

**अमृता०**—२१४. ग्राह इति । ग्रह उपादानेधातो र्व्यधादित्वेन हि णे सिद्धेऽपीह जलचर वाच्यार्थं पृथक् सूत्रितम् । जलचरेऽपि हिंस्रजन्तौ हि रूढी, कुम्भीर हाङ्गारादयो ग्राहाः । बाहुल्यात् कप्रत्ययश्च, तत्रभाविनि भूतवदुपचर्य्य ईशोद्धवेति कः, सङ्कर्षणः, गृह्णातीति गृहम् । गृह्णान्ति पुरुषोपार्जितमिति गृहा दाराः ।

**अमृता०**—२१५. नृतीति । कर्त्तरि शिल्पिनि वाच्ये नृती खन्योः रञ्जेश्च टक प्रत्ययः स्यात् । टइत् ईवर्थः । शिल्पी कारुः । उदाहरणान्यग्रिम सूत्रे ।

**अमृता०**—२१६. गायतेरिति । गैगाने इत्यस्मात् कर्त्तरि शिल्पिन्यभिधेये थकः ट्णनश्च भवतः । टणावितौ । नर्त्तक इति—नृती गात्रविक्षेपे, नृत्यजीवी नट इत्यर्थः ।

---

टणावितौ । नर्त्तकः शिल्पिनि विशेषः, खनकोऽपि तथा । गाथकगायनौ समानार्थौ । टित्त्वादीप् वक्ष्यते । नर्त्तकी खनकी गायनीति ।। २१३ ।।

**बाल०**—रञ्जे । असि अके अने घिणुनि च परे रञ्जेर्नस्य हरो भवति । रजकः प्रसिद्धः । टित्त्वादीप् रजकीति । नर्त्तितेति तृन् । एवं गातेति ।। २१४ ।।

**बाल०**—प्रु । प्रुङ गतौ सृ गतौ लूञ छेदने इत्येतेभ्य उत्तरे साधुकारिणि कर्त्तरि वाच्ये अको भवति । सरूपत्वान्नतु णक इति । वाहसरूपोऽस्त्रियामित्यत्र असरूपो भिन्नाकारवशेषः इत्युक्तं । णकारशेषष्य तु:भिन्नाकारता नास्तीति णकस्य सरूपत्वमतो न णक इत्यर्थः । श्रवतेरिति । श्रु गतावित्यस्यापि अको भवतीति कालापानां मतं । द्रवतेस्त्विति । द्रु गतावित्यस्य तु अको भवतीति जुमरमतं । अपिशब्दो निश्चयार्थः । इत्यपीत्यत्र इतीति वा पाठः । अस्माकं मतेतु णको भवति ।। २१५ ।।

**२१७. रञ्जे र्नस्य हरः असि अके अने घिणुनि च ।**

**रजकः । अशिल्पिनि तु नर्त्तिता गाता इत्यादि ।**

**२१८. प्रु सृ लूभ्योऽकः साधुकारिणि ।**

**सरूपत्वान्न तु णकः । प्रवकः सरकः लवकः । श्रवतेश्चेति कालापाः श्रवकः, द्रवतेस्तु द्रवक इत्यपि जुमरमतम् ।**

---

एवंखनु अवदारणे, खनकः । गायको गायनश्चैकार्थः, गीत वृत्तिक इत्यर्थः । टित्त्वात् ईप् —नर्त्तकी खनकी गायकी गायनीति ।

**अमृता०**—६१७. रञ्जेरिति । असि अके अने घिणुनि च प्रत्यये परेरञ्जे र्नस्य हरः स्यात् । रजको वस्त्रधौतकारी । टित्त्वादीप् रजकी । असि—रजः, अने-रजन, घिणुनि—रागी । नर्त्तिता गातेति सामान्यतः कर्त्तरि तृल् ।

**अमृता०**—२१८. प्रुसृलूभ्य इति । कर्त्तरि साधुकारिण्यभिधेये एभ्य उत्तरे अक प्रत्ययः स्यात् । सरूपत्वादिति—णकप्रत्ययस्यानुबन्धवर्जनेन अक इत्यवशेषात् समान रूपत्वमेव अकेन, ततो वाऽसरूपोऽस्त्रियामिति परिभाषा नहि प्रवर्त्तत इत्यर्थः । श्रवतेश्चेति —श्रुगतौ तालव्यादिः, अस्मादपि अकं मन्यन्ते कालापाः । द्रवते स्त्विति—द्रुगतावित्य-स्मादपि अकः स्यादिति जुमरमतम् । स्वमते तु श्रावकः द्रावक इति णक एव । साधु-कारिणीति किम्—दुष्टं यथास्यात्तथा प्रवतीत्याद्यर्थे णक तृलौ—प्रोता पावक इत्यादि ।

---

**बाल०**—अक । आशिषि गम्यमानायां धातोरुत्तरे अको भवति । जीवतादित्यर्थ-व्याकारेणाशीः सूचिता यथोक्तं तुह्योस्तातङाशिषि वा सर्वत्र इति ॥ २१६ ॥

**बाल०**—कर्मण्यण् । कर्मणि पूर्वपदे सति कर्त्तरि वाच्ये धातोरुत्तरे अण् भवति । ण इत् । ह्वेञ । कर्मणि पूर्वपदे सति कर्त्तरि वाच्ये ह्वेञादिभ्यश्चोत्तरे अण् भवति । कर्मण्यनुपेन्द्रादारात् क इत् वक्ष्यमाणसूत्रेण के प्राप्ते अण्विधानं । विश्वकार इति विश्वं करोतीत्यर्थः । बाहुल्यान्नेति अणिति शेषः । महान्तं विशालं । कृष्णह्वाय इति ह्वेञ स्पर्द्धायां शब्दे च अणि कृतेयुक् कृष्णं ह्वयतीत्यर्थः । विश्वमाय इति मा माने माङ माने मीङ प्रणिदाने वा । प्रथमोऽदादिः परपदी, द्वितीयो जुहोत्यादिः तृतीयो भ्वादिः ॥ २१७ ॥

**बाल०**—सत्य । व्यक्तार्थमेतत् । सत्यं करोतीत्यर्थे अण् सिध्यत्येव किन्तु पूर्वापदान्मुम् निपातफलं । सत्यस्य कार इत्यर्थे मुमेव निपातफलं । कारः करणं । अगदङ्कार इति अगदं करोति अगदस्य वेति निपातफलं पूर्ववज्ज्ञेयं । अगदोऽरोगः । अण् पक्षे अगदङ्कारो वैद्यः । रोगहार्यगदङ्कारो भिषग्वैद्यौ चिकित्सक इत्यमरः । अस्तुङ्कार इति । अस्त्विति अस्तुप्रतिरूपकमव्ययमभ्युपगमे वर्त्तते । अस्त्विति करोति अस्त्वित्यस्य कारो वेत्यर्थः । अत्रापि निपातफलं पूर्ववत् । लोकम्पृण इति । पृण प्रीणने ईशोद्धवेत्यादिना

## २१९. अक आशिषि ।

जीवतात् जीवकः ।

## २२०. कर्मण्यन् ह्वेञ् वेञ् माभ्यश्च ।

उपेन्द्रेत्यादिना समासः । विश्वकारः । कृष्णं शृणोति गच्छति पश्य-

---

**अमृता०**—२१९. अक इति । आशिषि गम्यमानायां धातुमात्रात् कर्त्तरि अकः स्यात् । आशीः शुभेच्छा ज्ञापनं, तच्च प्रार्थनाया एवाङ्गम् । जीवतादिति—तुह्योः स्तात्-ङाशिषि वा सर्वत्रेति आशी र्व्यञ्जक पद प्रयोगेण तदर्थः प्रकाशितः । एवं नन्दकः, भक्तेर्लभकः, हरेः सन्तोषक इत्यादयश्च ।

**अमृता०**—२२०. कर्मणीति । कर्मणि कारके पूर्वपदे कर्त्तरि वाच्ये धातोरण् प्रत्ययः स्यात् । तथा कर्मणि पूर्वपदे ह्वेञ् स्पर्द्धायां, वेञ् तन्तु सन्ताने, मा माने, माङ् माने, मेङ् प्रणिदाने इत्येतेभ्यश्चोत्तरे अण् प्रत्ययो भवति । एषां पृथग् ग्रहणं वक्ष्यमाण कप्रत्यये प्राप्ते तदपवादार्थम् । विश्वकार इति—विश्वंकरोतीत्यर्थः । बाहुल्यान्नेति—प्राप्यकर्मणि त्याज्यकर्मणि च अण् नेष्यत इति भावः । विश्वकार इति तूत्पाद्यकर्मणः पूर्वपदत्वम्, चन्दनलाव इति विकार्य कर्मणः, वैष्णवकार इति संस्कार्य कर्मणः ।

---

कः लोकस्य पृण इति षष्ठीसमासः निपातात् पूर्वपदान्मुम् । भ्राष्ट्रे इन्धे इति । इन्धे परे भ्राष्ट्रशब्दे निपातात् मुम् भवतीति ज्ञापयितुं भ्राष्टे इन्ध इत्युक्तं । भ्राष्ट्रमिन्ध इति । इन्धनमिन्धः ञि इन्धी दीप्तौ भावे घण् । भ्राष्टस्य इन्धः भ्राष्टमिन्धः । भ्राष्टं कपालिका (खोला इति ख्याते) । अग्निमिन्ध इति अग्नेरिन्ध इत्यर्थः । निपातान् मुम् ॥ २१८ ॥

**बाल०**—कर्मण्य । कर्मणि पूर्वपदे सति अनुपेन्द्रादारामान्ताद्धातोरुत्तरे कर्त्तरि वाच्ये को भवति । मुक्तिद इति डु दाञ दाने आरामहरः । मुक्तिं ददातीत्यर्थः । त्रैङ् इति त्रैङ् पालने । भक्तत्र इति भक्तान् त्रायते इत्यर्थः । भक्तिसम्प्रदाय इति आरामान्ता-द्वयधादेश्च ण इति णः भक्तिं संप्रददातीत्यर्थः ॥ २१९ ॥

**बाल०**—अकर्मण्या । अकर्मणि पूर्वपदे सति आरामान्ताद्धातोरुत्तरे कर्त्तरि वाच्ये को भवति । स्थो । अकर्मणि पूर्वपदे सति स्थ उत्तरे कर्त्तरि वाच्ये को भवति, भावे वाच्येतु पुंसि को भवति । पादप इति पा पाने उपेन्द्रेत्यादिना समासः । पादेन पिवतीत्यर्थः । पादपो वृक्षः । एवं द्वाभ्यां पिवतीति द्विपो हस्तो । कच्छे पिवतीति कच्छपः कूर्मः । वृन्दावनस्थ इति वृन्दावने तिष्ठतीत्यर्थः । दरीति । दरीमुखादुत्तिष्ठतीति दरी-मुखोत्थस्तेन । उदः स्थास्तम्भोः सस्य हरः इति सस्य हरः । दरी कन्दरः । समीरणेन वायुना । वैष्णवानामुत्थानमित्यर्थकथनं । गोष्ठ इति भाव इति । ननु यदि गोष्ठ इत्यत्र भावे कप्रत्ययो विहितस्तर्हि गोष्ठपदेन गवां स्थितिरेवोच्यते नतु व्रज इति चेत्तत्राह कृदभिहित इति । अभिहितः कथितः । गोष्ठशब्दस्य एतादृशार्थकथने हेतुमाह गोष्ठमिति ।

तीत्यादौ बाहुल्यान्न। सापेक्षत्वेऽपिन, महान्तं घटं करोति। कृष्णह्वायः तन्त्रवायः विश्वमायः।

**२२१. सत्यङ्कारादयः साधवः।**

**सत्यं करोति सत्यस्य कारो वा सत्यङ्कारः, अगदङ्कारः अस्तुङ्कारः, लोकम्पृणः, भ्राष्ट्रे इन्धे भ्राष्ट्रमिन्धः, अग्निमिन्धः।**

---

ननु कथं वेदाध्यायः गीतापाठ इति प्राप्य कर्मण्यपि अण् दृश्यते ? सत्यम्, वेदादीनामभ्यासकरणे प्राप्येऽपि संस्कार्यमस्तीति न दोषः। सापेक्षत्वेऽपीति—पूर्वपदमन्यपदमपेक्षते तदा तस्य वस्तुतः पूर्वपदत्वमेव नास्तीति नाण्, कुतः पुनः समास इत्याशयः। तन्त्रवाय इति तन्त्रं वयत इत्यर्थः। विश्ववाय इति—विश्वं माति मिमीते मयते वेत्यर्थः। ननु मिनाति मिनोत्योरारामान्त पाठत्वेन कथं तावत्र न गृह्यते इति चेत् ? मैवं, ह्वेञादीनां केप्राप्ते तदपवादोऽयमण् विधीयते, तत्र तु गोविन्द वृष्णीन्द्र विषयत्वाभावाच्चतुर्व्यूह विधित्वासद्भावे नारामान्तपाठ इति विज्ञानात्।

**अमृता०**—२२१. सत्यङ्कारेति। सत्यं करोतीत्यर्थे अण्, निपातेन पूर्वपदात् मुम्, कृत्समासः सुवुत्पत्तेः पूर्वम्। सत्यस्य कार इत्यत्रापि निपातेन मुम्, समासस्तु सुवुत्पत्तेः पश्चादिति भेदः। षष्ठी परपदेनेति विधास्य मानसूत्रेण समासः। अगदङ्कार इति—अगदमरोग करोति अगदस्य कारो वेति वैद्य इत्यर्थः। पूर्ववत् मुम् निपातफलम्। अस्तुङ्कार इति—अस्तु इति अस्तुक्रिया प्रतिरूपकमव्ययं वर्त्तते स्वीकारेऽर्थे, अस्त्विति करोति, अस्त्वित्यस्य कारो वेत्यर्थः। लोकम्पृण इति—पृण प्रीणने तुदादिः। निपातात् अण् मुम् गोविन्दाभावश्च। भ्राष्ट्रे इति—भ्राष्ट्रो भर्जनपात्रम्, तत्र इन्धे दीप्यते इति भ्राष्ट्रमिन्धः, षष्ठी पक्ष स्तु न, अकर्मकत्वात्, ततएव सप्तम्यन्तनिर्देशः। पूर्ववदण् प्रत्ययेन साधुः, मुम्, कर्मपूर्वपदत्वविरहेऽपि निपातादेव समासः। एवमग्निमिन्धः।

---

ननु यदि अमरकोषे गोष्ठशब्दस्य ब्रह्मत्वमुक्तं तर्हि गोष्ठ इति कथं संगच्छत इति चेत्तत्राह ल्युरिति। ल्युः कर्त्तरीमनिज्भावे कः इत्यमरोक्तमिति ज्ञेयं। तस्मात् पुंस्त्वमविरुद्धमिति भावः। ननु तर्हि गोष्ठमिति कथंसंगच्छते इति चेत्तत्राह आखुत्थेति। अस्ति वर्त्तते। द्वयोः स्त्रीपुंसयोर्न तस्मात् नपुंसके वर्त्तते इत्यर्थः। शब्दार्णवानुसारेण ब्रह्मत्वमप्यविरुद्धमिति भावः। अत उभयमतभेदात् गोष्ठादीनां ब्रह्मत्वं पुरुषोत्तमत्वञ्चेति न कश्चिद्विरोधः। आखुरुन्दुरुः। शलभः पतङ्गः। कृत्प्रकरणे एव षत्वप्रकरणे गोष्ठं व्रज इति वक्ष्यते ॥ २२० ॥

**बाल०**—कर्मणि। सुखदे वाच्ये कर्मणि पूर्वपदे सति शोकापनुदः साधुः। शोकापनुद इति नुद प्रेरणे। शोकमपनुदतीत्यर्थे कविधानं निपातफलं। शोकापनुदशब्देन सुखद एवोच्यते। सुखद इति किं शोकापनोदः। तत्र कर्मण्यणित्यनेन अण्। य उपदेशेन केवलं शोकमपनुदति नतु सुखमुत्पादयति स शोकापनोद इति। तुन्द। अलसे वाच्ये तुन्दपरिमृजः

## २२२. कर्मण्यनुपेन्द्रादारामात् कः।

**मुक्तिदः। त्रैङ्—भक्तत्रः। नेह—भक्तिसम्प्रदायः।**

## २२३. अकर्मण्यारामात् कः; स्थो भावे तु पुंसि।

**पादपः, वृन्दावनस्थः। 'दरीमुखोत्थेन समीरणेन'। तथा वैष्णवाना-मुत्थानं वैष्णवोत्थो वर्त्तते। गोष्ठ इति भावे, गवां स्थानमित्यर्थः।**

---

**अमृता०**—२२२. कर्मणीति। कर्मणि पूर्वपदे उपेन्द्ररहितादारामान्ताद् धातोरुत्तरे कर्त्तरि कप्रत्ययः स्यात्। सरूपत्वादण् कप्रत्यययोरुत्सर्गापवादत्वमेव, तत्रक उत्सर्गः। मुक्तिदइति—डुदाञ्दाने, आरामहरः, मुक्तिं ददातीत्यर्थ.। भक्तान् त्रायत इति भक्तत्रः, त्रैङ्पालने, आरामान्तपाठः, आरामहरश्च। भक्ति सम्प्रदाय इति भक्तिं सम्प्रददातीत्यर्थः उपेन्द्र पूर्वत्वान्न कः किन्तु कर्मण्यन्।

**अमृता०**—२२३. अकर्मणीति। कर्मभिन्ने पूर्वपदे सति आरामान्ताद् धातोः कः स्यात्, कर्मभिन्ने पूर्वपदे स्था धातोः कर्त्तरि कः स्यात्, तथा भावे तस्मात् पुंस्येव—कप्रत्ययो भवति। भावे ब्रह्मणि प्राप्ते पुंसि विधानम्। पादपइति—पादेन पिबतीति वृक्ष इत्यर्थः। इह करणपूर्वत्वम्। वृन्दावनस्थ इति—वृन्दावने तिष्ठतीति अधिकरण पूर्वपदत्वम्। दरीमुखोत्थेनेति—दरीमुखात् कन्दर मुखाद्धत्तिष्ठतीत्यपादाने पूर्वपदत्वम्। एषु कर्त्तरि कः। वैष्णवोत्थ इति तु भावे, गोष्ठ इति च। ननु यदि भावे गोष्ठ इति कप्रत्यान्त स्तर्हि गोष्ठशब्देन गवां स्थितिरेवबोद्धव्या कथं व्रज उच्यत इति चेत्तत्राह—कृदभिहित इत्यादि। कृत्प्रत्ययेनाभिहित उक्तो यो भाव स द्रव्यवत् प्रकाशते प्रत्येतीत्यर्थः। अत्रायंविवेकः—भावो धात्वर्थो धर्म द्वयेन हि प्रतीयते। प्रथमावस्थायां भावो धातोः साध्यावस्थां व्यञ्जयति चरमे तु सिद्धताधर्मम्। तत्र यः साध्यधर्मः सत्वाख्यात प्रत्ययैरेवाभिधीयते, योऽसौ सिद्धत्वधर्मः सएव कृत्प्रत्ययैरुच्यत इति। अतः कृदभिहित शब्दस्य द्रव्यवाचित्वं न विरुध्यत इति भावः। तच्चार्थममर वाक्येन द्रढयति—गोष्ठ गोस्थानकमिति।

---

साधुः। सामर्थ्यसद्भावेऽपि क्रियानुन्मुखता आलस्यं तद्युक्तोऽलसः। तुन्दपरिमृज इति मृजू ष शुद्धौ निपातात् कः। तुन्दपरिमृजशब्देन अलस एवोच्यते। अन्यत्र तुन्दं परिमार्ष्टि यः स तुन्दपरिमार्ज इत्यत्र अणेव। साधुरिति एतौ साधू इत्यर्थः मूल। व्यक्तार्थमेतत्। मूलविभुज इति। भुजो कौटिल्ये निपातात् कः। मूलानि विभुजतीत्यर्थः। आदिपदेन काक गुहादयः॥ २२१॥

**बाल०**—कर्म। कर्मणि पूर्वपदे सति प्रपूर्वाभ्यां दाज्ञाभ्यामुत्तरे को भवति। कृष्णप्रद इति कृष्णं प्रददातीत्यर्थ.। भक्तिप्रज्ञ इति भक्ति प्रजानातीत्यर्थः॥ २२२॥

**बाल०**—कर्म। कर्मणि पूर्वपदे सति सम उत्तरस्मात् ख्य उत्तरे को भवति।

कृदभिहितो भावो द्रव्यवत् प्रकाशते इति। गाव स्तिष्ठन्त्यत्रेति निर्गलितार्थः। गोष्ठं गोस्थानकं तत्तु इत्यमरशासनात्। ल्युः कर्त्तरीमनिज भावे कः, इत्यत्र भावे कप्रत्ययान्तः पुंसीति हि क्षीरस्वामी। आखूत्थ शलभोत्यादि तदुत्थानेऽस्ति न द्वयोरिति तु शब्दार्णवः।

**२२४. कर्मणि शोकापनुदः सुखदे, तुन्दपरिमृज स्त्वलसे साधुः, मूलविभुजादयश्च साधवः।**

**२२५. कर्मणि प्रपूर्वाभ्यां दाज्ञाभ्यां कः।**

कृष्णप्रदः, भक्तिप्रज्ञः।

---

ननु तत्र गोष्ठशब्दस्य ब्रह्मत्वदर्शनात् कथमिह पुंस्युदाहृतमिति चेत्तत्र सङ्गतिमुपपादयति—ल्युः कर्त्तरीत्यादि। ल्युः कर्त्तरीत्याद्यमरोक्ते व्याख्याप्रसङ्गे क्षीरस्वामिनापि भावे कप्रत्ययान्तः शब्दः पुंसीत्येवमुक्तम्, अतो भवेदेव पुंस्यपिभावे। ननु च तर्हि गोष्ठं गोस्थानकमित्यमरेण यन्नपुंसकं निर्दिष्टंतत्तु कथं वा सङ्गच्छते? तत्र च शब्दार्णव कोषोक्त्या तदपि समर्थयते—आखूत्थेति। आखुर्मुषिकः। आखूत्थादिशब्दा आखूत्थानार्थेऽपि वर्त्तन्ते, तेच न द्वयोः स्त्रीपुंसयोः किन्तु नपुंसके हि भवन्तीत्यर्थः। तेनादिशब्देन गोष्ठशब्दस्यापि भाववाचिब्रह्मत्वमुपपद्यते। तस्माद् गोष्ठशब्दस्य पुंनपंसकयोः प्रयोगे लब्धे द्वावपि समर्थनीयौ नतु कश्चिद् प्रमादतया मन्तव्यौ जनैरित्याकूतिः सन्दर्भस्य।

**अमृता०**—२२४. कर्मणीति। सूखदे वाच्ये शोकशब्देकर्मपूर्वपदे अपपूर्व नुदप्रेरणे इत्यस्मात् कप्रत्ययेन शोकापनुद इति साधुः। अयसे वाच्ये तुन्दशब्दे कर्मपूवपदे परिपुर्वमृजूष शुद्धौ धातोः कप्रत्ययेन तुन्दपरिमृजः साधुः। तथा मूलादिषु पूर्वपदेषु भुज कौटिल्ये इत्यादेः कप्रत्ययेन मूलविभुजादयः साधवो भवन्ति। कर्मण्यनिति प्राप्ते कप्रत्ययोऽर्थ विशेषाश्चात्र निपातफलम्। शोकमपनुद्य सुखयतीत्यर्थः। अन्यत्र केवलं शोकमपनुदति सुखन्तु नोत् पादयतीत्यर्थे अण्—शोकापनोद इति। तुन्दपरिमृजइति—अलस इत्यर्थः, अन्यत्र तुन्दं स्थूलोदरं परिमार्ष्टीति अण्—तुन्दपरिमार्ज इति। मूलानि वृक्षमूलानि विभुजति चक्रगत्या भञ्जयतीति भूल विभुजो रथः। आदिपदेन—नखमुचानि धनुंषि, काकगुहा स्तिलाः, कौ जले मोदते कुमुदमिति। एषामकर्मपूर्वपदत्वं ज्ञेयम्।

**अमृता०**—२२५. कर्मणीति। कर्मणि पूर्वपदे सत्यपि प्रपूर्वाभ्यां दाज्ञाभ्यामुत्तरे

---

ख्य इति चक्षिङ्गादेशात् ख्यात्रः ख्या प्रकथने इत्यस्माच्चेत्यर्थ। कृष्णधेनुसंख्य इति कृष्णधेनुः संख्यातीत्यर्थः॥ २२३॥

**बाल०**—कर्मण्य। कर्मणि पूर्वपदे सति अनुपेन्द्राद् गायतेरुत्तरे टक् भवति। टकावितौ। कृष्णग इति कृष्णं गायतीत्यर्थः कर्मण्यनुपेन्द्रादारामात् इत्यनेनापि कृष्णग इत्यादि सिध्यति तथापि यत् टग्विधानं कृतं तत्फलमाह टित्वादीप् कृष्णगीति। अ इ द्वयस्य हरः इत्यनेन अरामहरः कृष्णसंगाय इति आरामान्तत्वान्नः॥ २२४॥

**२२६. कर्मणि समः ख्यः कः ।**

कृष्ण धेनुसंख्यः ।

**२२७. कर्मण्यनुपेन्द्रगायते ष्टक् ।**

कृष्णगः, टित्वादीप् कृष्णगी । उपेन्द्रात्तु कृष्णसंगायः ।

---

क प्रत्ययः स्यात् । कर्मण्यनुपेन्द्रादारामात् क इति प्राप्ते कर्मसद्भावे उपेन्द्रार्थं इदानी-मारम्भः । प्रपूर्वाभ्यां किम्—भक्तिसंदाय इत्यण् । कमणीत्येव, अन्यथा उपेन्द्रे आरा-मान्तादिति कः सिद्ध एव प्रश्नः । कथं वृष्णिसज्ञ इत्यादि ? उपेन्द्रे आरामान्तादिति क प्रत्ययान्तात् ङावन्तेन संज्ञा शब्देन पीताम्बर समासे वामन इति वेदितव्यम् ।

**अमृता०**—२२६. कर्मणीति । कर्मणि पूर्वपदे सत्यपि संपूर्वात् ख्या धातोः कः स्यात् । पूर्ववदत्र चोपेन्द्रार्थं वचनम् । ख्य इति—ख्या प्रकथने इत्यस्य तथा चक्षिङः ख्यात्र् इत्यस्य च ग्रहणम् । तेन कृष्णधेनूः संख्याति कृष्णधेनूः समाचष्टे वेति कृष्णधेनु-संख्यः । इह "दुहः कोहस्य चश्चेति वक्तव्यम् । कामदुधः कल्पद्रुमः, अर्थदुघा विद्या ।" दुहः कव् घश्चेति पाणिनः ।

**अमृता०**—२२७. कर्मण्यनुपेन्द्र इति । कर्मणि पूर्वपदे उपेन्द्ररहितात् गायतेरुत्तरे कर्त्तरि टक् प्रत्ययः स्यात् । टकावितौ अरामशेषः । सरूपत्वेन कप्रत्ययस्तु गायते नं भवति, तदपवादरूपोऽयम् । कृष्णग इति कृष्णं गायतीत्यर्थः । प्रत्ययस्य कंसारि सर्वेश्वर-त्वादाराम हरः । वैशिष्टस्य फलमाह—टित्वादिति । टितः केशवसंज्ञत्वं वक्ष्यते, ततश्च अण् केशवगौरादिभ्य इतीप् विधास्यते, अइद्वयस्य हरो भगवतीति च तत्रैव व्यक्तं भावि । कृष्णसंगाय इति कर्मण्यन् ।

---

**बाल०**—सुरा । सुरासीध्वोः कर्मणोः पूर्वपदयोः सतोः पिबतेरुत्तरे गट्भवति । सुराप इति सुरां पिबतीत्यर्थः । सुरा मदिरा । एवं सीधूपः सीधुपी । सीधुर्मदिराविशेषः । पिबतेरिति निर्देशः पा रक्षण इत्यस्य निरासार्थः ॥ २२५ ॥

**बाल०**—कर्म । कर्मणि पूर्वपदे सति अनुत्क्षेपेऽर्थे वर्त्तमानात् हरतेरुत्तरे अद्भवति वयसि च गम्यमाने हरतेरुत्तरेऽद्भवति । आङ । आङ उत्तरस्माद्धरतेस्तु ताच्छील्ये गम्येऽद्भवति । ताच्छील्यं तत्स्वभावता । संसारहर इति संसारं हरतीत्यर्थः । कवचहर इत्यत्र कवचधारणयोग्यत्वेन बयो गम्यते । भारहार इति । अत्र अणेव । भारमुद्धृत्य देशान्तरं प्रापयतीत्यर्थः ॥ २२६ ॥

**बाल०**—शक्त्या । शक्त्यादिषु कर्मसु पूर्वपदेषु सत्सु ग्रहेरुत्तरेऽद्भवति । शक्तिग्रह इति शक्तिं गृह्णातीत्यर्थः । एवं लाङ्गलग्रह इति । नामग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति परिभाषा सर्वत्र नेष्यते इति सूचयितुं घटीति पृथगुक्तं । शक्त्यङ्कुश यष्टि-धनुस्तोमर-लाङ्गल-घट-घट्यः ॥ २२७ ॥

**२२८. सुरासीध्वोः कर्मणोः पिवते ष्टक् ।**

सुरापः सुरापी ।

**२२९. कर्मणि हरते रदनुत्क्षेपे वयसि च, आङस्तु ताच्छील्ये ।**

संसार हरः । तथा कवचहरः समाजगाम रामः, कवचधारण योग्य वया इत्यर्थः । तथा कृष्णोच्छिष्टाहरः, तत्स्वभाव इत्यर्थः । उत्क्षेपे तु भारहारः ।

**२३०. शक्त्यादिषु कर्मसु ग्रहेरत् ।**

शक्तिग्रहः लाङ्गुलग्रहः । एवमङ्कुश-यष्टि-तोमर-घट-घटी-धनुःसु ।

---

रुत्तरे कर्त्तरि अत् प्रत्ययः स्यात्, वयसि गम्यमाने च तदुत्तरेऽत् स्यात्, तथा कर्मपूर्वपदे आङ् पूर्वात् हरते स्तु तत्स्वभावेऽर्थ एव अत् भवति । अणोऽपवाद एषः । संसार हर इति—संसारं हरतीति सत्सङ्ग इत्यर्थः । कालकृताशरीरावस्था वयो बाल यौवनादि । कवचहर इति—कवच धारणयोग्यं यौवनवयो गम्यते । कृष्णोच्छिष्टाहर इति—कृष्णोच्छिष्टभोजने स्वाभाविको प्रवृत्ति रस्येत्यर्थः । भारहार इति—भारं हरति उद्धृत्य अन्यत्र नयतीति भृत्यादिरित्यर्थः । अत्र त्वणेव ।

**अमृता०**—२२८. सुरेति । स्पष्टम् । पिवतेरिति किम्—सुरां पातीति सुरापा शुद्राणी । अनुपेन्द्रे इत्येव—सीधु मधु संपिवतीति सीधुसंपायः ।

**अमृता०**—२२९. कर्मणीति । कर्मणिपूर्वपदे सति अनुत्क्षेपार्थे वर्त्तमानात् हरते

**अमृता०**—२३०. शक्त्यादि । शक्ति प्रमृतिषु कर्मपूर्वपदेषु ग्रह धातोरुत्तरे कर्त्तरि अत् प्रत्ययः स्यात् । अणोऽपवादः । शक्तिग्रह इति—शक्ति मस्त्रविशेषं गृह्णातीत्यर्थः । एवं लाङ्गलग्रहो बलरामः । आदिपदं स्पष्टयति—एवमङ्कुशेत्यादि । शक्यादिष्विति किम्—करग्राहो विवाहबन्धः ।

---

**बाल०**—सूत्र । अवबोधने गम्यमाने सूत्रे कर्मणि पूर्वपदे सति ग्रहेरुत्तरेऽभवतीत्यर्थः । सूत्रग्रह इति सूत्रं धारयतीत्यर्थः । अत्र सूत्रधारणस्य आवश्यकता गम्यते । सूत्रग्राह इत्यत्र केवलं ग्रहणं गम्यते ननु नियमेन धारणमिति ।। २२८ ।।

**बाल०**—कर्म । कर्मणि पूर्वपदे सति अर्हतेरुत्तरे अद्भवति । कृष्णार्हं इति अर्हं पूजायां कृष्णमर्हतीत्यर्थः । कृष्णार्हेति लक्ष्म्यां ।। २२९ ।।

**बाल०**—शस्त्रे । शस्त्रे कर्मणि पूर्वपदें सति धृञ धारणे इत्यस्मादुत्तरे अद्भवति । ननु सूत्रदण्डयोः, कर्मणोः पूर्वपदयोः सतोः धृञ उत्तरेऽन्न भवति । चक्रधर इति चक्रं धरतीत्यर्थः । चक्रं शस्त्रविशेषः । सूत्रधार इत्यत्र अणेव । एवं दण्डधार इति । बाहुल्यात् दण्डधरश्च । कालो दण्डधर इत्यमरः । सूत्रनिषेधादिति । सूत्रस्य शस्त्रवाचकत्वाभावात् सूत्रस्य शस्त्रस्य शस्त्रवाचकत्वाभावात् सूत्रे कर्मणि पूर्वपदे सति धृञोऽद्विधानं न सम्भवति, तथापि सूत्रे यन्निषेधो विहितः तस्माद्धेतोरशस्त्रेऽपि विधिर्ज्ञेयः, अतो भुधर इति । भूधरः पर्वतः ।। २३० ।।

**२३१. सूत्रग्रहइत्यवधारणे।**

सूत्रग्राहोऽन्यत्र।

**२३२. कर्मण्यर्हतेरत्।**

कृष्णार्हः कृष्णार्ही।

**२३३. शस्त्रे कर्मणि धृञोऽत् नतु सूत्रदण्डयोः।**

**चक्रधरः। नेह सूत्रधारः दण्डधारः। सूत्रनिषेधात् अशस्त्रेऽपि–भूधरः।**

---

**अमृता०**—२३१. सूत्रेति। अवधारणे गम्यमाने सूत्रकर्मणि पूर्वपदे ग्रहे रत् प्रत्ययः स्यात्। सूत्रग्रह इति—सूत्रं गृह्णात्येवेत्यर्थः, सूत्रग्रहणस्याव्यभिचार्य्युपयोगितास्तीति तात्पर्यम्। सूत्रग्राह इत्यत्र तु केवल तद् ग्रहणं बोध्यते नत्वव्यभिचारेण धारणमिति भेदः।

**अमृता०**—२३२. कर्मणीति। कर्मणि पूर्वपदे अर्हतेरुत्तरे कर्त्तरि अत् स्यात्। कृष्णार्ह इति—कृष्णार्ही रुक्मिणी, टित्त्वाभावात् लक्ष्यामाप्। योग्यार्थे च प्रयोगप्राचुर्यमस्ति, कृष्णार्हं माल्यम्, कृष्णार्ही तुलसीत्यादि।

**अमृता०**—२३३. शस्त्र इति। शस्त्रे कर्मपूर्वपदे धृञ्धारणे इत्यस्मात् कर्त्तरि अत् प्रत्ययः स्यादणोऽपवादः। सूत्र दण्डयोः कर्म पूर्वपदयो स्तु स न भवति, किन्तु अणेव। चक्रं सुदर्शनाख्यं धरतीति चक्रधरः श्रीवासुदेवः। एवं शूलधरो महेश इत्यादि। सूत्रग्रहणादिति—सूत्रस्य शस्त्रत्वाभावेऽपि यत् तन्निषेधः कृत स्तनेदं ज्ञापितम्—शस्त्रव्यतिरिक्ते च पूर्वपदे धृञोऽत् भवतीति, अन्यथा अप्राप्ते तु निषेधाप्रसङ्गात्। ततश्च भूधरः पयोधर इत्यादयश्च सिध्यन्तीति फलितम्। कालो दण्डधर इत्यमर निर्वाचनन्तु अल्प्रत्ययान्तेन धर शब्देन पश्चात् समास इति बोध्यम्।

---

**बाल०**—स्तम्बे। हस्तिनि वाच्ये स्तम्बेरमः साधुः। स्तम्बे रमत इत्यर्थे निपातात् विष्णुभक्तिमहाहराभावश्च स्तम्बो गुच्छस्तृणादिन इत्यमरः। इभः स्तम्बेरमः पद्मीत्यमरः। कर्णे सूचके वाच्ये कर्णेजपः साधुः। कर्णेजप इति कर्णे जपतीत्यर्थे निपातात् विष्णुभक्तिमहाहराभावश्च। कर्णेजपः सूचकः स्यादित्यमरः। साधु इति एतौ साधू ॥२३१॥

**बाल०**—शमि। शमि पूर्वपदे सति धातोरुत्तरे संज्ञायामद्भवति। शेतेरित्यस्यानुवृत्तिशङ्कानिरासार्थं धातोरिति कृतं। शङ्कर इति शं कल्याणं करोतीत्यर्थः। शङ्करः शिवः। शम्बर इति वृञ वरणे स्वादिः। दैत्य इति दैत्यविशेष इत्यर्थः ॥ २३२ ॥

**बाल०**—अधि। अधिकरणे पूर्वपदे सति शेतेरुत्तरेऽद्भवति। करणे पार्श्वादौ च पूर्वपदे सति शेतेरुत्तरे अद्भवति। क्षीरोदशय इति क्षारोदे शेते इत्यर्थः। क्षीरोदः क्षीरसमुद्रः। उदरशय इति उदरेण शेते इत्यर्थः। एवं पृष्टशय इति। पृष्ठन्तु चरमं तनोरित्यमरः ॥ २३३ ॥

## २३४. स्तम्बेरमो हस्तिनि कर्णेजपः सूचके साधू ।

## २३५. शमि धातोरत् संज्ञायाम् ।

शङ्करः । शम्बरो दैत्यः ।

## २३६. अधिकरणे शेतेरत्, करणे पार्श्वादौ च ।

क्षीरोदशयः । तथा पार्श्वाभ्यां शेते पार्श्वशयः उदरशयः पृष्ठशयः ।

## २३७. उत्तानादिषु च ।

उत्तानः शेते उत्तानशयः । अवमूर्द्धा शेते अवमूर्द्धाशयः ।

---

**अमृता०**—२३४. स्तम्बेरम इति । हस्तिनि वाच्येऽत् प्रत्ययेन स्तम्बेरम इति साधुः स्यात्, तथा सूचके वाच्ये कर्णेजप इत्यपि साधुः स्यात् । स्तम्बे गुल्मे रमत इति स्तम्बेरमः करी । अप्रकाण्डे स्तम्ब गुल्मौ इत्यमरः । अत्प्रत्ययेनार्थ विशेषो विष्णुभक्त्यलोपश्च निपातफले । एवं कर्णे जपतीति कर्णेजपः सूचकः, रहः कुमन्त्रणादाता । अन्यत्र स्तम्बेरन्ता उष्ट्रः, कर्णे जपिता मशक इत्यादौ न समासः ।

**अमृता०**—२३५. शमीति । शमित्यव्यये पूर्वपदे कर्त्तरि संज्ञायां धातोरुत्तरे अत् स्यात् । शम् कल्याणं करोतीति शङ्करः शिवः, धातोरन्तस्य गोविन्दः । धात्वधिकार सत्त्वेऽपि पुनर्धातुग्रहणं—कृञो हेतु ताच्छील्येत्यादि वक्ष्यमाण ट प्रत्यय बाधनार्थम् ।

**अमृता०**—२३६. अधिकरण इति । अधिकरणे पूर्वपदे शेतेरुत्तरे कर्त्तरि अत् स्यात् । तथा पार्श्वादि शब्दे करण पूर्वपदे च शेतेरत् भवति । क्षीरोद शय इति—क्षीर समुद्रे शेत इति जीवान्तर्यामी विष्णुरित्यर्थः । शीङ् स्वप्ने, गोविन्दः । एवं जलशयः विलशय इत्यादि । उदरशय इति उदरेण शेते इत्यर्थः ।

**अमृता०**—२३७. उत्तानेति । उत्तानादिषु च कर्त्तृपूर्वपदेषु शेतेरत् स्यात् । उत्तानः शेतेइत्यर्थः । उत्तानशयः पृष्ठशयश्चैकार्थः । उत्ताव ऊर्द्धमुखः, अवमूर्द्धा अधोमुख इत्यर्थः ।

---

**बाल०**—उत्ता । उत्तानादिषु च पूर्वपदेषु सत्सु शेतेरुत्तरे अत्भवति । उत्तान इति उत्तानः सन्नित्यर्थः । उत्तान ऊर्द्ध्वमुखः । अवमूर्द्धेति अवमूर्द्धा सन्नित्यर्थः । अवमूर्द्धा अधोमुखः ॥ २३४ ॥

**बाल०**—दिग्ध । दिग्धसहाद्योत्तरस्मात् शेतेरुत्तरे अद्भवति । दिग्धसहशय इति दिग्धेन सह शेते इत्यर्थः ॥ २३५ ॥

**बाल०**—गिरौ । गिरौ पूर्वपदे सति तु शीङो गिरिशः साधुः । गिरिश इति गिरौ शेते इत्यर्थे निपातादत् ईरामहरश्च । गिरिशः शिवः ॥ २३६ ॥

**बाल०**—अधि । अधिकरणे भिक्षादिषु पूर्वपदेषु सत्सु चरेरुत्तरे टो भवति । वृन्दावनचर इति चर गतौ । लक्ष्यान्तु वृन्दावनचरीति । आदिपदेन आदायचर इति ॥ २३७ ॥

**२३८. दिग्धसहपूर्वाच्च ।**

दिग्धसहशयः ।

**२३९. गिरौ तु गिरिशः साधुः ।**

**२४०. अधिकरणे भिक्षासेना दायेषु च चरेष्टः ।**

वृन्दावने चरति वृन्दावन चरः । भिक्षां चरति भिक्षाचरः । सेनां चरति सेनाचर इत्यादि । कथं सहचरी ? चिन्त्यमिति पुरुषोत्तमः । कालिक विशेष परत्वात् सह एकस्मिन् काले चरतीति चिन्तनीयम् ।

---

**अमृता०**—२३८. दिग्धेति । दिग्धसहः पूर्वोयस्मात् तादृशात् शेतेरत् स्यात् । दिग्धेन विषाक्तशरेण सह शेत इति दिग्धसहशयः कश्चित् ।

**अमृता०**—२३९. गिराविति । गिरौ पूर्वपदे तु शीङः अत् प्रत्ययेन गिरिशः साधुः स्यात् । गिरौ पर्वते शेत इति गिरिशः शिवः, निपातादीरामहरः ।

**अमृता०**—२४०. अधिकरण इति । अधिकरणे पूर्वपदे तथा भिक्षा सेना आदायेषु च पूर्वपदेषु चर धातोरुत्तरे कर्त्तरि ट प्रत्ययः स्यात् । टइत् अराम शेषः । भिक्षादीनां पृथग् ग्रहणमनधिकरणार्थम् । वृन्दावनचर इति चर गतौः, टित्त्वात् लक्ष्म्यामीप्—वृन्दावन-चरी गोपी । एवं कुरुषु चरति कुरुचरः कुरुचरीत्यादि । भिक्षां चरतीति—भिक्षादिष्व-नधिकरणेष्विति तात्पर्यात् कर्मणि दर्शितम्, एतदपि न तन्त्रम्, करणेऽपि स्यात्—भिक्षया चरति, सेनया चरतीत्यादि ।

इत्यादि पदेन आदायचरः, स्वयंग्राहीत्यर्थः । द्विषन् वनेचराग्र्याणां त्वमादायचरो वने इति भट्टिः । आङ् पूर्वाद् दाञः क्त्वो यप् आदाय । अस्य तु सकर्मकत्वेऽपि अत्रा-विवक्षितकर्मत्वेन सापेक्षत्वाभावान्न हि समासबाधः । सापेक्षत्वेऽपि वचनसामर्थ्यात् प्रत्यय इति प्रसादः । चिन्त्यमिति—भिक्षादिषु ग्रहणाभावात् टप्रत्ययासिद्धेऽपि ईप्विधानं चिन्तनीयम्, असङ्गतमिति तदभिप्रायः । स्वयं समाधत्ते—कालिकेति सहशब्दस्य काल-विशेषार्थत्वादधिकरणता सम्भवेदेतिन विरोध इत्येवं समाधेयमित्यर्थः ।

---

**बाल०**—रात्रि । व्यक्तार्थमेतत् । विकल्पेन मुम्विधानं निपातफलं । द्वौ राक्षस-वाचकौ । २३८ ॥

**बाल०**—पुरो । पुरोऽग्रतोऽग्रेषु पूर्वपदेषु सत्सु सृ गतावित्यस्मादुत्तरे टो भवति । पुरःशब्दोऽव्ययं । अग्रत इति तस्यन्तं । अग्र इति सप्तम्यन्तं एतद्द्वयमप्यव्ययं । पूर्वे । पूर्वे कर्त्तरि पूर्वपदे सति सरतेरुत्तरे टो भवति । पुरःसर इति पुरः सरतीत्यर्थः । कर्त्तरीति किं । पूर्वं देशं सरतीति पूर्वसारः ॥ २२९ ॥

**बाल०**—शब्द । हेतुताच्छील्यानुलोम्येषु गम्यमानेषु शब्दादीन् वर्जयित्वा कर्मणि पूर्वपदे सति डुकृञ उत्तरे टो भवति । आनुलोम्यं अनुकूल्यं । सर्वार्थकरी हरिभक्तिरिति,

## २४१. रात्रिचररात्रिञ्चरौ द्वावपि साधू ।

## २४२. पुरोऽग्रतोऽग्रेषु सरते ष्टः, पूर्वेकर्त्तरि च ।

पुरःसरः अग्रतःसरः अग्रेसरः । पूर्वः सरतीति पूर्वसरः ।

---

**अमृता**—२४१. रात्रीति । सुगमम् । रात्रिञ्चर इत्यत्र मुमागमो निपातफलम्, रात्रिचर इति तु रात्रौ चरतीत्यधिकरणे सिध्यत्येव, किन्तु अर्थ विषये हि निपात चरितार्थता, राक्षसार्थे हि रूढी । राक्षसः कौणपः क्रव्यादित्यादौ रात्रिञ्चरो रात्रिचर इत्यमरात् ।

**अमृता०**—२४२. पुर इति । पुर आदिषु त्रिषु पूर्वपदेषु सृधातोः कर्त्तरि टप्रत्ययः स्यात्, तथा पूर्वशब्दे कर्त्तृपूर्वपदे च सरतेः टप्रत्ययः स्यात् । पुरः शब्दोऽव्ययमग्रवाची । पुरः सरति गच्छति यः स पुरः सरः । एवमग्रतः सरः । अग्रे इति सप्तमीप्रतिरूपकमव्ययम् । पूर्वशब्देन प्रथमस्थित उच्यते । कर्त्तरीति किम्—पूर्वदेशं सरतीति पूर्वसारः, अणेव ।

---

अत्र हरिभक्तेर्हेतुत्वं । ताच्छील्ये मालाकरोवैष्णवस्तत्स्वभाव इत्यर्थः । आनुलोम्ये वचनकरः सेवकः आचार्यचित्तानुवर्त्तनपर इत्यर्थः । शब्दकार इत्यत्र अणेव । क्रमदीश्वरेण शास्त्रकुम्भकर्मक्रमाणामपि वर्जनं कृतमिति ज्ञेयं ।। २४० ।।

**बाल०**—आद्य । आदिप्रभृतिषु कर्मसु पूर्वपदेषु सत्सु डुकृञ उत्तरे टो भवति । संख्यावाचके कर्मणि पूर्वपदे सति डुकृञ उत्तरे टो भवति । दिवादौ कर्मणि पूर्वपदे सति डुकृञ उत्तरे टो भवति । तदादौ कर्मणि च पूर्वपदे सति डुकृञ उत्तरे टो भवति । कियत् । कियत्तद्वहुषु कर्मसु पूर्वपदेषु सत्सु डुकृञ उत्तरे अद्भवति । अत्र सूत्रे कियत्तदव्ययं ज्ञेयं, पूर्वत्र तदादिग्रहणात् । बहुशब्दस्तु पूर्वत्र संख्येयपरः, अत्र संख्यापरः ज्ञेयः, उभयत्र ग्रहणसामर्थ्यात् । अत्रापीति । अत्रेति अद्विहिते सूत्रेऽपि विकल्पः स्यादिति या आह तस्यां प्रक्रियाकौमुद्यां भ्रमो नियमत्वादित्यर्थः । आदिकर इति आदिं करोतीत्यर्थः । दिवाकरः सूर्यः, निशाकरश्चन्द्रः । विभाकरादयस्त्रयः सूर्यवाचकाः । अद्विधानस्य फलमाह किङ्करेति । किङ्करीत्यपि दृश्यते इति । तथाच न्यासः । इदानी याति किङ्करीति ।।२४१।।

**बाल०**—कर्म । भृत्ये वाच्ये कर्मणि पूर्वपदे सति कृञः कर्मकरोनिपात्यते । भृत्ये इत्यत्र भृताविति वा पाठः । भृतौ गम्यमानायामित्यर्थः । भृतिर्वेतनं । भृतको भृतिभुक् कर्मकरो वैतनिकोऽपि स इत्यमरः । टविधानं निपातफलं । कर्मणि भृताविति भाषावृत्तिसूत्रं । दृशि । पशौ वाच्ये कर्मणि पूर्वपदे सति हृञ हरण इत्यस्य दृशिहरि-नाथहरी निपात्येते । इद्विधानं निपातफलं । दृतिहरि श्वा । नाथहरिः सिंह इति भाषावृत्तिः । आत्म । कर्मणि पूर्वपदे सति डुभृञ धारणपोषणयोरित्यस्य आत्मम्भर्यादयो निपात्यन्ते । इद्विधानं पूर्वपदान्नुम् च निपातफलं । उभौ चात्मम्भरिः कुक्षिम्भरिः, स्वोदरपूरक इत्यमरः । स्तम्ब । व्रीहौ वाच्ये कर्मणि पूर्वपदे सति कृञः स्तम्बकरिर्निपात्यते । वत्सु वाच्ये

**२४३. शब्द श्लोक कलह गाथा वैर चाटु सूत्र मन्त्र पदवर्जं कर्मणि डुकृञ ष्टो हेतुताच्छील्यानुलोम्येषु।**

सर्वार्थकरी हरिभक्तिः । ताच्छील्ये व्यसनकरः । आनुलोम्ये-प्रीतिकरः । पितुर्वाक्यकरं राममिति भट्टिः ( ५।८६८ ) नेह– शब्दकारः श्लोककार इत्यादि ।

---

**अमृता०**—२४३. शब्देति । हेतौ ताच्छील्ये आनुलोम्ये चार्थे शब्दादि नवशब्दान् वर्जयित्वा अन्यस्मिन् कर्मणि पूर्वपदे डुकृञ् धातोः टप्रत्ययः स्यात् । हेतुरव्यभिचारि कारणम्, ताच्छील्यं तत्स्वभावता, आनुलोम्यमानुकूल्यमित्यर्थः । सर्वार्थकरीति—सर्वेषामर्थानामव्यभिचारि कारणं हरिभक्तिः तां विना धर्मार्थ काममोक्षेषु चतुः पुरुषार्थेषु कर्मज्ञानयोगेषु वा न कोऽप्यर्थः स्वतः सिध्यतीत्यर्थः । एवं यशस्करी विद्या, श्रेयस्करः सत्सङ्ग इत्यादि । व्यसनकर इति—व्यसनं कदभ्यासं कर्त्तुं शीलमस्येत्यर्थः । एवं मालाकरः, प्रदक्षिणकर इत्यादि । वाक्यकरमिति—अनुकूलतया पितु र्वाक्यं पालयतीत्यर्थः । एवं वचकरः, आदेशकरः शिष्य इत्यादि । प्रत्युदाहरति—नेहेति । शब्दादिषु तु अणेव, अतस्तदपवादोऽयं टः । एवं खलु हेत्वादि विरहेऽपि न टः किन्तु अणेव—भाष्यकारः ।

---

शकृति कर्मणि कृञः शकृत्करिर्निपात्यते इद्विधानं निपातफलं । धान्यं व्रीहि स्तम्बकरिरित्यमरः । शकृत्करिस्तु वत्सः स्यादिति चामरः । फले । अबन्ध्यवृक्षे वाच्ये कर्मणि पूर्वपदे सति ग्रहधातोः फलेग्रहिर्निपात्यते । इद्विधानं अरामस्य एत्वञ्च निपातफलं । बन्ध्यः फलरहितो वृक्षः । सर्वेषां वृत्तिमाह कर्मेति । कृञादीनामित्यादिपदेन हृञडुभृञग्रहां ग्रहणं । एते कर्मकरादयः । भर्त्तृ हरिविप्रो भट्टिकारः ॥ २४२ ॥

**बाल०**—स्तन । स्तनशुन्योः कर्मणोः पूर्वपदयो सत्योः धेट् पाने इत्यस्मादुत्तरे खश् भवति । नासि । नासिकादिषु कर्मसु पूर्वपदेषु सत्सु धेटो धमश्चोत्तरेखश् भवति । शर्द्धे । शर्द्धे कर्मणि पूर्वपद सति जहातेरुत्तरे खश् भवति । विधु । विधुतिलयोः कर्मणोः पूर्वपदयोः सतोः तुद उत्तरे खश् भवति । मुमिति सर्वेश्वरान्तेत्यादिनेति शेषः । स्तनन्धय इति धेट् पाने शिवत्वात् नरामान्तपाठः । कृष्णधातुकत्वात् शप् अरामहरः । एवमन्यत्रच ज्ञेयं । वामनश्चेति सर्वेश्वरान्तेत्यादिनेति शेषः । नासिकान्धय इति धेट् पाने मुम् वामनश्च । नासिकान्धम इति ध्मा शब्दाग्निसंयोगयोः ध्मो धमः । नाडिन्धय इति मुम् वामनश्च । एवमिति । ततश्च मुष्टिन्धयः मुष्टिन्धम् इत्यादि । मुञ्जेति । मुञ्जकूलास्यपुष्पेषु कर्मसु पूर्वपदेषु सत्सु धेट् पाने इत्यस्मादुत्तरे खश् वा भवतीति केचिद्वदन्ति । मुञ्जन्धय इत्यादीत्यादिपदेन कूलन्धयः आस्यन्धयः पुष्पन्धय इति मुञ्जन्धम इत्यादि च । शर्द्धंजह इति ओ हाक त्यागे खशि कृते शप् तस्य महाहरः जुहोत्यादित्वाद्द्विर्वचनं श्नानारायणयोरारामहरो निर्गुणकृष्णधातुक इति आरामहरः मुम् शर्द्धं जहातीत्यर्थः । शर्द्धः कुत्सितशब्दः । शृधु अपानशब्दे भावे घण् । विधुन्तुद इति तुद व्यथने विधुं तुदति इत्यर्थः । विधुश्चन्द्रः । विधुन्तुदो राहुः ॥ २४३ ॥

**२४४. आद्यन्तानन्त बहु-नान्दी-लिपि-लिवि-भक्ति-वलि-कर्त्तृ-चित्र क्षेत्र-जंघा-वाहु-धनुररूस-संख्यादि-दिवादि-तदादिषु कर्मसु डुकृञ ष्ठः, किंयत्तत्बहुष्वत् ।**

अत्रापि विकल्पस्तस्यां भ्रमः । आदिकरः अन्तकरः अनन्तकर इत्यादि, संख्यायाम्—एककरः द्विकर इत्यादि । दिवादौ दिवाकरः निशाकरः विभाकरः भास्करः प्रभाकरः । तदादौतत्करः यत्कर इत्यादि । तथा किङ्करः किङ्करा किङ्करीत्यपि दृश्यते ।

**२४५. कर्मकरो भृत्ये, दृतिहरि नाथहरी पशौ, अत्मम्भयुंद-रम्भरि कुक्षिम्भर्यादयः, स्तम्बकरि शकृत् करी व्रीहि वत्सयोः, फलेग्रहि रबन्ध्यवृक्षे ।**

---

अमृता०—२४४. आद्येति । आदिप्रभृतिषु कर्मपूर्वपदेषु तथा संख्यादौ, दिवादौ तदादौ च कर्मणि पूर्वपदे डुकृञ उत्तरे टप्रत्ययःस्यात्, एषु मध्ये किं यत् तत् बहुषु पूर्वपदेषु अत् प्रत्यय एव भवति न तुटः । विकल्प स्तस्यां भ्रम इति—किंयत्तद् बहुषु कृञोऽज् विधानमिति वार्त्तिकम् । तस्मात् प्रक्रियामतं भ्रमात्मकम्, केनापि तत् समर्थितत्वाभावादिति भावः ।

दिवाकरादयः सूर्यवाचिनः, निशाकरश्चन्द्रः । तत्कर यत्करौ अत् प्रत्ययान्तौ, तेन लक्ष्म्यां तत्करा यत्करेति । ननु तर्हि तदादौ पूर्वपदे टविधानस्य का चरितार्थता ? श्रूयताम्—तद् यद्भ्यामितरेषु (अर्थादिदादिषु) पूर्वपदेषु टो भवेदेव, एतत्करीइदङ्करीति । किङ्करीत्यपि दृश्यत इति—सूत्रमिदं हेतुताच्छील्यानुलोम्येतरविषयकम्, हेत्वादौ गम्यमाने तु पूर्वोक्तसूत्रेण तदादिष्वपि टो भवति । तेन किं कर्त्तुं शीलमस्या इत्याद्यर्थे किङ्करी च सिद्धौ न बाधः । अतश्च—"भज सखे भवत्किङ्करीः स्म नः", क्वचिदपि स कथा नः किङ्करीणां गृणीते" इत्यादयः श्रीशुक प्रयोगाश्चोपपद्यन्ते ।

अमृता०—२४५. कर्मेति । भृत्ये वाच्ये कर्म शब्दे पूर्वपदे कर्मकर इति निपात्यते । भृत्यो वेतनभुक् सेवकः । निपातात् टः, अर्थ विशेषश्च । अन्यत्र कर्मकारः शिल्पिविशेषः ।

---

बाल०—अरु । अरुन्तुद इति वृत्तिमाह अरुस् इत्यादीति । अरुन्तुद इति निपात् खश् अरुःशब्दस्य सलोपश्च अरुस्तुदतीत्यर्थः । अरुन्तुदस्तु मर्मस्पृगित्य मरः । जन्मेजय इति निपातात् ण्यन्तात् एजृ कम्पने इत्यस्मात् खश् रामधातुकत्वाभावात् न णेर्हरः गोविन्दः ए अय् मुम् अरामहरश्च । अत्र जनमेजय इत्यपि दृश्यते, जनमेजयतीत्यर्थः । कूलमुद्रुज इति रुजो भङ्गे निपातात् खश् मुम् । कूलमुद्वह इति वह प्रापणे निपातात् खश् । अभ्रंलिह इति लिह आस्वादने निपातात् खश् अभ्रं मेघः । बाहुंलिह इति च भवतीति जुमरादिमतं ॥ २४४ ॥

कर्मादि कर्मणि पूर्वपदे कृञादीनामेते निपात्यन्ते। स्यादबन्ध्यः फले-ग्रहिरित्यमरः। फले ग्रहीन् हंसि वनस्पतीनामिति भर्त्तृहरि विप्रः (भट्टिः २।३३)।

**२४६. स्तनशुन्योः कर्मणो धेटः, नासिकादिषु धमश्च, शर्द्धे जहातेः, विधु-तिलयो स्तुदः खश्।**

---

पशौ वाच्ये दृतिनाथयोः कर्मपूर्वपदयो हरतेः इप्रत्ययेन दृतिहरि नाथहरी निपात्येते। दृतिहरिः कुक्कुरः। नाथं स्वस्वामिनं हरतीति नाथहरिः पशुविशेषः। पूर्ववत् निपातफले। आत्मम्भरीति—आत्मादिषु कर्मपूर्वपदेषु भृञ इप्रत्ययेन आत्मम्भर्यादयो निपात्यन्ते। इविधानं पूर्वपादात् नुम् चात्र निपात फले। आत्मम्भरिः औदरिकः, सएवार्थ उदरम्भरि कुक्षिम्भरि शब्दयोरपि। स्तम्ब करीति—स्तम्बे कर्मपूर्वपदे ब्रीह्यर्थे डुकृञइप्रत्ययेन स्तम्बकरिः, तथा शकृत् कर्मपूर्वपदे वत्सेऽर्थे डुकृञ इप्रत्ययेन शकृत्करिः निपात्यते। इविधानं विशेषार्थश्च निपातफले। व्रीहि धान्यादि शस्य, शकृत् पशुविष्ठा। फलेग्रहिरिति—अवन्ध्य वृक्षे वाच्ये फले कर्मपूर्वपदे सति गृह्णातेः इ प्रत्ययेन फलेग्रहि रिति निपात्यते। इविधानं पूर्वपदस्य एत्वञ्च निपातफले। बन्ध्यः फलहीनः, तद्विपरीतः अबन्ध्यः। फलानि गृह्णातीति फलेग्रहिः फलवान् वृक्ष इत्यर्थः। अमरवाक्येन भट्टि प्रयोगोल्लेखेन च तत् समर्थयते—स्यादबन्ध्य इत्यादि। भर्त्तृहरि भट्टिकाव्यकारः।

**अमृता०**—२४६. स्तनेति। स्तनशुनी शब्दयोः कर्मपूर्वपदयोः धेट् पाने धातोः खश् प्रत्ययः स्यात्, नासिकादिषु कर्मपूर्वपदेषु ध्मा शब्दाग्नि संयोगयोरित्यस्माच्चोत्तरे चकारात् धेटश्चोत्तरे खश् भवति। शर्द्धे कर्मपूर्वपदे जहाते रुत्तरे खश् स्यात्, तथा विधु-तिलयोः कर्मपूर्वपदयोः तुद व्यथने इत्यस्माच्च खश् भवति: सर्वत्र कर्त्तरीत्युन्नेयम्। मुमिति—खित्वेन सर्वेश्वरान्तपूर्वपदस्येत्यादिना मुम् वामनश्च।

---

**बाल०**—मित। मित-नखपरिमाणेषु कर्मसु पूर्वपदेषु सत्सु पच उत्तरे खश् भवति। परिमाणं प्रस्थादि। मितम्पच इति मितशब्दोऽल्पार्थः। प्रस्थम्पच इति प्रस्थशब्देन तत्परिमिततण्डुलादिकमुपचारेणाभिधीयते। एवं द्रोणम्पच इति। अस्त्रियमाढकद्रोणौ खारी वाहो निकुञ्चकः। कुडवः प्रस्थ इत्याद्याः तरिमाणार्थकाः पृथगित्यमरः। मितार्थस्यापीति ग्रहणमिति शेषः। इत्येक इति क्रमदीश्वरादयः इत्यर्थः। अत्र स्वसम्मतिं सूचयितुं भट्टिप्रयोगं दर्शयति पान्ताविति॥ २४५॥

**बाल०**—असूर्य। वृत्तिमाह कर्मपूर्वपदत्व इति। सूर्यमपि न पश्यतीत्यर्थकथनं। असूर्यम्पश्य इति निपातात् खश् नञः पूर्वनिपातश्च दृशः शश्य मुम्। ललाटन्तप इति तप सन्तापे निपातात् खश्। ललाटन्तपः सूर्य इति पुरुषोत्तमः। प्रियम्बद इति वद व्यक्तायां वाचि निपातात् खश्। परन्तप इति ललाटन्तप इतिवत्। वाचंयम इति यमु उपरमे निपातात् खश्। पूर्वपदादमुम् च निपातादेव इषु गमि यमां छः शिव इत्यपि न

मुम् स्तनन्धय । वामनश्व शुनिन्धयः, नासिकन्धयः नासिकन्धमः, नाड़िन्धयः नाड़िन्धमः । एवं मुष्टि घटी खारी वातेषु मुञ्जकूलास्य पुष्पेषु धेट इति केचित् । मुञ्जन्धय इत्यादि । शर्द्धञ्जहः विधुन्तुदः तिलन्तुदः ।

**२४७. अरुन्तुद - जन्मेजय - कूलमुद्रुज - कूलमुद्‌रुज- कूलमुद्वहाभ्रंलिहाः ।**

अरुस इत्यादि कर्मपूर्वपदत्वे तुदादिधातूनामेते साधवः । वार्हंलिहोऽपीत्येके ।

---

स्तनन्धय इति—शिशुरित्यर्थः, खश् प्रत्ययस्य शित्वेन शिवत्वात् धेटो नारामान्तपाठः, तथा कृष्णधातुकत्वात् शप् अराम हरश्च । शुनी कुक्कुरी, शुनिन्धय स्तत् शावकः । नासिकादिषु इत्यत्रत्यादिपदं विवृणोति—एवं मुष्टीत्यादिभिः । तेन मुष्टिन्धयः मुष्टिन्धम् इत्यादयो वेदितव्याः । मुञ्जेति—केचिदिति वोपदेवः कालापाश्च । मुञ्जकूलास्य पुष्पाद् धेट इति तत् सूत्रम् । तत्र—मुञ्जादिषु केचिदिच्छन्ती दुर्गसिंहः । शर्द्धञ्जह इति–ओहाक त्यागेधातुः, जुहोत्यादेः शपो महाहरो द्विर्वचनम्, श्नानाराग्रणयोरित्यानामहरः, मुम् । शर्द्धं कुत्सितशब्दं जहातीति शर्द्धञ्जहो माषः । विधुं चन्दं तुदतीति विधिन्तुदो राहुः ।

**अमृता०**—२४७. अरुन्तुदेति । स्वयमेववृत्तिरुक्ता—अरुसित्यादिना । अरुः मर्म तुदति पीडयतीति अरुन्तुदः, निपातात् पूर्वपदस्य सलोपः । जन्मेजय इति—जन्म एजयति कम्पयतीति, एजृकम्पनेण्यन्तः निपातात् खश् , राम धातुकपरत्वाभावान्न णेर्हरः, गोविन्दः, एअय्, जन्मन् शब्दस्य संसारहरो मुमाभावश्च निपात फले । जनमेजय इति तु खशा सिध्यत्येव, जनं लोकमेजयतीति । कूलमुद्रुजइति—कूलमुत् रुजतीति रुजो भङ्गे । उत्पूर्वत्वे नदार्थे साधुः । एवं कूलमुद्वहो नदः । अभ्रंलिह इति—अभ्रं मेघं लिहति स्पृशतीति पर्वतो वायु र्वेत्यर्थः । वहंलिह इति—एकेकालापा इत्यर्थः । तथाहि—वहंलिहाभ्रंलिह परन्तपेरस्मदाश्चेति तल्लक्षणम् ।

---

प्रवर्त्तते । वाचंयमो मुनिः । सर्वंसह इति सह मर्षणे निपातात् खश् । ननु असूर्यम्पश्य इत्यस्य सूर्यमपि न पश्यति इति यदर्थकथनं कृतं तत् कथं संगच्छतामिति चेत्तत्राह भिन्नक्रमोऽयं नञिति । भिन्नः पृथक् क्रमो यस्येति विग्रहः । अन्यत्रापीति दृश्यत इति भिन्नक्रमो नञिति शेषः । अपुनर्गेया इति पुनर्न गीयन्त इत्यर्थः । अश्राद्धभोजीति श्राद्धं न भुङ्क्त इत्यर्थः । आदिग्रहणादिति सूत्र इति शेषः । अरिन्दम इति दमु उपशमे निपातात् खम् । यद्यप्ययमकर्मकस्तथापि अन्तर्भूतण्यर्थत्वात् सकर्मकता अरिं दयमतीत्यर्थः । अरि शत्रुः । सकर्मकोऽप्ययं दृश्यते । दमित्वाप्यरिसंघातानिति भट्टिः । उग्रम्पश्य इति निपातात् खश् दृशः पश्यः ॥ २४६ ॥

**बाल०**—अन्य । अन्येति आदिग्रहणादिति शेषः । इरयेति । इरा पृथ्वी जलञ्च । इरा भूवाक्सुराप्सु स्यादिति नानार्थवर्गः । इरम्मद इति निपातात् खश् दिवादेः

## २४८. मित-नख-परिमाणेषु पचः खश् ।

मितम्पचः नखम्पचः प्रस्थम्पचः द्रोणम्पचः । मितार्थस्यापीत्येके, अल्पम्पचः । पान्तावल्पपचान्मुनीनिति भट्टिः । ६ । ८७ ।

## २४९. असूर्यम्पश्य - ललाटन्तप - प्रियम्वद - परन्तप - वाचंयम् सर्वंसहादयश्च ।

कर्म पूर्वपदत्वे दृश्यादीनामेते साधवः । सूर्यमपि न पश्यति असूर्यम्पश्य इत्यादि । भिन्नक्रमेऽयं नञ् । अन्यत्रापि दृश्यते अपुनर्गेयाः श्लोकाः,

---

**अमृता०**—२४८. मितेति । मितनख परिमाणवाचिषु कर्मपूर्वपदेषु पचतेः खश् स्यात् । मितमल्पम्, मितम्पचा ब्राह्मणी । नखम्पचा यवागूः । प्रस्थम्पच इति—प्रस्थ शब्दः परिमाण वाची, उपचारेण तत्परिमितं द्रव्यमुप स्थापयति । एवं द्रोणम्पच इति च । द्रव्यमानमेवात्र विवक्षितं नतु कालसंख्या परिमाणम्, तेन मासं पचति, एकं पचती-त्यादौ वाक्यमात्रं तिष्ठेन्नतु खश् स्यात् । मितशब्देन तदर्थश्चाभिप्रेत इत्याह—मितार्थस्यापीत्येक इति । अत्र च स्वमतं सूचयितुं भट्टि प्रयोगमुट्टङ्कयति—पान्ता-वल्पम्चानिति । अल्पम्पचान् मुनीन् पान्तौ रक्षयन्तौ गिरिं ऐव आगतौ ( आवाम् ) इति श्रीरामोक्तिः ।

**अमृता०**—२४९. असूर्येति । वृत्तिमाह—कर्मपूर्वपदत्व इत्यादिना । असूर्यम्पश्य इति—शिवपरत्वाद दृशेः पश्यादेशः, मुम् । सूर्यमपीत्यादि अर्थ कथनम् । अत्रदृशिना हि नञः सम्बन्धो न किन्तु सूर्येणेत्याचष्टे—भिन्न क्रमेऽयं नञिति । भिन्नः क्रमोऽन्वयो यस्येति विग्रहः । सूर्येण नञः सम्बन्धे नञ् पर्युदासः स्यात, तथा च सति सूर्येतरं चन्दादिकं पश्य-तीत्यर्थ अपद्यते, सतु नाभिप्रेतः किन्तु दृशिक्रियया सहान्वयात् क्रममति क्रम्य अन्वेतीति प्रसह्यप्रतिषेधोऽयमिति केचित् । तेनात्र असमर्थत्वेऽपि गमकत्वात् समासः । वस्तुतो गुप्तिपरोऽयं प्रयोगः । तथाहि—असूर्यम्पश्या राजमहिष्यः : एवं नाम राजदारा गुप्ताः, यदपरिहार्यदर्शनं सूर्यमपि न पश्यन्ति किमुत परपुरुपमिति प्रयोक्तुराशयः । यदा तु सूर्येतर दर्शनं विवक्षितं तदा नैव भवेत् खश्, अनभिधानात् । एवम्विधाः प्रयोगा अन्यत्र च

---

श्यास्याभावश्च मुम् वामनौ । इरम्मदो वज्राग्निः । नात्र कर्मणः पूर्वपदत्वं । पशम्बद इति निपातात् खश् ।। २४७ ।।

**बाल०**—अधि । अधिकरणे वाच्ये च खश् भवति । आदिग्रहणादिति शेषः । पाणिन्धम इति निपातात् खश् ध्मो धमः । नाडिन्धम इति निपातात् खश् ध्मो धमः मुम् वामनो । मणिन्धम इति । केषाञ्चिन्मते मणिन्धमकरन्धमौ च भवतः । द्विषन्तमिति । द्विषन्तं तपति तापयति वा इत्यर्थे द्विषन्तपः द्विषत्तापश्च भवति । इत्यपि केचिदिति वदन्तीति शेषः । द्विषन्तप इत्यत्र द्विषच्छब्दस्यान्तः लुग्भवतीति तेषां मतं ।। २४८ ।।

**अश्राद्धभोजीत्यादि। आदि ग्रहणात् अरिन्दमः, उग्रं यथा स्यान्तथा पश्यति उग्रम्पश्यः।**

## २५०. अन्य पूर्वत्वे च।

**इरया माद्यति इरम्मदः, वशः सन् वदति वशम्बद इत्यादि।**

---

दृश्यन्त इत्युदाहरति—अपुनर्गेया इत्यादिना। अत्रापि नञः सम्बन्धो गैधातुना, नकिन्तु पुनरित्यव्ययेन, सकृद् गानात् परं पुन र्न गीयन्ते इत्यर्थः। एवमश्राद्धभोजीति भुजि क्रियया हि नञः सम्बन्धो नतु श्राद्धेन। तेनात्र श्राद्धभोजनं हि प्रतिषिध्यते नतु श्राद्धेतर भोजनं व्यवस्थीयत इति तात्पर्यम्। तदेतत् समास प्रकरणे स्पष्टीभविष्यति।

ललाटन्तपः सूर्यः, प्रियम्बदः प्रियभाषी। परान् शत्रून् तापयतीति परन्तपो राजा, वाचंयमो मौनी, सर्वंसहा धरणी। आदिपदेनान्यांश्च संगृह्णाति—अरिन्दम इत्यादि। अरीन् शत्रून् दमयतीति वीरः, उग्रम्पश्यः शनिश्चरः। एवं वातमजन्तीति वातमजा मृगाः।

**अमृता०**—२५०. तन्येति। कर्मपूर्वपदादन्यकारकपूर्वपदत्वेऽपि धातोरुत्तरे खश् भवेत्, तच्चादिग्रहणादेव निपातेन सिध्यतीति भावः। इरा मदः, तया माद्यतीति इरम्मदो हस्ती, निपाताद् दिवादेः श्यस्यविरह, मुम् वामनौ तु सिध्यत एव। इहकरणे खश्। इरा भू वाक् सूराप्सु स्यादित्यमरः। वशम्बद इति निपातात् कर्त्तृपूर्वपदे खश्, अधीन इत्यर्थः।

---

**बाल०**—हृदय। हृदयमितसुतेषु पूर्वपदेषु सत्सु गमेरुत्तरे खो भवति। हृदयङ्गम-मिति हृदयं गच्छतीत्यर्थः। मितङ्गमो हस्ती सुतङ्गमो राजभेद इत्येव पाठः, विपरीत-स्त्वपपाठः। हृदयङ्गममिति। एतत् हृदयङ्गमं वचनं त्वां ब्रवीमीति। हृदयङ्गमा वागिति। चुल्लिभट्टिरित्ति चुल्लिभट्टिग्रन्थविशेषः॥ २४९॥

**बाल०**—पुरः। संज्ञाशब्दाः पुरन्दरादयो भुजगादयश्च खप्रत्ययान्तत्वेन निपात-नीयाः। पुरन्दर इति ण्यन्तात् दृ विदारणे इत्यस्मान्निपातात् खः पूर्वपदादमुम् वामनश्च णेर्हरः। पुरं दारयतीत्यर्थः। पुरन्दर इन्द्रः। भुजङ्गम इति भुजेन कौटिल्येन गच्छतीत्यर्थे निपातात् खः मुम्। भुजग इति भुजेन कौटिल्येन गच्छतीत्यर्थे निपातात् खः मुमभावः संसारहरश्च। भुजङ्ग इति। निपातात खः संसारहरश्च। सर्पः दृशाकुर्भुजगो भुजङ्गोऽहिर्भुजङ्गम इत्यमरः। पुरन्दरभुजङ्गमादय इत्यादिपदेन भगन्दरतुरङ्गमप्लवङ्गमादयो ज्ञेयाः। भगन्दरो रोगविशेषः। तुरङ्गमोऽश्वः, तुरेण त्वरया गच्छतीत्यर्थः। प्लवङ्गमः कपिर्भेकश्च। कपिभेकौ प्लवङ्गमाविति नानार्थवर्गः। प्लवेन लम्फेन गच्छतीत्यर्थः। भुजगभुजङ्गमादय इत्यादिपदेन तुरग-तुरङ्ग-प्लवग-प्लवङ्गादयो ज्ञेयाः। घोटके पीति-तुरगतुरङ्गाश्वतुरङ्गमा इत्यमरः॥ २५०॥

## २५१. अधिकरणे च ।

पाणयो ध्मायन्ते यत्र स पाणिन्धमः । नाड्यो ध्मायन्ते यत्र स नाडिन्धमः पन्थाः । मणिन्धम करन्धमौ च केषाञ्चित् । द्विषन्तं तपति, द्विषन्तं तापयति वा द्विषन्तपः द्विषन्ताप इत्यपि केचित् ।

## २५२. हृदय-मिति-सुतेषु गमेः खः ।

हृदयङ्गमं वचनम्, मितङ्गमो हस्ती, सुतङ्गमो राजभेदः । हृदयङ्गममेतत् त्वां ब्रवीमीति भट्टिः (६।१०८) । हृदयङ्गमा वागिति चुल्लिभट्टिः ।

## २५३. पुरन्दर-भुजङ्गमादयो भुजगभुजङ्गादयश्च संज्ञा शब्दा ।

---

**अमृता०**—२५१. अधिकरण इति । अधिकरणे च वाच्ये धातोः खश् भवति, तदपि आदि ग्रहणान्निपातेनेत्यर्थः । पाणिन्धमः सभासु प्रोत्साहमयस्तथा हृदयग्राही वाग् विन्यासः । नाडिन्धम इति—ध्मो धमः, मुम् वामनश्च । द्विषन्तप इति कर्मपूर्वपदत्वे कर्त्तरि खश्, द्विषत् शब्दस्यान्तलोपो निपातकार्यम् ।

**अमृता०**—२५२. हृदयेति । हृदयादिषु कर्मपूर्वपदेषु गमे रुत्तरे कर्त्तरि ख प्रत्ययः स्यात् । खित्करणं मुमर्थम् । हृदयं गच्छति स्पृशतीति हृदयङ्गमम् । मितं नाति द्रुतं नातिमन्दं गच्छतीति मितङ्गमः । एभ्यो लक्ष्म्यामाप भवतीति ज्ञापनार्थं चुल्लिभट्टि प्रयोगश्चोदाहरति—हृदयङ्गमा वागिति ।

**अमृता०**—२५३. पुरन्दरेति । पुरन्दर भुजङ्गमादयः शब्दाः संज्ञायां खप्रत्ययेन निपात्यन्ते । पुरं नगरं दारयतीति पुरन्दर इन्द्रः । हलन्तादपि पूर्वपदात् मुमागमो निपातफलम् । दॄविदारणे धातुः । भुजेन कुटिलगतया गच्छतीति भुजङ्गमः सर्पः । भुजग इति तस्मिन्नेवार्थे निपातात् खः संसारहरश्चा आदिपदेन भगन्दरो व्याधिविशेषः । तुरेण त्वरया गच्छतीति तुरङ्गमः तुरङ्गः तुरगः घोटकः । प्लवेन लम्फेन गच्छतीति प्लवङ्गमः प्लवङ्गः प्लवगः भेको वानरश्च ।

---

**बाल०**—सर्व । सर्वादिषु कर्मसु पूर्वपदेषु सत्सु कष उत्तरे खो भवति । सर्वङ्कष इति कष हिंसायां । एवं कुलङ्कषः अभ्रङ्कषः करीषङ्कष इति । विशुष्कं गोमयं करीषः । तद्विशुष्कं करीषोऽस्त्रीत्यमरः ॥ २५१ ॥

**बाल०**—भय । भयादिषु कर्मसु पूर्वपदेषु सत्सु कृञ उत्तरे खो भवति ॥ २५२ ॥

**बाल०**—क्षेम । क्षेमप्रियमद्रेषु कर्मसु पूर्वपदेषु सत्सु कृञ उत्तरे खो भवति अण् च । क्षेमङ्कर इति क्षेमं करोतीत्यर्थः । क्षेमं मङ्गलं । अण्पक्षे क्षेमकार इति । प्रियङ्करः प्रियकार मद्रङ्करः मद्रकार इति ॥ २५३ ॥

**२५४. सर्व-कूलाभ्र-करीषेषु कर्मसु कषः खः।**

सर्वङ्कषः।

**२५५. भयर्त्तिमेघेषु कर्मसु डुकृञः खः।**

भयङ्करः ऋतिङ्करः, मोघङ्करो वातः।

**२५६. क्षेमप्रिय मद्रेसु डुकृञः खाणौ।**

क्षेमङ्करः क्षेमकारः।

---

**अमृता०**—२५४. सर्वेति। सर्वादिषु चतुःषु कर्मपूर्वपदेषु कष हिंसायामित्यस्मात् खः स्यात्। सर्वं कषति हिनस्तीति सर्वङ्कषः खलः, कूलङ्कषा नदी, अभ्रंकषा वात्या, करीषः शुष्क गोमयः, करीषङ्कषोऽग्निः।

**अमृता०**—२५५. भयेति। भयादिषु त्रिषु कर्म पूर्वपदेष् डुकृञ उत्तरे ख प्रत्ययः स्यात्। ऋतिं घृणां करोतीति ऋतिङ्करः। इह तदन्तविधिश्चेष्यते, अभयङ्करः।

**अमृता०**—२५६. क्षेमेति। क्षेमादिषु त्रिषु कर्म पूर्वं पदेष् डुकृञः खः अण् च स्याताम् सरूपत्वाद् वाऽसरूपविधिना अप्राप्ते अणो विधानम्, तच्च पुन र्हेतुताच्छील्या नुलोम्येषु टबाधनार्थम्। क्षेमं मङ्गलम्। एवंप्रियङ्करः प्रियकारः, मद्रङ्करः मद्रकार इति। केचिदिह तदर्थंपरञ्चेच्छन्ति तदन्तविधिश्च—शुभङ्करः अशुभङ्कर इति।

---

**बाल०**—वृत्र। वृत्रादिषु कर्मसु पूर्वपदेषु सत्सु हन्तेरुत्तरे टग् भवति। वृत्रघ्न इति गम हन जन खन घसामित्यादिना उद्धवादर्शनं हस्य घत्वं वृत्रघ्न इन्द्रः। आदिपदेन कुलघ्नः गोघ्नः ब्रह्मघ्नः शत्रुघ्नः चौरघ्न इति। चौरघात इति, अणि कृते हस्य घत्वं नस्य तत्वं वृष्णीन्द्रः। नगरघात इत्यत्र कर्मणि हन्तेष्टक् अमनुष्यकर्त्तृत्व इत्यनेन टग् भवितुमर्हतीति बाहुल्यादित्युक्तं॥ २५४॥

**बाल०**—कर्म। कर्मणि पूर्वपदे सति मनुष्यातिरिक्तस्य कर्त्तृत्वे हन्तेरुत्तरे टग्-भवति। संसारघ्नीति टित्त्वादीप्। एवं प्रलम्बघ्नो बलदेवः, प्रलम्बोऽसुरविशेषः। चौरघात इति। इति चेति बाहुल्यात् भवतीति शेषः। चौरघातो गज इति यत् पुनरुक्तं एतत्प्रयोजनं नावकलितं। अथवा पूर्वत्र सामान्यकर्त्तृवाच्यत्वेन प्राप्ते बाहुल्यं अत्रतु विशेषकर्त्तृवाच्यत्वेन प्राप्ते पुनर्ग्रहणमिति। अमनुष्यकर्त्तृत्वे इति किं रिपुघातो राजा॥ २५५॥

**बाल०**—आशि। आशिते कर्त्तरि पूर्वपदे सति करणभावयोर्वाक्ययोर्भवतेरुत्तरे खो भवति। आशित इति अश भोजने तृप्त्यर्थत्वेनाकर्मकत्वात् कर्त्तरि क्तः बाहुल्याद्दीर्घः। तथाच भाष्यं निपातनादुपधादीर्घ इति। भाषावृत्तौ तु आशिते भुवः करणभावयोरिति सूत्रे आङ्पूर्वादश्नातेः कर्त्तृनिष्ठान्ते आशितशब्द उपपदे भवतेः खच् स्यादित्युक्तं। आशितम्भव इति करणे खः। आशितम्भवमिति आशितेन भूयते इति भावे खः॥२५६॥

**२५७. वृत्र-कृत-गो-ब्रह्म-शत्रु-चौरेषु-कर्मसु हन्ते ष्टक् ।**

वृत्रघ्न इत्यादि । बाहुल्यात् चौरधातः नगरधातश्च । एतत्पदद्वयेन हस्त्युच्यते ।

**२५८. कर्मणि हन्ते ष्टक् अमनुष्य कर्त्तृत्वे ।**

संसारघ्नी हरिभक्तिः । चौरघातो गजः शस्यघातो वृष इति च । अनभिधानात् वेण्वादौ च वाच्ये टक् न स्यात्, वषघातो वेणुः ।

**२५९. आशिते कर्त्तरि भवतेः खः करण भावयोः ।**

आशिता स्तृप्ता भवन्ति येन स आशितम्भवः ओदनः । ओदनेनाशित. म्भवं भवति । तृप्तिर्भवतीत्यर्थः ।

---

**अमृता०**—२५७. वृत्रेति । वृत्रादिषु षट्सु कर्मपूर्वपदेषु हन्तेरुत्तरे कर्त्तरि टक् प्रत्ययः स्यात् । वृत्रघ्न इति—कंसारित्वात् गमहनेत्यादिना उद्धवादर्शनं, हस्य घत्वञ्च । वृत्रनामानमसुरं हन्तीति वृत्रघ्न इन्द्रः । एवं कृतघ्नः स्वस्मिन् कृतोपकारस्य असमर्त्ता, गोघ्नो यवनः, ब्रह्मघ्नो ब्रह्मघातकः, शत्रुघ्नो रामस्यानुजो राजा च, चौरघ्नौ राजा । एवं कंसघ्नः कृष्णः, प्रलम्बघ्नो बलदेव इत्यादयश्च ज्ञेयाः । बाहुल्यादिति—चौर घातादिः कर्मण्यन् इत्यनेन सिद्धः, सचाण् प्रत्ययो वाऽसरूपविधिना भवितुं नार्हति सरूपत्वात्, तथापि तस्या व्यवस्थित विभाषाया अनित्यत्वेन बाहुलप्रादेत्राण् भवतीत्याशयः ।

**अमृता०**—२५८. कर्मणीति । कर्मणि पूर्वपदे सति मनुष्येतर कर्त्तृत्वे हन्तेः टक् प्रत्ययः स्यात् । संसारघ्नीति—पूर्ववदुद्धवहरादि, टित्त्वादीप् । चौरधात इति पुनरुक्ते रयमभिप्रायः—पूर्वत्र सामान्येनाप्राप्तिमुक्त्वा इह अमनुष्यकर्त्तृत्व इति विशेषेण टक एव प्राप्ति र्नत्वणः, वाऽसरूपविधेस्तत्रानवसरात् तथापि बाहुल्यादेवाण् भवेदिति दर्शितम् । अनभिधानात् पूर्वाचार्यैः कुत्राप्यकथनादित्यर्थः । अमनुष्यकर्त्तृत्व इतिकिम्—रिपुघातो राजा ।

**अमृता०**—२५९. आशित्त इति । आशिते कर्त्तरि पूर्वपदे करणभावयो र्वाच्ययोर्भुव उत्तरे स्वप्रत्ययो भवति । आशित इति—आङ् पूर्वात् अश भोजने इत्यस्मात् कर्त्तरि क्तः,

---

**बाल०**—विश्व । संज्ञाशब्दा विश्वम्भरादयोऽपि खप्रत्ययान्तत्वेन निपातनीयाः । विश्वम्भर इति । विश्वं बिभर्त्तीत्यर्थः । विश्वम्भरो विष्णुः । आदिग्रहणात् वसुन्धरा पृथ्वी, पतिम्बरा स्वयम्बरा, कष्टसहो मुनिः, धनञ्जयो वह्निरर्जुनश्च ॥ २५७ ॥

**बाल०**—अन्तो । अन्तादिषु कर्मसु पूर्वपदेषु सत्सु गमेरुत्तरे अच् भवति । आदिपदेन अत्यन्तगः अध्वगः दूरगः सर्वगः अनन्तगः सर्वत्रग इति । अत्र संज्ञाशब्दाः पन्नगजिह्मगादयोऽपि अच्प्रत्ययान्ताः ज्ञेयाः । पन्नगजिह्मगौ सर्पवाचकौ । अन्नं चलितं गच्छतीति पन्नग इति जुमरः । पद्भ्यां न गच्छतीति पन्नगः । पृषोदरादीति तु भाषावृत्तिः ॥ २५८ ॥

## २६०. विश्वम्भरादयः संज्ञाशब्दाः ।

## २६१. अन्तात्यन्ताध्व- दूर-पार- सर्वानन्त सर्वत्र क्षेत्रेषु कर्मसु गमेरच् ।

ङः पाणिनिः । संसारस्य हरश्चिति, अन्तग इत्यादि ।

---

तृप्त्यर्थत्वेनाकर्मकत्वात् । आशितम्भव इति करणे खः, खित्त्वात् मुम् । परत्र भावे खः । इह वाऽसरूपविधिना अनश्च भवति—अःशितम्भवनमोदनेन ।

**अमृता०**—२६०. विश्वम्भरादयः संज्ञाशब्दाश्च खप्रत्ययान्ता ज्ञेयाः । विश्वं विभर्त्तीति विश्वम्भरो विष्णुः, विश्वम्भरा धरणी । आदिपदेन रथन्तरं साम, कष्टसहो मुनिः, पतिम्बरा कन्या, मृत्युञ्जयः शिवः, धनञ्जयः अर्जुनः, युगन्धरः पर्वतः, वसुन्धरा पृथिवीत्यादयः । संज्ञायामिति किम्—कुटुम्बं विभर्त्तीति कुटुम्बभारः ।

**अमृता०**—२६१. अन्तेति । अन्तादिषु कर्मपूर्वपदेषु कर्त्तरि गमेरुत्तरे अच् प्रत्ययः स्यात् । चइत् संसारहरार्थः । सरूपत्वाद् वाऽसरूप विधेरप्रवृत्तेः । कर्मण्यनोऽपवाद एषः । अन्तं गच्छतीति अन्तगः । एवं अत्यन्तगः अध्वगः दूरगः पारगः सर्वगः अनन्तगः सर्वत्रगः क्षेत्रग इति । प्रकरणेऽत्र पन्नगोरग जिह्मगादयश्च संज्ञाशब्दाः अच् प्रत्ययान्ता ज्ञेयाः । पद्भ्यां न गच्छतीति पन्नगः सर्पः, पृषोदरादित्वात् साधुः । उरसा गच्छति उरगः, सलोपेन साधुः, जिह्मेन गच्छति जिह्मगः । सर्व एव सर्प वाचिनः । विहायसा गच्छतीति विहगः पक्षी, पूर्वपदस्य विहभावो निपातफलम् ।

---

**बाल०**—सुदु । सुदुरोः पूर्वपदयोः सतोरधिकरणे वाच्ये गमेरुत्तरे अच् भवति । सुगमिति सुखेन गच्छत्यस्मिन्नित्यर्थः । दुर्ग इति दुःखेन गच्छत्यस्मिन्नित्यर्थः ।। २५९ ।।

**बाल०**—ग्राम । कर्त्तरि वाच्ये उक्तेभ्योऽन्यस्मिन् कर्मणि च पूर्वपदे सति गमेरुत्तरे अच् भवतीत्यर्थः । ग्रामग इति ग्रामं गच्छतीत्यर्थः । अगो । व्यक्तार्थमेतत् । अग इति न गच्छतीत्यर्थे निपातादच् नञोऽरामशेषः । नग इति निपातादच् । नञोऽरामशेषाभावश्च । शैलवृक्षौ नगावगाविति नानार्थवर्गः । शैलः पर्वतः । कर्म । कर्मणि पूर्वपदे सति शक्ते वाच्ये हस्तिघ्न कपाटघ्नौ साधू । शक्तः समर्थः, हस्तिघ्न इति निपातात् टक् । हस्तिनं हन्तुं शक्तइत्यर्थः, सच मनुष्यो वाच्यः, अन्यथा कर्मणि हन्तेष्टक् अमनुष्यकर्त्तृत्व इत्यनेनैव टक् स्यात् । एवं कपाटघ्न इति । बाहुघ्न इति चेति । बाहुघ्न इति च भवति इत्येके वदन्ति । हस्तिघातो विषप्रद इति विषेण हस्तिनं हन्तीत्यर्थः ।। २६० ।।

**बाल०**—कर । करणे कर्मणि वा पूर्वपदे सति शिल्पिनि वाच्ये पाणिघताडघौ साधू । पणिघ इति निपातादच् हस्य घत्वञ्च संसारहरः पाणिना पाणिं वा हन्तीत्यर्थः । एवं ताडघ इति । ताडशब्दस्यार्थमाह ताड आघात इति ।। २६१ ।।

## २६२. सुदुरो र्गमेरजधिकरणे ।

सुगं वृन्दावनम्, दुर्गो वदरिकाश्रमः ।

## २६३. ग्रामगः कर्त्तरि च अगो नगश्च शैलवृक्षयोः साधुः, कर्मणि हस्तिघ्न कपाटघ्नौ शक्ते साधू ।

बाहुघ्न सति चैके । शक्ते किम्—हस्तिघातो विषप्रदः ।

---

**अमृता०**—२६२. सुदुरेरिति । सु दुर् इत्यव्ययोः पूर्वपदयो रधिकरणे वाच्ये गमेरुत्तरे अच् स्यात् । सुखेन गम्यते यत्र तत् सुगम् । एवं दुःखेन गम्यते यत्र स दुर्गः ।

**अमृता०**—२६३. ग्रामगइति । कर्त्तरीति अधिकरणानुवृत्ति निरासाय, चकारः अनुक्त समुच्चयार्थं । कर्त्तरि वाच्ये ग्राम कर्मणि पूर्वपदे गमेरच् प्रत्ययः स्यात् । शैलवृक्षयोरभिधेययोः कर्त्तरि अगः नगश्च साधू स्याताम् तथा हस्ति कपाटयोः कर्मपूर्वपदयो र्हन्तेष्टक् प्रत्ययेन हस्तिघ्न कपाटघ्नौ साधू स्यातांसमर्थेऽर्थे । ऐक इति कालापाः । तथाहि "हस्ति बाहु कपाटेषु शक्तौ" इतितल्लक्षणम् ।

ग्रामगइति—ग्रामं गच्छतीत्यर्थः । चकारादन्येषु कर्मपूर्व पदेषु च अच् भवति । यथा तीर्थगः गुरुतल्पगः तीरगः पीठगः सत्सङ्ग इत्यादयः । अग इति—नगच्छतीत्यर्थे नञ्समासः । नग इति—निपातात् नञोऽरामशेषाभावः । वृक्षो वा पर्वतो वाऽर्थः । हस्तिनं हन्तुं शक्त इति हस्तिघ्नः श्रीकृष्णः । एवं कपाटघ्नो भीमसेनः । मनुष्यकर्त्तृत्व एवात्रविवक्षा, अन्यथा कर्मणिहन्तेष्टक् ।अमनुष्यकर्त्तृत्व इत्यनेनैव सिद्धेऽत्र कथनमनु पन्नं स्यात् । हस्तिघात इति—अत्र विषदानेन हस्तिनं हन्ति नतु स्वसामर्थ्येन, अतः शक्तत्व विरहान्ना च् किन्तु सामान्यतः कर्मण्यन् ।

---

**बाल०**—कर्म । कर्मणि पूर्वपदे सति राजघादयः साधवः राजघ इति राजानं हन्तीत्यर्थे निपातादच् । क्लेशापह इति क्लेशमपहन्तीत्यर्थे निपातादच् । तमोपह इति निपातादच् तमोऽपहन्तीत्यर्थः । कुमारघातीति कुमारं हन्तीत्यर्थे निपाताण्णिनिः हस्य घत्वं नस्य तत्वं वृष्णीन्द्रः । एवं शीर्षघातीति । शीर्षं शिरः । उत्तमाङ्गं शिरः शीर्षमित्यमरः । साधव इति । एते राजघादयः साधव इत्यर्थः ।। २६२ ।।

**बाल०**—कर्मण्या । कर्मणि पूर्वपदे सति आशिषि गम्यमानायां हन्तेरुत्तरे अच् स्यादिति वक्तव्यं । शत्रुह इति अत्राशीर्गम्यते । शत्रुं बध्यादिति कामपालप्रयोगेण वाक्योपन्यासः शत्रुहपदस्य तत्समानार्थतां सूचयितुं कृत इति ज्ञेयं । तिमिह इति तिमिर्मत्स्यविशेषः । दस्युह इति । दस्युः चौरः संज्ञाशब्दः । पटहकलहादयोऽप्यच्प्रत्ययान्ताः ज्ञेयाः । पटहो वाद्यविशेषः । कलहः प्रसिद्धः ।। २६३ ।।

**२६४. करणे कर्मणि वा पाणिघ-ताडघौ शिल्पिनि साधू ।**

ताड आघातः । शिल्पिनि किम्—ताडघातः ।

**२६५. कर्मणि राजघ- क्लेशापह- तमोऽपह- कुमारघाति- शीर्ष-घातिनः साधवः ।**

**२६६. कर्मण्याशिषि हन्तेरच् स्यादिति वक्तव्यम् ।**

शत्रुं बध्यात् शत्रुहः, तिमिहः, दस्युह इत्यादि ।

---

**अमृता०**—२६४. करण इति । करणे कर्मणि वा पूर्वपदे शिल्पिन्यभिधेये पाणिघ-ताडघौ अच् प्रत्ययेन साधू स्याताम् । पाणिघ इति पाणिना पाणिं हन्तीत्तर्थः, संसार हरः, निपातात् घत्वम् । एवं ताडघ इति च । ताडघात इति कर्मण्यन् ।

**अमृता०**—२६५. कर्मणीति । कर्मणि पूर्वपदे राजदादयः साधवो भवन्ति । अशिल्पिन्येते ज्ञेयाः । राजघ इति राजानं हन्तीत्यर्थे अच्, संसारहरः निपातात् घत्वम् क्लेशमपहन्तीति क्लेशापहरो हरिः, संसारहरः । तमोऽपहः सूर्यः । कुमारघातीति निपातेन णिनिः । एव शीर्षघाती, निपातात् शिरसः शीर्षः ।

**अमृता०**—२६६. कर्मणीति कर्मणि पूर्वपदे सति आशिषि गम्यमानायां हन्तेरुत्तरे अच् प्रत्ययः स्यादिति वक्तव्यम् । शत्रुं बध्यादिति कामपालप्रयोगेणाशी र्द्योत्यते । तिमि बृहदाकृति जंलजन्तुः । आशिषि किम्—शत्रुं हन्तीति शत्रुघाती ।

---

**बाल०**—लक्ष । लक्षणे कर्त्तरि वाच्ये जायापत्योः पूर्वपदयोः सतोः हन्तेरुत्तरे टक् वक्तव्यः । लक्ष्यतेऽनेनेति लक्षणं शुभाशुभसूचकं चिह्नं क्वचिदुपचाराल्लक्षणयुक्तोऽपि लक्षणपदेनाभिधीयते यथा शुक्लगुणयुक्तः पटः शुक्ल इत्याभिधीयते इति । जायाघ्नो हस्त इति । जायाहननलक्षणयुक्तो हस्तो लक्षणपदेनाभिधीयते । पतिघ्ना पाणिरेखेति । अत्र रेखैव पतिहननस्य लक्षणं ॥ २६४ ॥

**बाल०**—आढ्य । अभूततद्भाववत्सु आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु कर्मसु पूर्वपदेषु सत्सु करणे वाच्ये डुकृञ उत्तरे खनट् भवति खटावितौ । अभूततद्भाववत्स्विवति मतु प्रत्ययस्तद्धितः । ख्युन् पाणिनिरिति । योरनमादिशन्ति ॥ २६५ ॥

**बाल०**—तेषु । तादृशेषु अभूततद्भाववत्सु आढ्यादिषु पूर्वपदेषु पूर्वपदेषु सत्सु कर्त्तरि वाच्ये भुव उत्तरे खिष्णु-खुकणौ भवतः खणावितौ । आढ्यङ्करणमिति आढ्यो धनी । इभ्य आढ्यो धनीत्यमरः । शुभगङ्करणमिति अशुभगं शुभगं कुर्वन्ति येन तदिति । एवं स्थूलङ्करणं नग्नङ्करणमित्यादि । पलितं जरसा शौक्ल्यं केशादावित्यमरः । नग्नो विवस्त्रः । नग्नवासा दिगम्बर इत्यमरः ॥ २६६ ॥

## २६७. लक्षणे जायापत्यो ष्टग् वक्तव्यः।

जायाघ्नो हस्तः, पतिघ्नी पाणिरेखा।

## २६८. आढ्य-सुभग-स्थूल-पलित-नग्नान्ध-प्रियेष्वभूततद्भाववत्सु कर्म्मसु डुकृञः खनट् करणे।

ख्युन् पाणिनिः। खटावितौ, अनःशेषः।

---

अमृता०—२६७. लक्षण इति। लक्षणे गम्यमाने जाया-पति शब्दयोः कर्मसूर्व पदयोः कर्त्तरि हन्तेरुत्तरे टक् प्रत्ययो वक्तव्यः। लक्ष्यतेऽनेनेति लक्षणं शुभाशुभसूचक चिह्नम्, तच्चेह तद्वति वस्तुन्युपचर्यते। जायाघ्न इतिकंसारित्वादुद्धवादर्शनम्, ईदृशः खलु लक्षणान्वितो हस्तो येन जायाया हननंसूच्यते। तथा ईदृशी खलु कन्यायाः पाणिरेखा यया पतिमरणं सूच्यत इतिभावः। लक्षणे किम्—जायाघातः शूद्रः।

अमृता०—२६८ आढ्येति। अभूत-तद्भाव-वत्सु आढ्यादिषु कर्मपूर्वपदेषु करणे वाच्ये डुकृञ उत्तरे खनट् प्रत्ययः स्यात्। खित् करणं मुमर्थं, टित् करणमीवर्थम्।

---

बाल०—तद्धि। तद्धित-विप्रत्यये सति तु खनट् न भवतीति वाच्यं विप्रत्ययेनैव तदर्थस्याभिहितत्वादिति शेषः। अनेनेति। अनेन प्रयोगेणेत्यर्थः। टनेनेति वा पाठः। तमाह आढ्यीकरण इति। अत्र टन करणाधिकरणयोरिति वक्ष्यमाणसूत्रेण टनः कर्त्तव्यः। स्थूलीकरणमन्नमिति स्थूलीकुर्वन्त्यनेनेति करणे टनः। भाष्यकारवचनेन स्वमतं द्रढयति, तथाच भाष्यमिति। ख्युनिति। ख्युन्प्रत्ययविषये च्विप्रत्यये सति यः प्रतिषेधस्तस्यानर्थक्यं भवतीत्यर्थः। तस्मात् प्रतिषेध विनैव ख्युन्प्रत्ययो न भवतीति भावः। आनर्थक्ये हेतुमाह ल्युटोरैक्यं ज्ञेयं। नुम्विधानसूत्रे अनव्ययस्येत्युक्तं, अतः ख्युन्प्रत्यये कृतेऽपि मुम् न भवतीति अविशेषादित्युक्तं। तस्मादत्र ल्युडेव भवतीति भाष्यमतं। अथवा च्विविषये ख्युन् ख्युन्च्विः, राजदन्तादित्वात् ख्युनः पूर्वनिपातः। यथा मयोक्तं तथा पुनर्भाष्यमाह ल्युट्ख्युनोरविशेषात् च्विविषये ख्युनः प्रतिषेधस्यानर्थक्यं स्यादिति ल्युडेव। ननु यद्येवं तर्हि निषेधस्य किं फलं, अत्रैव वाच्यं, अभूततद्भाववत्त्वे कर्मणि पूर्वपदे सति मुमर्थं ख्युन्प्रत्ययो विहितः अभूततद्भाववाचक-विप्रत्यये सति तत्प्रत्ययान्तस्य अव्ययत्वात् मुमोऽभावः स्यात्, यद्येवं तर्हि तन्निमित्तख्युन्प्रत्ययेन किं अतः स्पष्टार्थमेव-निषेध इति, किन्तु आढ्यीकरण इत्यादिप्रयोगदर्शनात् अनेन भाष्यमित्यप्युक्तमिति। आढ्यम्भ वुक इति अनाढ्य आढ्यो भवतीत्यर्थः। शुभगम्भविष्णुरिति अशुभगः शुभगो भवतीत्यर्थः। आदिपदेन स्थूलम्भविष्णुः स्थूलम्भावुक इत्यादि॥ २६७॥

बाल०—समा। समाने कर्मणि पूर्वपदे सति अन्यतदादिषु कर्मोपमानेषु पूर्वपदेषु सत्सुच कर्मणि वाच्ये दृश उत्तरे कक्विप् सको भवन्ति। समानशब्दस्य स्थाने सश्च भवति, दृशादिष्विति शेषः। सदृश इति कंसारित्व दृगोविन्दाभावः। छान्दस इत्येके वदन्ति। इत्येके इति पुरुषोत्तमादय इत्यर्थः॥ २६८॥

**२६९. तेषु कर्त्तृषु तादृशेषु भुवः खिष्णुखुकणौ कर्त्तरि ।**

**अनाढ्यं आढ्यं कुर्वन्ति येन तत् आढ्यङ्करणम्, सुभगङ्करणम् ।**

**२७०. तद्धित-विप्रत्यये तु नेति वाच्यम् ।**

**आढ्यी कुर्वन्त्यनेनेति न तथा, किन्तु टनेन भाव्यम्, अढ्यीकरणो रस-विधिः, स्थूलीकरणमन्नम् । तथा च भाष्यम्—ख्युनि च्वि प्रतिषेधानर्थक्यम्, ल्युट् ख्युनोरविशेषात् ।**

---

**अमृता०**—२६९: तेष्विति । तादृशेषु अभूततद्भववत्सु तेषु आढ्यादिषु कर्त्तृपूर्वपदेषु कर्त्तरिवाच्ये भुव उत्तरे खिष्णु-खुकणौ भवतः । खणावितौ । आढ्यङ्करणमिति—अन्तस्य गोविन्दः, वाणिज्यमित्यर्थः । आढ्यो धनवान् । एवं स्थूलङ्करणं घृतम्, पलितङ्करणं तैलम्, नग्नङ्करणी द्यूतक्रीडा, अन्धकरणः शोकः, प्रियङ्करणं शीलम् । पलितं जरसा शौक्ल्यं केशादावित्यमरः । अभूत तद्भाववत्स्विति किम्—सुभगं करोति रूपेण ।

**अमृता०**—२७०. तद्धितेति । तद्धितवि प्रत्ययस्य चाभूततद्भावार्थो विद्यते, ततो विप्रत्ययान्तस्यापि प्राप्ते निषेधोऽयम् । विप्रत्ययस्यार्थे हि खनटादयो विधीयन्ते नकिन्तु विप्रत्ययान्ते सतीति निष्कर्षः । नतथेति—न आढ्यङ्करणमिति किन्तु टनेन भाव्यम्, टनः करणाधिकरणयोरिति वक्ष्यमाणः टन प्रत्ययो भवतीत्यर्थः । अत्र काशिकादयः टनोऽपि न स्यादिति मन्यन्ते, तत्तु न भाष्यसम्मतमिति तन्मतमुरीकृत्य तद्वचनं प्रमाण त्वेनाविष्करोति—ख्युनीत्यादि । तत्र "आढ्येत्यादि" ख्युन्विधायक सूत्रे "च्व्यर्थेष्वच्वी" इति च्विविषये ख्युनः प्रतिषेधः कृतः श्रीपाणिनिना । भाष्यकृत्तु युक्त्या तदभिप्रायं व्यनक्ति—ख्युन् विषये च्वि प्रतिषेधोऽनर्थकः । यतः कृदन्तेषु ख्युनन्तेन ल्युडन्तेन वा (करणाधिकृतेन) च्विप्रत्ययः प्रयोक्तव्यः, किन्तु तयोः समरूपत्वात् वाऽसरूपविधेरविषयत्वेन स्वतएव ख्युन् विषये ल्युट्प्रतिषिद्धः, किं प्रतिषेधेन ? तस्मात् प्रतिषेधोऽमुत्तरार्थः, अर्थात् खिष्णु खुकञार्थो बोध्यः, ख्युन् विषये च्वौ ल्युड् भवेदेवेति र

---

**बाल०**—अन्या । व्यक्तार्थमेतत् । इद । दृशादिषु परेषु इदमः स्थाने ईश् भवति, किमः स्थाने कीश् भवति, अदसः स्थाने अमूश् भवति । सर्वत्र इवेन सहेति ज्ञेयं । श इत्, शित् सर्वस्येति न्यायेन शिदादेशः समुदयादेशः । अन्यादृश इति इवेन सह अरामस्यारामः । तादृश इति । स इव दृश्यते इति इवेन सह संसारस्यारामः । ईदृश इति अयमिव दृश्यते इति इवेन सह इदम ईश् । कीदृश इति क इव दृश्यते इति इवेन सह किमः कीश् । अमूदृश इति असाविव दृश्यते इति इवेन सह अदसोऽमूश् । इत्यादीत्यादिपदेन क्विप् सकोरुदाहरणानि यादृश् एतादृश् इत्यादीनि च ज्ञेयानि ॥ २६९ ॥

**बाल०**—कुञ्च । वृत्तिमाह कुञ्च धृषिति । कुञ्च कौटिल्याल्पीभावयोः । ञि धृषा प्रागल्भ्ये सृज विसर्गे उत्पूर्वस्निह प्रीतौ एषां । कुङिति निपातात् क्विप् तवर्गस्य

अनाढ्य आढ्यो भवति आढ्यम्भविष्णुः आढ्यम्भावुकः, सुभगम्भविष्णुः सुभगम्भावुक इत्यादि।

## २७१. समाने कर्मण्यन्यतदादिषु च कर्मोपमानेषु दृशः क-क्विप्-सकः कर्मणि, समानस्य च सः।

समानो दृश्यते सदृशः। स्रजदृशित्यादिना कः, सदृक्। सदृक्ष इच्छान्दस इत्येके।

## २७२. अन्यादेरिवेन सह संसारस्यारामः काद्यन्तेषु दृशादिषु इदमूईश्, अदसोऽमूश्।

---

भुवः खिष्णु खुकणावुदाहरति—अनाढ्य आढ्यो भवतीति। आढ्यम्भावुक इति नृसिंह परत्वाद् वृष्णीन्द्रः। अभूततद्भाव इति किम्—आढ्योभविता। तद्धितच्विप्रत्यये तु आढ्यीभविता। अत्र टनो न, करणविषयाभावात्।

**अमृता०**—२७१. समान इति। समानशब्दे कर्म पूर्वपदे तथा अन्यतदादिषु कर्मोपमानेषु चपूर्वपदेषु कर्मणि वाच्ये दृशधातोरुत्तरे कः क्विप् सकः प्रत्ययाः स्युः, तत्र समान शब्दस्य सआदिष्यते। सदृश इति कंसारित्वाद् गोविन्दाभावः। कर्मणि वाच्ये प्रत्ययप्रदर्शनार्थं वाक्ये समान इति कर्मणि प्रथमा न्यस्ता। सदृगिति क्विप्, स्रज्दिश् दृशित्यादिना शस्य कः। इत्येक इति पुरुषोत्तमादयः।

**अमृता०**—२७२. अन्यादेरिति। कक्विप् सकन्तेषु दृशादिषु परेषु उपमाव्यञ्जको

---

चवर्गश्चवर्गयोगे इति नस्य ञरामः सत्सङ्क्रान्तस्य हरः। चवर्गस्य कवर्गः विष्णुपदान्ते इति ञरामस्य ङरामः। क्रुङ् वकविशेषः। दधृगिति निपातात् क्विप् द्विर्वचनञ्च नरञ्चरामस्य अरामः धस्य दत्वं, सृज दृश इत्यादिना कः दधृक्, धृष्टः प्रगल्भः। आदिपदेन स्रक् उष्णिगिति। स्रागिति निपातात् क्विप् सृजः स्रज् च स्रज दिश इत्यादिना कः। स्रक् माला। उष्णिगिति निपातात् क्विप् उदो दरामलुक् षत्वञ्च, स्रज दिश इत्यादिना कः। उष्णिक् छन्दोविशेषः॥ २७०॥

**बाल०**—नाम्नि। नाम्नि पूर्वपदे सति षद्लृ विशरणगत्यवसादनेषु सूङ् प्राणिगर्भविमोचने द्विष अप्रीतौ द्रुह जिघांसायां दुह प्रपूरणे युजिर् योगे युज् समाधौ द्वयोरेव ग्रहणं, विदलृलाभे भिदिर विदारणे छिदिर द्विधाकरणे जि जये णीञ् प्रापणे राजृ दीप्तौ इत्येतेभ्य उत्तरे कर्त्तरि वाच्ये क्विप् भवति। उपनिषदिति, सदेः प्रतिविर्वजिनः उपेन्द्रात् क्रियते तद्वदित्यनेन षत्वं वाच्यमिति। वक्ष्यत इत्यर्थः। षत्वप्रकरणे सुषामादयश्चेति वक्ष्यते। प्रसूर्माता। कृष्णप्रसूरिति कृष्णं प्रसूते इत्यर्थः कृष्णप्रसूर्यशोदा। कंसद्विडिति कंसं द्वेष्टीत्यर्थः। आदिपदेन दैत्यध्रुक् गोधुक् कृष्णयुक् भक्तिवित् वकभित् भवबन्धच्छित् कंसजिदिति। मृदुन्याविति सहजानेकसर्वेश्वरस्येत्यादिना ईरामस्य यरामः। एवं विराजतीति विराडिति॥ २७१॥

**अन्य इव दृश्यते अन्यादृशः। एवं तादृशः ईदृशः कीदृशः अमूदृश इत्यादि।**

**२७३. क्रुञ्च् दधृष स्रज् उष्णिहश्च क्विवन्ताः।**

**क्रुञ्च धृष सृज उत्पूर्वस्निहामेते पक्षिविशेश-धृष्ट-माला-च्छन्दो विशेषेषु क्विवन्ता निपात्यन्ते। क्रुङ् दधृक्।**

---

य इव शब्दस्तेनसह अन्यादि पूर्वपदस्य संसारस्य आरामादेशः स्यात्, इवेन सह इदम ईश्, किमः कीश् अदसः अमूश् आदिश्यन्ते। शइत् शिदादेशः सर्वस्येति समुदयशब्दस्यादेशो बोध्यः। अन्यादृशइति—इवेनसह पूर्वपदान्तस्य अरामस्यारामः। तादृशइति—इवेन सह पूर्व पदस्य तत्शब्दस्य संसार स्थाने आरामः। ईदृश इति—अयमिव दृश्यत इत्यर्थे इवेनसह इदम ईश्भावः। कीदृश इति—कइव दृश्यत इत्यर्थे इवेनसह किमः कीशादेशः। अमूदृश इति—असाविव दृश्यत इत्यर्थे इवेनसह अदशः अमूशादेशः। एते कप्रत्ययान्ताः। इत्यादिपदेन क्विपः सकस्य च रूपाणि यथा—अयादृक् अन्यादृक्षः तादृक् तादृक्षः, अमूदृक् अमूदृक्ष इति। एवं तदादिस्थानाञ्चापरेषां यथा—यादृशः यादृक् यादृक् यादृक्षः, एतादृशः एतादृक् एतादृक्ष, भवादृशः भवादृक् भवादृक्ष इति। सदृशादिभ्यश्चेति ईप् वक्ष्यते, सदृशीत्यादि।

**अमृता०**—२७३. क्रुञ्चिति। वृत्तिमाह—क्रुञ्चेत्यादिभिः। क्रुञ्चादयःशब्दस्वरूपा निर्दिष्टाः, अथ तेषां सौ रूपान् दर्शयति—क्रुङित्यादिभिः। क्रुङिति—क्रुन्च् कौठिल्याल्पीभावयोः क्विप्, तवर्गस्य चवर्ग श्चवर्गयोग इति नस्य ञः, सत्सङ्गान्तस्य हरः, चवर्गस्य कवर्गो विष्णुपदान्त इतिञरामस्य ङः। अत्र पक्षिविशेषोऽर्थः नलोपाभावश्च निपातफलम्। दधृगिति—ञिधृषा प्रागल्भ्ये, घृष्णोतीति दधृक् धृष्ट इत्यर्थः। निपाताद् द्विर्वचनं नर ऋरामस्यारामः, धस्य दो नरस्य। सर्वत्र स्रज्दिशित्यादिना कः। आदिपदेन सृजति तामिति स्रक् माला, कर्मणि क्विप्, ऋरामस्य ररामः अर्थविशेषश्च निपातफले। एवमुत्पूर्वात् स्निह्यतेः क्विप्, उपेन्दान्तहरः छन्दोविशेषार्थ निपातफले।

---

**बाल०**—अग्र। अग्रग्रामयोः कर्मणोः पूर्वपदयोः सतोर्निय उत्तरे क्विप् भवति णत्वञ्च। अग्रणीशब्दः श्रेष्ठार्थः, ग्रामणीशब्दो नानार्थः। ग्रामणीर्नापिते पुंसि त्रिषु श्रेष्ठेऽधिपे चेति नानार्थवर्गः॥ २७२॥

**बाल०**—धी। व्यक्तार्थमेतत्। धीरिति ध्यै चिन्तायां निपातात् करणे क्विप् ध्यायो धीश्च। धीर्बुद्धिः। जुहूरिति हु वह्नौ दाने निपातात् क्विप् द्विर्वचनं नारायणस्य त्रिविक्रमश्च, हस्य जो नरस्येति जत्वं। ध्रुवोपभृज्जुहूर्नातु स्रुवो भेदाः स्रुचः स्त्रिय इत्यमरः। प्रधीरिति निपातात् क्विप् ध्यायो धीश्च। दिद्युदिति द्युत दीप्तौ निपातात् क्विप् द्विर्वचनञ्च। द्युतिस्वाप्योर्नरस्य सङ्कर्षणः। जगदिति निपातात् क्विप् द्विर्वचनञ्च, कवर्गनरस्य चवर्गः हरिवेणुहरः तुक्। पिष्टपं भुवनं जगदित्यमरः। ददृदिति दृ

## २७४. नाम्नि सदलसूद्विष द्रुह दुह युजालाभार्थविदभिदछिद जि नी राजिभ्यः क्विप्।

उपनिषत् शुचिषत्, षत्वंवाच्यम्। प्रसूः कृष्णप्रसूः कंसद्विडित्यादि। मृदु यथा स्यात्तथा नयति मृदुनीः मृदुन्यौ।

## २७५. अग्र ग्रामयोः कर्मणो नियः क्विप् णत्वञ्च।

अग्रणीः ग्रामणीः।

---

**अमृता०**—२७४. नाम्नीति। नाम्नि पूर्वपदेसति सदलृ प्रभृतिभ्य उत्तरे क्विप स्यात्, कपावितौ, विइति स्थिते केवलस्य प्रत्यय वेर्हर इतिवे र्लोपः। नाम्नीति निर्देशात् प्राद्यव्ययानाञ्च पूर्वपदत्वे क्विप् भवतीत्युदाहरति—उपनिषदित्यादि। सदेः प्रतिविवर्जन उपेन्द्रादिति षत्वम्। शुचिषदिति–शुचौ शुचिं वा सीदतीति अधिकरणे कर्मणि वा क्विप्। षत्वं वाच्यमिति—सुषमादयश्चेति वक्ष्यत इत्यर्थः। एवंदिविषत् समासदित्यादयश्च। प्रसूरिति—द्विषसाहचर्यात् अदादेरेव ग्रहणम् नतु तुदादेश्चुरादे र्वा। कृष्णं प्रसूते इति कृष्णप्रसू र्देवकी यशोदा च। कंसं द्वेष्टि कंसद्विट् कृष्णः।

इत्यादिपदेन चैद्यध्रुक् कृष्णः, कृष्णध्रुक् चैद्यः, गोधुक् गोपालः, कृष्णयुक् अनुरागः, कृष्णवित् भक्तः सम्यक् विद्यते वेत्ति अनया सम्बित् ज्ञानम्, वेदान् विन्त इति वेद विद् ब्राह्मणः, मुरभित् भवबन्धछित् वामनात्तुक् कंसजित् कृष्णः। युजिर् योगे युज समाधौ द्वयोरपि ग्रहणम्। यदुराट् सम्राट् स्वराडित्यादि। यदुषु राजते, सम्यग् राजते स्वर्-राजत इत्याद्यर्थाः। लाभार्थस्य विदे स्तु शएव, गोविन्दः अरविन्दम्। मृदुन्याविति–सहजानेकसर्वेश्वरस्येत्यादिना ईरामस्य यरामः।

**अमृता०**—२७५. अग्रेति। स्पष्टम्। णत्वञ्चेति—समानविष्णुपदत्वविरहादप्राप्ते णत्वे विधानम्। अग्रणीर्मुख्यः। ग्रामणी र्नापिते पुंसि त्रिषु श्रेष्ठेऽधिपेचेत्यमरः।

---

विदारणे दिवादिः निपातात् क्विप् द्विर्वचनं नारायणस्य वामनश्च। नरस्य वामन इति नरस्य वामनः तुक्। अत्र दृ भये इत्यस्य भ्वादेर्ग्रहणमिति जयादित्यः विदारणार्थस्य क्र्यादेर्ग्रहणमिति क्रमदीश्वरः। हिंसायां भवति इत्यर्थकथनं। एवं दृढो भवतीति च। ढस्य न इति निपातादेवेति शेषः। न इत्यत्र अराम उच्चारणार्थः। यदा दृन्नित्यस्य पूर्वपदत्वं तदा दृन्भूशब्दः स्त्रीलिङ्गः सर्पे रुद्रे च वर्त्तते, यदातु दृढ इत्यस्य पूर्वपदत्वं तदा दृन्भूशब्दः तरु-सर्पजातिभेदवाची, तरु-सर्पजातिभेद इति तरु-जातिभेदः सर्पजातिभेदश्चेत्यर्थः। यद्वेति यदुक्तं तदनुसारेण तरु सर्पजातिभेदो वेत्युक्तं। आपीरिति ओप्यायी वृद्धौ भ्वादिरात्मपदी निपातात् क्विप् प्यायः पीश्च॥ २७३॥

**बाल०**—उपे। उपेन्द्रे कर्मणि च पूर्वपदे सति भजेरुत्तरे ण्विर्भवति। ण इत्। प्रभागिति केवलप्रत्ययस्य वेर्हरः वृष्णीन्द्रः। एवं कृष्णभागिति॥ २७४॥

## २७६. धी प्रधी प्रभृतयः साधवः ।

ध्यायते अनया धीः । एवं जुहूः । प्रकृष्टं ध्यायति प्रधीः । एवंद्योतते दिद्युत्, गच्छति जगत्, दीर्यते दद्दत् । दृन्निति हिंसार्थेऽव्ययम्, हिंसायां भगतीति, यद्वा दृढो भवतीति, ढस्य नः, दृन्भूः स्त्रीसर्परुद्रयोः । तरुःसर्प जाति भेदो वा । आप्यायते आपीः ।

## २७७. उपेन्द्रे कर्मणि च भजे ण्विः ।

णइत् । प्रभाक् कृष्णभाक् ।

---

**अमृता०**—२७६. धीरिति सुगमम् । धीरिति ध्यै चिन्तायां, करणे क्विप् ध्यायोधीभावश्च निपातफले । जुहूरिति हुवह्नौ दाने, हूयतेऽनयेति यज्ञपात्रभेदा । करणे क्विप् द्विर्वचनं नारायणस्य त्रिविक्रमश्च निपात कार्याणि । प्रधीरिति—नाम्निपूर्वपदेऽपि ध्यायो धीः क्विपा निपात्यत इति दर्शितम् । एवं सुधीरिति च । दिद्युदिति—द्युत दीप्तौ, निपातात् क्विप् द्विवचनञ्च, द्युति स्वाप्यो नरस्य सङ्कर्षण इति तु सिद्धमेव । दिद्ददिति—दृविदारणे, द्विर्वचनं नारायणस्य वामनत्वञ्च निपातफले । जगदिति—गमलृगतौ, निपाताद् द्विर्वचनं, हरिवेणुहर स्तुक् च सिद्धावेव । अव्ययत्वे दृन् हिंसायां भवतीति दृन् भूशब्दस्य व्युत्पत्तिरुक्ता, एतद् व्युत्पत्तौ दृन्भूशब्दः स्त्रीलिङ्गः सर्पिणी वाची, पुंसि तु रुद्रवाची । क्वचिन्नाम्नि परिभाषितं लिङ्गं वस्तुन्युपचर्यत इति न्यायात् । दृढो भवतीति व्युत्पत्तिपक्षे तु ढस्य नइत्यराम उच्चारणार्थः, वस्तुतो निपाताद् विष्णुजनान्तो ज्ञेयः । अत्र पक्षे दृन्भूशब्दस्यार्थः तरुविशेषः सर्प जातिभेदो वा, ततश्च पुंलिङ्गः । आप्यायत इति ओत्यायी वृद्धौ, निपातात् प्यायः पीभावः ।

**अमृता०**—२७७. उपेन्द्र इति । उपेन्द्रे पूर्वपदे कर्मणि च पूर्वपदे भजतेरुत्तरे कर्त्तरि ण्वि प्रत्ययः स्यात् । णरामे इति सति केवलस्य प्रत्यय वेर्हरः । प्रभजतीति प्रभाक्, उद्धवारामस्य वृष्णीन्द्रः । कर्मणि—कृष्णभाक् भक्तः । एवं मुक्तिप्रदः कृष्णः ।

---

**बाल०**—तुरा । व्यक्तार्थमेतत् । तुरं वेगं सहत इत्यर्थे निपाताण्णिः तुरशब्दारामस्य त्रिविक्रमश्च वृष्णीन्द्रः, ततः सौ कृते हस्य ढः साढः षाडिति साढः षाट्, तुराषाडिन्द्रः । जलं सहत इत्यर्थे निपाताण्ण्वः त्रिविक्रमश्च वृष्णीन्द्रः, ततः सौ कृते जलाषाडिति । पृष्ठं वहतीत्यर्थे वह प्रापणे निपाताण्ण्वः वृष्णीन्द्रः । पृष्ठवाड् युगपार्श्वग इत्यमरः । परिव्रजतीत्यर्थे व्रज गतौ निपाताण्ण्वः वृष्णीन्द्रः, परिव्राट् सन्न्यासी । अनकारान्त इति । अनकारान्ते उपसर्गेच उपपदे सति वहेरुत्तरे ण्विनं भवतीति भाष्यमतं । तस्मादुपसर्गभिन्नेऽकारान्ते उपपदे सति ण्विर्भवतीति । तेनेति तेन हेतुना । भुवाहादयो हान्ताः । अपप्रयोगा अशुद्धप्रयोगाः । एषु ण्विर्न प्राप्नोतीति पदचन्द्रिकायामपप्रयोगा इत्युक्तं ।।२७५

**बाल०**—अनो । अनो वरेरिति अनःशब्दपूर्वस्य वहधातोरित्यर्थः । अनः शकट । अनो वहतीत्यर्थे निपातात् क्विप् सस्य डत्वञ्च वचिस्वपीत्यादिना सङ्कर्षणः अनड्वान् वृषः ।। २७६ ।।

**२७८. तुरासाह् जलासाह् पृष्ठवाह् परिव्राज् इत्येते च साधवः।**

अनकारान्ते उपसर्गेचोपपदे वहेर्ण्वि र्नास्तीति भाष्यम्। तेन भूवाह् वारिवाह् निर्वाह् इत्यादयोऽपप्रयोगा इति पदचन्द्रिकायाम्।

**२७९. अनो वहे रनडुह् साधुः।**

**२८०. अनन्ने कर्मण्यदः क्विप्।**

तुलसीपत्रात्। नेह अन्नादः।

---

**अमृता०**—२७८. तुरासाहिति। तुरासाहादय श्चत्वारो ण्वि प्रत्ययेन साधवो भवन्ति। तुरं वेगंसहत इति तुरासाडिन्द्रः। पूर्वपदस्य त्रिविक्रमो निपातफलम्, वृष्णीन्दः, सौ कृते हस्य ढः, साढः षाडिति षत्वम्। एवं जलाषाट। पृष्ठेनवहतीति पृष्ठवाट, करणेण्वि निपातात्। परिव्रजतीति परिव्राट सन्यासी, सौछशोरित्यादिना जस्य षः, ततो विष्णुपदान्ते षस्य डः। सर्वत्रनिपातान् ण्विः। ननु भूवाह वारिवाहादि शब्दाश्च दृश्यन्ते, कथंसूत्रे नते प्रोच्यन्त इति चेत्तत्र भाष्यवचननेन तेषामसाधुत्वमुपपादयति—अनकारान्त इति। अरामान्तेतरोपसर्गे उपपदे वा वहते ण्वि प्रत्ययो न स्यादिति तदुक्तं स्तात्पर्यम्। तस्माद् भूवाहादयो येशब्दा दृश्यन्ते तेत्वप प्रयोगा इति पदचन्द्रिकायामुक्तम्। तदेव स्वमतं ज्ञेयम्।

**अमृता०**—२७९, अन इति। अनः पूर्वस्य वहधातोः क्विपा अनडुह इति साधुः स्यात्। अनः शकटं वहतीति अनड्वान् वृषः। वचि स्वपीत्यादिना सङ्कर्षणः, अनस् शब्दस्य सस्य डत्वमिह निपातफलम्।

**अमृता०**—२८०. अनन्न इति। अन्नव्यतिरिक्तं कर्मपूर्वपदे अदभक्षणे इत्यस्मादुत्तरे कर्त्तरि क्विप् स्यात्। अणोऽपवादोऽयम्। तुलसीपत्रादिति तुलसीपत्रमत्ति खादतीत्यर्थः। अन्नाद इति कर्मण्यण्। एतेनात्र वाऽसरूप विधिर्नेष्ट इति ज्ञापितम्, तस्यानित्यत्वात्।

---

**बाल०**—अनन्ने। अन्नव्यतिरिक्तं कर्मणि पूर्वपदे सति अद उत्तरे क्विप् भवति। तुलसीपत्रादिति तुलसीपत्रमत्तीत्यर्थः। अन्नाद इति कर्मण्यण्णिति अण्॥ २७७॥

**बाल०**—क्रव्या। व्यक्तार्थमेतत्। क्रव्याद इति क्रव्यमत्तीति क्विभाव एव निपातफलं। कर्मण्यण्णिति अण्। क्रव्यं मांसं, क्रव्यादो राक्षसः। चादिति चशब्दोपादानात् क्विवपि तेन क्रव्यादपीति। क्रव्यात् राक्षसः। राक्षसः कौणपः क्रव्यात् क्रव्यादोऽस्रप आशर इत्यमरः॥ २७८॥

**बाल०**—नाम्न्या। नाम्नि पूर्वपदे सति आरामान्ताद्धातोरुत्तरे मनिप् क्वनिप् वनिप् विश्च भवति। सुदामेति कर्त्तरि मनिप्। श्रीदामेति श्रियं ददातीत्यर्थः। सुपीवेति पा पाने क्वनिप् सुष्ठु पिवतीत्यर्थः। हरिभक्तिदावेति हरिभक्तिं ददातीत्यर्थे वनिप्। विश्वपा इति विश्वं पातीति विः वेर्हरः। प्राय इति। अयं विधिः प्रायच्छन्दस्येव वर्त्तते इति हेतोर्यथादृष्टमेव उदाहार्यं नतु स्वेच्छयेत्यर्थः॥ २७९॥

## २८१. क्रब्यादश्च साधुः ।

चात् क्रब्यादपि ।

## १८२. नाम्न्यारामात् मनिप् क्वनिप् वनिप् विश्च ।

सुष्ठु ददाति सुदामा, श्रीदामा । दामोदरमास्थेतीत्वं सुपीवा । हरिभक्तिदावा । विश्वपाः । प्रायश्छन्दस्येव विधिरयमिति । यथा दृष्टमेवोदाहार्यम् ।

---

**अमृता०**—२८१. क्रब्यादश्चेति । क्रब्यादशब्दश्च अण् प्रत्ययान्तः, सच साधुर्भवति । चकारात् क्विप् प्रत्ययेन क्रब्यात् इतिच । पूर्वमनन्ने कर्मणि अदः क्विवुक्तः, इहतु क्रब्य शब्दस्यानन्नत्वेऽपि पक्षे अणप्राप्त्यर्थं निपातोऽयम् । क्रब्यशब्दोपपदे वाऽसरूपविधिरिष्यत इतिफलितार्थः । क्रब्यं मांसम् । पक्वमांसभोजी क्रब्यादः, आम ( अपक्व ) मांसभोजी क्रब्यादिति भेदः । उभौ हि रक्षोवाचिनौ ।

**अमृता०**—२८२. नाम्नीति । नाम्नि पूर्वपदे सति आरामान्ताद् धातोरुत्तरे कर्त्तरि मनिप् क्वनिप् वनिप् विश्चप्रत्यया भवन्ति । इरामः परमाश्वेतौ । सुदामेति—सुदामन् शब्दात् सुः, नान्तधातुवर्जितेत्युद्धवस्य त्रिविक्रमः, नामान्तस्य नस्य हरः । एवंश्रियं ददातीति श्रीदामा, अश्व इव तिष्ठतीति अश्वत्थामा । सुपीवेति क्वनिप् कंसारित्वादीत्वम, पूर्ववदुद्धवत्रिविक्रमो नस्य हरश्च, सुष्ठुपिवतीत्यर्थः । हरिभक्ति दावेति—हरिभक्ति ददातीत्यर्थे विः, केवलस्य प्रत्यय वेर्हरः । प्रायश्छन्दसीत्यनेन लोकेऽपि विरल प्रयोगा एषां दृश्यन्त इति लोके यथादृष्ट मेवोदाहरणीयं नत्वारामान्तमात्रादिति भावः ।

---

**बाल०**—अन्ये । आरामान्तादन्येभ्योऽपि मनिवादयो भवन्ति । सुशर्मेति शृ हिंसायां मनिपि कृते गोविन्दः । एवं देवशर्मेति । सुत्वेति सुञ अभिषवे क्यनिप् तुक् । याज्ञिक इति याज्ञिकवाचीत्यर्थः ॥ २८० ॥

**बाल०**—हरि । वनिप् परे हरिवेणोः स्थाने आरामो भवति ॥ २८१ ॥

**बाल०**—नेड् । वनि तौ श्रादौच परे इड् न भवति । भणादिवर्जमिति भणादेस्तु इड् निषेधो न भवतीत्यर्थः । ओनृ इति ओनृ अपनयने । अवात्रेति वनिपि कृते हरिवेणो-रारामः ओ अव् । दैत्यविति णौ कृते अनेकसर्वेश्वरस्य संसारहर इत्यनेन संसारहरः । क्विप् । धातोरुत्तरे क्विप् भवति । धातुमात्रादिति मात्रशब्दोऽत्र साकल्यार्थः । मात्रं कार्त्स्न्येऽवधारणे इति नानार्थवर्गः । ऋत्विगिति वचिस्वपीत्यादिना सङ्कर्षणः । क्विपि चेति इरामनिषेधादिति, दामोदरादेरीरामो न यपि क्विपि चेति निषेधसूत्रं श्याश्विव्येत्या-दीति अनेन सङ्कर्षणस्य त्रिविक्रमः । मित्रहूरिति वचिस्वपीत्यादिना सङ्कर्षणः । वेञस्तु क्विपीति अनेन सङ्कर्षणस्य त्रिविक्रमः । ऊरिति वेञ तन्तुसन्ताने वचिस्वपीत्यादिना सङ्कर्षणः । उराविति धातोरीदूतोरियुवौ सर्वेश्वरे बहुलमिति उव् । प्रशान् इति ।

**२८३. अन्येभ्योऽपि मनिवादयः ।**

सुशर्मा देवशर्मा, सुत्वा याज्ञिकः, धीवा धारकः ।

**२८४. हरिवेणोरारामो वनिपि ।**

**२८५. नेड्वन्तित्रादौ भणादिवर्जम् ।**

---

**अमृता०**—२८३. अन्येभ्य इति । आरामान्तादन्येभ्योऽपि धातुभ्य उत्तरे मनिवादयो दृश्यन्ते । सुशर्मेति—शॄ हिंसायां मनिप्, गोविन्दः, नेड्वन्तित्रादौ इतिइड्निषेधो वक्ष्यते । एवं देवशर्मेत्यादयः । अपि शब्दात् नाम पूर्वपदत्वाभावे च ते भवन्तीति दर्शयति—सुत्वेति । सूञ् अभिषवे, क्वनिप् , वामनात्तुक् । धीवेति—डुधाञ् क्वनिप् , दामोदरेत्यादिना ईत्वम् ।

**अमृता०**—२८४, हरीति । वनिपि परे हरिवेणोः स्थाने आरामः स्यात् ।

**अमृता०**—२८५. नेडिति । वनि तौ त्रादौ च प्रत्ययेषु परेषु इट् न स्यात्, भणादेर्धातोस्तु तेषु परेषु इड्भवति । नेट्यसर्वेश्वरयो रित्यनेन निषेधाप्राप्ते पुनरिह निषेधः प्राप्ते पुनरिह निषेधः क्रियते । अवावेति—ओनृ अपनयने, वनिप्, हरिवेणोः स्थाने आरामः, ओ अव् । ति इति क्ति प्रत्ययस्यैकदेश निर्देशः । तत्र नेट्—भूतिः दीप्तिरित्यादि । त्रप्रत्यये नेट्—शास्त्र पत्रमित्यादि । आदि पदेनमनिप् , क्वरप् , वर, स्नुक् , क्नु, रप्रत्यया स्तथा उणादौ तुन् तन् थण् सिक् सुक् कन् स इत्येते च प्रत्यया ज्ञेयाः । क्रमेणोदाहरणानि यथा—भसेः भस्म, नशेः नश्वरः, ईशेः इश्वरः, भूष्णुः गृध्नुः नम्रः ।

---

शमू उपशमे । इन् हन्निति निर्देशादिति इन् हन पूषन् अर्यमन् इत्येतेषामुद्धवस्य त्रिविक्रमः । सुश्योरेवेति सूत्रं । न दीर्घ इति सुश्योः परत्वाभावादिति शेषः । त्रिविक्रम इति वा पाठः । ज्वर त्वरेत्यादीति । अनेन सर्वेश्वरस्य वस्य ऊट् । जूरिति ज्वर रोगे जूरावित्येव पाठः । तूरिति ञि त्वरा सम्भ्रमे । स्रूरिति स्रिवु गतिशोषणयोः । स्रु वावित्युव् । ऊरिति अव रक्षणे । गोपीः कृष्णः । गोपाविति ओ आव् ॥ २८२ ॥

**बाल०**—एरा । क्वौ सति एरामादुत्तरस्य वरामस्य हरो भवति । देवृ इति देवृ देवने । दयाविति ए अय् । सेवृ इति सेवृ सेवने । ए ओ वामनेभ्य इतीति वामनेन बुद्धस्यादर्शनं । मुर्च्छा इति मुर्च्छा मोहसमुच्छ्राययोः । मुरिति छस्य हरे कृते निमित्तापायात् त्रिविक्रमनिवृत्तिः तत इरुरन्तधातोरुद्धवस्य त्रिविक्रमो विष्णुपदान्त इति त्रिविक्रमः । मुराविति विष्णुपदान्त इत्युक्त अतो नात्र त्रिविक्रमः । धूरिति अत्र वस्य हरः ॥ २८३ ॥

**बाल०**—गमा । क्वौ परे गमादेर्हरिवेणुहरो भवति । गदिति हरिवेणुहरे कृते तुक् । संयदिति यमु उपरमे । सुनदिति नम प्रह्वत्वे शब्दे च । धातुत्रयं गमादिः । सुमच्चेति क्वचिदिति । गमादौ मनधातोरपि ग्रहणं क्वचिद्व्याकरणेऽस्तीति ॥ २८४ ॥

ओनृ-अवावा । दैत्यवृश्चमाचष्टे इति ण्यन्तात् क्विप् दैत्यव् ।

२८६. क्विप् ।

धातुमात्रादयं विधि. । करोति कृत् भक्तिकृत् । ऋतौ यजति ऋत्विक् । क्विपि चेति ईरामनिषेधात् संस्थाः । श्याश्वि व्याज्येति त्रिविक्रमः, मित्रंह्वयते मित्रहूः । वेञस्तु क्विपि—उः उवौ । हरिवेण्वन्तोद्धवस्य

---

तथा चोणादौ—सचेः सक्तुः, हसेः हस्तः, कषेः काष्ठं, कुषेः कुक्षिः, इषेः इक्षुः, पतेः पतृकः, वदेः वत्स इति । भणादौ तु भणितिः दीधितिः निगृहीति रित्यादि ।

ण्यन्तात् क्विविति—तत्करोति तदाचष्ट इत्यर्थे नामधातूक्त णिः, ण्यन्तस्य च धातुत्वात् तदुत्तरे क्विवित्यर्थः । दैत्यविति—णौ कृते सति अनेकसर्वेश्वरस्येति संसारहर इति ऋश्च भागस्य हरः । ननु पूर्वपदानियमात् केन सूत्रेणात्र क्विप् विधीयत इत्याकाङ्क्षायां सूत्रयति,—

**अमृता०**—२८६. क्विविति । धातुमात्रादुत्तरे क्विप् प्रत्ययो भवति । न च तर्हि—नाम्नि सदलृ सूद्विषेत्यादिनोक्तं क्विप् विधानमनर्थकम्, अनेनैव तत् सिद्धे रिति शङ्कनीयम्, कस्यैव प्रपञ्चविशेषा स्ते सर्वे इति बोध्यम् । तत्र सदलृ प्रभृतिभ्यो नामपूर्वपदत्वे हि क्विप् स्यात्, इह त्वनाम्नि नाम्नि वेति सामान्यतो विधीयते, अतस्ते अस्यैव विशेषाः प्रपञ्चिता इति । कृदिति वामनात्तुक् । नाम पूर्वपदे च भक्तिकृदिति । ऋत्विगिति—वचि स्वपीत्यादिना सङ्कर्षणः, स्रज् दिशित्यादिना जस्य कः ।

ननु ऋत्विक् मित्रहूरित्यादौ सूत्रे सप्तम्यन्तनिर्देशाभावात् ऋतु प्रभृतीनां पूर्वपदत्वासिद्धेः कथं कृता समास इति चेत् ? सत्यम्, नाम्न्यारामात् मनिवित्यादि सूत्रतो मण्डूक प्लुत्या नाम्नीति सप्तम्यन्तमनुवर्त्तनीयम् । नच करोतीति कृदित्यादिषु नामपूर्वत्वाभावात् तदध्यसङ्गतमिति वाच्यम्, धातुमात्रादित्यत्र मात्रशब्द ग्रहणेन केवल धातोश्च प्रत्ययविधानस्य व्यञ्जितत्वात् । यद्वा उप समीपे उच्चारितं पदमुपपदं पूर्वपदं वेति निरुक्तः । प्रत्यय विधानसम काले सन्निहितोच्चारितं पदञ्च पूर्वपदत्वेनाङ्गीक्रियते नकेवलं सूत्रे सप्तम्यन्त निर्दिष्टमिति न्यासकारः । तस्मात् सोप पदेभ्यः अनुपपदेभ्यश्च सामान्यतोऽयं क्विप विधिरिति निष्कर्षः ।

---

**बाल०**—उपे । क्विवन्तेषु नह्यादिषु परेषु उपेन्द्रस्य पूर्वपदस्य त्रिविक्रमो भवति । उपानदिति नह बन्धने नहो ध इति हस्य धः उपेन्द्रस्य त्रिविक्रमः । उपानत् पादुका । नीवृदिति वृतु वर्त्तने । नीवृज्जनपदो देश इत्यमरः । प्रावृडिति वृषु सेचने प्रावृड् वर्षाकालः । मृगाविदिति व्यध ताडने ग्रहिज्येत्यादिना सङ्कर्षणः पूर्वपदस्य त्रिविक्रमः, मृगाविद्व्याधः । एवं मर्माविदिति । नोरुगिति रुच दीप्तौ । तिग्मा तीक्ष्मा, रुक रुचिः । तिग्मरुगिति वाच्यलिङ्गलक्ष्मीस्तुल्याधिकरणक्ष्म्यामिति वक्ष्यमात्रसूत्रेण पुरुषोत्तमवत्त्वं । कृत्सूत्राद्यं सप्तम्यन्तं पूर्वपदमित्युक्तं अतो नास्य पूर्वपदत्वं ॥ २८५ ॥

त्रिविक्रमः, धातो र्मो नः—प्रशान्। इन् हन्निति निर्देशान्नदीर्घः—कंसहनौ। ज्वर त्वरेत्यादि—ज्ञूः ज्रूरौ, तूः तूरौ, स्त्रूः स्त्रुवौ, ऊः उवौ। अद्वयादूठो वृष्णीन्द्रः—गोपानवति गोपौः गोपावौ।

## २८७. एरामात् क्वौ वस्य हरः।

देवृ देः दयौ। सेवृ-सेः सयौ। एओवामनेभ्यो बुद्धस्यादर्शनम्, हेसे। राच्छवयो र्हरः, मूर्च्छा—मूः मुरौ। धुर्वी हिंसायाम् धूः धुरौ।

## २८८. गमादे र्हरिवेणु हरः क्वौ।

---

ईरामनिर्देशादिति—दामोदरादे रीरामो न यपि क्विपि चेति निषेध सूत्रमुक्तम्। श्याश्विव्याज्येति सङ्कर्षणस्य त्रिविक्रम इत्यर्थः। मित्रहूरिति—वचिस्वपीत्यादिना सङ्कर्षणः, ततः त्रिविक्रमः। वेत्रस्तु क्विपीति सङ्कर्षणस्य त्रिविक्रमः, सङ्कर्षणस्तु वचि स्वपीत्यादिनैव। उवाविति—धातोरीदूतोरियुवौ सर्वेश्वरे बहुलमिति उवादेशः। नदीर्घ इति—इन्हन्नित्यादौ सुश्योरेवेति नियम करणात् तदन्यत्र न दीर्घ इत्यर्थः। तेन कंस हनावित्यादौ नोद्धवस्य त्रिविक्रमः। सौ शौ च दीर्घ एव, कंसहा दृष्टकंसहानि। ज्वर त्वरेत्यादिना ससर्वेश्वरस्य वस्य ऊठ्। जूरिति ज्वर रोगे, तूरिति ञित्वरा सम्भ्रमे, स्त्रूरिति स्त्रिवु गति शोषणयोः, ऊरिति अवरक्षणे, तेनैव ऊठ्। गोपौरिति—अवधातो ऊठि कृते गोपशब्दस्य अरामादुत्तरस्य ऊठो वृष्णीन्द्रे च ओ द्वये औः, गोपी कृष्णः।

**अमृता०**—२८७. एरामादिति। क्विप् प्रत्यये परे धातो रेरामात् परस्य वरामस्य हरः स्यात्। देरिति देवृदेवने, सेरिति सेवृसेवने। मूरिति—मूर्च्छा मोहसमुच्छ्राययोः, छस्यहरे कृते ररामात् परं विष्णुजनरूप निमित्ताभावात् त्रिविक्रमापायः, तत इरूरन्त धातो रुद्धवस्येति त्रिविक्रमः। मुरावित्यत्र विष्णुपदान्तत्व विरहान्नत्रिविक्रमः। धूरिति—राच्छवयोर्हर इति वस्य हरः, पूर्ववत् त्रिविक्रमश्च।

**अमृता०**—२८८. गमादेरिति। क्विपि परे गमादे र्धातो र्हरिवेणु हरः स्यात्। वैष्णवादि कंसारि परत्वाभावात् हरिवेण्वन्त सहजासिटामित्यादिनाहरिवेणु हरस्याप्राप्ते

---

**बाल०**—कृष्ण। अचि परे कृष्णनामादीनां संसारस्य स्थाने अद्रिर्भवति। अचीत्यस्यार्थमाह लुप्तनकारेति। सर्वद्रयचङ्ङिति अचश्चतुर्भुजानुबन्धानाञ्च नुम् कृष्णस्थाने इति नुम् राधाविष्णुजनाभ्यामिति सोर्हरः, तवर्गस्य चवर्गश्चवर्गयोगे सत्सङ्गान्तस्य हरः। चवर्गस्य कवर्गः। एवमन्यत्र ज्ञेयं। विष्वद्रयचङ्ङिति विष्वगञ्चतीत्यर्थः। विष्वगित्यव्ययं। समन्ततस्तु परितः सर्वतो विष्वगित्यपीत्यव्ययवर्गः। विष्वद्रयचङ् विष्वगञ्चतीति प्राणिवर्गः। एवं देवद्रयचङ्ङिति देवानञ्चति देवद्रयचङ्ङिति प्राणिवर्गः॥ २८६॥

**बाल०**—अदः। निपातसूत्रमेतत् व्यक्तार्थञ्च। इच्छन्तीति पूर्वाचार्या इति शेषः। आदिपदेन अदमुयङ् अदमुयञ्चावित्यादि। अमुद्रयङ अमुद्रयञ्चावित्यादि अदद्रयङ् अदद्रयञ्चावित्यादिच ज्ञेयं॥ २८७॥

गच्चति गत्, संयत् सुनत् । समच्चेति क्वचित् ।

**२८६. उपेन्द्रस्य पूर्वपदस्य च त्रिविक्रमो नहि वृति वृषि व्यधि रुचिषु क्विवन्तेषु ।**

उपानत् नीवृत् प्रावृट् मृगावित् मर्मावित् नीरुक् । उपेन्द्रादेः किम्— तिग्मारुग् यस्य स तिग्मरुक् ।

---

विधानमेतत् । सयदिति यमु उपरमे, सुनदिति नमप्रह्वत्वे शब्दे च । सुमच्चेति—मन-धातोरपि ग्रहणं गमादौ कैश्चित् क्रियते । एवं तनोतेश्च परीतदिति वामनः । तत्रोपेन्द्रस्य त्रिविक्रमो वक्ष्यते ।

**अमृता०**—२८९. उपेन्द्रस्येति । क्विवन्तेषु नह्यादिषु परेषु उपेन्द्रस्य पूर्वपदस्य च त्रिविक्रमो भवेत् । उपानदिति—नह बन्धने, नहो ध इति हस्य धः, विष्णुपदान्ते धस्य हरिगदा हरिकमलञ्च, उपेन्द्रस्य त्रिविक्रमः । उपानत् पादुका । नीवृदिति वृतु वर्त्तने, देशइत्यर्थः । प्रावृडिति वृषु सेचने, षस्य डः, वर्षाकाल इत्यर्थः । मृगाविदिति—व्यध ताडने, ग्रहिज्येति सङ्कर्षणः, पूर्वपदस्य त्रिविक्रमः, मृगं विध्यतीति व्याध इत्यर्थः । एवं मर्मावित् वाक्यवाणः । नीरुगिति रुच दीप्तौ । तिग्मेति—तिग्मा तीक्ष्णारुक् दीप्ति यस्य स सूर्यः । समासे तिग्मा शब्दस्य पुरुषोत्तमवत्त्वं वक्ष्यते, वाच्यलिङ्ग लक्ष्मीरित्यादिमा । अत्र पश्चात् समासत्वात् पूर्वपदत्वाभाव इति न दोर्घः । यद्यपि समासे सर्वादिपदं पूर्वपद-मिति वक्ष्यते तथाप्यत्र तु कृतसमाससामर्थ्यात् सुबुत्पत्तेः प्राक् प्रत्ययविधान समकाले हि यत्पदमपेक्षते तदेव पूर्वपदत्वेन ग्राह्यम् । इहसर्वत्र क्विप्, धातुमात्रादयं विधिरिति सामान्येन क्विप् । तत्रनाम्नीत्यनुवृत्तेः उप नि प्रभृत्युपेन्द्राणां मृगादिशब्दानाञ्च पूर्वपदत्वे नहानिरिति पूर्वत्र च समाहितम् ।

---

**बाल०**—भुग । व्यक्तार्थमेतत् । अमुमुईच इति । एवं अदमुईचः अदम् ईचेति । अमुद्रीच इति अचोऽरामहरो भगवति पूर्वस्य च त्रिविक्रम इत्यनेन अरामहरे कृते निमित्तापाये नैमित्तिकस्याप्यपाय इति न्यायेन यरामस्य इरामः, ततस्त्रिविक्रमः । एवमदद्रीच इति ॥ २८८ ॥

**बाल०**—सह । अचि परे सहस्य स्थाने सध्रिर्भवति, समः स्थाने समिर्भवति, तिरसः स्थाने तिरिर्भवति । सध्र्यङ्ङिति । यः सहाञ्चति सध्र्यङ् स इत्यमरः । सम्यङ्-ङिति समञ्चतीत्यर्थः । तिर्यङ्ङिति । स तिर्यङ् यस्तिरोऽञ्चति इत्यमरः । तिरशब्दो वक्रार्थोऽव्ययं । आशासेति सजुष् आशिष् इति निर्देशादत्र शिषादेश इति शेषः । सजुष् आशिष् इत्यनयोरिसुसन्तधातोश्च रो विष्णुपदान्त इति सूत्रं । आशीरिति आङ शासु इच्छायां भावे क्विप् शासः शिष् यरामस्य रराम इरुरन्तधातोरुद्धवस्य त्रिविक्रमः, इत्यादिना त्रिविक्रमः । अत्र कंसारिविष्णुजनपरत्वाभावात् आङ शासीरग्रहणाच्च शासः शिष् कंसारिविष्णुजनङयोरित्यनेन शिष न भवतीति सजुष् आशिष् इति निर्देशादित्युक्तं ।

## २९०. कृष्णनाम-विष्वग्देवानां संसारस्याद्रिरचि ।

लुप्तनकारक्विबन्ताञ्चतावित्यर्थः । सर्वमञ्चति सर्वद्रचङ्, विष्वद्रचङ्, देवद्रचङ् ।

## २९१. अदसस्त्वचि अमुमुयच् अदमुयच् अमुद्रयच् अदद्रयच् इति चत्वारीच्छन्ति ।

अमुमुयङ् अमुमुयञ्चावित्यादि ।

---

अमृता०—२९०. कृष्णेति । अचि परे कृष्णनाम्नां विश्वक्शब्दस्य देवशब्दस्य च संसारस्य स्थाने अद्रिरित्यादिश्यते । अचि इत्यस्यार्थमाह—लुप्तेति । अन्चुधातोः क्विप् प्रत्यये नलोपे च सति योऽच् निष्पद्यते तस्मिन् परे इतिसरलार्थः । सर्वद्रचङिति—सर्व शब्दस्य सर्वद्रिः, अच् शब्देन सह सन्धौ सर्वद्रयच् इति स्थिते सौनुम्, सोर्हरः, कवर्गः, सत्-सङ्गान्तहरः, प्रत्यच् शब्दवज् ज्ञेयः । एवं विश्वक् (सर्वतः) अञ्चतीति विश्वद्रचङ् । विश्वक् शब्दोऽव्ययम् । एवं यद्रचङ् तद्रचङ् इदद्रचङ् इत्यादयश्च । अचीति किम्—विश्वगञ्चनम् ।

अमृता०—२९१. अदसइति । अचि परे अदस् शब्दस्य अमुमुयच् प्रभृतयश्चत्वारि रूपाणि इच्छन्ति वैयाकरणाचार्या इति शेषः । आदिपदेन—अदमुयङ् अदमुयञ्चौ इत्यादि, तथा अदद्रचङ् अदद्रयञ्चौ इत्यादि च बोध्यम् ।

---

मित्रश्रीरिति कर्त्तरि क्विप् । अत्र कंसारिविष्णुजनस्य परत्वाभावात् शिष् न प्राप्नोतीत्याह आशीर्वद्वाच्य इति । आशीर्वत्त्वादेव शिषादेश इति । घृतश्च्युदिति । श्च्युतिर क्षरणे दन्त्यादिरयं सस्य शश्चवर्गयोगे । संसारहर इति अनेकसर्वेश्वरस्य संसारहर इत्यनेनेति शेषः । क्विपि कृते णेर्हरं क्विपो विष्णुजनत्वस्वीकारात् यवयोर्हरोवल इत्युक्तमिति ज्ञेयं । ससामज इति । चे परे शरामः सरामजात इत्युक्तं अतो दन्त्यादित्वं ॥ २८८ ॥

बाल०—युष्म । वृत्तिमाह त्वां युवामिति । त्वामाचष्टे इत्यत्र त्वदादेशाभावो निपातफलं, ममाचष्टे इत्यत्र मदादेशाभावश्च निपातफलं । युष्मदस्मदोस्त्वन्मदावुत्तरपद-प्रत्यययोरेकत्व इति त्वन्मद्विधानसूत्रं ॥ २९० ॥

बाल०—तयो । तयोर्युष्मस्मोः प्रकृतवदेवेति । युष्मदस्मच्छब्दसिद्धप्रकृतविष्णु-पदवदेवेत्यर्थः । अन्यत्रत्विति । सुजसङेङसभ्योऽन्येषु प्रत्ययेषु परेषु । क्विबन्तयोरिति युष्मस्मोरित्यर्थः । युषसौ त्यक्त्वेति । युषसौ वर्जयित्वेत्यर्थः । प्रकृतयोर्वमपर्यन्तभागं त्यक्त्वेति क्विबन्तयोरवशिष्टमारभ्येति शेषः । प्रकृतयोरिति प्रकृतयोर्विष्णुपदयोरित्यर्थः । क्विबन्तपदशिष्टं क्विबन्तपदावशिष्टं प्रकृतपदशिष्टवत् प्रकृतपदावशिष्टविशिष्टं कार्यं । प्रकृतपदशिष्टवदिति मतुप्रत्ययः । क्विबन्तयोर्युष् अस् भागात् यदवशिष्टमक्षरं अर्थात् मराम औप्रभृति तस्य स्थाने प्रकृतपदस्य वम पर्यन्तभागस्य त्यागात् अवशिष्टं यदामादि-रूपं तद्विधीयते इति निर्गलितार्थः । अत्रेति सारामाविति । सारामौ वमावित्यर्थः । एवं

## २८२. भगवति तु मुपूर्वस्य यस्य ई सन्धिनिषेधश्च ।

अमुमुईचः, अमुमुईचा । द्रि पूर्वस्य तु अमुद्रीचः ।

## २८३. सहस्य सध्रिः; समः समि स्तिरस स्तिरि रचि ।

सध्र्यङ् सम्यङ् तिर्यङ् । आशासनं आशीः, मित्राणि शास्ति मित्रशीः, आशी र्वद् वाच्यः । घृतं श्च्योतति घृतश्च्युत्, तत् थमाचष्टे इति णिः, संसारहरः, क्विप्, यवयोर्हरो वले, नामत्वात् स्वादयः, सरामजः

---

**अमृता०**—२८२. भगवतीति स्पष्टम् । मुपूर्वस्येति मु पूर्वे यस्य तादृश यरामस्य ईरामः स्यात्, सन्धिनिषेधस्तु निपातनात् । एवं अदमुईचः अदमु ईचा इत्यादि । अमुद्री च इति—अचोऽरामहरो भगवति पूर्वस्य त्रिविक्रमश्चेति अरामहरे कृते नैमित्तिकस्य यरामस्यापात् इरामः त्रिविक्रमश्च । एवंअदद्रीच इत्यादि ।

**अमृता०**—२८३. सहस्येति । अचिपरे सह शब्दस्य स्थाने सध्रिरित्यादिश्यते, अचिपरे सम् स्थाने समि स्तथा तिरस् स्थाने तिरिश्चादिश्यते । सध्र्यङिति—सह अञ्चति सहचर इत्यर्थः । समञ्चतीति सम्यङ्, तिरो कुटिलमञ्चतीति तिर्यङ् । सहादयः अव्ययानि । आशीरिति—आङः शासु इच्छायां, भावे क्विप्, शासः शिस् कंसारि विष्णुजन ङयोरिति शिषादेशः । आङः शासु इत्यस्य निषेधेऽपि बाहुल्यादत्रादेशः, सजुस आशिस् इसुसन्तधातोश्च रिइत्यनेन ज्ञापितत्वात् । ततश्च षस्य ररामे कृते इरुरन्तधातोरुद्धवस्य त्रिविक्रमः, विष्णुसर्गः । आशीर्वद् वाच्यइति—मित्रशीरित्यत्र च कार्याणि पूर्ववदित्यर्थः ।

---

निररामाविति । तत्र युष्मद उदाहरणमाह यथेति । इत्यादिष्वित्यादिपदेन आचक्षाणा आचक्षाणमित्यादीनां ग्रहणं । युषादिति युष्मयुवामिति स्थिते क्विवन्तस्य युष्मः युषं त्यक्त्वा क्विवन्तावशिष्टं मराममारभ्य प्रकृतस्य युवामित्यस्य वपर्यन्तभागस्य त्यागः करणीयः । ततश्च क्विवन्तपदशिष्टस्य मस्य प्रकृतपदशिष्टेन आमायोगः कार्यः । युषामिति युष्मत्वामिति स्थिते क्विवन्तस्य युषं त्यक्त्वा, मराममारभ्य प्रकृतस्य वपर्यन्तभागस्य त्यागः करणीयः । ततश्च युष आमा योगः कार्यः । एवमन्यत्र ज्ञेयं । क्विवन्तपदशिष्टप्रकृतपदशिष्टवदिति पाठेतु क्विवन्तपददिष्टप्रकृतपदशिष्टयोर्यथा भवति तथा कार्यमित्यर्थः । युष्येति । अत्र साराम-वरामस्य त्यागः । एवमोसि ङौच ज्ञेयं । एवमस्मद इति । आदिपदेन, असां असां असान् । अस्या असाभ्यां असाभिः, मह्यं असाभ्यां असभ्यं, असत् असाभ्यां असत्, मम अस्योः असाकं, अस्यां इत्येके, अस्यि अस्योः असास्विति । कौकारास्त्विति । कौमाराः कलापाः ॥ २८१ ॥

**बाल०**—असि । असेरिराम इत् । उरुव्यचा इति व्यच व्याजीकरणे उरुभ्यां विचतीत्यर्थः । कुटादेरनृसिंहो निर्गुणो वचेस्त्वसि विना, इत्यनेन न सङ्कर्षणः । नृचक्षा इति चक्षिङ व्यक्तायां वाचि ॥ २८२ ॥

शरावश्चे इति दन्त्यादित्वात् स्कोः सत्सञ्ज्ञाद्यो र्हरः, चवर्गस्य कवर्गः, घृतक् गृतश्चौ ।

२८४. युष्मदस्मदो र्णिक्विवन्तयो र्युष्मस्मौ ।

त्वां युवां युष्मान् वाचष्टे, एवं मा आवां अस्मान् वेति णौ संसार हरे क्विपि युष्म् अस्म् इति मान्तौ साधू ।

तयोः रूपाणि सुजस् ङे ङस्सु प्रकृतवदेव वाच्यानि, अन्यत्र तु क्विबन्तयो र्युषसौ त्यक्त्वा प्रकृतयो र्वमपर्यन्तभागं त्यक्त्वा क्विवन्त पद शिष्टं प्रकृतपदशिष्टवत् कार्यम् । अत्रटौस्ङिषु वमयोस्त्यागे सारामौ ग्राह्यौ, अन्यत्र तु निररामौ ।

---

नच क्विपो लोपे निमित्तापायात् शिषादेशस्य च निवृत्तिराशङ्क्या, महाहरत्वाभावेन क्विप इह स्थानिवत्त्वस्येष्टत्वात् । संसार हरइति–अनेकसर्वेश्वरस्य संसारहर इत्यादिनेति शेषः । अनेन उत्भागस्य हरे यवयोर्हरो बल इति यरामहरः, ततो घृतश्च इतिस्थिते, चेपरे शरामः सरामज इत्युक्तपरिचयात् शस्य सः, स्को रिति सस्य हरः, सौ चवर्गस्य कवर्गः ।

अमृता०—२८४. युष्मादिति । स्वयंवृत्तिरुक्ता । साधू इति—युष्मदस्मदोस्त्वन्मदावुत्तरपद प्रत्यययोरेकत्व इत्येकवचने प्राप्ते त्वन्मदादेशस्याभावो निपातफलम्, द्वित्व बहुत्वयोस्तु संसारे हरे युष्म् अस्म् इत्येव सिध्यतः ।

तयोारूपनिरूपणपद्धतिमुपदिशति—तयो रूपाणीत्यादिना । क्विन्त युष्मदस्मदोः रूपाणि सुजसङेङस् सु प्रकृतवदेव युष्मदस्मच्छब्द निष्पन्न - प्रकृतनिष्णुपद - रूपाणीव भवन्तीत्यर्थः । तदन्यत्रतु क्विवन्तयो र्युष्मसो र्युषसौ त्यक्त्वा ( गृहीत्वा ) प्रकृतयो र्मूल-

---

बाल०—अजा अजातौ अनुपेन्द्रे पदे पूर्वपदे सति ताच्छील्ये गम्यमाने धातोरुत्तरे णिनिर्भवति । व्रते आभीक्ष्ण्ये च गम्यमाने अजातौ अनुपेन्द्रे पदे पूर्वपदे सति जातावपि पूर्वपदे सति च धातोरुत्तरे णिनिर्भवति । व्रतं शास्त्रानुसारी नियमः । आभीक्ष्ण्यं पौनःपुन्यं । अजातौ जातावपि कर्त्रुपमाने च पूर्वपदे सति धातोरुत्तरे णिनिर्भवति ।।२८३।।

बाल०—मन्य । आत्मविषये मनने गम्यमाने कर्त्तरि वाच्ये जातावजातावपि पूर्वपदे सति मन्यतेरुत्तरे खश्णिनी भवतः । मन्यतेरिति निर्देशात्तानादिकस्य मनु बोधन इत्यस्याग्रहणं । कृष्णसेवीति तत्स्वभाव इत्यर्थः । विप्रसेव इति अत्र ताच्छील्यं गम्यत एव, किन्तु जातिवाचकस्य पूर्वपदत्वात् कर्मण्यण्णित्यण् । अजातौ व्रत इति उदाहरणं दर्श्यते इति शेषः । एवं आभीक्ष्ण्य इति । हरिनिर्माल्यभोजीति, हरिनिर्माल्यमेव भुङ्क्ते इत्यर्थः । अत्रेति अत्र अजातौ । हरिनामग्राहीति पुनः पुनर्हरिनाम गृह्णातीत्यर्थः । हरिनाम पुनः पुनः गृह्णतो जनस्य प्रेमलक्षणा भक्तिर्भवतीति अत्र प्रवर्त्तते नत्वसौ तच्छील इति ।

यथा—त्वां युवां युष्मान् वाचक्षाण आचक्षाणौ इत्यादिषु त्वंयुवां यूयम्। युषां युषां युष्मान्। युष्या युषाभ्यां युषाभिः तुभ्यं युषाभ्यां युषभ्यम्। युषत् युषाभ्यां युषत्। तव युष्योः युषाकम्। युष्मामित्येके। युष्यि युष्योः युषासु।

एवमस्मदः—अहं आसां वयमित्यादि। कौमारास्तु टापरत्वे युष्मा अस्मा, चतुर्थी भ्यसि—युष्मभ्यं अस्मभ्यम्, सुपि युष्मसु अस्मसु इति मन्यन्ते किन्त्वपाणिनीयम्।

## २९५. असिः।

सर्वधातुभ्योऽसिः स्यात्। उरुव्यचाः नृचक्षाः।

---

विष्णुपदयोः वमपर्यन्तभागं वर्जयित्वा क्विवन्तपद शिष्ट (क्विवन्तशब्दावशिष्ट) प्रकृत पदावशिष्ट युक्त कार्यं स्यात्।

क्विवन्तयोः शब्दयोः युष् अस् भागादवशिष्टाक्षरस्य (म् औं प्रभृतेः) स्थाने प्रकृतविष्णुपदस्य वमपर्यन्तभागत्यागेनावशिष्ट अमादिरूपं विधीयते। तेन युष् आम् इत्याकारतया युषामित्यादिरूपाणि सम्पद्यन्त इति निर्गलितार्थः। कुमारः कार्त्तिकः कलापी, तेन प्रोक्त कौमारम् कलापम्, तद्विदु ये ते कौमाराः कालापा इत्यर्थः।। अपाणिनीयमिति—तस्माद्दर्शितरूपाणि पाणिनि सम्मतानीत्यायाम्।

**अमृता०**—२९५. असिरिति। इरामइत्। उरुव्यचा इति—उरुभ्यां विचति व्रश्चतीत्यर्थः, कर्त्तरि असि। कुटादेरनृसिंहो निर्गुणः, व्यकेस्त्वसि विनेति निर्गुणत्वविरहान्न सङ्कर्षणः, अत्वसन्तोद्धवस्येति त्रिविक्रमः। नृचक्षाइति—चक्षिङ् व्यक्तायां वाचि, अत्र चक्षिङः ख्यात्रादेशो न भवेदिति वक्ष्यते।

---

तुलसीसेवीति व्रते आभीक्ष्ण्ये च उदाहरणं तुलसीमेव सेवत इति, पुनः पुनः तुलसीं सेवत इत्यर्थः। कृष्णगायीति आतो युक्। कृष्णे गोपस्नेहीति स्निह प्रीतौ कृष्णे गोप इव स्निह्यतीत्यर्थः। शिवत्वात् श्य इति शिवत्वात् कृष्णधातुकत्वे, अतः शपि कृते दिवादित्वात् शपः श्य इति भावः। वैष्णवम्मन्य इति सर्वेश्वरान्तेत्यादिना मुम्। वैष्णवमानितीति सिद्धार्थं सिद्धान्तमाह वाच्यलिङ्गलक्ष्मीरिति। वैष्णवमानिनीति नान्तत्वादीप वक्ष्यते।, वैष्णवीमात्मानं मन्यते इत्यर्थः। आभीक्ष्ण्ये कथं कुल्माषखाद इति। अत्र णिनिर्भवितुमर्हतीति विरोधः। सिद्धान्तमाह बाहुल्यादिति। स्याद्यावकस्तु कुल्माष इत्यमरः। (काश्मीरदेशजः कुलसी, वोरो धान्यं, काञ्जिकञ्च। अयं दन्त्यान्तोऽपि। रासः)।। २९४।।

**बाल०**—एक। खिदन्ते परे एकसर्वेश्वरस्य ईश्वरान्तस्य नाम्नो द्वितीयैकवचनवत् प्रयोगो भवति। गाम्मन्य इति गामात्मानं मन्यते इत्यर्थः। गोशब्दस्य अमि यथा गामिति

**२९६. अजातावनुपेन्द्रोपपदे णिनिस्ताच्छील्ये, जातावपि व्रताभीक्ष्ण्ययोश्च, कर्त्रुपमाने च, तथावश्यकाधमर्ण्ययोश्च ।**

**२९७. मन्यतेः खश्-णिनी आत्ममनने ।**

कृष्णसेवी, जातौ तु विप्रसेवः। अजातौ व्रते—हरिनिर्माल्यभोजी, अत्राभीक्ष्ण्ये—हरिनामग्राही । जातो तु तुलसीसेवी। एवमजातौ कृष्णइव गायति कृष्णगायी, जातौ तु कृष्णे गोपस्नेही । आवश्यके—अवश्यङ्कारी मालायाः। आधमर्ण्ये–शतंदायी। शिवत्वात् श्यः, वैष्णवमात्मानं मन्यते वैष्णवम्मन्यः वैष्णवमानी । वाच्यलिङ्गलक्ष्मीः

---

**अमृता०**—२९६. अजाताविति । अजातौ । उपेन्द्रभिन्ने पूर्वपदे धातोरुत्तरे णिनिः प्रत्ययः स्यात् ताच्छील्ये गम्यमाने। व्रते आभीक्ष्ण्ये च गम्यमाने अजातौ जातौ वा अनुपेन्द्रे पूर्वपदे धातो र्णिनिः स्यात्। अजातौ जातौ वा कर्त्तर्युपमाने पूर्वपदे धातो र्णिनिः स्यात्, तथा आवश्यके आधमर्ण्ये च गंम्यमाने धातो र्णिनि र्भवति। सर्वत्र कर्त्तरीति बोध्यम्। व्रतं शास्त्रानुयायि नियमः, आभीक्ष्ण्यं पौनः पुन्यम्। णिने र्णराम इरामश्चोतौ॥

**अमृता०**—२९७ः मन्यतेरिति । आत्मनो मनने अर्थे गम्यमाने कर्त्तरि जातावजातौ च पूर्वपदे सति मन्यतेरुत्तरे खश् णिनिश्च भवतः। मन्यतेरिति निर्देशात् दिवादेरेव ग्रहणं नतु तनादेः। श्रीकृष्णसेवीति—तं सेवितुं शीलमस्येत्यर्थः। विप्रसेव इति—इह ताच्छील्ये सत्त्वेऽपि पूर्वपदस्य जातिवाचकत्वान्न णिनिः, किन्तु कर्मण्यण्। हरि निर्माल्यभोजीति—अत्रापि आपातदृष्ट्या ताच्छील्यमाभाति किन्त्वयं विशेषः—ताच्छील्यं कामचारप्राप्तम्, व्रतन्तु शास्त्रशासनपर तन्त्रम्। पूर्वत्र हरिनिर्माल्यभोजनस्वभावत्वेऽपि कथञ्चित्तदितर भोजने प्रवृत्तिश्चेत् तदपि न दोषाय, उत्तरत्र तु वैष्णवानां हरि निर्माल्येतरभोजने व्रतहानिः स्यादिति शास्त्राधीनतया वैष्णवाः सत्यपीतरभोज्ये हरिनिर्माल्यमेव भुञ्जते नान्यदिति।

हरिनामग्राहीति पुनः पुन र्हरिनामानि गृह्णातीत्यर्थः। तुलसी सेवीति—तुलसी जातीमती, व्रते चाभीक्ष्ण्ये चोदाहरणमिदम्। तथाहि हरिभक्तिलिप्सु र्वैष्णव स्तत्प्रियां तुलसीं शास्त्रानुसारं सेवते नान्यदिति। कर्त्तर्युपमाने च जातावजातौ चेत्यन्वयः, ताच्छी व्रताभीक्ष्ण्यानि तु न सम्बध्यन्ते। कृष्णगायीति—कृष्णो यथा गायति तथा गायतीत्यर्थ, आवो युक्। गोपस्नेहीति–कृष्णे गोप इव स्निह्यति, गोपः कृष्णे यथा स्निह्यति तथेत्यर्थः। शतं दायीति—अधमर्ण्य तुमुभविष्यदर्थ णक णिन्यो र्योगे इति कर्मणि षष्ठीनिषेधः। खश

---

भवति तथैवात्र प्रयुज्यते इति। एवमन्यत्र च स्त्रिया अमृशसोर्वा इत्युक्तमतः स्त्रियम्मन्य स्त्रीमन्य इति। श्रियम्मन्यं स्त्रीकुलमिति। श्रीर्लक्ष्मीः॥ २९५॥

**बाल०**—अतीते। सुगमं॥ २९६॥

पुरुषोत्तमवत् क्यङ्मानिनो णौ चेति-—वैष्णवमानिनी। आभीक्ष्ण्ये कथं कुल्माषखादः ? बाहुल्यात्।

**२८८. एक सर्वेश्वरान्तस्य द्वितीयैकवचनवत् प्रयोगः खिदन्ते।**

गाम्मन्यः, नावम्मन्यः, स्त्रियम्मन्यः, श्रियम्मन्यं स्त्रीकुलं, भुवम्मन्यः।

**२८९. अतीते।**

प्रभुरयं ङ्वनिप् पर्यन्तः।

---

उदाहरणं दर्शनार्थमाह—शिवत्वात् श्य इति। शिवत्वात् कृष्णधातुकत्वम्, ततःशप् कृष्णधातुके, दिवादेः श्यपः श्य इतिक्रमः। वैष्णवम्मन्य इति—सर्वेश्वरान्तपूर्वपदस्येति मुम्। वैष्णवमानिनीति—आत्मानंवैष्णवीं मन्यत इत्यर्थः, नान्तादीप् वक्ष्यते, ततोमानिनी परत्वाद् वैष्णवीशब्दस्य पुरुषोत्तमवत्त्वम्। कुल्माष खाद इति—अत्राभीक्ष्ण्ये णिनिर्भवितु मर्हति, तदपि बाहुल्यादण् प्रत्ययः। कुल्माषः काञ्जिकं ( पर्युषितानान्नाम्लजलं ), यावक ( धान्य विशेषः ) वा। ताच्छील्य इति किम्—कृष्णं सेवते कदाचिदिति न णिनिः। कर्त्रुपमान इति किम्—दरिद्रः अपूपानिव माषान् भुङ्क्ते।

**अमृता०**—२८८. एकेति। खिदन्ते प्रत्यये परे एकसर्वेश्वरान्तस्य कर्मपूर्वपदस्य प्रयोगो द्वितीयैक वचनवद् भवति। अन्तरङ्गत्वादे र्महाहरो नभवतीत्यर्थः। गामन्य इति —आत्मानं गां मन्यत इत्यर्थः। एवमन्यत्र च वेदितव्यम्। स्त्रिया अम् शसो र्वेति स्त्रीमन्य इति च बोध्यम्।

**अमृता०**—२८९. अतीत इत्यधिकारसूत्रम्।

---

**बाल०**—करणे। करणे पूर्वपदे सति अतीते काले यज उत्तरे णिनिर्भवति। सोमयाजीति उपेन्द्रेत्यादिना समासः॥ २८७॥

**बाल०**—कर्म। कर्मणि पूर्वपदे निन्दायां गम्यमानायां हन उत्तरे अतीते णिनिर्भवति। वैष्णवघातीति वैष्णवं हतवानित्यर्थः। अत्र निन्दा गम्यते। नेहेति निन्दा-वगमाभावादिति शेषः॥ २८८॥

**बाल०**—ब्रह्म। ब्रह्म-भ्रूण-वृत्रेषु कर्मसु पूर्वपदेषु सत्सु हन उत्तरे अतीते क्विप् भवति। ब्रह्महेति ब्रह्माणं हतवानित्यर्थः। ननु ब्रह्महभ्यामित्यत्र नामान्तस्येत्यादिना नस्य हरे कृते तुक् कथं न भवतीति चेत्तत्राह तत्राकरणान्न तुक् इति। एवं भ्रूणहा वृत्रहेति। भ्रूणोऽर्भके स्त्रैणगर्भे इति नानार्थवर्गः। वृत्रोऽसुरविशेषः। ननु क्विप् सिध्यत्येव तर्हि किमर्थं लक्षणं कृतमिति चेत्तत्राह ब्रह्मादिष्वेव हन्तेः क्विविति। स्वमतं द्रढयति वचनं नियमार्थमिति भाष्यमिति। ननु यदि नियमः कृतस्तर्हि वीरहा हिमहेत्यादि कथं भवत्विति चेत्तत्राह भूते नियमार्थकान्न कालसामान्य इति वक्ष्यमाणयोगापेक्षया नियमार्थकात् इत्युक्तमिति ज्ञेयं। तस्मात् ब्रह्मादिपूर्वपदेषु हन्तेः कालसामान्ये क्विप् न स्यादित्यर्थः। ननु तर्हि भुते कथं कंसहा इत्यादि दृश्यते इति चेत्तत्राह यत्र तिष्ठति कंसहा

**३००. करणे यजो णिनिः।**

सोमेनेष्टवान् सोमयाजी।

**३०१. कर्मणि हनो णिनि र्निन्दायाम्।**

वैष्णवधाती। नेह कंसं हतवान्।

**३०२. ब्रह्म-भ्रूण-वृत्रेषु कर्मसु हनः क्विप्।**

ब्रह्महा। तत्राकरणान्न तुक्, ब्रह्महभ्याम्। ब्रह्मादिष्वेव हन्तेः क्विप्, वचनं नियमार्थमितिभाष्यम्। भूते नियमार्थकान्न कालसामान्ये,

---

अमृता०—३००. करण इति। करणे पूर्वपदे अतीते काले कर्त्तरि यजधातो र्णिनिः स्यात्। सोमयाजीति—उपेन्द्रोर्यादीत्यादिना समासः।

अमृता०—३०१. कर्मणीति। कर्मणि पूर्वपदे निन्दायां गम्यमानायां भूते हन्तेरुत्तरे कर्त्तरि णिनिः स्यात्। वैष्णवघातीति—वैष्णवं हतवानित्यर्थः। वैष्णवहननस्यानौचित्यात् निन्दा गम्यते।

अमृता०—३०२. ब्रह्मेति। ब्रह्मादिषु त्रिषु कर्मपूर्वपदेषु अतीते हन उत्तरे कर्त्तरि क्विप् प्रत्ययः स्यात्। ब्रह्महेति—ब्रह्माणं हतवानित्यर्थः। इनुहन्नित्यादिना उद्धवत्रिविक्रमः नामान्तस्य नस्य हरः। एवं भ्रूणहा, वृत्रहा इन्द्रः। ननु ब्रह्महभ्यामित्यत्र नामान्तस्य नस्य हरे कृते वामनात्तुक् इति कथन प्रवर्त्तत इति चेत् तत्रसिद्धान्तमाह—तत्राकरणादिति। समाधानपक्ष एष सुखबोधार्थः, वस्तुतस्तु नरामादि हरो नासिद्ध स्तुगादिविधेरन्यत्रेति नामधातूक्तन्यायेन तुग् विधौ नरामहरोऽसिद्धः स्यादित्येव तत्त्वम्। न्यायार्थ स्तत्रैव सविस्तारं विघृतम्।

ननु क्विप्, धातुमात्रादयं विधिरित्यनेनैव क्विपि सिद्धे किमर्थ मिह पृथगुच्यत इति चेत्? तत्राशङ्कां निरस्यति—ब्रह्मादिष्वेवेति। एवकारेण नियमो विहितः। एतत्र स्वमतं भाष्य वचनेन द्रढयति—वचनं नियगार्थमिति। सच नियमश्चतुर्द्धा भवन्ति, यथा, ब्रह्मादिष्वेव हनः क्विप् भूते नान्येषु, ब्रह्मादिषु कर्मसु हनएवक्विप् भूतेनान्यधातोः, ब्रह्मादिषु हनः क्विवेव भूते नान्यप्रत्ययः, तथा ब्रह्मादिषु कर्मसु हनःक्विप् भूत एव नान्यस्मिन् काले इति। तत्राद्यपक्ष मुक्त्वा अन्तिमं पक्षं व्यावर्तयति—नकालसामान्य इति। अतो

---

इत्यादिप्रयोगाद्धेतोः अन्यत्रापि ब्रह्मादिभ्योऽन्यस्मिन् पूर्वपदे सत्यपि क्विप् भवतीति, तेन भूते कंसहा मधुहेति॥ २९९॥

बाल०—सुकर्म। व्यक्तार्थमेतत्। सुकृदिति सुष्ठु कृतवानित्यर्थः। एवं कर्मकृत् पापकृत् मन्त्रकृत् पुण्यकृत्। इति सुप्रभृतिष्वेव कृञः क्विप्॥ ३००॥

बाल०—अन्य। अन्त्रत्र चेति। सुप्रभृतिभ्योऽन्यत्र च क्विप् भवतीति बाहुल्यादिति शेषः। तेन भूते शास्त्रकृदिति॥ ३०१॥

बाल०—सोम। व्यक्तार्थमेतत्। सोमं सुतवानित्यर्थे निपातात् क्विप् सोमसुदिति।

तेन वीरंहन्तीति वीरहा, यत्र तिष्ठति कंसहा इत्यादि प्रयोगादन्यत्रापि कंसहा मधुहा ।

**३०३. सु-कर्म पाप-मन्त्र-पुण्येषु कर्मसु डुकृञः क्विप् ।**

सुकृत् । अन्यत्र च शास्त्रकृत् ।

**३०४. सोमसुदग्निचित्तौ साधू ।**

**३०५. कर्मणि दृशेः क्वनिवेव ।**

श्रीकृष्णदृश्वा ।

---

वर्त्तमाने भविष्यति वा ब्रह्मादिषु हनः क्विप् नस्यात् किन्तु तदितरकर्मसु सभवेदेवेति दर्शयति—वीरहेति । नियमसद्भावेऽपि प्रथमकल्पस्य बाहुल्याद् व्यभिचारं लक्षयति प्राचीनप्रयोगेण—यत्रेति । अत्रभूते अन्यपूर्वपदे क्विप् । अन्यत्रापीति—ब्रह्मादिभ्योऽन्येषु पूर्वपदेष्वपि क्विप् स्यादित्यर्थः । कंसं हतवान् मधुंहतवानित्यर्थः ।

**अमृता०**—३०३. सुकर्मेति । स्पष्टम् । सुकृदिति—सुशोभनं कृतवान्, क्रियाविशेषणस्य च कर्मता, वामनात्तुक् । एवं कर्मकृत् पापकृत् मन्त्रकृत् पुण्यकृदिति । अयञ्चारम्भो नियमार्थः । सचेह त्रिविधः, यथा,—सुप्रभृतिषु भूते कृञ एव क्विप् नान्यस्माद्धातोः,—मन्त्रमधीतवान् मन्त्रध्यायः । सुप्रभृतिषु भूते कृञः क्विवेव नान्यप्रत्ययः, कर्म कृतवान् कर्मकारः । स्वादिषु कृञः क्विप् भूत एव नान्यत्र काले, मन्त्रं करोति करिष्यति वेत्यर्थे तु न । पूर्वपदस्य किल ननियम इत्याह—अन्यत्र चेति । अतएव भाष्यकृत् शास्त्रकृदित्यादि च बाहुल्यात् सिध्यति ।

**अमृता०**—३०४. सोमेति । सोमे कर्मपूर्वपदे सुञ स्तथा अग्नौ कर्मपूर्वपदे चिञः क्विप् साधू स्यातां भूते । पूर्ववन्नियमार्थो हि निपातो ज्ञेयः । सोमं सुतवान् अग्निं चितवानित्यर्थः ।

**अमृता०**—३०५. कर्मणीति । कर्मणि पूर्वपदे दृशधातोर्भूते क्वनिप् एव स्यात् । एव शब्दः प्रत्ययान्तर निवृत्त्यर्थः । श्रीकृष्णदृश्वेति श्रीकृष्णं दृष्टबानित्यर्थः ।

---

अग्निं चितवानित्यर्थे निपातात् क्विप् अग्निचिदिति । अत्रापि नियमो ज्ञेयः, सोम एव सुञः क्विविति अग्नावेव चिञः क्विविति च ।। ३०२ ।।

**बाल०**—कर्म । कर्मणि पूर्वपदे सति अतीते काले दृशेरुत्तरे क्वनिवेव भवति । श्रीकृष्णदृश्वा इति श्रीकृष्णं दृष्टवानित्यर्थः ।। ३०३ ।।

**बाल०**—राज । व्यक्तार्थमेतत् । राजयुद्धेति राजानं योधितवानित्यर्थे निपातात् क्वनिप् गोविन्दनिवृत्तिश्च णेर्हरः । राजकृत्वेति राजानं कृतवानित्यर्थे निपातात् क्वनिप् । सहयुद्धेति सह युद्धवानित्यर्थे निपातात् क्वनिप् । सहकृत्वेति सह कृतबानित्यर्थे निपातात् क्वनिप् । युधिरिति । अत्रेति राजयुद्धेत्यत्रेत्यर्थः । सहयुद्धेत्यत्रतु युधेरण्यन्तत्वमेव ज्ञेयं ।। ३०४ ।।

**३०६. राजयुद्ध्व-राजकृत्व-सहयुध्व-सहकृत्वानः साधवः ।**

युधिरत्र ण्यर्थः । राजानं योधितवान् राजयुध्वा ।

**३०७. सप्तम्यन्ते जनेरच् ।**

वृन्दावनजः । बाहुल्यात् द्वाभ्यां जातः द्विजः ।

**३०८. समासे ङे र्नमहाहरः कृति बहुलम् ।**

दिविष्ठः दिविषदित्यादि, षत्वं वाच्यम् । हृदिस्पृक् ।

---

**अमृता०**—३०६. राजेति । राजयुद्धादय श्चत्वारः क्वनिप् प्रत्ययेन साधवो भवन्ति । युधिरत्र ण्यर्थ इति—अन्तर्भावित ण्यर्थ इत्यर्थः । तेनसकर्मकत्वे राजादीनां कर्मपूर्वपदत्वं सङ्गच्छत इत्याशयः । एवं राजानं कृतवान् राजकृत्वा । सहशब्दस्य विशेषणत्वेन कर्मत्वमुह्यम् । सह युगपद् योधितवानित्यर्थः ।

**अमृता०**—३०७. सप्तम्यन्त । सप्तम्यन्ते पूर्वपदे सति जनेरुत्तरे भूते अच प्रत्ययः स्यात् । वृन्दावनज इति वृन्दावने जात इत्यर्थः । चित् करणात् संसारहरः । द्वाम्यामिति पञ्चम्या द्विवचनम् । शौक्रात् संस्काराच्च जातइत्यर्थः । द्विज इह ब्राह्मणः । यद्वा तृतीया द्वित्वम्, दन्तविप्राण्डजा द्विजा इत्यमरात् । अत्र पञ्चम्यन्ते तृतीयान्ते वा पूर्वपदे जनेरच् बाहुल्यादेव भवति, तद्विधानाभावादित्यर्थः । पाणिनीयास्तु "पञ्चम्यामजातौ" इति सूत्रयित्वा बुद्धिजः संस्कारज इत्याद्युदाहरन्ति । जातौ तु हस्तिनो जात इति नाच् । बाहुल्यात् ब्राह्मणजः अनुज अज इत्यादीनि च प्रयुज्यन्ते ।

**अमृता०**—३०८. समास इति । कृति परे समासे बहुलं यथा स्यात्तथा ङे र्महाहरो नभवति । बहुलग्रहणान्न तु सर्वत्र । तेन वृन्दावनज इत्यादौ ङे र्महाहरः स्यादेव । दिविष्ठ

---

**बाल०**—सप्त । सप्तम्यन्ते पूर्वपदे सति जनेरुत्तरे अतीते काले अच् भवति । वृन्दावनज इति वृन्दावने जात इत्यर्थः । द्वाभ्यामिति तृतीयाद्विवचनान्तं पञ्चमी-द्विवचनान्तं वा । द्विर्जातो द्विज इति क्रमदीश्वरः । दन्तविप्राण्डजा द्विजा इति नानार्थवर्गः ।। ३०५ ।।

**बाल०**—समा । समासे सति कृति ङे र्महाहरो बहुलं न भवति । बहुलमिति क्रियाविशेषणं । दिविष्ठ इति दिवि तिष्ठति स्मेत्यर्थे दिवि स्थितमित्यर्थे च अकर्मण्या-रामादित्यनेन स्थो भावेतु पुंसीति वा कः । तथाच भट्टिः (४।३३) । पर्यशाप्सीद्दिविष्ठासौ सन्दर्श्य भयदं वपुरिति । दिविषदिति । दिवि सीदतीत्यर्थे नाम्नि सदलृ इत्यादिना क्विप् । षत्वमिति । वाच्यमिति वक्ष्यते इत्यर्थः । अन्तष्ठादय इति सुषामादयश्चेति च वक्ष्यते । हृदिस्पृगिति हृदि स्पृशतीति क्विप् ।। ३०६ ।।

**बाल०**—प्रा । जे परे प्रावृट्शरत्कालदिवां ङेर्महाहरो न भवति । प्रावृषिज इति प्रावृषि जात इत्यर्थे सप्तम्यन्ते जनेरच् इत्यनेन अच् । आदिपदेन शरदिजः कालेजः दिविज इति । इत्यादि चेति बाहुल्यादिति शेषः ।। ३०७ ।।

## ३०९. प्रावृट्-शरत्-काल-दिवां जे ।

प्रावृषिज इत्यादि । वर्षासुजः अप्सुज इत्यादि च ।

## ३१०. वर्ष क्षर वर मनोभ्यो वा ।

वर्षेज वर्षज इत्यादि । शिरादित्यपि जुमरमतम् ।

## ३११. सरसो रुहे च ।

---

इति दिवि तिष्ठतीत्यर्थे अकर्मण्यारामादिति कः । तथाहि भट्टिः—पर्यशाप्सीद् दिविष्ठासौ सन्दर्श्यभयदं वपुरिति । दिविषदिति—दिवि सीदतीत्यर्थे नाम्नि सदलृ इत्यादिना क्विप् । षत्वं वाच्यमिति—अम्बष्ठादयः षत्वेन साधव इत्यनेन वक्ष्यत इत्यर्थः । हृदिस्पृगिति—हृदि स्पृशतीत्यर्थे क्विप् । एवंस्तम्बेरमः कर्णेजप इत्यादीनि च ।

**अमृता०**—३०९. प्रावृङिति । जे इति जनधातोरच् प्रत्ययान्तो निर्देशः । जे परे प्रावृट्, शरत्, काल, दिवशब्दानां ङेर्महाहरो नस्यात् । पूर्वस्यैव प्रपञ्चोऽयम् । एवं शरदिजः कालेजः दिविजइति । अप्सुज इत्यादि च बाहुल्यात् सिद्धमित्यर्थः ।

**अमृता०**—३१०. वर्षेति । जेपरे वर्षादिभ्यश्चतुर्भ्य उत्तरस्य ङेर्महाहरो वास्यात् । इत्यादि पदेन—क्षरेजः क्षरजः, वरेजः वरजः, मनसिजः मनोभ इति । जुमरमते शरेजः शरज इत्यपि सिध्यति, तदेव पाणिनीयानाञ्च मतम् ।

**अमृता०**—३११. सरस इति । सरस्शब्दादुत्तरस्य ङेर्महाहरो वा भवति, जेपरे तथा रुहे च परे । रुह इति कप्रत्ययान्तो निर्देशः । सरसिजमिति सरसि जातं कमलमित्यर्थः । बाहुल्यात् जलशब्दादपि ङेर्महाहरं सूचयितुं भट्टिप्रयोगमुट्टङ्कयति—उद्भासीनीति । सरसिरुहमिति—सरसि रोहति, कमलमित्यर्थः । ईशोद्धवेति कः । शिरसिरुह

---

**बाल०**—वर्ष । जे परे वर्षादिभ्य उत्तरस्य ङेर्महाहरो वा भवति । वर्षेज इति वर्षे जात इत्यर्थः । वर्षज इत्यादीत्यादिपदेन, क्षरेजः क्षरजः, वरेज वरजः, मनसिजः मनोज इति । मनसिजमनोजौ कन्दर्पवाचकौ । शरादित्यपि जुमरमतमिति येन शरेजः शरज इति ।। ३०८ ।।

**बाल०**—सर । जे रुहेच परे सरसो ङेर्महाहरो वा भवति । सरसिजमिति सरसि जरसि जातमित्यर्थः । सरसिजं पद्मं । उद्भासीनीति । एतेन बाहुल्यात् जे परे जलशब्दस्यापि ङेर्महाहरो वा भवतीति सूचितं । सरसिरुहमिति सरसि रोहतीति ईशोद्धवकिरतिप्रीणातिगृज्ञाभ्यः क इति कः । सरसिरुहं पद्मं । शिरसिरुहः शिरोरुह इति बाहुल्यादिति शेषः । एतौ केशवाचकौ । पङ्केरुहमित्यादौतु बाहुल्यादेवेति शेषः । पङ्केरुहं पद्मं ।।३०९।।

**बाल०**—अका । शयवासवासिषु परेषु अकालवाचकादुत्तरस्य ङेर्महाहरो वा भवति । खेशयः खशय इति खे शेते इत्यर्थे अधिकरणे शेरत् इत्यत् । खमाकाशं । आदिपदेन व्रजेवासः वृन्दावनेवासी वृन्दावनवासीति । व्रजेवास इति व्रजे वसतीत्यर्थे घण वृन्दावनेवासीति णिनिः । पूर्वाह्णशय इति पूर्वाह्णे शेते इत्यर्थः ।। ३१० ।।

उरजिजं सरोजम् । उड्भासीनि जलेजानीति भट्टि: । सरसिरुहं सरोरुहम् । शिरसिरुहः शिरोरुहः । पङ्केरुहमित्यादौ तु नित्यम् ।

**३१२. अकालाच्छय-वासि-वासेषु वा ।**

खेशयः खशयइत्यादि । अकालात् किम्—पूर्वाह्णशयः ।

**३१३. विष्णुजनारामाभ्यामेव ।**

वारिशयः ।

**३१४. इनन्ते तु न ।**

जलशयी ।

---

इत्यादि च बाहुल्यात् सिध्यति । शिरसिरुहः शिरोरुहश्च केशवाचिनौ । नित्यमिति—बाहुल्यान्न ङेर्महाहर इति सम्बन्धः ।

अमृता०—३१२. अकालादिति । शय-वासि-वासेषु परेषु अकालवाचकादुत्तरस्य शब्दस्य ङेर्महाहरो वा स्यात् । खेशयइत्यधिकरणे शेतेरत् । आदि पदेन—वृन्दावनेवासी वृन्दावनवासी, वसते र्णिनिः, तथा व्रजेवासः व्रजवासः, वसते र्घञ् । पूर्वाह्णशय इति पूर्वाह्णे शेते इत्यर्थः ।

अमृता०—३१३. महाहर निषेधे नियममाह—विष्णिवति । कृदन्ते परे विष्णुजनान्तादरामान्ताच्च शब्दादुत्तरस्य हि ङेर्महाहरो निषिध्यते नान्यस्मादिति फलितार्थः । तेन इरामान्त वारिशब्दादुत्तरस्य ङेर्महाहरः स्यादेवेति प्रत्युदाहृतम्, नखलु वार् शब्दस्य सप्तम्यन्ततया भ्रमितव्यं, तस्य निषेधाभावेन महाहरानिवार्यत्वादित्यवधेयम् ।

अमृता०—३१४. इनन्त इति । शीधातोरिनि परे तु ङेर्महाहरनिषेधो न स्यात्, विधिसूत्रे अत् प्रत्ययस्य हि निर्देशादिति भावः । जले शयितुं शीलमस्य इति जलशायी, शीलार्थे णिनिः ।

---

बाल०—विष्णु । कृदन्तेषु परेषु विष्णुजनारामाभ्यामेवोत्तरस्य ङेर्महाहरो वा एव भवति । नियमोऽयं । अत्र विष्णुजनारामाभ्यामित्यनेन तदन्तौ गृह्येते । वारिशय इति वारिणि शेते इत्यर्थः । अत्र प्राङ् निमित्तस्य विष्णुजनान्तत्वं अरामान्तत्वञ्च नास्तीति ङेर्महाहर एव । इदं प्रत्युदाहरणं उदाहरणत्वेतु एवं, वार्वारि सलिलमित्यभिधानात् वारि जले शेते इत्यर्थः ।। ३११ ।।

बाल०—इन । इनन्तेतु परे ङेर्महाहरनिषेधो न भवति । शलशायी णिनिः ।।३१२।।

बाल०—स्थे । स्थे परे क्वचित् ङेर्महाहरनिषेधो न भवति च । समस्थ इति समे तिष्ठतीत्यर्थः ।। ३१३ ।।

बाल०—सुयज् । षुञ अभिषवे यज पूजादौ इत्येताभ्यामुत्तरे अतीते ङ्निप् भवति । सुत्वेति कंसारित्वाद्गोविन्दाभावः । सुत्वा त्वभिषवे कृते इत्यमरः । अभिषवे

## ३१५. स्थे न च क्वचित् ।

समस्थः ।

## ३१६. सु यज्भ्यां ङ्वनिप् ।

सुत्वा यज्वा । अतीत इति निवृत्तम् ।

## ३१७. क्विप् पर्यन्ता स्तच्छील-तद्धर्म-तत् साधुकारिषु ।

एतेष्वर्थेषु वक्ष्यमाणा ज्ञेयाः ।

## ३१८. तृन् ।

सृष्टिं कर्त्ता ।

---

**अमृता०**—३१५. स्थ इति । स्थे च परे क्वचित् ङेर्महाहर निषेधो नस्यात् । समस्थ इति समे तिष्ठतीत्यर्थः । क्वचित् शब्दग्रहणात् दिविष्ठ इत्यादौ स्यादेव । महाहर निषेधो निवृत्तः ।

**अमृता०**—३१६. सु यज्भ्यामिति । एताभ्यामुत्तरे अतीते कर्त्तरि ङ्वनिप् प्रत्ययो भवति । ङपो इतौ । सुत्वेति—ङित्त्वेन निर्गुणत्वाद् गोविन्दाभावः, सुतवानित्यर्थः । यज्वेति विधिनेष्टवानित्यर्थः । ङितकरणेन कपिलत्वाभावात् वचिस्वपि यजादीनामिति न सङ्कर्षणः ।

**अमृता०**—३१७. क्विविति अधिकार सूत्रम् । त्रिष्वर्थेषु वक्ष्यमाणाः प्रत्यया ज्ञेयाः ।

**अमृता०**—३१८. तृन्निति । ताच्छील्याद्यर्थत्रये धातोरुत्तरे कर्त्तरि तृलप्रत्ययः स्यात् । तृनो नइत् । सृष्टिं कर्त्तेति—सृष्टिं कर्त्तुं शीलमस्य, सृष्टिकरणे धर्मोऽस्य, सृष्टि

---

कृते सति याज्ञिकः सुत्वा कथ्यते इत्यर्थः । अभिषवो यज्ञसम्बन्धि स्नानं । यज्वेति । यज्वातु विधिनेष्टवानित्यमरः ॥ ३१४ ॥

**बाल०**—क्विप् । वृत्तिमाह एष्वर्थेष्विति । एषु तच्छीलादिषु अर्थेषु वाच्येषु । तच्छीलादयः कर्त्तृ विशेषणानि । वक्ष्यमाणा इति वक्ष्यमाणाः क्विप्पर्यन्ताः प्रत्यया इत्यर्थः ॥ ३१५ ॥

**बाल०**—तृन् । तच्छीलादिषु अर्थेषु धातोरुत्तरे तृन् स्यात्, न इत् सृष्टिं कर्त्तेति तत्स्वभावस्तद्धर्मस्तत्साधुकारी वेत्यर्थः । एवमन्यत्रच यथायथं ज्ञेयं । तत् कर्त्तुं शीलमस्य तत् कर्त्तुं धर्मोऽस्य तत्करणे साधु इत्येवं वाक्यं । अच्युताभविष्णुनिष्ठाधोक्षजाभखलर्थाऽव्ययाऽरामान्ततृनां योगेन षष्ठीनिषेधः ॥ ३१६ ॥

**बाल०**—अलं । अलंपूर्व डुकृञ करणे निराङ्पूर्व-डुकृञ प्रपूर्व-जनी प्रादुर्भावे उत्पूर्व डुपच ष पाके उत्पूर्व पतलृ गतौ उत्पूर्व मदी हर्षे रुच दीप्तौ अपपूर्व-त्रपू लज्वायां वृतु वर्त्तने वृधु वृद्धौ सह मर्षणे चर गतौ इत्येतेभ्य उत्तरे तच्छीलादिष्वर्थेषु इष्णुर्भवति । कृष्णमलङ्करिष्णुरिति अच्युताभेत्यादिना षष्ठीनिषेधः । एवं निराकरिष्णुः प्रजनिष्णुरित्यादि ॥ ३१७ ॥

**३१९. अलंकृञ - निराकृञ - प्रजन - उत्पत-उत्पच - उन्मद-रुच- अपत्रप-वृतु-वृधु-सह-चर इत्येतेभ्य इष्णुः ।**

कृष्णमलङ्करिष्णुः निराकरिष्णुः प्रजनिष्णु रित्यादि ।

**३२०. भविष्णु-भ्राजिष्णू साधू ।**

**३२१. ण्यन्ताच्च ।**

कारयिष्णुः ।

**३२२. जिभूभ्यां स्नुक् ।**

---

करणे साधुरयमिति विष्णुः । अच्युताभविष्णुनिष्ठेत्यादिना तृन् योगे कर्मणि षष्ठीनिषेधं स्मारयन् सृष्टिमिति द्वितीया न्यस्ता, पूर्वपदत्वाभावान्नास्य समासप्रसङ्गः ।

**अमृता०**—३१९. अलमिति । अलंपूर्वं डुकृञ्, निराङ् पूर्वडुकृञ् , प्रपूर्वजनी, उत्पूर्व पतलृ, उत्पूर्व डुपचष्, उत्पूर्व मदी, रुच, अपपूर्व त्रपूष्, वृतु, वृधु, सह, चर इत्येतेभ्य उत्तरे ताच्छील्यादिष्वर्थेषु कर्त्तरि इष्णु प्रत्ययः स्यात् । कृष्णमिति कर्मणि द्वितीया, उरामान्त प्रत्ययत्वात् पूर्वोक्तेनैव षष्ठी निषेधः । इत्यादि पदेन—उत्पतिष्णुः, उत्पचिष्णुः, उन्मदिष्णुः, रोचिष्णुः, अपत्रपिष्णुः, वर्त्तिष्णुः वर्द्धिष्णुः, सहिष्णुः चरिष्णुरिति ।

**अमृता०**—३२०. भविष्ण्विति । सुगमम् । साधूइति—अनयो श्छान्दसत्वेऽपि भाषायां निपातादेव इष्णु प्रत्ययः ।

**अमृता०**—३२१. ण्यन्तादिति । ताच्छील्याद्यर्थेषु ण्यन्तात् धातोश्चोत्तरे कर्त्तरि भाषायामिष्णुः साधुः स्यात् । एतदपि छान्दसं, लौकिकेऽपिक्वचिद् दृश्यत इति निपातेन विधानम् । कारयिष्णुरिति—णेर्हर आम् अन्त आलु आय इत्नुइष्णु इत्येष्विति णेहराभावो गोविन्दश्च ।

**अमृता०**—३२२. जिभूभ्यामिति । एताभ्यामुत्तरे ताच्छील्याद्यर्थेषु कर्त्तरि स्नुक्

---

**बाल०**—भवि । व्यक्तार्थमेतत् । भविष्णुरिति भू सत्तायां निपातादिष्णुः । भ्राजिष्णुरिति टु भ्राजृ दीप्तौ निपातादिष्णुः ।। ३१८ ।।

**बाल०**—ण्यन्ताच्च । तच्छीलादिष्वर्थेषु ण्यन्ताद्धातोश्चोत्तरे इष्णुर्भवति । कारयिष्णु-रिति । इष्णौतु छन्दस्येवेत्युक्त अस्यतु छान्तसत्वं नास्ति, तथापि कथं णेर्हरस्य निषेधो भवतीति विचार्यं ।। ३१९ ।।

**बाल०**—जिभू । जि जये भू सत्तायामित्येताभ्यामुत्तरे तच्छीलादिष्वर्थेषु स्नुक् भवति । क इत् । जिष्णुरिति ईश्वरहरिमित्रेत्यादिना षत्वं कंसारित्वाद्-गोविन्दाभावः ।। ३२० ।।

**बाल०**—ग्ला । च्छीलादिष्वर्थेषु ग्लै हर्षक्षये ष्ठा गतिनिवृत्तावित्येताभ्यामुत्तरे स्नुर्भवति । स्थास्नुः स्थिरतरः । स्थास्नुः स्थिरतरः स्थेयानित्यमरः ।। ३२१ ।।

जिष्णुः भूष्णुः ।

**३२३. ग्लास्थाभ्यां स्नुः ।**

ग्लास्नुः स्थास्नुः ।

**३२४. त्रसि गृधिधृषि क्षिपिभ्यः क्नुः ।**

नेड् वच् ति त्रावौ, त्रस्नु रित्यादि ।

**३२५. शमादे र्णिनिः ।**

शमी भ्रमी । अकर्मकादेव, नेह वनं भ्रमिता ।

---

स्यात् । कइत् । जिष्णुरिति—ईश्वरहरिमित्रेत्यादिना षत्वम्, कंसारित्वान्न गोविन्दः । एवं भूष्णुः, नेड्वचन्ति त्रादावित्यत्रादि पदेन स्नुकश्च ग्रहणान्नेट् ।

अमृता०—३२३. ग्लेति स्पष्टम् । ग्लास्नुरिति ग्लैहर्षक्षये, आरामान्तपाठः ।

अमृता०—३२४. त्रसीति । त्रसी रुद्वेगे, गृध्रु अभिकाङ्क्षायां, ञिधृषा प्रागल्भ्ये, क्षिप प्ररणे, इत्येतेभ्य उत्तरे ताच्छील्याद्यर्थेषु कर्त्तरि क्नु प्रत्ययः स्यात् । त्रादिषु क्नुप्रत्ययस्य च ग्रहणान्नेड्त्याह—नेडिति । कित्त्वान्न गोविन्दः । आदि पदेन गृध्नुः धृष्णुः क्षिप्नुरिति । गृध्नुर्लब्धः, क्षिप्नु र्निराकरिष्णुरित्यर्थः ।

अमृता०—३२५. शमादेरिति । ताच्छील्याद्यर्थेषु शमादेर्धातोरुत्तरे कर्त्तरि णिनिः स्यात् । णइत् । तृनोऽपवादः । शमादयोऽष्टौ प्रागाख्यात प्रकरणे निर्दिष्टाः । शमीति—जनिबध्योमान्तानाञ्चेति वृष्णीन्द्रनिषेधः । एवं दमी तमी श्रमी भ्रमी क्षमी क्लमी

---

**बाल०**—त्रसि । त्रसी उद्वेगे गृधु अभिकाङ्क्षायां ञि धृषा प्रागल्भ्येक्षिप प्रेरणे इत्येतेभ्य उत्तरे तच्छालादिष्वर्थेषु क्नु र्भवति । क इत् । नेड्वन्·तित्रादाविति अनेन इड् निषेधः । आदिपदेन गृध्नुः धृष्णुः क्षिप्नुरिति । गृध्नुलुब्धः । निराकरिष्णुः क्षिप्नुः स्यादित्यमरः ॥ ३२२ ॥

**बाल०**—शमा । तच्छीलादिष्वर्थेषु शमादेरुत्तरे णिनिर्भवति । शमु उपशमे, दमु उपशमे, तमु ग्लानौ, श्रमु तपसि खेदेच, भ्रमु अनवस्थाने, क्षमु ष सहने, क्लमु ग्लानौ, मदी हर्षे, एते अष्ट शमादयः । शमीति जनिवेध्योरित्यादिना वृष्णीन्द्रनिषेधः । एवं भ्रमीति । अकर्मकादेवेति णिनिरिति शेषः । वनं भ्रमितेति, अत्र तृन् ॥ ३२३ ॥

**बाल०**—अनु । ताच्छीलादिष्वर्थेषु अनुरुधादेरुत्तरे णिनिर्भवति । अनुरोधीति रुधिरावरणे, आयामीति यमु उपरमे, आयासीति यसु प्रयत्ने, संज्वारीति ज्वर रोगे, दोषीति दुष वैकृत्य, द्रोहीति द्रुह जिघांसायां । दोहीति दुह प्रपूरगे, आक्रीडीति क्रीड विहारे, अतिचारी अपचारी अनुचारीति चर गतौ, व्यामोषीति व्याङ्पूर्व मुष स्तेये क्रयादिः मुष खण्डने दिवादिर्वा । अभ्याघातीति अभ्याङ्पूर्व हन हिंगागत्योः । आमोषीत्येके इति तन्मते आङ्पूर्वस्य मुषो ग्रहणमिति ॥ ३२४ ॥

### ३२६. अनुरुधादे र्णिनिः ।

अनुरोधी आयामी आयासी संज्वारी दोषी द्रोही दोही आक्रीडी अतिचारी अपचारी अनुचारी व्यामोषी अभ्याघाती । आमोषीत्येके ।

### ३२७. परे र्दिवि-क्षिप-रट-वद-दह-मुहो णिनिः ।

परिदेवी ।

### ३२८. वेः कष लस कत्थ स्रनभो णिनिः ।

कषहिंसायां विकाषी विलासी ।

---

प्रमादी । अकर्मकादेवेति—शमसाहचर्यादिति भावः । तेन कर्म विवक्षायां न णिनिः किन्तु सामान्येन तृन् ।

**अमृता०**—३२६. अनुरुधादेरिति । ताच्छील्याद्यर्थेषु अनुरुधादिभ्यो धातुभ्य उत्तरे कर्त्तरि णिनि र्भवति । तृनोऽपवादः । अनुरोधीति—रुधिर आवरणे, आयामीति यमु उपरमे, आयासीति यसु प्रयत्ने, ज्वर रोगे संज्वारी, दूष वैकृत्ये दोषी, द्रुह जिघांसायां द्रोही, बि-आङ्—मुष स्तेये व्यामोषी, अभि-आङ्-हन हिंसागत्योः अभ्याघाती ।

**अमृता०**—३२७. परे रिति । ताच्छील्याद्यर्थेषु परिपूर्वेभ्यो देवादिभ्य उत्तरे कर्त्तरि णिनिः स्यात् । परिदेवीति दिवु क्रीडायां ण्यन्तः । एवं परिक्षेपी परिराटी परिवादी परिदाही परिमोहीति ।

**अमृता०**—३२८. वेरिति । ताच्छील्याद्यर्थेषु विपूर्वेभ्यः कषादिभ्य उत्तरे कर्त्तरि णिनिः स्यात् । विलासीति लस क्रीडायाम् । एवं विकत्थी, विस्रम्भीति कत्थ आत्मश्लाघायां, स्रनभु विश्वासे । तालव्यादिरयमित्येके ।

---

**बाल०**—परे । परेरुत्तरेभ्यो दिव क्रीडादिषु क्षिप प्रेरणे रट परिभाषणे वद व्यक्तायां वाचि दह भस्मीकरणे मुह वैचित्त्ये इत्येतेभ्य उत्तरे तच्छीलादिष्वर्थेषु णिनिर्भवति । परिदेवीति । एवं परिक्षेपीति परिराटी परिवादी परिदाही परिमोहीति ॥३२५

**बाल०**—वेः । तच्छीलादिष्वर्थेषु वेरुत्तरस्मात् कषादेरुत्तरे णिनिर्भवति । विलासीति लस क्रीडायां । एवं विकत्थी विस्रम्भीति । कत्थ आत्मश्लाघायां स्रनभु विश्वासे । (तालव्यादिरयमित्येके, इति गणटीका । श्रीरासः ।) ॥ ३२६ ॥

**बाल०**—अप । तच्छीलादिष्वर्थेषु अप-विभ्यामुत्तरस्मात लष उत्तरे णिनिर्भवति । अपलाषीति । एवं विलासीति ॥ ३२७ ॥

**बाल०**—प्रात् । प्रादुत्तरेभ्यः सृ गतौ द्रु गतौ लप व्यक्तायां वाचि वस निवासे इत्येतेभ्य उत्तरे तेष्वर्थेषु णिनिर्भवति । प्रसारीति । एवं प्रद्रावी प्रलापी प्रवादी प्रवासीति ॥ ३२८ ॥

**३२९. अप-विभ्यां लषो णिनिः ।**

**लष कान्तौ अपलाषी ।**

**३३०. प्रात् सृ-द्रु-लप-मन्थ-वद-वसो णिनिः ।**

**प्रसारी ।**

**३३१. मन्थो नलोपश्च ।**

**प्रमाथी ।**

**३३२. संपृच-विविच-रन्ज-संसृज-युज-त्यज-भज-भन्जो घिणुन् ।**

**सम्पर्की विवेकी । रन्जे र्नस्यहरः, रागी ।**

---

**अमृता०**—३२९. अपेति स्फुटम् । एवं विलाषीति ।

**अमृता०**—३३०. प्रादिति । ताच्छील्याद्यर्थेषु प्रपूर्वेभ्यः सृप्रभृतिभ्यः षडभ्य उत्तरे कर्त्तरि णिनिः स्यात् । एवं प्रद्रावी प्रलाषी प्रवादी प्रवासी ।

**अमृता०**—३३१. मन्थ इति । स्पष्टम् । कंसारित्वाभावेन नलोपेऽप्राप्ते वचनमिदम् । नलोपे सति उद्धवारामस्य वृष्णीन्द्रः । अत्र 'प्रजोरिनिः', तथा जि दृ क्षि विश्रीण् वमाव्यथाभ्यम परिभूप्रसूभ्यश्च इति सूत्रंपाणिनेः । प्रजवी प्रजविनौ । तथा जयी दरी क्षयी विश्रयी अत्ययी वमी अव्यथी अभ्यमी परिभवी प्रसवीति । लभ्यन्ते चैषां प्रयोगा लोके ।

**अमृता०**—३३२. संपृचेति । ताच्छील्याद्यर्थेषु संपूर्वपृच प्रभृतिभ्य उत्तरे कर्त्तरि घिणुन् प्रत्ययः स्यात् । घरामणरामोरामाइतः । सम्पर्कीति—सम् पृची सम्पर्क, घित्त्वेन चजोः कगौ घिण्यतोरिति चस्य कः । एवं विवेकी । रागीति—रन्जे र्नस्यहरः असिअके अने घिणुनि चेति नस्य हरः, उद्धवारामस्य वृष्णीन्द्रः, चवर्गस्य कवर्गश्च ।

---

**बाल०**—मन्थो । मन्थो नलोपश्च भवति । प्रमाथीति नलोपे कृते वृष्णीन्द्रः ॥३२९॥

**बाल०**—संपृच । संपूर्व पृची सम्पर्के वि पूर्व विचिर पृथग्भावे रन्ज रागे संपूर्व सृज विसर्गे युज समाधौ दिवादिर्युजिर योगे रुधादिर्द्वयोरेव ग्रहणं । त्यज् वयोहानौ भन्जो आमर्दने इत्येतेभ्य उत्तरे तेष्वर्थेषु घिणुन् भवति । घरामोरामणरामा इतः । सम्पर्की चगौ कगावित्यादिना चस्य कः । रन्जेरिति रन्जेर्नस्य हरोऽसि के अने घिणुनि चेति सूत्रं । रागीति नस्य हरे कृते वृष्णोन्द्रः, जस्य गत्वं ॥ ३३० ॥

**बाल०**—भन्जे । भञ्जे र्घिणुन् सिद्ध एव नलोपश्च भवति ॥ ३३१ ॥

**बाल०**—निन्द । निदि कुत्सायां हिसि हिंसायां क्लिशू विबाधने खादृ भक्षणे नश अदर्शने विपूर्वप्रेरणण्यन्तः व्याङ्पूर्व भाष व्यक्तायां वाचि इत्येतेभ्योऽसूयधातोश्चोत्तरे तेष्वर्थेषु णको भवति । असूय इति कण्ड्वात्वाद्यङन्तः । अनेकेति । कालापानां मते अनेकसर्वेश्वराद्धातोश्चोत्तरे णको भवति । परे । परेरुत्तरेभ्यः क्षिप रट-वादिभ्य उत्तरे

## ३३३. भन्जे र्नलोपश्च ।

भागी ।

## ३३४. निन्दि हिंस क्लिश खादि विनाशि व्याभाषासूयेभ्यो णकः ।

अनेकसर्वेश्वराच्च कालापानाम् ।

## ३३५. परेः क्षिप-रट-वादिभ्यः ।

---

**अमृता०**—३३३. भन्जेरिति । भन्ज धातो र्नलोपश्च भवति, चकारात् घिणुन् च । कंसारित्वाभावात् नलोपाप्राप्ते विधानमेतत् ।

**अमृता०**—३३४. निन्दीति । ताच्छील्याद्यर्थेषु निन्दिप्रभृति सप्तभ्य उत्तरि णक प्रत्ययः स्यात् । कालापानां मते अनेक सर्वेश्वरधातोश्चोत्तरे णको भवति । निन्दकइति निदि कुत्सायाम् । एवं हिंसि हिंसायां हिंसकः, क्लिशू विवाधने क्र्यादिः क्लिश उपतापे दिवादिः, द्वयोरपिक्लेशकः, खाद्द खादकः, विपूर्व नश ण्यन्तः—विनाशकः, वि-आङ् पूर्वभाष व्यक्तायां वाचि व्याभाषकः, असूय कण्ड्वादिः—असूयकः । कलापमते–दरिद्रायक इत्यादि च ।

**अमृता०**—३३५. परेरिति । परि पूर्वेभ्यः क्षिपरटवदिभ्यश्च णकः स्यात् । परिक्षेपकः परिराटकः परिवादकः । नच 'णक तृलौ' इति प्रागुक्त विधिना हि सिद्धे पुनरिह णक विधानं पिष्टपेषणं जातमिति वाच्यम्, अत्र ताच्छील्याद्यधिकारे प्रोक्तानामेव यथास्यात् ननु धातुसामान्यानामिति विशेषाभिप्रायो बोद्धव्यः । तस्मात्ताच्छील्याद्यर्थेषु वाऽसरूपविधिर्नेति शब्देन्दुशेखरः । अत एव तेनाप्राप्तेः परेर्देवि क्षिप रटवद प्रभृतिभ्यो णिनि विहितः, पुनरिह तेषामेव णको विधीयते इति विवेच्यम् ।

---

तेष्वर्थेषु णको भवति । क्षिप प्रेरणे रट परिभाषणे ण्यन्तो वदिः इत्येतेभ्य इत्यर्थः । उपे । उपेन्द्रा दुत्तराभ्यां दिविक्रुशाभ्यामुत्तरे तेष्वर्थेषु णको भवति । निन्दक इति । एवं हिंसकः क्लेशकः खादकः विनाशकः व्याभाषकः असूयक इति । दरिद्रायक इति, परिक्षेपकेः परिराटकः परिवादकः इति, परिदेवकः परिक्रोशक इति च । परिदेवक इति ण्यन्ताद्दिवधातोर्देवृ देवने इत्यस्माद्वा णकः ॥ ३३२ ॥

**बाल०**—चल । अकर्मकाच्चलनार्थात् शब्दार्थाच्च धातोरुत्तरे तेष्वर्थेषु अनो भवति । चलनं कम्पनं । चलनं कम्पनं । चलन इति चल कम्पने, कम्पन इति कचि चलने । शब्दन इति शब्द शब्दक्रियायां चौरादिकः रवण इति रु शब्दे ॥ ३३३ ॥

**बाल०**—असि । असि उसि अनेच परे चक्षिङः स्थाने ख्याञ् न भवतीति वाच्यं वक्तव्यं । विचक्षण इति शब्दार्थत्वादनः चक्षिङः ख्याञ् रामधातुक इति, ख्याञादेशः स्यादिति निषेधविधानं । कर्मेति कर्मानपेक्षणादकर्मकत्वं अकर्मकत्वादन इति भावः । पठितेति तृन् ॥ ३३४ ॥

**बाल०**—विष्णु । व्यक्तार्थमेतत् । वर्त्तन इति वृतु वर्त्तने वसितेति वस आच्छादने तृन् । विष्णुजनादीति किं एषिता ॥ ३३५ ॥

## ३३६. उपेन्द्राद्दिविक्रुशाभ्याम् ।

निन्दकः, क्लिश क्लेशकः ।

## ३३७. चलन शब्दार्थादकर्मकादनः ।

चलनः कम्पनः शब्दनः रवणः ।

## ३३८. असि उसि अने च चक्षिङः ख्याञ्नेति वाच्यम् ।

विचक्षणो विद्वानित्यर्थः । कर्मानपेक्षणात् । अकर्मकात् किम्--पठिता गीताम् ।

## ३३९. विष्णुजनाद्यात्मपदिनश्चानः ।

---

अमृता०—३३६. उपेन्द्रादिति । स्पष्टम् । दिवु ण्यन्तः, नतु देवृ । परिदेवकः, आक्रोशकः ।

अमृता०—३३७. चलनेति । अकर्मकाच्चलनार्थात् शब्दार्थाच्च धातोरुत्तरे ताच्छील्याद्यर्थेषु कर्त्तरि अनप्रत्ययः स्यात् । कम्पन इति कपि चलने । शब्दन इति शब्द विशब्दने चुरादिः । रवण इति रुशब्दे ।

अमृता०—३३८. असीति । असि उसि अने च प्रत्यये परे चक्षिङः ख्याञादेशो न भवति । रामधातुकत्वादेषु च परेषु ख्याञादेशे प्राप्ते प्रतिषेधः । असिप्रत्यये नृचक्षा इति इति दर्शितम् । चक्षादेरुसि रिति वक्ष्यते चक्षु रिति । अने विचक्षण इति । ननुचक्षिङ कथनार्थकत्वात् कथमकर्मकत्वे उदाह्रियत इतिशङ्कायामाह—कर्मानपेक्षणादिति । कर्मणः अविवक्षणादित्यर्थः । एवं शब्दार्थकानाञ्च ज्ञेयम् । पठितेति तृन् ।

अमृता०—३३९. विष्णिवति । विष्णुजनादिश्चासौ आत्मपदी चेति विष्णुजनाद्यात्मपदी, तस्माच्चोत्तरे अनः स्यात् ताच्छील्याद्यर्थेषु । वर्त्तन इति वृतु वर्त्तने । एवं बर्द्धन इत्यादि ।

---

बाल०—जू । एतदपि व्यक्तार्थं । जवन इति जु सौत्रो धातुः । चङ्क्रमण इति क्रम पादविक्षेपे इत्यस्माद्यङन्तादनः विष्णुजनात् सारामयस्य हरो रामधातुक इति सारामयस्य हरः । एवं दंद्रमणः सरणः वर्द्धनः गर्द्धनः ज्वलनः शोचनः लषणः पतनः पदन इति । द्रम गतौ यङन्तः, सृ गतौ गृधु अभिकाङ्क्षायां ज्वल चलने शुच शोके लष कान्तौ पतलृ गतौ पद गतौ ॥ ३३६ ॥

बाल०—क्रोध । क्रोधार्थेभ्यः भूषार्थेभ्यश्चोत्तरे तेष्वर्थेषु अनो भवति । क्रोधन इति क्रुध रोषे, कोपन इति कुप रोषे, भूषण इति भूष अलङ्कारे, मण्डन इति मडि भूषायां ॥ ३३७ ॥

बाल०—यराम । व्यक्तार्थमेतत् । आप्यायितेति ओ प्यायी वृद्धौ तृन्, क्ष्मायितेति क्ष्मायी विधुनने । सूदितेति सूद क्षरणे । सर्वत्र विष्णुजनाद्यात्मपदिनश्चान इत्यनेन अने प्राप्ते निषेधः । एवं दीपिता दीक्षितेति । दीपी दीप्तौ आत्मपदी, दीक्ष मौण्ड्येज्योपनयननियम-व्रतादेशेषु आत्मपदीं ॥ ३३८ ॥

वर्त्तनः। अकर्मकादित्येव, वसिता पीताम्बरम्।

**३४०. जु-चङ्क्रम्यदंद्रम्य-सृ-गृधि-ज्वल-शुच-लव-पत-पदश्चानः।**

जवनः चङ्क्रमणः।

**३४१, क्रोध-भूषार्थेभ्यश्चानः।**

क्रोधनः कोपनः भूषणः मण्डनः।

**३४२, यराम-सुद-दीप-दीक्षेभ्यो नानः।**

---

वसितेति—वस आच्छादने, सकर्मकत्वेन नानः, किन्तु तृन्। विष्णुजनादिति किम्—एधिता। आत्मपदिन इति किम्—भविता। चकारोऽनुक्त समुच्चयार्थः, तेन जुगुप्सनः मोमांसनः भीषण इत्यादीनि च सिध्यन्ति।

अमृता०—३४०. जु इति। ताच्छील्याद्यर्थेषु जु प्रभृतिभ्यो दशभ्य उत्तरे च अनः स्यात्। तत्र जु चंक्रम्य दंद्रम्य पत पदानां सकर्मकार्थं ग्रहणम्, अन्यथा चलनशब्दार्था-दित्यनेनैव सिध्येत। जवन इति जु सौत्रः गत्यर्थः। चङ्क्रमणइति—क्रमु पादविक्षेपे इत्यस्य यङन्तादनः, विष्णुजनात् सारामयस्य हरः। द्रमगतौ यङन्त.—दंद्रमणः, सृ सरणः, गृधु-गर्द्धनः, ज्वलनः शोचनः लषणः पतनः पदन इति।

अमृता०—३४१. क्रोधेति। ताच्छील्याद्यर्थेषु क्रोधार्थेभ्यो भूषार्थेभ्यश्चोत्तरे अनः स्यात् कर्त्तरि। क्रोधनः कोपन इति क्रुधकुप रोषे। एवं रोषणः। भूषण इति—भूष अलङ्कारे भ्वादि श्चुरादिश्च। मण्डन इति मडि भूषायाम् चुरादि।

अमृता०—३४२. यरामेति प्रतिषेधसूत्रम्। यरामेति यरामान्त इत्यर्थः। आप्या-यितेति ओप्यायी वृद्धौ, तृन्। क्ष्मायितेति क्ष्मायी विधूनने, एवं दीपिता। दीक्षितेति—

---

बाल०—लष। लष कान्तौ, हन हिंसागत्योः, पतॢ गतौ, पद गतौ, ष्ठा गति-निवृत्तौ, भू सत्तायां, वृषु सेचने, कमु कान्तौ, गमॢ गतौ, शॄ हिंसायां, इत्येतेभ्य उत्तरे तेष्वर्थेषु उकण् भवति। ण इत्। घातुक इति हस्य घत्वं नस्य तत्वं वृष्णीन्द्रः। एवं पातुकः पादुकः स्थायुकः वर्षुकः भावुकः कामुकः गामुकः शारुक इति॥ ३३९॥

बाल०—जल्ल। जल्प व्यक्तायां वाचि भिक्ष याच्ञायां कुट्ट सौत्रो धातुः लुठ स्तेये वृङ सम्भक्तौ इत्येतेभ्य उत्तरे तेष्वर्थेषु आकट् भवति। जल्पाक इति जलपाको वाचालः। एवं भिक्षाकः कुट्टाकः लुण्ठाकः वराक इति॥ ३४०॥

बाल०—स्पृहि। स्पृह्यादिभ्य उत्तरे तेष्वर्थेषु आलुर्भवति। स्पृहयालुरिति स्पृह ईप्सायां णेर्हर आय अन्त आलु आय्य इत्नु इत्येष्विति णेर्हरनिषेधः। पतयालुरिति पत गतौ। दयालुरिति दय दानगतिहिंसादानेषुच। द्रेति द्रा कुत्सायां। नकारो निपाता-दिति तरामस्येति शेषः। नराम इति वा पाठः। एवं शयालुरिति शीङ स्वप्ने, कृपालुरिति कृपादेः लृत्वं नेष्यते इति वक्ष्यमाणलक्षणेन कृपेः लृरामाभावः कुटादित्वाद्-गोविन्दाभावश्चेति॥ ३४१॥

आप्यायिता क्ष्मायिता सूदिता ।

**३४३, लष हन पत पद स्था–भू–वृष कम गम शभ्य उकण् ।**

लाषुकः धातुकः ।

**३४४, जल्पभिक्ष कुट्ट लुण्ठ वृङ् आकट् ।**

षाकण् पाणिनिः । जल्पाकः ।

**३४५; स्पृहि गृहि पति कृपि दयि निद्रा तन्द्रा श्रद्धा शोभ्य आलुः ।**

---

दीक्ष मण्डज्योपनयननियमव्रतादिषु भ्वादिः । सर्वत्र विष्णुजनाद्यात्मपदिनश्चान इतिप्राप्ते प्रतिषेधः । कथं मधुसूदनः रिपुसूदन इत्यादि ? नन्द्यादेरन उक्त एवताच्छील्यादौ ।

**अमृता०**—३४३. लषेति । ताच्छीलाद्यर्थेषु लषादिभ्यो दशभ्य उत्तरे उकण् प्रत्ययो भवति कर्त्तरि । ण इत् । लाषुक इति लष कान्तौ, उद्धवारामस्य वृष्णीन्द्रः । घातुक इति हनहिंसा गत्योः, हनोहस्य घः । उकणन्तस्य च योगे कर्मणि षष्ठीनिषेध उक्तः—उकस्यापि योगे न षष्ठी कर्मि विनेत्यनेन । तेन कंसं घातुको बासुदेवः । एवं पातुकः पादुकः स्थायुकः भावुकः वर्षुकः । गोपीनां कामुकः कृष्णः, व्रजं गामुकः, दैत्यं शारुको हरिः । उपेन्द्रयोगेऽपि दृश्यते—अपलाषुकः असाधु सङ्गः, प्रवर्षुक पयोधरः, आघातुक खड्ग इत्यादि ।

**अमृता०**—३४४. जल्पेति । तच्छीलाद्यर्थेषु जल्पादि पञ्चभ्य उत्तरे आकट् प्रत्ययः स्यात् । आकटः टइत् । जल्पाक इति—जल्प व्यक्तायां वाचि, वाचाल इत्यर्थः । एवं भिक्षाकः । कुट्ट सौत्रः कुट्टाकः, लुठि आलस्य प्रतिघातयोः—लुण्ठाकः । वृङ संभक्तौ वारक इति टित्त्वादीप्—वराकी, भिक्षाकीत्यादि ।

**अमृता०**—३४५. स्पृहीति । ताच्छील्याद्यर्थेषु स्पृहादिभ्यो नवभ्य उत्तरें कर्त्तरि आलुप्रत्ययः स्यात् । स्पृहयालुरिति—स्पृह ईप्सायाम्, णेर्न हर आमन्तेत्यादिना णेर्हरा

---

**बाल०**—सृ । सृ गतौ घसलृ अदने अद भक्षणे इत्येतेभ्य उत्तरे तेष्वर्थेषु क्मरो भवति । क इत् । सृमर इति कंसारित्वाद्गोविन्दाभावः । एवं घस्मर अद्मर इति ॥३४२॥

**बाल०**—भनूज । भनूजो आमर्दने भासृ दीप्तौ ञि मिदा स्नेहने आच्छादनेच इत्येतेभ्य उत्तरे तेष्वर्थेषु घुरो भवति । घ इत् । भनूजेः । व्यक्तार्थमेतत् । अनङ्गमान-भङ्गुरमिति कर्त्तरि घुरः । एवं भासुरो दीप्तिशीलः । मेदुर इति । भङ्गुरं काष्ठमिति कर्मकर्त्तरि घुरः ॥ ३४३ ॥

**बाल०**—वेत्ति । विद ज्ञाने, भिदिर विदारणे, छिदिर द्विधाकरणे इत्येतेभ्य उत्तरे तेष्वर्थेषु कुरो भवति । क इत् । विदुर इति कंसारित्वाद्गोविन्दाभावः ॥ ३४४ ॥

स्पृहयालुः, गृह ग्रहणे गृहयालुः, पतयालुः। एते त्रय श्चुरादावरामान्ताः। कृपालुः दयालुः। निपूर्वो द्रा—निद्रालुः, ततपूर्वो द्रा, नकारो निपातात् तन्द्रालुः। श्रत्पूर्वो धा—श्रद्धालुः।

**३४६. सृ घस्यदिभ्यः क्मरः।**

सृमरः।

**३४७. भनूज भासमिदिभ्यो घुरः, भनूजेः कर्मकर्त्तरि च।**

अनङ्गमानभङ्गुरम्, तथा भङ्गुरं काष्ठम्।

**३४८. वेत्तिभिदिच्छिदिभ्यः कुरः।**

विदुरः।

---

भावः। एवं पतयालुः। दयालुरिति—दय दान गतिहिंसादानेषु। निपूर्व द्रेति द्रा कुत्सायाम्। शेतेः शयालुः।

**अमृता०**—३४६. सृ इति। सृ घस अद इत्येतेभ्य उत्तरे तत्शीलाद्यर्थेषु कर्त्तरि क्मर प्रत्ययो भवेत्। कइत्। सृमर इति सृगतौ, कंसारित्वेन गोविन्दाभावः। एवंघसलृ अदने घस्मरः, अद भक्षणे अद्मरः।

**अमृता०**—३४७. भनूजेति। भनूजादिभ्यः त्रिभ्य उत्तरे तच्छीलाद्यर्थेषु कर्त्तरि घुर प्रत्ययः स्यात्, तथा भनूज धातोः कर्मकर्त्तरि वाच्ये च घुरः स्यात्। घ इत्। अनङ्गमानभङ्गुरमिति—भनूज आमर्दने, कर्त्तरि घुरः, अनङ्गस्य कामस्य मानं दर्पं भंक्तुं शीलमस्य, मानभञ्जने साधु वेत्यर्थः। तवर्गस्य चवर्ग—श्चवर्गयोग इति नस्य अरामः, चजोः कगौ इति जस्य गः, चवर्गस्य कवर्ग इति ञरामस्य ङरामः। भङ्गुरंकाष्ठमिति—स्वयमेव भङ्क्तुं शीलमस्येत्यर्थः। एवं भासुरो दीप्तिशीलः, मेदुरः स्नेहशीलइति।

**अमृता०**—३४८. वेत्तीति स्फुटम्। कइत्। विदुर इति कंसारित्वाद् गोविन्दाभावः।

---

**बाल०**—भिदि। व्यक्तार्थमेतत्। दोषान्धकारभिदुरमिति कर्त्तरि कुरः। एवं करीन्द्रदर्पच्छिदुरो मृगेन्द्र इति। भिदुरं काष्ठमिति कर्मकर्त्तरि कुरं। एवं छिदुरा रज्जुरिति ॥ ३४५ ॥

**बाल०**—इन। इन गतौ नश अदर्शने जि जये सृ गतौ इत्येतेभ्य उत्तरे तेष्वर्थेषु क्वरप् भवति। कपावितौ। इत्वर इति वामनात्तुक्। एवं नश्वरः जित्वरः सृत्वर इति। लक्ष्म्यामीविति नृसिंहनस्नाभ्यां क्वरपश्चेत्यनेनेति शेषः ॥ ३४६ ॥

**बाल०**—यङ। यङन्ताद्धातोरपि क्वचित् क्वरप् भवति। यायावर इति यङन्तात् यङन्तात् या प्रापणे इत्यस्मात् क्वरप् आरामहरो यरामस्य हरः ॥ ३४७ ॥

**बाल०**—गत्वरः। व्यक्तार्थमेतत्। गत्वर इति निपातात् क्वरप् हरिवेणुहरश्च ॥३४८

## ३४९. भिदिछिदिभ्यां कर्मकर्त्तरि च .

दोषान्धकारछिदुरं ज्ञानम् । करीन्द्रदर्पच्छिदुरो मृगेन्द्रः । तथा भिदुरं काष्ठम् । छिदुरा रज्जुः ।

## ३५०. इण-नश-जि-सर्त्तिभ्यः क्वरप् ।

इत्वरः । क्वरपो लक्ष्म्यामीप्, इत्वरी नश्वरी ।

## ३५१. यङन्तादपि क्वचित् ।

यवयो र्हरो वल इति यस्य हरः, यायावरः ।

## ३५२. गत्वरः साधुः ।

---

**अमृता०**—३४९. भिदीति स्पष्टम् । दोषान्धकारभिदुरमिति कर्त्तरि कुरः । दोष इह अज्ञानं, तद्रूपमन्धकारं भेत्तुं शीलमस्य ज्ञानस्येत्यर्थः । एवं छिदुरः । मृगेन्द्रः सिंहः । भिदुरं काष्ठमिति कर्मकर्त्तरि कुरः: एवंछिदुरा रज्जुरिति च, स्वयमेव छेदनशीलेत्यर्थः ।

**अमृता०**—३५०. इणेति । ताच्छील्याद्यर्थेषु इण् प्रभृति चतुर्भ्य उत्तरे कर्त्तरि क्वरप् प्रत्ययः स्यात् । कपावितौ । इत्वरइति—इणगतौ, वामनात्तुक् । एवं नश्वरः जित्वरः सृत्वर इति । नश्वर इत्यत्र नेड्वनृति त्रादाविति इड्भावः, अन्ये त्वनिट एव । लक्ष्म्यामीविति—नृसिंह नस्नाभ्यां क्वरपश्चेति वक्ष्यते ।

**अमृता०**—३५१. यङन्तादिति । क्वचिद् यङन्तादपि क्वरप् भवति । यायावर इति—या प्रापणे धातो र्यङन्तात् यायाय इत्यस्मात् क्वरप् ।

**अमृता०**—३५२. गत्वर इति स्पष्टम् । मरामहरो निपातफलम् वरामस्य प्रत्ययस्य वरामत्वेन वैष्णवत्वाभावात् हरिवेणुहराप्राप्ते तदर्थो निपातः ।

---

**बाल०**—जाम । जागर्त्तेरुत्तरे तेष्वर्थेषु ऊको भवति । जगरूको जागरणशीलः ।।३४९

**बाल०**—यज यङन्तेभ्यो यजादिभ्य उत्तरेतेष्वर्थेषु ऊको भवति । यायजूक इति यङन्तात् यायज्यधातोरूकः । जंजपूक इति हरिवेणवन्ताना मित्यादिना नरादरामतो विष्णुचक्रं । दन्दशूक इति दनृश दंशने यङ् द्विर्वचनं नरादरामतो विष्णुचक्रं उद्धवनरामहरः यङन्तादूकः सारामयस्य हरः । दन्दशूकः सर्पः । वावदूक इति वावदूकश्च वक्तरीत्यमरः ।। ३५० ।।

**बाल०**—नमि । नम प्रह्वत्वे शब्देच कपि चलने स्मिङ ईषद्धसने कमु कान्तौ हिसि हिंसायां दीपी दीप्तौ इत्येतेभ्य उत्तरे तेष्वर्थेषु रो भवति । नम्र इति । एवं कम्प्रः स्मेरः कम्रः हिंस्रः दीप्र इति । चन्द्रमन्द्रनीरसुरसूरगृध्रवज्रेन्द्रप्रभृतयो रप्रत्ययान्ता अपि संज्ञाशब्दत्वात् नोक्ता इति ज्ञेयं । मन्द्रो गभीरध्वनिः, नीरं जलं, सुरो देवता, सूरः सूर्यः, गृध्रः पक्षिभेदः ।। ३५१ ।।

**३५३. जागर्त्तेरूकः ।**

जागरूकः ।

**३५४. यज जप दन्श वदिभ्यो यङन्तेभ्य ऊकः ।**

विष्णुजनात् सारामयस्य हरो रामधातुके,—**यायजूकः, जंजपूकः, दन्दशूकः, वावदूकः ।**

**३५५. नमि कम्पि-स्मि-कमि हिंसिदीपेभ्यो रः ।**

**नम्रः ।**

---

**अमृता०**—३५३. जागर्त्तेरिति स्फुटम् । जागर्त्तेरूक इति गोविन्द,, जागरणशीलः इत्यर्थः ।

**अमृता०**—३५४. यजेति । ताच्छील्याद्यर्थेषु यङन्तेभ्यो यजादि चतुर्भ्य उत्तरे ऊकः प्रत्ययः स्यात् कर्त्तरि । यायजूक इति—यङन्त यायज्य धातोरूकः । जंजपूक इति—यङन्ताद् जंजप्य धातोरूकः, यङि हरिवेण्वन्तानामित्यादिना नरादरामतो विष्णुचक्रम् । एवं दन्दशूक इत्युद्धव नरामहरः । वावदूको वक्ता ।

**अमृता०**—३५५. नमीति । तच्छीलादिषु अर्थेषु नमि प्रभृतिभ्यः षडभ्य उत्तरे कर्त्तरि रप्रत्ययो भवति । नम्रइति णम प्रह्वत्वे, विनयीत्यर्थः, नेड् वन् तिन्नादाविति इड भावः । कपि चलने कम्प्रा शाखा, स्मिङ् ईषद् हसने—स्मेरं वदनम्, कमु कान्तौ कम्रा

---

**बाल०**—सन । सनन्तात् आङ्पूर्व शन्सु स्तुतौ भिक्ष याच्ञायां इत्येताभ्याश्चोत्तरे तेष्वर्थेषु उर्भवति । हरिर्भक्ति चिकीर्षुरिति अच्युताभेत्यादिना षष्ठीनिषेधः । एवं आशंसुर्भिक्षुरिति आशंसुराशंसितरीत्यमरः ॥ ३५२ ॥

**बाल०**—विन्दु । व्यक्तार्थमेतत् । वेदनशील इत्यर्थकथनं । विन्दुरिति विद ज्ञाने निपातात् उः नुम्च । विन्दुशब्दस्य वाच्यमाह ज्ञातेति । ज्ञातातु विदुरो विन्दुरित्यमरः । विदि अवयवे इत्यस्य विन्दुरिति भवतीति धातुपारायणादावुक्त । अतएव, पृषन्ति विन्दुपृषता इति जलावयववाचकोऽपि विन्दुशब्दः । इच्छुरिति इषु इच्छायां निपातात् उः इषेरिच्छ च ॥ ३५३ ॥

**बाल०**—धाञ् । डुधाञ् धारणपोषणयोः डु कृञ् करणे सृ गतौ जनी प्रादुर्भावे गमलृ गतौ नम प्रह्वत्वे शब्देच इत्येतेभ्य उत्तरे किर्भवति । केरधोक्षजाभत्वं पूर्वमुक्त अत आह अधोक्षजाभत्वाद्द्विर्वचनादीति । दधिरिति द्विर्वचने कृते नरस्य वामनः । नरस्य हरिगदा । आरामान्तमात्रादेव किर्भवतीति जुमरमतं, तेन तन्मते पापिरित्याद्यपि । चक्रिरिति नरऋरामस्यारामः कवर्गनरस्य चवर्गः । सस्रिरिति नरऋरामस्यारामः । जज्ञिरिति गम हन जन खन घसामित्यादिना उद्धवादर्शनं, तवर्गस्य चवर्गश्चवर्गयोगे इति नरामस्य ञरामः । जग्मिरिति उद्धवादर्शनं । नेमिरिति आदेशहीनेत्यादिना एवं नरादर्शनञ्च ॥ ३५४ ॥

## ३५६. सनन्ताशंस-भिक्षिभ्य उः ।

हरिभक्तिं चिकीर्षु ।

## ३५७. विन्दुरिच्छुश्च साधू ।

वेदनशीलो विन्दु र्ज्ञातित्यादि ।

## ३५८. धाञ् कृ-सृ-जनि गमि नमिभ्यः किः ।

अधोक्षजाभत्वाद् द्विर्वचनादि । दधिः चक्रिः सस्रिः जज्ञिः जग्मिः नेमिः ।

---

गोपी, हिसि हिंसायां—हिस्र रक्षः, दीप्रः कौस्तुभ इति । आदिपदेन इन्द्रः चन्द्रः मन्द्रः वज्रः गृध्रः सुरः नीरंप्रभृतयः संज्ञाशब्दत्वान्नोक्ताः ।

**अमृता०**—३५६. सनन्तेति । तच्छीलाद्यर्थेषु सनन्तात्, आङ् पूर्व शंसु इत्यस्मात् तथा भिक्षेश्चोत्तरे कर्त्तरि उप्रत्ययः स्यात् । चिकीर्षुरिति—डुकृञः सनन्तात् चिकीर्ष धातोः उः, अरामहरो रामधातुक इत्यरामहरः, अच्युताभेत्यादिना कर्मणि षष्ठीनिषेधात् हरिभक्ति मिति द्वितीया । एवं हरिभक्तिमाशंसुः, हरिप्रेमभिक्षुरिति ।

**अमृता०**—३५७. विन्द्विति । स्फुटम् । विद ज्ञाने इत्यस्य नुमागम स्तथा इष इच्छायामित्यस्य छत्वं निपात फलम् । शिवत्वाभावादिषु गमियमामिति न छत्वम् ।

**अमृता०**—३५८. धात्रिति । ताच्छील्याद्यर्थेषु धाञादि षड्भ्य उत्तरे कि प्रत्ययः स्यात् कर्त्तरि । कइत् । अधोक्षजाभत्वादिति—क्वसु कि काना अधोक्षजाभ संज्ञा इति प्रागुक्ते रत्रद्विर्वचनमित्यर्थः । ताच्छील्याद्यर्थवत्त्वादिदं तत्रानुक्त्वा तदधिकार प्रकरणे समवेशितम् । दधिरिति—द्विर्वचने कृते नरस्य वामनः, हरिगदा च, आरामहरः कंसारि सर्वेश्वरेत्यादिना आरामहरः । चक्रिः सस्रिरिति नरश्चरामस्यारामः । जग्मि जज्ञिरिति—गमहनजनेति उद्धवादर्शनम् । नेमिरिति—आदेशहीनेत्यादिना एत्वं नरादर्शनञ्च ।

---

**बाल०**—सासहि । यङन्तात् क्वौ विषये सासहिमुखाः साधव । मुखशब्द आद्यर्थः । सासहिरिति सह मर्षणे, फल कम्पने, पतलृ गतौ, इत्येतेभ्यो यङन्तेभ्यो निपातात् किः सारामयस्य हरः ॥ ३५५ ॥

**बाल०**—स्वपि । ञि ष्वप शये ञि तृषा पिपासायां ञि धृषा प्रागल्भ्ये इत्येतेभ्य उत्तरे तेष्वर्थेषु नजिङ् भवति । स्वप्नक् शयालुर्निद्रालुरित्यमरः । एवं तृष्णक् धृष्णगिति । लुब्धोऽभिलासुकन्तृष्णगित्यमरः । धृष्टे धृष्णग्वियातश्चेति चामरः । (विजात इति चवर्गमध्योऽपि इत्यमरटीका) ॥ ३५६ ॥

**बाल०**—शृ । शृ हिंसायां वदि अभिवादस्तुत्योः इत्येताभ्यामुत्तरे तेष्वर्थेषु आरुर्भवति । शरारुर्हिंसाशीलः । शरारुर्घातुको हिंस्र इत्यमरः । एवं वन्दारुर्वन्दनशीलः । वन्दारुरभिवादक इत्यमरः ॥ ३५७ ॥

**बाल०**—भीरुः । व्यक्तार्थमेतत् । भीरुरिति ञि भी भये रुक्प्रत्ययः । भीरुक इति निपानात् रुकङ् प्रत्ययः । भीलुक इति निपातात् लुकङ् प्रत्ययः । त्रय एव भयशीले

## ३५९. सासहि मुखा यङन्ताः कौ साधवः ।

सासहिः चाचलिः वावहिः पापतिः ।

## ३६०. स्वपि तृषि धृषिभ्यो नजिङ् ।

इङावितौ, स्वप्नक् ।

## ३६१. शृ-वन्दिभ्यामारुः ।

शरारुः ।

---

**अमृता०**—३५९. सासहीति । मुखशब्द आद्यर्थः । सासहि प्रभृतयो यङन्तात् कि प्रत्ययेन निपात्यन्ते । सासहिरिति सहमर्षणे, यङन्त सासह्य धातोः किः, सर्वत्र विष्णुजनात् साराम यस्य हरः । छान्दसत्वेऽपि एषां भाषायां प्रयोगो निपातनादिति साधव इत्युक्तम् ।

**अमृता०**—३६०. स्वपीति । तच्छीलाद्यर्थेषु स्वप्यादि त्रिभ्य उत्तरे नजिङ् प्रत्ययः स्यात् । स्वप्नगिति—ञिष्वप् शये, निद्रालुरित्यर्थः । एवं तृष्णक् लुब्धः, धृष्णग् धृष्ट इति । नेड् वन् ति त्रादाविति इडभावः ।

**अमृता०**—३६१. शृ इति । तच्छीलाद्यर्थेषु शृ वन्दिभ्यामारु प्रत्ययः स्यात् कर्त्तरि । शरारु हिंसाशीलः, वन्दारु वन्दनशीलः ।

---

वर्त्तन्ते । त्रस्नौ भीरु-भीरुक भीलुका इत्यमरः । भीरुः साधूरिति वा पाठः । स्वार्थिक-कप्रत्ययेन भीरुक इति, डलयोरलयोश्च प्राय एकत्वश्रवणादित्युक्तमतो भीलुक इति च सिध्यतीति ॥ ३५८ ॥

**बाल०**—स्थेश । ष्ठा गतिनिवृत्तौ ईश ऐश्वर्ये भासृ दीप्तौ इत्येतेभ्यः पिस कसिभ्याञ्चोत्तरे तेष्वर्थेषु वरो भवति । स्थावर इति स्थावरो जङ्गमेतर इत्यमरः । एवं भास्वर इति । पेस्वर इति गोविन्दः । विकस्वर इति । विकासीतु विकस्वर इत्यमरः ॥ ३५९ ॥

**बाल०**—भ्राज । भ्राजादिभ्य उत्तरे तेष्वर्थेषु क्विप् भवति । विभ्राडिति टु भ्राजृ दीप्तौ छशोराजेत्यादिना जरामस्य षत्वं षस्य डत्वं डस्य टत्वं । भागिति । भाज पृथक्करणे, भा इति भासृ दीप्तौ, ऊर्क् इति ऊर्ज बलप्राणयोर्धारणे रात् सस्यैवेति नियमात् न सत्सङ्क्रान्तहरः । धूरिति धुर्वी हिंसायां यवयोर्हरो बल इति वस्य हरे कृते इरुरन्तधातो-रित्यादिना उद्धवस्य त्रिविक्रमः । विद्युदिति द्युत दीप्तौ । पूरिति पृ पालनपूरणयोः ओष्ठ्योद्धवस्य ऋत उर् कंसाराविति उर् उद्धवस्य त्रिविक्रमः । सूरिति षूङ प्राणिगर्भ-विमोचने षू प्रेरणे वा । इत्यादय इत्यादिपदेन शिष्टप्रयोगानुसारेण अन्येऽपि क्विवन्ता ज्ञेयाः ॥ ३६० ॥

**बाल०**—अन्ये । उक्तेभ्योऽन्येभ्योऽपि क्विप् भवति । ग्रावस्तुदिति ष्टुञ् स्तुतौ । ग्रावा प्रस्तरः । भिदिति भिदिर् विदारणे । छिदिति छिदिर् द्विधाकरणे ॥ ३६१ ॥

## ३६२, भीरु भीरुक भीलुकाः साधवः ।

## ३६३, स्था-ईश-भास-पिस-कसिभ्यो वरः ।

स्थावरः ईश्वरः । पृसृ कस गतौ पेस्वरः विकस्वरः ।

## ३६४, भ्राजादिभ्यः क्विप् ।

विभ्राट्, भाक्, भाः, ऊर्क्, धूः, विद्युत्, पूः, सूरित्यादयः ।

---

**अमृता०**—३६२. भीरु इति । सुगमम् । भीरुरिति ञिभीभये, रुप्रत्ययेन साधुः । भीरुक इति रुक प्रत्ययेन तथा भीलुक इति लुक प्रत्ययेन निपात्येते । सर्व एव भय-शीलार्थाः । सर्वत्र गोविन्दाभावो निपातकार्यम् ।

**अमृता०**—३६३. स्थेति । ताच्छील्याद्यर्थेषु स्थादिपञ्चभ्य उत्तरे कर्त्तरि वर प्रत्ययो भवति । स्थावरः स्थितिशीलः, भास्वरो दीप्तिशीलः, पेस्वरो गतिशीलः, विकस्वरो विकासीत्यर्थः । नेड्वन्तित्रादौ इति इडभावः ।

**अमृता०**—३६४. भ्राजेति । ताच्छील्याद्यर्थेषु भ्राजादिभ्यो धातुभ्य उत्तरे कर्त्तरि क्विप् प्रत्ययः स्यात् । विभ्राडिति—विपूर्व टुभ्राजृ दीप्तौ, छशो राजित्यादिना जस्य षत्वं, षष्य डो विष्णुपदान्ते, हरिकमलम् । भागिति भाज पृथक् कर्मणि, भा इति भासृ दीप्तौ, ऊर्गिति ऊर्ज बलप्राणनयोः, धूरिति धुर्वी हिंसायाम्, यवयो र्हरो बल इति वलोपः, इरुरन्त धातोरित्युद्धवत्रिविक्रमः । विद्युदिति वि पूर्व द्युत दीप्तौ, पूरिति पृपालन-पूरणयोः, ओष्ठ्योद्धवस्येति ऋत उर्, उद्धवस्य त्रिविक्रमः । सूरिति षूङ् प्राणिगर्भ-विमोचने, कृष्ण प्रसू र्यशोदा ।

---

**बाल०**—प्रछा । क्विपि परे प्रछादीनां त्रिविक्रमो भवति सङ्कर्षणश्च न भवति । प्राडिति प्रछ ज्ञीप्सायां क्विप् त्रिविक्रमः । छशोराजेत्यादिना छस्य षत्वं उत्व उस्य टत्वं ग्रहिज्येत्यादिना सङ्कर्षणः स्यादिति निषेधविधानं । कटप्रूरिति प्रुङ् गतौ, जूरिति जु सौत्रो धातुः । श्रीरिति श्रिञ् सेवायां । स्त्रियामिति श्रीशब्दः स्त्रियां वर्त्तते इत्यर्थः ।। ३६२ ।।

**बाल०**—वि । विप्रसंभ्य उत्तरस्माद्भुव उत्तरे संज्ञायामुच् भवति । विभूरिति संसारस्य हरश्चितीति संसारहरः । आदिपदेन प्रभु शम्भुश्च । विभूः प्रभुश्च ईश्वरः, शम्भुः शिवः ।। ३६३ ।।

**बाल०**—दाप । दाप लवणे नीञ् प्रापणे शसु हिंसायां यु मिश्रणे युजिर योगे ष्टुञ स्तुतौ तुद व्यथने षि ञ बन्धने षिच क्षरणे टु ऐ ओ श्वि गतिवृद्धयोः मिह सेचने षतलृ गतौ इत्येतेभ्य उत्तरे करणे वाच्ये त्रो भवति । छदा । छदादिभ्यश्चोत्तरे करणे त्रो भवति । गोश्च गो पुरीषोत्सर्गे इत्येतस्माच्चोत्तरे त्रो भवति । अर्त्ति । करणे वाच्ये अर्त्यादेरुत्तरे इत्रो भवति । दाति लुनाति येनेति दात्रं । एवमन्यत्रच ज्ञेयं लबित्रमित्य-मरः । नेत्रं चक्षुः । आदिपदेन शस्त्रं योत्रं योक्त्रं तोस्त्रं श्वित्रं मेढ्रं पत्रमिति । शस्त्रपस्त्रं ।

**३६५. अन्येभ्योऽपि ।**

ग्रावस्तुत् भित् छित् ।

**३६६. प्रच्छादीनां त्रिविक्रमो नच सङ्कर्षणः ।**

प्राट्, कटप्रूः, जवति जूः, श्रयति श्रीः स्त्रियाम् ।

**३६७. वि-प्र-संभ्यो भुव उचसंज्ञायाम् ।**

विभुरित्यादि । समाप्त स्तच्छीलाद्यधिकारः ।

---

**अमृता०**—३६५. अन्येभ्य इति । उक्तेभ्यः अन्येभ्यश्चोत्तरे क्विप् स्यात् । ग्रावा प्रस्तरः, तं स्तौति ग्रावस्तुत्, वामनात् तुक् ।

**अमृता०**—३६६. प्रच्छेति । प्रच्छ प्रभृतीनां क्विपि परे त्रिविक्रमः स्यात्, सङ्कर्षणस्तु न भवति । ग्रहि ज्येत्यादिना प्राप्ते सङ्कर्षणे निषेधः । प्राडिति प्रच्छ ज्ञीप्सायां क्विप्, त्रिविक्रमः, छशोराजिति षत्वं, षस्य डः, हरिकमलश्च । कटप्रूरिति—कटं प्रवते वयत इत्यर्थः । जुगतौ सौत्रः जूरिति । श्रीरिति—श्रिञ् सेवायाम् । स्त्रियामिति श्रीशब्दो लक्ष्म्यामेव वर्त्तते । प्रतिभूरित्यादि च ।

**अमृता०**—३६७. विप्रेति । तच्छीलाद्यर्थेषु विपूर्वात् प्रपूर्वात् संपूर्वाच्च भूधातोरुत्तरे असंज्ञाया उच् प्रत्ययः स्यात् कर्त्तरि । चइत् संसारहरार्थः । विभु र्व्यापकः, प्रभुः स्वामी,

---

योत्रं योक्त्रञ्च लाङ्गलदण्डबन्धनरज्जुः । आबन्धो योत्रं योक्त्रमित्यमरः । स्तोत्रं स्तवः । तोत्रं प्राजनदण्डः । प्राजनं तोदनं तोत्रमित्यमरः । सेत्रं बन्धनद्रव्यं, सेक्त्रं सेकपात्रं, श्वित्रं कुष्ठं, कुष्ठं श्वित्रे इत्यमरः । श्वित्रमित्यत्र बाहुल्याद्गोविन्दाभावः इति ज्ञेयं । मेढ्रः शेफः मेढ्रो मेहनसेफसी इत्यमरः । पत्रं बाहनं, पक्षपर्णञ्च । छत्रमिति छत्र अपवारणे छत्रमातपत्रं । दंष्ट्रमिति दन्श दंशने । नद्ध्रमिति नह बन्धने हस्य धः । शास्त्रमिति शासु अनुशिष्टौ । वस्त्रमिति वस आच्छादने । वक्त्र-श्रोत्र-पात्र-गात्र-प्रभृतयोऽपि त्रप्रत्ययान्ता ज्ञेयाः । गोत्रमिति । गोत्रन्तु नाम्नि चेति नानार्थवर्गः । अरित्रमिति ऋ गतौ प्रापणे च ह्वादि ऋ गतौ ह्वादिर्वा । अरित्रं केनिपातकमित्यमरः । लवित्रमिति लुञ छेदने लवित्रं दात्रं धुवित्रमिति कुटादेरनृसिंहो निर्गुण इति निर्गुणत्वं ऊरामस्य उव् धूयते येनेत्यर्थः । आदिपदेन खनित्रं सहित्रं चरित्रमिति । खनु अवदारणे सह मर्षणे 'चर गतौ । खनित्रमवदारणमित्यमरः । पवित्रवहित्रादयोऽपि इत्रप्रत्ययान्ता ज्ञेयाः ।। ३६४ ।।

**बाल०**—दंष्ट्र । व्यक्तार्थमेतत् । दंष्ट्रा दन्तः । दन्तस्य वाच्यत्वेऽपि स्त्रीत्वं निपातस्यैव फलं, नद्ध्री चर्मरज्जुः, ईप्प्रत्ययो निपातफलं ।। ३६५ ।।

**बाल०**—उणा । बहुलं यथा स्यात्तथा धातोरुत्तरे उणादयो भवन्ति । कारुः शिल्पी कर्त्ता च । साधुरुत्तमर्णो धर्मशीलश्च । वायुपायुराहुबन्धुप्रभृतयोऽपि उण् प्रत्ययान्ता ज्ञेयाः । वायुर्वातः । वायुरपानं । राहुर्ग्रहविशेषः । बन्धुर्ज्ञातिः, सुहृच्च । आदिपदं विवृणोति । (सित्रा इत्यादिना) ।। ३६६ ।।

**३६८. दाप् नी शस यु युजिर् स्तु स्तुद सिञ् सिच श्वि मिह पत स्त्रः करणे, छदादिभ्यश्च, गोश्च नाम्नि, अर्त्ति लू घूसू खन सह चर इत्रः ।**

**दात्रं नेत्रमित्यादि । तथा छत्रं दंष्ट्रं नद्ध्रं शास्त्रं वस्त्रं गोत्रम् । अरित्रं लवित्रं, धू विधूनने कुटादि धुवित्रम्, सूप्रेरशे सवित्रमित्यादि ।**

---

सम्भु र्जनिता । असंज्ञायामिति किम्—विभू र्नाम कश्चित् । मितद्रुः शतद्रुः शंभुरित्यादयश्च संज्ञायामपि उजन्तो वक्तव्याः । मितं द्रवति मितद्रुः कश्चित्, शतद्रु र्नदविशेषः, शम्भुः शिवः । अन्तर्भाविता ण्यर्था एते । शंमङ्गलं भावयति, मङ्गलस्वरूपो भवतीति वा शम्भुः ।

**अमृता०**—३६८. दापिति । दाप् लवणे प्रभृति द्वादशेभ्य उत्तरे करणे वाच्ये त्रप्रत्ययः स्यात्, छदादिभ्यःश्चोत्तरे करणे त्रः स्यात्, नाम्नि अभिधेये गु पुरीषोत्सर्गे इत्यस्माच्च त्र प्रत्ययो भवति । अर्ति प्रभृति सप्तभ्यस्तु करणे इत्र प्रत्ययो भवति । सूत्रे चर इति सर्वेऽपि रामकृष्णा विभाषयैकवदति पञ्चम्येकत्वम् । दाति लुनाति येन तद् दात्रम्, नीञ् प्रापणे नेत्रं चक्षुः, शसु हिंसायां शस्त्रम्, युमिश्रणामिश्रणयोः योत्रम्, युजिर् योगे योक्त्रम्, अनयो र्लाङ्गलदण्डबन्धन रज्जुरर्थः । ष्टुञ् स्तुतौ स्तोत्रंस्तवः, तुद व्यथने तोत्रं प्रजन दण्डः, षिञ् बन्धने सेत्रम्, षिच् क्षरणे सेक्त्रं सेक पात्रम्, टुओश्वि गति वृद्धयोः श्वित्रं कुष्ठरोगः, निपाताद् गोविन्दाभावः । मिह सेचने मेढ़ः शिश्नः, पित्लृ गतौ पत्रम् वाहनः पर्णं पक्षश्च । छदादिषु पञ्च प्रोक्ताः । दंष्ट्रमिति दन्श दंशने, नद्ध्रमिति नह बन्धने, हस्य ढः नहो ध इति हस्य धः, शास्त्रमिति शासु अनुशिष्टौ । वक्त्र श्रोत्र मात्र पात्र गात्र चित्र कलत्र प्रभृतयश्च छदादिषु त्रप्रत्ययान्ता ज्ञेयाः । अरित्रमिति भ्वादे र्जुहोत्यादेश्च ग्रहणम् । धुवित्रमिति—कुटादित्वान्नागोविन्दः किन्तु धातोश्चतुःसनस्येयुवौ इत्युव् । आदिना खनित्रं सहित्रं चरित्रमिति ।

---

**बाल०**—सिञा । सिञादेरुत्तरे तुर्भवति । सेतुरिति सिञ बन्धने । सेतुरालिः । सेतुरालौ स्त्रियां पुमानित्यमरः । तन्तु-धातु-ऋतु-जन्तु हेतुप्रभृतयोऽपि तुप्रत्ययान्ता ज्ञेयाः । तन्तुः सूत्रं धातुर्गैरिकादि शब्दयोनिरिन्द्रियं रक्तादिश्च । ऋतुर्वसन्तादिः । जन्तुः प्राणी । हेतुः कारणं ॥ ३६७ ॥

**बाल०**—अवि । अव पालने तॄ प्लवनतरणयोः स्तृङ आच्छादने तन्त्रि विस्तारणे इत्येतेभ्य उत्तरे लक्ष्म्यामीर्भवति । अवीरिति अवीरजस्वला । आदिपदेन तरी स्तरीः तन्द्रीरिति । तरीरग्निः । स्तरी कवचो धूमः शय्या मेघश्च । तन्द्रीर्वीणादिः गुणो नाडी च । तन्द्रीप्रभृतयोऽपि ईप्रत्ययान्ता ज्ञेयाः । तन्त्र सौत्रो धातुः । तन्द्रीर्निद्रा आलस्यश्च ॥ ३६८ ॥

**३६९. दंष्ट्रा नद्ध्री च साधू ।**

**३७०. उणादयो बहुलम् ।**

करोतीति कारुः, साध्नोतीति साधुः ।

**३७१. सिञादे स्तुः ।**

सेतुः ।

**३७२. अवि-तृ-स्तृ-तन्त्रिभ्य ईर्लक्ष्म्याम् ।**

अवीरित्यादि ।

---

**अमृता०**—३६९. दंष्ट्रेति । दंष्ट्रा दन्तः, स्त्रीत्वंनिपातफलम् । नद्ध्री चर्मरज्जुः, निपातादीप् ।

**अमृता०**—३७०. उणादय इति । बहुलं यथा स्यात्तथा धातो रुत्तरे उणादयः प्रत्यया भवन्ति । पूर्वतः कर्त्तरीत्यनुवृत्तेः प्रायश उणादयः कर्त्तरि हि स्युः, कर्मादौ च क्वचित् सिद्धचर्थं बहुलग्रहणम् । किञ्च उणादि सिद्धानां संज्ञाशब्दानां यथाकथञ्चिद् व्युत्पदनज्ञापनाय तथा उणादि प्रत्ययानां बहुत्वसूचनाय च बहुलशब्दोपादानं ज्ञेयम् । कारुरिति—णित्त्वाद् वृष्णीन्द्रः, शिल्पी कर्त्ता चार्थः । साधुः धर्मशीलः उत्तमर्णश्च । एवं वाने र्वायुः, पातेः पायुः, रह त्यागे राहु विधुन्तुदः, स्वदतेः स्वादुः, चरतेः चारुः, अश्नुतेः आशु रित्याद्युन्नेयम् ।

**अमृता०**—३७१. सिञादे रिति स्पष्टम् । सेतुरिति सिञ्बन्धने, सेतुरालिः । एवं हि अर्त्तेः ऋतु र्वसन्तादिः, हिनोते हेतुः कारणम्, दधाते धातुर्गैरिकादिः, तनोते स्तन्तुः सूत्रम्, जने र्जन्तुः प्राणीत्यादयश्च तुप्रत्ययान्ता ज्ञेयाः ।

---

**बाल०**—लक्षे । लक्ष दर्शनाङ्कयोरित्यस्मादुत्तरे लक्ष्यामीर्भवति मुट् च । लक्ष्मीः श्रीः ॥ ३६९ ॥

**बाल०**—स्त्याय । स्त्यै शब्दसंघातयोरित्यस्य ईवन्तः स्त्री साधुरिति शेषः । स्त्रीति निपातादीप् स्त्यायः स्त्रच ईवन्तात् सोर्हरः ॥ ३७० ॥

**बाल०**—मण्डि । मडि भूषायां चुरादिः, जनी प्रादुर्भावे, टु नदि समृद्धौ, एतेभ्य उत्तरे अन्तो भवति । मण्डयन्त इति णेर्न हरः । आम् अन्त आलू आय्य इत्नु इत्येष्विति णेर्हरनिषेधः । मण्डयन्तो नटोऽलङ्कारश्च । एवं जनयन्त इति ॥ ३७१ ॥

**बाल०**—स्पृह्या । स्पृह्यादेरुत्तरे आय्यो भवति । स्पृहयाय्य इति स्पृह ईप्सायां चुरादिररामान्तः णेर्न हर इत्यादिना णेर्हरनिषेधः । स्पृहयाय्यः स्पृहयालुः । गृहयाय्य इति गृह ग्रहणे चुरादिररामान्तः । गृहयाय्यो गृहस्थः । जयाय्य इति जि जये ॥ ३७२ ॥

## ३७३. लक्षे मुंट् च।

लक्ष्मीः।

## ३७४. स्त्यायते रीवन्ता स्त्री।

## ३७५. मण्डि-जनि-नन्दे रन्तः।

मण्डयन्तः।

## ३७६. स्पृहादे राय्यः।

स्पृहयाय्यः गृहयाय्यः।

---

**अमृता०**—३७२. अवीति। अवरक्षणे, तृप्लवनादिषु, स्तृञ् आच्छादने, तन्त्रि कुटुम्ब भरणे इत्येतेभ्य उत्तरे लक्ष्म्याम् ईप्रत्ययो भवति। अवीः ऋतु मती नारी। आदि पदेन तरी नौं, स्तरीः कवचो धूमो मेघश्च, तन्त्रीर्वीनागुणो नाडी च। तन्द्रीति पाठे तन्द्र सौत्रधातुः—तन्द्रीः अल्पनिद्रा आलस्यश्च।

**अमृता०**—३७३. लक्षेरिति। लक्ष दर्शनाकाङ्क्षयोरित्यस्मादुत्तरे लक्ष्म्यां ईप्रत्ययो मुडागमश्च स्यात्। लक्ष्मीः रमा सौन्दर्यञ्च। अत्रमपरत्वेऽपि नेट्, टिदागमस्य मुट ईप्रत्ययसम्बन्धित्वात्।

**अमृता०**—३७४. स्त्यायतेरिति। ष्टचै शब्द संघातयो रित्यस्य ईवन्तेन लक्ष्म्यां स्त्री इति साधुः स्यात्। स्त्यायः स्त्रभावो निपातफलम्। ईवन्तात् सो हरः।

**अमृता०**—३७५. मण्डीति। मण्डि जनि नन्दिभ्य उत्तरे अन्तप्रत्ययः स्यात्कर्त्तरि। मण्डयन्त इति मडिभूषायां चुरादिः, णेर्न हर आम् अन्तेत्यादिना णेर्हराभावः। मण्डयन्तो नटो भूषणं वा। एवं जनी प्रादुर्भावे ण्यन्तः जनयन्तः, टु नदि समृद्धौ ण्यन्तः नन्दयन्तः।

**अमृता०**—३७६. स्पृहादेरिति। स्पृहादे रुत्तरे आय्य प्रत्ययो भवति कर्त्तरि।

---

**बाल०**—स्तना। स्तनादेरुत्तरे इत्नुर्भवति। स्तनयित्नुरिति स्तन शब्दे चुरादिर-रामान्तः णेर्हरनिषेधः। स्तनयित्नुर्मेघः। दूषयित्नुरिति दुष वैकृत्य णिः दुषो दूष् ण्यन्तादित्नुः। गदयित्नुरिति गद शब्दे चुरादिररामान्तः। गदयिन्तुर्वसन्तो वाग्मी कामुकश्च। मदयित्नुरित्ति मदी हर्षे णिः वृष्णीन्द्रः, घटादित्वाद्वामनः ण्यन्तादित्नुः मदयित्नुर्मदिरा। एत इति एते स्तनादयः। इत्यादीत्यादिपदेन हर्षयित्नु रित्यादि। हर्षयित्नुः सुवर्णं पोषयित्नुः कोकिलो भर्त्ता च॥ ३७३॥

**बाल०**—चक्षा। चक्षादेरुत्तरे उसिर्भवति। इराम इत्। चक्षुरिति चक्षिङ् व्यक्तायां वाचि असि उसि अने च चक्षिङः ख्याञ् नेति वाच्यमिति ख्याञादेशनिषेधः। चक्षुर्लोचनं। आदिपदेन डु वप वपुः शरीरं। यज यजुर्वेदविशेषः। धन धनुश्चापो राद्भिदश्च। जन जनुर्जन्मेत्यादि॥ ३७४॥

**बाल०**—गम। गम उत्तरे ओच् भवति, च इत्। गौरिति। गौः पशुर्भूम्यादिश्च उणादय इत्यादिपदेन यथेष्टसिद्धि अन्येऽपि प्रत्यया ज्ञेयाः॥ ३७५॥

**३७७. स्तन्यादे रित्नुः ।**

**स्तनयित्नुः दूषयित्नुः गदयित्नुः मदयित्नुः । एते ण्यन्ताः ।**

**३७८. चक्षादे रुसिः ।**

**चक्षुः ।**

**३७९. गम ओच् ।**

**संसार हरः, गौः इत्यादिका उणादयः ।**

---

स्पृहयाय्य इति—स्पृह ईप्सायां चुराद्यन्तः, णेर्नहर इति णेर्हराभावः। एवं गृहयाय्य इति गृहग्रहणे चुराद्यदन्तः। गृहयाय्यो गृहस्थः। जिजये जयाय्यः।

**अमृता०**—३७७. स्तन्यादेरिति। स्तन्यादे रुत्तरे कर्त्तरि इत्नु प्रत्ययः स्यात्। स्तनयित्नुरिति—स्तन शब्दे चुराद्यदन्तः, प्राग्वत् णेर्हराभावः। स्तनयित्नुर्मेघः। दूषयित्नुरिति—दुष वैकृत्ये णिः, दुषो दूषादेशः। गदयित्नुरिति—गदशब्दे चुराद्यदन्तः, वाग्मी कन्दर्पश्चार्थः। मदयित्नुरिति—मदी हर्षे ण्यन्तः, घटादित्वाद्वामनः, मदिरेत्यर्थः। एवंहर्षयित्नु सुवर्णम्, पोषयित्नु भर्त्ता पिकश्च।

**अमृता०**—३७८. चक्षादेरिति। चक्षादेरुत्तरे कर्त्तरि उसि प्रत्ययः स्यात्, इराम-इत्। चक्षुरिति—चक्षिङ् व्यक्तायां वाचि, असि उसि अने च चक्षिङः ख्याञ् नेति न ख्याञादेशः। आदिपदेन—टु वप वपुः देहः, धन धनु श्चापः राशिभेदश्च, जनी जनु र्जन्म, यज यजु र्वेदविशेष इत्याद्या ज्ञेयाः।

**अमृता०**—३७९. गम इति। गमलृ धातो रुत्तरे ओच् प्रत्ययः स्यात् कर्त्तरि। च इत्। दिग् दृष्टि दीधिति स्वर्ग बज्र वाग् वाण वारिषु। भूमौ पाशे च गो शब्दो विद्वद्-भिर्दशसु स्मृतः। इति हलायुधः। इत्यादिका उणादय इति—उणादिसिद्धाः संज्ञाशब्दाः कोषादितो ज्ञातव्याः, अन्यथा ग्रन्थबाहुल्यं स्यादिति। दिङ्मात्रं दर्शितमित्याशयः।

---

**बाल०**—घण्। सुगमं॥ ३७६॥

**बाल०**—घण्ण। वृत्तिमाह घण्णिति। एते पुंस्येवेति वर्त्तन्ते इति शेषः। अलादयो वक्ष्यन्ते॥ ३७७॥

**बाल०**—पद। पद गतौ दिवादिरात्मपदी रुजो भङ्गे विश प्रवेशने तुदादिः एतेभ्य उत्तरे कर्त्तरि वाच्ये घण् स्यात्। पाद इति पादश्चरणः। अत्र णक तृनौ स्यातां तद्बाधनार्थं घण्विधानं। रोगो व्याधिः। एवं विशतीति वेशः इतीशोद्धवत्वात् कः स्यात्तद्बाधनार्थं घण्विधानं॥ ३७८॥

**बाल०**—स्पर्श। उपतप्तरि वाच्ये स्पर्शः साधुः। स्पर्श इति स्पृश संस्पर्शने तुदादिः निपातात् के प्राप्ते कर्त्तरि घण्। स्पर्शः स्प्रष्टोपतप्तरीत्यमरः। सारः। स्थिरे वाच्ये सारः साधु। स्थिरः स्थिरांशः। सार इति सृ गतौ निपातात् णक तृनोः प्राप्तयोः कर्त्तरि घण्। सारो बले स्थिरांशे च न्याय्ये क्लीवं वरे त्रिष्विति नानार्थवर्गः। व्याधौ वाच्ये

## ३८०. घण् ।

विभुरयम् । घञ् पाणिनिः ।

## ३८१. घण्णलथुक्कयः पुंसि ।

घण् अल् अथु कि एते पुंस्येव स्युः ।

## ३८२. पद रुज विशः ।

पद्यते पादः, रुजति रोगः, विशति वेशः ।

---

**अमृता०**—३८०. घणिति । अधिकारसूत्रम् । घणावितौ, अरामशेषः ।

**अमृता०**—३८१. घण्णलिति । घण् अल्अथु किप्रत्ययाः पुंस्येव भवन्ति । भावक्तु ब्रह्मणीति प्राप्ते विशेषेण पुंसिविधानमेतत् ।

**अमृता०**—३८२. पदेति । कर्त्तरीत्यनुवर्त्तते । पद गतौ, रुजो भङ्गे, विशप्रवेशने इत्येभ्य उत्तरे कर्त्तरि वाच्ये घण् प्रत्ययः स्यात् । पाद इति णित्त्वादुद्धवस्य वृष्णीन्द्रः । रोग इति—चजोः कगाविति जस्य गः । अत्र वेश इत्यत्र च ईशोद्धवेत्यादिना प्राप्तस्य कप्रत्ययस्यापवादोऽयम् ।

---

अतिसारः साधुः । व्याधिर्व्याधिविशेषः । अतिसार इति निपातात् कर्त्तरि घण् । विसारः । मत्स्ये वाच्ये विसारः साधुः । विसार इति निपातात कर्त्तरि यण् । प्रासारः । बले वाच्ये प्रासारः साधुः । प्रासार इति निपातात् कर्त्तरि घण् । दारे । भार्यायां वाच्यायां ण्यन्तस्य दृधातोर्दाराः साधवः । दारा इति निपातात् कर्त्तरि घण् । दारशब्दो भार्यावाचकः पुंलिङ्गो नित्य-बहुलवचनान्तः । भार्या जायथ पुं भूम्नि दाराः स्यादित्यमरः । जारे । उपपतौ वाच्ये ण्यन्तस्य जृधातोर्जारः साधुः । निपातात् कर्त्तरि घण् जारस्तूपपतिः समावित्यमरः । साधव इति, एते स्पर्शादयः साधव इत्यर्थः ।। ३७९ ।।

**बाल०**—भावे । भावे कर्त्तृवर्जित-कारकेच वाच्ये संज्ञायां गम्यमानायां सत्यां प्रासादेरुत्तरे घण् स्यात् । प्रभू चेति । चशब्दादनयोर्विधिसूत्रत्वमधिकारसूत्रत्वमपि ज्ञेयं । प्रास इति असु क्षेपणे कर्मणि घण् । प्रासोऽस्त्रविशेषः । प्रासस्तु कुन्त इत्यमरः । इत्यादीत्यादिपदेन आनायवेदापमार्गादयो ज्ञेयाः । आनायो जालं । वेदापमार्गौ प्रसिद्धौ । पाक इति डु पच ष पाके इत्यस्मात् भावे घण् । चजोः कगावित्यादिना चस्य कत्वं पचनमित्यर्थः । त्याग इति त्यज निशानादौ । रोग इति रुज भङ्गे इत्यत्रापि भावे घण् जस्य गत्वं । भावस्य परत्रोदाहरणं न दोषाय सूत्रद्वयस्याधिकारत्वात् ।। ३८० ।।

**बाल०**—क्वचि । भावे कर्त्तृवर्जिते कारकेच वाच्ये क्वचिदसंज्ञायामपि धातोरुत्तरे घण् भवति । दाश्यत इत्यर्थकथनं । दाश इति सम्प्रदाने घण् दानपात्रमित्यर्थः । अतो नास्य संज्ञाशब्दत्वं । असंज्ञायां घण् भवतीति यदुक्तं तत्स्वेच्छामूलकं न, किन्तु शिष्ट-प्रयोगदर्शनमूलकमेवेत्याह गुणज्ञ इति । हि यतः इति दृश्यते । अथेति । वक्षमाणान् बाधकानि लक्षणानीति उच्यन्ते इति शेषः ।। ३८१ ।।

## ३८३. स्पर्श उपतप्तरि; सारः स्थिरे बले च, अतिसारो व्याधौ, विसारो मत्स्ये, प्रसारो बले, दारे दारा भार्यायाम्, जारे जार उपपतौ साधवः ।

**अमृता०**—३८३. स्पर्श इति । उपतप्तरि वाच्ये घणासह स्पर्श इति साधुः स्यात् । स्पृशतेरीशोद्धवेति कप्रत्यये प्राप्ते अर्थविशेषे निपातः, उपतापवत् पदार्थ इत्यर्थः । अन्यत्र पचादेरत् स्पर्शः, प्रणिधिश्चर इत्यर्थः । सृधातोर्घणा सार इति निपात्यते स्थिरांशे बले चाभिधेये । अतिसार इति तस्यैव धातो र्घणा व्याधौ अर्थे निपात्यते । अत्रान्तर्भावित ण्यर्थः, अतिशयेन रुधिरादिकं सारयतीति भेदप्रधानपीडा अतिसारः । तस्यैव धातोः मत्स्येऽर्थे विसारो निपात्यते, प्रासार इति तस्यैव बलार्थे । उपेन्द्रस्य त्रिविक्रमो घणि बहुलमिति वक्ष्यते । दारा इति-भार्यायामर्थे ण्यन्त दॄ धातो र्घणा दारा इति साधुः स्यात् । दारा स्तु भार्यायां नित्यं-बहुत्वं पुंसि च । जारेरिति—उपपतौ वाच्ये ण्यन्त जॄधातो र्घणि जार इति साधुः स्यात् । जारस्तूपपतिः समावित्यमरः । सर्वत्र निपातादर्थविशेषे घण् ।

**बाल०**—संख्या । संख्या च परिमाणञ्च तयोराख्यायां सत्यां धातोरुत्तरे अलपवादः घण् भवति । आख्या उक्तिः । एकस्तुण्डुलनिश्चाय इति निपूर्वाच्चिञः संख्यायां घण् । अत्र ईशादिति वक्ष्यमाणसूत्रेण अल् स्यात् । द्वौ सूर्पनिष्पावाविति निर्पूर्वात् पूञो घण् । अत्र यद्यपि संख्याख्या परिमाणाख्या च वर्त्तते तथापि परिमाणाख्यायां पृथगुदाहरणादर्शनात् परिमाणाख्योदाहरणमिदमिति ज्ञेयं । सूर्पः परिमाणविशेषः । अत्र सूर्पशब्देन तत्परिमितं वस्तूच्यते । निष्पावः पवने पव इत्यमरः । निरः पुव इति सूत्रं वक्ष्यते । अतो निर्पूर्वस्य पूधातोस्तेनैव घण् सिध्यतीत्युदाहरणान्तरमत्रोचितं भवतीति ज्ञेयं । किन्तु वक्ष्यमाणसूत्रेण सामान्यरूपे सिद्धेऽपि परिमाणाख्यात्वेन विशेषप्रतिपत्त्यर्थं तदेवात्र दर्शितमिति । किन्त्विति । इति च दृश्यत इति बाहुल्यादिति शेषः । प्रत्यया इति प्रतिपूर्वादिनोऽल् । उपद्रवा इति उपपूर्वात् द्रु धातोरल् । निश्चय इति निर्पूर्वाच्चिञोऽल् । अष्टादश प्रत्यया इत्यादिषु संख्यायाः सद्भावात् घण् भवितुमर्हति अत उक्त इति च दृश्यत इति । संख्येति बहुषु पुस्तकेषु न दृश्यते, परिमाणाख्यायाञ्चेत्येव सूत्रं दृश्यते, किन्तु तथा सति एकस्तण्डुलनिश्चाय इति किन्त्वित्यादिकञ्च असङ्गतं स्यात् । संख्यापरिमाणयोः सर्वधातुभ्य इति क्रमदीश्वरसूत्रं । एकं निश्चयमागतमिति भट्टिः । किन्तु परिमाणादसंख्याकालविस्ताचितकम्बल्यादिति तद्धितप्रकरणोक्तसूत्रे संख्यावर्जनात् संख्याशब्दानां परिमाणत्वमप्यस्तीति लक्ष्यते । अतः परिमाणाख्यायाञ्चेति सूत्रेऽपि सङ्गतिर्भवतीत्यपि ज्ञेयं ।। ३८२ ।।

**बाल०**—इङ । अकर्त्तरि वाच्ये इङ अध्ययन इत्यस्माच्चोत्तरे घण् भवति । अकर्त्तरीति कर्त्तृभिन्न इत्यर्थः । अध्याय इति अधीयतेऽस्मिन्नित्यधिकरणे अधीयतेऽयमिति कर्मणि वा घण् । उपेत्यस्यार्थं विवृणोति समीप इति ।। ३८३ ।।

## ३८४. भावे, प्रासादेः कर्त्तृ वर्जिते च कारके संज्ञायाम् ।

प्रभू चेमौ यथास्वम्। पाकः त्यागः रोगः। तथा प्रास्यते प्रास इत्यादि। प्रासः शस्त्र विशेषः ।

## ३८५. क्वचिदसंज्ञायामपि ।

दाशृ दाने, दाश्यते यस्मै स दाशः "गुणज्ञो ब्राह्मणो दाशः" इति हि दृश्यते ।

अथ वक्ष्यमाणान् बाधकानि लक्षणानि ।

---

**अमृता०**—३८४. भाव इति। भावे वाच्ये तथा संज्ञायां गम्यमानायां कर्त्तृवर्जिते कारके च धातोरुत्तरे घण् प्रत्ययः स्यात्। प्रभू चेति—चकारादनयोर्विधिसूत्रत्वञ्च। पाक इति डुपचष् पाके भावे घण्। एवं त्यजतेः त्यागः। भोगइति—भुज अभ्यवहार पालनयोः, जस्य गः। घणभिहितो भावो धातोः सिद्धतावस्थाप्रकटनात् द्रव्यवत् प्रकाशत इति बोद्धव्यम्। प्रास इति कर्मणि घण्। प्रासस्तुकुन्त इत्यमरः। इत्यादि पदेन, करणे—पद्यतेऽनेनेति पादः, दीर्यते पितृमातुषु स्नेह एभिरिति दाराः पत्नी, आह्रियते रसः अस्मादिति आहारः, अपादाने, प्रसीदन्ति मनांसि अस्मिन् पासादः, अधिकरणे, इत्यादि वेदितव्यम्। कर्त्तृवर्जिते किम्—कर्त्तरि संज्ञायां मा भूत्—मिषत्यसौ मेषः, नदत्यसौ नदः शोणः।

संज्ञायान्तु न सार्वत्रिक इत्याह—

**अमृता०**—३८५. क्वचिदिति। कर्त्तृवर्जिते कारके क्वचिदसंज्ञायामपि घण् भवति। दाश इति सम्प्रदाने घण्, दान योग्यपात्रमित्यर्थः। तच्च शिष्ट प्रयोगेण द्रढयति—गुणज्ञ इति। एवं दायो दत्तः, लाभो लब्धो भवतेत्यादि प्रयोगाश्च प्रसिद्धाः।

अथेति—वक्ष्यमाणो योऽल्प्रत्ययस्तस्य बाधिकानि लक्षणानि अपवाद सूत्राणि कथ्यन्त इति शेषः। सरूपत्वाद् वाऽसरूपविधे र्नात्र प्रवृत्तिः, अतश्च मिथोऽनयोरपवादत्वम्।

---

**बाल०**—शारो। वायौ कर्बुरेच वाच्ये शॄ हिंसायामित्यस्य शारः साधुः। अल्विषये घण्प्राप्तिरेव निपातफलं। वायुं प्रसिद्धः कर्बुरो मिश्रवर्णः। शारो वायौ सतु त्रिषु कर्बुरेऽथेति नानार्थवर्गः। नीशारः प्रावरणे वाच्ये निपूर्वस्य शृणोतेर्नीशारः साधुः। घण् प्राप्तिस्त्रिविक्रमविधानञ्च निपातफलं॥ ३८४॥

**बाल०**—समो। सम उत्तरेभ्य यु-मिश्रणामिश्रणयोः दु दु उपतापे द्रु गतावित्येतेभ्य उत्तरे घण् भवति। दुनोतेरिति उत्तापार्थस्य स्वादिगणपठितस्य दुधातोरित्यर्थः। दवतेरित्यर्थः। दवतेरिति गत्यर्थस्य भ्वादेर्दुधातोरित्यर्थः। संद्रव इति बाधकाभावे ईशादित्यनेनाल्। सम इति किं प्रयवः प्रद्रवः॥ ३८५॥

## ३८६. संख्या परिमाणाख्यायाञ्च ।

एक स्तण्डुलनिश्चायः, द्वौ शूर्प निष्पावौ । किन्तु तिङोऽष्टादश प्रत्ययाः, पञ्चोपदवाः, नैकोऽपि तव निश्चय इति च दृश्यते ।

## ३८७. इङ श्चाकर्त्तरि ।

अधीयते अध्यायः, उप समीपे अधीयते यस्मादुपाध्यायः ।

## ३८८. शारो वायु-कर्बुरयोः, नीशारो प्रावरणे शृणातेः साधू ।

---

अमृता०—३८६. संख्येति । संख्यायाः परिमाणस्य चाख्यायां धातोरुत्तरे घण् स्यात् भावे कर्त्तृवर्जिते च कारके । एकस्तण्डुलनिश्चाय इति—नि पूर्वात् चिनोते कर्मणि घण् संख्याख्यायाम् । अत्रईशादिति वक्ष्यमाणेनाल् प्राप्नोति, तस्य बाधकमेतत् । द्वौ शूर्पनिष्पावाविति—निर् पूर्वात पूञः कर्मणि घण् परिमाणाख्यायाम् । शूर्पः परिमाण-विशेषः प्राचाम् । ननु निरः पुव इति वक्ष्यमाणेनैव घणि सिद्धे किमनेनेति चेत् । अत्र परिमाणार्थो विशेष लाभ इति । ननु चात्र द्वौ इति ग्रहणात् संख्याख्यायामुदाहरणमिदं कथं न ज्ञायते ? श्रूयताम्—संख्यायाः परिमाणात्मकत्वेऽपि पृथग् ग्रहणं ज्ञापयति—संख्यापरिमाणयोरुभयोरपि युगपदाख्यानेऽपि घण् भवतीति । तत एव सूत्रे चकारोपन्यासः कृत इति ध्येयम् । प्रत्यया इति प्रतिपूर्वादिणः अल् । उपद्रवा इति—उपपूर्बाद् द्रवते रल् । निश्चय इति—निपूर्वाच्चिनोतेरल् । अत्राष्टादशेति संख्याया आख्यानात् घण् भवितुमर्हति, किन्तु बाहुल्यादेव अल् प्रयुज्यत इति भावः ।

**अमृता०**—३८७. इङ इति । कर्त्तृवर्जिते कारके वाच्ये इङ् अध्ययने इत्यस्मादुत्तरे घण् स्यात् । इह च ईशादिति प्राप्तस्य अलोऽपवादः । कर्त्तृवर्जितेति प्रभोरनुवर्त्तमानेऽपि पुनरकर्त्तरीति वचनं भाव इत्यस्य निरासार्थम् । अध्याय इति कर्मणि घण्, उपाध्याय इत्यपादाने घण् ।

**अमृता०**—३८८. शार इति । वायौ कर्बुरे च वाच्ये शॄ हिंसायामित्यस्य शार इति निपात्यते तथा प्रावरणे वाच्ये निपूर्वस्य तस्य नीशार इति च निपात्यते । अर्थविशेषो हि निपातफलम्, उपेन्द्रस्य त्रिविक्रमस्तु वक्ष्यते । कर्बुरो मिश्र वर्णः, प्रावरणं हिमातपादि निवारणार्थं वृहद् वस्त्राद्याच्छादनम् ।

---

**बाल०**—अनु । उपेन्द्ररहितेभ्यः श्रिञ् सेवायां नीञ् प्रापणे भू सत्ताया मित्येतेभ्य उत्तरे घण् भवति । नाय इति भावे घण् इति सूचयितुं नयनमित्युक्तं । पश्चात् समासेनेति । अनुभाव इत्यपि पश्चात् समासेनैवेति ज्ञेयं । अनुपेन्द्रेति किं प्रश्रयः प्रणयः प्रभवः ।। ३८६ ।।

**बाल०**—वेः । वेरुत्तराभ्यां टु क्षु शब्दे श्रु श्रवणे इत्येताभ्यामुत्तरे घण् भवति । वेरिति किं संक्षवः प्रतिश्रवः ।। ३८७ ।।

**बाल०**—अवो । अवोद्भ्यामुत्तरस्मात् नीञ उत्तरे घण् भवति । बाहुल्यादिति भवत इति शेषः ।। ३८८ ।।

**३८६. समो यु-दु-द्रुभ्यः ।**

संयावः । अत्र दुनोतेरेव ग्रहणमिति दुर्गः । संदावः संद्रावः, दवतेस्तु संदवः ।

**३६०. अनुपेन्द्रश्रि-णी-भूभ्यः ।**

श्रायः, नयनं नायः । प्रभावस्तु पश्चात् समासेन ।

**३६१, वेःक्षु-श्रुभ्याम् ।**

विक्षावः ।

**३६२. अवोद्भ्यां नियः ।**

अवनायः । अवनयोन्नयौ बाहुल्यात् ।

---

अमृता०—३८६. सम इति । सम् पूर्वेभ्यो यु-दु-द्रुभ्य उत्तरे घण् स्यात् । पूर्ववदपवादः । दुनोतेरेवेति टुदु उपतापे स्वादेरेवेत्यर्थः । संयाद इति यवविकारपक्व भक्ष्यम् । दवतेरिति दुगतौ भ्वादेरित्यर्थः । संदव इति—बाधकाभावादीशादित्यनेन अल् । समः किम्—प्रद्रवः पलायनम् ।

अमृता०—३६०. अनुपेन्द्रेति । उपेन्द्ररहितेभ्यः श्रिनीभूधातुभ्य उत्तरे घण् स्यात् भावे अकर्त्तरि च कारके । अनुपेन्द्र इति किम्—प्रश्रयः प्रणयः प्रभवः । कथं राज्ञोऽयं नय इति ? प्रादे स्त्वत् भूदुनीभ्यश्चेति प्रगुक्तोऽत् प्रत्ययान्तः । पश्चात् समसेनेति—प्रगतः भावः प्रभावः, कुप्रादयो मध्यपदलोपश्चेति वक्ष्यते समास प्रकरणे । एवमनुभावश्च ।

मृअता०—३६१. वेरिति सुगमम् । विक्षावइति टुक्षु शब्दे । एवं श्रु श्रवणे विश्रावः । वेरिति किम्—आश्रवः वचने स्थितः, बशम्वद इत्यर्थः ।

अमृता०—३६२. अवोद्भ्यमिति स्पष्टम् । बाहुल्यादिति—अल् च दृश्यते बाहुल्यादित्यर्थः । अवोद्भ्यां किम्—प्रणयः विनय इत्यादि ।

---

बाल०—प्रात् । प्रादुत्तरेभ्यः ष्टुञ स्तुतौ द्रु गतौ स्रु गतौ इत्येतेभ्य उत्तरे घण् भवति । कथमिति सिद्धान्तमाह बाहुल्यादिति शेषः ।। ३८६ ।।

बाल०—निरः । निर उत्तरस्मात् तुर उत्तरे घण् भवति । पुर इति पूञ पवने क्र्यादिः पूङ पवने भ्वादिरविशेषादुद्वयोरेव ग्रहणं । अभे । अभेरुत्तरस्मात् लूञ छेदने इत्यस्मादुत्तरे घण् भवति ।। ३६० ।।

बाल०—उन्नि । उन्निभ्यामुत्तरस्मात ग्र उत्तरे घण् भवति । ग्र इति गॄ निगरणे तुदादिः गॄ शब्दे क्र्यादिर्द्वयोरेव ग्रहणं । जयादित्यादीनामपि एतदेव मतं । क्रमदीश्वरादयस्तु क्र्यादेर्ग्रहणं नेच्छन्ति । उन्निभ्यामिति किं गरः ।। ३६१ ।।

बाल०—उत् । धान्यक्षेपे अर्थे उत्कारणनिकारौ साधू । धान्यक्षेपेऽर्थे उन्निभ्यामुत्तरस्य कॄ विक्षेप इत्यस्य घण् भवतीत्यर्थः । क्षेपो विक्षेपः । उत्कारश्च निकारश्च द्वौ धान्योत्क्षेपणार्थकावित्यमरः । निकर इति ईशादित्यनेनाल विक्षेप इत्यर्थः ।। ३६२ ।।

३९३. प्रात् स्तु-द्रु-स्रुभ्यः ।

प्रस्तावः । कथं स्रावः गर्भस्रावः ? बाहुल्यात् ।

३९४. निरः पुवः, अभेर्लुवः ।

निष्पावः अभिलावः ।

३९५. उन्निभ्यां ग्रः ।

उद्गारः ।

६९६. उत्कार निकारौ धान्यक्षेपे साधू ।

नेह—पुष्पानां निकरः ।

---

अमृता०—३९३. प्रादिति । प्रपूर्वेभ्यः स्तुद्रुस्रुभ्य उत्तरे घण् स्यात् । स्राव इति प्रशब्द रहितत्वेऽपि बाहुल्याद् घणित्यर्थः । सर्वत्र भावे कर्तृ वर्जित कारके ।

अमृता०—३९४. निरइति । निर् पूर्वात् पुवस्तथा अभिपूर्वात् लुव उत्तरे घण स्यात् । पुव इति पूञ् पवने क्र्यादिः, पूङ् पवने भ्वादि द्वयोरेव ग्रहणम् । लुव इति लूञ् छेदने ।

अमृता०—३९५. उन्निभ्यामिति । उत् पूर्वात् निपूर्वाच्च गॄधातोरुत्तरे घण् भवति । ग्रइति गॄनिगरणे, गॄशब्दे द्वयोरेव ग्रहणम् । उन्निभ्यां किं—गरः ।

अमृता०—३९६. उत्कारेति । उन्निभ्यां कॄविक्षेपे धातो र्धान्यक्षेपार्थे एव घण् स्यात् सच तस्मिन्नर्थे साधुः । निकर इति ईशादल् । अत्र निकर शब्दः समूहार्थक इति न घण् । यद्वा विक्षेपार्थे सद्भावेऽपि धान्येतरविषयत्वान्न घण् ।

---

बाल०—सम । सम उत्तरस्मात् स्तुञ स्तुतावित्यस्मादुत्तरे यज्ञविषये घण् भवति । संस्ताव इति स्तुतिभूमिरित्यर्थः । छन्दोगानामिति याज्ञिकद्विजानामित्यर्थः । स संस्तावः क्रतुषु या स्तुतिभूमिर्द्विजन्मनामित्यमरः । संस्तव इति शूद्राणां स्तुतिभूमिरित्यर्थः ।।३९३।।

बाल०—प्रात् । प्रादुत्तरस्मात् स्तॄञ आच्छादने इत्यस्मादुत्तरे अयज्ञविषये घण् भवति । बर्हिष्प्रस्तर इति षष्ठीसमासः । अनुत्तरपदस्थयोरिसुसोः समास इत्यनेन विष्णुसर्गस्य षः । बर्हिः कुशविशेषः । आसनार्थेतु विज्ञेयं कुशे बर्हिर्नपुंसकमित्याभिधानिकाः ।। ३९४ ।।

बाल०—वेर । अशब्दस्य शब्दभिन्नस्य विस्तारे वाच्ये वेरुत्तस्मात् स्तृणातेरुत्तरे घण् भवति । विस्तार इति स्तॄञ आच्छादने । विस्तारो विग्रहो व्यासः सच शब्दस्य विस्तर इत्यमरः ।। ३९५ ।।

बाल०—उद्ग्रा । व्यक्तार्थमेतत् । मुष्टिशब्दस्यार्थमाह दार्ढ्य मिति । मुष्टिशब्दस्य परिमाणविशेषवाचित्वमप्यस्ति, किन्तु तथा सति मुष्टिसंग्राह इति संख्यापरिमाणाख्यायाञ्चेत्यनेनैव सिध्यति तस्मान्नात्रपरिमाणविशेषवाचितेति भावः । समि मुष्टाविति

**३८७. समः स्तुवो यज्ञविषये ।**

संस्तावश्छन्दोगानाम् । अन्यत्र संस्तवः ।

**३८८. प्रात् स्तृणातेरयज्ञे ।**

पुष्प प्रस्तारः । नेह—बर्हिष्प्रस्तर श्छन्दोगानाम् ।

**३८९. वेरशब्द प्रथमे ।**

विस्तारोऽशब्दस्य, भक्ते विस्तारः । वेदादिशब्दस्य तु विस्तरः ।

---

**अमृता०**—३८७. सम इति । यज्ञविषये हि सम् पूर्वात् स्तुव उत्तरे घण् भवति । छन्दोगानामिति—याज्ञिक विप्राणां संस्तावः स्तुतिभूमिरित्यर्थः । समेत्य स्तुवन्ति यस्मिन् देशे स संस्ताव इत्यधिकरणे संज्ञायां घण् । संस्तव इति भावे अल् ।

**अमृता०**—३८८. प्रादिति । अयज्ञविषये प्रपूर्व स्तृञ् आच्छादने इत्यस्मादुत्तरे घण् स्यात् । बर्हिष्प्रस्तर इति—बर्हिषः कुशस्य प्रस्तर श्छादनं षष्ठी समासः ।

**अमृता०**—३८९. येरिति । अशब्दस्य वस्तुनो विस्तारेऽर्थे विपूर्वात् स्तृणाते रुत्तरे घण् स्यात् । विस्तारो विग्रहो व्यासः सच शब्दस्यविस्तर इत्यमरः । एवंवाचो विस्तर इत्यपि । प्रथने किम्—तृणविस्तरः ।

---

भाषावृत्तिलक्षणं । अहो मल्लस्य संग्राह इति तदुदाहरणं । समो मुष्टाविति क्रमदीश्वर-लक्षणं, संग्राहो मल्लस्येति तदुदाहरणं । मुष्टिबन्धस्तु संग्राह इत्यमरोऽपि तथाप्येतदनु-सारेण कथं लक्षणं न कृतमिति न निश्चितं ।। ३८६ ।।

**बाल०**—परि । सूत्रे शारीणामित्यनन्तरं समन्तान्नयन इति लिपिकरप्रमादात् पतितमिति लक्ष्यते । शारीणां समन्तान्नयने वाच्ये परिणायः साधुः । द्यूताय रचितो द्रव्यविशेषः शारिः । परिणाय इति परिपूर्वस्य नीञो घण् णत्वं घण् विधानमेव निपातफलं । परिणायस्तु शारीणां समन्तान्नयनमित्यमरः । परे शारीणां सर्वतोनयन इति क्रमदीश्वरसूत्रं । न्यायः । स्थितिर्मर्यादा तस्या षोऽनतिक्रमोऽतिक्रमाभावस्तस्मिन्नर्थे न्यायः साधुः । न्याय इति निपूर्वस्य इनो निपाताद् घण् । साधू इति एतौ परिणायन्यायौ साधू इत्यर्थः ।। ३८७ ।।

**बाल०**—पर्या । वृत्तिमाह परीण इति । परिपूर्वस्य इनधातोरित्यर्थः । अनुपात्यय इति अनुपात्ययेऽर्थे इत्यर्थः । उपात्ययशब्दस्य व्यतिक्रमवाचित्वादनुपात्ययशब्दस्य क्रम-वाचित्वं । विपर्यय इति व्यतिक्रम इत्यर्थः । आनुपूर्वी स्त्रियां वावृत् परिपाटी अनुक्रमः । पर्यायश्चातिपातस्तु स्यात् पर्याय उपात्यय इत्यमरः ।। ३८८ ।।

**बाल०**—उप । पर्यायेण शयनाशयनयोर्वाच्ययोः उपशायविशायौ साधू । उपशाय इति पर्यायेण शयनं अशयनं वेत्यर्थः । सत्याया इति सत्यभामाया इत्यर्थः । विशाय इति पर्यायेण शयनमशयनं वेत्यर्थः । किन्तु उपशायविशायशब्दयोः पर्यायशयनवाचित्वं

## ४००; उद् ग्राह-मुष्टिसंग्राहौ साधू ।

मुष्टि दार्ढ्यम् ।

## ४०१. परिणायः शारीणाम् , न्यायः स्थित्यनतिक्रमे साधू ।

## ४०२. पर्यायोऽनुपात्यये ।

परीणः साधुरयम् । नेह विपर्ययः ।

---

**अमृता०**—४००. उद्ग्रहेति । मुष्टिवाचकः संग्राहो मुष्टिसंग्राह इति मध्यपदलोपि समासः । "समि मुष्टौ" इति प्राचां लक्षणम्, तथा अहो मल्लस्य संग्राह इति चोदाहरणम् । साधुत्वमनयो र्भाषायामर्थविशेषे । उद्ग्राहो विद्याविचार इत्यमरटीकायां भरतः । संग्राहो मुष्टिः, तस्य चार्थो दार्ढ्यमिति । अन्यत्र छान्यानां संग्रहः ।

**अमृता०**—४०१. परिणाय इति । शारीणां समन्तान्नयने वाच्ये परिपूर्वस्य नयते घणा णत्वेन च परिणाय इति निपात्यते, तथा स्थितेः ( मर्यादायाः ) अनतिक्रमे अर्थे निपूर्वस्य इणगतावित्यस्य घणा न्याय इति निपात्यते । शारिः पाशक क्रीडार्थो द्रव्य-विशेषः, घुटीति भाषा । परत्रार्थविशेषो हि निपातकारणम् । एवमाङ्पूर्वस्य नयते र्घणा सह आनाय इति जाले (पाशे) साधुर्भवति ।

**अमृता०**—४०२. पर्याय इति । उपात्ययो व्यतिक्रमः, अनुपात्ययः क्रमः परिपाटी वा, तस्मिन् वाच्ये परिपूर्वस्य इणः पर्याय इति घणा साधुः स्यात् । अर्थस्य रूढित्वं हि निपात फलम् । विपर्यय इति—इहव्यतिक्रमार्थत्वान्न घण् किन्तु अल् ।

---

सार्वत्रिकमेव पर्यायाशयनवाचित्वन्त्वप्रसिद्धमिति ज्ञेयं । व्युपयोः शेतेः पर्याय इति भाषावृत्तिसूत्रं । व्युपात् शीङः क्रम इति क्रमदीश्वरसूत्रं । उपशायो विशायश्च पर्याय-शयनार्थकावित्यमरः ।। ३९९ ।।

**बाल०**—चे । हस्तेन आदानं हस्तादानं तस्मिन् गम्ये चिञ चयने इत्यस्मादुत्तरे घण् भवति, नतु स्तेय इति यत्र स्तेयं चौर्यं गम्यते तत्र न भवतीत्यर्थः । तुलसीचाय इति हस्तेन तुलसीचयनमित्यर्थः । स्पष्टार्थमेवेति स्पष्टतार्थमेवेत्यर्थः, प्रयुज्यते इति शेषः । यष्ट्या लगुडेन आमलकोच्चय इति आमलक्याः फलमामलकं तस्योच्चयनमित्यर्थः । तुलसीचय इति तुलसीचयनमित्यर्थः ।। ४०० ।।

**बाल०**—निका । गृहे निचिते राशौच वाच्ये निकायः साधुः । तथा समानं धर्मं येषां ते सधर्माणः, सधर्माणश्च ते प्राणिनश्चेति तेषां बहुत्वे तथेति । निकायः साधुरित्यर्थः । धर्मशब्दोऽत्राचारवचन । नतु सङ्गमे इति । सङ्गमेऽर्थे न भवति । निकाय इति निपूर्वस्य चिञो निपातादघण् चस्य कश्च ।। ४०१ ।।

**बाल०**—अव । आक्रोशे गम्यमाने अवग्राहनिग्राहौ साधू । आक्रोश इति किं पादस्यावग्राहः चौरस्य निग्रहः । अत्र ग्रहवृद्दगमवशरणेभ्य इति वक्ष्यमाणसूत्रेणाल् ।।४०२।।

**४०३. उपशाय-विशायौ पर्यायेण शयनाशयनयोः साधू ।**

रुक्मिण्या अद्योपशायः सत्याया विशायः ।

**४०४. चे र्हस्तादाने नतु स्तेये ।**

तुलसीचायः । हस्तेन तुलसीचाय इति तु स्पष्टार्थमेव । हस्तादाने किम् —यष्ट्यामलकोच्चयः । स्तेये तु तुलसीचयः ।

**४०५. निकायो गृहे निचिते राशौ च, तथा सधर्मप्राणिनां बहुत्वे नतु सङ्गमे साधुः ।**

प्राणिनां सङ्गमस्तु निचयः ।

---

**अमृता०**—४०३. उपशायेति । पर्यायेण द्वयोः शयनाशयनयो र्वाच्ययोरुपपूर्वात् विपूर्वाच्च शीङो घण् स्यात् । अस्मिन्नेव विशेषार्थेऽनयोः साधुता । पर्याय इह शयन कर्त्रा रेव नतु शब्दयोः । तेन एकस्य शयने अपरस्याशयनमवश्यमापद्यते, तदुभयोश्च (प्रत्येकस्य) शब्दयोः शयनमशयनञ्चार्थः । रुक्मिण्या अद्योपशाय इति—उपशायशब्दस्य शयनार्थे सत्याया सत्यभामाया विशायः अशयनम्, तथा उपशाय शब्दस्याशयनार्थे रुक्मिण्या अशयनं सत्याया विशायः शयनमिति फलितार्थः । उपशायो विशायश्च पर्याय शयनार्थका-वित्यमरः ।

**अमृता०**—४०४. चेरिति । हस्तेन आदानेऽर्थे चिञ् चयने इत्यस्माद् घण् स्यात् । स्तेये चौर्ये गम्यमाने तु स न भवति । ननु यदि हस्तादानं घण् प्रत्ययेनैवोच्यते कथं तर्हि—हस्तेनतुलसीचाय इत्थं प्रयुज्यते इति शङ्कायामाह—स्पष्टतार्थमेवेति । यद्यपि तदर्थोऽन्त-र्निहितोऽस्ति तथापि फटिति बोधार्थो हस्तशब्द प्रयोग इत्यदोषः । यष्ट्यामलकोच्चय इति —यष्टि र्लगुडः, आमलक्याः फलमामलकम्, तस्योच्चयनं संग्रह इत्यर्थः ।

**अमृता०**—४०५. निकाय इति । गृहे राशौ च वाच्ये निपूर्वस्य चिनोते र्घणा निकाय इति साधुः स्यात् । तथा समानधर्मवतां प्राणिनां बहुत्वे गम्ये च निकाय इति साधु र्भवति, प्राणिनां सङ्गमे तु स न स्यात् । अर्थविशेषो हि निपातफलम् । निचीयतेऽ-स्मिन्निति निकायो गृहम्, अधिकरणे घण् । राशिवाच्ये तु कर्मणि, यथा गोमयनिकायः । काष्ठ निचय इति तु बहुत्वमात्रं विवक्ष्यते नतु राशिः । सधर्म प्राणिनां बहुत्वे तु घणेव—वैष्णव निकाय इति । चिनोते र्घणा आकायः शवदाहार्थोऽग्निः, चितेति प्रसिद्धः । तथा कायः शरीरमिति पाणिनीयाः ।

---

**बाल०**—प्रग्रा । लब्धुमिच्छुर्लिप्सुः, लिप्सुः कर्त्रा यत्र तादृशे आक्रोशे गम्यमाने प्रग्राहः साधुः । परि । यज्ञाङ्गग्रहणेऽर्थे परिग्राहः साधुः ॥ ४०३ ॥

**बाल०**—उदः । व्यक्तार्थमेतत् । पू इति पूञ पवने क्र्यादिः पूङ पवने भ्वादि-र्द्वयोरेव ग्रहणं । उच्छ्राय इति श्रिञ सेवायां । एवं उद्यावः उन्नायः उत्पावः उद्द्राव इति ॥ ४०४ ॥

## ४०६. अवग्राह-निग्राहावाक्रोशे साधू ।

अवैष्णवस्यावग्राहो भूयात् ।

## ४०७. प्रग्राहो लिप्सुकर्त्तृके, परिग्राहो यज्ञाङ्गग्रहणे साधू ।

---

**अमृता०**—४०६. अवग्राहेति । आक्रोशे गम्यमाने अवपूर्वस्य निपूर्वस्य च ग्रह-धातोरवग्राह-निग्राहौ घणा निपात्येते । अर्थस्य रूढित्वमेव निपातफलम् । आक्रोशः शपनम्, तस्मिन्निति किम्—पादस्यावग्रहः, चौरस्यनिग्रहः । ग्रह-वृ-दृ-गम-वश इति वक्ष्य-माणस्य अलोऽपवाद ।

**अमृता०**—४०७. प्रग्राह इति । लब्धुमिच्छुर्लिप्सुः, तादृशि कर्त्तरि गम्यमाने प्रपूर्वस्य ग्रहे र्घणा प्रग्राह इति साधुः स्यात्, यज्ञाङ्गग्रहणेविषये परिपूर्वस्य ग्रहे र्घणा परिग्राह इति च साधुः स्यात् । अत्र चार्थविशेषे रूढित्वं निपातफलम् । पात्रप्रग्राहेण भिक्षुश्चरति । अन्यत्र प्रग्रहो हयरज्जुः ।

---

**बाल०**—अव । इदमपि व्यक्तार्थं अवतार इति तॄ प्लवनतरणयोः । अवस्तार इति स्तृञ आच्छादने ॥ ४०५ ॥

**बाल०**—विभाषा । अधिकारसूत्रमेतत् ॥ ४०६ ॥

**बाल०**—आङो । आङ उत्तराभ्यां रु शब्दे प्लुङ गतौ इत्येताभ्यामुत्तरे घण् वा भवति । ईशादित्यनेन नित्यमलि प्राप्ते विकल्पेन घण् विधानं । अवात् । वर्षप्रतिबन्धे वाच्ये अवादुत्तरस्मात् ग्रह उत्तरे घण् वा भवति । वर्षं वृष्टिः । प्राप्तकालस्य वर्षस्य ग्रहदोषादिना विघातो वर्षप्रतिबन्धः । प्रात् । तुलासूत्रे वाच्ये हयरज्जौ च वाच्यायां प्रादुत्तरस्माद् ग्रह उत्तरे घण् वा भवति । हयोऽश्वः । प्राद्वृ । आच्छादने वाच्ये प्रपूर्वात् वृञ वयण इत्यस्मादुत्तरे घण् वा भवति । आच्छादनशब्देनात्र आच्छादनविशेष उच्यते । प्रावृणोतेरिति निर्देशात् वृङ सम्भक्ताावित्यस्याग्रहण । परे । अवज्ञानेऽर्थे परेरुत्तरस्माद्भुव उत्तरे घण् वा भवति । अवज्ञानमसत्कारः । आरावः आरव इति । आरवारावसंराव-विरावा इत्यमरः । इत्यादीत्यादिपदेन आप्लावः आप्लवः, अवग्राह, अवग्रहः प्रग्राहः प्रग्रहः, प्रवारः प्रवरः, परिभावः परिभव इति । आप्लावः आप्लव इत्यमरः, द्वौ स्नान-वाचकौ । वृष्टिर्वर्षं तद्विघातेऽवग्राहावग्रहौ समावित्यमरः । तुलासूत्रेऽश्वादिरश्मौ, प्रग्राहः प्रग्रहोऽपि चेति नानार्थवर्गः । प्रावरप्रवरौ वस्त्रवाचकौ । अनादरः परिभवः परिभाव-स्तिरष्क्रियेत्यमरः । शम इति शमु उपशमे घण् । विश्रम इति श्रमु तपसि खेदेच । आचमादेस्त्विति वृष्णीन्द्रनिषेधसूत्रे आचमादेर्वर्जनमुक्तं अत आचमादेर्न वृष्णीन्द्रनिषेधः, तेन आचामः काम इति । विश्राम इत्यपशब्द इति काशिकेति । अमचमविश्रमां वेत्येके इति आख्यातप्रकरणे उक्तं, अतस्तन्मते विश्राम इत्यपि भवति, किन्तु काशिकामते विश्राम इत्यपशब्दः । केचित्त्विति अम-चम-विश्रमां वेति येषां मतं त एंव केचिदित्यस्य वाच्याः । उपेन्द्राल्लभेरितीति । उपेन्द्राल्लभेर्नुम् खल्घणोरित्यस्योल्लेखः । प्रलम्भ इति

## ४०८. उदः श्रि-यौति-नी-पू-द्रुभ्यः ।

उच्छ्रायः ।

## ४०९. अवतारावस्तारौ साधू ।

## ४१०. विभाषा ।

प्रभुरयम् ।

---

**अमृता०**—४०८. उद इति । उत्पूर्वेभ्यः श्रिप्रभृति चतुर्भ्य उत्तरे घण् स्यात् । उच्छ्राय इति श्रिञ्सेवायां । एवमुद्याव: उत्पावः उद्द्राव इति । उत्पाव इति पूञ् पूङो द्वयोरेव ग्रहणम् ।

**अमृता०**—४०९. अवेति स्पष्टम् । अत्राप्यर्थविशेषो निपातफलम्, अवतार इत्यत्र कर्मणि घण् च । मूर्त्यन्तरेण अंश-लीलावेशरूपेण वैकुण्ठादवतरति मर्त्त्ये लोके इत्यमरः, राम-वामन-मत्स्यादिः, वेदव्यास-नारदादिश्च । अवतरणमित्यर्थेऽर्थाद् भावे तु न निपातः । अवस्तार इति—स्तॄञ् आच्छादने, अवस्तीर्यतेऽनेनेति अवस्तारो यवनिकेत्यर्थः, करणे घंण् ।

**अमृता०**—४१०. विभाषेत्यधिकारसूत्रम् ।

---

डु लभ ष प्राप्तौ । सुलाभः दुर्लाभ इति । न सुदुर्भ्यामन्योपेन्द्ररिताभ्यामित्यनेन नुम्निषेधः ॥ ४०७ ॥

**बाल०**—स्फुर । व्यक्तार्थमेतत् । स्फार इति स्फुर स्फुरणे घण् सिध्यत्येव स्फारादेश एव निपातफलं ॥ ४०८ ॥

**बाल०**—रन्जे । भावश्च करणञ्च भावकरणे तयोर्विहिते घणि परे रन्ज राग इत्यस्य नस्य हरो भवति । तत्साधनं रञ्जनसाधनं । राग इति भावपक्षे भाव इत्यनेन घण् । करणपक्षे क्वचिदसंज्ञायामपीत्यनेन उक्तसूत्रेण जस्य गत्वं । रङ्ग इति क्वचिद-संज्ञायामपीत्यनेन अधिकरणे घण् ॥ ४०९ ॥

**बाल०**—स्यन्द्ये । जवेऽर्थे स्यन्देः स्यदः साधुः । जवो वेगः । स्यद इति स्यन्दू स्रवणे घण् । नलोपविधानं वृष्णीन्द्राभावश्च निपातफलं । अवो । अव पूर्वस्य उन्दी क्लेदने इत्यस्य अबोदः साधुः । अबोद इति निलोपविधानं गोविन्दाभावश्च निपातफलं । प्रहि । प्रहिमाभ्यामुत्तरस्य श्रन्थ मोचन इत्यस्य प्रश्रथहिमश्रथौ साधू । अत्रापि नलोप-विधानं वृष्णीन्द्राभावश्च निपातफलं । उपे । घणि सति बहुलं यथा स्यात्तथा उपेन्द्रस्य त्रिविक्रमो भवतीति सामान्यसूत्रमुक्त्वा विशेषसूत्रमाह । तत्रे । ईशस्य काशे परे त्रिविक्रमो भवति, ईशस्येति ईशान्तोपेन्द्रस्य इत्यर्थः । काशशब्दो घणन्तः । काशे परे ईशस्य त्रिविक्रमो भवतीति प्रकाश इत्यादौ न त्रिविक्रमः ॥ ४१० ॥

**४११. आङो रुप्लुभ्याम्। अवाद् ग्रहो वर्षं प्रतिबन्धे। प्रात् तुलासूत्रे हय रज्जौ च। प्राद् वृणोते राच्छादने। परेर्भुवोऽवज्ञाने।**

आरावः आरव इत्यादि। विभाषा निवृत्ता।

जनिबध्यो मान्ताजाञ्चेति न वृष्णीन्द्रः—श्रमः विश्रमः। आचामादेस्तु—आचामः कामः। विश्राम इत्यपशब्द इतिकाशिका। केचित्तु चमः श्रमइत्यपीच्छन्ति। उपेन्द्राल्लभेरिति प्रलम्भः। नेह—सुलाभः दुर्लभः।

---

अमृता०—४११. आङ इति। आङ् पूर्वाभ्यां रु प्लुभ्यामुत्तरे विभाषया घण् स्यात्। अवपूर्वाद् ग्रहे रुत्तरे वर्षप्रतिबन्धेऽर्थे घण् वा स्यात्। प्रपूर्वाद् ग्रहेरुत्तरे तुला सूत्रे हयरज्जौ च वाच्ये घण् वा भवति। प्रपूर्वाद् वृणोते रुत्तरे आच्छादने वाच्ये गण वा स्यात्। तथा परि पूर्वाद्भुव उत्तरे अवज्ञानेऽर्थे घण् वा भवतीति सूत्रपञ्चकमेकत्रोक्तम्। पक्षेसर्वत्र अल्। वर्षप्रतिबन्ध इति—कुतश्चिन्निमित्तात् कालोचित वर्षणस्याभावः, देवस्यावग्राहः अवग्रहो वा। तुलासूत्र इति तोलयन्त्रस्य सूत्रइत्यर्थः। हयरज्जाविति—रथादिषु नियोजितानामश्वानां संयमनार्थं रज्जौ, रश्मीति ख्यातायामित्यर्थः। तुलासूत्रेऽश्वादिरश्मौ प्रग्राहः प्रग्रहोऽपि चेत्यमरः। प्रावारः प्रवरश्चोत्तरीयवस्त्रार्थकौ। निपूर्वात्तु नीवार- तृणधान्यभेदः। अवज्ञानमनादरः। अनादरः परिभवः परिभावस्तिरस्क्रियेत्यमरः।

अन्यत्र भावे—अवग्रहः शब्दस्य, अग्रहणमित्यर्थः, प्रग्रहो धनस्य सम्यग् ग्रहणम्, पण्डितप्रवरः श्रेष्ठपण्डितः, सर्वतोभवनं परिभव इति। विभाषा निवृत्ता, अलपवादो घण् च निवृत्तः।

अथ सामान्येन घण् विधीयते, तत्र च भावे कर्तृवर्जिते च कारक इत्यनुवर्त्तनीयम्। विश्रम इति विपूर्व श्रमु तपसि खेदे च। वृष्णीन्द्रनिषेधसूत्रे इणि कृति निर्देशादत्रापि न वृष्णीन्द्रः। तत्र आचामादेस्तु तत्रैव सूत्रे वर्जनात् स स्यादेवेत्यर्थः। केचित्त्विति—अमचमविश्रमां वेत्येके इत्याख्यातप्रकरणोक्तमतानुसारेणकेचिद् विभाषया वृष्णीन्द्रमिच्छन्तीति दर्शितम्। उपेन्द्रादिति—उपेन्द्राल्लभेर्नुम् खल्घणो रिति नुम् विधायक लक्षणम्। नेहेति—न सुदुर्भ्यामन्योपेन्द्ररहिताभ्यामिति निषेधान्न नुम्।

---

**बाल०**—प्रासा। गृहे वाच्ये प्रासादः साधुः। गृहे वाच्ये घणन्ते सादशब्दे परे प्रोपेन्द्रस्य त्रिविक्रमो भवतीत्यर्थः। गृह इति गृहविशेषे इत्यर्थः। प्रासादो देवभूभुजामित्यमरः। अन्यत्र प्रसादस्तु प्रसन्नता इत्यमरः। प्राका। प्राचीरे वाच्ये प्राकारः साधुः। अन्यत्र प्राकर इति। प्रकारौ भेदसादृश्य इति नानार्थवर्गः॥ ४११॥

**४१२. स्फुरतेः स्फारः साधुः ।**

**४१३. रन्जे र्नस्य हरो भावकरण घणि ।**

रञ्जनं तत्साधनं वा रागः । नेह—रजत्यस्मिन् रङ्गः ।

**४१४. स्यन्देः स्यदो जवे, अवोन्देरवोदः, प्र-हिमाभ्यां श्रन्थेः प्रश्रथ-हिमश्रथौ साधू ।**

**४१५. उपेन्द्रस्य त्रिविक्रमो घणि बहुलम्, तत्रेशस्य काशे ।**

**नीकाशः अनूकाशः ।**

---

**अमृता०**—४१२. स्फुरतेरिति । स्फारादेश इह निपातफलम्, अन्यथा गोविन्दः स्यात् ।

**अमृता०**—४१३. रन्जेरिति । भावे करणे च वाच्ये विहिते घणिरन्जे र्नस्य हरो भवति । रञ्जनमिति भावबोधनाय, तद्साधनमिति करण बोधनाय न्यस्तम् । रजत्यनेन रागो हरिद्रादिः, चजोः कगाविति गत्वम् । रङ्ग इत्यधिकरणे घण्णिति न नस्यहरः । रङ्गो रङ्गभूमिः ।

**अमृता०**—४१४. स्यन्देरिति । जवे ( वेगे ) अर्थे स्यन्तेः स्यद इति घणा साधुः स्यात् । नलोपो वृष्णीन्द्राभावश्च निपातफलम् । प्रपूर्वस्य हिमपूर्वस्य च श्रन्थ धातो र्घणा प्रश्रथ.हिमश्रथौ साधूभवतः । इहापि नलोप वृष्णीन्द्राभावौ निपातफले । स्यन्देरिति स्यन्दु स्रवणे । अवोन्देरिति अवपूर्व उन्दी क्लेदने । अत्र नलोपगोविन्दाभावौ निपातफले ।

**अमृता०**—४१५. उपेन्द्रस्येति । घणि सति बहुलं यथास्यात्तथा उपेन्द्रस्य त्रिविक्रमः स्यात् । बहुलप्रवृत्ति व्यवस्थाप्य तत्रच विशेषमाह—तत्रेति । काशशब्दे घणन्ते परे ईशस्य ईशातोपेन्द्रस्य त्रिविक्रमो भवति । बाहुल्यात् प्रकाश इत्यादौ न दीर्घः ।

---

**बाल०**—क्वचिद्वा । बहुलमिति यदुक्तं तस्य फलमाह क्वचिद्वेति । घणन्ते परे उपेन्द्रस्य त्रिविक्रमः क्वचिद्वा भवति । प्रतिवेशः प्रतीवेश इति वेशशब्दो घणन्तः । प्रतिहारः इति । द्वारि द्वाःस्थे प्रतीहार इति नानार्थवर्गः ।। ४१२ ।।

**बाल०**—क्वचिन्न । बहुलमित्यस्य लक्षणान्तरमप्याह क्वचिदिति । उपेन्द्रस्य त्रिविक्रमः क्वचिन्न भवति । प्रवाह इत्यादयः । अपेरादिहर इत्यादीति अपेरादिहरः धाञनह्योर्वेत्यनन्तरं अवस्य तंस इति सूत्रमुक्तं तदुदाहरणं दर्शयति अवतंसो वतंस इति ।। ४१३ ।।

**बाल०**—अथ । अधिकारसूत्रमेतत् ।। ४१४ ।।

**बाल०**—ईशात् । ईशादुत्तरे अल् स्यात्, लराम इत् । चयनमित्यर्थकथनं । चय इति चिञ चयने निश्चय इति निर्पूर्व चिञ चयने । समौ निर्णयनिश्चयावित्यमरः ।

## ४१६. प्रासादो गृहे, प्राकारः प्राचीरे ।

## ४१७. क्वचिद् वा ।

प्रतिवेशः, प्रतीवेशः, प्रतिहारः प्रतीहारः ।

---

**अमृता०**—४१ . प्रासाद इति । गृहे वाच्ये प्रासाद स्तथा प्राचारे वाच्ये प्राकारः घणि उपेन्द्रस्य त्रिविक्रमेण सिद्धौ भवतः । अन्यत्र तु प्रसादोऽनुग्रहः, प्रकारोभेदः सादृश्यम् वा ।

**अमृता०**—४१७. क्वचिद्वेति । क्वचिद् घणन्तेपरे उपेन्द्रस्यत्रिविक्रमो वास्यात्, स च बाहुल्यादेव । प्रतिवेशः स्वगृहान्तिकवासी । प्रतिहारो द्वारपालोद्वारी द्वाःस्थः प्रतीहार इत्यमरः ।

---

शिलोच्चय इति उच्चायनं उच्चयः शिलानां प्रस्तराणां उच्चयो यत्रेति शिलोच्चयः पर्वतः । अद्रिगोत्रगिरिग्रावाचलशैलशिलोच्चया इत्यमरः । प्रशय इति प्रपूर्वस्य श्रिञ् सेवायां । प्रश्रयः प्रणयः समावित्यमरः । नियम इत्यादौ अल्प्रत्ययोत्पत्तेः पूर्वमेव घणि विषये कथमारामान्तपाठो न भवतीत्याशङ्क्य समादधाति मिमीलियामिति ज्ञापकादल् चेति । यद्यलप्रत्ययोत्पत्तेः पूर्वमेवारामान्तपाठः स्यात्तर्हि मिमीलियां खललोरात्वनिषेध इति सूत्रं निरर्थकं स्यात्तस्मादत्र आरामान्तपाठाभावोऽल् च भवति । दीङस्त्विति । मीनात्यादिनेति । मीनातिमिनोतिदीङामारामान्तपाठश्चतुर्ब्युहविधिस्थाने यपि चेत्यनेन सूत्रेणेत्यर्थः । आरामान्तपाठत्वादिति । आरामान्तरूपः पाठो यस्येति पीताम्बरसमासस्तदनन्तरं त्वप्रत्यय इति ज्ञेयं, आरामान्तपाठादिति वा पाठः । आरामान्तपाठादीशान्तत्वाभावः, अतोऽल् प्राप्तिसम्भावना नास्ति, अत उक्तं घणेवेति । उपदाय इति दीङ क्षये आतो युगिणि नृसिंहकृति चेत्यनेन युक् ।। ४१५ ।।

**बाल०**—ग्रह । ग्रह उपादाने वृ इति वृङ सम्भक्तौ वृञ वरगे द्वयोरेव ग्रहणं । दृङ आदरे गमलृ गतौ वश कान्तौ रण शब्दे इत्येतेभ्य उत्तरे अल् स्यात् । बाहुल्यात् स्वयङ्ग्राह इति एवं ग्राह इति च ज्ञेयं । ग्रहे ग्राह इत्यमरः । ग्राहं गतास्तत्र कथञ्चिदन्य इति भट्टवार्त्तिकञ्च । वर इति वरणमित्यर्थः, वरो वृतावित्यमरः । आदरः सत्कारः । वृद्रोरिति ऋरामान्तानां मध्ये वृद्रोरेव अल् भवतीति नियमस्तेन ऋरामान्तरात् अन्यऋरामान्तादल् भवति । अतो हारः कार इति । कर इति क विक्षेपे दीर्घऋरामान्ते नियमाभावात् ईशादित्वनेनाल् । करो हस्तः ।। ४१६ ।।

**बाल०**—उपे । उपेन्द्रादुत्तरस्मात् अद भक्षणे इत्यस्मादुत्तरे अल् भवति । ने । नेरुत्तरस्मादद उत्तरे अल् भवति णश्च पूर्वेण । अलः सिध्यत्येव णप्रत्ययार्थं वचनं । अदो । घणि अलिच परे अदः स्थाने घसलृर्भवति । न्याद इति णपक्षे । उपेन्द्रादिति किं घासः ।। ४१७ ।।

**४१८. क्वचिन्न ।**

प्रवाहः प्रहारः प्रवादः । अपेरादिहर इत्यादि, अवस्य तंसे—अवतंसः वतंसः । इति घण्णन्ताः ।

**४१९. अथ घणोऽपवादोऽल् घण्णर्थे ।**

विभुरयम् ।

**४२०. ईशात् ।**

---

**अमृता०**—४१८. क्वचिन्नेति । क्वचिद् घण्णन्ते परे उपेन्द्रस्य त्रिविक्रमो न स्यात्, बाहुल्यात् । अपेरादिहरो धात्र् नद्धयो र्वा, अवस्य तंसे इतिप्रागुक्तसूत्रं स्मारयन्नुदाहरति—अवतंसः वतंस इति ।

**अमृता०**—४१९. अथेति । घणोऽपवादोऽलिति—समरूपत्वाद् वाऽसरूपविधेरप्रवृत्तेरनयोरन्योन्यमपवादत्वमिति भावः ।

**अमृता०**—४२०. ईशादिति । ईशान्ताद्धातोरुत्तरे अल्प्रत्ययः स्यात्, लइत् । चयनमिति भावेऽल् दर्शनार्थमर्थकथनम् । निश्चयो निर्णयः । उच्चयो राशिः, शिलानां

---

**बाल०**—अनु । उपेन्द्ररहिताभ्यां व्यध ताडने जप मानसेच इत्येतेभ्यामुत्तरे अल् भवति । वा । उपेन्द्ररहिताभ्यां स्वन शब्दे हस हसने इत्येताभ्यामुत्तरे अल् वा भवति । समु । उपेन्द्ररहितात् समुपनिभ्य उत्तरस्माच्च यमु उपरम इत्यस्मादुत्तरे अल् वा भवति । ने । नेरुत्तरेभ्य गद व्यक्तायां वाचि णद अव्यक्ते शब्दे पठ व्यक्तायां वाचि स्वन शब्दे इत्येतेभ्य उत्तरे अल् वा भवति । व्यध इति । व्यधो वेध इत्यमरः । व्याध इति कर्त्तरि वाच्ये भवति, सतु णप्रत्ययान्तः पूर्वमुक्तः । एवं जप इति जपो मन्त्रस्य सुलघूच्चारः । बाहुल्यात् जाप इति च ज्ञेयं । शूद्रस्य वैदिकमन्त्रजापं प्रत्यनधिकारादिति न्यासः । अनुपेन्द्रादिति किं आव्याधः उपजापः । स्वनः स्वान इति । शब्दे निनादनिनदध्वनिध्वानरवस्वनाः । स्वाननिर्घोषदिर्ह्लादनादनिस्वाननिस्वना इत्यमरः । एवं हसो हास इति । अनुक्रोशोऽप्यथो हसः हासो हास्यश्चेत्यमरः । अनुपेन्द्रादिति किं प्रस्वानः प्रहासः । संयमः संयाम इति वियामो वियमो यामो यमः संयामसंयमावित्यमरः । उपयमः उपयाम इति । यमो याम इति अनुपेन्द्र उदाहरणं । न्युपेन्द्रे उदाहरणमाह नियमः नियाम इति । ग्रन्थान्तरे समुपनिभ्यश्च यम इति सूत्रे वीति लिपिकारप्रमादात् पतितमिति लक्ष्यते । यमः समुपनिविषु चेति भाषावृत्तिसूत्रात् यमो निसंव्युपाच्चेति क्रमदोश्वरसूत्रात् वियामो वियमो इत्यमराच्च । निगदः निगाद इति । निगदो निगाद इत्यमरः । एवं निनदो निनादः, निपठो निपाठः, निस्वनो निस्वान इति ॥ ४१८ ॥

**बाल०**—क्वाण । क्वाणादयः साधवः । क्वणधातुः शब्दार्थः । क्वाणादयो ध्वनिमात्रवाचका वीणाध्वनिं तदितरध्वनिश्चाहुः वीणा । व्यक्तार्थमेतत् । निक्वाणो निक्वणः क्वाणः क्वणः क्वणनमित्यपि । वीणायाः क्वणिते प्रादेः प्रक्वाणप्रक्वणादय इत्यमरः ॥४१९

चयनं चयः, निश्चयः, शिलोच्चयः, प्रश्रयः। मिमीलियामिति ज्ञापकादल् च। निमयः विलयः। दीङस्तु मीनातीत्यादिना आरामान्त पाठत्वाद् घण्णेव—उपादायः।

**४२१. ग्रह-वृ-दृ-गम-वश-रणेभ्यः।**

ग्रहः। बाहुल्यात् स्वयंग्राहः। वरः आदरः। वृ-द्रोरेवेति नियमात् न ऋरामान्तरात्— हारः कारः। दीर्घऋरामात्तु कीर्यतेऽनेनेति करः।

**४२२. उपेन्द्राददः, नेर्णश्च, अदो घसलृ घण्णलोः।**

विघसः निघसः न्यादः।

---

प्रस्तराणामुच्चयो यत्र स शिलोच्चयः पर्वतः। अधिकरणे अल्। प्रश्रयः प्रणयः। ननु मीनाति मिनोतीत्यादीनां घण् विषये तदपवादादल उत्पत्तेः प्रागेवारामान्तपाठः कथं न स्यात्? तत्राचष्टे—ज्ञापकादल् चेति। मिमीलियां खललो रात्वनिषेध इत्यत्र एभ्यः अल् च भवतीति ज्ञापितम्, अन्यथा निषेधाप्रसक्तेः, अथ च तत्र यद्यारामान्तपाठः स्यात्तर्हि सूत्रकरणमनर्थकं भवेत्। तस्मादल् च स्यादात्वनिषेधश्चेत्युभयथासौ विधिरित्याशयः। निमय इति मीनाति मिनोतीति द्वयोरपि रूपम्। विलय इति लीङ् श्लेषणे। आरामान्त-पाठत्वादिति—ईशत्वाभावादित्यर्थः। उपादाय इति—उप-आङ् पूर्व दीङ् क्षये घण्, आतोयुक्।

**अमृता०**—४२१. ग्रहेति। ग्रहादिभ्यः षड्भ्य उत्तरे अल् स्यात्। स्वयंग्राह इति स्वयंग्रहण मित्यर्थः। बाहुल्याद् भावे घण्। वृद्रोरेवेति—ऋरामान्तेषु तयोरेव ग्रहणान्नान्येषां ऋरामान्तानामल्, अतस्तेभ्यस्तु घण्णेव। कर इति कृविक्षेपे, हस्त इत्यर्थः। अकार ककार ओङ्कार फुत्कार चीत्कार प्रभृतयस्तु कारशब्देन पश्चात् समासान्ता ज्ञेयाः। अतः—"वर्णात् कार" इति वार्त्तिकमकिञ्चित्करमित्यन्ये।

**अमृता०**—४२२. उपेन्द्रादिति। उपेन्द्रात् परस्मात् अद भक्षणे धातोरुत्तरे अल् स्यात्। निपूर्वात्तु अद उत्तरे अल् णश्च भवति। घणि अलि च परे अदो घसलृ आदेशो भवति। न्याद इति णपक्षे। उपेन्द्रादिति किम्—घासः।

---

**बाल०**—पण। परिमाणेऽर्थे पण उत्तरे अल् भवति। शाकस्य पण इति पण व्यवहारे स्तुतौ च। पणः किं, पणस्य किमर्थमिति प्रश्ने पणशब्दस्यार्थमाह परिमिता मुष्टिरिति। ततश्च शाकस्य पण इति मुष्टिपरिमितः शाक इत्यर्थः। शिष्टप्रयोगमपि दर्शयति नरा इति। नित्यं पणः परिमाण इति भाषावृत्तिसूत्रं। मूल्यादौ वाच्ये पण उत्तरे अल् भवतीतितु जुमरमतं, एतदपि शिष्टसम्मतमेव पणो द्यूतादिषुत्सृष्टे भृतौ मूल्ये धनेऽपि चेति नानार्थवर्गः॥ ४२०॥

**बाल०**—अनु। अनुपेन्द्रादुत्तरस्मान्मद उत्तरे अल् भवति। विद्यामद इति मदी हर्षे। अनुपेन्द्रादिति किं प्रमादः॥ ४२१॥

**४२३. अनुपेन्द्राद् व्यधि जपिभ्यां; वा स्वनहसाभ्यां, समुप विनि-भ्यश्च यमः, नेर्गद-नद-पठ-स्वनेभ्यः ।**

व्यधः जपः, स्वनः स्वानः, संयमः संयामः, चकराद् यमः यामः, निगदः निगादः ।

**४२४. क्वाण-क्वण-निक्वाण-निक्वणाः, वीणाशब्दे तु प्रक्वाण प्रक्वणादयः साधवः ।**

---

**अमृता०**—४२३. अनुपेन्द्रादिति । उपेन्द्ररहिताभ्यां व्यधिजपिभ्यामुत्तरे अल् स्यात्, उपेन्द्ररहिताभ्यां स्वन-हसाभ्यामुत्तरे अल् वा स्यात्, समुपविनि—पूर्वाद् यम उत्तरे अल् वा भवति तथा निपूर्वेभ्यो गद-नद-पठ-स्वनेभ्य उत्तरे विभाषयाल् भवति, पक्षे च घण् । व्यध इति व्यध ताडने, वेधनमित्यर्थः । व्याध इति तु कर्त्तरि ण उक्तः । एवं जपः, मन्त्रस्य सुलघूच्चारणम्, पठनं बा । हसः हासः, उपयमः उपयामः, नियमः नियामः । चकारादनुपेन्द्रादिति च सम्बध्यते, तेन यमः याम इत्यपि । निनादः निनदः, निपाठः निपठः, निस्वानः निस्वन इति ।

**अमृता०**—४२४. क्वाणेति । क्वण शब्द इति धातो र्घण्णल् प्रत्ययाभ्यां क्वाणादयः साधवो भवन्ति । प्रपूर्वादेव क्वणते र्वीणा शब्द वाचित्वम्, उपेन्द्रान्तर पूर्वात्तु न प्रयुज्यत इत्येव साधुता ।

---

**बाल०**—प्रम । हर्षे वाच्ये प्रमदसम्मदौ साधू । अनुपेन्द्रादित्युक्त । अतः प्रमदसम्मदौ न सिध्यत इति निपातसूत्रं कृतं । मुत् प्रीतिः प्रमदो हर्षः प्रमोदामोदसम्मदा इत्यमरः । सम । पशुसङ्घे वाच्ये समजः साधू । समज इति अज गतौ क्षेपणेच अल्विधानं वीभावाभावश्च निपातफलं । पशूनां समजोऽन्येषां समाज इत्यमरः उदजः । पशुसङ्घे प्रेरणेच वाच्ये उदजः साधुः । उदज इति अल् विधानं वीभावाभावश्च निपातफलं । उदजस्तु पशुप्रेरणमित्यमरः । सूत्रे पशुप्रेरणयोरिति पाठो बहुषु पुस्तकेषु दृश्यते स त्वसङ्गत एवेति ज्ञेयं । समाज इति वैष्णवानामिति शेषः । अजेर्वीघणं बिना रामधातुके इति सूत्रे घणं बिनेत्युक्तमतो वीभावाभावः । उदाज इति यादवानामिति शेषः । उद्गमनमित्यर्थः ॥ ४२२ ॥

**बाल०**—ग्लहो । अक्षस्य पणे वाच्ये ग्लहः साधुः । अक्षः पाशकः । ग्लह इति ग्रह उपादाने अल् सिद्ध एव अर्थविशेषे ग्लहादेश एव निपातफलं । पणोऽक्षेषु ग्लह इत्यमरः । उप । गर्भाधाने वाच्ये उपसरः साधुः । उपसर इति सृ गतौ भ्वादिः । ऋ सृ गतौ ह्वादिर्द्वयोरेव ग्रहणं । वृद्रोरेवेत्युक्तमतोऽल् न भवतीत्यर्थः । विशेषेऽल् विधानमेव निपातफलं । प्रजनः स्यादुपसर इत्यमरः । साधू इति एतौ ग्लहोपसरौ साधू इत्यर्थः ।।४२३

**बाल०**—ह्व । ह्वेञ स्पर्द्धायमित्यस्य निहवादयः साधवः । निपातादल् विधानं ह्वेञो हुश्च । न्यभिव्युपेभ्यो ह्वेञो हुश्चेति क्रमदीश्वरसूत्र । आह्वाने वाच्ये हरः साधुः ।

**४२५. पणः परिमाणे ।**

शाकस्य पणः । पणः किम् ? परिमिता मुष्टिः । नराः क्षीणपणा इवेति भट्टिः ।

**४२६. अनुपेन्द्रान्मदः ।**

विद्यामदः । बाहुल्यात् उन्मदः ।

**४२७. प्रमद-सम्मदौ हर्षे, समजः पशुसङ्घे, उदजः पशुसंघप्रेरणयोः साधवः ।**

अन्यत्र समाजः उदाजः ।

---

**अमृता०**—४२५. पण इति । पण व्यवहार स्तुतौ चेत्यस्माद् धातो रल् स्यात् परिमाणार्थे । शाकस्यपण इति—अत्र पण शब्देन शाकस्य परिमिता मुष्टिरुच्यते, मुष्टि परिमितः शाक इत्यर्थः । बाहुल्यात् परिमाणेतरार्थेऽपि दृश्यत इति भट्टिप्रयोगेण प्रमाणयति—नराः क्षीणपणा इति । इह तु धनमात्रं लक्ष्यते । पणो द्यूतादिषूत्सृष्टे भृतौ मूल्ये धनेऽपिचेत्यमरवचनात् ।

**अमृता०**—४२६. अनुपेन्द्रादिति । उपेन्द्ररहितात् मद उत्तरे अल् स्यात् । विद्यामद इति मदोहर्षे, अत्रगर्व उच्यते । अनुपेन्द्रादिति किम्—प्रमादः उन्मादः ।

**अमृता०**—४२७. प्रमदेति । प्रपूर्वात् समपूर्वाच्च मदः अल् प्रत्ययेन प्रमद-सम्मदौ निपात्येते हर्षे अर्थे, पशुसङ्घे वाच्ये सम्पूर्वस्य अज गतौ क्षेपणे चेत्यस्य अला समज इति साधुः स्यात् तथा पशसंघस्य प्रेरणे अर्थे उत्पूर्वस्य अज उदज इत्यल् प्रत्ययेन निपात्यते । एषां साधुत्वं रूढ्यर्थं तथा अजे र्वीभावस्याभावार्थम् । पशूनां समजोऽन्येषां समाज इति, उदजस्तु पशुप्रेरणमित्यमरः । पशुसङ्घप्रेरणयोरिति पाठस्तु मुद्राप्रमादः ।

---

हवो हुतावित्यमरः । युद्धे वाच्ये आहवः साधूः । संग्रामाभ्यागमाहवा इत्यमरः । आहावस्तु निपाने वाच्ये साधुः । निपानमुपकूपजलाशयः । आहावस्तु निपानं स्यादुपकूलजलाशये इत्यमरः । हव । भावे वाच्ये हवः साधुः । वृद्धोरेवेत्युक्तमतोऽल् न स्यादिति तत्सिद्धार्थं निपातसूत्रं । हनो । भावे वाच्ये हन हिंसागत्योरित्यस्य बधघातौ साधु । घात इति सिध्यत्येव बध इत्यस्य सिद्धयर्थं निपातसूत्रं कृतं । घातोन्मन्थबधा अपीत्यमरः । सोपेन्द्रत्वेतु घण्णेव भवति, अतः प्रघातो विघात इति ॥ ४२४ ॥

**बाल०**—घनः । काठिन्यकठिनयोर्वाच्ययोर्घनः साधुः । घन इति अल् हस्य घत्वञ्च निपातफलं । काठिन्यं गुणः तत्र दध्नोघन इति, कठिने घनं दधीति । घनो मेघे मूर्तिगुणे त्रिषु मुर्त्ते निरन्तर इति नानार्थवर्गः । एत इति एते हवादयः ॥ ४२५ ॥

**बाल०**—अन्ते । देश इति देशे वाच्ये इत्यर्थः । वृत्तिमाह णत्वेन साधुरिति । तस्मिन्निति । अन्तर्घण इत्यस्यार्थमाह अन्तस्थित इत्यर्थ इति । तस्मिन्नन्तर्घणेऽपश्यन्निति भट्टिरितितु भाषावृत्तौ दृश्यते । अन्तर्घनशब्दोऽणत्व इति जुमरमतं ॥ ४२६ ॥

**४२८. ग्लहोऽक्षस्य पणे, उपसरो गर्भाधाने साधू ।**

**४२९. ह्वयते र्निहवाभिहवोपहव-विहवाः साधवः । हव आह्वाने, आहवो युद्धे, आहावस्तु निपाने, हवो भावे, सोपेन्द्रत्वे तु प्रहावः ।**

---

**अमृता०**—४२८. ग्लह इति । अक्षस्य द्युतस्य पणे वाच्ये ग्रहधातोरल् प्रत्ययेन ग्लह इति साधुः स्यात् । तथा गर्भाधाने वाच्ये उपपूर्वस्य सृधातोरल् प्रत्ययेन उपसरः साधु र्भवति । ग्रह धातो र्लत्वं तथा वृद्रोरित्युक्तनियमात् सृधातोरप्राप्तौ अल विधानं निपात कार्यम् ।

**अमृता०**—४२९. ह्वयतेरिति । ह्वेञ् स्पर्द्धायामित्यस्य अल् प्रत्ययेन निर्बहादयो निपात्यन्ते । कपिलत्वाभावेऽपि सङ्कर्षणः पुनर्गोविन्दश्च निपातफलम् । आह्वाने अर्थे तस्य अल् प्रत्ययेन हव इति साधुः स्यात् । हवोहुतावित्यमरः । युद्धे वाच्ये आङ् पूर्वात् तस्य अला आहव इति साधुर्भवति, तथा निपाने वाच्ये आह्वयते रला आहाव इति शाधुर्भवति । अत्र सङ्कर्षणवृष्णीन्द्रौ निपातफले । भावे धात्वर्थे ( स्पर्द्धायामित्यर्थः ) तस्यैव धातो रला सह हाव इति साधुः स्यात् । उपेन्द्रपूर्वत्वेतु भावे सङ्कर्षणेन वृष्णीन्द्रेण च प्रहाव इति निपात्यते । आहूयन्ते योद्धारोऽस्मिन्निति आहवः, अधिकरणेऽल् । संग्रामाऽभ्यागमाहवा इत्यमरः । निपानं कूपादिसमीपे पशूनामुदकाधारः, तत्र पशवः पानायाहूयन्त इत्यधिकरणे अल् । आहावस्तु निपानंस्यादुपकूपजलाशय इत्यमरः ।

---

**बाल०**—अयो । करणे वाच्ये अयोघनादयः साधवः । अयोघन इति अयो हन्यते येनेति निपातादल् हस्य घत्वं च, अयो लौहं । विघन इति विहन्यते येनेति पूर्ववत् । द्रुघण इति द्रु र्हन्यते येनेति द्रुघणः शस्त्रविशेषः । द्रुघणो मुद्गरघणावित्यमरः । द्रु र्वृक्षः । द्रुघनशब्दोऽणत्व इति भाषावृत्तिमतं जुमरमतश्च । द्रुघनः कुठार इति भाषा-वृत्तिः । णत्वे द्रुघण इनि केचिदितिच भाषावृत्तिः । अयो । व्यक्तार्थमेतत् । अयोहननीति अयो हन्यते ययेति निपातात् टनः टित्त्वादीप् । एवं द्रुहननीति । स्तम्ब । करणे वाच्ये स्तम्बघनस्तम्बघ्नौच साधू । स्तम्बघन इति स्तम्बो हन्यते येनेति निपातादल् हस्य घत्वञ्च । स्तम्बो गुच्छस्तृणादिन इत्यमरः । स्तम्बघ्न इति निपातादल् हस्य घत्वं अरामहरश्च । स्तम्बघ्नश्च स्तम्बघनः स्तम्बो येन विहन्यते इत्यमरः । स्तम्बघेति पाठो बहुषु पुस्तकेषु दृश्यते स लिपिकरप्रमादज इति ज्ञेयं । निघ । निघस्तु परिमिते वाच्ये साधुः । निघ इति निपातादल् हन्तेः स्थाने घादेशश्च । विष्वक्समे निघ इत्यमरः । विष्वक्सम इति समानारोहपरिणाहे इत्यर्थः । आरोहो दैर्घ्यं परिणाहो विशालता । साधव इति एते अयोघनादयः साधव इत्यर्थः ।। ४२७ ।।

**बाल०**—गोचर । करणे अधिकरणेच वाच्ये संज्ञायां गोचरादयो घान्ताः साधवः । गाव इति इन्द्रियाणि । गोचरो विषय इति । विषया अमी, गोचरा इन्द्रियार्थाश्चेत्यमरः । प्रत्यासत्तिरत्र लक्ष्यते इति अतश्चरन्तीत्यस्य प्रत्यासन्ना भवन्तीत्यर्थो ज्ञेयः । सञ्चर इति

**४३०. हनो बधश्च भावे ।**

चकाराद् घण्णपीष्यते, घातः । सोपेन्द्रत्वेतु प्रघातः विधातः ।

**४३१. घनः काठिन्य-कठिनयोः ।**

एते साधवः ।

---

**अमृता०**—४३०. हनइति । भाववाच्ये हन उत्तरे अल् स्यात्, तत्र च तस्य बधादेशो भवति । चकार सार्थकतामाह—घण्णपीष्यत इति । उपेन्द्रपूर्वत्वे तु घण्णेव स्यात् अनुपेन्द्रे हि विधानादिति भावः, तेन च प्रघात इत्यादयः सिध्यन्ति ।

**अमृता०**—४३१. घन इति । काठिन्य—कठिनयो र्वाच्ययो हन्ते रल् प्रत्ययेन घन इति साधुः स्यात् । हस्य घत्वमत्रनिपातफलम् । कठिनस्य भावो गुणः काठिन्यम् । तत्र पयसो घनः, कठिने घनं दधि । घनो मेघे मूर्त्तिगुणे त्रिषु मूर्त्ते निरन्तर इत्यमरः । एत इति हवादयः साधव इत्यर्थः ।

---

सञ्चरः कश्चित् । इत्यादीत्यादिपदेन वहन्त्यनेनेति वहः कश्चित् । व्रजन्त्यस्मिन्निति व्रजो गोष्ठं । व्यजन्त्यनेनेति व्यजो व्यजनं, अत्र वीभावाभावश्च निपातफलं । आपणन्तेऽस्मिन्नित्यापणः क्रयविक्रयस्थानं । निगच्छन्त्यनेनेति निगमो वेद इति । अन्ये चेति । उक्तेभ्योऽन्येच संज्ञाशब्दा बर्त्तन्ते, तेतु अमरकोषादौ ज्ञेया इति ॥ ४२८ ॥

**बाल०**—छादे । प्रायेण करणाधिकरणयोर्वाच्ययोः छादेरुत्तरे घो भवति । करणाधिकरणयोः प्रयोगप्राचुर्यमस्तीत्यभिप्रायेणेत्युक्तं । एको । एक उपेन्द्रो यत्र तादृशस्य छादेर्घे परे वामनो भवति । प्रच्छद इति छद सम्बरणे चुरादिः प्रच्छादयन्त्यनेनेति करणे घः वामनः णेर्हरं सर्वाच्छादकवस्त्रमित्यर्थः । समुपाच्छादयन्त्यनेनेति करणे घः णेर्हरः । छादेर्वामनो घ इति योगो विभक्तव्यः अत एतोपेन्द्रत्वाभावेऽपि घे परे छादेर्वामनो भवतीति ज्ञेयं । तेन दन्तच्छदोरश्छदादयः सिध्यन्ति, दन्तान् छादयन्त्यनेनेति दन्तच्छद ओष्ठः ॥ ४२९ ॥

**बाल०**—उर । उरश्छादयन्त्यनेनेति उरश्छदः कवचः । योगविभागेन मया यदुक्तं तस्यैव प्रपञ्चरूपं उरश्छदेति सूत्रं क्वचित् ग्रन्थे दृश्यते ॥ ४३० ॥

**बाल०**—व्यवा । क्रियाव्यतिहारे गम्यमाने व्यवादिपूर्वाद्धातोरुत्तरे लक्ष्म्यां णो भवति । क इत् । संपू । क्रियाभिव्याप्तौ गम्यमानायां सपूर्वाद्धातोरुत्तरे ब्रह्मणि इन् न भवति । आदि । तयोः पदयोः आदिसर्वेश्वरस्य च वृष्णीन्द्रो भवति । चशब्दोपादानस्य फलमाह चकारादिति । धातोरिति षष्ठ्यन्तं । यथाप्राप्तं स्यादेवेति । यस्य धातोर्वृष्णीन्द्रः प्राप्तस्तस्य वृष्णीन्द्रो भविष्यति, यस्य गोविन्दः प्राप्तस्तस्य गोविन्दो भविष्यतीत्यर्थः । गौरादित्वादीविति अण् केशवगौरादिभ्य इत्यनेनेति शेषः । मिथ इति परस्परमित्यर्थः । व्यावहासीति हस हसने अत्र धातोर्वृष्णीन्द्रो भूतः । व्यावक्रोशीति क्रुश आह्वाने अत्र

## ४३२. अन्तर्घणो देशे ।

णत्वेन साधुः । तस्मिन्नन्तर्घणे देशे इति भट्टिः । अन्तस्थिते इत्यर्थः ।

## ४३३. अयोघन-प्रघन-विघन-द्रुघणाः करणे, अयोहननी द्रुहननी च स्त्रियाम्, स्तम्बघन-स्तम्बघ्नौ च, निघस्तु परिमिते साधवः ।

## ४३४. गोचर-सञ्चर-वह-व्रज-व्यजापण-निगमादयो घान्ता करणाधिकरणयोः संज्ञायां साधवः ।

---

**अमृता०**—४३२. अन्तरिति । अन्तः शब्दपूर्वस्य हन्ते रल् प्रत्ययेन अन्तर्घन इति साधुः स्याद् देशे वाच्ये । हस्य घत्वं नस्य णत्वञ्च निपातफले । अन्तर्घणे इति भट्टिप्रयोगस्यार्थः—अन्तस्थित इति ।

**अमृता०**—४३३. अयोघन इति । करणे वाच्ये हन्तेरल् प्रत्ययेन अयोघनादयः साधवः स्युः, करणे वाच्ये हन्ते यक्ष्म्यां टन प्रत्ययेन अयोहननी द्रुहननी च साधू स्याताम्, स्तम्बपूर्वस्य हन्ते रल् कप्रत्ययाभ्यां स्तम्बघन-स्तम्बघ्नौ करणे साधू भवतः, तथा निपूर्वस्य हन्तेरल् प्रत्ययेन निघ इति साधुः स्यात् परिमिते वाच्ये । सर्वत्र घत्वं निपातनात्, अन्तिमे संसारहरश्च । अयो लौहं हन्यते येन सोऽयोघनः, लौहघाती यन्त्रविशेषः । प्रहन्यते गम्यते येव सप्रघनो गृहैकदेशः, अलिन्द इत्यर्थः । विहन्यते तमो येन सविघनश्चन्द्रः । द्रुद्रुमो हन्यते येन सद्रुघणः कुठारः, अत्र णत्वञ्च निपातात् । णत्वाभावश्च केषाञ्चिन्मतम् । टित्त्वादीप् द्रुहननीत्यादि । निघ इति दैर्घ विस्तारयोः सम संस्थान इत्यर्थः । परिघ इति च साधुरिति वक्तव्यम् । परिघोऽस्त्रविशेषः ।

**अमृता०**—४३४. गोचरेति । करणाधिकरणयो र्वाच्ययोः गोचरादयो घप्रत्ययेन संज्ञायां साधवो भवन्ति । गोचर इत्यधिकरणे घः, घइत् अरामशेषः, गाव इन्द्रियानि,

---

धातोर्गोविन्दो भूतः, मिथः क्रोशनमित्यर्थः । व्यावहारीति हृञ हरणे मिथोव्यवहार इत्यर्थः । व्यात्युक्षीति उक्ष सेचने मिथःसेचनमित्यर्थः । बाहुल्यादिति । बाहुल्याद्व्यवकृष्टिरित्यादिच भवतीति कालापा वदन्ति । रौतेरिति रुशब्दे इत्यस्मादित्यर्थः, इण नीति शेषः । सांराविणमिति अत्रापि धातोर्वृष्णीन्द्रो भूतः ।। ४३१ ।।

**बाल०**—डुरा । क्रियया निर्वृत्तं निष्पन्नं क्रियानिर्वृत्तं तस्मिन्नर्थे डुरामेतो धातोरुत्तरें क्त्रिमो भवति क इत् । क्रिया धात्वर्थः । कृत्रिममिति डु कृञ करणे कंसारित्वाद्गोविन्दाभावः ।। ४३२ ।।

**बाल०**—टुरा । भावे वाच्ये टुरामेतो धातोरुत्तरें पुंसि अथुर्भवति । वेपथुरिति टु वेपृ चलने वेपथुः कम्पः । श्वयथुरिति टु ऐ ओ श्वि गतिवृद्धयोः, श्वयथुः शोथः । घणलथुकयः पुंसीत्युक्तं, तथापि कथं पुंसीति कृतमिति न निश्चतं । किंवास्यैव कथनं पूर्वत्र ग्रन्थकृता कृतमिति ।। ४३३ ।।

गावश्चरन्त्यत्र गोचरो विषयः। प्रत्यासत्तिरत्र लक्ष्यते। सञ्चरत्यनेन सञ्चर इत्यादि। अन्ये च संज्ञाशब्दा अमरकोषादौ ज्ञेयाः।

**४३५. घः प्रायेण करणाधिकरणयोः, एकोपेन्द्रस्यछादे र्वामनो घे।**

उपच्छदः प्रच्छदः। अनेकोपेन्द्रत्वे तु समुपाच्छादः।

**४३६. उरश्छदादयश्च वामनेन साधवः।**

---

विषया रूपरसादयः। चरन्तीत्यस्यार्थमाह—प्रत्यासत्तिरिति, समीपीभवन्तीत्यर्थः। सञ्चरो रथादिः, करणे घः। इत्यादिपदेन—वहन्त्यनेन वहो गर्दभादिः, व्रजन्त्यस्मिन् व्रजो गोष्ठम्, व्यजन्त्यनेन व्यजो व्यजनम्, आपण्यन्तेऽस्मिन् आपणः क्रयविक्रय स्थानम्, निगच्छन्ति जानन्ति भगवन्तमनेनास्मिन् वा निगमो वेदः। आदिपदेन भजन्त्यस्मिन् भग ऐश्वर्यादिः, निकषन्त्यस्मिन् निकषः सुवर्ण परीक्षण प्रस्तर इत्यादि वेदितव्यम्।

**अमृता०**—४३५. घ इति। प्रायेण करणाधिकरणयो र्वाच्ययो र्धातोरुत्तरे घप्रत्ययः स्यात्, घेपरे एकोपेन्द्रपूर्वस्य छादे र्वामनो भवति। प्राय शब्दः प्रत्ययान्तरस्य च प्राप्ति-सूचकः, तेनक्वचिद् घणादयश्च स्युरिति भावः। उपच्छद इति छद सम्बरणे चुरादिः, उपच्छादयत्यनेनेत्यर्थः, वामनोणे हरश्च, एवंप्रच्छदो वस्त्रम्, परिच्छदोऽङ्गावरणमित्यादि। समुपाच्छाद इति—अनेकोपेन्द्रपूर्वत्वान्नतुघो नच वामनः।

**अमृता०**—४३६. उरश्छदेति। एतेवामनेन घप्रत्ययान्ता निपात्यन्ते। पूर्वत्रोपेन्द्र-पूर्वत्वे हि वामनो विहितः, ततइहपृथगुक्तिः। उरो वक्ष श्छादयत्यनेन उरश्छदो वर्म। एवं दन्तच्छद ओष्ठः। अन्येभ्यश्च घो यथा,—घटः आकरः विषय इत्यादि। संज्ञायामिति किम्—प्रहरणो दण्डः।

---

**बाल०**—यज्ञ। भावे वाच्ये पुंसि न प्रत्ययेन यज्ञादयः साधवः। याच्ञा। भावे वाच्ये लक्ष्म्यां न प्रत्ययेन याच्ञा साधु। यज्ञ इति यज देवपूजादौ निपातात् नः तवर्गस्य चवर्गः जे ञः सत्सङ्गे ज्ञः यज्ञो योगः। यत्न इति यती प्रयत्ने यत्नः प्रणिधानं। विश्न इति विछ गतौ छस्य शः, विश्नो गमनं। प्रश्न इति प्रछ ज्ञीप्सायां छस्य शः प्रश्नः पृच्छा। स्वप्न इति ञिः ष्वप शये स्वप्नो निद्रा। याच्ञेति टु याचृ याच्ञायां तवर्गस्य चवर्गः, याच्ञा प्रार्थना॥ ४३४॥

**बाल०**—सोपे। भावादौ वाच्ये सोपेन्द्रदामोदरादुत्तरे किर्भवति। क इत्। अन्तर्धिरिति डुधाञ धारणपोषणयोः आरामहरः कंसारिसर्वेश्वररामधातुके इटि उसि चेत्यनेन आरामहरः। अन्तःशब्दो णत्वविधौ धाञो ङाप् किविधौ तथा। भवेदुपेन्द्र इत्युक्तं, अतः सोपेन्द्रत्वं। अन्तर्धिरन्तर्धानं। आदिरिति आङ्पूर्वं डु दाञ दाने आदिः प्रथमः। आधिरिति आङ्पूर्वं डु धाञ। आधिर्मानसी व्यथा॥ ४३५॥

**बाल०**—उद। व्यक्तार्थमेतत्। उदधिरिति उदकं धीयतेऽस्मिन्निति निपातात् किः। धिपेषवासवाहनेष्वित्यनेन उदकस्य उदः, उदकं जलं। आदिपदेन अब्धिवारिधि-

**४३७. व्यवादिपूर्वाण्णः क्रियाव्यतीहारे लक्ष्म्याम्; संपूर्वादिनण् क्रियाभिव्याप्तौ ब्रह्मणि, आदिसर्वेश्वरस्य च वृष्णीन्द्र स्तयोः ।**

चकाराद्धातोस्तु यथाप्राप्तं स्यादेव। गौरादित्वादीप्, मिथो हसनमित्यर्थे व्यावहासी। व्यावक्रोशी व्यावहारी व्यात्युक्षी। बाहुल्यात् व्यवक्रुष्टि रित्यादि कलापे। सर्वतोरव इत्यर्थे संपूर्वात् रौतेः सांराविणम्।

---

**अमृता०**—४३७. व्यवादीति। क्रियाव्यतीहारे गम्यमाने व्यवादिपूर्वाद् धातोरुत्तरे लक्ष्म्यां णप्रत्ययः स्यात्। तथा क्रियाभिव्याप्तौ गम्यमानायां संपूर्वाद् धातोरुत्तरे ब्रह्मणि इनण् प्रत्ययो भवति। उभयत्र भावे एवेति ज्ञातव्यम्। तयोः प्रत्यययोः परयोरादिसर्वेश्वरस्य च वृष्णीन्द्रो भवेत्। पूर्वत्र णराम इत्, अरामशेषः, परत्रतु ण्इत्। ननु आदिसर्वेश्वरस्य यो वृष्णीन्द्र इह विधीयते स किं धातो रुपेन्द्रस्य वेति संशये स्पष्टयति—चकारादिति। समुदायस्यादौ यःसर्वेश्वर स्तस्य हि वृष्णीन्द्रो विहितः, चकारेण धातोरपीत्यर्थः। ननु च धातो र्वृष्णीन्द्रः कथं सम्भवेत्? तत्राह—यथाप्राप्तमिति। आदिसर्वेश्वरस्य वृष्णीन्द्रविधानेन धातो र्यथाप्राप्तं गोविन्द वृष्णीन्द्रादिकन्तु न बाध्यते, तत्तदपि स्यादेव यस्य यत् सम्भवेदित्याशयः। गौरादित्वादिति—अण् केशवगौरादिभ्य इत्यनेन विधास्यते ईप्। व्यावहासीति—व्यव पूर्व हस हसने, अत्र व्यव इत्यस्य तथा धातोश्च उद्धवारामस्येति वृष्णीन्द्रः। व्यावक्रोशीत्यत्र क्रुश आह्वाने, आदि सर्वेश्वरस्य वृष्णीन्द्रः, धातोस्तु तदसम्भवात् लघूद्धवस्येति गोविन्दः। व्यावहारीति—व्यव-हृञ् हरणे, व्यात्युक्षीति—व्यति-उक्ष सेचने, अत्रादिसर्वेश्वरस्य वृष्णीन्द्रः, धातो स्तु नगोविन्दः सम्भवेन्न वा वृष्णीन्द्रः। बाहुल्यादिति—स्त्रियां विहितप्रत्ययेषु वाऽसरूपविधेरप्रवृत्तेः, क्ति र्लक्ष्म्यां भावे इति नप्राप्नोति, तथापि बाहुल्यात् क्ति र्विधीयत इति तदाशयः। साराविणमिति—संपूर्व रु शब्दे, भावे ब्रह्मणि इनण्, अत्रादि सर्वेश्वरस्य धातोरन्तस्य च वृष्णीन्द्रः। एवं द्रु गतौ—सांद्राविणम्, रषऋद्वयेभ्य इति णत्वम्।

---

जलधिप्रभृतयो ज्ञेयाः। परोक्षातीते क्वसुकिकाना इत्यत्र सूत्रे क्वसुकी परपद इत्युक्तमतोऽधोक्षजाभस्य केः परपदविषयत्वात् दधिरित्यादौ कर्त्तर्येव तस्योदाहरणं दत्तं। अस्य केस्तु भावादौ विहितत्वात् भावस्यैव प्रधानत्वमतोऽस्य कर्त्तर्यादिवाच्ये कदाचित् सम्भवात् नाधोक्षजाभत्वं तस्मान्न द्विर्वचनादिसम्भावनापीत्यर्थः ॥ ४३६ ॥

**बाल०**—क्ति। भावे वाच्ये धातोरुत्तरे लक्ष्म्यां क्तिर्भवति। क इत्। कृतिरिति डु कृञ करणे नेड् वन् तीत्यनेन भूतिरित्यत्र इड् निषेधः। चरफलयोरस्य उस्त इति पूर्वोक्तं सूत्रं लिखितं। चूर्त्तिरिति धातोरवप्रागिदुतोरित्यादिना त्रिविक्रमः। ह्लादेर्वामन

## ४३८. डुरामेतः क्त्रिमः क्रिया निर्वृत्ते ।

करणेन निर्वृत्तं कृत्रिमम् । एवं पाकेन पक्त्रिमम् ।

## ४३९. टुरामेतोऽथुर्भावे पुंसि ।

वेपथुः श्वयथुः ।

---

**अमृता०**—४३८. डुरामेत इति । क्रियाया निर्वृत्तं निष्पन्नं क्रियानिर्वृत्तम्, तस्मिन्नर्थे डुराम इत यस्य तादृश धातोरुत्तरे क्त्रिम प्रत्ययः स्यात् । मण्डूकप्लुत्या भावे कर्तृवर्जिते च कारके इत्यनुवर्त्तते, कइत् । कृत्रिमिमिति—डुकृञ् करणे, कंसारित्वाद् गोविन्दाभावः । पक्त्रिममिति डुपचष् पाके, एवं टुवप उप्त्रिममिति ।

**अमृता०**—४३९. दुरामेत इति । टुराम इत् यस्य तादृशधातोरुत्तरे भावे अथु प्रत्ययः स्यात् । पुंसीति—घणलथुकयः पुंसीति प्राग् विहितस्य ह्यनुवादः । वेपथुरिति टुवेपृ चलने, कम्प इत्यर्थः । श्वयथुरिति टुओश्वि गतिवृद्ध्योः, गोविन्दः, शोथरोग इत्यर्थः । एवं टुदु-दवथु रित्यादि ।

---

इति ह्लादेर्वामनः क्तिविष्णुनिष्ठयोरित्यस्योल्लेखः । प्रह्लत्तिरिति ह्लादी सुखे । अविष्णु-पदान्तत्वादिति टवर्गस्य अविष्णुपदान्तत्वात् नतु विष्णुपदान्ताट्टवर्गादनामनवतिनगरीणा-मित्यनेनन टवर्गत्वनिषेधः । अतस्तवर्गस्य टवर्गः, अतो घट्टिरिति । घट्टिरिति घट चेष्टायां ॥ ४३७ ॥

**बाल०**—चाय । क्तौ परस्यां चायृ पूजानिशामनयोरित्यस्य स्थाने चिर्भवति । अपचितिः पूजेति । पूजा नमस्यापचितिरित्यमरः । वन व्यापृतौ बन्धने प्रीतौ सम्भक्तौ चेत्यस्य भ्वादेर्वतिः साधुः । वतिरिति निपाताद्धरिर्वेणुहरः । हरिवेण्वन्तसहजानिटा-मित्यादिना तु वनु याचन इत्यस्य तनादिसाहचर्यादिव तनादेर्हरिवेणुहरो भवति । दरि । व्यक्तार्थमेतत् । दरिद्रातेरिति दरिद्रा दुर्गतौ । अत्रारामहराभावो निपातफलं । अन्यथा दरिद्रातेरारामहर इत्यादिना आरामहरः स्यात् । साधू इति एतौ साधू इत्यर्थः । दरिद्रातेरिति । याचोरेव परयोर्दरिद्रातेरालोपो भवतीति रासवदत्ता वदन्ति, रासवदत्ता इति कालापा इतिवत् । वकारेऽपि दृश्यते इति, दरिद्रातेरालोप इति शेषः । स्थानमाह ददरिद्र्वानित्यत्रेति । दरिद्रातेरारामहरो वैष्णवादि सन् युक् टन्वर्जित-रामधातुके भूतेशे तु वा, इतितु अस्माकं सूत्र तस्माद्दरिद्रातेरारामहरे प्राप्ते निपातसूत्रमिदमिति । कण्डूयतेरिति आरामहरो रामधातुक इत्यनेनारामहरे सति यवयोर्हरबल इति य लुक् न भवतु इति मन्दधियां शङ्कानिरासार्थमाह कण्डातेः कण्डूतिरिति ॥ ४३८ ॥

**बाल०**—हरि । आशीर्विषये गम्ये कर्त्तरि वाच्ये हरिवेण्वन्तानां सहजानिटाञ्च सम्बन्धे क्तिर्भवति, हरिषेणुहरश्च न भवति । अत्र हरिवेण्वन्तत्वं सहजानिट्त्वञ्च घटते । वनु याचने तनु सूक्ष्मकरणे इत्यनयोस्तु हरिवेण्वन्तत्वं सहजानिट्त्वं न घटते, अत

## ४४०. यज्ञ यत्न विश्न प्रश्न स्वप्ना भावे पुंसि, याच्ञा लक्ष्म्यां नप्रत्ययेन साधवः।

## ४४१. सोपेन्द्रदामोदरात् कि र्भावादौ।

**अमृता०**—४४०. यज्ञेति। भाववाच्ये पुंसि न प्रत्ययेन यज्ञादयः पञ्च साधवो भवन्ति। याच्ञा इति तु लक्ष्म्यां साधुः। लिङ्गविशेषे विधानमात्रमिह साधुता। यज्ञ इति यज देवपूजादिषु, तवर्गस्य चवर्गः, जञोः सत्सङ्गे ज्ञः। यत्न इति यती प्रयत्ने, प्रणिधानमित्यर्थः। इडभावश्चात्र निपातात्। विश्न इति विच्छ गतौ, छस्य शः, पूर्ववदिडभावः। प्रश्न इति प्रच्छ ज्ञीपसायाम्, स्वप्न इति ञिष्वप् शये, निद्रेत्यर्थः। याच्ञेति टुयाचृ याच्ञायाम्, निपातादिडभावः।

**अमृता०**—४४१. सोपेन्द्रेति। भावादौ वाच्ये उपेन्द्रपूर्वपदाद् दामोदर धातोरुत्तरे कि प्रत्ययः स्यात्। कइत्। आदि पदेन कर्त्तृ वर्जिते च कारके इत्यस्य ग्रहणम्। अयं किः खलु नह्यधोक्षजाभसंज्ञ इति द्विर्वचनाभावः। क्वसुकी परपदे इत्यनेन तत्संज्ञक के परपदैकविषयत्वेन कर्त्तर्येवोदाहृतत्वात्, अस्य तु भावे कर्त्तृवर्जिते च कारके विधानेनात्मपदविषयत्वान्न हि द्विर्वचन प्रसङ्गइति विवेच्यम्। अन्तर्धिरिति—डुधाञ्, आरामहरः

---

एकत्रैवोभयं लक्षणं ग्रन्थकृता कृतमिति यावत्सम्भवस्तावन्न्यायोऽप्यत्र द्रष्टव्यः। भणादेस्त्विति नेड्-वन्-ति-त्रादौ भणादिवर्जमिति सूत्रे भणादिवर्जमित्युक्तं, अतो भणादेरिड् भवत्येवेति। भणितिरिति भण शब्दे। निपठितिरिति पठ व्यक्तायां वाचि। निगृहीतिरिति ग्रह उपादाने ग्रहेरिटस्त्रिविक्रमोऽनधोक्षज इति इटस्त्रिविक्रमः। उपस्निहितिरिति ष्णिह प्रीतौ। निकुचितिरिति कुच कौटिल्ये। प्रथितिरिति प्रथ प्रख्याने। इत्यादीत्यादिपदेन उदितिमुदितिप्रभृतयोऽपि ज्ञेयाः। उदितिरिति वद व्यक्तायां वाचि, मुदितिरिति मुद हर्षे॥ ४३९॥

**बाल०**—ॠरा। ॠरामान्तात् ल्वादेश्च उत्तरस्याः क्ते स्थाने निर्भवति। ल्वादिर्गणः। ग्ला। ग्लै हर्षक्षये। हेतितु ओहाङ गतौ ओहाक त्यागे द्वयोरेव ग्रहण, ज्या वयोहानौ, म्लै गात्रविनामे, ञि त्वरा सम्भ्रमे इते तेभ्य श्चोत्तरस्याः क्तेः स्थाने निर्भवति। नतु। पृणातेरुत्तरस्याः क्तेः स्थाने निर्न भवति। ॠरामान्तत्वात् नि. स्यादिति निषेधः कृतः। कीर्णिरिति ॠरामस्येर् कंसारावित्यनेन इर्। लूनिरिति लूञ छेदने ज्याधातो र्ल्वादित्वात् जीनिरिति भवति, किन्तु सङ्कर्षणे सति श्याश्विव्याज्येति त्रिविक्रमः। ग्लानिरिति। एवं हानिः ज्यानिः म्लानिरिति। ननु ज्याधातोर्जीनिरिति भवतीत्युक्तं। तर्हि कथं ज्यानिरित्युच्यते इति चेत्तत्रोच्यते यदा ल्वादित्वात् क्तेर्निः क्रियते, तदा सङ्कर्षणे कृते जीनिरिति भवति। यदातु ग्लाहेत्यादिना निः क्रियते, तदा सङ्कर्षणाभावेन ज्यानिरिति। अन्यथा ग्लाहेत्यादिसूत्रे ज्याधातोरुपादानमनर्थकं स्यादिति। ज्वरत्वर इत्यादिनेति अनेन ससर्वेश्वरस्य वस्य ऊट्। पूर्त्तिरिति पॄ पालनपूरणयोः ओष्ठचोद्धवस्य ॠत उर् कंसारावित्यनेन उर्॥ ४४०॥

अन्तर्द्धिः आदिः आधिः ।

**४४२. उदध्यादयश्च साधवः ।**

**४४३. क्ति र्लक्ष्म्यां भावे ।**

कृतिः, नेड्वन्तीति भूतिः । चरफलयो रस्य उस्ते—चूर्त्तिः । ह्लादे

---

कंसारि सर्वेश्वरेत्यादिना आरामहरः । अन्तः शब्दो णत्वविधौ धाञो ङाप् कि विधौ तथेति अन्तः शब्दस्योपेन्दत्वम्, तिरोधानमित्यर्थः । आदिरिति—आङ् पूर्व डुदाञ्, प्रथम इत्यर्थः । आधिरिति—आङ्-डुधाञ्, मनसो व्यथेत्यर्थः । एवं विधिः निधिः परिधि रित्यादयश्च ।

**अमृता०**—४४२. उदध्यादय इति । उदकादिशब्दे कर्मपूर्वपदे धाञः किप्रत्ययेन उदधि प्रभृति शब्दा निपात्यन्ते । उपेन्द्रतरपूर्वपदेऽधिकरणे संज्ञायामेवात्र किविधे निपात-फलम् । उदकं धीयतेऽस्मिन् उदधिः समुदः, "धिपेषवास वाहनेषु" इति वक्ष्यमाणेन उदकस्य उवः । एवं जलधिः बरिधिः वार्धिः इषुधिरित्यादि ।

**अमृता०**—४४३. क्तिरिति । भावे वाच्ये धातोरुत्तरे लक्ष्म्यां क्ति प्रत्ययः स्यात् । क इत् । कृतिरिति डुकृञ् करणे, करणमित्यर्थः । कित्वाद् गोविन्दविरहः । चूर्त्तिरिति चर गतौ, चरफलयोरस्येति उः, धातोरवः प्रागिदुतोरिति त्रिविक्रमः । प्रह्लत्तिरिति

---

**बाल०**—सम्प । भावे वाच्ये सम्पदादेरुत्तरे लक्ष्म्यां क्विप्क्ती भवतः । इत्या-दीत्यादिपदेन विपत्तिः प्रतिपत्तिरिति । आकृतिगणोऽयमिति तस्मात् शिष्टप्रयोगानुसारेण अन्यस्मादपि धातोर्भावे क्विप्क्ती भवत इति ॥ ४४१ ॥

**बाल०**—ऊत्या । व्यक्तार्थमेतत् । वेञ इति वेञ तन्तुसन्ताने इत्यस्य ऊतिरिति भवतीति पुरुषोत्तमो वदतीति इदमेव अस्माकमपि मतं । ऊतिरित्यत्र त्रिविक्रम एव निपातफलं । अवधातोः क्तौ ऊटि कृते ऊतिरिति सिध्यत्येव अतस्तदर्थं लक्षणकरणम-प्रयोजनकमेवेत्यभिप्रेत्य वेञ ऊतिरिति पुरुषोत्तम इत्युक्तं । यु इति यु मिश्रणामिश्रणयोः यूरिति त्रिविक्रम एव निपातफलं । जु इति सौत्रो धातुः जूरित्यत्रापि निपातफलं त्रिविक्रम एव । यो इति यो अन्तकर्मणि, षिञ इति षिञ बन्धने । सातिरिति योधातुपक्षे इरामाभाव एव निपातफलं अन्यथा द्यतिस्यतिमास्थामिरित्यनेन इरामः स्यात् । षिञधातुपक्षेतु निपातादिरामस्यारामः । हीति हि गतौ वृद्धौच, हन इति हन हिंसागत्यो, हेतिरिति हिधातुपक्षे गोविन्द एव निपातफलं, हनधातुपक्षेतु निपातादरामस्येरामः । अव इति अव पालन इत्यस्येत्यर्थः । षण्वित्ति षणु दाने, सातिरिति षणुधातोः क्तौ सातिरिति सिध्यत्येव अतस्तदर्थं लक्षणकरणमप्रयोजनकमेवेत्यभिप्रेत्य पूर्वं षो षिञ वा सातिरित्युक्तं ॥ ४४२ ॥

**बाल०**—इज्या । लक्ष्मीलिङ्गविषये भावे वाच्ये इज्यादीनां सम्बन्धे क्तिर्न भवतीति वाच्यं । इजिरत्र इक्प्रत्ययान्तो ज्ञेयः । इज्याव्रज्यादयश्च साधवः । एते इति एते इज्यादयोऽष्टौ शब्दाः क्यवन्ता ज्ञेयाः । इच्छाशब्दो मृगयाशब्दश्च न क्यवन्तः किन्तु

वमिनः क्ति विष्णुनिष्ठयोः—प्रह्लत्तिः । अविष्णुपदान्तत्वान्न टवर्गत्व निषेधः—घट्टिः ।

**४४४. चायते श्चिः क्तौ, अपचितिः पूजा. वनते वंतिः, दरिद्राते र्दरिद्रातिः, कण्डूयतेः कण्डूतिः साधवः ।**

---

ह्लादी सुखे च । अविष्णुपदान्तत्वादिति—षात्परस्येत्यादौ नतु विष्णुपदान्ताट्टवर्गादनाम-नवतिनगरीणामिति निषेध उक्तः, इहतु घट धातोः टरामस्याविष्णुपदान्तत्वात् तवर्गस्य टवर्गत्वे न कोऽपि बाध इति भावः ।

**अमृता०**—४४४. चायतेरिति । क्ति प्रत्यये परे चायृ पूजानिशामनयोरित्यस्य धातोः स्थाने चिरित्यादिश्यते तथा अपचिति प्रभृतयः क्तिप्रत्ययेन निपात्यन्ते । अपचिति-रिति पूजार्थे हि निपातः । पूजा नमस्यापचितिरित्यमरः । वतिरिति—वन शब्दे सम्भक्तौ च भ्वादिः, हरिवेणुहर इह निपातफलम् । हरिवेण्वन्त सहजानिटामित्यादौ तु वनु याचने

---

ङावन्त इति ज्ञेयं । एते क्यवन्ता ज्ञेया इत्युक्तिस्तु प्राचुर्यानुसारेणेति ज्ञेयं । इज्येमि यज देवपूजादौ भावे निपातात् लक्ष्यां क्यप् । व्रज्येति व्रज गतौ भावे लक्ष्म्यां निपातात् क्यप् । भाव इति लक्ष्म्यामितिच सर्वत्र ज्ञेयं । क्रियेति डु कृञ करणे निपातात् क्यप्, तुगभावः ऋरामस्य रिश्च । कृत्येति डु कृञ करणे निपातात् क्यप् । इच्छेति इषु इच्छायां निपातात् ङाप् इषेरिच्छ च । परिचर्येति चर गतौ निपातात् क्यप्, एवं चर्येतिच । परिसर्येति सृ गतौ निपातात् क्यप्, तुगभावो गोविन्दश्च । मृगयेति मृग अन्वेषणे चुरादिररामान्तः, चुरादित्वात् णिः अरामहरः । अन्तहरे गोविन्दनिषेधः तदनन्तरं निपातात् ङाप णेर्हरा-भावस्तुगभावो गोविन्दश्च । अटाट्येति यङन्तादटाट्यधातोर्निपातात् क्यप्, विष्णुजनात् सारामयस्य हरो रामधातुक इति सारामयस्य हरः । आदिग्रहणादिति इज्याव्रज्येत्यादिसूत्र इति शेषः । समज्येति अज गतौ क्षेपणेच निपातादधिकरणे क्यप् वीभावाभावश्च । समज्या सभेति समज्या परिषदगोष्ठी । सभा·समिति·संसद इत्यमरः । निषद्येति निषीदन्त्यस्यामिति षदलृ विशरणगत्यवसादनेषु निपातात् क्यप् । सदेः प्रतिविर्वाजनः उपेन्द्रात् क्रियते तद्वदित्यनेन षत्वं । निपत्येति निपतन्त्यस्यामिति पतलृ गतौ निपातात् क्यप् । निपत्या पिच्छिलभूमिरिति, निपत्या युद्धभूमिरितितु जुमरमतं । विद्येति विद ज्ञाने निपातात् क्यप् । सोम इति उक्तं कर्म । सुत्येति षुञ अभिषवे निपातात् क्यप् । शय्येति शीङ स्वप्ने निपातात् क्यप्, शेतेः शय् कंसारि-य इत्यनेन शय् । भृत्येति डु भृञ धारणपोषणयोः निपातात् क्यप् इत्येति इन गतौ भावे करणे वा निपातात् क्यप् । जागर्येति जागृ निद्राक्षये निपातात् क्यप् । जागर्त्तेर्गोविन्दः सर्वत्रेत्यादिना गोविन्दः । उपवेशनमिति आसनमित्यर्थः, आसनमिति वा पाठः । आस्येति आस उपवेशने निपातात् क्यप् । इष्टिरित्यदयोऽपिच दृश्यन्त इति, इज्जादयः क्यवन्ता उक्ताः बाहुल्यात् इष्टिरित्या दयोऽपिच दृश्यन्त इति, यजधातोः क्तिः सङ्कर्षणः जस्य षत्वं तवर्गस्य टवर्गः । इष्टिर्यागे च्छयोरिति नानार्थवर्गः ॥ ४४३ ॥

दरिद्रातेरालोपो याचोरेवेति रासवताः। वकारेऽपि दृश्यते—ददरिद्र्वान्।

**४४५. हरिवेण्वन्त सहजानिटादीनामाशी विषये कर्त्तरि क्तिः, हरिवेणुहरश्च न।**

---

इति तनादिरेव गृहीतः, तनु साहचर्यात्। दरिद्राति रित्यत्र आरामहराभावो निपातात्। कण्डूतिरिति—यगन्त कण्डूय धातो ररामहरो रामधातुके इत्यरामहरे, वलपरत्वाभावेऽपि यरामहरो निपातफलम्। रासवता इति—रसवत् संज्ञकं व्याकरणमधीते वेद वेत्यर्थे तद्धिताण् प्रत्ययान्तः, कालापा इति वत्। याचोरेवेति—यपरे अच् ( सर्वेश्वर ) परे चैव दरिद्रातेरालोपः स्यादिति तेषां मतम्। अनेन तस्यासारस्यं सूचयन्नाह—वकारेऽपि दृश्यत इति। तस्मादत्र चारामहरे प्राप्ते हि निपात इति भावः।

**अमृता०**—४४५. हरीति। आशीर्विषये गम्ये हरिवेण्वन्त सहजानिटादीनां कर्त्तरि वाच्ये क्ति प्रत्ययः स्यात्। चकारोऽनुक्तसमुच्चये, क्तौसत्यां हरिवेणुहरो न स्यात्, चकारात् त्रिविक्रमश्च न। आदिशब्देनाख्यातोक्तानां तनुखनु वनु तृणु मनूनं ग्रहणम्। हरिवेणु हरस्य प्रतिषेधे—हरिवेण्वन्तोद्धवस्य त्रिविक्रम इति यस्त्रिविक्रमः, प्राप्नोति सोऽप्यनेन निषिध्यते। वन्ति रिति वनु याचने, तन्तिरिति तनु सूक्ष्मकरणे, उभयत्र नेड्वन्ति त्रादावितीडभावः। एवं यन्तिः रन्तिरित्यादि च। भणादे स्त्विति—तत्रैवनिषेधसूत्रे भणादे

---

**बाल०**—विष्णु। इटा सह वर्त्तमानः सेट्कः विष्णुनिष्ठायां सेट्कः विष्णुनिष्ठा सेट्कः, गुरुरस्यास्ति गुरुमान् विष्णुनिठासेट्कश्चासौ गुरुमांश्चेति विष्णुनिष्ठासेट्कगुरुमान् सचासौ विष्णुजनान्तश्च तस्मात् प्रत्ययान्ताच्चोत्तरे भावे वाच्ये लक्ष्म्यां ङाप् भवति। ननु क्तिरिति। ङापोऽपवादत्वादिति शेषः ईहेति ईह चेष्टायां ईह धातोर्विष्णुनिष्ठासेट्कत्वं गुरुमत्त्वं विष्णुजनान्तत्वञ्चास्ति। एवं ऊहेत्यादौच। ऊहेति ऊह वितर्के। इन्देति इदि परमेश्वर्ये सतसङ्गात् पूर्वो वामनोऽपि गुरुरित्युक्तमतो गुरुमत्त्वं। शिक्षेति शिक्ष विद्योपादाने। व्यतीहा व्यतीक्षेत्यपीति भवतीति शेषः। नन्वत्र व्यवादिपूर्वात् णः क्रियाव्यतीहारे लक्ष्म्यामित्यनेन णः कथं न स्यादिति चेत्तत्राह बाहुल्यान्नतु ण इति। प्रत्ययान्तादित्यस्योदाहरणं दर्शयति चिकीर्षेत्यादि। चिकीर्षेति सनन्तानृङाप्। अटाटेति यङन्तानृङाप् विष्णुजनात् साराम यस्य हरो रामधातुक इत्यनेन सारामयस्य हरः कण्डूयेति यङन्तानृङाप्। दीप्तिरिति दीपी दीप्तौ गुरुमत्त्वं विष्णुजनान्तत्वञ्चास्ति किन्तु विष्णुनिष्ठासेट्कत्वं नास्तीति न ङाप् अतः क्तिः। आप्तिरिति आपॢ व्याप्तौ सहजानिट्। राद्धिरिति राध साध संसिद्धौ सहजानिट्। गृहीतिरिति ग्रह उपादाने विष्णुनिष्ठासेट्कत्वं विष्णुजनान्तत्वञ्चास्ति किन्तु गुरुमत्त्वं नास्ति। शीतिरिति शीङ स्वप्ने विष्णुनिष्ठासेट्कत्वं गुरुमत्त्वञ्चास्ति, किन्तु विष्णुजनान्तत्वं नास्ति। ऊहशब्दो राधशब्दश्च घणन्तः। अशंसेति शन्सुधातोररामेत्त्वाद्विष्णुनिष्ठासेटकत्वाभावः अत आह आशंसा प्रशंसेत्यपि दृश्यत इति॥ ४४४॥

बध्यात् हन्तिः, वन्यात् बन्तिः, तन्यात् तन्तिः । भणादेस्तु भणितिः निपठितिः निगृहीतिः उपस्निहितिः निकुचितिः प्रथिति रित्यादि ।

**४४६. ऋरामान्त-ल्वादिभ्यां क्तेनिः, ग्ला-हा-ज्या-म्ला-त्वरि-भ्यश्च, नतु पृणातेः ।**

**कॄ विक्षेपे कीर्णिः, लूनिः ग्लानिः, छस्य श इत्यादौ ज्वर त्वर इत्यादि —तूर्णिः, पृणाते स्तु पूर्त्तिः ।**

---

वर्जनात् तेभ्य इट् स्यादेवेत्यर्थः । भणितिरिति भण शब्दे । निगृहीतिरिति—ग्रहउपादाने, ग्रहिज्येति सङ्कर्षणः, ग्रहेरिटस्त्रिविक्रमोऽनधोक्षजे इति त्रिविक्रमः । उपस्निहिरिति स्निह प्रीतौ, निकुचितिरिति कुच कौटिल्ये, प्रथिरिति प्रथ प्रख्याणे । एतदितर हरिवेण्वन्तानान्तु त्रिविक्रम एव—कान्तिः शान्तिरित्यादि ।

**अमृता०**—४४६. ऋरामान्तेति । ऋरामान्तात् ल्वादेश्चोत्तरे क्ति प्रत्ययस्य निरित्यादिश्यते तथा ग्लैहर्षक्षये, ओहाङ् गतौ, ओहाक त्यागे द्वयोरेव ग्रहणम्, ज्यावयो हानौ, म्लैगात्रविनामे, ञित्वरा सम्भ्रमे इत्येतेभ्यश्चोत्तरे क्ति स्थाने निरादिश्यते, ऋरामान्तेषु मध्ये पृ पालनपूरणयो रित्यस्मात्तु क्ते नि न भवति । कीर्णिरिति—ऋरामस्येर, धातोरवः प्रागिदुतोरिति त्रिविक्रमः, रषऋद्वयेभ्य इति णत्वम् । लूनिरिति लूञ् छेदने, हादीनां—हानिः, ग्रहि ज्येति सङ्कर्षणः—जीनिः म्लानिरिति । ज्याधातो र्ल्वादिगणे पाठात् ऋरामान्तल्वादिभ्यामित्यनेनैव सिद्धेऽपि पुन र्ग्लादिषु तस्योपादानं—गणकार्यस्यानित्यत्वज्ञापनार्थम् । एतेन सङ्कर्षणाभावश्च सूचितः, ततश्च ज्यानि रित्यपि सिध्यतीति । ज्वर त्वरेत्यादिना ससर्वेश्वरस्य वस्य ऊठि तूर्णिरिति । पृणातेस्तु ओष्ठ्योद्भवस्य ऋत उर् त्रिविक्रमश्च ।

---

**बाल०**—षिद्भि । ष इत् यस्य स षित् षिच्च भिदादयश्च षिद्भिदादयस्तेभ्य उत्तरे भावे वाच्ये लक्ष्म्यां ङाप् भवति । तत्र षिद्धातोरुदाहरणं दर्शयति षिदिति त्रपेति त्रपू ष लज्जायां । क्षमेति क्षमू सहने ।। ४४५ ।।

**बाल०**—जागृ । जागृ निद्राक्षये शुभ दीप्तौ जॄ ष वयोहानौ इत्येतेषां भावे वाच्ये लक्ष्म्यां ङाप् भवति गोविन्दश्च । जागरेति जागर्त्तेर्गोविन्दःसर्वत्रेत्यदौ नतु इण्-णन्-निर्गुणेष्वित्युक्तमतो गोविन्दो न स्यादिति गोविन्दविधानं कृतं । भिदादीनामुदाहरणं दर्शयति भिदादिरिति । भिदादय इति वा पाठः । भिदेति भिदिर विदारणे । छिदेति भिदिर विदारणे । छिदेति छिदिर द्विधाकरणे । तृषेति ञि तृषा पिपासाययां । पीडेति पीड अवगाहने चुरादिः ण्यन्ताद् ङाप् णेर्हरः । एवं चिन्तादिषुच ज्ञेयं । चिन्तेति चिति स्मृत्यां चुरादिः । पूजेति पूज पूजायां चुरादिः । कथेति कथ वाक्यप्रवन्धे चुरादिः । अर्चेति अर्च पूजायां चुरादिः । चर्चेति चर्च अध्ययने चुरादिः । पीडप्रभृतीनां ण्यन्तत्वात्, ण्यन्तादासः श्रन्थादेश्चानो भावे लक्ष्म्यां नतु कृतेरित्यनेन अनः स्यात्तन्निरासार्थमेतेषां भिदादिषु पाठ. कृत इति ज्ञेयं ।। ४४६ ।।

## ४४७. सम्पदादे क्विप्-क्ती भावे लक्ष्म्याम् ।

सम्पत् विपत् प्रतिपत्, पक्षेसम्पत्तिरित्यादि । आकृतिगणोऽयम् ।

## ४४८. ऊत्यादयः साधवः ।

वेञस्तु ऊतिरिति पुरुषोत्तमः । यु युतिः, जु जूतिः, षो षिञ् वा सातिः, हि हन् वा हेतिः । अव ज्वर त्वरेत्युठ्ऊतिः, जन खन सनेत्यात्वम्— षणु सातिः ।

## ४४९. इज्यादीनां क्ति र्नेति वाच्यम् ।

**इज्या व्रज्या क्रिया कृत्या इच्छा परिचर्या चर्या परिसर्या मृगया अटाट्यादयः । एते लक्ष्म्यां क्यवन्ता ज्ञेयाः ।**

---

**अमृता०**—४४७. सम्पदादेरिति । भावे वाच्ये सम्पदादेरुत्तरे लक्ष्म्यां क्विप् क्तिश्च भवतः । सम्पदिति सम्पूर्व पदगतौ । इत्यादिपदेन विपत्तिः प्रतिपत्ति रित्यादि । एवं सम्बित् सम्बित्तिरित्यादि चाकृतिगणत्वाज् ज्ञेयम् ।

**अमृता०**—४४८. ऊत्यादय इति । वेञ् तन्तुसन्ताने इत्यादे र्धातोः क्ति प्रत्ययेन ऊति प्रभृतयः साधवः स्युः । पुरुषोत्तम इति—ऊति यूतीत्यादि सूत्रस्य "वेञादेः षडिमे निपात्यन्ते" इति पुरुषोत्तम वृत्तिः ( भाषावृत्तिः ) । जयादित्यमतेन सह तन्मतानैक्य-दर्शनाद्धि एतदुत्थापनं बोध्यम् । यतस्तस्यैव सूत्रस्य वृत्तौ—"अवतेरेव ऊठि ऊति रिति प्रोक्तं तेन । बस्तुतोवेञः सङ्कर्षणानन्तरं दीर्घत्वमेव निपात साफल्यम्, अवते ऊठितु सिध्यत्येव तत् । जूतिः यूतिरित्यत्र च त्रिविक्रमो निपातफलम् । सातिरिति—षोऽन्त-कर्मणि घातो र्द्यति स्यति मास्थामिरिति प्राप्तेरामस्याभावो हि निपातफलम् । षिञ् बन्धने इत्यस्य पक्षे इरामस्यारामो हि निपात कार्यम् । हेति रिति—हि गतौ धातो र्गोविन्दो निपातात्, हनधातोः पक्षे अरामस्येरामो निपातात्, नरामहरस्तु सिध्यत्येव । सातिरिति—जनखनसनामारामो वेत्यत्र वैष्णवादि कंसारि सनोनित्यमिति नित्यमेवात्वम् ।

**अमृता०**—४४९. इज्येति । इज्यादीनां भावे लक्ष्म्यां क्तिर्न स्यादिति वक्तव्यम् । यजादेर्भावे लक्ष्म्यां क्यवन्तेन इज्यादयो निपातयिष्यन्ते । सर्वत्र लक्ष्म्यां 'प्रत्ययान्ताच्चेति' ङाप् वक्ष्यते । क्ति प्रत्ययस्यापवादेन क्यवाङो विधानमिह निपातफलम् । विष्णुकृत्यस्य हि प्रपञ्चोऽयम्, तेन इज्यादयोभावे हि साधवः । क्रियेति डुकृञ् करणे, ऋरामस्यरिः, तुग-भावो निपातात्, कृत्येति तुक् । इच्छा तु न क्यवन्तः किन्तु केवल ङावन्तः, छत्वमत्र निपातात् । परिसर्येति—सृगतौ, तुगभावो गोविन्दश्च निपातात् । मृगयेति—मृग अन्वेषणे, चुरादि रदन्तः, अरामहरेऽपि पुनस्तस्यावृत्ति निपातवलात् । नेड्वन्नृति त्रादाविति इड-भावः, णेर्हरः । अटाट्येति—यङन्तात् अटाट्यधातोः क्यप्, विष्णुजनात् सारामयस्य हर इति यलोपः । आदि ग्रहणादिति—आदिशब्देन समज्यादयश्च लक्ष्म्यां साधवो भवन्ति,

आदि ग्रहणाद् बाहुल्याच्च—समजन्त्यस्यां समज्या सभा, निषद्या आपणः, निपत्या पिच्छिलभूमिः, विदन्त्यनया विद्या, सूयतेऽस्यां सोमः सुत्या, शय्यतेऽस्यां शय्या, भरणं भृत्या, अयनं एत्यनया वा इत्या, जागरणं जागर्य्या, उपवेशनं आस्या । इष्टिरित्यादयोऽपि दृश्यन्ते ।

**४५०. विष्णुनिष्ठा सेट्क-गुरुमद् विष्णुजनान्तात् प्रत्ययान्ताच्च भावे लक्ष्म्यां ङाप् नतु क्तिः ।**

अङ् पाणिनिः । ईहा ऊहा इन्दा शिक्षा । व्यतीक्षेत्यपि । बाहुल्यान्नतु णः । चिकीर्षा अटाटा कण्डूया । विष्णु निष्ठासेट्क इति किम्— दीप्तिः आप्तिः राद्धिः । गुरुमदिति किम्—गृहीतिः । विष्णुजनान्तादिति

---

बाहुल्यात् संज्ञायां करणादौ च साधवइति भावः । समज्येति—अजगतौ, निपातादधिकरणे क्यप्, वीभावविरहश्च । निषद्येति—षद्लृविशरणादौ, निपत्येति पतलृगतौ, अनयोश्चाधिकरणे क्यपा निपातः । भृत्येति भावे, इत्येति इण्गतौ, तुक्, भावे करणे वा साधुः । जागर्येति आस्येति च भावे निपातः । इष्टि रित्यादयश्च बाहुल्यादपवाद विधिमति वर्त्तन्त इतिभावः । इष्टि र्यागः । इत्यादि पदेन कृतिः भृति रित्यादि बोध्यम्, अट्या इति च । वृथाऽट्या खलु सा तस्या इति भट्टिः ।

**अमृता०**—४५०. विष्णुनिष्ठेति । इटा सह वर्त्तमानः सेट्कः, विष्णुनिष्ठायां सेट्कः विष्णुनिष्ठासेट्कः, गुरुमान् चासौ विष्णुजनान्तश्च गुरुमद् विष्णुजनातः, विष्णुनिष्ठासेट्कश्चासौ गुरुमद्विष्णुजनान्तश्चेति तथा, तादृशाद्धातोरुत्तरे, तथा प्रत्ययान्ताच्च धातोरुत्तरे भाववाच्ये लक्ष्म्यां ङाप् प्रत्ययः स्यात् । ङपावितौ, आरामशेषः । नतु क्ति रिति—क्तेरपवादोऽयं ङाप् विधीयत इत्यर्थः । ईहेति—ईह चेष्टायां धातो विष्णुनिष्ठायां सेट्कत्वं, गुरुमद् विष्णुजनान्तत्वञ्चास्ति । एवम् ऊह वितर्के इत्यादेश्च ज्ञेयम् । इन्देति—इदि परमैश्वर्थे, सत्सङ्गात् पूर्वस्य गुरुत्वस्वीकारादिह गुरुत्वम् । शिक्षेति शिक्ष विद्योपादाने भ्वादिः । व्यतीहेति—व्यति पूर्वादपि ईहादे ङविव स्यात्, व्यवादि पूर्वादित्यादिना ण प्रत्ययस्तु न, तत्रहेतुः—बाहुल्यादिति । एष तु सुख बोधार्थः, वस्तुतो विष्णुनिष्ठा सेट्केत्यादि लक्षणप्राप्त धातो र्व्यवादि पूर्वत्वेऽपि णप्रत्ययापवादो ङावेव भवति, तदितरधातो र्हि ण इत्येव तत्त्वम् ।

चिकीर्षेत्यादीनि 'प्रत्ययान्तात्' इत्यस्योदाहरणानि । चिकीर्षेति डुकृञः सनन्तात् चिकीर्ष इत्यस्मात्ङाप्, अरामहरो रामधातुके । अटाटेति—यङन्त अटाट्य धातो ङाप् , विष्णुजनात् सारामयस्य हरः । कण्डूयेति—यगन्त कण्डूयधातो ङाप् , पूर्ववदरामहरः । प्रत्युदाहरति—दीप्तिरित्यादि । दीपी दीप्तौ, गुरुमद्विष्णुजनान्तत्वेऽपि ईरामानुबन्धत्वेन विष्णुनिष्ठायामिड् निषेधात् न ङाप् । आप्तिः राद्धिरिति—आपलृ राध धात्वोः सहजानिट्त्वाद् विष्णुनिष्ठायामिड्विरहेण न ङाप् । बाहुल्यादिति—ङाप्विधेर्विशेषत्वात्

किम्—शीतिः । बाहुल्यात् ऊहः राधः ऊढिरित्यादयः। आशंसा प्रशंसेत्यपि दृश्यते ।

**४५१. शिद्‌भिदादिभ्यश्च ।**

षित्—त्रपूष् लज्जायां त्रपा क्षमा ।

**४५२. जागृ-शुभ-जॄषां गोविन्दश्च ।**

जागरा शोभा जरा। भिदादिः—भिदा छिदा तृषा पीडा चिन्ता पूजा कथा अर्चा चर्चा ।

**४५३. कृपादौ लृत्वं नेष्यते ।**

कृपा । पचेत्यपि पुरुषोत्तम, पक्तिरित्यन्ये ।

---

तल्लक्षणाक्रान्तधातोः प्रत्ययान्तरं न प्राप्नोति, तथापि ऊह राधप्रभृतिषु घण् च दृश्यते, तथा 'नतु क्ति' रिति निषिद्धेऽपि ऊढि प्रभृतिषु क्तिश्च दृश्यते, तदेत् सर्वं बाहुल्यादेव सिद्धमिति तात्पर्यम् । आशंसेत्यादौ उरामेत्त्वाद् विकल्पितेटत्वेन विष्णुनिष्ठायां सेट्कत्वाभावेऽपि बाहुल्यादेव ङाप् भवतीत्यर्थः ।

**अमृता०**—४५१. षिदिति । षइत् यस्य सषित्, षिच्च भिदादयश्च षिद्भिदादयः, तेभ्यश्चोत्तरे भावे लक्ष्म्यां ङाप् स्यात् । तत्र षितामुदाहरणानि—षिदिति । क्षमेति क्षमूष् सहने भ्वादिः ।

**अमृता०**—४५२. जाग्रिति । जागृ शुभ जॄष् इत्येषां भावे लक्ष्म्यां ङाप् गोविन्दश्च भवति । एषु जॄषः षित्वाद् ङाप् पूर्वेण प्राप्तेः, जागृ शुभौ तु षितौ नवा भिदादौ, ततश्चकाराद् ङाप् विधानम् । निर्गुणत्वाद् गोविन्दाप्राप्ते तद्विधानञ्च । जागरेति जागृ निद्राक्षये, जरेति जॄष् वयोहानौ । भिदादिरयं नहि धातुपाठाद् गृह्यते इत्युदाहरति—भिदादिरिति । पीडादय श्चुराद्यरामान्ताः, णेर्हरः । एतेषां ण्यन्तत्वात् ण्यन्तादास इत्यादि वक्ष्यमाणेन अनः प्राप्नोति, तद्वारणार्थो भिदादिषु पाठ इत्यवधेयम् ।

**अमृता०**—४५३. कृपादाविति । कृपू सामर्थ्ये इत्यस्मात् ङापि लृत्वं नेष्यते प्राचीनैरित्यर्थः । कृपे ॠ लृ इत्यनेन प्राप्तस्य लृरामस्य निषेधः । अयञ्च भिदादौपठ्यते । पचेति डुपचष पाके, षित्वात् पचतेश्चोत्तरे ङापमिच्छति पुरुषोत्तमः, अन्येतु पक्ति रिति, तन्मते बाहुल्यात् क्तिश्चेत्यर्थः ।

---

**बाल०**—कृपा । कृपादाविति कृपाप्रभृतावित्यर्थः । कृपेति कृपू सामर्थ्ये भिदादित्वान्ङाप् कृपेॠ लृ इत्यनेन लृत्वं स्यात् । पचेत्यपीति पचधातोः षित्वात् पचेत्यपि भवतीति पुरुषोत्तमो वदति । पक्तिरितित्वन्य इति तन्मते षित्वेऽपि न ङाप्, किन्तु क्तिरिति ।। ४४७-४५३ ।।

**४५४. गुहादयोऽधिकरणादौ साधवः ।**

**४५५. सोपेन्द्रारामाच्च ।**

**उपधा श्रद्धा अन्तर्द्धा अवस्था संस्था व्यवस्था आस्था । संस्थितिः प्रस्थितिः सङ्गीतिरित्यादौ बाहुल्यात् ।**

**४५६. ण्यन्तादासः श्रन्यादेश्चानो भावे लक्ष्म्यां नतु कृतेः ।**

---

**अमृता०**—४५४. गुहादय इयि । अधिकरणादौ वाच्ये भिदादौ पठिता गुहादयो लक्ष्म्यां ङाप् प्रत्ययेन साधवो भवन्ति । गुहू सम्बरणे, गुह्यतेऽस्मिन् गुहा, गिरिगह्वर इत्यर्थः । अधिकरणादौ संज्ञायां ङाप् विधानं निपात साफल्यम् । एवं अर्त्तेः आरा शस्त्रम्, डुकृञः कारा बन्धनालयः, धृञः धारा प्रपातः, एषां वृष्णीन्द्रश्च निपातफलम् । पृच्छा स्पृहा लेखा चूडा रेखा वसा प्रभृतयश्च भिदादौ ङावन्ता ज्ञेयाः ।

**अमृता०**—४५५. सोपेन्द्रेति । उपेन्द्रपूर्वादारामान्ताद् धातोश्चोत्तरे भावे लक्ष्म्यां ङाप् स्यात् । उपधेति—डुधाञ्, आरामहरः कंसारि सर्वेश्वरेत्यारामहरः । श्रद्धेति—श्रदित्यव्ययमुपेन्द्रवद्धाञीति श्रत्शब्दस्योपेन्द्रवत्त्वम् । एवमन्तर्द्धेति—अन्तः शब्दो णत्व-विधौ धाञो ङाप् कि विधौ तथेति अन्तः शब्दस्योपेन्द्रता । अवस्थेति ष्ठा गतिनिवृत्तौ । एवञ्च उपधा प्रभा प्रतिभा प्रमा प्रतिमा प्रमृतयश्च ज्ञेयाः । सुखप्रदा भक्ति रित्यादि तु पश्चात् समासेन । संस्थितिरित्यादि—ङापः क्ति बाधकत्वेऽपि क्ति रेव भवति बाहुल्यान्नतु ङाविति भावः ।

**अमृता०**—४५६. ण्यन्तादिति । ण्यन्ताद् धातोः, आसधातो स्तथा श्रन्थादेश्चोत्तरे भावे लक्ष्म्यां अनप्रत्ययः स्यात् । कृते रुत्तरे तु स नभवति किन्तु बाधकाभावात् क्तिरेव । कृष्णादाप् लक्ष्म्यामिति तद्धित प्रकरणोक्तसूत्रम्, अरामान्तशब्दादावित्यर्थः । लक्ष्म्यां विहितोऽपि अनः केवलो न प्रयुज्यते, स्त्रियां विहितं प्रत्ययान्तरमपेक्षत इत्यादयः ।

---

**बाल०**—गुहा । व्यक्तार्थमेतत् । गुहेति गुहु सम्बरणे निपातात् अधिकरणे ङाप् । देवखातविले गुहा गह्वरमित्यमरः । आदिग्रहणात् वपा वसा पृच्छा स्पृहादयोऽपि ज्ञेयाः । वपा रन्ध्रं मेदश्च, वसा मेदश्च, वसा मेदः, पृच्छा प्रश्नः, स्पृहा इच्छा ॥ ४५४ ॥

**बाल०**—सोपे । सोपेन्द्रारामाच्चोत्तरे भावे वाच्ये लक्ष्म्यां ङाप् भवति । ऊपधेति डु धाञ धारणपोषणयोः । एवं उपदेति डु दाञ दाने आरामहरः । श्रद्धेति श्रदित्यव्ययं उपेन्द्रवद्धाञीत्युक्तमतः सोपेन्द्रत्वं । अन्तर्द्धेति । अन्तःशब्दो णत्वविधौ धाञो ङाप् किविधौ तथा । भवेदुपेन्द्र इत्युक्तं । अतः सोपेन्द्रत्वं । अवस्थेति ष्ठा गतिनिवृत्तौ । एवं व्यवस्थेत्यादिच । इत्यादौतु नेति ङाविति शेषः । हेतुमाह बाहुल्यादिति ॥ ४५५ ॥

**बाल०**—ण्यन्ता । ण्यन्तात् आसधातोः श्रन्थादेश्चोत्तरे भावे वाच्ये लक्ष्म्यां अनो भवति । कतेरित्यत्र सूत्रे वेदवद्व्यवहारात् स्पष्टज्ञापनार्थं इर् न कृत इति । मतेरिति

कृष्णादाप् लक्ष्म्याम्। कारणा भावना घट्टना मार्गणा, आसना श्रन्थना वन्दना वेदना अन्वेषणा पर्येषणा एषणा। परीष्टिश्च दृश्यते। कृतेस्तु कीर्त्तिः।

### ४५७. णको लक्ष्म्यां भावे।

इरामो वाच्यः। आसिका शायिका।

---

कारणेति—ण्यन्त डुकृञः अनः, णेर्हृरः। एवं ण्यन्तभूधातो र्भावनेति। घट्टनेति घट्ट चलने भ्वादि श्चुरादिश्च ण्यन्तः, उद्धव वामनः। मार्गणेति मार्ग अन्वेषणे चुरादि र्ण्यन्तः। एवं कामना चोदनेत्यादि च। मार्गण इतितु मृजूष शुद्धा वित्यस्मात् कर्त्तरि टनः। आसनेति आस उपवेशने, आस्या इतितु ण्यदन्तः प्रागुक्तः। श्रन्थनेति श्रथि शैथिल्ये, ग्रन्थनेति ग्रथि कौटिल्ये, वन्दनेति वदि अभिवन्दन स्तुत्योः, वेदनेति विद ज्ञाने, अन्वेषणेति—ईष गति हिंसा दानेषु। एवं पर्येषणा एषणा च। परीष्टिश्च दृश्यत इति—परे र्वेति वार्त्तिक दर्शनादिति भावः। कृतेरिति कृत संशब्दने चुरादिः, ण्यन्तत्वेन अने प्राप्ते तत्प्रतिषेधात् प्राप्तावसरः क्तिरेवस्यादित्यर्थः। ऋरामस्येर्, णेर्हृरः।

**अमृता०**—४५७. णक इति। भावे वाच्ये धातोरुत्तरे लक्ष्म्यां णक प्रत्ययः स्यात्। क्ते रपवादोऽयञ्च। वाच्यो वक्ष्यत इत्यर्थः, प्रत्ययस्थात् कात् पूर्वस्यारामस्येराम आपीत्यनेन। आसिकेति—आस उपवेशने, प्रथमं कृष्णादाप् इति णक प्रत्ययादापि कृते पश्चादिरामः। एवं शीङ् शयिका।

---

ण्यन्तस्य इगन्तरूपं। कृष्णादाप् लक्ष्म्यामिति तद्धितप्रकरणोक्तं सूत्रं। कारणेति ण्यन्तात् कृधातोरनः। भावनेति ण्यन्ताद्भूधातोरनः। घट्टनेति घट्ट चलने भ्वादिश्चुरादिश्च ण्यन्तादनः। मार्गणेति मृजू शुद्धावित्यस्मात् घणन्तात् तत् करोति तदाचष्टे इत्यर्थेणिः। ततो मार्ग्यते इत्यनः। मार्गणैरथ तव प्रयोजनमित्यत्र शिष्टप्रयोगे केवलभावविहितानप्रत्ययान्तस्य दर्शनान्न यत्नः कार्यः। अय तावत् यत्नः। घणन्तान्मार्गात् य इवाचरतीत्यर्थे क्वचित् क्यङः क्विप् अतोहनः मार्गणमिति पूर्वत्र यत्नउक्तः। मार्गधातुश्चेत् स्यात्तदा णकोऽरि यत्न इति। आसनेति आस उपवेशने। आस्येतिच भवतीति पूर्वमेवोक्तं। श्रन्थनेति श्रथि शैशिल्ये। ग्रन्थनेति ग्रथि कौटिल्ये। वन्दनेति वदि अभिवन्दनस्तुत्योः। वेदनेतिति विदधातोरनः। अन्वेषणेति इष गतौ। एवं पर्येषणेति एषणेति च। परीष्टिश्च दृश्यत इति तस्मात् क्तिरपि भवतीति परेर्वेति क्रमदीश्वरसूत्रं। पर्येषणापरीष्टिश्चान्वेषणा च गवेषणेत्यमरः। कीर्त्तिरिति कृत संशब्देन चुरादिः उद्धवऋरामस्येर् इत्यनेनेर् ण्यन्तात् क्तिः णेर्हृरः। कीर्त्तनेति भवतीतितु जुमरमतं॥ ४५६॥

**बाल०**—णको। भावे वाच्ये धातोरुत्तरे लक्ष्म्यां णको भवति। इराम इति वाच्य इति वक्ष्यन्ते इत्यर्थः। आसिकेति आस उपवेशने णकः कृष्णादाप् लक्ष्म्यामित्यनेनाप् प्रत्ययस्थात् कात् पूर्वस्य आरामस्येराम आपीत्यनेन आरामस्येरामः। एवं शायिकेति॥ ४५७॥

**४५८. प्रच्छर्दिकादयो रोगे ।**

**४५९. इक् श्तिपौ धातु निर्देशे ।**

**पचिः पचधातुः, एवं भवतिः । कर्त्तृ प्रयोगाभावेऽप्यत्र शप् प्रत्ययः, ऊहतेरित्यादि ज्ञापकात् । क्वचिन्न दृश्यते, अर्त्ते ऋच्छ इत्यादौ ।**

---

**अमृता०**—४५८. प्रच्छर्दिकादय इति । एतेरोगवाच्ये लक्ष्म्यां णक प्रत्ययेन साधवो भवन्ति । प्रच्छर्दिकेति—प्रच्छ आवरणे चुरादिः, आप् वामनश्च । रोगार्थो हि निपातकार्यम् । प्रच्छर्दिका वमिश्च स्त्री पुमांश्च वमथुः समा इत्यमरः । आदिपदेन—प्रवाहिका ग्रहिणी, विचर्चिका पामा रुक् विकच इति प्रसिद्धः, बिपादिका पादस्फोट इत्यादि ज्ञेयम् ।

**अमृता०**—४५९. इकिति । धातोः स्वरूपनिर्देशे ( अनुकरणे इतियावत् ) धातोरुत्तरे इक् प्रत्ययः श्तिप् प्रत्ययश्च भवतः । इकः कइत्, श्तिपः शपावितौ । शित् करणं कृष्णधातुक-कार्यार्थम्, पित् करणं कृष्णधातुकत्वेऽपि निर्गुणत्व निरासार्थम् । पचिरिति—कित्त्वान्न गोविन्दः । भवतिरिति भू धातुरित्यर्थः । श्तिपि शप् गोविन्दश्च । ननु शप् इति प्रत्ययो विकरणो वाआख्याते कर्त्तृवाच्ये हि दर्शितः, कथं तर्हि भवतिरिति तदभावेऽपि श्तिपि परे शप् प्रवर्त्तते इति मनस्याशङ्क्य समाधत्ते—कर्त्तृप्रयोगाभावेऽपीत्यादि । कर्त्तृप्रयोगाभावे भावकर्मादौ च वाच्ये शप् स्यादिति प्राक् ज्ञापितम्—उपेन्द्राद्रूहते र्वामनः कपिलये इत्यत्र । तत्र यक् कृष्णधातुके भावकर्मणो रिति भावकर्मवाच्यस्थ यराम एव लक्षितः, ततश्च तल्लक्षणे ऊहतेरिति शपा श्तिपा च निर्देशात् भावकर्मणोश्च कृष्णधातुके शप् स्यादितिसूचितमिति । क्वचिन्न दृश्यत इति–शप् प्रत्यय इतिशेषः,तच्च कृतो बाहुल्याज् ज्ञेयम् । अर्त्तेरित्यत्र श्ति सति गोविन्दकार्यमात्रं नतु शप्, अन्यथा ऋच्छादेशः स्यात् ।

---

**बाल०**—प्रच्छ । रोगे वाच्ये प्रच्छर्दिकादयः साधवः । रोग इति रोगविशेषे इत्यर्थः । प्रच्छर्दिकेति छर्द वमने चुरादिः निपातात् णकः आप् अारामस्येरामः । प्रच्छर्दिका वमिश्च स्त्री पुमांश्च वमथुः समा इत्यमरः । आदिग्रहणात् विपादिका-विचर्चिका-प्रभृतयो ज्ञेयाः । बिपादिका पाटस्फाटः । विचर्चिका पामानामा रोगविशेषः । प्रवाहिका ग्रहणी रुक् ॥ ४५८ ॥

**बाल०**—इक्-। धातोर्निर्देशो धातुर्निर्देशस्तस्मिन् विषये धातोरुत्तरे इक्-श्तिपौ भवतः । इकः क इत् । शतिपः शपावितौः । शतिपित्यत्र कृत्प्रत्ययस्य तिपः रामधातुकत्वे कृष्णधातुकार्थं शिद्विधानं । कृष्णधातुकत्वेऽपि निर्गुणनिरासार्थं पिद्विधानं । अन्यथा भवतीत्यत्र शप् न स्यात् अर्त्तेरित्यादौ गोविन्दादिश्च न स्यादिति । भवतिरिति भूधातुरित्यर्थः । शप्प्रत्ययः कर्त्तरि विहिते प्रत्यये परे भवति तर्हि कथं भवतिरित्यत्र स भवत्वित्याशङ्क्य समादधाति कर्त्तृप्रत्ययाभावेऽपि शप्प्रत्यय इति, हेतुमाह ऊहतेरित्यादि ज्ञापकदिति । उपेन्द्रादूहतेर्वामनः कपिल य इति सूत्रे ऊहतेरित्युक्तं । क्वचिन्न दृश्यते चेति शपप्रत्यय इति शेषः । स्थानमाह अर्त्तेर्ऋच्छ इत्यादाविति ॥ ४५९ ॥

**४६०. इण् च भावे लक्ष्म्यां प्रश्नोत्तरयोः ।**

चाद् यथास्वमन्येऽपि । कांकारिमकार्षीः ? कृष्णस्य कारिमकार्षम् । एवं कारिकां क्रियां कृत्यां कृतिमिति च ।

**४६१. नञ्यनिराक्रोशे भावे लक्ष्म्याम् ।**

कंसस्याजीवनिर्भूयात् ।

**४६२. अनो भावे ।**

---

अमृता०—४६०. इण् चेति । प्रश्नोत्तरयो र्गम्ययो र्भावे लक्ष्म्यां धातोरुत्तरे इण् प्रत्ययश्च भवति, णइत् । चकार विन्यासफलमाह—यथास्वमन्येऽपीति । यथास्वमित्यत्र स्व शब्दो ज्ञातिवाची, तेन स्वजातीय प्रत्यया एव ग्राह्याः, भावे लक्ष्म्यामेव विहिता अन्ये च प्रत्यया भवन्तीति फलितार्थः । कारिमिति डुकृञ् करणे, णित्त्वाद् वृष्णीन्द्रः ।

अमृता०—४६१. नञीति । नञिपूर्वपदे सति आक्रोशे गम्यमाने भावे धातोरुत्तरे लक्ष्म्यां अनि प्रत्ययः स्यात् । आक्रोशः शयनम् । अजीवनिरिति—जीव प्राणधारणे अनिः अजीवनि भूर्यात् म्रियतादित्यर्थः । एतेनाक्रोशः प्रतीयते । आक्रोश इति किम्—अकृति र्भिक्षायाः ।

अमृता०—४६२. अनइति । भाववाच्ये धातोरुत्तरे अनप्रत्ययः स्यात् । केवलभावे कथनं लक्ष्मी निरासाय, तेनविशेषाभावात् सामान्यतः प्राप्तं भावकृद् ब्रह्मणीति योज्यं । भवनमिति भूसत्तायां, कीर्त्तनमिति कृत संशब्दने, बृंहणमिति बृहि वृद्धौ, अत्रऋरामे-ररामांश सद्भाव एव णत्वं प्रति ऋरामस्य प्राङ्निमित्तता, तथा विष्णुचक्रस्य सर्वेश्वरत्वं-माश्रित्य हि तद् व्यवधानेऽपि णत्वमिति विवेकः । लिखमिलानित्यादि—लिखमिलौ कुटादौ बहुलमितिसूत्रस्य प्रतीक् गृहीतम् । कुटादि पक्षे—कुटादेरनृसिंहो निर्गुण इति

---

बाल०—इण्च । प्रश्नोत्तरयोर्गम्यमानयोर्भावे वाच्ये लक्ष्म्यां धातोरुत्तरे इण्च भवति । ण इत् चशब्दोपादानस्य फलमाह चादिति । यथास्वमिति स्वमनतिक्रम्येत्यर्थः । अनतिक्रमेऽव्ययीभावः, स्वशब्दोऽत्र ज्ञातिवचनः ज्ञातित्वमत्र इण्प्रत्ययस्य ज्ञेय । यथासम्भवमित्यपि क्वचित् पुस्तके दृश्यते तदा सम्भवमनति क्रम्येति । अन्येऽपीति भवन्तीति शेषः । ततश्च इण् भवति, अन्येच भवन्तीति । कां कारिमकार्षीरिति अत्र प्रश्नो गम्यते । कारिमिति डु कृञ करणे । कृष्णस्य कारिमकार्षमिति अत्रोत्तरं गम्यते । अन्येऽपीति यदुक्तं तद्दर्शयति एवमिति ॥ ४६० ॥

बाल०—नञ्च । नञि पूर्वपदे सति आक्रोशे गम्यमाने भावे वाच्ये धातोरुत्तरे लक्ष्म्यां णिर्भवति । कंसस्याजीवनिर्भूयात् इति आक्रोशो गम्यते । अजीवनिरिति जीव बलप्राणधारणे ॥ ४६१ ॥

ज्ञानं भवनं कीर्त्तनं, णत्वं बृंहणम्। लिखमिलावित्यादि—लिखनं लेखनं लिखनीयं लेखनीयम्, नित्यं लेखनी, मिलनं मेलनम्।

**४६३. टनः करणाधिकरणयोः।**

दैत्यव्रश्चनं चक्रम्। व्याक्रियन्ते व्युत्पाद्यन्ते अर्थ पर्यवसानाः क्रियन्ते शब्दा अनेन व्याकरणम् शब्दानुशासनं शास्त्रम्। अधिकरणे—गोदोहनी शयनी रमणी।

---

गोविन्दविरहः। बहुलग्रहणात् कुटादित्वाभाव पक्षे तु गोविन्दः—लेखनमिति। एवञ्च अनीयप्रत्ययेऽपि। नित्यं लेखनीति—लिख्यतेऽनयेति टनः करणाधिकरणयो रिति टनः, टित्तादीप्, बहुलशब्दादिह न कुटादित्वम्।

अमृता०—४६३. टन इति। करणाधिकरणयो र्वाच्ययो र्धातोरुत्तरे टनप्रत्ययो भवति, टइत् लक्ष्म्यामीवर्थः। दैत्यव्रश्चनमिति—ओ व्रश्चू छेदने, दैत्या वृश्च्यन्त्यनेनेति करणे टनः। व्याक्रियन्त इत्यस्यार्थो व्युत्पाद्यन्त इति। व्युत्पद्यन्त इत्यस्यार्थः—अर्थपर्यवसानाः क्रियन्त इति। अत्रापि करणे टनः। एवं शब्दा अनुशिष्यन्तेऽनेन शब्दानुशासनम्। गोदोहनीवि—दुहप्रपूरणे, गोवो दुह्यन्तेऽस्यमित्यधिकरणे टनः। एवं शीङ् स्वने-शयनी, रमु क्रीडायां—रमणीति।

---

बाल०—अनो। भावे वाच्ये धातोरुत्तरे अनो भवति। ज्ञानमिति ज्ञा अवबोधने भावकृद्ब्रह्मणि इत्यनेन ब्रह्मत्वं। भवनमिति भू सत्तायां। कीर्त्तनमिति कॄत संशब्देन चुरादिः। णत्वमिति र-ष-ऋद्वयेभ्यो नस्य ण इत्यादिनेति। बृंहणमिति वृहि वृद्धौ। लिख-मिलावित्यादीति। लिख-मिलौ कुटादी बहुलमिति लिख लेखने कुटादित्वात् कुटादेरनृसिंहो निर्गुण इति निर्गुणत्वं। लेखनमिति बहुलग्रहणात्, लिखनीयमिति विध्याद्यर्थे तव्यानीयेत्यादिना अनीयः कुटादित्वान्निर्गुणत्वं। लेखनीयमिति बहुलग्रहणात्। नित्यं लेखनीति लिख्यते अनयेति टनः करणाधिकरणयोरित्यनेन टनः बहुलग्रहणात् अत्र कुटादित्वाभावः, अतो निर्गुणत्वाभावः टित्त्वादीप्। मिलनमिति कुटादित्वान्निर्गुणत्वं॥ ४६२॥

बाल०—टनः। करणे अधिकरणे च वाच्ये धातोरुत्तरे टनो भवति। ट इत्। दैत्यव्रश्चनमिति ओ व्रश्चू छेदने दैत्यान् वृश्चत्यनेनेति करणे टनः। व्याक्रियन्ते इति। व्याक्रियन्ते इत्यस्यार्थमाह व्युत्पाद्यन्त इति, व्युत्पाद्यन्त इत्यस्यार्थमाह अर्थपर्यवसानाः क्रियन्त इति। अर्थपर्यवसाना इति प्रकटितार्था इत्यर्थः, तस्मात् अनेन प्रकृतिप्रत्ययभेदेन परिकल्प्यन्ते इत्युक्तं परमतमपि सूचितमिति। व्याकरणमिति व्याङ्पूर्वं डु कृञ करणे, व्याकरणपदस्यार्थकथनं शब्दानुशासनं शास्त्रं। भङ्ग्याम्य सूत्रस्योदाहरणान्तरञ्च ज्ञेयं। शब्दाननुशास्त्यनेन शब्दानुशासनं शास्त्रमपि पूर्वं दर्शितमिति। गोदोहनीति दुह पूरणे गां दोग्धि अस्यामित्यधिकरणे टनः। शयनीति शीङ स्वप्ने शेतेऽस्यामित्यधिकरणे टनः॥ ४६३॥

**४६४. अपादाने च ।**

प्रपतनो भृगुः ।

**४६५. उष्णङ्करण-भद्रङ्करणे ।**

एते करणे निपात्येते ।

**४६६. अजे र्वी वा टने ।**

प्रवयणं प्राजनम् । कुटादित्वात् स्फुरणम् ।

**४६७. दशनो दन्ते साधुः ।**

**४६८. ष्ठीवन सीवने वा निपात्येते ।**

पक्षे ष्ठुवनादि ।

---

**अमृता०**—४६४. अपादान इति । अपादाने च वाच्ये धातोरुत्तरे टनः स्यात् । प्रपतन इति—प्रपतत्यस्मात् भृगुः. गिरेरुच्चभागः । एवं प्रस्कन्दनमिति च ।

**अमृता०**—४६५. उष्णङ्करणेति । पूर्वपात् मुम् निपातफलम् ।

**अमृता०**—४६६. अजेरिति । टनप्रत्यये परे अजधातोः स्थाने वीरादिश्यते विभाषया । अजे र्वी घनं विना रामधातुक इत्यनेन नित्यं वीभावे प्राप्तेविभाषा विधानमिदम् । प्रवयणमिति—अज गतौ क्षेपणे च, वीभाव पक्षे गोविन्दः, उपेन्द्रात् कृष्णस्यसर्वेश्वरात् परस्येति णत्वम् । प्राजनमिति वीविरह पक्षे । कुटादित्वादिति—स्फुर स्फुरणे, सञ्चलनमित्यर्थः । कुटादित्वान्निर्गुणत्वें गोविन्दाभावः ।

**अमृता०**—४६७. दशन इति । दनृश दंशने इत्यस्य अन प्रत्ययेन दशन इति निपात्यते । नरामहरः, करणे पुंसि च निपात फले ।

**अमृता०**—४६८. ष्ठीवनेति स्पष्टम् । ष्ठीवनमिति ष्ठिवु निरसने, भावे अनः, त्रिविक्रमो निपातफलम् । एवंषिवु तन्तुसन्ताने, पूर्ववत् निपातफलम् । पक्षइति निपाताभावपक्षे, तत्र यथाप्राप्त गोविन्द इत्यर्थः ।

---

**बाल०**—अपा । अपादाने वाच्ये धातोरुत्तरे टनो भवति । प्रपतन इति । पतॢ गतौ प्रपतत्यस्मादित्यपादाने टनः, भृगुरुन्नतप्रदेशः, प्रपातस्त्वतटो भृगुरित्यमरः ॥ ४६४ ॥

**बाल०**—उष्ण । वृत्तिमाह एते इति । उष्णङ्करणमिति उष्णं करोत्यनेनेति निपातात् टनः उष्णान्मुमुच । एवं भद्रङ्करणमिति ॥ ४६५ ॥

**बाल०**—अजे । टने परे अजेः स्थाने वी वा भवति । अजेर्वी घनं विना रामधातुके इत्यनेन नित्यं प्राप्ते विभाषा । प्रवयणमिति अज गतौ क्षेपणेच उपेन्द्रात् कृष्णस्य सर्वेश्वरात् परस्य णत्वमित्यनेन णत्वं । प्राजनमिति वीभावाभावपक्षे । कुटादित्वादिति । कुटादित्वान्निर्गुणत्वमतः स्फुरणमिति ॥ ४६६ ॥

**बाल०**—दश । दन्ते वाच्ये दशनः साधुः । दशन इति दनृश दंशने निपातादनो नस्य हरश्च । रदना दशना दन्ता इत्यमरः ॥ ४६७ ॥

## ४६९. टनः कर्मादौ च ।

**कृष्णेन भुज्यन्ते कृष्णभोजनाः शालयः । कृष्णमाच्छादयति कृष्णाच्छादनं वासः ।**

---

**अमृता०**—४६९. टन इति । कर्मादौ च वाच्ये धातोरुत्तरे टनः स्यात् । कृष्णभोजना इति—भुज पालनाभ्यवहारयोः, कर्मणि टनः । अभ्यवहारो भोजनम्, शालयो तान्यभेदाः, उत्तमधान्यानीत्यर्थः । कृष्णाच्छादनमिति—छद सम्वरणे चुरादिः, कर्त्तरि टनः । वासो वस्त्रमित्यर्थः ।

॥ अथ कृत्प्रकरणे षत्वानि विशेषेणोच्यन्त इतिशेषः ॥

---

**बाल०**—ष्ठीव । व्यक्तार्थमेतत् । ष्ठीवनमिति ष्ठीवु निरसने निपाताद्भावे अनः त्रिविक्रमश्च । जीवनमिति सिवु तन्तुसन्ताने निपातफलं पूर्ववत् । ष्ठेवनादीत्यादिपदेन सेवनमिति । निष्ठ्यूतिर्निष्ठेवनं निष्ठीवनमित्यभिन्नानि, इत्यमरः । सेवनं सीवनं स्यूरिति चामरः ॥ ४६८ ॥

**बाल०**—टनः । कर्मादौच वाच्ये धातोरुत्तरे टनो भवति । कृष्णभोजना इति । भुज पालनाभ्यवहारयोः कर्मणि टनः । शालय इति धान्यविशेषा इत्यर्थः । शालयः कलमाद्याश्च षष्टिकाद्याश्च पुंस्यमी इत्यमरः । कृष्णाच्छादनमिति छद संवरणे चुरादिः कर्त्तरि टनः । वासो वस्त्रं ॥ ४६९ ॥

॥ अथ । अत्र प्रकरणे षत्वानीति उच्यन्ते इति शेषः ॥



अथात्र षत्वानि ।

**४७०. अम्बष्ठादयः षत्वेन साधवः ।**

**अम्बष्ठः आम्बष्ठः भूमिष्ठः सव्येष्ठः परमेष्ठी बर्हिष्ठः दिविष्ठ इत्यादि ।**

---

अमृत०—४७०. अम्बष्ठादयः षत्वेन साधवो भवन्ति । प्रत्ययविरिञ्च्योः सरामाभावेन एषां षत्वेऽप्राप्ते निपातविधानम् । अम्बष्ठ इति—अम्बायां तिष्ठति स्थीयते वेति अकर्मण्यारामात् कः स्थो भावेतु पुंसीति भावेऽधिकरणे वा कः, ईर्वापोः संज्ञायां बहुलमिति वक्ष्यमाण समासकार्येण पूर्वपदस्य वामनः । वैश्यायां ब्राह्मणाज्जातः अम्बष्ठ उच्यते । आम्बष्ठइति अम्बष्ठशब्दस्य हि पृषोदरादित्वेन त्रिविक्रमः, पूर्वनिमित्तमिह नास्ति । भूमौ तिष्ठतीति भूमिष्ठः, अकर्मण्यारामात् कः । सव्येष्ठइति—सव्येवामे तिष्ठतीत्यर्थः, समासे कृति ङेर्न महाहर इति सप्तम्यां अलोपः । परमेष्ठीति—परमे तिष्ठतीति, परमेपूर्वपदे स्था धातोः उणादौ किन्, आरामहरः, पूर्ववत् ङेर्महाहरविरहश्च । परमेष्ठी ब्रह्मा । बर्हिष्ठ इति—बर्हिषि तिष्ठतीति प्राग्वत् कः, सात्वत परत्वे लोप्यश्चेति विष्णुसर्गलोपः । एवं दिवि तिष्ठति दिविष्ठः ।

इत्यादिपदेन—द्विष्ठः कुष्ठः अङ्गुष्ठः तथा अन्ये च ज्ञेयाः । सुविनिर्दुरिति—सुविनिर्दुर्पूर्वस्यूति-समयोः षत्वमिष्यते, तत् पूर्वस्य नरस्यापि कृतसङ्कर्षण स्वपेरिति सूत्रं प्रागुक्तम् । अपि शब्दात् स्वपे नारायणस्य च । तेन सुषुप्तमिति ञिस्वप् शये, भावे क्तः,

---

बाल०—अम्ब । वृत्तिमाह षत्वेन साधव इति । अम्बष्ठ इति अम्बायां तिष्ठतीति अम्बायां स्थीयते इति वा वाक्ये स्थो भाव इत्यत्र तुशब्दग्रहणात् अकर्मण्यारामात् क इति सूत्रेण कः, स्थो भावेतु पुंसीत्यनेनापि कः । ईवापोः संज्ञायां बहुलमित्यनेन वामनः, निपातात् षत्वं । वैश्यायां ब्राह्मणाज्जातोऽम्बष्ठः । आम्बष्ठ इति पृषोदरादित्वात् त्रिविक्रमः । भूमिष्ठ इति भूमौ तिष्ठतीति कः निपातात् षत्वं । सव्येष्ठ इति सव्ये तिष्ठतीति कः निपातात् षत्वं समासे ङेर्न महाहरः, कृति बहुलमित्यनेन ङेर्महाहरनिषेधः । वामं शरीरे सव्यं स्यादित्यमरः । परमेष्ठीति । परमे तिष्ठतीति परमे पूर्वपदे तिष्ठतेर्डिन् आरामहरः निपातान् षत्वं, समास इत्यादिना ङेर्महाहरनिषेधः । परमेष्ठी ब्रह्मा । उणादय इत्यादिपदेन डिन् प्रत्ययोऽपि भवतीति ज्ञेयं । बर्हिष्ठ इति बर्हिषि तिष्ठतीति कः निपातात् षत्वं सात्वतपरत्वे लोप्यश्चेति विष्णुसर्गलोपः । दिविष्ठ इति दिवि तिष्ठतीति कः, निर्देशात् ङेर्महाहरनिषेधः । इत्यादीत्यादिपदेन, द्विष्ठ त्रिष्ठ कुष्ठ शङ्कुष्ठाङ्गुष्ठाग्निष्ठादयोऽपि ज्ञेयाः । सुवीति । सुविनिर्दुःपूर्वसूतिसमयोः षत्वमिष्यते तत्पूर्वस्य

सुविनिर्दुः पूर्वं सूति समयोरिति—सुषुप्तं दुःषुप्तं, विषूतिः निःषूतिः, सुषमं दुःषमम् ।

**४७१. गोष्ठं व्रजे, निष्णातनदीष्णौ कौशले, प्रतिष्णातं सूत्रे,**

---

सङ्कर्षण षत्वे । एव दुःषुप्तमिति । सूति-समौ समासकार्ये वक्ष्येते इति यदुक्तं तदत्र दर्शयति—विषूतिरित्यादि । षूप्रेरणे, क्ति भवि लक्ष्म्यां, षत्वम् । सुसम इति—सुशोभना-समा सम्वत्सरो यत्र तत् । सह माति वर्त्तन्ते ऋतवो यस्याः सा समा, मा माने, अनुपेन्द्रादारामान्तादिति कः, लक्ष्म्यामाप् । एवं दुष्टा समा यत्र तत् दुःषममिति ।

**अमृता०**—४७१. गोष्ठमिति । व्रजे वाच्ये गोष्ठमिति षत्वेन निपात्यते । गाव-स्यिष्ठन्त्यत्र इत्यर्थे गवां स्थानमित्यर्थे वा स्था धातोरधिकरणे भावे वा क प्रत्ययः । निष्णातेति—कुशलस्य भावः कौशलम्, तस्मिन्नर्थे निष्णात—नदीष्णौशब्दौ षत्वेन साधू स्याताम् । निपूर्व स्ना शौचे इत्यस्मात् कर्त्तरि क्त, नदीपूर्वात् स्नातेः, अकर्मण्यारामादिति कः । नदीस्नाने कुशल इत्यर्थः । वेदनिष्णातो वेदेषु कुशल इत्यर्थः । प्रतिष्णातमिति—सूत्रेवाच्ये प्रतिपूर्वस्नातेः षत्वेन क्तप्रत्ययान्तं प्रतिष्णातमिति साधु स्यात् । अन्यत्र प्रति-स्नातो विप्रः । अग्निष्टुदादय इति—यज्ञे वाच्ये अग्निष्टुत् प्रभृतयः क्विवन्ताः षत्वेन साधवो भवन्ति । ष्टुञ् स्तुतौ । आदिपदेन अग्निष्टोम इत्युणादि मप् प्रत्ययान्तो ज्ञेयः । विष्टार इति—छन्दसि वाच्ये विष्टार इति षत्वेन साधुः स्यात् । विपूर्वस्तृञ् आच्छादने घण्, छन्दो विशेषोऽर्थः । अभिनिष्टान इति—विष्णुसर्गे वाच्ये अभिनिष्टान इति षत्वन

---

नरस्यापि कृतसङ्कर्षणस्वपेरिति सूत्रं । सुषुप्तमिति ञि ष्वप शये सहजानिट्क्तः सङ्कर्षणः षत्वं । एवं सुषुप्तमिति । सूतिसमौ समासकार्ये वक्ष्यते इति गोस्वामिचरणेन यदुक्तं तद्दर्शयति विषूतिरित्यादि । सु शोभनाः समाः सम्वत्सरा यत्र तत् सुषमं । एवं दुःषममिति ॥ ४७० ॥

**बाल०**—गोष्ठं । व्रजे वाच्ये गोष्ठं षत्वेन साधु । भावप्रत्ययान्तस्यापि गोष्ठशब्दस्य व्रजवाचित्वं पूर्वमेव प्रतिपादितमतोऽस्यापि व्रजवाचित्वं । निष्णात । निष्ठात-नदीष्णौ कौशले वाच्ये षत्वेन साधू । कौशल इति कुशल एव कौशलः, कुशलो निपुण इत्यर्थः । निष्णात इति निपूर्व स्ना शौचे क्तः निपातात् षत्वं कुशल इत्यर्थः । नदीष्ण इति नद्यां स्नातीति आकर्मण्यारामात् क इत्यनेन कप्रत्ययः निपातात् षत्वं नद्यां कुशल इत्यर्थः । ततो नदीष्णान् पथकान् गिरिज्ञानिति भट्टिः । नेः स्नातस्यैव षत्वमिति चान्द्राश्च वदन्ति, किन्तु निष्ण इति कातन्त्रपरिशिष्टे । आतिथ्यनिष्णा वनवासिमुख्या इति भट्टिप्रयोगश्च । निष्ण इति उपेन्द्रे आरामात् क इत्यनेन कः । कौशलस्य अगम्यत्वेतु निस्नातो नदीस्न इति । प्रति । सूत्रे वाच्ये प्रतिपूर्वस्य स्नः स्थाने प्रतिष्णातं साधु । सूत्र इति किं प्रतिस्नातो विप्रः । अग्नि । यज्ञे विषये अग्निष्टुदादयः षत्वेन साधवः । अग्निष्टुदिति अग्नौ पूर्वपदे सति ष्टुञ स्तुतावित्यस्य क्विप् निपातात् अग्निष्टुत् । आदिग्रहणात् अग्निष्टोमप्रभृतयोऽपि ज्ञेयाः । विष्टा । छन्दसि वाच्ये विष्टारः षत्वेन साधुः । छन्दसीति छन्दोविशेषे इत्यर्थः ।

**अग्निष्टुदादयो यज्ञे. विष्टारश्छन्दसि, अभिनिष्टानो विष्णु-सर्गे, विष्टरो वृक्षासनयोः साधवः ।**

॥ इति श्रीहरिनामामृताख्ये वैष्णव व्याकरणे पञ्चमं कृदन्तप्रकरणं समाप्तम् ॥

---

साधुः स्यात् । अभि-नि-पूर्व स्तनशब्दे इत्यस्माद् घण् । विसर्गमात्रे चायं दृश्यते, यथा— वचः स्पष्टाभिनिष्टानमिदमादाय माधव इति माघे । विष्टर इति—वृक्षे आसने च वाच्ये षत्वेन विष्टरो निपात्यते । विपूर्व स्तृञ् आच्छादने अल् । वृक्षासनयोरिति किम्—वाक्यस्य विस्तारः । सर्वत्र प्रत्ययविरिञ्च्योः षत्वाभावात् षत्वेऽप्राप्ते तथा अर्थविशेषे च निपात वचनमिति वेदितव्यम् ।

॥ इति श्रीहरिनामामृतव्याकरणे श्रीगोपालदासप्रणीतायाममृता-स्वादिनी टीकायां पञ्चमप्रकरणस्य कृतो व्याख्या सम्पूर्णा ॥

---

छन्दोविशेषस्तु छन्दोमञ्जर्यादावनुसन्धेयः । विष्टार इति वि पूर्व स्तृङ आच्छादने घण् निपातात् षत्वं । ननु विष्टारशब्दस्य छन्दोविशेषवाचिता नास्ति, किन्तु विष्टारपङ्क्ति-शब्देन छन्दोविशेष उच्यते, तस्मात् कथं विष्टारश्छन्दसीति सूत्रं सङ्गच्छतामिति चेत्तत्रोच्यते छन्द एकदेशे छन्द एकदेशे छन्दःशब्दे उपचरणीयः, यथा भीमो भीमसेन इति । अभि । विसर्गे वाच्ये अभिनिष्टानो निपातात् षत्वेन साधुः । अभिनिष्टान इति अभि निपूर्व स्तन शब्दे घण् निपातात् षत्वं, सात्वतपरत्वे लोप्यश्चेति विष्णुसर्गलोपः । विसर्गे वाच्ये भवतीति भागवृत्तिमतं जुमरमतञ्च वर्णे विसर्गेच वाच्ये इतितु वामनमतं । अभि-निष्टानो वर्ण इति चन्द्रसूत्रञ्च तस्मात् वर्णेऽपि वाच्ये अभिनिष्टान इति ज्ञेयं । तथाच माघः । वचः स्पष्टाभिनिष्टानमिदमादय साधव इति किं । अभिनिस्तानो मृदङ्गस्य । विष्ट । वृक्षे आसनेच वाच्ये विष्टरः षत्वेन साधुः । विष्टर इति विपूर्वस्तृञ् आच्छादने । ईशादित्यनेन अन् निपातात् षत्वं । विष्टरो विटपी दर्भमुष्टिः पीठाद्यमासनमिति नानार्थ-वर्गः । वृक्षासनयोरिति किं वाक्यविस्तरः ॥ ४७१ ॥

॥ इति श्रील - हरेकृष्णाचार्यकृतौ चतुर्थाश्रमिक - वेदान्तभूषण - श्रीमद्गोपी-चरणदासपरिशोधितायां श्रीहरिनामामृताख्य-वैष्णवव्याकरणटीकायां बालकतोषणीनाम्न्यां पञ्चमी कृत्प्रकरणटीका समाप्ता ॥



## अथ समास प्रकरणम् ।

**कृष्णस्य विग्रहे भाति समासेनाखिलं पदम् ।**
**इतीव स्मारकं वक्ष्ये समासपदविग्रहम् ॥**

---

श्रीगौरगोविन्दपदारविन्दमत्तद्विरेफावलिमाभजामि ।
यथा तदुच्छिष्टसुधाप्रयाने ममापि सौभाग्यभरं समीयात् ॥
नीरसं हि शब्दशास्त्रं नामरसविधानतः ।
योऽमृतयनदान्नृभ्यः श्रीजीवो विजयतामसौ ॥

कृत् प्रकरणे उपेन्द्रोयादि पूर्वपदानां समासं सामान्यतः कृत् समासतयाभिधाय अथ तेषु कांश्चिद् विशेषनामभिरभिधातुं षष्ठं प्रकरणं समासमारम्भमाणो ग्रन्थकार इह वक्ष्यमाणस्य समासपदविग्रहस्य श्रीभगवत्तत्वसम्बन्धित्वेनानुशीलन कर्त्तव्यतां श्लेषण सूचयति —कृष्णस्येति पद्येन । कृष्णस्य विग्रहे स्वरूपेदेहे समासेन संक्षेपेण अखिलंपदं आब्रण्डात् क्षुदातिक्षुद्रतमं सर्ववस्तु भाति विराजते, श्रीयशोदया तन्मुखगह्वरे तथैव दर्शनप्रसिद्धेः । इति हेतोः समासपदविग्रहं समासश्च पदानां विग्रहश्च वाक्यञ्च तथा, समाहारे एकत्वम्, तद् वक्ष्ये । इववाक्यालङ्कारे । ननु समासस्य पदानाञ्च विग्रहकथने कुतो भगवतः सम्बन्ध इति चेत्तत्राह—स्मारकमिति । यतः समासेन पदानि वस्तूनि विग्रहे यस्य स समासपद विग्रह स्तमिति रीत्या साधर्म्यपाचुर्येण समासपदविग्रहस्य स्मारकत्वादर्थाद् भगवदुद्दीप कत्वाद् भक्तस्य तदनुशीलनंनहि व्यर्थमपि त्विष्टमेवेत्यभिप्रायः ।

---

कन्दर्पकोटिरम्याय स्फुरदिन्दीवरत्विषे । जगन्मोहनलीलाय नमो गोपेन्द्रसूनवे ॥
श्रीकृष्ण कृष्णचैतन्य ससनातनरूपक । गोपाल रघुनाथाप्तव्रजवल्लभ पाहि मां ॥

**बाल०**—षष्ठं समासादिप्रकरणमारभमाणोऽत्र वक्ष्यमाणस्य समासपदविग्रहस्य भगवत्तत्त्वविशेषस्मरणोपयोगितां श्लेषेण सूचयन् तस्य वक्ष्यमाणत्वमाह कृष्णस्येति । समासपदस्य समस्तपदस्य विग्रहं वाक्यं वक्ष्ये अहमिति शेषः । अथच । समासेन सङ्क्षेपेण पदानि वस्तूनि यत्रेति स समासपदः, समासपदो विग्रहो यस्येति स समासपदविग्रहः श्रीकृष्णस्तं अहं वक्ष्ये सङ्कीर्त्तयिष्यामीत्यर्थः कथम्भूतमित्यपेक्षायामाह श्रीकृष्णस्य स्वयं भगवतो विग्रहे देहे सङ्क्षेपेण अखिलं सर्वं पदं वस्तु श्रीवत्सादिकं लक्ष्म भाति शोभते शोभमानं सत् इति अस्य तत्त्व विशेषस्य स्मारकं स्मृतिजनकं स्यात् इतीति षष्ठ्यन्तं । इवेति वाक्यालङ्कारे द्योतकार्थेच । यथा कृष्णस्येत्यादि भातीति वाक्यार्थं कर्म यथा साधवः स्मरन्ति इतीव स्मारकं तदिव स्मर्त्तुं इति वा । यद्वा, समासपदं विग्रहं वक्ष्ये

सबहुव्रीहि-द्विगुता-मात्रे लुब्धोऽस्मि सद्वन्द्वः।
तत्पुरुष–कर्मधारय–भक्ते येनाव्ययीभावः॥

## १. समासा बहुलम्।

**वासुदेवोऽयम्, अत्रसमासा वक्तव्याः, ते च बाहुल्येन ज्ञेयाः।**

---

अथच ग्रन्थकृत् स्वशिष्यान् वैष्णवसदाचारशिक्षयन् श्लेषेण समास नामानि व्याचक्षाणश्च प्रार्थयते—सबहुव्रीहि द्विगुतेत्यादि। व्रीहयो धान्यादि शस्यानि, बहवश्च तेव्रीहय इति बहुव्रीहय स्तैः सह वर्त्तमानः सबहुव्रीहिः, द्वौगावौ यस्य स द्विगुः, सबहुव्रीहिश्चासौ द्विगुश्चेति सबहुव्रीहिद्विगुः, तस्यभाव स्तत्ता, तन्मात्रे तत्स्वरूपे सद्वन्द्वः सकलहः अहं लुब्धः। भक्तिविरोधिभिः कामक्रोधादिभि र्ग्रस्तोऽहमित्यर्थः। अतो हेपुरुष! पुरुषोत्तम! मां तत् कर्मधारय कारय येन कर्मणा भक्ते रव्ययीभावः स्यात्, भक्ते रन्तरायो नश्येदिति भावः।

**अमृता०**—१. समासा इति। समसनं समासः, सम्पूर्वादस्यते भावे घञ्। वृत्तिमाह अत्रेति। अत्रप्रकरण इत्यर्थः। बाहुल्येनेति—क्वचिन्नित्यं क्वचिदनित्यमर्थाद् विकल्पः, क्वचिच्च निषेध इति प्रवृत्तिभेदाद् बाहुल्यं ज्ञेयं, तच्चाग्रे व्यक्तं भावि।

---

इत्युक्त्वा प्रयोजनमाह इतीव स्मारकं इति। स्मारकमित्यत्र तुमु-णकौ तत्क्रियार्थत्वे इत्यनेन णकः अस्य तत्त्वविशेषस्य स्मरणार्थमित्यर्थः। ग्रन्थपक्षे कृष्णस्य विग्रहे कृष्णसम्बन्धिनि समासवाक्ये समासेन तत्पदेन उपलक्षितं अखिलं सर्वं पदं भाति विराजते इतीव स्मारकं तदिव चिन्तनेन निष्पादयितुं समासपदविग्रहं वक्ष्ये। पदानिच विग्रहाश्च तेषां समाहारः पदविग्रहं, समासस्य पदविग्रहं समासपदविग्रहं। कृष्णस्येत्यादि भातीति वाक्यं यथा साधवः स्मरन्ति इतीव स्मारकं तदिव समासपदं स्वानुशीलकाः स्मर्त्तुं स्मरणार्थं समर्थाः स्युरिति समासपदविग्रहमहं वक्ष्ये॥

ग्रन्थकार आत्मानं संसारिणं मत्वा परमेश्वरं मत्वा परमेश्वरं प्रति स्वदैन्यं निवेदयति सबहुव्रीहीति। बहवश्च ते व्रीहयश्चेति बहुव्रीहयस्तैः सह वर्त्तमानः सबहुव्रीहिः। द्वौ गावौ यस्य स द्विगुः। सबहुव्रीहिश्चासौ द्विगुश्चेति सबहुव्रीहिद्विगुस्तस्य भावस्तत्ता सबहुव्रीहिद्विगुता तन्मात्रे लुब्धोऽस्मि। मम भक्तिविरोधिन्यो दुर्वासना वर्त्तन्ते इति भावः। धान्यं व्रीहिः स्तम्बकरिरित्यमरः। धान्य-मासयव मुद्ग-गोधूम-कोद्रवास्तिलाः। एतानि सप्त धान्यानि व्रीहिरित्युच्यते बुधैः। पुनः कथम्भूतोऽहं। सद्वन्द्वः सकलहः नानाविधोपद्रवैस्तेन सह वर्त्तमान इत्यर्थः। द्वन्द्वं कलहयुग्मयोरिति नानार्थवर्गः। अतो हे पुरुषोत्तम स्वयं भगवन् मां तत् कर्म धारय येन कर्मणा भक्तेर्भगवद्भजनस्य अव्ययीभावः व्ययीभवनाभावः स्यादिति। नास्ति व्ययीभावो यस्मात् सोऽव्ययीभावः प्रेमा इति शेषः। धारयेत्यस्य कारयेति फलितार्थः। भङ्ग्या बहुव्रीहिप्रभृतीनि समासानां नामानिच दर्शितानीति ज्ञेयं॥

**बाल०**—समा १ वृत्तिमाह अत्रेति॥ १॥

**२. तत्र श्यामराम-कर्मधारयौ, त्रिरामी-द्विगू, कृष्णपुरुष-तत्पुरुषौ, पीताम्बर-बहुव्रीही, रामकृष्ण-द्वन्द्वौ समानार्थौ ज्ञेयौ, अव्ययीभावस्तु षष्ठः।**

**अन्तर्भिन्न पदत्वेऽप्येकनामत्वेन योजनं समासः।**

**३. स च परस्पर सम्बन्धार्थानां स्वाद्यन्तानाम्।**

**परस्परग्रहणमन्यसापेक्षतानिरासार्थम्।**

---

**अमृता०**—२. तत्रेति। तत्र समासेषु श्यामराम—कर्मधारयौ समानार्थौ ज्ञेयौ, त्रिरामीद्विगू समानार्थौ ज्ञेयावित्येवं सर्वत्र योज्यम्। अव्ययीभाव इति—नविद्यते व्ययीभावो यस्येति विग्रहादव्ययीभावशब्दस्य स्वतएव भगवद् वाचित्वमिति नास्य संज्ञान्तर विधानावश्यकम्। अव्ययस्याप्रमेयस्य निर्गुणस्य गुणात्मन इति श्रीभागवदुक्तेः। एतेन समासस्य षड्भेदा दर्शिताः। प्रकारान्तरभेदास्तु प्रागुदिता ष्टीकायाम्—सुपां सुपा तिङा नाम्ना धातुनाथ तिङां तिङा। सुबन्तेनेति विज्ञेयः समासः षड्विधो वुधैरिति।

प्रागुक्त समासलक्षणस्यानुवदते—अन्तर्भिन्नपदत्वेऽपीत्यादि। द्वयोर्बहूनांवा पदानां सुप् तिङन्तरूपाणामेकत्वेन योजनं नामत्वेनैकीकरणं समास उच्यते। तत्रैकपदत्वावसानेऽपि अन्तर्भिन्नपदत्वमुरीक्रियते कार्यानुरोधादित्याशयः।

**अमृता०**—३. तत्र च नियममाचष्टे—स चेचि। स च समासः परस्परं सम्बन्धः अर्थो येषां पदानां तेषामेव भवति नतु सम्बन्धार्थरहितानाम्, यथा गौः कृष्णः वृन्दावनम्। एतेषु स्वस्वार्था विद्यन्त एव किन्तु नहि ते सम्बन्धाः, विशेषणाकाङ्क्षानिवृत्तये नखलु सम्मिलिता इत्यर्थः। ईदृश सम्बन्धाभावे सामर्थ्यविरहो हि कारणमिति स्फुटयति—स्फुटयति—परस्परग्रहण तिति। तेन गौः कृष्णस्य, पुरुषो रामस्य इत्यत्र कृष्ण-पुरुषयोरन्योन्य सम्बन्धाभिधाने असामर्थ्यान्नतयोः समासः, यतः कृष्ण शब्दस्य सम्बन्धो गोशब्देन, पुरुषस्य तु रामेणेति। किञ्च सम्बन्धसद्भावेऽपि अन्य सापेक्षत्वे सति नसमास इत्यपि परस्पर ग्रहणादवगन्तव्यम्, यथा श्यामो रामो महानित्यादौ। स्वाद्यन्तानामिति तु आधिक्येन व्यपदेशा भवन्तीति न्यायेनोक्तिः, क्वचित् तिवाद्यन्तानाञ्च परस्पर सम्बन्धे समास इष्ट एवेति दर्शयिमानत्वात्।

---

**बाल०**—तत्र। तत्र प्रकरणे एतेषु समासेषु श्यामराम कर्मधारयो समानार्थौ ज्ञेयौ त्रिरामी-द्विगू समानार्थौ ज्ञेयौ एवमन्यत्र च ज्ञेयं। अव्ययीभावस्तु षष्ठ इति। नास्ति व्ययीभावो यस्मादिति विग्रहे अव्ययीभावशब्दो भगवद्वाची भवतीति संज्ञान्तरकल्पना न कृतेति भावः॥ २॥

**बाल०**—अन्त। समासस्य सर्वग्राहकं लक्षणमाह अन्तर्भिन्नेति। अन्तर्मध्ये भिन्नानि पदानि यस्य सोऽन्तर्भिन्नपदः तस्य भावस्तत्त्वं तस्मिन्। योजनं योगः। समास इति।

**४. समासवाक्यं विग्रहः ।**

**५. सूत्रे तृतीयान्तेन प्रथमान्तं समस्यते, तच्च पूर्वम् ।**

समासविधान सूत्रे तृतीयान्तेन सह प्रथमान्तं समस्यते, इति सर्वत्र ज्ञेयम्, तच्च पूर्वं निपात्यम् ।

तत्र समासविशेषो यथा:—

**६. विशेषणं तुल्याधिकरणेन ।**

तुल्याधिकरणेन सह विशेषणं समस्यते । एवं सर्वत्र वृत्तिः कल्प्या ।

---

**अमृता०**—४. विग्रहं लक्षयति—समासेति । समासस्यवाक्यं समासवाक्यं विग्रह इत्युच्यते । समासस्यार्थं कथनरूपं यद् वाक्यं प्रयुज्यते सएव विग्रह उच्यत इत्यर्थः । व्यासवाक्यमिति च केचित् । विशेषेण ग्रहणं विशेषेण गृह्यते ज्ञायतेऽनेन वेति विग्रहः, गृह्यते ज्ञायतेऽनेन वेति विग्रहः, भावे कर्मणि वा घण् ।

प्रकरण परिभाषा सूत्रमाह—

**अमृता०**—५. सूत्र इति । स्वयं हि वृत्तिरुक्ता । तच्चेति तत्प्रथमान्तं पूर्वंनिपात्यते स्थाप्यत इत्यर्थः ।

समासविधानसूत्रमाचष्टे—

**अमृता०**—६. विशेषणमिति । तुल्याधिकरणेन विशेष्येण सह विशेषणं तुल्याधिकरणं समस्यत इत्यर्थः । तयो र्लक्षणे तु पूर्वमुक्तं—जातिगुणक्रियाद्वारा यस्य विशेषः कथ्यते तद् विशेष्यम्, येन तद्विशेषः कथ्यते तद् विशेषणमिति । यद्यपि तुल्याधिकरण शब्देन विशेष्यविशेषणयोरुभयोरुपस्थिति र्भवेत तथापि—क्वचिद् विशेषणेन च विशेषणं समस्यत इति वक्ष्यमाणविशेषेण पारिशेष्यादत्र तुल्याधिकरण शब्देन विशेष्यमेवग्राह्यम् ।

---

समसनमित्यर्थे संपूर्व असु क्षेपणे घण् समसनं पदानामेकीकरणं अत उक्तं एकनामत्वेन योजनमिति । अन्तर्भिन्नपदत्वे अन्तःपृथक्पदत्वे । अपिकारात् अन्तर्भिन्नपदत्वेच सति एकनामत्वेन एकनामरूपत्वेन योगः समास इति पर्यवसितोऽर्थः ॥ ३ ॥

**बाल०**—सच । सच समासः परस्पसम्बन्धोऽर्थो येषां स्वाद्यन्तानां भवति । स्वाद्यन्तानामिति । प्राचुर्यापेक्षयोक्तं, किन्तु यथायोगमाख्यातान्तानामपि परस्परसम्बन्धार्थानां स ज्ञेयः, तत्रैव पीताम्बरादौ समासे तेषां समासदर्शनात् सुपः सुपा इत्यनुवृत्तेस्तिङापीति पाणिन्युक्तत्वाच्च । सम्बन्धार्थानामित्यनुक्त्वा यत् परस्परसम्बन्धार्थानामित्युक्तं तत्फलमाह परस्परग्रहणमिति । अन्यस्य सापेक्षत्वनिरासार्थं परस्परग्रहणमित्यर्थः ॥ ४ ॥

**बाल०**—समा । विग्रहलक्षणमाह समासवाक्यं विग्रह इति ॥ ५ ॥

**बाल०**—सूत्रे । वृत्तिमाह समासेति । समस्यत इति एकनामत्वेन युज्यते इत्यर्थः । तच्चेति । तत् प्रथमान्तं पूर्वं निपात्यश्च तस्य पूर्वनिपातश्च भवतीत्यर्थः ॥ ६ ॥

**७. पीताम्बरात् प्राक् समासाः। कृष्णपुरुषसंज्ञाः।**

तत्पुरुषा इति प्राञ्च।

**८. तेष्वयं श्यामरामसंज्ञः।**

कर्मधारय इति प्राञ्चः। श्यामश्चासौ रामश्चेति, रामश्चासौश्यामश्चेति वा विग्रहे, प्रथमान्ततया सूत्रनिर्दिष्टस्य विशेषणस्यैव पूर्वनिपाते प्राप्ते श्यामपदस्यैव पूर्वस्थितिः। चशब्दाद्यर्थः समासेनैवोच्यत इति तद्-प्रयोगः, उक्तार्थानामप्रयोग इति न्यायेन।

---

**अमृता०**—७. पीताम्बरादिति। संज्ञासूत्रमधिकार सूत्रञ्चेदम्। केषाञ्चित् प्राचां मते समास श्चतुर्धा, यथा—उत्तरपदप्रधान स्तत्पुरुषः, पूर्वपद प्रधानः अव्ययीभावः, उभय-पद प्रधानो द्वन्द्वः, अन्यपदप्रधानो बहुव्रीहि रिति। द्विगु कर्मधारययो स्तु प्राय उत्तरपद प्रधान धर्ममयत्वात् तत्पुरुषान्तर्भाव एव। अयं खलु प्रायिक साधारणधर्म उक्तः। यत् "प्राप्तापन्ने द्वितीयया", "अत्यादयो द्वितीयया" इत्यादौ तत्पुरुषत्वेऽपि पूर्वपदप्रधानता वक्ष्यते तत्तु अर्थपर्याप्तिवशाद् विशेषरूप इति विवेच्यम्।

**अमृता०**—८. तेष्विति। तेषु कृष्णपुरुषेषु मध्ये अयं श्यामराम संज्ञकः समास उच्यते। सूत्रे तृप्तीयान्तेन प्रथमान्तं समस्यते तच्च पूर्वमिति परिभाषामिह घटयति—प्रथमान्ततयेत्यादिना। समासविधानसूत्रे—विशेषणं तुल्याधिकरणेन इति सूत्रे, प्रथमान्तं—विशेषणमिति तुल्याधिकरणेन सह समस्यते, तत् विशेषण पूर्वं निपात्यते। अत एतद् बिधातसूत्रबलेन विशेषणस्य हि पूर्वनिपातः पूर्वत्र स्थितिः सिध्यतीति भावः।

अन्तरङ्गस्वादे र्महाहर इति प्राक् कथितसूत्रस्य ह्यनुवादः। एकपदत्वस्य आरम्भे प्रथमे एकपदीभावात् पूर्वमेवेत्यर्थः, अन्तरङ्गस्वादेः समासाङ्गीभूतयो र्द्वयोः पदयो र्बहुषु पदेषु वा स्थितस्याः स्वादि विष्णु भक्ते र्महाहरः स्यात्। तत्र एकपदीभावात् शब्दादुत्तरं पुन स्वादेरुत्पत्ति भवतीत्यर्थः। विष्णुभक्ते र्महाहरे सति तदाश्रयाणां समासाङ्ग भूतानां शब्दानामन्तर्नामत्वं सिद्धमेव, तेषामन्तर्भिन्नपदत्वमप्युररीकृतं समासलक्षणे। तस्मादुभयधर्मो हि युगपत् सर्वत्र विद्यते, कार्यानुरोधेन कदा कस्यचिदुक्ति र्दृश्यते, यथा—

---

**बाल०**—विशेषणं। तुल्याधिकरणेन सहेति। तुल्याधिकरणेन विशेष्येण सह तुल्याधिकरणं विशेषणं समस्यत इत्यर्थः। जातिगुणक्रियाद्वारा यस्य विशेषः कथ्यते, तद्विशेषणमिति पूर्वमेवोक्तं। नन्वत्र सूत्रे तुल्याधिकरणेनेत्यत्र विशेष्येणेति कथं व्याख्यायते इति चेत्तदैवं वाच्यं यद्यप्यत्र तुल्याधिकरणेनेत्यनेन विशेष्यविशेषणयोर्लाभ-स्तथापि विशेषणमित्युक्तत्वात् क्वचिद्विशेषणेनच विशेषणमिति वक्ष्यमाणाच्च पारिशेष्येण विशेष्य एव लभ्यते। विशेष्येणेत्यनुक्त्वा तुल्याधिकरणेनेति यदुक्तं तत्तु विधिसूत्रस्य सर्वत्र प्राप्त्यपेक्षयेति ज्ञेयं॥ ७॥

अन्तरङ्गस्वादे र्महाहर एकपदत्वारम्भे। नामान्तर प्राप्त्या समस्तात् पुनः स्वादय स्ततोऽवान्तरानेकपदत्वेऽप्येक पदत्वम्। श्यामरामः। अत्र वर्णान्तर-रामौ व्यावर्त्य विशेषकथनात् श्यामपदस्य विशेषणत्वम्। यत्रैव श्यामत्वं तत्रैव रामसंज्ञत्वमिति तुल्याधिकरणत्वम्। ननु कृष्णस्य पुरुष इत्यादौ कृष्णादि शब्दानामेव विशेषणत्वेऽपि व्यधिकरणत्वम्। यदुक्तम्—भिन्नप्रवृत्तिनिमित्तयोरेकस्मिन्नर्थे वृत्तिः समानाधिकरण्यमिति। एवं परमपुरुषः।

---

"पूर्वपदान्महाहरनिषेधः" इत्यादौ अन्तः पदत्वमावश्यकम्, राजपुरुष इत्यादौ तु नरामहरसिद्धये युगपत् तदुभयमेव स्वीक्रियत इति विभाव्यम्। श्यामराम इत्यत्र श्यामपदस्य विशेषणत्वमुपपादयति—वर्णान्तररामाविति। शुभ्ररामो बलदेवः, रक्तरामः परशुरामः, तौ द्वौ व्यावर्त्य पृथक्कृत्य श्यामशब्देन इन्दीवरश्यामत्वरूपविशेषार्थ बोधनात् तस्य विशेषषणत्वमित्यर्थः। तादृशश्यामत्वं खलु दशरथनन्दनस्य हि प्रसिद्धि र्नतु प्रोक्तरामयोरिति। तस्य पुन स्तुल्याधिकरणत्वं विवृणोति—यत्रैव श्यामत्वमित्यादिना। विशेषणं व्यधिकरणस्यापि भवतीति तत्राति व्याप्तिवारणाय तुल्याधिकरणेनेत्युक्तिः। "विशेषणं विशेष्येण" इति कथने तु कृष्णस्य पुरुष इत्यत्रापि समासस्य श्यामरामत्वप्रसत्तिः स्यात्, भेद्य भेदकयोः ( विशेषण विशेष्ययोः ) मध्ये षष्ठ्युत्पत्तिस्तु भेदकादित्युक्तेः। तस्य तु व्यधिकरणविशेषणत्वमिति कारके प्रपञ्चितमेव।

प्राचीन वचनेन तुल्याधिकरण लक्षणमाचष्टे—भिन्नेति। प्रवृत्तेः शब्दप्रयोगस्य निमित्तं अभिधेयः, भिन्न प्रवृत्तिनिमित्तं ययोः ( विशेष्यविशेषणशब्दयो रिति यावत् ) तयोरेकस्मिन्नर्थे एकस्मिन् वस्तुनिवृत्तिरवस्थानं सामान्याधिकरण्यमित्यर्थः। यथेह श्यामशब्दस्य प्रवृत्ते र्निमित्तं श्यामत्वगुणः, राम शब्दस्य तुप्रवृत्ते र्निमित्तानि बहूनि सन्ति, बलरामादि व्यक्ति विशेषा इत्यर्थः। यदा विभिन्नप्रवृत्तिनिमित्तयोरेतयोः श्यामरामशब्दयो र्दशरथनन्दनरूपे एकस्मिन् पदार्थे स्थिति र्बोध्यते तदैव तौ परस्परं समानाधिकरणौ भवत इति विशदर्थः। परमपुरुष इति—परमश्चासौ पुरुषश्चेति विग्रहः।

ननु श्यामराम इत्यादौ अन्तर्नामत्वे कृष्णस्य त्रिविक्रमो गोपाल इति कथं नप्रवर्त्तेत इति चेत्? मैवं, तत्र गोपाल इत्यविशेषेण ग्रहणेऽपि स्वादि गोपालपरत्वमेवेष्टं, तदधिकार बलादिति। नच कृष्ण यासीत्यादौ नामत्वनिवारण प्रसङ्गे स्वादीतर गोपालग्रहनेन हि समाधान दर्शनाद् गोपालसामान्यमेवाभीष्टमिति वाच्यम्, तत्र सम्बोधनपदादुत्तरं स्वाद्युत्पत्तेरसम्भवान्नामत्वातिरेकत्व बोधनार्थमगत्या तादृशी रीति राश्रिता। वस्तुतो गोपाल सामान्य ग्रहणे तु तादृशरीत्यवलम्बनेन वत्रापि कथञ्चित् समाधानसम्भवेऽपि राजपुरुष इत्यत्र, तथा तद्धिते च बलवानित्यादौ दोषोऽनिवार्यः स्यादिति विवेचनीयम्।

सन् पुरुष इति—शतृ प्रत्ययान्तात् सत् शब्दात् कृतहरस्य सोरिति राधाविष्णुजनाभ्यामित्यादिना विहितस्य सुहरस्य पुन र्महाहरे इति अन्तरङ्गस्वादेर्महाहरइत्यनेनेति

सन् पुरुष इत्यत्र शत्रन्तात् कृतहरस्य सोः पुन र्महाहरे नुमः सत्सङ्गान्तहरस्य चापाये सत्पुरुष इत्यादि। एकवैष्णवः, पुराणवैष्णवः, केवल वैष्णव इत्यादि। जगदेकवीर इत्यसाधुरिति जुमरः।

**९. तदेकधर्मत्वे तु न समासः।**

शङ्खः पाण्डरः, तक्षको लोहितः, वृक्षः शिंशपा। स देवदारुद्रुम वेदि-

शेषः। नुमोऽपाये इति—निमित्तस्य कृष्ण स्थानस्यापायादितिभावः। सत्सङ्गान्तहरापाये-नुमापायेन सत्सङ्गत्वाभावादित्यर्थः। इत्यादि पदेन भ्राजत् कपोलं, विभ्रद्वेणु रित्यादि बोध्यम्। एक वैष्णवइति मुख्य वैष्णवइत्यर्थः, एके मुख्यान्य केवला इत्यमरात्। केवल वैष्णवः विष्णोरनन्याश्रय इत्यर्थः। आदि पदेन—नववैष्णवः प्राचीनवैष्णवः पूर्वाचार्यः, परधर्मः, समगुणः, चरमपदार्थ इत्यादयो बोध्याः। जगदेकवीर इत्यसाधुरिति—"पूर्व-कालैक जरत् पुराण नव केवलाः समानाधिकरण्येन" इति तथा—"पूर्वापर प्रथमचरम जघन्य समान मध्य मध्यम वीराश्च" इति तत्र सूत्रे। सूत्रे प्रथमान्तस्य पूर्वनिपातनियमात् एक शब्दस्य वीर शब्दस्य च पूर्व निपातः प्राप्तः, तयोरन्योन्य समासे त्वेकस्य पर निपातोऽवश्यम्भावित्वात् सूत्र नियमस्य व्यभिचारः स्यादिति तन्नसमीचीनमिति जुमराशयः।

**अमृता०**—९. तदेकेति। सएव एको धर्मो यस्य स तदेकधर्मा तस्य भावस्तत्त्वं, तस्मिन् सति समासो न स्यात्। धर्मान्तररहितस्य विशेषणस्य व्यावर्त्तकत्वधर्माभावान्न समासइतितात्पर्यम्। विशेषणं तावद् द्विविधं, व्यावर्त्तकमुपरञ्जकञ्चेति। तत्राद्यस्यैवायं समासः, उपरञ्जकस्य तु विशेष्य धर्मानुवादमात्रत्वात् स्वरूपाख्यानमेव, ततएव न समास इति मर्म। शङ्खः पाण्डर इति—पाण्डरः शुभ्रः, शङ्खः सततं शुभ्र एव भवति, पाण्डर शब्द इह तस्य स्वरूपमेव वर्णयति, शीतं हिमं, उष्णो वह्निरित्याद्यनुवादवत्। अतश्च धर्मान्तर वृत्तिरहितत्वेन तस्य व्यावर्त्तकत्वाभावान्न समासः। एवं हि तक्षकनामा सर्पविशेषो नित्यं लोहित एवास्तीति लोहितशब्देनतस्य स्वरूपमात्रमनूद्यते। वृक्षः शिंशपेतिशिंशपा नाम वृक्षविशेषः, वृक्ष शब्देन स्वरूपानुवादः क्रियते।

ननु कथं तर्हि महाकविना प्रयुक्तम्—देवदारुद्रुमवेदिकायामिति? सहेतुकं तत्र समादधाति—द्रुमस्येत्यादि। अत्र देवदारुशब्देन स्निग्धत्वादि गुणवैशिष्ट्यविवक्षणात् वृक्षान्तरादस्य व्यावर्त्तकधर्मो विद्यत एव, ततोभिन्नधर्मत्वेन विशेष्य विशेषणभावे समासो नहि विरुद्ध इत्यभिप्रायः। एवञ्च आम्रादीनां फलादिवृत्तिषु आम्रवृक्षः कदलीवृक्ष इत्यदि प्रयोगबाहुल्यं लभ्यते। केचित्तु व्यधिकरण विशेषणत्वेन षष्ठी समास इत्याहुः।

**बाल०**—पीता। संज्ञासूत्रमेतत्। प्रागिति पूर्ववर्त्तिन इत्यर्थः॥ ८॥

**बाल०**—तेष्व। इदमपि संज्ञासूत्रं। तेषु कृष्णपुरुषेषु। कर्मधारय इत्यत्र प्राञ्च इति प्राचीनपण्डितस्य मते प्राञ्चः पण्डिता वदन्तीति वा ङसन्तजसन्तयोः साम्यरूपत्वात्।

कायामिति तु स्यादेव, द्रुमस्य देवदारुत्वैकधर्मत्वाभावात् । करिकलभ इति तु सप्तमीसमासात् ।

## १०. समासान्त नाम्नः प्रत्यावृत्तिः ।

**परमप्रत्यङ् परमप्रत्यञ्चौ । कार्यार्थमक्षरविश्लेषात् सन्धि निवर्त्त्यादिशः ।**

---

करिकलभइति—कलभः शावकः, करिषु कलभ इति विग्रहे सप्तमी शौण्डादिभिरित्यनेन सप्तमी कृष्ण पुरुषो वक्ष्यते ।

**अमृता०**—१०. समासान्तेति । समासान्तस्थितस्य नाम्नः प्रत्यावृत्तिः पुनरागमनं स्यात् । नामान्तरत्वप्राप्त्या समस्तात् पुनः स्वादयः इत्युक्तत्वात् समासे सति पुन नवीन मानत्वेन पूर्वनाम्नः प्रत्यावृत्ति र्भवति न वेति संशये वचनमेतत् । ततश्च परमश्चासौ प्रत्यङ चेति विग्रहे परमप्रत्यच् शब्दात् स्वादयो नुमादिश्च भवन्तीति दर्शयति—परम-प्रत्यङित्यादिना । परमाहमिति—परमश्चासौ अहञ्चेति विग्रहे परमास्मच्छब्दात् सुः, ततः सन्धि निवर्त्त्य अहमादेशः, पुनः सन्धिः सन्धिः । एवंद्वित्वादौ परमामित्यादि ज्ञेयम् । परमायमिति परमेदं शब्दात् सुः । परस्परसम्बन्धार्थानामित्यत्र परस्पर ग्रहणेनान्य-सापेक्षता यन्निरासिता तत्स्पष्टयति—श्यामो रामो महानिति । अत्र रामशब्दार्थस्य श्याम शब्दार्थेनसह सम्बन्धो विद्यत एव, किन्तु रामशब्दो महानिति पदमपेक्षते, तेनात्र न समासः ।

एवं विग्रह समासयोर्विकल्प इति—अनेकनाम्नामेकनामत्वेन योजनं हि समासः । सचबहुलग्रहणाद् यत्र विकल्प्यते तत्रैवेयं व्यवस्था, समास निषेधे नित्यसमासे च वाक्यस्याभावेन तत्र तत्राप्रसङ्गात् । तेन रामो जामदग्न्य इत्यत्र नसमासः, अतो वाक्यस्यैव नित्यता, कृष्णसर्प इत्यत्र तु नित्यसमासत्वान्न विग्रह इत्यवधेयम् । कृत् समासाश्च प्रायो नित्य समासाः कृष्णपुरुषान्तर्गताः, क्वचिद् विकल्पस्तु विशेष विधानेन, दण्डोपघातं दण्डेनोपघातमित्यादौ ।

---

एवं सर्वत्र ज्ञेयं । सहार्थैरप्रधाने तृतीयेत्यनेन प्रथमान्तस्य प्राधान्यात् गौणमुख्यन्यायमङ्गी-कृत्याह प्रथमान्ततयेति । श्यामपदस्यैव पूर्वस्थितिरिति नतु रामपदस्येति शेषः । तदप्रयोगः चशब्दाद्यप्रयोगः । हेतुमाह उक्तार्थानामिति ॥ ९ ॥

**बाल०**—अन्त । अन्तरङ्गस्वादेर्महाहर एकपदत्वारम्भे इति आख्यातप्रकरणोक्त सूत्रं अत्रोक्तस्यैव तत्र सूचनमिति ज्ञेयं । अन्तरङ्गस्वादेरिति । प्रकृत्याश्रितं प्रकृताविति न्यायेन समासवाक्यस्थस्वादेरेव महाहरः नतु समस्ताद्विहितस्य स्वादेः, एतदेव स्पष्टयति नामान्तरत्वेति । समस्तस्य नामान्तरत्वप्राप्तचा अतस्तस्मात् स्वादय इत्यर्थः । अत्र समस्तः श्यामरामशब्दो नामान्तरत्वं प्राप्तोऽतस्तस्मात् पुनः स्वादयो भवन्तीति । एवमन्यत्रापि ज्ञेयं । श्यामपदस्य विशेषणत्वं प्रतिपादयति अत्रेति । वर्णान्तररामाविति शुक्लगौरौ बलरामभृगुरामावित्यर्थः । व्यावर्त्त्यं निवर्त्त्यं । रामपदस्य तुल्याधिकरणत्वं

**परमाहम्, परमायम्, परमानेन। अन्य सापेक्षत्वे—श्यामो रामो महा-नित्यत्र न समासः। एवं विग्रह—समासयो विकल्पः।**

---

ननु पाणिनीयैः—"उपपदमतिङ्", "अमैवाव्ययेन" इत्याति कृत् समाससूत्राणि तत्पुरुष समासाधिकारे हि पठितानि, अस्मद् ग्रन्थे तदकरणात्, कृत्प्रकरणेऽपि तथा अनुक्तेः कथं कृत् समासाः कृष्णपुरुषान्तर्गततया मन्तव्या इति चेत्? तत्र किञ्चिद् विमृश्यते,—कृत् समासः खलु कृत्प्रत्यय विधानसमकाले हि विधीयते, ततः पश्चात् स्वाद्युत्पत्तिः। अतएव परिभाषितं प्राचीनैः—गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेरि। अन्यथा कृदन्तेन पश्चात् समासत्वे तु सर्व समासानां हिकृत्समासत्व-मापद्यते, कृत्प्रत्ययान्ततयैव प्रायः शब्दोत्पत्तेः। आरब्धप्रकरणे तु सुबन्ततिङन्तपदानां पश्चादेव समासः, अतएव कृत् समासस्य स्वरूप वैलक्षण्यमवश्यं स्वीकार्यम्। ततश्चासिद्धरूपं न त्याज्यमिति प्रतिज्ञानुरोधात् कृत्प्रकरणे हि—उपेन्द्रोर्यादीत्यादिना कृत्समासलक्षणमुक्तम्। तेषां कृष्णपुरुषान्तर्भवने खलूत्तरपद प्राधान्यमेव बीजम्। तथाहि—प्रकृत्य उरीकृत्येत्यादौ कृता सह उपेन्द्रस्य ऊर्यादेश्च समासे उपेन्द्रोर्यादे द्योतकाव्ययत्वेन कृदन्तस्यैव प्राधान्यम्। वैष्णवीकृत्य सत्याकृत्य इत्यादौ च व्याचो द्योतिकाव्ययत्वात् तथैव ज्ञेयम्। विश्वकारः सृष्टिकृत् सदृश इत्यादौ कृद्भिः पूर्वपदानां समासे कर्त्रादि वाच्येषु प्रत्यय विधानात् कृदन्त स्यैवोक्तत्वं प्रधानत्वं वा। तथा चक्रघातमित्यादौ भावप्रत्ययेऽपि भावस्यैवोक्तत्वात् कृदन्तप्राधान्यं स्पष्टम्। एतेषु व्याच् प्रत्ययान्वित कृतो णमुलश्च समासो विभाषया, अन्यत्र तु नित्यमेवेति दिक्।

---

प्रतिपादयति यत्रैवेति। तुल्याधिकरणत्वमिलि विशेष्यस्य रामपदस्येति शेषः। नत्विति। कृष्णादिशब्दानामेव विशेषणत्वेऽपीत्यत्र पुरुषादिशब्दानामेव विशेष्यत्वेऽपीति पाठो ज्ञेयस्ततश्च कृष्णस्य पुरुष इत्यादौ पुरुषादिशब्दानां यथा विशेष्यत्वेऽपि व्यधिकरणत्वं तथातु रामादिशब्दानां नेति कृष्णादिशब्दानामेव। विशेषणत्वेऽपीति पाठेतु अर्थसङ्गतिर्न भवतीति। अथवा तुल्याधिकरणपदेन पूर्वत्र विशेष्यव्याख्यानात् विशेषणस्य न तुल्याधि-करणत्वमिति मन्दधियामाशङ्कानिरासार्थं कृष्णादिशब्दानामित्युक्तं तस्मान्नात्रासङ्गति-रिति। कृष्णस्य पुरुष इत्यादौ भेदकत्वात् कृष्णादिशब्दानां विशेषणत्वं, भेद्यत्वात् पुरुषादिशब्दानां विशेष्यत्वमिति ज्ञेयं। यदुक्तमिति प्राचीनैरिति शेषः। भिन्नेति। प्रवृत्तेर्निमित्तं प्रवृत्तिनिमित्तं मुख्यार्थः। भिन्नं प्रवृत्तिनिमित्तं ययोर्विशेष्ययोः शब्दोयोरिति विग्रहः। यद्वा, भिन्ने प्रवृत्तिनिमित्ते ये श्यामत्वरामसंज्ञत्वे तयोरिति एवम्भूतयोर्द्वयो-रेकस्मिन् व्यक्तौ वृत्तिर्वर्त्तनं सामानाधिकरण्यमित्यर्थः। परमपुरुष इति परमश्चासौ पुरुशश्चेति पुरुषश्चासौ परमश्चेति वा विग्रहः। एवं सर्वत्र विग्रहः कल्प्यः। शत्रन्तादिति सच्छब्दादित्यर्थः। कृतहरस्येति। कृतो हरो यस्येति विग्रहः। नुम् इति नुमोऽपाय इति नुम्निवृत्तावित्यर्थः। सत्सङ्गान्तहरस्यापाय इति सतसङ्गान्तासद्भावे इत्यर्थः। इत्यादीत्या-दिपदेन राजत्पुरुषः पचद्वैष्णव इत्यादिच ज्ञेयं। एकवैष्णव इति। एके मुख्यान्यकेवला इति नानार्थवर्गः। पुराणवैष्णव इति पुराणः पुरातनः। इत्यादिपदेन नववैष्णवः

## ११. बाहुल्यात् क्वचिन्नित्य समासः।

कृष्ण सर्पः सर्पजातिविशेषः। लोहितशालि धान्यजातिभेदः। स्तोक कृष्ण स्तन्नामा श्रीकृष्णस्य सखा। समासेनैव तत्तत् प्रतिपत्तेर्नित्यत्वम्।

## १२. क्वचिन्न समासः।

रामो जामदग्न्यः, व्यासः पाराशर्यः, अर्जुनः कार्त्तवीर्यः। तदेवं विशेष्येण विशेषणस्य समास उक्तः।

---

अमृता०—११. बाहुल्यादिति सुगमम्। निप्यसमास इति—नित्य समासानां स्वपद विग्रहो नास्तीति वक्ष्यमाण वचनात् समास वाक्यं विनैव बोध जायत इत्याह—समासेनैवेति। समासशक्त्या हि प्रतिपत्ते र्बोधाद्धेतो र्वाक्याभावेन हि विकल्पाभावान्नित्यत्वमिति भावः।

अमृता०—१२. क्वचिन्नेति। क्वचित् समासो न भवति बाहुल्यादिति शेषः। रामो जामदग्न्य इत्यादौ रामादिशब्दानामन्यत्र च वृत्तेः सद्भावाद् जामदग्न्यादि शब्दानां तद्व्यावर्त्तकत्वेन विशेषणत्वं सिद्धमेव, तथापि बाहुल्यान्नसमासः। किञ्च जमदग्नेरपत्यं पुमान् जामदग्न्यः, सच परशुरामतया ख्यात् इति रामादि शब्दानामर्थ स्तद्धितप्रत्ययेनैवोक्तो भवति, तथापीह तेषां प्रयोगः उष्णो वह्नि रितिवत् स्पष्टतार्थो ज्ञेयः, एतदपि समासाभावे कारणं बोध्यम्।

---

पूर्ववैष्णवः अपरवैष्णवः प्रथमवैष्णवः समानवैष्णवः मध्यमवैष्णवः वीरवैष्णव इत्यादिच ज्ञेयं। एकादीनाञ्चेति जुमरलक्षणं। एकसर्वजरत्पूर्वपुराणनवकेवलाः। मध्ये-मध्यमवीराश्च समानचरमापराः। जघन्यप्रथमौ चैकादयः पञ्चदश स्मृता इति तट्टीकाकारवचनं। जगदेकवीर इत्यसाधुरिति जुमर इतिच। जुमरमते एकवीर इति न भवति किन्तु वीरैक इति भवति अतोऽसाधुत्वं, एकादिगणपठितानामन्योन्यसमासे पूर्वपठितादुत्तरपठितस्यैव पूर्वनिपातो भवतीति जुमराभिप्रायः॥ १०॥

बाल०—तदे। स एको धर्मो यस्य स तदेकधर्मो तस्य भावस्तत्त्वं तस्मिन्। विशेष्यस्य तदैकधर्मत्वे सति समासो न भवति। विशेषणं द्विविधं, व्यावर्त्तकमुपरञ्जकञ्च, स्माद्विशेषणस्य व्यवर्त्तकत्वे सति समासो भवति। उपरञ्जकत्वेतु समासो न भवतीति भावः। शङ्खः पाण्डर इति शङ्खस्य पाण्डरत्वैकधर्मत्वान्न समासः। शङ्खः पाण्डर इत्यत्र पाण्डरः शङ्ख इति पाठः। एव धवलश्चन्द्र इति च ज्ञेयं। लोहितस्तक्षक इति तक्षकस्य लोहितत्वैकधर्मत्वान्न समासः। लोहितत्वं रक्तत्वं। वृक्षः शिंशपा इति शिंशपाया वृक्षत्वैकधर्मत्वान्न समासः। स्यादेवेत्युक्त्वा हेतुमाह द्रुमस्येति। स्यादेव समास इति शेषः। एवं वृक्षस्य शिंशपात्वैकधर्मत्वाभावात् शिंशपा वृक्ष इति भवतीति ज्ञेयं। करिकलभ इति करिषु कलभ इति विग्रहः। सप्तमी शौण्डादिभिरित्यनेन समासः। कलभः करिशावक इत्यमरः॥ ११॥

## १३. क्वचिद् विशेषणेन च विशेषणं समस्यते ।

कृष्ण लोहितो धूम्रवर्णः, श्यामसुन्दरः ।

## १४. किञ्चित्त्वेन विभागे गम्येऽपि ।

---

**अमृता०**—१३. क्वचिदिति स्फुटम् । यदा पदद्वयमेव विशेषणं तदा एकस्य प्राधान्येन विशेष्यत्वं विवक्ष्यते । नहि कदाचिद प्रधानतया द्वयोरेव स्थानं समासे सम्भवेत्, पूर्वपद प्रधानादि समासस्य स्वरूपलक्षणत्वोक्तेः । इह तु द्वयोरपि गुणवचनत्वेन विशेषणत्वप्रतीतेः समासशक्त्या हि पदार्थान्तरस्य प्राधान्यमवगम्यते—कृष्ण लोहितः, कोनामासौ ? धूम्रवर्णः । श्यामसुन्दरः कृष्ण इति ।

**अमृता०**—१४. किञ्चित्त्वेनेति । किञ्चित्त्वेन आंशिकरूपेण विभागे गम्यमानेऽपि विशेषणेन सह विशेषणं समस्यते । नरसिंह इत्यत्र शब्दद्वयेन तत्तदवयवसादृश्यं लक्ष्यत इति वाक्येन स्पष्टयति—किञ्चिदङ्गमिति । नरो नरसदृशमङ्गम्, एवं सिंहः सिंह सदृशमित्यर्थः । शुक्लकृष्ण इति—किञ्चित् शुक्लः किञ्चित् कृष्ण इतिविग्रहः ।

---

**बाल०**—समा । नामान्तरत्वप्राप्त्या समस्तात् पुनः स्वादय इत्यनेन समासान्तनाम्नः नामान्तरत्वप्राप्तिनिश्चयात् पूर्वपूर्वस्मिन्नाम्नि यद्यत् कार्यं स्यात, पुनः स्वादौ परे तत्तन्नाम्नि तत्तत् कार्यं न स्यादिति मनस्याशङ्क्य व्यवस्थापकलक्षणमाह समासान्तनाम्न इति । समासान्तनाम्न इति समासान्तस्थितनाम्न इत्यर्थः । प्रत्यावृत्तिरिति । ननु समासान्तनाम्न इत्यत्र समासस्य अन्ते स्थितनाम समासान्तनाम तस्य इत्यर्थे सति केवलसमासस्य अन्तनाम्नः प्रत्यावृत्तिर्नतु सर्वेषां समासान्तानां, तथा सति अत्र कार्यसिद्धिः स्यात् । राजपुरुष इत्यादौ राजादिशब्दानां तत्तन्नामत्वाभावात् नामान्तस्य नस्येत्यादिना नरामहरादिकार्यं न स्यादतः समासान्तेतु स्थितनाम्नः समासान्तनाम्न इति मध्यपद· लोपिसमासः । किं वा समासः अन्ते यस्य स समासान्तः स चासौ नामा चेति समासान्तनामा तस्य इत्यर्थः । समासान्तत्वं तावत् सर्वेषां नाम्नां सम्भवति समासे शक्तिकल्पनात् । नाम्न इत्यत्र जात्यपेक्षयैकवचनं, किन्तु सर्वेषां नाम्नां तत्तन्नामत्वेन प्रत्यावृत्तिः पूर्वत्र नामान्तरप्राप्तिर्द्वित्रिनाममिलनेन तत्तन्नामत्वन्तु प्रत्येकं नाम्नामिति । ततश्च परमप्रत्यङ् परमप्रत्यञ्चावित्यादौ परमप्रत्यच्शब्दात् स्वादयो नुम्कार्यादीनिच भवन्तीति लब्धं । सन्धिनिवर्त्यादेश इति भवतीति शेषः । उदाहरणत्रयमाह परमाहमित्यादि । न समास इति यदुक्तं परस्परग्रहणमन्यसापेक्षतानिरासार्थमिति । एवमिति एवं क्रमेणेत्यर्थः । विग्रहेति । तस्मादेको विग्रहपक्षः एकः समासपक्ष इति ॥ १२ ॥

**बाल०**—बाहुल्यात् । सुगमं । नित्यसमासानां स्वपदविग्रहो नास्तीति वक्ष्यते अतः कृष्ण एव सर्प इति यथायोग्यं कल्प्यमिति । तन्नामा स्तोककृष्णनामा । समासेनैवेति तत्तत्प्रतिपत्तेर्विग्रहताभावः, अतो नित्यत्वमिति । प्रतिपत्तिर्ज्ञानं ॥ १३ ॥

**बाल०**—क्वचिन्न । क्वचित् समासो न भवति बाहुल्यादिति शेषः । रामो

किञ्चिदङ्गं नरः किञ्चित् सिंहः नरसिंहः, शुक्लकृष्णः, कृताकृतं, यातानुयातम् ।

**१५. क्रयाक्रयिकादयः त्रिविक्रमेण साधवः ।**

क्रयेषु महान् क्रयः, क्रयिका स्वल्पा, तयोः समुदायः क्रयाक्रयिका । एवं पुटापुटिका, फलाफलिका, मानोन्मानिका ।

अथ पूर्वनिपातार्थं वक्तव्यान्तराणि ।

**१६. पूर्वक्तान्तं पश्चात् क्तान्तेन ।**

पूर्वं स्नातः पश्चादनुलिप्तः स्नातानुलिप्तः ।

---

एवमन्ये च बोध्याः । एवं कृताकृतं, पीतापीतं, उदितानुदितं, गतप्रत्यागतमित्यादयश्च ।

**अमृता०**—१५. क्रयेति । स्फुटम् । क्रयइति क्रीञः अल् प्रत्ययान्तः, क्रयिकेति क्रय शब्दादल्पार्थे कप्रत्यय स्तद्धितः, ततो लक्ष्म्यामाप्, पूर्वारामस्येरामो वक्ष्यते । तयोः क्रयक्रयिकयोः समुदायार्थे समास स्त्रिविक्रमश्च निपातफलम् । पुटः पत्रादि रचित आधारः । यथा—दुग्ध्वा पयः पत्रपुटे मदीयमिति रघुवंशे । वाक्यं पूर्ववज् ज्ञेयम् ।

अथेति—अन्तरशब्द इह भेदार्थकः । अन्तराणि अन्यानि वक्तव्यानीति वक्तव्यानीति वक्तव्यान्तराणि । पूर्वनिपातार्थमग्रिमसूत्राणि उच्यन्त इति शेषः ।

**अमृता०**—१६. पूर्वेति । पूर्वकालस्थः क्तान्तः शब्दः पश्चात् कालस्थेन क्तान्तेन सह समस्यते, पूर्वक्तान्तश्च पूर्वं निपात्यते । स्नातश्चासौ अनुलिप्तश्चेति विग्रहे—क्वचिद् विशेषणेन च विशेषणमित्यनेन समासः प्राप्नोति, पूर्वनिपातनियमश्च न स्यात्, द्वयोरेव क्तान्ततया विशेषणत्वात् । अतश्चात्र पूर्वक्तान्तस्य पूर्वनिपाताय सूत्रे प्रथमान्ततया निर्देशः कृतः । एवं यथायोग्यं प्राप्तिसम्भावना कल्पनीया आश्यामरामसमाप्तेः । एवं स्नातविभूषितः, भुक्तनिद्रितः, बद्धताडित इत्यादयश्च ज्ञेयाः ।

---

जामदग्न्य इत्यादौ जामदग्न्यादीनां व्यावर्त्तकत्वमस्तीति समासः स्यादिति क्वचिन्न समास इत्युक्तं ॥ १४ ॥

**बाल**—क्वचि । व्यक्तार्थमेतत् । कृष्णलोहितो धूम्रवर्ण इति । धूम्रधूमलौ कृष्णलोहिते इत्यमरः ॥ १५ ॥

**बाल०**—किञ्चि । किञ्चित्त्वेन विभागे गम्येऽपि विशेषणेन सह विशेषणं समस्यते । किञ्चिदङ्गं नर इति । अङ्गमवयवः । नरत्वमत्र नराङ्गतुल्यत्वमिति । शुक्लेति । किञ्चित शुक्लः किञ्चित् कृष्णः शुक्लकृष्ण इति । एवमन्यत्रच ज्ञेयं ॥ १६ ॥

## १७. ईषदकृदन्तेन ।

ईषत् कृष्णः । तद्धिते ऐषत्कृष्णः । कृदन्तेन तुन, ईषत्कुर्वाणः ।

## १८. श्रेण्यादयः कृतादिभिरभूत-तद्भावे ।

अश्रेणयः श्रेणयः कृताः श्रेणिकृताः ।

---

**अमृता०**—१७. ईषदिति । अकृदन्तेन सह ईषदित्यव्ययं समस्यते । अत्र चोभयो र्विशेषणत्वादनियमे प्राप्ते ईषतः पूर्वनिपातार्थं वचनम् । कृदन्तशब्द इह यौगिकार्थवाचि कृदन्तपरः । तेन तदितररूढ्यर्थवाचकोणादि कृदन्तेन हि समास इष्टः । तत्र च गुणवाचि-नैव अकृदन्तेनेति बोध्यम् । ईषद् गुणवचनेनेति जुमरलक्षणम् । तथैव वार्त्तिकमपि । किञ्च अकृदिति गुणोपलक्षणमिति पुरुषोत्तमश्च । ततएव ईषत्कृष्ण इत्युदाहरणं सङ्गच्छते । वर्णान् कर्षतीत्यर्थे कृषे रुणादि नक् प्रत्ययः । एवमीषत् पिङ्गलः ईषन्नील इत्यादि च । कथमीषत् पीतः ईषदुन्नत इत्यादि ? अव्युत्पन्ना ह्येते पीतादिशब्दा नतु कृदन्ता इति न्यासः ।

**अमृता०**—१८. श्रेण्यादय इति । अभूततद्भावेऽर्थे श्रेण्यादयः कृतादिभिः सह समस्यन्ते, श्यामराम संज्ञाश्च भवन्ति । अभूततद्भावे यस्तद्धितो विप्रत्यय स्तस्य ह्यर्थेऽत्र समासो विधीयते, विप्रत्ययान्तानान्तु—उपेन्द्रोर्यादि व्यन्ताजन्तेत्यादिनैव समासः प्राग् विहितः । यस्य वाण निकृत्तानि श्रेणिभूतानि शेरत इति भट्टिः । श्रेणि एक पूग कुण्ड मुण्ड मुकुन्द राशि निचय निधान पर इन्द्र देवभूत श्रमण वदान्य अध्यापक अभिरूपक ब्राह्मण क्षत्रिय पटु पण्डित कुशल चपल निपुण कृपण इति श्रेण्यादिः । कृत मित मत भूत उक्त समाज्ञात समाख्यात संभावित अवधारित अवकल्पित निराकृत उपकृत कलित दलित उदाहृत उदित विश्रुत प्रभृति कृतादि राकृतिगणः ।

---

**बाल०**—क्रया । वृत्तिमाह त्रिविक्रमेणेति । साधव इति निपात्यन्ते इत्यर्थः । क्रय इति क्रीणातेः ईशादित्यनेन अन् । क्रयिकेति क्रयशब्दात् अल्पे इत्यनेन कप्रत्ययः । ततो लक्ष्म्यामापि कृते प्रत्ययस्थात् कात् पूर्वस्यारामस्येराम आपीत्यनेन अरामस्येरामः । तयोः । क्रयक्रयिकयोः क्रयाक्रयिकेति त्रिविक्रमोऽत्र निपातफलं । एवमिति । पुटेषु महान् पुटः पुटिका स्वल्पा तयोः समुदायः पुटापुटिकेति । फलेषु महत् फलं फलिका स्वल्पा तयोः फलाफलिकेति । मानेषु महत् मानं उन्मानिका स्वल्पा तयोः समुदायः मानोन्मानिकेति ।

अथेति । विशेष्यविशेषणयोर्निपातान्तरं पूर्वनिपाताद्यर्थं वक्तव्यान्तराणि मध्यम-कथनानि सूत्राणि इति उच्यन्ते इति शेषः ॥ १७ ॥

**बाल०**—पूर्वं । पूर्वक्तान्तं पश्चात् क्तान्तेन सह समस्यते । अनुलिप्त इति चन्दनादिनेति शेषः । स्नातानुलिप्त इति प्रथमान्ततया सूत्रनिर्दिष्टस्य पूर्वक्तान्तस्य पूर्वनिपातः । स्नातश्चासौ अनुलिप्तश्चेति विग्रहे क्वचिद्विशेषणेन विशेषणं समस्यते

**१९. विशेष्यंतदर्थकुत्सनेन ।**

याज्ञिकाकितवः वैयाकरण खसूचिः । खसूचि निष्प्रतिभः । तदर्थेति किम्—वैयाकरण श्चौरः । नात्र चौरत्वेन वैयाकरणत्वं कुत्स्यते किन्तु पुरुष एव ।

**२०. पापादीनि निन्द्यैः ।**

पापकंसः, हतचैद्यः, अणकनापितः ।

---

अमृता०—१९. विशेष्यमिति । तस्य विशेष्यस्यार्थं कुत्सयति निन्दतीति तदर्थकुत्सनम्, तच्चविशेषणम्, तेन सह विशेष्यं समस्यते । विशेषणं तुल्याधिकरणेनेत्यनेन याज्ञिकादि विशेष्याणां परनिपाते प्राप्ते अनेन पूर्वनिपातो विहितः । एवमग्रेऽप्यनुसन्धेयम् । याज्ञिकत्वं कुत्स्यते इति कितवस्य तदर्थकुत्सनत्वम् । वैयाकरण खसूचिरिति—व्याकरणस्य प्रसङ्गमात्रे खमाकाशमर्थात् शून्यं सूचयतीति खसूचिः प्रतिभाशून्य इत्यर्थः । नवनवोन्मेषशालिनी प्रज्ञा प्रतिभा । अतः खसूचिशब्देन वैयाकरणत्वं कुत्स्यते । प्रत्युदाहरति—वैयाकरणश्चौर इति । विशेष्यं कुत्सनेन इत्येवं सूत्रे कृते को दोष इत्याशङ्काया उत्तरम्—नात्र चौरत्वेनेत्यादि । चौरस्य कुत्सन सद्भावेऽपि नासौ कुत्सा वैयाकरणत्वधर्मस्य अर्थाद् व्याकरणेऽव्युत्पत्तिमत्त्वं न निद्यन्ते किन्तु तद्व्युत्पन्न जनएव, अत स्तदर्थकुत्सनत्वविरहान्न समासः ।

अमृता०—२०. पापादीनीति । निन्द्यन्ते ये ते निन्द्याः, कर्मणि यत्, तैः सह पापादीनि समस्यन्ते, श्यामरामसंज्ञाश्च भवन्तीति सर्वत्र योज्यम् । पापादि शब्दाश्च कुत्सनवचना इति पूर्वसूत्रेण तेषां परनिपाते प्रसक्ते पूर्वनिपातार्थमिह विधानम् । पापकंस इति—कंसो वस्तुतो निन्दनीयः, भगवद्विरोधित्वात् । चैद्यः शिशुपालः, सोऽपि कृष्णविद्वेषित्वान्निन्द्यः । अणकनापित इति—नापितस्य स्ववृत्तिः क्षौरकर्म, तत्रानिपुणत्वान्निन्द्य इत्यर्थः ।

---

इत्यनेन यदि श्यामरामः स्यात्तदा पूर्वनिपातानियमः स्यात् । एवं स्नातविभूषितः । स्नपितभोजितः बद्धताडित इत्यादयोऽपि ज्ञेयाः ॥ १८ ॥

बाल०—ईषत् । ईषत् अकृदन्तेन सह समस्यते । ईषच्छब्दोऽव्ययं अल्पवाची । ईषत्कृष्ण इत्यत्र ईषच्छब्दस्याव्ययत्वात् एकपदत्वं स्पष्टं न भवतीत्याह । तद्धिते ऐषत्कृष्ण इति ईषत्कृष्णशब्दात् केशव णः, आदिसर्वेश्वरस्य वृष्णीन्द्रो नृसिंहे इत्यनेन वृष्णीन्द्रः । ईषत् कुर्वाण इति ईषदिति पृथक् पदं । भाषावृत्तौ ईषदकृतेति सूत्रे अकृदिति गुणोपलक्षणमित्युक्तं । ईषद्गुणवचनेनेति जुमरसूत्रञ्च । अतः अकृदन्तेन गुणवचनेन सहेत्यर्थो ज्ञेयः ॥ १९ ॥

बाल०—श्रेण्या । अभूततद्भावेऽर्थे श्रेण्यादयः कृतादिभिः सह समस्यन्ते । श्रेणिकृता इति गाव इति शेषः । श्रेण्यादयः कृतादयश्च क्वचित् क्वचित् पुस्तके दृश्यन्ते, क्वचित्

## २१. क्वचिन्निन्द्यश्च ।

चैद्यहतकः ।

## २२. किम् क्षेपे ।

किं जीवो यः कृष्णं न भजति ।

---

अमृता०—२१. क्वचिदिति । क्वचित् निन्द्यश्च सुवन्तेन समस्यते । चैद्यहतक इति निन्द्य चैद्यस्य पूर्वनिपातार्थमिह वचनम् ।

अमृता०—२२. किमिति । क्षेपे निन्दायां गम्यमाने किम् शब्दः सुवन्तेन समस्यते । किमित्यव्ययं निन्दार्थे । यः कृष्णं न भजतीत्यनेन निन्दा गम्यते, जीवस्य कृष्णांशत्वेन तद् भजनमेव जीवमात्रस्य स्वधर्मः, अतस्तदकरणात् कृतघ्नत्व दोष इति भावः । एवं स किं सखा य आपदि न तिष्ठेदिति । हितान्न यः संशृणुते सकिं प्रभुरिति भारविः ।

---

क्वचित् पुस्तके न दृश्यन्तेच अतोऽत्र लिख्यन्ते । श्रेणिः पटुर्ब्राह्मणश्च श्रमणोदकपण्डिताः । निपुणश्च पणो मुण्डो मूककुङ्कुमराशयः । इन्द्रकुटाध्यापकाश्च निधनं निचयो दृशत् । वदान्यश्च विशिष्टश्च कृत्रिमः पूग एवच । देवश्च कुसुमश्चैव चतुर्विंशतिसंख्यकाः । पदार्थ-विषयौ क्वापि मृदुः कृपण एव च । कृतं मतं भूतमुक्तं निराकृतगते तथा । सम्भाविता-वधारितकलितान्यवकल्पितं । उपाकृतं चोपकृतं समाङ्पूर्वाणि त्रीणि वै । ज्ञातं ख्यातं तथा स्नातं कृतादीदं सदा भवेदिति । पदार्थविषयाविति । पदार्थादीनां चतुर्णां श्रेण्यादित्वं क्वापि अस्ति नतु सर्वत्र । जुमरे कुशलक्षत्रिययोरपि श्रेण्यादित्वमुक्तं । त्रीणीति ज्ञात-मित्यादीनीत्यर्थः । ततश्च समाज्ञातं समाख्यातं समास्नातमिति ।। २० ।।

बाल०—विशे । तस्य अर्थस्तदर्थस्तं कुत्सयतीति तदर्थकुत्सनस्तेनसह विशेष्यं समस्यते । तदर्थस्य कुत्सनं यस्मादिति वा तदर्थकुत्सनस्तेन सह समस्यते । किं वा तस्मै इदं तदर्थं तच्च तत्तेन । तत्पदेन विशेष्यस्य परामर्षः । याज्ञिककितव इति । कितवत्वेन याज्ञिकत्वं कुत्स्यते इति कितवस्य तदर्थकुत्सनत्वं । कितवो धूर्त्तः । वैयाकरण-खसूचिरिति । खसूचित्वेन वैयाकरणत्वं कुत्सते इति खसूचिस्तदर्थकुत्सनत्वं । व्याकरण-प्रसङ्गमात्रे खमाकाशं सूचयतीति निर्गलितार्थकथनार्थं प्रकारान्तरमाह खसूचिरिति । प्रज्ञा नवनवोल्लेखशालिनी प्रतिभा मता इति कौस्तुभालङ्कारे । निर्गता प्रतिभा यस्य सः । तदर्थेति किमिति विशेष्यं कुत्सनेनेत्येवास्त्विति शेषः । वैयाकरणश्चौर इति चौरस्य कुत्सनत्वमस्ति, किन्तु तदर्थकुत्सनत्वं नास्तीति ।। २१ ।।

बाल०—पापा । निन्द्यन्ते ये ते निन्द्यास्तैः सह पापादीनि समस्यन्ते । पापकंस इति कंसो निन्द्यः । हतचैद्य चैद्यः शिशुपालः सतु निन्द्य एव । अणकनापित इति अणकः कुत्सितः । नापितस्य स्ववृत्त्यपरिज्ञानरूपा निन्दा वर्त्तते अतस्तस्य निन्द्यत्वं । पापकंस इत्यादौ पापादीनां कथञ्चित् तदर्थकुत्सनत्वमस्ति, अतः पूर्वसूत्रेण समासे प्राप्ते विशेषणस्य पूर्वनिपातो न स्यादतस्तस्य पूर्वनिपातार्थं सूत्रमिदं । यदि विशेषणं तुल्याधिकरणेनेत्यनेन समासः स्यात्तदा पूर्वनिपातानियमः स्यात्, उत्तरत्र क्वचिदिति सूत्रकरणात् ।। २२ ।।

## २३. कुः पापेषदर्थयोः ।

कुब्राह्मणः कदुष्णम् । कोः कद् वक्ष्यते । समासकार्यस्य वक्ष्यमाणत्वादेतदादिकं तत्रैव साधनीयमिति ।

## २४. उपमेयं व्याघ्रादिभिरुपमानैः ।

पुरुषो व्याघ्र इव पुरुषव्याघ्रः । पुरुषो व्याघ्र इव शूर इति तु सापेक्षत्वात् ।

## २५. उपमानमुभयस्थधर्म वचनैः ।

---

**अमृता०**—२३. कुरिति । पापार्थे ईषदर्थे च वर्तमानः कुशब्दः स्वाद्यन्तेन समस्यते । कुब्राह्मण इति—अत्र कुशब्दः पापार्थोऽव्ययम्, पापी ब्राह्मण इत्यर्थः । कदुष्णमिति अत्र कुशब्दस्य ईषदर्थः । कोः कद् वक्ष्यत इति—कोष्ण कवोष्ण कदुष्णा मन्दोष्णे साधव इत्यनेनेति शेषः ।

**अमृता०**—२४. उपमेयमिति । व्याघ्रादिभिरुपमानैः सह उपमेयं समस्यते, श्याम रामसंज्ञश्च भवति । यदुपमीयते तदुपमेयम्, येनोपमीयते तदुपमानम् । विशेषणं तुल्याधिकरणेनेति परनिपाते प्राप्ते विशेष्यस्य उपमेयस्य पूर्वनिपातार्थोऽयमारम्भः । पुरुष व्याघ्र इति—अत्र व्याघ्रस्य शक्तिमत्त्वादिसादृश्येनोपमा, पुरुषश्रेष्ठ इत्यर्थः । यथा—स्युरुत्तरपदेव्याघ्र पुङ्गवार्षभकुञ्जराः । सिंह शार्दूलनागाद्याः पुंसि श्रेष्ठार्थ गोचराः । इत्यमरः । तेन मुनिपुङ्गवः, नरशार्दूलः, कविकुञ्जरः, पुरुषसिंह इत्यादयः सिध्यन्ति । तथा व्याघ्रादेराकृति गणत्वात्—मुखपद्मं, वदनचन्द्रमाः, करकमलं, चरणारविन्दमित्यादयश्च भूरि प्रयुज्यन्ते । उपमा व्यञ्जकधर्मे उक्ते तु सापेक्षत्वेन समासो न स्यादित्याह—व्याघ्रइवशूर इति ।

**अमृता०**—२५. उपमानमिति । उभयस्मिन् उपमानोपमेययोः तिष्ठतीति उभयस्थः, तथाभूतो यो धर्म उपमाव्यञ्जको गुणः, स उक्तवानिति उभयस्थधर्म वचनः, तेन सहोपमानः समस्यते । मेघश्याम इति—श्याम शब्द इहोपमानोपमेयस्थ धर्मवचनः, यतः श्यामत्वं खलूपमाने मेघे उपमेये कृष्णे च विद्यते । समासावस्थायां मेघशब्दस्य मेघ सादृश्ये लक्षणा, तत उक्तार्थत्वात्तस्याप्रयोग इति ज्ञेयम् । पुरुषोत्तमवत्त्वेऽपीति—वाच्यलिङ्गलक्ष्मी

---

**बाल०**—क्वचि । क्वचिन्नन्यश्च स्वाद्यन्तेन सह समस्यते । चैत्रहतक इति । अत्र प्रथमान्ततया सूत्रनिर्दिष्टस्य नित्रस्य पूर्वनिपातः ॥ २३ ॥

**बाल०**—किं । क्षेप आक्षेपस्तस्मिन् गम्यमाने किं स्वाद्यन्तेन सह समस्यते । किमृशब्दो निन्दार्थोऽव्ययं । यः कृष्णं न भजतीति क्षेपसूचनार्थमुक्तं । कृष्णभजनं हि जीवस्य स्वधर्मस्तदकरणात्तस्य क्षेपः ॥ २४ ॥

मेघइवश्यामः मेघश्यामः। लक्ष्म्याः पुरुषोत्तमत्वेऽपि, मृगीव चपला मृगचपला। अनुभयस्थत्वे तु—कृष्ण इव प्रद्युम्नः।

**२६. पूज्यं वृन्दारकाद्यैः।**

वैष्णववृन्दारकः। विप्रवृषभः, पुरुषोत्तमः।

**२७. जातिः प्रशंसावचनै र्नियतलिङ्गसंख्यकैः।**

गोपप्रकाण्डं, गोपमतल्लिका।

---

स्तुल्याधिकरण लक्ष्म्यी मित्यनेन मृगीशब्दस्य पुंवत्त्वम्। मृगचपला गोपीदृष्टिरित्यर्थः। अनुभयस्थत्वेत्विति—उमयस्थधर्मवचनराहित्येत्वित्यर्थः। प्रद्युम्नः कृष्णपुत्रः, स चेह उपमेयः धर्मी, नतूभयस्थ श्यामत्वसौन्दर्यादिव्यञ्जकधर्मवचनः, अतोऽत्र श्यामत्वादि सादृश्येन कृष्णस्योपमानत्वे सद्भावेऽपि न समासः।

**अमृता०**—२६. पूज्यमिति। वृन्दारकादिशब्दैः सह पूज्यवाची स्वाद्यन्तः समस्यते। वैष्णव वृन्दारक इति वैष्णव मुख्य इत्यर्थः। अत्र च विशेषणस्य पूर्वनिपाते प्राप्ते परनिपातार्थं वचनम्। विप्रवृषभ इति विप्र श्रेष्ठ इत्यर्थः। अत्र वैष्णवेषु वृन्दारकः पुरुषेषूत्तम इत्येवं सप्तमी समासश्रेष्टः। एवं भक्तकुञ्जरः वैद्यनाथ इत्यादि च ज्ञेयम्। नात्रोपमित समास विवक्षा।

**अमृता०**—२७. जातिरिति। नियतं निर्द्धारितं लिङ्गं संख्या च येषां तादृशैः प्रशंसा वचनैः शब्दैः सह जातिवाचक शब्दाः समस्यन्ते। गोपप्रकाण्डमिति गोप प्रधान इत्यर्थः। प्रकाण्ड शब्दस्य प्रशंसावाचित्वे सदा ब्रह्मैकवचनत्वइत्यसौ नियतलिङ्गसंख्यकः। तेतु पञ्चैव यथा,—मतल्लिका मचर्चिका प्रकाण्डमुद्घतल्लजौ, प्रशस्तवाचीन्यमूनीत्यमरः। उद्घः तल्लजः इत्येतौ पुंस्येकवचनौ।

---

**बाल०**—कुः। पापेषदर्थयोर्वर्त्तमानः कुः स्वाद्यन्तेन सह समस्यते। कुब्राह्मण इति, अत्र पापार्थः कुशब्दः। कदुष्णमिति, अत्र ईषदर्थः कुशब्दः। कोः कद्वक्ष्यते इति, कोष्णक-वोष्वकदुष्णा मन्दोष्णे इति वक्ष्यते। एतदादिकं कदुष्णादिकं। आदिपदेन कोष्णक-वोष्णयोर्ग्रहणं तत्रैव समासकार्य एव॥ २५॥

**बाल०**—उपमे। व्याघ्रादिभिरुपमानैः सह उपमेयं समस्यते। पुरुषोव्याघ्र इवेति विग्रहं दर्शितवान्। पुरुषो व्याघ्र इति उपमेयस्य पूर्वनिपातः। एवं पुरुषसिंहः पुरुषकुञ्जरः मुखपद्मं मुखकमलं मुखचन्द्रः करपल्लवं करकिशलयमित्यादिच ज्ञेय। साक्षेपत्वादिति। तस्मात् साक्षेपत्वादत्र समासो न भवतीति॥ २६॥

**बाल०**—उपमा। उभयस्थधर्मवचनैः सह उपमानं समस्यते। मेघ इव श्याम इति विग्रहः, मेघश्याम इति श्यामशब्द उपमानोपमेयस्थधर्मवचनः। अत्र मेघस्योपमानत्वं कृष्णस्योपमेयत्वं। पुरुषोत्तमत्वेऽपीत्यत्र पुरुषोत्तमवत्त्वेऽपीति वा पाठः। मृगचपलेति

## २८. जाति र्युवत्यादिभिः ।

गोयुवतिः, गोधेनुः, दधिकतिपयम् । एवं पोटा-स्तोक गृष्टि-वशा-वेहद्-वस्कयनी-प्रवक्तृश्रोत्रियाध्यापक-धूर्त्ताः । उभयप्राप्तौ त्विष्टं समस्यत इति जुमरः । वृन्दारकयुवतिः, युववृन्दारिका ।

## २९. पशुजाति र्गर्भिण्या ।

गोगर्भिणी ।

---

**अमृता०**—२८. जातिरिति । युवति प्रभृति शब्दैः सह जाति वाचक शब्दाः समस्यन्ते, श्यामराम संज्ञकाश्च भवन्ति । गोधेनुरिति—गोशब्दो जातिवाची, धेनु र्नवप्रसूता । दधिकतिपयमिति—दधिशब्दो जातिवाचकः, कतिपयो युवत्यादौ पठ्यते, अल्प परिमितं दधीत्यर्थः । युवत्यादि गणंनिर्दिशति—एवं पोटेत्यादिभिः । पोटा स्त्रीपुंसुमयलक्षणा नारी, स्तोकमल्पम्, गृष्टिः सकृत्प्रसूता गौः, वेहद् गर्भपातिनी गौः, वस्कयनी तरुणवत्सा गौः । प्रवक्तृ प्रभृतय श्चत्वारः प्रसिद्धार्थाः । उभयप्राप्ताविति—वृन्दारकयुवत्याद्यो रन्योन्यसमासे प्राप्ते तु यथेष्टं पूर्वनिपातेन समासः स्यादित्यर्थः । तेन पर्यायेण तयोः पूर्वनिपातो दर्शितो जुमरोदाहरणेन । वृन्दारकयुवतिरिति—जाति र्युवत्यादिभिरित्यनेन श्यामरामः, युववृन्दारिकेति—पूज्यं वृन्दाकाद्यैरित्यनेन । उभयत्र वाच्यलिङ्ग लक्ष्मी स्तुल्याधिकरणलक्ष्म्यामिति पुरुषोत्तमवत्त्वम् ।

**अमृता०**—२९. पशुजातिरिति । गर्भिण्या सह पशुजातिः समस्यते । पशुजातिरिह चतुष्पादो ग्राह्याः । एवमजागर्भिणीत्यादि च बोध्यम् । पशुजातिरिति किम्—धवली गर्भिणी, धवलीति नाम्नी गौः । अत्र जातित्वेऽपि व्यक्ति विशेषत्वान्न समासः । पश्विति किम्—ब्राह्मणी गर्भिणी ।

---

वाच्यलिङ्गलक्ष्मीस्तुल्याधिकरणलक्ष्म्यामित्यनेन पुरुषोत्तमवत्त्वं । चपलाशब्द उपमानोपमेयस्थधर्मवचनः । अत्र मृग्या उपमानत्वं गोप्या उपमेयत्वं । अनुभयस्थत्वेत्विति, अनुभयस्थधर्मवचनत्वेत्वित्यर्थः । अनुभयस्थधर्मवचनत्वेत्विति बा पाठः कृष्ण इव प्रद्युम्न इति, प्रद्युम्नशब्दस्य उभयस्थधर्मवचनत्वं नास्ति ॥ २७ ॥

**बाल०**—पूज्यं । वृन्दारकाद्यैः सह पूज्यं समस्यते । वैष्णववृन्दारक इति वैष्णवः पूज्यः अतस्तस्यैव पूर्वनिपातः । वृन्दारकशब्दोऽत्र मुख्यवाची । विप्रवृषभ इत्यत्र वृषभशब्दो मुख्यवाची । एवं विप्रनागः विप्रकुञ्जर इत्यादिच ज्ञेयं । पुरुषोत्तम इति । अत्र पुरुषशब्दस्य ईश्वरवाचित्वेन पूज्यत्वं । पूज्यमिति किं अवैष्णवो वृषभः मूर्खत्वात् ॥ २८ ॥

**बाल०**—जाति । नियतलिङ्गसंख्यकैः प्रशंसावचनैः सह जातिः समस्यते । नियतलिङ्गसंख्यकैरित्युपादानात् प्रशंसामात्रवचनानां नियतलिङ्गानां मतल्लिकादीनां पञ्चानामेवात्र ग्रहणमिति सूचितं । जातिरिति जातिवाचक इत्यर्थः । मतल्लिका मर्चचिका

## ३०. युवा खलत्यादिभिः ।

युवखलतिः । नामग्रहणे लिङ्गविशिष्टग्रहणम् । युवपलिता युववलिना । तुल्याधिकरणे पुंवद् भावो वक्ष्यते ।

## ३१. कुमारी श्रमणादिभिः ।

---

**अमृता०**—३०. युवेति । खलति प्रभृतिशब्दैः सह युवा समस्यते । युवखलतिरिति —युवा चासौ खलतिश्चेति विग्रहः । खलतिः रोगादिना निर्मूलीकृतकेशः । खलत्यादीनां विशेषणत्वेन पूर्वनिपाते प्राप्ते वचनमिदम् । ननु सूत्रे युवेति पुंलिङ्गनिर्देशेन किं युवति निराक्रियत इति शङ्कायामाह—नाम्नो ग्रहण इति । तेन युवतिश्चासौ खलतिश्चेति विग्रह च युवखलतिः सिध्यतीत्यर्थः । आदि पदेनान्यांश्च संगृह्णाति—युवपलितेत्यादि । युवति श्चासौ पलिता चेति विग्रहः । पलिता जरसा शुक्लकेशा । एवं युव वलिना । बलिना बलशालिनी । बलिनो बलिभः समावित्यमरः । एवं युवा चासौ जरन् चेति युवजरन्, युवतिश्चासो जरती चेति युवरजतीति च ज्ञेयम् । तुल्याधिकरण इति—वाच्यलिङ्ग लक्ष्मीरित्यादिना पुंवत्त्वम् ।

**अमृता०**—३१. कुमारीति । श्रमणादिभिः शब्दैः सह कुमारी समस्यते । कुमार श्रमणेति–कुमारी चासौ श्रमणा चेति विग्रहः, वाच्यलिङ्गेति पुरुषोत्तमवत्त्वम् । प्रव्रजिता सन्यासिनीत्यर्थः । एवं कुमाराध्यापिका, कुमारतापसी, कुमारगर्भिणीत्यादि । श्रमणा

---

प्रकाण्डमुद्घतल्लजौ । प्रशस्तवाचकान्यमूनीत्यमरः । गोपप्रकाण्डं गोपमतल्लिकेति प्रशस्त-गोप इत्यर्थः । एवं गोपमर्चिका गोपोद्घः गोपतल्लज इति ॥ २९ ॥

**बाल०**—जाति । युवत्यादिभिः सह जातिः समस्यते । जातिर्जातिवाचकः । गोपयुवतिरिति गोशब्दः जातिवाचकः । गोधेनुरिति धेनुर्नवप्रसूता । धेनुः स्यान्नवसूति-केत्यमरः । दधिकतिपयमिति दधिशब्दो जातिवाचकः । एवमिति । पोटा स्त्रीपुंसलक्षण-धारिणी स्त्री । पोटा स्त्रीपुंसलक्षणेत्यमरः । स्तोकशब्दोऽल्पार्थः । गृष्टिरेकवारप्रसूता गौः । वशा बन्ध्येत्यमरः । वेहद्गर्भोपघातिनीत्यमरः । गर्भोपघातिनी गौर्वेहदित्यर्थः । वस्कयनी तरुणवत्सा गौः । चिरप्रसूता वस्कयनीत्यमरः । प्रवक्तृप्रभृतयश्चत्वारः प्रसिद्धार्थाः । युवतिः पोटा स्तोकं, वस्कयनी श्रोत्रियो वशा वेहत् । धेनुप्रवक्तृकतिपय मध्यापकगृष्टिधुर्त्ताश्च । एते त्रयोदश युवत्यादयः । उभयप्राप्ताविति उभयोः प्राप्ताविष्ट-स्येति जुमरसूत्रं । जुमरोक्तमुदाहरणं दर्शयति वृन्दारकयुवतिरिति । वृन्दारिका चासौ युवतिश्चेति विग्रहे नाम्नो ग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति न्यायेन पूज्यं वृन्दारकाद्यै-रित्यनेन श्यामरामे कृते युववृन्दारिका इति भवति । जातिर्युवत्यादिभिरित्यनेनतु कृते वृन्दारकयुवतिरिति भवति । अत उभयोः प्राप्ताविष्टस्येत्युक्तमतो जुमरमते वृन्दारकयुवति-रित्येव मतान्तरेतु युववृन्दारिकेति । वृन्दारकयुवतिरित्यत्र युववृन्दारिकेत्यत्रच वाच्य-लिङ्गलक्ष्मीस्तुल्याधिकरणलक्ष्म्यामित्यनेन पुरुषोत्तमवत्त्वं ॥ ३० ॥

कुमार श्रमणा। श्रमणा तु प्रव्रजितोच्यते। एवमध्यापिका तापसी गर्भिणीभिः।

## ३२. कुमारश्चाध्यापकादिभिः।

कुमाराध्यापकः। एवं पण्डित निपुणादिभिः।

## ३३. विष्णुकृत्यं तुल्यार्थश्चाजात्या।

**भोज्योष्णं, भोज्यलवणम्। तुल्यार्थत्वे—तुल्यश्यामः कृष्णेन, प्रद्युम्नः**

---

कुलटादासी तापसी बन्धकी तथा गर्भिणी च प्रव्रजिता सप्त स्युः श्रमणादयः। इति जुमरकारिके।

**अमृता०**—३२. कुमारश्चेति। अध्यापकादिभिः सह कुमारश्च समस्यते। चकारात् कुमारी चाध्यापकादिभिः समस्यते। तथैवोक्तं काशिकावृत्तौ—येऽत्र स्त्रीलिङ्गाः पठ्यन्ते श्रमणादय स्तैः सह स्त्रीलिङ्ग एव कुमारीशब्दः समस्यते, येतु पुंलिङ्गा अध्यापकाद्या स्तैरुभयथेति। तेन हि कुमारश्चासौ पण्डित श्चेति कुमारपण्डितः, तथा कुमारी चासौ पण्डिता चेति कुमारपण्डिता इत्येवमादिश्च समासः कल्प्यः। आदिपदेन मृदु पटु कुशल कल्याण चपलानां ग्रहणम्।

**अमृता०**—३३. विष्णु इति। विष्णुकृत्यप्रत्ययान्ताः, तुल्यपर्यायाश्च शब्दा अजातिवचनेन सह समस्यन्ते, श्यामरामसंज्ञकाश्च स्युः। भोज्योष्णमिति—भोज्यश्च तदुष्णञ्चेति विग्रहः। भोज्यं भक्ष्ये इत्यनेन ण्यत् प्रत्ययान्तः, उष्ण शब्दश्च गुणवाची, नहि जातिवाची। एवं भोज्यलवणं, पानीयशीतं, पानीयोष्णमित्यादि च। कृत्समासे तु कृदन्तस्यैवोत्तरपदत्वमिति भेदः। तुल्यश्याम इति—श्यामशब्दस्य गुणवचनत्वेनाजातित्वम्। कृष्णेनेति—तुल्यार्थैः षष्ठी चेति चकारात् तृतीया। तुल्यार्थं शब्दः सादृश्यद्योतकत्वेन नित्यं शब्दान्तरमपेक्षत इति सापेक्षत्वेऽपि समासः। वक्ष्यते च,—समस्तस्या

---

**बाल०**—पशु। गर्भिण्या सह पशुजातिः समस्यते। जातिरिति किं शबली गर्भिणी। शबलीशब्दो न जातिवचनः किन्तु गुणवचनः। वर्णादिभेदात् संज्ञाः स्युः शबलीधबलादय इत्यमरः। पश्विति किं ब्राह्मणी गर्भिणी॥ ३१॥

**बाल०**—युवा। खलत्यादिभिः सह युवा समस्यते। युवखलतिरिति युवा चासौ खलतिश्चेति विग्रहः, रोगादिनिर्मूलीकृतकेशः खलतिः। युवपलितेति युवतिश्चासौ पलिता चेति विग्रहः। पलितेति पलितविशिष्टेत्यर्थः। पलितं जरसा शौक्ल्यं केशादावित्यमरः। तुल्याधिकरण इति वाच्यलिङ्गलक्ष्मीस्तुल्याधिकरणलक्ष्म्यामिति सूत्रं। युवबलिन इति युवा चासौ बलिनश्चेति विग्रहः। बलिनो बलयुक्तः। बलिनो बलिभः समावित्यमरः। नामग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति युवबलिनेतिच ज्ञेयं युवा खलतिपलितबलिनजरतीभिरिति भाषावृत्तिसूत्रं। अतो युवजरती इतिच ज्ञेयं॥ ३२॥

सदृशकृष्णः । नजातित्वे—भोज्य ओदनः । विशेषणसमासोऽपि बाध्यते ।

**३४. कतरकतमौ जातिप्रश्ने ।**

कतरब्राह्मणः ।

**३५. षष्ठ्यन्तेन ।**

प्रभुरयम् ।

---

समस्तेन नित्यापेक्षण सङ्गतिः । बाहुल्यादिह तत्रापि समासो वा विधीयते ॥ इति ॥ प्रद्युम्न इति तुल्यश्याम इति समस्तस्य वाचकः । एवं तुल्यश्वेतश्चन्द्रेन, सदृश महान गिरिशेनेत्यादि च ।

प्रत्युदाहरति—न जातित्व इति । ओदनस्य जातिवाचित्वान्न समासः । ननु न भवत्वनेन समासः, किन्तुभोज्यशब्दस्य विशेषणत्वाद् "विशेषणं तुल्याधिकरणेन" इत्यनेन प्राप्त एव समासः कथं न स्यात्तत्राह—विशेषणसमासोऽपि बाध्यत इति । अत्रायमाशयः—"विशेषणं तुल्याधिकरणेन", इत्यस्य "क्वचिद् विशेषणेन च विशेषणमि"त्यस्य च सर्वे एते प्रपञ्चाः पूर्वनिपात नियमार्थाः विशेषलक्षणे रुच्यन्ते, अत एते तत्तद् बाधका एव । अत्र चाजात्येति विशेषग्रहणसामर्थ्याद् विशेषणमित्यादि प्रथमलक्षणं बाधितमिति सकृद् गत-न्यायेन पुनस्तु तत्प्रवृत्ति र्न स्यादिति ।

**अमृता०**—३४. कतरेति । जात्याः प्रश्ने वर्त्तमानौ कतरकतमौ स्वाद्यन्तेन समस्येते । किम् शब्दात् तद्धितारच् प्रत्ययेन कतरः, तथातमच् प्रत्ययेन कतमः सिद्धः । एवं कतमब्राह्मणः । जातिप्रश्न इति किम्—कतरो भवतोर्मध्ये विष्णुमित्रः । इह न जातेः प्रश्नः किन्तु व्यक्ते रिति ।

**अमृता०**—३५. षष्ठ्यन्तेनेति अधिकारसूत्रम् ।

---

**बाल०**—कुमा । श्रमणादिभिः सह कुमारी समस्यते । कुमारश्रमणेति कुमारी चासौ श्रमणा चेति विग्रहः । प्रव्रजिता सन्न्यासिनी । एवमिति । अध्यापिकादयस्त्रयः प्रसिद्धार्थाः । श्रमणा कुलटा दासी तापसी बन्धकी तथा । गर्भिण्यपि प्रव्रजिता सप्त स्युः श्रमणादय इति जुमरमतं ॥ ३३ ॥

**बाल०**—कुमारश्च । अध्यापकादिभिः सह कुमारश्च समस्यते । एवं पण्डित-निपुणादिभिरिति । आदिपदेन मृदुपटुकुशलकल्याणचपलादीनां रूपाणां ग्रहणं ॥ ३४ ॥

**बाल०**—विष्णु । अजात्या सह विष्णुकृत्यं तुल्यार्थश्च समस्यते । अजात्येति अजातिवाचकेनेत्यर्थः । भोज्यष्णमिति भोज्यश्च तत् उष्णश्चेति विग्रहः । भोज्यं भक्ष्ये इति ण्यत्प्रकरणोक्तं कृत्सूत्रं । उष्णशब्दो गुणवचनः । एवं । भोज्यलवणमिति तुल्यश्याम इति श्यामशब्दो गुणवचनः । कृष्णेनेति तुल्यार्थैः षष्ठी चेत्यनेन तृतीया । सदृशकृष्ण इति

## ३६. पूर्वापराधरोत्तरादीन्यवयविनैकद्रव्यत्वे ।

पूर्वं कायस्य पूर्वकाय इत्यादि । अत्र पूर्वाह्ण-मध्याह्नापराह्ण-पराह्ण-सायाह्नाः, पश्चिमरात्र-मध्यरात्रादयश्च ज्ञेयाः । भिन्नद्रव्यत्वेतु—पूर्वो वैष्णवानाम् । षष्ठीसमासापवादोऽयम् । तेन कायपूर्व इति न स्यात् ।

## ३७. अर्द्धं समविभागे वा ।

---

**अमृता०**—३६. पूर्वेति । एकद्रव्यत्वे वर्त्तमानानि अवयवरूपाणि पूर्वापरादीनि षष्ठ्यन्तेनावयविना सुबन्तेन समस्यन्ते, श्यामरामसंज्ञाश्च भवन्ति । पूर्वं कायस्येति विग्रहः । अत्र कायः अवयवी, पूर्वमिति तदवयवभेदः, नाभेरूर्द्धवभाग इत्यर्थः । इत्यादि पदेन—अपर पक्षः, अधराङ्ग, उत्तरकाल इत्यादि च ज्ञेयम् । पूर्वाह्णादयश्चादि पदेन समसनीयाः । पूर्वमह्नः इति विग्रहे पूर्वाह्ण, राजाहः—सखिभ्य इतिकेशवारामः, अहन् शब्दस्य अह्नादेशश्च वक्ष्यते, रात्राह्नाहाः पुंसीति पुंस्त्वम्, अरामादह्नस्येति णत्वञ्च वक्ष्यते समासकार्ये । एवं मध्यमह्नः मध्याह्न इत्यादि । पश्चिमरात्रइति—पश्चिमो रात्रे रिति विग्रहे अनेन हि सूत्रेण समासः । वर्षा दीर्घेत्यादिना रात्रेः समासान्तोऽरामो वक्ष्यते । अइ द्वयस्य हरो भगवति, पुंस्त्वञ्च वक्ष्यते । एवं मध्यरात्रः, पूर्वरात्रः अर्द्धरात्रः चरमरात्र इत्यादयो वेदितव्याः ।

भिन्नद्रव्यत्वेत्विति—अवयवावयविनो भिन्नद्रव्यत्वे समासो नेत्यर्थः । पूर्वो वैष्णवानामित्यत्र अवयविनो वैष्णवस्यानेकत्वान्नैक द्रव्यवृत्तित्वम् । ननु पूर्वादिशब्दानां कृष्णनामतया विशेषणत्वाद्—"विशेषणं तुल्याधिकरणेन" इत्यनेनैव पूर्वकायादिकं सिध्यति, किमनेन लक्षणेनेति चेत् ? तत्राह—षष्ठीसमासापवाद इति । षष्ठी परपदेनेति वक्ष्यमाण विधेरपवाद एषः । तत्र षष्ठ्यन्तस्य परिनिपातः, पूर्वादीनाञ्च पूर्वनिपातो विधास्यते परपदानामेव प्राधान्यात्, अत्र तु षष्ठ्यन्तस्य परनिपातः, पूर्वादीनाञ्च पूर्व निपात इष्टः । ततश्चास्याकरणे कायपूर्व इत्येवमादिकमनिष्टरूपमापद्यतेति विरोधापत्तिः स्यादिति भावः ।

**अमृता०**—३७. अर्द्धमिति । समविभागे गम्यमाने एकद्रव्यत्वे वर्त्तमानं अर्द्धं षष्ठ्यन्तेनावयविना सह विभाषया समस्यते । ब्रह्मत्वे ह्यर्द्धशब्दस्यायं समास इति ज्ञापनाय

---

कृष्णशब्दो गुणवचनः । भोच्य ओदन इति ओदनशब्दो जातिवचनः । विशेषणसमासोऽपि बाध्यते इति, तस्मात् अजात्येति विशेषणसामर्थ्यात् विशेषणं तुल्याधिकरणेनेत्यनेनापि समासो न भवतीति ॥ ३५ ॥

**बाल०**—कतर । जातिप्रश्ने सति कतरकतमौ स्वाद्यन्तेन समस्येते । किंयत्तद्भ्यो गणक्रियासंज्ञाभिर्द्वयोरेकस्य निर्द्धारणायामतरच् इत्यनेन अतरच् प्रत्यये कृते कतरशब्दः सिध्यति । बहूनां जातिप्रश्नेत्वतमजकावित्यनेन अतमच्प्रत्यये कृते कतमशब्दः सिध्यति । कतरब्राह्मण इति । एवं कतमब्राह्मण इतिच ज्ञेयं । जातिप्रश्त इति किं कतरपाठकः ॥३६॥

पुंस्यर्द्धोऽर्द्धं समेंऽशके । अर्द्धमामलक्याः अर्द्धामलकी । पक्षे षष्ठी समासः—आमलक्यार्द्धम् । असमत्वे— आमलक्यार्द्ध इत्येव । भिन्नत्वे तु—अर्द्धमालकीनाम् ।

**३८. अर्द्ध जरत्यादयोऽसमविभागेऽपि ।**

**अर्द्धः जरत्याः अर्द्धजरती, अर्द्धोक्तम्, जरत्या अर्द्धमिव अर्द्धजरतीय स्ततकामुकः । इवार्थे कुशाग्रादित्वात्तद्धित ईयः ।**

---

सूत्रे नपुंसकतया निर्देशः, समविभागे एवायं नपुंसकः स्यादिति स्पष्टयितुममरवचनमुपन्यस्यति —पुंस्यर्द्धोऽर्द्धमिति ।

अर्द्धामलकीति—आमलक्यादिशब्दानामिहाप्राधान्येन पूर्वनिपाते प्राप्तेऽनेन परनिपातो वा विधीयते । ततएव गोरीप् आप इत्यादिनाप्रधानस्यामलकी शब्दस्य वामनत्वे प्रसक्ते "नार्द्धामलक्यादौ" इति निषेत्स्यते । अर्द्ध शब्दस्य प्रधानत्वेऽपि "उत्तरपदवल्लिगं रामकृष्ण-कृष्णपुरुषयो" रित्यनुशासनान्नहि स्वतन्त्रलिङ्गता । आमलक्यार्द्धमिति—षष्ठी परपदेनेति षष्ठीकृष्ण पुरुषः । अर्द्धमामलकीनामिति—अवयविन आमलकीद्रव्यस्यानेकत्वान्न समासः ।

**अमृता०**—३८. अर्द्धेति । असमविभागेऽपि गम्ये अर्द्धजरत्यादयः श्यामरामे निपात्यन्ते । जरती वृद्धा, अर्द्धः जरत्या इतिविग्रहः । एवमर्द्ध उक्तस्य अर्द्धोक्तम् । अपि शब्दः चार्थे, तेन समविभागे च समास इष्ट इति दर्शयति—जरत्या अर्द्धमिवेति । अत्र ब्रह्मत्वनिर्देशेन समविभागो व्यञ्जितः । कुशाग्राच्छराम इति तद्धितसूत्रम्, तत्र छस्य ईय आदिश्यते । अर्द्धजरतीत्यत्र च—नार्द्धामलक्यादाविति आदिना वामननिषधो ज्ञेयः ।

---

**बाल०**—षष्ठ्य । अधिकारणसूत्रमेतत् ।। ३७ ।।

**बाल०**—पूर्वा । एकद्रव्यत्वे वर्त्तमानानि पूर्वापराधरोत्तरादीनि षष्ठ्यन्तेन अवयविना सह समस्यन्ते । पूर्वापराधरोत्तरमेकदेशेनैकाधिकरण इति भाषावृत्तिसूत्रं । पूर्वादयोऽवयविना एकद्रव्ये वर्त्तमानाः समस्यन्ते इति तद्वृत्तिश्च । पूर्वं कायस्येति विग्रहः । इत्यादीत्यादिपदेन अपरकाय अधरकाय उत्तरकाय इत्यादिच ज्ञेयं । अत्रेति । पूर्वाह्ण इति पूर्वं अह्न इति विग्रहे अनेन सूत्रेण समासः । राजाहःसखिभ्य इत्यनेन केशवारामः । सर्वकायाभ्यामेकवर्जं संख्यासंख्यातैकदेशेभ्यश्चाहःशब्दस्याह्नः समाहारवर्जं टे इत्यनेन अहःशब्दस्याह्नः रात्राह्नाहाः पुंसीति पुंस्त्वं । अरामान्तादह्नस्येति णत्वं । एवं मध्याह्नापराह्णसायाह्ना ज्ञेयाः । सायो दिनान्तं । दिनान्तेऽपि सायः । सायं सन्ध्या पितृप्रसूरित्यमरः । पश्चिमरात्र इति पश्चिमं रात्रेरिति विग्रहे अनेन समासः । वर्षादीर्घसंख्यातसर्वपुण्यैकदेशाव्ययसंख्याभ्यो रात्रेरित्यनेन अरामः । अ इ द्वयस्य हर इत्यनेन इरामहरः । रात्राह्नाहाः पुंसीति पुंस्त्वं । एवं मध्यरात्रादयो ज्ञेयाः । भिन्नद्रव्यत्वेत्विति स्वरूपमात्रे त्वप्रत्ययः भिन्नद्रव्येत्वित्यर्थः, भिन्नद्रव्येत्विति वा पाठः । पूर्वो वैष्णवानामिति ।

३९. द्वितीय-तृतीय-चतुर्थ-तुर्य-तुरीय-तलाग्रादयश्च वा ।

द्वितीयं पूजायाः द्वितीयपूजा पूजाद्वितीयमित्यादि । तलपादः पादतलं हरेः । अग्रहस्तः हस्ताग्रम् । षष्ठ्यन्तेनेति निवृत्तम् ।

४०. मयूरादयो व्यंसकादिभिः ।

व्यंसको धूर्त्तः । मयूरव्यंसकः कम्बोजमुण्डः यवनमुण्डः । एषां न समासान्तरम्—परमो मयूरव्यंसकः ।

---

अमृता०—३९. द्वितीयेति । एकद्रव्ये वर्त्तमाना द्वितीयादयश्चावयवाः षष्ठ्यन्तेनावयविना वा समस्यन्ते । द्वितीयपूजेति श्यामरामः, पूजाद्वितीतमिति तु षष्ठी समासपक्षे । इत्यादिपदेन—तृतीय पूजा पूजातृतीयम्, चतुर्थयज्ञः यज्ञचतुर्थम्, तुर्यावतारः अवतारतुर्यम्, तुरीयानुष्ठानम् अनुष्ठान तुरीयमिति । तलपाद इति—तलं पादस्येति विग्रहः, अन्यन्तु षष्ठी समास पक्षे । एवमग्र हस्तस्येति विग्रहे अग्रहस्तः, हस्ताग्रमिति षष्ठी समास पक्षे । भिन्नद्रव्यत्वे तु—द्वितीय पूजानाम्, तलं पादानामिति न समासः ।

अमृता०—४०. मयूरादय इति । व्यसंकादिभिः सह मयूरादयः समस्यन्ते । व्यंसकादीनां विशेषणत्वेन पूर्वनिपाते प्राप्ते परनिपातार्थमिह वचनम् । व्यंसयति छलयतीति व्यंसकः । मयूरश्चासौ व्यंसकश्चेति विग्रहः । काम्बोजमुण्ड इति—कम्बोज देशोद्भवो जनः काम्बोजः, सचानौ मुण्ड श्चेति विग्रहः । एवमन्यो देशः देशान्तरम्, चिदेव चिन्मात्रमित्यादि च । एषां न समासान्तरमिति बाहुल्यादिति शेषः ।

---

अत्र अवयविनोऽनेकत्वात् न एकद्रव्ये वृत्तिः । पूर्वं वैष्णवानामिति वा पाठः । नन्वेकदेशे समुदायोपचारात् विशेषणसमासेनैव पूर्वकाय इत्यादिकं सेत्स्यति किमनेन लक्षणेन इति चेत्तत्राह षष्ठीसमासापवादोऽयमिति । तेनेति तस्मादस्मिन् सुत्रे न कृते कायपूर्व इत्यनिष्टरूपं स्यादिति ॥ ३८ ॥

बाल०—अर्द्धं । समविभागे गम्यमाने एकद्रव्ये वर्त्तमानं अर्द्धं षष्ठ्यन्तेन अवयविना सह वा समस्यते । अर्द्धशब्दस्य क्लीवत्वे एवायं योगः प्रवर्त्तते इति सूचयितुं समविभाग इत्युक्तं । पुंस्यर्द्धोऽर्द्धं समेऽंशक इत्यमरोक्तमिति ज्ञेयं । अर्द्धमामलक्या इति विग्रहः । अर्द्धामलकीति नार्द्धामलक्यादौ न चेयस्याः पीताम्बरे इत्यनेन निषेधात् गौरीप आप ऊङश्चान्तस्याप्रधानस्य वामन इत्यनेन वामनः उत्तरपदवल्लिङ्गं रामकृष्ण-कृष्णपुरुषयोरित्यनेन उत्तरपदवल्लिङ्गं । आमलक्या अर्द्धमिति विग्रहे परपदेनेत्यनेन षष्ठीसमासः । असमत्वे इति विभागस्येति शेषः । आमलक्यर्द्ध इत्येवेति अत्रापि षष्ठीसमास एव । अर्द्धमामलकीनामित्यत्र अवयविनोऽनेकत्वात् न एकद्रव्यवृत्तिः ॥ ३९ ॥

बाल०—अर्द्ध । असमविभागेऽपि अर्द्धजरत्यादयो निपात्यन्ते । अर्द्धः जरत्या इति विग्रहः । अर्द्धोक्तमिति अर्द्ध उक्तस्येति विग्रहः । जरत्या अर्द्धमिवेत्यनेन समासवाक्यं

**४१. कुप्रादयो मध्यपदलोपश्च ।**

**कुत्सित श्चासौ पुरुषश्चेति कुपुरुषः । मध्यपदलोपो यथा— प्रगतो वैष्णवः प्रवैष्णवः, प्रतिकूलो नायकः प्रतिनायकः, दुर्गतः पुरुषः, दुष्पुरुषः, षत्वं वाच्यम् । स्वर्चितो राजा सुराजा, अतिशयितो राजा अतिराजा । योगविभागात्— गोवर्द्धननामा गिरिः गोवर्द्धन-गिरिः । शाकाः शक सम्वत्सराः, शाकेषु प्रधानरूपाः पार्थिवाः शाक पार्थिवाः, तेच तत् प्रवर्त्तका युधिष्ठिराद्याः ।**

**तुल्याधिकरणेनेत्यणुवृत्तेः कृष्णप्रवचनीयानां समासो न । कृष्णं परि ।**

---

**अमृता०**—४१. कुप्रादय इति । कुप्रादयः स्वाद्यन्तेन सह समस्यन्ते, प्रादि समासे मध्यपद लोपश्च भवति । कुपुरुष इति—अत्र कुशब्दस्यासुन्दरोऽर्थः, पापार्थादिषु तु—कुः पापेषदर्थयो रिति समासः सिद्ध एव । एवं कुदेशः कुगृहमित्यादि च । प्रवैष्णव इत्यत्र गतस्येति मध्यपदस्य लोपः, प्रतिनायक इत्यत्र कूलपदस्य । षत्वं वाच्यमिति वक्ष्यत इत्यर्थः, निर्दु र्वहिः पादुराविश्चतुरामित्यनेनेति शेषः । सुराजेति—अत्र अर्चित पद लोपः, राजाहः सखिभ्य इति केशवारामस्तु न, स्वतिभ्यां न तौ प्रत्ययाविति तत्रैव निषेधात् । एवमतिराजेति च ।

योगविमागादिति—सूत्रे योगस्य विभागात् मध्यपदलोपश्चेति पृथक् लक्षणमव-गन्तव्यमित्यर्थः । तेन कुप्रादेरितराण्यपि स्वाद्यन्तेन समस्यन्ते, मध्यपदश्च भवतीति लभ्यत इति निष्कर्षः । गोवर्द्धनगिरिरिति—देवदारुद्रुमइतिवद् विशेषण समासः सिद्धः, किन्तु मध्यपद लोपार्थमिह वचनम् । एवं सिंहचिह्नितमासनं सिंहासनम्, विन्ध्यगिरिः, सुग्रीव कपिः, सुरसेननृपति रित्यादयश्च ज्ञेयाः । अत्र शाकप्रधानः पार्थिवः शाकपार्थिव इति काशिकाभाषावृत्त्योरुदाहरणम् । शाकप्रियः पार्थिव इति दीक्षितः । शाकः शक्तिः प्रधानं यस्य स शाकप्रधानः पार्थिवः शाकपार्थिव इति मुग्धबोधटीकायां रामतर्कवागीशः ।

तुल्येति—कृष्णप्रवचनीयानां वाचकत्वाभावात् तुल्याधिकरणत्वं नैव सम्भतीति सामान्यतः समासो निषिध्यते, विशेषतस्त्वव्ययीभावो वक्ष्यते ।

---

तद्धितार्थश्चोक्तः । वस्तुतस्तु अर्द्धः जरत्या इति समासवाक्यं । अर्द्धजरतीवेत्यर्थेतु तद्धित इति अर्द्धमिवेति ब्रह्मत्वोपादानात् समविभागेऽत्र समास इति सूचितं । तत्कामुकः जरतीकामुकः । इवार्थ इति । ननु तद्धितप्रकरणे कुशाग्राच्छराम इत्येव सूत्रं वर्त्तते तर्हि कुशाग्रादित्वात्तद्धित इय इति कथं सङ्गच्छतां तदेतच्चिन्त्यं । कुशाग्रादेरीय इतितु व्याकरणान्तरसूत्रं । तस्मादीय इत्यत्र लिपिकरप्रमादात् इय इत्यभूत् । अन्यथा अ ई-द्वयस्य हरः भगवतीत्यनेन इरामहरे कृते अर्द्धजरतीय इति न स्यादिति ॥ ४० ॥

**बाल०**—द्विती । एकद्रव्ये वर्त्तमाना द्वितीयादयश्च षष्ठ्यन्तेन अवयविना सह वा समस्यन्ते । द्वितीयं पूजाया इति विग्रहः पूजाद्वितीयमिति षष्ठीसमासपक्षे ।

## ४२. इवेन नित्यं समासो विभक्त्यलोपश्च ।

मेघ इव ।

## ४३. यदृच्छादयश्च ।

अत्र या इच्छा यदृच्छा, उदक् च उच्चावचम्, उच्चैश्च नीचैश्च उच्चनीचम्, आचितश्च उपचितश्च आचोपचम्, अपचितश्च पराचितश्च

---

**अमृता०**—४२. इवेनेति । इवेन सह स्वाद्यन्तस्य नित्यं समासः स्यात्, विष्णुभक्तेर्महाहरस्तु न भवति । इवशब्दस्यापि द्योतकाव्ययत्वात् पूर्वोक्तरीत्या समासाप्राप्ते विशेषवचनमिदम् । ननु मेघ इवेत्यादौ विष्णुभक्तेर्महाहरो यदि नक्रियते तर्हि वाक्यमेवास्तु, किमत्र समासफलमिति चेन्न, एकीभावो हि समासफलम् । अतएव पितुः पुत्र इत्यादौ समासपक्षे एव विष्णुभक्तेर्महाहरनिषेधो वक्ष्यते । किञ्च एतत्समासविधानबलात् एतदुत्तरं तद्धितप्रत्ययश्च सिध्यति, यथा,—अग्निरिव पाशः, साधुरिवरूप इत्यादि ।

**अमृता०**—४३. यदृच्छेति । यदृच्छादयश्च श्यामरामे बाहुल्यात् साधव इत्यनुसङ्गः । या इच्छा इत्यत्र यदृच्छा इत्येवं साधुः स्यात्, निपातनादिरामस्य ऋ भावः । उच्चावचमित्यत्र शब्दद्वयस्य संसारहरः, वाक्यगतचकार द्वयेन सह चावशेषस्य मेलनं निपातात् । उच्चनीच इत्यत्र अव्ययशब्दयोरेतयोः अरामान्तत्वं निपातफलम् । आचोपचमित्यत्र चितभागवर्जनेन वाक्यस्थ चकाराभ्यां मेलनं निपातात् । आचपराचमिति पूर्ववत् अपस्थाने आचादेशोविशेषः । एवंनिश्चप्रचमिति । यदृच्छां विना सर्वे हि ब्रह्मान्ता-निपाताः । परमकृत्वेति—समासेऽपि क्त्वा स्थाने यवादेशाभावो निपातफलम् । स्नात्वा-कालकादयश्च साधवः स्युः । कृत्समासे उपेन्द्रोर्यादीत्यादिना कृत्प्रत्ययान्तानां परनिपातः

---

इत्यादीत्यादिपदेन तृतीयपूजा पूजातृतीयं, चतुर्थपूजा पूजाचतुर्थं, तुर्यपूजा पूजातुर्यं, तुरीयपूजा पूजातुरीयमिति । तलपाद इति तलं पादस्येति विग्रहः, पादतलमिति षष्ठीसमासपक्षे । अग्रहस्त इति अग्रं हस्तस्येति विग्रहः, हस्ताग्रमिति हस्तस्य अग्रमिति विग्रहः । भिन्नद्रव्येतु द्वितीयं पूजानां तलं पादानां अग्रं हस्तानां ॥ ४१ ॥

**बाल०**—मयू । व्यंसकादिभिः सह मयूरादयः समस्यन्ते । मयूरव्यंसक इत्यादौ यदि विशेषणं तुल्याधिकरणेन इत्यनेन समासः स्यात्तदा द्वयोरेव व्यावर्त्तकत्वे पूर्वनिपाता-नियमः स्यात् अतोऽयं विधिः । व्यंसयति छलयतीति व्यंसको धूर्त्त इत्यर्थ । कम्बोजमुण्ड इति कम्बोजः कम्बोजदेशोद्भवः । एषामिति एषां मयूरव्यंसकादीनां समासान्तरं न भवति बाहुल्यादिति शेषः ॥ ४२ ॥

**बाल०**—कुः । स्वाद्यन्तेन सह कुप्रादयः समस्यन्ते मध्यपदलोपश्च भवति । कुपुरुष इति अत्र कुशब्दो न पापार्थः, किन्तु असुन्दरार्थः, यदि पापार्थत्वं स्यात्तदा कुः पापेषदर्थयोरित्यनेनैव समासः स्यात् । एवं कुभवनं कुवसनमित्यादिच ज्ञेयं । प्रवैष्णव इति मध्यपदस्य गतस्य लोपः । दुर्गतो दरिद्रः । षत्वमिति वाच्यमिति वक्ष्यते इत्यर्थः ।

आचपराचम्, निश्चितश्च प्रचितश्च निश्चप्रचम्, परमकृत्वा, स्नात्वा-कालकः, पीत्वास्थिरकः, भुक्त्वा सुहितकः, निपत्यरोहिणी, प्रोष्य-पापीयानित्यादयश्च बाहुल्यात् साधवः ।

इति कृष्णपुरुषेषु श्यामरामः ।

**४४. दिक् संख्ये तद्धितार्थोत्तरपदसमाहारेषु ।**

**स्वाद्यन्तेन च सहेत्यर्थाद् गम्यते, एवमुत्तरत्रापि । दिक् संख्या वाचिनी विष्णुपदे स्वाद्यन्तेन सह समस्येते, तद्धितार्थे विषये, उत्तरपदे परतः, समाहारे वा वाच्ये । पूर्वस्यां शालायां भव इति वाक्ये तद्धिताण् प्रत्ययः, उक्तार्थत्वाद् भवस्याप्रयोगः, अन्तरङ्ग स्वादिमहाहरः, पूर्वपदस्य पुंवद्भावः, आदिसर्वेश्वरस्य वृष्णीन्द्रः, अइद्वयस्य हरः, पुंवद् भावादयो वक्ष्यन्ते, पौर्वशालः । अत्राप्यन्तः श्यामरामत्वमस्ति समानाधिकरणसमासादिति पाणिनीयाः ।**

---

सूचितः । क्त्वो यवनञ् पूर्वसमासे इत्यत्र च सएव स्पष्टीकृतः । तथैवोदाहृतानि—प्रकृत्य उरीकृत्येत्यादिना । इह तु क्त्वाप्रत्ययस्य पूर्वनिपातो निपाताद् बाहुल्याच्चेति बोध्यम् । इति श्यामरामः ।

**अमृता०**—४४. दिगिति । स्वयं वृत्तिमाह—दिक् संख्या वाचिनो इत्यादिभिः । तत्रादौ तद्धितार्थमुदाहरति—पूर्वस्यामिति । वाक्य इति—तद्धितेऽपि वाक्यप्रत्यययो विभाषा विधास्यते, तत्र प्रत्ययपक्षे हि समासानन्तरं प्रत्ययो ज्ञेयः । इह 'तत्र भव' इति तद्धितार्थे प्रथमं समासेन पूर्वशाला शब्दः स्थितः, ततोऽण् प्रत्ययः, अइद्वयस्येति अरामहरः, णित्त्वादादि सर्वेश्वरस्य वृष्णीन्द्रः । दिक्पूर्वपदादनाम्नि णराम इत्यण् प्रत्ययसूत्रम् । पुंवद् भावादयो वक्ष्यन्त इति—वाच्यलिङ्गलक्ष्मीस्तुल्याधिकरण लक्ष्म्यामित्यनेन । अन्तः श्यामरामत्वे हेतुः—समानाधिकरण समासादिति । अत एव तुल्याधिकरणलक्ष्मीपरत्वा-लक्षणाद् वाच्यलिङ्गलक्ष्म्याः पुंवद्भावः । पूर्वस्य गवा समास इति—गोशब्दस्याप्राधान्येन

---

निर्दुर्बहिःप्रादुराविश्चतुरामिति वक्ष्यमाणसूत्रेण विष्णुसर्गस्य यः । सुराजेति स्वतिभ्यां न तौ प्रत्ययौ प्रशंसायामिति निषेधात् राजाहःसखिभ्यः इत्यनेन केशवारारामः । एवमति-राजेति । योगविभागादिति योगविभागात् कुप्रादिभिन्नमपि स्वाद्यन्तं स्वाद्यन्तेन समस्यते मध्यपदलोपश्च भवतीति भावः । गोवर्द्धनगिरिरिति, गिरेर्गोवर्द्धनत्वैकधर्मत्वाभावात् विशेषणसमासेनापि सिध्यतीति ज्ञेयं, किन्तु पूर्वनिपातनियमार्थं वचनमिदं, अन्यथा गोवर्द्धनपदस्य संज्ञामननेन गिरेर्जातित्वपरिकल्पनया गिरेरपि पूर्वनिपातः स्यादिति । पार्थिवा नृपाः तेच शाकपार्थिवाश्च तत्प्रवर्त्तकाः शाकप्रवर्त्तकाः ॥ ४३ ॥

उत्तरपदे—पूर्वो गौः प्रियो यस्येति विग्रहे प्रथमं पूर्वस्य गवा समासः, ततो गोरतद्धितलुकीति तद्धितः समासान्तष्टप्रत्ययः, समुदायेनान्यपदार्थत्वे पीताम्बरः, उक्तार्थत्वाद् यस्येत्यस्याप्रयोगः, पूर्वगवप्रियः।

इति दिक् कृष्णपुरुषाः।

## ४५. संख्यापूर्वोऽसौ त्रिरामीसंज्ञः।

द्विगु रिति प्राञ्चः। तत्र तद्धितार्थे—दशभिरवतारै र्जयति दाशावतारिकः। उत्तरपदे—पञ्चगवप्रियः। समाहारे तु संख्येयेनैव समासः।

---

गोरीप आप ऊङश्चान्तस्याप्रधानस्य वामन इति समासे पूर्वगुरित्येवं रूपम्, ततस्तद्धितः टप्रत्ययः। टइत् अरामशेषः, "उद्वयस्य गोविन्दो न च धातो र्न च स्त्रीप्रत्यये" इति गोविन्दः, ओ अव्, पूर्वगव इत्यवस्थानन्तरमन्यपदार्थप्रधानत्वे पीताम्बरः। तेन दिक् कृष्णपुरुषगर्भपीताम्बराख्यः समासोऽयम्। दिग्वाचिनः समाहारे नैवोदाहरणं सम्भवतीति द्वैविध्यमेवोदाहृतम्।

**अमृता०**—४५. संख्येति। असौ कृष्णपुरुष समासः संख्यापूर्वश्चेत् तदा त्रिरामीसंज्ञः स्यात्। स च तद्धितार्थादिषु त्रिष्वेवार्थेषु स्यादिति क्रमेण दर्शयति—तत्रेत्यादिना। दाशावतारिक इति—तेनदीव्यति जयति जितमित्यर्थेषु समासः, माधवठः, ठइकः, आदि सर्वेश्वरस्येति वृष्णीन्द्रः। एवं पञ्चभि र्नौभिः क्रीतः पञ्चनौः, पञ्चगु रित्यादि। पञ्चगवप्रिय इति—पञ्च गावः प्रिया यस्येति विग्रहे पूर्ववत् तद्धितटप्रत्ययान्तेन पश्चात् पीताम्बरः। समाहारेत्विति—समाहारः संहति प्रधानः। संख्येयेनैवेति—अष्टादशपर्यन्तसंख्याः संख्येये वर्त्तन्तेतदूर्द्ध्वं संख्याने चेति वचनात् अष्टादशपर्यन्तसंख्याशब्दैः समाहारः निःसन्देहं कार्यः, तदूर्द्ध्व शब्दानां तु संख्येयबोधकत्वे हि समाहारो नतु संख्यान वाचित्व इति सरलार्थः। एव शब्दः संख्यानस्य दिक् शब्दस्य च व्यावर्त्तको ज्ञेयः।

---

**बाल०**—तुल्य। तुल्याधिकरणेनेत्यनुवृत्तेरिति कृष्णप्रवचनीयानां समासाभावे हेतुः॥ ४४॥

**बाल०**—इवेन। इवेन सह नित्यं समासो भवति, विष्णुभक्त्यलोपश्च भवति। समास इति स्वाद्यन्तस्येति शेषः। स्वाद्यन्तं इवेन सह समस्यते इत्यर्थः। अत्र स्वाद्यन्तस्य षष्ठ्यन्तत्वेऽपि प्रथमान्तप्रतिनिधित्वात् पूर्वनिपातो ज्ञेयः, समास इत्यत्र समस्यते इति वा पाठः, तथा सति स्वाद्यन्तमित्यर्थादि्गम्यत एव। ननु मेघ इवेत्यादौ समासस्य विष्णुभक्त्यलोपस्य च किं फलं वाक्यमेवास्त्विति चेत्तत्रोच्यते, अस्मिन् सूत्रे न कृते अग्निरिव पाश इत्यादिप्रयोगो न स्यात्, अग्निरिव पाश इति हीनोऽग्निरिवेत्यर्थे गर्ह्ये पाश इत्यनेन पाशप्रत्ययस्तद्धितः। अत्रेति अत्र श्यामरामसमासे यदृच्छेत्यादिकं प्रोष्यपापीयानित्यादयश्च बाहुल्यात् साधव इति। या इच्छेति, या इच्छा इत्यत्र यदृच्छेति निपात्यते,

## ४६. समाहारे त्रिराम्यामेकत्वं ब्रह्मत्वञ्च ।

पञ्च गोप्यः समाहृता इति, पञ्चानां गोपीनां समाहार इति वा विग्रहे पञ्चगोपि ।

## ४७. अरामान्ता त्रिराम लक्ष्मीः, आवन्ता वा, त्रिराम्या ईप् ।

---

**अमृता०**—४६. समाहार इति । समाहारार्थे विहितायां त्रिराम्यामेकत्वं ब्रह्मत्वञ्च भवति। अत्र सम्मेलनमात्र बोधकत्वेन लिङ्गसंख्यानिरपेक्षता, ब्रह्मैकत्वन्तु साधुत्वार्थमिति भावः । पञ्चगोपीति—ब्रह्मान्तत्रिविक्रमस्येति वामनः ।

तत्र विशेषमाह—

**अमृता०**—४७. अरामान्ता इति । अरामान्ता त्रिरामी लक्ष्मीः स्यात्, आवन्ता त्रिरामी विकल्पेन लक्ष्मीः स्यात्, पक्षे ब्रह्म च, त्रिराम्या उत्तरं लक्ष्म्यामीप् भवति, स च तद्धिते—"त्रिराम्या" इतिविधास्यमानसूत्रेणैवेति ज्ञेयम्, एकत्वन्तु पूर्वेणैव सिद्धम् । त्रिरामीति—त्रयो रामाः समाहृताः, त्रयाणां रामाणां समाहार इति वा विग्रहः । एवं त्रिलोकी चतुःश्लोकी पञ्चवटी सप्तशतीत्यादि बोध्यम् । ननु समाहारो नाम समुच्चयः, सचानेकस्य विप्रकीर्णस्य हि सम्भवेत्, कथमेकापूपीति समाहार इति चेत् ? तत्र जुमर वाक्येन सङ्गति

---

यदृच्छेत्यत्र उभयपदे अन्तरङ्गस्वादेर्महाहरे सति या यद् इच्छा ऋच्छा । उच्चावचमित्यत्र उभयपदे अग्भागपरित्यागः उपेन्द्रद्वयं वाक्यस्थचकारद्वयं चावशिष्टं । उच्चनीचमित्यत्र केवलस्वादेर्महाहरः । आचपराचमित्यत्र चितभागपरित्यागः । अप स्थाने आ इति भावः । एवमन्यत्रच ज्ञेयं । यदृच्छा स्वैरितेत्यमरः । उच्चावचमिति, उच्चावचं नैकभेदमित्यमरः । परमकृत्वा स्नात्वाकालक इत्यादीनामेकपदत्वात् तद्धितप्रत्यये स्नात्वाकालकिरित्यादिकं स्येत्स्यतीति ज्ञेयं ।। ४५ ।।

**बाल०**—दिक् । वृत्तिमाह दिक्संख्यावाचिनी इति । परतः परे । तद्धितार्थे उदाहरणं दर्शयति पूर्वस्यामिति । शाला गृहं । इति वाक्य इति । इति वाक्ये प्रथमं समासस्ततोऽणप्रत्यय इति ज्ञेयं । तद्धिताणप्रत्यय इति दिक्पूर्वपदादनाम्नि णराम इत्यनेनेति शेषः । पुम्बद्भावादयो वक्ष्यन्त इति पुम्बद्भावादिसाधका योगा वक्ष्यन्ते इत्यर्थः । अन्तः श्यामरामत्वसद्भावे हेतुमाह समानाधिकरणसमासादिति । उत्तरपद इति उदाहरणं दर्श्यंते इत्ति शेषः । गवेति गवा सहेत्यर्थः गोरतद्धितलुकीति कृष्णपुरुषे प्रवर्त्तते अत उक्तं प्रथमं पूर्वस्य गवा समास इति । समुदायेनेति अन्यपदार्थत्व इति अन्यपदस्य अर्थत्वं इत्यर्थः । अर्थत्वं वाच्यत्वं । पीताम्बर इति पश्चात् पीताम्बर इत्यर्थः । तस्मात् समासोऽयं दिक्कृष्णपुरुषगर्भपीताम्बराख्य इति भावः ।। ४६ ।।

**बाल०**—संख्या । असौ समासः संख्यापूर्वश्चेत्तदा त्रिरामीसंज्ञो भवति । तत्र तद्धितार्थ इति उदाहरणं दर्श्यते इति शेषः । दाशावतारिक इति तेन दीव्यति खलति जयति जितमित्यनेन माधव-ठः टणिन्माधवः ठ इकः । पञ्चगवप्रिय इति पञ्च गावः प्रिया

त्रिरामी पञ्चाध्यायी। एकापूपी इति तु कल्पितबहुत्वात् समाहार इति जुमरः। रामाशब्दस्य त्रिरामी त्रिरामम्।

**४८. अन्नन्ता वा, नलोपस्तूभयत्र।**

त्रिब्रह्मं त्रिब्रह्मी।

**४९. पात्राद्यन्ता न।**

द्विपात्रं त्रिभुवनं चतुर्युगम्। मुखान्ता वेति वक्तव्यम्। चतुर्मुखं चतुर्मुखी। तथा च मुरारिः,—

---

दर्शयति—कल्पितबहुत्वादिति। यथा एकमेव द्रव्यं दरिद्रायानन्तारूपेण गण्यते तथा भ्रमवशतोऽप्येकं दत्वा तद् बहुत्वं मन्यते। दाने भ्रमे चैकत्वस्य बहुत्वकलनप्रसिद्धे रिति भावः। आवन्तस्य त्रिरामीत्वे चोदाहरति—रामाशब्दस्येति। अत्रलक्ष्मीपक्षे 'त्रिराम्यामीप्' इत्यनेन ईपि कृते अइद्वयस्य हरो भगवतीत्यारामहरः। ब्रह्मपक्षे ब्रह्मान्त त्रिविक्रमस्येति वामनः।

**अमृता०**—४८. अन्नन्तेति। अन् अन्ते यस्या स्ताद‍ृशी त्रिरामी विभाषया लक्ष्मीः स्यात्, पक्षे ब्रह्म च। नामान्तस्य नस्य हर इत्यनेन नलोपस्तु पक्षद्वय एव भवति।

**अमृता०**—४९. पात्रेति। पात्राद्यन्ता त्रिरामी लक्ष्मी नं स्यात्। अरामान्तत्वेन लक्ष्मीत्वे प्राप्ते त्विह निषिध्यते, सामान्येन ब्रह्मैव भवतीति भावः। द्विपात्रमिति—द्वपात्रे समाहृते, द्वयोः पात्रयोःसमाहारो वेत्येवं वाक्यं सर्वत्र कल्पनीयम्। एवं द्विचन्द्रं पञ्चगवं पञ्चपात्रमित्यादि च ज्ञेयम्। पञ्चपात्रीति तु न समाहारान्तः, किन्तु पञ्चभिर्धातुभि निर्मितमेकमेव पात्रं पञ्चपात्रीत्याख्यां लभत इति रूढी शब्दोऽयम्। मुखान्तेति—मुखशब्दो ऽन्ते यस्या स्ताद‍ृशी त्रिरामी लक्ष्मी र्वा स्यादिति वक्तव्यम्। तच्च प्राचीन प्रयोगाभ्यां समर्थयते—तथाचेत्यादिभिः। मुरारिः प्राचीनकविः। श‍ृङ्गाटकश्चतुष्पथ इत्यमरः। धातुर्ब्रह्मण श्चतुर्मुख्या यः कण्ठरूपश्चतुष्पथ स्तत्र विहर्त्तुं शीलं यस्या स्तां सरस्वतीं भजे इत्यर्थः। चतुर्मुखं तडाग इव तत्रानुराग युक्तां हंसीरूपिणीं वाणीं भजामीत्यर्थः। पूर्वत्र त्रिराम्यां लक्ष्मीत्वमुत्तरत्र ब्रह्मत्वमिति विभाषा दर्शिता।

---

यस्येति विग्रहे सर्वं पूर्ववज्ज्ञेयं। समाहारेत्विति समाहारेतु संख्येयेनैव सह समासो भवतीति ॥ ४७ ॥

**बाल०**—समा। समाहारे वाच्ये विहितायां त्रिराम्यां एकत्वं ब्रह्मत्वञ्च भवति। समाहार इति भावे घण् समाहृतिरित्यर्थः। पञ्चगोपीति एकत्वादेकवचनं ब्रह्मत्वात् ब्रह्मान्तत्रिविक्रमस्य वामन इत्यनेन वामनः ॥ ४८ ॥

**बाल०**—अरा। अरामान्ता त्रिरामी लक्ष्मीर्भवति। सद‍ृशव्यावर्त्तकं विशेषविधानं भवतीति ब्रह्मत्वव्यावर्त्तकं लक्ष्मीत्वविधानं एकत्वन्तु पूर्वलक्षणेनैव सिद्धमेवेति ज्ञेयं।

धातुश्चतुर्मुखीकण्ठ-शृङ्गाटक विहारिणीम् ।
नित्यं प्रगल्भवचनामुपतिष्ठे सरस्वतीम् ॥

अन्यत्र च—

धातु श्चतुर्मुख-तडाग-सरागहंसीम् ।
वाणीं भजामि भवतीति हरां त्रिनेत्राम् ॥ इति ।

सप्तर्षयः पञ्चाम्राश्चतुर्विद्या इत्यादयस्तु संज्ञाशब्दाः समाहाराविवक्षया श्यामरामः । चतुर्वर्णाः द्वीन्द्रिये इत्यादयः संज्ञेतरा अपि ।

## इति त्रिरामी कृष्णपुरुषाः ।

---

सप्तर्षय इति—सप्तचामी ऋषयश्चेति विग्रहे कृते तु सज्ञा न प्रतीयते, अतो वाक्यं न प्रयोक्तव्यम् रूढित्वात् । ततश्च नित्यसमासत्वे "ननित्यसमासे न चाविष्णुपदान्ते निषेध वामनौ" इति सन्धिनिषेधः प्रतिषिद्धः । एते हि सप्तर्षय.—मरीचिः अत्रिः पुलहः पुलस्तः क्रतुः अङ्गिरा बशिष्ठश्चैते ब्रह्मणो मानष पुत्राः स्वमण्डले वसन्ति । पञ्चाम्राश्च यथा,—अश्वत्थमेकं पिचुमर्दमेकं न्यग्रोधमेकं दश पुष्पजातीः । द्वे द्वे तथा दाडिममातुलुङ्गे पञ्चाम्र-वापी नरकं न याति ॥ इति वाराहे ॥ अपि च—अश्वत्थमेकः पिचुमर्द एको द्वौ चम्पकौ त्रीणि च केशराणि । सप्ताथ ताला नव नारिकेलाः पञ्चाम्रवापी नरकं न पश्येत् ॥ इति तिथि तत्त्वम् ॥ पिचुमर्दो निम्बः, मातुलुङ्गो बीजपूरकः । पञ्चाम्रान् उप्तुं शीलमस्येति वपते र्णिनिः । चतुर्विद्या इति—चतस्रश्चामू विद्याश्चेति विग्रहः । चतस्र इति चतुर्वेद सम्बन्धिन्य इत्यर्थः । समाहाराविवक्षयेति—अत्र पृथक् पदार्थ बोध एवेष्टो नतु तत्समुच्चय बोध इति भावः । चतुर्वर्णादयः असंज्ञायामपि समाहारस्याविवक्षया श्यामराम एवेष्ट इत्यर्थः ।

---

आव । आवन्ता त्रिरामी लक्ष्मीर्वा भवति । त्रिराम्या ईविति त्रिराम्या इति तद्धित-प्रकरणोक्तसूत्रेणेति शेषः । त्रिरामीति त्रयो रामाः समाहृता इति त्रयाणां रामाणां समाहार इति वा विग्रहः । एवं सर्वत्र विग्रहः कल्प्यः । गामानयेत्युक्ते जातेरानयना-सम्भवात् यथा तदभिव्यञ्जकस्य द्रव्यस्यानयनं गम्यते, तथा पञ्चाध्यायीमानयेत्युक्ते समाहाररूपस्य धर्मस्यानयनासम्भवात् पञ्चानामध्यायानामानयनं गम्यते इति ज्ञेयं । ननु समाहारोऽनेकस्य विप्रकीर्णस्य भवति, तर्हि कथं एकापूपीत्यत्र समाहारो भवत्विति चेत्तत्राह एकापूपी इतित्विति । कल्पितबहुत्वादिति, दानभ्रमाभ्यां एकस्यापि कल्पित-बहुत्वादित्यर्थः । एकं हि दानवस्त्वनन्ताय कल्पते । एवं भ्रमेणापि अस्य पत्रे एकं दत्तं बहूनि वा दत्तानीति बहुत्वं सम्भवति, तस्मादेकस्यापि बहुत्वकल्पनया अत्र समाहार इति । अपूपः पिष्टकः । पूपोऽपूपः पिष्टकः स्यादित्यमरः । आवन्ता वेत्यस्य उदाहरणं दर्शयति रामाशब्दस्येति । त्रिरामीति गोरीप आप ऊङश्चान्तस्याप्रधानस्य वामन इत्यनेन

## ५०. नञ् ।

अमृता०—५०. नञिति । नञ् इत्यव्ययं स्वाद्यन्तेन सह समस्यते, कृष्णपुरुषसंज्ञश्च भवति । अवैष्णव इति—अत्र नञस्तदन्यत्वं विरोधो वार्थः । तेन वैष्णवेतरः स्मार्त्तादिः, वैष्णवविरोधी वा वैष्णवशब्देनोच्यते । यथोक्तम्—तत् सादृश्यमभावश्च तदन्यत्वं तदल्पता । अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्त्तिता ॥ इति ॥ अब्राह्मण इत्यत्र ब्राह्मण सदृश इत्यर्थः । अपापः अशान्त इत्यादौ पापाद्यभाव वानित्यर्थः । अधातुविष्णु-भक्तिकमित्यादौ धातु विष्णुभक्तिभिन्नमित्यर्थः । अनैष्ठिकोभक्तः अनुदरा कन्या इत्यादौ अल्पनिष्ठावान् अल्पोदरवतीत्यर्थः । अधनं चर्मधनमित्यत्र अप्रशस्तधनमर्थः । असुरः अकथ्यमित्यादौ सुराविरोधीत्यर्थः ।

सच नञ् पुनर्द्विविधः—पर्युदासः प्रसज्यप्रतिषेधश्चेति । तत्र पर्युदासत्वे हि सादृश्या-द्यर्थषट्के समासो भवति । यथोक्तं—प्रधानत्वं विधेर्यत्र प्रतिषेधेऽप्रधानता । पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ् ॥ अप्राधान्यं विधे र्यत्र प्रतिषेधे प्रधानता । प्रसज्यप्रतिषेधोऽसौ क्रियया सह यत्र नञ् ॥ इति ॥

अत्राप्राधान्य प्राधान्ये विधेयांशदिग्भ्यां विवेचनीयम्, वाक्ये विधेयं प्रधानम्, उद्देश्यन्त्वप्रधानम् । ततोऽयमर्थः—यत्रवाक्ये विधेः प्राधान्यम् विधेयतया मुख्यत्वं, प्रति-षेधे नञर्थे अप्रधानता, उद्देश्यतावच्छेकतया अमुख्यत्वम्, यत्र चोत्तरपदेन सह नञ् सम्बध्यते, तत्र वाक्ये स नञ् पर्युदासो विज्ञेयः । द्वादश्यां तुलसीं न चिनुयादित्यादौ तुलसी चयनमात्रे तात्पर्याभावेन न द्वादश्यामर्थात् द्वादशीभिन्नतिथौ तच्चयन विधानात् द्वादश्या-मित्यस्योत्तरपदत्वमुपपन्नम् । अतोऽस्य पर्युदासत्वेन समासो विधेयः । अद्वादश्यां तुलसीं चिनुयादिति पर्यवसीयते ।

अथ यत्र वाक्ये विधेरप्राधान्यम्, उद्देश्यतया अमुख्यत्वम्, प्रतिषेधे नञर्थे प्रधानता विधेयतया मुख्यता, यत्र च क्रियया ( समापिकया ) सह नञः सम्बन्ध स्तत्र वाक्ये स नञ् प्रसज्यप्रतिषेधो बोध्यः । राधे ! नायं नवजलधरः किन्तु श्यामसुन्दर एष इत्यत्र नवजल-धरत्वाभाववानयमित्यर्थः । अत्र इदं पदार्थस्योद्देश्यत्वम्, अभावस्य नञर्थस्य विधेयत्वेन प्राधान्यमिति प्रसज्यप्रतिषेध एषः, नैव समासविषयः । कृष्णपुरुषस्योत्तरपदप्राधान्येन नञर्थस्य गौणत्वात् प्रसज्यप्रतिषेधे तद् व्याघातः स्यादित्येव समासाभावे बीजं ज्ञेयम् ।

ननु अश्राद्धभोजी विप्रः, असूर्यम्पश्या राजमहिषीत्यादौ भोजनादिक्रियांशेन सह नञः सम्बन्धे सद्भावेऽपि कथं समास इति चेत् ? सत्यं, श्रूयताम्, नकेवलं भोजनादि-क्रियांशेनात्र नञः सम्बन्धः, अपि विशेष्यतया प्रधानेन तद्भोजि-कर्त्रंशेन च । यदुक्तम्—श्राद्धभोजनशीलो हि यतः कर्त्ता प्रतीयते । नतद् भोजनमात्रन्तु कर्त्तरीणे विधानतः ।

वामनः त्रिराम्या इत्यनेन ईप् त्रिराममिति समाहारे त्रिराम्यामेकत्वं ब्रह्मत्वञ्चेति एकत्वं ब्रह्मत्वञ्च ॥ ४९ ॥

समस्यते, अराम इत्। न वैष्णव इति विग्रहे—नञोऽराम शेष इति अवैष्णवः, न अवैष्णवः अनवैष्णवः। नञ् कृष्णपुरुषोऽयम्।

## ५१. कालाः षष्ठ्यन्तेन तत्परिमाणिजातादिना।

जातस्य मासः मासजातः, जातस्य जननक्रियाया मासः परिच्छेद हेतुः, जननादूर्द्ध्वमस्य मासो गत इत्यर्थः। एवं संवत्सरजातः।

## ५२. प्राप्तापन्ने द्वितीयया।

---

इति साहित्यदर्पणे ॥ अत एवमादिस्थले पर्युदास एवायं नञिति सिद्धान्तः। एवमभुञ्जानो मालां करोति, अभुक्त्वा हरिमर्च्चयति, नर्मोक्तिभिरहसितुं यतते इत्यादिषु करोत्यादि समापिक्य क्रियाभि विधेयत्वावगमात् अभुञ्जान इत्यादेरुद्देश्यतया अप्राधान्येन नञः पर्युदास-समासो वेदितव्य इति।

हरिमभजसीत्यत्र त्वप्राप्तं ह्याक्षेपरूपविशेषार्थे प्रसह्यप्रतिषेध नञा समासः। पूर्व-पदप्राधान्ये त्वव्ययीभावः—अभोजनं भोजनस्याभाव एकादश्यामिति। अन्यपदार्थप्राधान्ये तु पीताम्बरः—न विद्यते पापं यस्य सोऽपाप इति दिक्। नैकोऽपि तवनिश्चयः, नैकधा भाति हरि रित्यादौ तु नशब्देन समासो नतु नञा। एवं नमुञ्चतीति नमुचिः, नास्ति कुलमस्येति नकुलः, नस्त्री न पुमान् नपुंसकम्, नक्षरतीति नक्षत्रम्, नास्मिन् अकमिति नाकः नास्य खमस्तीति नख इत्यादयो नञ्समासतया न भ्रमितव्याः।

**अमृता०**—५१. काला इति। दिन मास वर्षादयः कालपरिमाण वाचिनः, ते षष्ठ्यन्तेन कालपरिमाणवता जातादिना सह समस्यन्ते। षष्ठीसमासापवाद एषः, अन्यथा जातमास इत्यादि स्यात्। कालपरिमाणित्वं जातादेः स्पष्टयति—जातस्य जनन क्रियाया इत्यादिभिः। जातस्य हि परिमाणं मासः, अतो जातः परिमाणीति भावः। एवं द्यह-जातः, पक्षजातः, सम्वत्सरजात इत्यादयश्च ज्ञेयाः।

**अमृता०**—५२. प्राप्तेति। प्राप्तापन्नशब्दौ द्वितीयया सह समस्येते। इह प्राप्ता-पन्नयोः प्राधान्येन पूर्वनिपातार्थं सूत्रम्, अन्यथा द्वितीया श्रितादिभि रित्यनेन द्वितीयान्तस्य

---

**बाल०**—अन्न। अन्नन्ता त्रिरामी लक्ष्मीर्वा भवति नलोपस्तु उभयत्र भवति नित्यं भवतीत्यर्थः ॥ ५० ॥

**बाल०**—पात्रा। पात्राद्यन्ता त्रिरामी लक्ष्मीर्न भवति। चतुर्युगमिति। एवं पञ्चगवं द्विचन्द्रं पञ्चराजमित्यादिच ज्ञेयं। सप्तर्षय इत्यादौ पञ्चाम्राः के इति चेत् केनाप्युच्यते तदैवं वाच्यं। अश्वत्थमेकं पिचुमर्दमेकं द्वौ चम्पकौ त्रीनथ केशरांश्च। सप्ताथ तालान्नव नारिकेलान्। पञ्चाम्रवापी नरकं न पश्येत्। पञ्चाम्रान् उप्तुं शीलमस्य पञ्चाम्रवापी। इत्यादयस्तु संज्ञा शब्दा इत्यनन्तरमत्रेति ज्ञेयं। संज्ञेतरा अपीति तस्मादत्रापि समाहारा-विवक्षया श्यामराम इति ॥ ५१ ॥

प्राप्तः सख्यायं प्राप्तसखः। अत्र सख्यु ष्टस्तद्धितः। प्राप्तजीविकः। कथं जीविकाप्राप्तः, सुखापन्नः ? द्वितीया श्रितादिभिरिति वचनात्।

**५३. गोरीपआप ऊङश्चान्तस्याप्रधानस्य वामनः, नार्द्धामलक्यादौ नचेयस्याः पीताम्बरे।**

---

हि पूर्वनिपातः स्यात्। अत उत्तरपदस्याप्राधान्यात् प्राप्तजीविक इत्यादौ गोरीप आप इत्यग्रिमसूत्रेण वामनत्वम्। एतेन तु द्वितीयाकृष्णपुरुषो न हि बाध्यत इत्याह—कथमित्याशङ्क्य। तत्र तूत्तरपदानां श्रितादीनामेव प्राधान्यमिति भेदः। अत्र पुंस्त्वमतन्त्रम्, त्रिरामी प्राप्तापन्नालं पूर्वगति समासेषु वाच्यलिङ्गतैवेति वक्ष्यमाण वचनात्। तेन प्राप्ता कृष्णविहारमिति प्राप्तकृष्णविहारा वृन्दाटवी, प्राप्तं केलिसुखमिति प्राप्तकेलिसुखं सखिमित्यादि कल्पनीयम्।

अमृता०—५३. गोरीप इति। अन्तस्थितस्य अप्रधानस्य गोशब्दस्य, तथाभूतस्य हि ईपः आपः ऊङश्च प्रत्ययस्य वामनः स्यात्। अर्द्धामलक्यादौ तथा पीताम्बरे ईयसुप्रत्ययान्तस्यान्तत्वेऽप्रधानत्वेऽपि वामनो न भवति। प्राप्तगव इति—प्राप्तो गामिति विग्रहे अप्रधानत्वाद् वामने कृते प्राप्तगुरिति, ततो गोरतद्धितलुकीति समासान्तः टप्रत्ययः। गोविन्दो वक्ष्यत इति—उद्वयस्य गोविन्दो नतु धातो नँच स्त्रीप्रत्यये इत्यनेनेति शेषः। अन्तस्येति किम्—गोसमूहः। अप्रधानस्येति किम्—सुगौः। प्राप्त गोपिरित्यत्र इपो

---

बाल०—नञ्। वृत्तिमाह समस्यत इति स्वाद्यन्तेन सहेति शेषः अनवैष्णव इति नञोऽरामशेषः सर्वेश्वरेतु नुट्च समास इत्यनेन नञोऽरामशेषो नुट्च। नञ् द्विविधो भवति पर्युदासः प्रसज्यप्रतिषेधश्च। तथाचोक्तं। प्रधानत्वं विधेर्यत्र प्रतिषेधेऽप्रधानता। पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ्। अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता। प्रसज्यप्रतिषेधोऽसौ क्रियया सह यत्र नञिति। अब्राह्मण इत्यादौ उत्तरपदार्थसदृशस्य विधेयत्वात् विधेरेव प्राधान्यं तदर्थे नञ्शब्दयोगात् प्रतिषेधे अप्रधानता। प्रतिषेधांशे तात्पर्याभावात्। अतएव उत्तरपदेन सह पर्युदासस्य परस्परव्यपेक्षालक्षणस्य सम्बन्धस्य विद्यमानत्वात् समासो भवत्येव। सादृश्यं नाम तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वमिति। असूर्यम्पश्य इत्यादौतु विध्यंशस्याप्राधान्यं तदर्थे तात्पर्याभावात्। प्रतिषेधे प्रधानता तदर्थे नञ्शब्दयोगात्। अतएव उत्तरपदेन सह नञः परस्परव्यपेक्षालक्षणसम्बन्धः। किन्तु क्रियया सहेति। अतः कृत्प्रकरणे सूर्यमपि न पश्यतीत्युक्तं भिन्नक्रमोऽयं नञ् इति चोक्तं। नञार्थास्तु षड्विधा भवन्ति तथाचोक्तं। तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता। अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिता इति। अत्र तत्सादृश्य तदल्पताप्राशस्त्यानि त्रीणि पर्युदासान्तर्गतानि अन्यानितु प्रसज्यप्रतिषेधान्तर्गतानीति। अब्राह्मण इत्यादौ तत्सादृश्यं, असूर्यम्पश्य इत्यादौ अभावः, अनाम-नवती-नगरीणामित्यादौ तदन्यत्वं, अनुदरा कन्या इत्यादौ तदल्पता, अधनं चर्मधनमित्यादौ त्वप्राशस्त्यं, अनाख्यानमेतदित्यादौ विरोधः, इति विरुद्धाख्यानमित्यर्थः॥ ५२॥

गो-ष्ट स्तद्धितः, उद्वयस्य गोविन्दो वक्ष्यते । प्राप्तगवः, प्राप्तगोपिः, प्राप्तगोपिकः, प्राप्तक्षमः, प्राप्तकरभोरुः । अन्तस्येति किम्—गोपीप्रियः । अप्रधानस्येति किम्—गोपकुमारी । श्री धी प्रभृतयो नेवन्ताः, तेन प्राप्तश्री रित्यादि । पूर्वपदप्रधानोऽयं द्वितीया कृष्णपुरुषः ।

## ५४. अथोत्तरपदप्रधानाः ।

---

वामनः । प्राप्तः गोपिकामिति वाक्ये प्राप्तगोपिकः, इह आपो वामनः । एवं आवन्तस्य क्षमा शब्दस्य च । प्राप्तकरभोरुरिति—प्राप्तः करभोरुमिति विग्रहः । करभस्य करिः शावकस्य उरुरिव उरु र्यस्याः सा करभोरूः, अत्र ऊञो वामनः । गोपीप्रिय इति—गोप्याः प्रिय इति विग्रहः । अत्र ईपोमध्येस्थितत्वान्नवामनः । एवमापश्च गोपिकाप्रिय इति । गोपकुमारीति गोपस्य कुमारीति विग्रहः । अत्रान्ते स्थितस्यापीवन्तस्य प्राधान्यान्न वामनः, षष्ठी कृष्णपुरुषे उत्तरपदस्य ( कुमारी पदस्य ) हि प्राधान्यात् । तेनेति—ईवन्तत्वाभावेन न वामन इत्यर्थः । इत्यादि पदेन—प्राप्तधीः आपन्नलक्ष्मीरित्यादौ च न वामनः ।

**अमृता०**—५४. अथेत्यधिकारसूत्रम् । उत्तरपदप्रधाना द्वितीयादि कृष्णपुरुषा इदानीमारभ्यन्त इत्यर्थः ।

---

**बाल०**—काला । षष्ठयन्तेन कालपरिमाणिना जातादिना सह कालवाचिनः समस्यन्ते । कालवाचकस्य परिमाणत्वमप्यस्तीति ज्ञेयं अन्यथा जातादेः परिमाणित्वमेव न स्यात्, जातस्य मास इति विग्रहः, मासो जातस्येति वा पाठः । मासस्य परिमाणत्वं प्रतिपादयति जातस्येति । मासः परिच्छेदहेतुरिति परिच्छेदहेतुत्वादेव मासस्य परिमाणत्वमिति भावः । संवत्सरजात इति संवत्सरो जातस्येति विग्रहः । जननादूद्ध्र्वमस्य संवसरो गत इत्यर्थः । एवं द्व्यहजात इत्यादिच ज्ञेयं । तत्परिमाणिजातादिनेत्यत्र तत्परिमाणिनेति वा पाठः । कालाः परिमाणिनेति भाषावृत्तिसूत्रं ॥ ५३ ॥

**बाल०**—प्राप्ता । प्राप्तापन्नें द्वितीयया सह समस्येते । द्वितीययेति द्वितीयान्तेनेत्यर्थः । प्राप्तसख इति राजाहःसखिभ्य इत्यनेन केशवारामः अ-इद्वयस्य हर इत्यनेन इरामहरः । प्राप्तजीविक इति त्रिरामीप्राप्तपन्नालंपूर्वगतिसमासेषु वाच्यलिङ्गतैवेत्युक्तमत उत्तरपदवल्लिङ्ग रामकृष्ण-कृष्णपुरुषयोरित्य नेन उत्तरपदवल्लिङ्गमिति । ननु उत्तरपदवल्लिङ्गत्वे सति प्राप्तजीविकेत्यादौ स्थितिक्रमेण जीविकाया एवोत्तरपदता तस्यां सत्यां लक्ष्मीलिङ्गत्वमेव घटते कथं पुरुषोत्तमत्वं । इति चेदुच्यते । यद्यप्यत्र स्थितिक्रमेण जीविकाया उत्तरपदत्वं तथापि शक्तिग्रहे प्राप्तपदस्यैवार्थः प्रतीयतेऽतः पदक्रमं त्यक्त्वा अर्थक्रमेणैव मुख्यत्वात् प्राप्तपदस्योत्तरपदत्वं विवक्षितमिति ततो गोरीप आप ऊङश्चान्तस्याप्रधानस्य वामन इत्यनेन वामनः । एवं आपन्नजीविकः आपन्नसुख इत्यादिच ज्ञेयं । कथमिति । जीविकाप्राप्त इति जीविकां प्राप्त इति विग्रहः । सुखापन्न इति सुखमापन्न इति विग्रहः । सिद्धान्तमाह द्वितीया श्रितादिभिरिति । वचनादिति, वचनं सूत्रं । अत्रेति

## ५५. द्वितीया श्रितादिभिः ।

कृष्णं श्रितः कृष्णश्रितः, संसारातीतः, सत्सङ्गपतितः, वैकुण्ठगत इत्यादि । तथा व्रजगमी व्रजगामी, कृष्णदिदृक्षुरित्यादि च । आदि ग्रहणात् खट्टारूढो दुर्मानिनि ।

---

**अमृता०**—५५. द्वितीयेति । द्वितीयान्तं विष्णुपदं श्रितादिभिः शब्दैः समस्यते । अत्रश्रिताद्युत्तरपदानां प्राधान्यादुत्तरपदवदेव लिङ्गं समस्त पदस्येति वक्ष्यते । अत्र श्रितादिभिरित्यनेन सकर्मकेभ्यः कर्त्तरि क्त प्रत्ययान्ता हि लक्ष्यन्ते । तेन सुखप्राप्तः शरणागतः विपदापन्नः भक्तिपथारूढ इत्यादीनाञ्च समासोऽनेनैव बोध्यः । सत्सङ्गपतित इति—सत्सङ्गं पतित इति विग्रहः । पततेरत्र सङ्गतार्थः । व्रजगमीति—गमि गाम्यादयश्च भविष्यति साधव इति णिनि प्रत्ययान्तः, आधमर्ण्य तुमुभविष्यदर्थ णक णिन्यो र्योगे न षष्ठीति कर्मणि षष्ठीनिषेधात् द्वितीया । कृष्णदिदृक्षुरिति—सनन्ताशंसभिक्षिभ्य इति उप्रत्ययान्तः, अच्युताभ विष्णुनिष्ठेत्यादिना षष्ठीनिषेधात् कर्मणि द्वितीया । आदिपदेन—तत्त्वबुभुत्सुः ओदन बुभुक्षुः, अर्थगृध्नुः धनलिप्सु रित्यादयश्च ज्ञेयाः । दुर्मानिनिनिन्दायामित्यर्थः । नित्यसमासोऽयं, विग्रहेण तदर्थानवगमात् । खट्टारूढ उत्पथगामीत्यर्थः । दुर्मानिनीतिकिम्—खट्टामारूढः कृष्णः, नात्र समासइष्यते ।

---

प्राप्तसख इत्यत्रेत्यर्थः । टस्तद्धितः इति ट-केशवारामयोरैक्यं वक्ष्यते । अत्र खव्युष्टस्तद्धितः इत्यस्य प्राप्तसख इत्यनन्तरं लिखनमुचितमिति ज्ञेयं । (मूले तथैवास्ति) ॥ ५४ ॥

**बाल०**—गोरीपः । व्यक्तार्थमेतत् । अन्तस्येति अप्रधानस्येति च सर्वत्र योज्यं । नार्द्धा । अर्द्धामलक्यादौ वामनो न भवति, पीताम्बरसमासे ईयस्याश्च वामनो न भवति । गो·ष्टस्तद्धित इति गोरतद्धितलुकीत्यनेनेति शेषः । प्राप्तगव इति प्राप्तो गामिति विग्रहे प्राप्तापन्ने द्वितीययेत्यनेन समासः ततष्टः ततो वामने कृते उद्वयस्य गोविन्दो नतु धातोर्नच स्त्रीप्रत्यय इत्यनेन गोविन्दः । अन्तस्येति किं गोकुलं । अप्रधानस्येति किं सुगौः । प्राप्तगोपिरिति प्राप्तो गोपीमिति विग्रहः । गोपीशब्द ईवन्तः । प्राप्तगोपिक इति प्राप्तो गोपिकामिति विग्रहः । प्राप्तक्षम इति प्राप्तः क्षमामिति विग्रहः । गोपिकाशब्दः क्षमाशब्दश्च आवन्तः । अन्तस्येति किं गोपिकाप्रियः । अप्रधानस्येति किं सुगोपिका । प्राप्तकरभोरुरिति प्राप्तः करभोरूमिति विग्रहः, करभोरूशब्द ऊङन्तः । मणिबन्धादाकनिष्ठं करस्य करभो मतः । तद्वदुरू यस्यास्तां । अन्तस्येति किं, करभोरूशोभा । अप्रधानस्येति किं व्रजकरभोरूः । गोपीप्रिय इति गोप्याः प्रिय इति विग्रहः । गोपकुमारीति गोपस्य कुमारीति विग्रहः । नेवन्ता इति तस्मात् ईवन्तत्वाभावादेव तेषां वामनो न भवति इति । प्राप्तश्रीरिति प्राप्तः श्रियमिति विग्रहः । इत्यादीत्यादिपदेन प्राप्तधीः प्राप्तलक्ष्मीरित्यादिच ज्ञेयं । पूर्वपदप्रधान इति पूर्वपदं प्रधानं यत्रेति विग्रहः ॥ ५५ ॥

**५६. कालः क्तेन ।**

अहः संक्रान्तः ।

**५७. अत्यन्तसंयोगे च ।**

मुहूर्त्तभक्तः ।

**५८. तृतीया ।**

प्रभुरयस् ।

---

**अमृता०**—५६. कालइति । क्तप्रत्ययान्तेन सह द्वितीयान्तः कालवाचिशब्दः समस्यते । नेयं द्वितीया अत्यन्तसंयोग लक्षणा, तद्विशेषस्याग्रिमसूत्रे पृथक्पाठात् । अहः संक्रान्तइति—अह्नो विष्णुसर्गो विष्णुपदान्त इति नरामस्य विष्णुसर्गः । एवंरात्रिसंक्रान्तो मुहूर्त्तः । मासंप्रमातुमारब्ध इति मासप्रमितः प्रतिपच्चन्द्र इत्यादि च ।

**अमृता०**—५७. अत्यन्तेति । अत्यन्तसंयोगः अत्यन्तव्याप्तिः, स च कालस्यैव । कालस्य स्वेन सम्बन्धिना व्याप्तिश्चेद् गम्यते तदा कालवाची द्वितीयान्तः स्वाद्यन्तेन समस्यते । चकारोऽणुक्त समुच्चये, ततः क्तेन सह तदितरस्वाद्यन्तेन चेत्यर्थः । अतएव मुहूर्त्त सुखं, मासगम्यं, बर्षभोग्यं, सर्वरात्रः, चिरायुरित्यादयश्च सिध्यन्ति ।

**अमृता०**—५८. तृतीयेत्यधिकार सूत्रम् ।

---

**बाल०**—अथ । अथेति उत्तरपदप्रधाना इति । उत्तरपदप्रधाना द्वितीयादिकृष्ण-पुरुषा उच्यन्ते इत्यर्थः ॥ ५६ ॥

**बाल०**—द्वितीया । द्वितीयान्तं विष्णुपदं श्रितादिभिः सह समस्यते । संसारातीत इति संसारमतीत इति विग्रहः । एवं सर्वत्र विग्रहो ज्ञेयः । कृष्णश्रितादिषु कर्त्तरि क्तः । इत्यादीत्यादिपदेन सुखप्राप्तः सुखापन्न इत्यादिच ज्ञेयं । व्रजगमी व्रजगामी इति णिनि-प्रकरणे गमिगाम्यदयश्च भविष्यतीति सूत्रं । आधमर्ण्यतुमु भविष्यदर्थ णकणिन्योर्योगे न षष्ठीति निषेधात् न षष्ठी । कृष्णदिदृक्षुरिति सनन्तशंसभिक्षिभ्य उरित्यनेन सनन्ताद्दि-दृक्षधातोरुः । अच्युताभविष्णुनिष्ठाधोक्षजाभखलर्थाव्ययोरामान्ततृणां योगे न षष्ठीति निषेधात् न षष्ठी । इत्यादीत्यादिपदेन शास्त्रबुभुत्सुः ओदनबुभुक्षुरित्यादिच ज्ञेयं । आदि-ग्रहणादिति काकाक्षिगोलोकन्यायेन उभयत्र सम्बन्धेन आदिग्रहणात् दुर्मानिनि वाच्ये खट्वारूढ इति भवति । दुर्मानी निन्द्यः तस्मात् केनापि प्रकारेण निन्द्यत्वे गम्ये आरूढा-दीनां श्रितादित्वमिति भावः । खट्वारूढो मूर्खादिः । खट्वायाः क्तेन क्षेपे इति कस्यचित् सूत्रं । द्वितीयान्तायाः खट्वायाः क्षेपे गम्यमाने क्तान्तेन समासः स्यात् । खट्वारूढः जाल्मः खट्वाप्लुतः मूर्खः उत्पथगामीत्यर्थः । न केवलं खट्वारोहणमात्रेण यस्य निन्दा सोऽवधीयते, किन्तु येन केनाप्यनुचिताचरणेन यस्य निन्दा सोऽत्र गृह्यते । आश्रितश्रित-विद्वांसोऽतीताभ्यस्तुवुभुत्सवः । आपन्नपतितप्राप्तगमिगामिवुभुक्षव इति गणः । दुमानिनीति किं खट्वामारूढो हरिः ॥ ५७ ॥

## ५६. तृतीयार्थं कृतगुणवचनेनार्थादिभिश्च ।

गुणमुक्त्वा यो गुणिनि वर्त्तते स गुणवचनः। चक्रेण कृतः खण्डः चक्रखण्डः। अत्रतृतीयार्थं श्चक्राख्यमस्त्रम्, तेन कृतो योगुणः खण्डितत्वं तदुक्त्वा गुणिनि खण्डिते वर्त्तमानः खण्ड इति।

अर्थादिभिः खल्वपि। कृष्णेनार्थः कृष्णार्थः, भक्तिपूर्वः, कृष्णसदृश इत्यादि। तृतीयार्थकृतेति किम्—अक्ष्णा काणः। अक्षिकाण इति भागवृत्तिः। येनाङ्गेन निन्दा इति तृतीया।

---

अमृता०—५६. तृतीयार्थेति। तृतीयेत्यनेन तृतीयान्त शब्दो लक्ष्यते, अर्थशब्दोऽत्र अभिधेयवाची। तृतीयान्यशब्दस्य योऽर्थस्तेन कृतो यो गुण स्तं यो वक्ति तेन, तथा अर्थादिभिश्च शब्दैः सह तृतीयातं विष्णुपदं समस्यते। चलनशब्दार्थादकर्मकादित्यत्र बाहुल्याददतीते अनः—गुण मुक्तवान् गुणवचन इत्याचष्टे वृत्तौ—गुणमुक्त्वेत्यादिना। गुणिनि गुणवति द्रव्ये इत्यर्थः। वपुषा मार्दवमित्यादावतिप्रसङ्गवारणार्थं वचनग्रहणम्। नहि मार्दवादिशब्दाः पूर्वं गुणमुक्त्वा पश्चात् तद्वति द्रव्ये वर्त्तन्ते, अपि तु सततं गुणे एवेति। खण्डितत्वमत्र क्रियारूपापन्नोगुणः। एवं शलाकया कृतः काणः शलाकयकाण इत्यादि।

अर्थादिभिः समासे तु नैतादृशो नियमः; यस्य कस्यचित्तृतीयान्तस्य समास इष्ट इति ज्ञापयितुमाह—अर्थादिभिः खल्वपीति। आदिशब्दं विवृणोति—भक्तिपूर्वं इत्यादिना। अत्र प्रकृत्यादिभ्य इति तृतीया। कृष्णसदृश इति—तुल्यार्थैः षष्ठी चेति तृतीया। इयं समार्थानामूनार्थाश्चोप लक्षणम्। तेन नन्दसमः, यशोदातुल्या, एकोनः, मासावर इत्यादयश्च ज्ञेयाः। इत्यादिपदेन—वाक्कलहः तुलसीमिश्रः भक्तिहीनः प्रेमशून्य बयोज्येष्ठः भयविह्वलः विरहकृशः गुणाधिक इत्यादय उन्नेयाः। अक्ष्णाकाण इति—नात्र तृतीयान्तेन अक्षिपदार्थेन विष्णुमित्रस्य काणत्वं कृतं किन्तु रोगादि कारणान्तरेण। अक्ष्णा तु काणत्व-विशिष्टो विष्णुमित्रो लक्ष्यत इति तृतीयार्थकृतगणाभावः, गुणवचनस्तु विद्यत इति।

---

बाल०—कालः। क्तेन सह द्वितीयान्तः कालवाची समस्यते। अत्यन्तसंयोगाभावे एतत् सूत्रं प्रवर्त्तत इति ज्ञेयं। अन्यथा अहःसंक्रान्त इत्यादावपि उत्तरसूत्रेणैव समासः स्यात्। अहःसंक्रान्त इति अह्नो विष्णुसर्गः विष्णुपदान्ते इत्यनेन नरामस्य विष्णुसर्गः। एवं रात्रिसंक्रान्तः राज्यारूढः इत्यादिच ज्ञेयं॥ ५८॥

बाल०—अत्य। अत्यन्तसंयोगेच गम्यमाने स्वाद्यन्तेन सह द्वितीयान्तः कालवाची समस्यते। मुहूर्त्तभक्त इति। मुहूर्त्तभक्तिरितिच क्वचित्। अत्र कालाध्वनोरत्यन्तप्राप्तौ द्वितीयेत्यनेन मुहूर्त्तशब्दात् द्वितीया। मुहूर्त्तशब्दः कालवाची। एवं मुहूर्त्तसुखं वर्षभोग्य इत्यादिच ज्ञेयं॥ ५६॥

**६०. कर्त्तृ-करणे कृता ।**

**कृष्णहृतः चक्रच्छिन्नः ।**

**६१. विष्णुकृत्यैस्तु निन्दा स्तुत्यर्थातिशयोक्तौ ।**

**निश्वासभेद्या दैतेयाः, पुष्पमर्द्ये पदाम्बुजे ।**

---

**अमृता०**—६०. कर्त्तृकरणे इति । कृदन्तेन पदेन तृतीयान्ते कर्त्तृकरणे समस्येते । कृष्णहृतइति कृष्णेण (कर्त्रा) हृत इतिविग्रहः । चक्रच्छिन्न इति चक्रेण (करणेन) छिन्न इतिविग्रहः । उभयत्र वाच्यः शिशुपालः । एवं नरसिंहमारितः, नखविदारितः हिरण्यकशिपु रित्यादि बोध्यम् ।

**अमृता०**—६१. विष्णिवति । पूर्वस्यैवप्रपञ्चोऽयम् । निन्दास्तुतिप्रयुक्ता यार्थस्यातिशयोक्ति आधिक्य कथनं, तस्यां गम्यमानायान्तु विष्णुकृत्यैरेव तृतीयान्तं कर्त्तृ करणञ्च समस्यत इत्येष नियमः । निश्वासभेद्य इति निश्वासेन भेद्या अति तुच्छा इत्यर्थः । अत्र तृतीयान्तेन विश्वासेति कर्त्तृपदेन दैत्या भेद्या इति तेषां तुच्छत्वेन निन्दारूपातिशयोक्ति गम्यते । पुष्पमर्द्ये इति—पुष्पैरपि ( करणैः ) मर्दनीये इति पदाम्बुजयोः स्तुतिरूपातिशयोक्ति व्यज्यते । इह निन्दाद्यर्थाधिक्ये नियमयोगात् तदभावेतु विष्णुकृत्यरूपकृता कर्त्तृ-करणयोः समासो न बाध्यते । तेन विष्णुभोग्यं, वैष्णवभक्ष्यं, शिरोधार्य इत्यादयश्च सिध्यन्ति । विष्णुकृत्ययोगे कर्त्तरि षष्ठीपक्षे षष्ठीसमासोऽपि निर्बाध —विष्णोर्भोग्यं विष्णुभोग्यमित्यादिः । किञ्च बाहुल्यानुवृत्तेः विष्णुकृत्येषुमध्ये यण्यताभ्यामेवेदं समासाभिधानं नान्यैरिति बोध्यम् । यथा हि—कृत्यग्रहणे यण्यतो ग्रहणं वक्तव्यमिति वार्त्तिकम् । तेनात्र न समासः—काकैः पातव्या नदी, पुष्पैः मर्दनीये पदाम्बुजे इति ।

---

**बाल०**—तृतीया । अधिकारसूत्रमेतत् ॥ ६० ॥

**बाल०**—तृती । तृतीयार्थकृतश्चासौ गुणवचनश्चेति तेन अर्थादिभिश्च सह तृतीयान्तं विष्णुपदं समस्यते । गुणवचनस्य लक्षणमाह गुणमुक्त्वा यो गुणिनीति । खण्डस्य कृतगुणवचनत्वं स्पष्टयति अत्रेति । तृतीयान्तार्थ इति अर्थशब्दोऽभिधेयवाची तत्खण्डितत्वं । अक्ष्णा काण इति नहि तृतीयान्तार्थेन चक्षुषा देवदत्तस्य काणत्वं कृतं, किन्तु अन्येन केनापीति तृतीयार्थकृतत्वाभावः । गुणवचनत्वन्त्वस्त्व्येवेति । अक्षिकाण इति भागवृत्तिरिति, भागवृत्तिमते अत्रापि समासो भवतीति । गुणवचनेनेति किं धनेन धनवान् द्रव्यवचनोऽयं गुणवचनः । तृतीयार्थकृतगुणेत्यत्र करणार्थतृतीयान्तस्य समासः । अर्थादिभिस्तु यस्य कस्य तृतीयान्तस्य समास इति ज्ञापनेनैव अर्थादिभिः खल्वपीति उदाहरणदर्शनार्थमेतदुक्तमिति ज्ञेयं । अर्थादिभिरित्यस्य कृष्णार्थ इत्यस्मात् पूर्वस्मिन् पाठः सङ्गच्छते, किन्तु लिपिकारेणैव परत्र दत्त इति लक्ष्यते इत्यपि ज्ञेयं । भक्तिपूर्वा इति भक्त्या पूर्व इति विग्रहः । इत्यादीत्यादिपदेन वैष्णवसमः गुरुतुल्यः एकोनः वाक्कलहः कार्यनिपुणः तुलसीमिश्रः आचारश्लक्ष्नः मासावरः भयविह्वलः अस्त्रशून्यः गमनमन्थरः वयोज्येष्ठः विरहकृशः स्वेदार्द्रः गुणाधिक इत्यादिच ज्ञेयं ॥ ६१ ॥

**६२. क्वचिदकृतापि ।**

आत्मना द्वितीयः, अलुगयम् । एकेन न विंशतिः एकान्नविंशतिः इत्यादयो निपाताः ।

**६३. अथ मध्यपदलोपिनः ।**

प्रभुरयम् ।

**६४. अर्द्धं चतसृभिः ।**

अर्द्धेन कृता श्चतस्रः अर्द्धचतस्रो मात्राः ।

---

**अमृता०**—६२. क्वचिदिति । क्वचित् अकृदन्तेनापि सह तृतीयान्तं विष्णुपदं कर्त्तृ करणं वा समस्यते । आत्मना द्वितीय इत्यत्र प्रकृत्यादिभ्य इत्यनेन तृतीया । अलुगयमिति —आत्मना तृतीयायाः पूरणे इतिसूत्रेण अलुक् समासो वक्ष्यते । एकेनेति—अत्र नञ ऊणार्थः, एकेन ऊणा विंशतिरित्यर्थः । इहतृतीयान्तस्य पञ्चम्यन्तादेशः, नञोऽविकृति स्तथा विष्णुभक्तेरलोपश्च निपातवलादेव । एवं एकान्नत्रिंशत् एकान्न चत्वारिंशदित्यादि वेदितव्यम् ।

**अमृता०**—६३. अथेति । अधिकारसूत्रम् । मध्यपदानि लोपा येषां ते मध्यपद लोपिनः ।

**अमृता०**—६४. अर्द्धमिति । चतसृ शब्देन सह तृतीयान्तमर्द्धं समस्यते, मध्यपद लोपश्च भवति । मात्राभिधेये हि स्याद्तो लक्ष्मीत्वनिर्देशः । अत्र कृता पदस्य लोपः, अर्द्धेनेति करणे तृतीया ।

---

**बाल०**—कर्त्तृ । कृदन्तेन सह तृतीयान्ते कर्त्तृकरणे समस्यते । कृष्णहत इति कृष्णेन हत इति विग्रहः, अत्र तृतीयान्तस्य कर्त्तृत्वं । चक्रच्छिन्न इति चक्रेण छिन्न इति विग्रहः । अत्र तृतीयान्तस्य करणत्वं । कर्त्तृकरणे इति किं भिक्षया उषितः हेतावत्र तृतीया ॥ ६२ ॥

**बाल०**—विष्णु । निन्दास्तुतिभ्यामिदं निन्दास्तुत्यर्थं तस्मै अतिशयोक्तिः निन्दा-स्तुत्यर्थातिशयोक्तिः तस्यामिति विग्रहः । निन्दार्थं स्तुत्यर्थञ्च अतिशयोक्तौ सत्यां विष्णुकृत्यैः सह तृतीयान्ते कर्त्तृकरणे समस्येते । निश्वासभेद्या इति निश्वासेन भेद्या इति विग्रहः । अत्र तृतीयान्तस्य कर्त्तृत्वं निन्दार्थमतिशयोक्तिरियं । दैतेया दैत्याः । पुष्पमद्यं इति पुष्पेन मद्यं इति विग्रहः । अत्र तृतीयान्तस्य करणत्वं स्तुत्यर्थमतिशयोक्तिरियं । मद्यं मर्दनीये । एवं काकपेया नदी दात्रच्छेद्यः प्रस्तरः इत्यादिच ज्ञेयं ॥ ६३ ॥

**बाल०**—क्वचि । क्वचिदकृतापि अकृदन्तेनापि सह तृतीयान्तं समस्यते । आत्मना द्वितीय इति प्रकृत्यादिभ्यस्तृतीयेत्यनेन तृतीया । अलुगयमिति अलुक्समासोऽयमित्यर्थः । आत्मना तृतीयायाः पूरण इति अलुक्सूत्रं । एकेनेति । एकेन न विंशतिरिति विग्रहः । नञ् ऊनार्थः तस्मादेकेन ऊना विंशतिरिति निर्गलितार्थः । इत्यादय इत्यादिपदेन

**६५. व्यञ्जनमन्नेन ।**

दध्नोपसिक्त ओदनो दध्योदनः ।

**६६. संस्कार द्रव्यं भक्ष्येण ।**

भक्ष्यं चर्व्यम् । गुडेन मिश्रा धाना गुडधानाः ।

**६७. वाहनं यानेन ।**

अश्वेन युक्तो रथः अश्वरथः ।

**६८. पूरणद्रव्यं पात्रेण ।**

---

**अमृता०**—६५. व्यञ्जनमिति । अन्नवाचिना स्वाद्यन्तेन सह व्यञ्जनवाची शब्दः समस्यते, मध्यपदस्य लोपश्च स्यात् । उपसिक्त आर्द्रीकृतः प्रक्षित इत्यर्थः । दध्नेति कर्तरि तृतीया । एवं क्षीरोदनः सूपोदन इत्यादि ।

**अमृता०**—६६. संस्कारेति । संस्कारार्थं द्रव्यं संस्कारद्रव्यम् । भक्ष्य वाचिना स्वाद्यन्तेन सह तृतीयान्तं संस्कारद्रव्यं समस्यते, मध्यपदलोपश्च भवति । भक्ष्यशब्दश्चात्र एकदेशवाचीत्याह—भक्ष्यं चर्व्यमिति । एतेन चोष्य लेह्य-पेयानि व्यवर्त्तितानीति भावः । खरविशदमभ्यवहार्यं भक्ष्यमिति न्यासकारः । खरं कठिनं, विशदं विविक्तावयवं खाद्यमित्यर्थः । तेन पूर्वसूत्रे नप्रसङ्गः, अन्नस्य कोमलत्वात् । अत्र करणे तृतीया ।

**अमृता०**—६७. वाहनमिति यानेन सह तृतीयान्तं वाहनवाचि पदं समस्यते, मध्य पदलोपश्च स्यात् । यदपि "सर्वं स्याद् वाहनं यानमि"त्येक पर्याये हि पठितावेतौ तयापि विशेषप्रतिपत्तेरित्थं विवेच्यम्—यन्त्यनेनेति यानं विमानादि, वाहयन्त्यनेनेति वाहनं हस्त्यश्वादि यानि वाहक इत्यर्थः । अत्र करणे तृतीया ।

**अमृता०**—६८. पूरणेति । पात्रेण सह तृतीयान्तं पूरणद्रव्यं समस्यते, मध्यपदलोपश्च स्यात् । एवमुदकगर्गरी दधिभाण्डमित्यादि च । अत्र करणे तृतीया । अन्यत्रापीति—मध्यपदलोपिषु कथितलक्षणेभ्योऽन्यत्र च स्वाद्यन्तेन तृतीयान्तं विष्णुपदं समस्यते,

---

एकादनविंशतिरिति । एकान्नत्रिंशत् एकादनत्रिंशत्, एकान्नचत्वारिंशत् एकादनचत्वारिंशत्, एकान्नपञ्चाशत् एकादनपञ्चाशत्, इत्यादयोऽपि ज्ञेयाः । एकादूनार्थनञोऽन्नादनौ संख्यायामिति ज्ञमरसूत्रं ॥ ६४ ॥

**बाल०**—अथ । अधिकारसूत्रमेतत् ॥ ६५ ॥

**बाल०**—अर्द्धं । चतसृतिः सह तृतीयान्तमर्द्धं समस्यते । मध्यपदलोपश्च भवति । अर्द्धचतस्रो मात्रा इति अर्द्धचतस्र इत्यनेन मात्रा उच्यन्ते इत्यर्थः ॥ ६६ ॥

**बाल०**—व्यञ्ज । अन्नेन सह तृतीयान्तं व्यञ्जनं समस्यते । मध्यपदलोपश्च भवति ॥ ६७ ॥

**बाल०**—संस्का । संस्काराय द्रव्यं संस्कारस्य द्रव्यमिति वा विग्रहः । भक्ष्येण

गङ्गाजलेन पूर्णो घटः गङ्गाजलघटः । अन्यत्रापि—श्रिया युक्तः कृष्णः श्रीकृष्णः, तुलस्युदकमित्यादि ।

इति तृतीयामध्यपदलोपिनः ।

६९. **चतुर्थी ।**

प्रभुरयम् ।

७०. **प्रकृत्या ।**

हरिमन्दिराय इष्टकाः हरिमन्दिरेष्टकाः ।

७१. **क्वचित्तदविवक्षायाञ्च ।**

अनन्ताय दधि अनन्तदधि ।

---

मध्यपदलोपश्च स्यादित्यर्थः । तुलस्युदकमिति—तुलस्या संश्लिष्टमुदकमिति विग्रहः । इत्यादि पदेन—मणिभिर्खचितं मुकुटं मणिमुकुटम्, सिंहेन चिह्नितमासनं सिंहासनमित्यादयो ज्ञेयाः ।

अमृता०—६९. चतुर्थीत्यधिकारसूत्रम् ।

अमृता०—७०. प्रकृत्येति । प्रकृति शब्देनेह विकृतिराक्षिप्यते । प्रकृत्या सह चतुर्थ्यन्ता विकृतिः समस्यते । प्रकृतिविकृतिभावे हि तादर्थ्ये चतुर्थ्यां अयं समासः । हरिमन्दिरेष्टका इति—अत्र हरिमन्दिरस्य विकृतित्वम्, इष्टकानां प्रकृतित्वं ज्ञेयम् । एवं कुण्डलाय सुवर्णं कुण्डलसुवर्णम्, पाकतण्डुल इत्यादि । यकृतिभावे एवेष्टः, तेन नेह—रन्धनाय स्थाली, स्थाल्या प्रकृतत्वे तु रन्धनाप्रसक्तेः ।

अमृता०—७१. क्वचिदिति । तस्य प्रकृति विकृतभावस्य अविवक्षायांमपि क्वचिद् चतुर्थान्तं विष्णुपदं स्वाद्यन्तेन समस्यते । अनन्तदधीति—अत्रानन्तस्य विकृतत्वाभावेऽपि समास इष्यते । एवमश्वाय घासः अश्वघास इत्यादि च । क्वचिद् ग्रहणान्न सर्वत्र—रन्धनाय स्थालीत्यादौ तु न ।

---

सह तृतीयान्तं संस्कारद्रव्यं समस्यते । मध्यपदलोपश्च भवति । भक्ष्यपदेनात्र चर्व्यमेव गृह्यते इत्याह भक्ष्यं चर्व्यमिति । गुडं धाना इति । धाना भ्रष्टयवे स्त्रिय इत्यमरः । एवं गुडपिष्टका इत्याचिच ज्ञेयं ।। ६८ ।।

बाल०—वाहनं । यानेन सह तृतीयान्तं वाहनं समस्यते । मध्यपदलोपश्च भवति ।। ६९ ।।

बाल०—पूर । पात्रेण सह तृतीयान्तं पूरणद्रव्यं समस्यते । मध्यपदलोपश्च भवति । गङ्गाजलघट इति । एवं जलगर्गरी दधिभाण्डमित्यादिच ज्ञेयं । अन्यत्रापीति । अन्यत्रापि स्वाद्यत्वेन सह तृतीयान्तं समस्यते मध्यपदलोपश्च भवति । इत्यादीत्यादिपदेन मणिमुकुटं कुङ्कुमवस्त्रमित्यादिच ज्ञेयं ।। ७० ।।

बाल०—चतु । अधिकारसूत्रमेतत् ।। ७१ ।।

गङ्गाजलेन पूर्णो घटः गङ्गाजलघटः । अन्यत्रापि—श्रिया युक्तः कृष्णः श्रीकृष्णः, तुलस्युदकमित्यादि ।

इति तृतीयामध्यपदलोपिनः ।

६९. चतुर्थी ।

प्रभुरयम् ।

७०. प्रकृत्या ।

हरिमन्दिराय इष्टकाः हरिमन्दिरेष्टकाः ।

७१. क्वचित्तदविवक्षायाञ्च ।

अनन्ताय दधि अनन्तदधि ।

---

मध्यपदलोपश्च स्यादित्यर्थः । तुलस्युदकमिति—तुलस्या संश्लिष्टमुदकमिति विग्रहः । इत्यादि पदेन—मणिभिखचितं मुकुटं मणिमुकुटम्, सिंहेन चिह्नितमासनं सिंहासनमित्यादयो ज्ञेयाः ।

अमृता०—६९. चतुर्थीत्यधिकारसूत्रम् ।

अमृता०—७०. प्रकृत्येति । प्रकृति शब्देनेह विकृतिराक्षिप्यते । प्रकृत्या सह चतुर्थ्यन्ता विकृतिः समस्यते । प्रकृतिविकृतिभावे हि तादर्थ्ये चतुर्थ्यां अयं समासः । हरिमन्दिरेष्टका इति—अत्र हरिमन्दिरस्य विकृतित्वम्, इष्टकानां प्रकृतित्वं ज्ञेयम् । एवं कुण्डलाय सुवर्णं कुण्डलसुवर्णम्, पाकतण्डुल इत्यादि । प्रकृतिभावे एवेष्टः, तेन नेह—रन्धनाय स्थाली, स्थाल्या प्रकृतत्वे तु रन्धनाप्रसक्तः ।

अमृता०—७१. क्वचिदिति । तस्य प्रकृति विकृतभावस्य अविवक्षायामपि क्वचिद् चतुर्थ्यन्तं विष्णुपदं स्वाद्यन्तेन समस्यते । अनन्तदधीति—अत्रानन्तस्य विकृतत्वाभावेऽपि समास इष्यते । एकमश्वाय घासः अश्वघास इत्यादि च । क्वचिद् ग्रहणात्र सर्वत्र—रन्धनाय स्थालीत्यादौ तु न ।

---

सह तृतीयान्तं संस्कारद्रव्यं समस्यते । मध्यपदलोपश्च भवति । भक्ष्यपदेनात्र चर्व्यमेव गृह्यते इत्याह भक्ष्यं चर्व्यमिति । गुडं धाना इति । धाना भ्रष्टयवे स्त्रिय इत्यमरः । एवं गुडपिष्टका इत्यादिच ज्ञेयं ॥ ६८ ॥

बाल०—वाहनं । यानेन सह तृतीयान्तं वाहनं समस्यते । मध्यपदलोपश्च भवति ॥ ६९ ॥

बाल०—पूर । पात्रेण सह तृतीयान्तं पूरणद्रव्यं समस्यते । मध्यपदलोपश्च भवति । गङ्गाजलघट इति । एवं जलगर्गरी दधिभाण्डमित्यादिच ज्ञेयं । अन्यत्रापीति । अन्यत्रापि स्वाद्यत्वेन सह तृतीयान्तं समस्यते मध्यपदलोपश्च भवति । इत्यादीत्यादिपदेन मणिमुकुटं कुङ्कुमवस्त्रमित्यादिच ज्ञेयं ॥ ७० ॥

बाल०—चतु । अधिकारसूत्रमेतद् ॥ ७१ ॥

**७२. इदंवाच्यर्थ शब्देन च ।**

नित्यसमासोऽयं, वाच्यलिङ्गता च । नित्यसमासानां स्वपद—विग्रहो नाऽस्ति । कृष्णायेदं कृष्णार्थं सर्पिः, कृष्णार्थः सूपः, कृष्णार्था रसाला ।

**७३. बलि-हितादिभिः ।**

कृष्णाय बलिः कृष्णबलिः, कृष्णायहितः ।

**७४. कृता यताभिधानम् ।**

कृद् यता । कृष्णदेयम् । नेह—कृष्णाय दातव्यम् ।

---

**अमृता०**—७२. इदमिति । अर्थशब्दः प्रयोजनमभिधेयञ्च वक्तीति तन्निराकर्त्तुमाह—इदंवाचीति । इदम्शब्दस्यार्थं वक्तीति इदम्वाची, स चासौ अर्थशब्दश्चेति इदम्वाच्यर्थ शब्दः, तेनसह चतुर्थ्यन्तं विष्णुपदं समस्यते । नित्यसमासोऽमिति—समासेनैव बोधपर्याप्ते र्नहि वाक्यमपेक्षत इति भावः । कृष्णायेदमिति त्वर्थकथनम्, चतुर्थ्या हि तादर्थ्यस्योक्तत्वादर्थशब्देन विग्रहनिष्फलत्वापत्ते रित्याशयः । वाच्यलिङ्गतेति—उत्तरपदवल्लिङ्ग रामकृष्ण-कृष्णपुरुषयो रित्यनेनोत्तरपदवल्लिङ्गत्वे सिद्धे इदंशब्दस्य वाच्यलिङ्गत्वेन तदर्थकार्थशब्दान्वित समासस्य च लिङ्गत्रयं सङ्गच्छत इति तात्पर्यार्थः । कृष्णार्थ इति कृष्णाय अयमित्यर्थः, कृष्णार्थेति कृष्णाय इत्यमित्यर्थः ।

**अमृता०**—७३. बलीति । बलि-हितादि शब्दैश्च सह चतुर्थ्यन्तं विष्णुपदं समस्यते । बलिरूपहारः । चतुर्थी हितायर्थे रित्यनेन चतुर्थी । आदिपदेन—कृष्णसुखं, गोरक्षितमिति च ।

**अमृता०**—७४. कृतेति । कृता अर्थात् कृदन्तेन चतुर्थी समासश्चेत् तर्हि यता हि स्यात् । स्वयमेव सूत्राभिप्रायं प्रकटयति—कृद्यतेति । कृत्सुमध्ये यता हि चतुर्थ्यन्तं समस्यते नान्येनेति भावः । तत्रापि केवल दा धातो र्यता हि नियमः यथा हि—चतुर्थी प्रकृत्यर्थं बलि हितसुख रक्षित देयैरिति सुपद्मसूत्रम् । तेन तव्यादिभि र्न स्यादिति प्रत्युदाहृतम् ।

---

**बाल०**—प्रकृत्या सह चतुर्थ्यन्ता विकृतिः समस्यते । विकृतिरिति अर्थाल्लब्धमिति ज्ञेयं । हरिमन्दिरायेति । यदर्थमन्यत्तस्माच्चतुर्थी इत्यनेन चतुर्थी । अत्र हरिमन्दिरस्य विकृतित्वं इष्टकानां प्रकृतित्वमिति । नेह रन्धनाय स्थाली, अत्र तादर्थ्यं विद्यत एव किन्तु स्थाल्याः प्रकृतित्वं रन्धनस्य विकृतित्वं नास्ति ॥ ७२ ॥

**बाल०**—क्वचि । क्वचित्तदविवक्षायाञ्च चतुर्थ्यन्तं विष्णुपदं स्वाद्यन्तेन सह समस्यते । तदविवक्षायां प्रकृत्यविवक्षायां । अश्वाय घासः अश्वघास इति जुमरः । अश्वघासादयः षष्ठीसमासे इतितु भाष्यं ॥ ७३ ॥

**बाल०**—इदं । इदम्वाच्यार्थशब्देन सह चतुर्थ्यन्तं विष्णुपदं समस्यते । वाच्यलिङ्गताच भवति, उत्तरपदवल्लिङ्गं रामकृष्ण-कृष्णपुरुषयोरिति वक्ष्यते । अतउक्त

**७५. पञ्चमी ।**

प्रभुरयम् ।

**७६. भय-भीत-भीति-भीभिरानीतादिभिश्च ।**

कृष्णभयं, वृन्दावनानीतं, यमुनाहृतमित्यादि ।

**७७. अपेतादिभिः प्रायशः ।**

कृष्णापेतः भक्त्यपोढः स्वर्गपतितः । प्रायशः किम्—प्रासादात् पतित इत्यादि ।

**७८. स्तोकान्तिकदूरार्थाः कृच्छ्रञ्च क्तेन ।**

---

**अमृता०**—७५. पञ्चमीत्यधिकारसूत्रम् ।

**अमृता०**—७६. भयेति । भयादि चतुष्टयेन तथा आनीतादिभिश्च पञ्चम्यन्तं विष्णुपदं समस्यते । कृष्णाद् भयमिति विग्रहः । भये हेतुरिति पञ्चमी । एवं कृष्णभीतः कंसः, कृष्णभीतिः कंसस्य, कृष्णभीः कंसः । यमुनाहृतमिति यमुनाया आहृतं जलम् ।

**अमृता०**—७७. अपेतादिभिरिति । अपेतादिभिः सह प्रायः पञ्चम्यन्तं विष्णुपदं समस्यते । कृष्णापेत इति कृष्णादपेत इति विग्रहः । अपेतः अपगत इत्यर्थः । अपादाने पञ्चमी । एवं भक्तेरपोढः अपगत इत्यर्थः । आदिशब्देन—व्रजनिर्गतः धर्मच्युतः कृष्णान्यः भक्तेतर इत्यादयश्च वेदितव्याः । प्रायशः शब्दग्रहणफलं दर्शयति—प्रासादात् पतित इति । एवञ्च भोजनादपस्त्रस्त इत्यादि शिष्टप्रयोगेषु समासाभावो द्रष्टव्यः ।

**अमृता०**—७८. स्तोकेति । स्तोकमल्पः, अन्तिकं निकटम् । अर्थशब्दः प्रत्येकमभिसम्बध्यते । स्तोकार्थाः अन्तिकार्थाः दूरार्थाश्च पञ्चम्यन्ताः शब्दा स्तथा कृच्छ्रश्च पञ्चम्यन्तं क्तेन सह समस्यन्ते । स्तोकादागत इति—स्तोकाल्पकृच्छ्रकतिपयेभ्य इत्यनेन पञ्चमी, स्तोकादिभ्यः पञ्चम्याः क्ते इति विष्णुभक्ते महाहर निषेधो वक्ष्यते । एवमल्पान्मुक्त इति

---

वाच्यलिङ्गता चेति । स्वपदविग्रहः समस्यमानपदवाक्यं । कृष्णायेदमित्यर्थकथनं । कृष्णार्थ इति कृष्णाय अयमित्यर्थः । कृष्णार्थेति कृष्णाय इयमित्यर्थः । रसाला शर्करामरिचादिमिलितं दधि ॥ ७४ ॥

**बाल०**—बलि । बलिहितादिभिश्च सह चतुर्थ्यन्तं विष्णुपदं समस्यते । कृष्णायेति, चतुर्थी हितार्थे इत्यनेन चतुर्थी । बलिरुपहारः । एवं कृष्णहितं गोसुखमित्यादिच ज्ञेयं ॥७५

**बाल०**—कृता । यथाभिधानं कृदन्तेन सह चतुर्थ्यन्तं विष्णुपदं समस्यते । यथाभिधानमिति अभिधानमनतिक्रम्येत्यर्थः । कृष्णदेयमिति कृष्णाय देयमिति विग्रहः । नेहेति यथाभिधाननित्युपादानादिति शेषः ॥ ७६ ॥

**बाल०**—पञ्चमी । अधिकारसूत्रमेतत् ॥ ७७ ॥

स्तोकादागतः अल्पान्मुक्त इत्यादि । कृच्छान्निर्गतः । अलगयम् ।

**७९. द्वित्व-बहुत्वयो र्न समासः ।**

स्तोकाभ्यां मुक्तः स्तोकेभ्यो मुक्तः । शतात्परा इत्यादौ परःशता इत्यादयो निपाताः ।

**८०. षष्ठी ।**

प्रभुरयम् ।

**८१. परपदेन ।**

---

च । अन्तिकार्थां यया,—अन्तिकादागतः, अभ्यासादुपस्थितः । दूरार्थाः—दूरादागतः विप्रकृष्टादायात इत्यादि । अलुगयमिति—अलुक्समाससंज्ञोऽयमित्यर्थः ।

**अमृता०**—७९. द्वित्वेति । द्वित्व-बहुत्वयोर्गम्यमानयोः स्तोकादीनां क्तेन सह समासो नस्यात् बाहुल्यादिति शेषः । शतात् परा इति—राजदन्तादित्वात् शतादि शब्दानां परनिपातः, निपातात् सुडागमः । शत सहस्रौ परेणेति वक्तव्यमिति वार्त्तिकम् । परिमाणं शताद्दूर्द्ध्वमिति जुमरः । तेन परः सहस्राः, परोलक्षा इत्यादयश्च सिध्यन्ति ।

**अमृता०**—८०. षष्ठीत्यधिकारसूत्रम् ।

**अमृता०**—८१. परपदेनेति । परपदेन सह षष्ठ्यन्तं विष्णुपदं समस्यते । पूर्वपदेन तु "पूर्वकाय" इत्यादौ षष्ठीसमासापवाद उक्तः । तेनात्र पुरुषकृष्ण इत्येवं विपर्ययो भा

---

**बाल०**—भय । भय-भीत-भीति-भीभिः आनीतादिभिश्च सह पञ्चम्यन्तं विष्णुपदं समस्यते । कृष्णभयमिति कृष्णाद्भयमिति विग्रहः । एवं कृष्णभीतः कृष्णभीतिः कृष्ण-भीरिति । वृन्दावनानीतमिति वृन्दावनादानीतमिति विग्रहः । एवं यमुनाहृतमिति । इत्यादीत्यादिपदेन व्रजनिर्गतः वृक्षच्युतः अधर्मजुगुप्सुः तदन्यः शुक्लेतर इत्यादिच ज्ञेयं ॥ ७८ ॥

**बाल०**—अपे । अपेतादिभिः सह प्रायशः पञ्चम्यन्तं विष्णुपदं समस्यते । कृष्णापेत इति कृष्णादपेत इति विग्रहः । भक्त्यपोढ इति भक्ते रपोढ इति विग्रहः । अपोढोऽपगतः । एवं स्वर्गपतित इति । प्रसादादिति प्रासादो गृहविशेषः । इत्यादीत्यादिपदेन शिष्टप्रयोगानु-सारेण अन्यत्रापि समासाभावो ज्ञेयः ॥ ७९ ॥

**बाल०**—स्तोका । पञ्चम्यान्ताः स्तोकान्तिकदूरार्थाः पञ्चम्यन्तं कृच्छ्रञ्च क्तेन सह समस्यते । स्तोकादागत इति स्तोकादिभ्य पञ्चम्याः क्ते इत्यनेन पञ्चम्या महाहर-निषेधः । एवमल्पान्मुक्त इति । इत्यादीत्यादिपदेन अन्तिकादागतः निकटादागतः दूरादागत इत्यादिच ज्ञेयं । कृच्छ्रान्निर्गत इति स्तोकादिभ्य इत्यनेन पञ्चम्या महाहरनिषेधः । अलुगयमिति अलुक्समासोऽयमित्यर्थः ॥ ८० ॥

कृष्णस्य पुरुषः कृष्णपुरुषः। तवप्रभुः त्वत्प्रभुः, युवयो र्युष्माकं वा प्रभुः युष्मत्प्रभुः। स्वाद्यभावान्निपाताभावः।

## ८२. न दिव उराम उद्वयवर्जित सर्वेश्वरे।

दिवीशः। उद्वयेति किम्—द्यूर्णुत्। यदूनां कृष्णयः श्रेष्ठा इत्यत्र सापेक्षत्वान्न।

## ८३. तरान्तगुणेन, तर लोपश्च।

सर्वेषां मध्ये कृष्णतरः सर्वकृष्णः, एवं सर्वमहान्॥

---

भूदिति परशब्दादानस्याभिप्रायः। त्वत्प्रभुरिति—युष्मदस्मदो स्त्वन्मदावुत्तरपदप्रत्यययोरेकत्व इति त्वदादेशः। एकत्वाभावे तु नादेश इति दर्शयति—युवयोरित्यादिना। ननु युष्मत्प्रभुरित्यत्र युष्मदस्मदो स्त्वमहमादयः स्वादिना सहेति निपातः कथमत्र न प्रवर्त्तत इति चेत्तत्राह—स्वाद्यभावादिति। स्वादेर्महाहरादित्यर्थः; निपातने तु स्वादिना सहेत्युक्तेः।

अमृता०—८२. नदिव इति। उद्वयवर्जितसर्वेश्वरे परे दिव उ र्नभवति। दिव उंविष्णुपदान्ते इत्युरामे प्राप्ते प्रतिषेधः। दिवीश इति दिव ईश इति विग्रहः। द्यूर्णुदिति—दिवमुर्णोति आच्छादयतीति क्विप्। दिव उः, त्रिविक्रमश्च। यदूनां वृष्णयः श्रेष्ठा इत्यत्र निर्द्धारणे षष्ठी। "ननिर्द्धारणे" इतिपाणिनीय निषेधसूत्रम्। किन्तु तन्नावश्यकम्, सापेक्षत्वेन हि स्वतः समासाप्रवृत्तेरित्याह—सापेक्षत्वादिति। तदभावे तु भवत्येव समासः—यदूनां श्रेष्ठः यदुश्रेष्ठः, वृष्णिवर्य इत्यादिषु।

अमृता०—८३. तरान्तेति। तरप्रत्ययः अन्ते यस्य स तरान्तः, सचासौ गुणश्च तरान्तगुणः, तेन सह षष्ठ्यन्तं विष्णुपदं समस्यते, तर प्रत्ययस्य लोपश्च भवति। सर्वेषामिति निर्द्धारणे षष्ठी बोधयितुं 'मध्ये' पदं न्यस्तम्। तदेतेन सापेक्षत्वाभावे निर्द्धारणषष्ठ्या च समासो विधेय इति पर्यवसितम्। कृष्णतर इति—गुणप्रकर्षे तर प्रत्यय स्तद्धितः। सर्वमहानिति—सर्वेषां मध्ये महत्तर इति विग्रहः।

---

बाल०—द्वित्व। द्वित्वबहुत्वयोर्न समास इति बाहुल्यादिति शेषः। शतात् पर इत्यादाविति। इत्यादया इत्यादिपद्धेन परःसहस्रं परोऽयुतं परोलक्षमित्यादिश्च ज्ञेयं। परिमाणं शतादूद्ध्वं परःशतमुदाहृतमिति जुमरः। ब्रह्मादयो ब्रह्महिताय तप्त्वा परःसहस्राः परदस्तपांसीति महावीरचरितं॥ ८१॥

बाल०—षष्ठी। अधिकारसूत्रमेतत्॥ ८२॥

बाल०—पर। परपदेन सह षष्ठ्यन्तं समस्यते। कृष्णपुरुष इति कृष्णस्य पुरुष इति विग्रहः। त्वत्प्रभुरिति युष्मदस्मदोस्त्वन्मदाबुत्तरपदप्रत्यययोरेकत्व इत्यनेन त्वादादेशः। ननु युष्मत्प्रभुरित्यत्र युष्मदस्मदोस्त्वमहमादयः स्वादिना सह निपात्यन्ते इति कथं न प्रवर्त्तते इति चेत्तत्राह स्वाद्यभावादिति॥ ८३॥

कृष्णस्य पुरुषः कृष्णपुरुषः। तवप्रभुः त्वत्प्रभुः, युवयो र्युष्माकं वा प्रभुः युष्मत्प्रभुः। स्वाद्यभावान्निपाताभावः।

**८२. न दिव उराम उद्वयवर्जित सर्वेश्वरे।**

दिवीशः। उद्वयेति किम्—द्यूर्णुत्। यदूनां कृष्णयः श्रेष्ठा इत्यत्र सापेक्षत्वान्न।

**८३. तरान्तगुणेन, तर लोपश्च।**

**सर्वेषां मध्ये कृष्णतरः सर्वकृष्णः, एवं सर्वमहान्।**

---

भूदिति परशब्दादानस्याभिप्रायः। त्वत्प्रभुरिति—युष्मदस्मदो स्त्वन्मदावुत्तरपदप्रत्यययोरेकत्व इति त्वदादेशः। एकत्वाभावे तु नादेश इति दर्शयति—युवयोरित्यादिना। ननु युष्मत्प्रभुरित्यत्र युष्मदस्मदो स्त्वमहमादयः स्वादिना सहेति निपातः कथमत्र न प्रवर्त्तत इति चेत्तत्राह—स्वाद्यभावादिति। स्वादेर्महाहरादित्यर्थः; निपातने तु स्वादिना सहेत्युक्तेः।

**अमृता०**—८२. नदिव इति। उद्वयवर्जितसर्वेश्वरे परे दिव उ नभवति। दिव उर्विष्णुपदान्ते इत्युरामे प्राप्ते प्रतिषेधः। दिवीश इति दिव ईश इति विग्रहः। द्यूर्णुदिति—दिवमुर्णोति आच्छादयतीति क्विप्। दिव उः, त्रिविक्रमश्च। यदूनां वृष्णयः श्रेष्ठा इत्यत्र निर्द्धारणे षष्ठी। "ननिर्द्धारणे" इतिपाणिनीय निषेधसूत्रम्। किन्तु तन्नावश्यकम्, सापेक्षत्वेन हि स्वतः समासाप्रवृत्तेरित्याह—सापेक्षत्वादिति। तदभावे तु भवत्येव समासः—यदूनां श्रेष्ठः यदुश्रेष्ठः, वृष्णिवर्य इत्यादिषु।

**अमृता०**—८३. तरान्तेति। तरप्रत्ययः अन्ते यस्य स तरान्तः, सचासौ गुणश्च तरान्तगुणः, तेन सह षष्ठ्यन्तं विष्णुपदं समस्यते, तर प्रत्ययस्य लोपश्च भवति। सर्वेषामिति निर्द्धारणे षष्ठी बोधयितुं 'मध्ये' पदं न्यस्तम्। तदेतेन सापेक्षत्वाभावे निर्द्धारणषष्ठ्या च समासो विधेय इति पर्यवसितम्। कृष्णतर इति—गुणप्रकर्षे तर प्रत्यय स्तद्धितः। सर्वमहानिति—सर्वेषां मध्ये महत्तर इति विग्रहः।

---

**बाल०**—द्वित्व। द्वित्वबहुत्वयोर्न समास इति बाहुल्यादिति शेषः। शतात् पर इत्यादाविति। इत्यादया इत्यादिपद्धेन परःसहस्रं परोऽयुतं परोलक्षमित्यादिश्च ज्ञेयं। परिमाणं शतादूद्ध्वं परःशतमुदाहृतमिति जुमरः। ब्रह्मादयो ब्रह्महिताय तप्त्वा परःसहस्राः परदस्तपांसीति महावीरचरितं॥ ८१॥

**बाल०**—षष्ठी। अधिकारसूत्रमेतत्॥ ८२॥

**बाल०**—पर। परपदेन सह षष्ठ्यन्तं समस्यते। कृष्णपुरुष इति कृष्णस्य पुरुष इति विग्रहः। त्वत्प्रभुरिति युष्मदस्मदोस्त्वन्मदावुत्तरपदप्रत्यययोरेकत्व इत्यनेन त्वादादेशः। ननु युष्मत्प्रभुरित्यत्र युष्मदस्मदोस्त्वमहमादयः स्वादिना सह निपात्यन्ते इति कथं न प्रवर्त्तते इति चेत्तत्राह स्वाद्यभावादिति॥ ८३॥

## ८४. सदागुणवाचिनैव गुणेन ।

मुरलीध्वनिः कृष्णामोदः कृष्णस्पर्शः । एवं तद्धितभावेनापि । वैष्णव सामर्थ्यम् । सीमैव पद्मासनकौशलस्य इति भट्टिः, अधिकरणैतावत्त्वे चेति पाणिनिसूत्रञ्च ।

## ८५. न तु गुणिन्युपलक्षितेन ।

रामस्य शुक्लः, तुलस्या स्तीव्रं, धात्र्या मृदु च । संख्यया त्विष्यते— वैष्णवशतम् ।

---

**अमृता०**—८४. सदेति । सदा गुणवाचिना एव गुणेन सह षष्ठ्यन्तं विष्णुपदं समस्यते । मुरलीध्वनिरिति मुरल्या ध्वनिरिति विग्रहः । अत्र ध्वनि शब्दो नित्यं हि गुणवाची, नीलशुक्लादि शब्दा गुणवाचित्वेऽपि अभेदसम्बन्धेन यथा द्रव्यवाचिनश्च भवन्ति, अयन्तु न तथा, किन्तु सन्ततं हि गुणवाची, न्यायोक्त चतुर्विंशतिगुणेषु ध्वन्यात्मकस्य शब्दस्य चान्यतरत्वमिति द्रष्टव्यम् । एवं कृष्णामोद प्रभृतिषु च बोध्यम् ।

एवमिपि—तद्धितभावप्रत्ययेन च सह षष्ठ्यन्तं विष्णुपदं समस्यते । तद्धितभाव प्रत्ययस्यापि सदागुणवाचित्वेऽपि क्वचिद् वस्तुन्युपलक्षितत्वेन दृश्यते, अतस्तद्बाध प्रसक्ति-रिह निवारिता । वैष्णव सामर्थ्यमिति वैष्णवस्य सामर्थ्यमिति विग्रहः । समर्थस्य भावः सामर्थ्यं, नृसिंह यः । एवं कृष्णस्य बालचापल्यं, बुद्धिनैपुण्यमित्यादि च । कुशलस्य भावः कौशलं, पद्मासनस्य कौशलमिति विग्रहः । अधिकरणस्य एतावत्त्व इति विग्रहः । एतच्छब्दाद् मतु प्रत्ययेन एतावत्, तस्य भावः एतावत्त्वमिति भावे त्व प्रत्ययः ।

**अमृता०**—८५. नत्विति । गुणेन तु षष्ठी समासो न स्यात् । पूर्वोक्तस्य व्यावृत्ति कथनमिदम् । रामस्य शुक्ल इति—"गुणे शुक्लादयः पुंसि गुणलिङ्गास्तु तद्वति" इत्यमरोक्तितः शुक्लादि शब्दानां गुण वाचित्वेऽपि द्रव्योपलक्षितगुणवाचित्वादिह न षष्ठी समासः । एवं तीव्रमृदु शब्दयोश्च बोध्यम् । धात्री आमलकी । संख्ययात्विष्यत इति— संख्याशब्दानां द्रव्योपलक्षितगुणवाचित्वेऽपि समास इष्यते बाहुल्यादित्यर्थः ।

---

**बाल०**—न दिव । उद्धयवर्जितसर्वेश्वरे परे दिवोऽन्तोऽरामो न भवति । दिव उर्विष्णुपदान्त इत्यनेन उरामे प्राप्ते प्रतिषेधः । दिवीश इति दिव ईश इति विग्रहः । द्यौः स्वर्गः । द्युर्णुदिति दिवं ऊर्णोतीति ऊर्नुञ आच्छादने क्विप् तुक् । यदूनामिति सामान्यतो विशेषष्य निर्द्धारणे षष्ठीसप्तम्यौ विशेषतश्चेत् पञ्चम्येवेत्यनेन षष्ठी । सापेक्षत्वान्नेति समास इति शेषः ॥ ८४ ॥

**बाल०**—तरा । तरान्तगुणेन सह षष्ठ्यन्तं विष्णुपदं समस्यते तरलोपश्च भवति । सर्वेषामिति निर्द्धारणे षष्ठी इति सूचयितुं मध्य इत्युक्त । कृष्णतर इति गुणप्रकर्षे तरस्तद्धितः । सर्वमहान् इति सर्वेषां महत्तर इति विग्रहः ॥ ८५ ॥

## ८६. न च ततो भावप्रत्ययेन।

रामस्य शौक्ल्यम्। वस्त्रपीतिमा इत्यादिकन्तु प्रयुक्तमपि वैयाकरणै र्नाद्दतम्। पूरणप्रत्ययादिभि र्निषेधस्तु सव्यभिचारः। कारकोपपदषष्ठी समासस्तु सम्बन्धविवक्षायां दुर्निवार इति तन्निषेधोऽपि नास्माभि र्विवृतः। स्वरभेदो हि तत्र फलमिति। यथोक्तं भर्तृहरिणा,—

लौकिक व्यवहारेषु यथेष्टं चेष्टतां जनः।
वैदिकेषु च मार्गेषु विशेषोक्तिः प्रवर्त्ततामिति॥

---

अमृता०—८६. न चेति। ततो गुणिन्युपलक्षिताद् गुणाद् विहित भावप्रत्ययान्त शब्देन च सह षष्ठीसमासो न स्यात्। रामस्य शौक्ल्यमिति—शुक्ल शब्दाद् भावे नृसिंह यस्तद्धितः। वस्त्र पीतिमेति—पीतस्य भाव इत्यर्थे इमनि स्तद्धितः। प्रयुक्तमपीति कविभिरिति शेषः, वैयाकरणैः पाणिन्यादि मुख्यवैयाकरणैः किन्तु तत्प्रयुक्तपदं नाद्दत-मित्यर्थः। एवञ्च—द्रव्यकाठिन्यं, उदरगौरवं, केश सौक्ष्म्यं, वक्षोगरिमा इत्यादयश्च प्रयुक्ता लभ्यन्ते। पूरणेति—पूरणप्रत्ययादिभिः षष्ठीसमासः प्राचीनै र्निषिद्धः। तथाहि पाणिनीयसूत्रम्—पूरण गुणसुहितार्थ सदव्यय तव्य समानाधिकरणे इति। तत्र न इत्यनु-वर्त्तते। तत्र पूरणप्रत्ययान्तेन—छात्राणां पञ्चमः, मासानां दशम इत्यादौ न समासः। गुणेन निषेध उक्तः। सुहितार्थः—तृप्त्यर्थकरणे षष्ठ्याः समासः। फलानां तृप्त इति। सत् (शतृ)—वैष्णवस्य कुर्वन्निति। अव्ययेन—ब्राह्मणस्य कृत्वेति। समानाधिकरणेन—पाणिनेः सूत्रकारस्येति। तत्र पूरणप्रत्ययान्तेन समासस्य निषेधस्तु व्यभिचारयुक्तः। यथा आत्म द्वितीयः, दीक्षा तृतीय इति। अत स्तन्निषेधवचनं व्यर्थमेवेति भावः।

कारकेति—कृद्योगे कर्त्रादौ या षष्ठी विहिता सा कारक षष्ठी। हेतुशब्दप्रयोगे, निर्द्धारणादौ च षष्ठी उपपद षष्ठी। एवमादीनां समासं विधाय केषाञ्चित् पुनः समासो निषिद्धः प्राचीनैः। यथा—क्तेन च पूजायाम्, अधिकरणवाचिना च क्तेन, उभयप्राप्तौ कर्मणि च, तथा तृजकाभ्यां कर्त्तरीत्यादि। किन्तु तत्र तत्र सम्बन्ध सामान्ये विवक्षिते तु तत्तत् षष्ठ्याः समासा दुर्निवाराः। यथा—घटानां निर्मातु स्त्रिभुवनविधातुश्च कलह इति शेष (सम्बन्ध) षष्ठ्याः समास इति कैयटः। तस्मान्निषिद्ध षष्ठीसमासानामपि यदि सम्बन्धविवक्षायां समासप्रवृत्ति र्दृश्यते तदा तत्तन्निषेधा भाषायां व्यर्थतया ग्रन्थेऽस्मिन्नोक्ता इति तात्पर्यम्। निषेधसार्थक्यन्तु वैदिके स्वरभेद एवेति भर्तृहरि वचनेनोपपादयति—लौकिकेत्यादि पद्येन। तत् स्वरभेदबुभुत्सा चेत् पाणिनि व्याकरणमनुसर्त्तव्यमिति दिक्।

---

बाल०—सदा। सदा गुणवाचिनैव गुणेन सह षष्ठ्यन्तं विष्णुपदं समस्यते। मुरलीध्वनिरिति मुरल्या ध्वनिरिति विग्रहः। गुणवाचकस्य ध्वनिशब्दस्य सदा गुणवाचित्वैव ननु शुक्लादिशब्दानामिव गुणवाचकत्वेऽपि द्रव्यवाचिता। एवमन्यत्रच

**८७. सप्तमी शौण्डादिभिः ।**

भक्तिशौण्डः भक्तिप्रवीणः समरसिंह इत्यादि । ऋणे अधमः अधमर्णो ऋणग्रहीता, एवमुत्तमर्ण ऋणदाता । राजदन्तादित्वात् पूर्वनिपातः ।

**८८. तीर्थकाकादयः पात्रे समितादयश्च क्षेपे साधवः ।**

तीर्थे काक इव तीर्थकाकः, तद्वदनवस्थित इत्यर्थः । पिण्डीशूरः भोजनमात्रसमर्थः । एवं कूपमण्डूकः, उडुम्बरकृमिः अल्पज्ञे । पात्रेसंमितः प्रतिग्रहमात्रपरे । गोष्ठप्रवीरः गेहशूरः शूरम्मन्ये । एवं क्ष्वेडिन् नर्दिन् विजितिन् ध्वाङ्‌क्ष-पण्डित-प्रगल्भ इत्येभिश्च । तथा उदके विशीर्णं, भस्मनि हुतं, प्रवाहेमुत्रितम् अतिव्यर्थकर्मणि । गर्भेतृप्तः गर्भेसुहितकः

अमृता०—८७. सप्तमीति । शौण्डादिभिः सह सप्तम्यन्तं विष्णुपदं समस्यते । भक्तिशौण्ड इतिविग्रहः । शौण्डः प्रगल्भः । अधिकरणे सप्तमीयम् । समरसिंह इति—अत्र सिंहशब्देन सिंह सदृशविक्रान्त पुरुषो लक्ष्यते । आदिपदेन—कार्यनिपुणः कर्मकुशलः रणपण्डितः अक्षधूर्त्तः स्वार्थचतुरः रन्धनदक्ष इत्यादयश्च ज्ञेयाः । अधमर्ण इत्यादौ सप्तम्यन्तानां ऋणादीनां पूर्वनिपाते प्राप्ते विशेषमाह—राजदन्तादित्वादिति । पूर्वनिपात इति अधमादिशब्दानामिति शेषः, ऋणादीनान्तु परनिपातोऽर्थादायातः ।

अमृता०—८८. तीर्थेति । एते क्षेपे निन्दायां सप्तमीकृष्णपुरुषे साधवः । सर्वत्राधिकरणे सप्तमी, गम्यमान सत्तादिक्रियासम्बन्धेन कारकत्वावसानात् । तीर्थकाक स्वयमर्थमाह—तद्वदनवस्थित इति । तीर्थकाको यथा नैकत्र स्थिरस्तिष्ठति किन्तु इतस्ततो भ्रमति, तद्वत् कर्त्तव्यकर्मणि योऽनवस्थितश्चञ्चलमतिः सतीर्थकाक उच्यते । पिण्डीशूर इति—क्रोधाद्युत्पन्ने सति भोज्यार्थे पिण्डी शब्दो देशविशेषे प्रयुज्यते, कार्याक्षमे तात्पर्ये, अतो क्षेपो गम्यते । कूपेति—कूपेमण्डूकइवेति विग्रहः । मण्डूको भेको यथा स्वाश्रयकूपादन्य जलाशयं नजानाति तद्वद् यः स्वल्पमात्रं जानाति स कूपमण्डूक उच्यते । एवञ्च उडुम्बर कृमिः । उडुम्बरो यज्ञडुमरः फलविशेषः, तन्मध्यस्थकीटस्य तदितरवस्तुनो ज्ञानं नास्ति,

ज्ञेयं । कृष्णामोद इति आमोदः व्यापकः परिमलः । एवं कृष्णरूपं कौपस्थरस इत्यादिच ज्ञेयं ॥ ८६ ॥

बाल०—एवं । एवं क्रमेण तद्धितभावेनापि सह षष्ठ्यन्तविष्णुपदस्य समासो ज्ञेयः । तद्धितभावप्रत्ययान्तस्य सदा गुणवाचित्वात् । वैष्णवसामर्थ्यमिति वैष्णवस्य सामर्थ्यमिति विग्रहः । सामर्थ्यमिति समर्थस्य भाव इत्यर्थे नृसिंह यस्तद्धितः । एवं मुनिचापलं द्रव्यकाठिन्यं बुद्धिनैपुण्यमित्यादिच ज्ञेयं । शिष्टप्रयोगं दर्शयति सीमैवेति । पद्मासनकौशलस्येति पद्मासनस्य कौशलमिति विग्रहः । पद्मासनो ब्रह्मा । अधिकरणस्यैतावत्त्वमिति विग्रहः । एतावत्त्वशब्दस्तद्धितभावप्रत्ययान्तः ॥ ८७ ॥

अनुचितचेष्टे। पितरिशूरः मातरिपुरुषः सदाचारभेत्तरि। कर्णे टिरिटिरा कर्णे चुरुचुरेति द्वयं चापलेनानुचित चेष्टायां साधु। टिरिटिरीति गत्यनुकरणम् चुरुचुरिति वाक्यानुकरणम्। तत् करोतीति तथा णौ निपातोऽयम्।

**८८. अत्र द्वितीयादि कृष्णपुरुषेऽवधोक्षजाभ-क्तवतुभ्यां समासो नेष्यते।**

**कृष्णं जगन्वान्, कृष्णं दृष्टवान्।**

---

तद्वदित्यर्थः। पात्रे समित इति—पात्रे प्रति ग्रहणे हि समितः सुरतः : गोष्टेति—गोष्ठे गृहजनमध्ये हि प्रवीरो नतु युद्धादौ सत्सभादौ वेत्यर्थः। एवं क्ष्वेडित्रादिभिरुदाहरणानि यथा—गेह क्ष्वेडी, गृहनर्दी, गृहे एव वाचालो नतु सभादावित्यर्थः। गृहविजितीत्यादीनाञ्च सएवार्थः।

उदकेविशीर्णमिति जलेताडितम्, तद्वद्व्यर्थमित्यर्थः। गर्भेतृप्तः गर्भेसुहितक इत्येते अनुचितचेष्टान्वितपुरुषेऽर्थे वर्त्तेते। सदाचारेति—सदाचारं भिनत्तीति सदाचारभेत्ता, यस्मिन् पुरुषे वाच्य इत्यर्थः। चापलेन चाञ्चल्येनानुचित चेष्टायामेतद्द्वयं साधु। व्युत्पत्तिश्च तयोराह—टिरिटिरीत्यादिना। णौ निपात इति—व्यस्तात् पुनः प्रत्ययान्ताच्चेति कृदन्त ङाप्।

अमृता०—८८. प्रतिषेधात्ताह—अत्रेति। कृष्णं जगन्वानित्यादौ कृष्णादि कर्मणां नित्य सापेक्षत्वेऽपि पूर्वपदत्वानियमात् कृत्समासो न प्राप्तः, अत्र तु प्रकरणे द्वितीया श्रितादिभिरित्यादौ अजंगामीत्यादिवदेषां समासः। प्राप्यते, इत्यतोऽयं प्रतिषेधः।

---

बाल०—नतु। गुणिन्युपलक्षितेन गुणेन सह समासो न भवति। सदा गुणवाचित्वाभावादिति शेषः। रामस्य शुक्ल इति, अत्र शुक्लशब्दस्य गुणवाचित्वेऽपि सदा गुणवाचित्वाभावात् न समासः। एवमन्यत्रच ज्ञेयं। धात्र्या इति। धात्री आमलकी। संख्यया त्विष्यत इति संख्ययातु सह समास इष्यते। संख्यया गुणवाचित्वेऽपि सदा गुणवाचित्वाभावात् समासो न स्यादत उक्तं संख्यया त्विष्यत इति। वैष्णवशतमिति वैष्णवानां शतमिति विग्रहः॥ ८८॥

बाल०—नचेति। ततो विहितेन भावप्रत्ययेनच सह समासो न भवति। बाहुल्यादिति शेषः। तत इति गुणिन्युपलक्षिताद्गुणात् शुक्लादेरित्यर्थः। भावप्रत्ययान्तेन शुक्लादिनाच समासो न भवतीति फलितार्थः। रामस्य शौक्ल्यमिति। एवं हरे कार्ष्ण्यं अम्बरस्य पीतिमेत्यादिकञ्च ज्ञेयं। वस्त्रेति। वैयाकरणैः पुरुषोत्तमादिभिः प्रयुक्तमपि नात्यादृतं अस्माभिरिति शेषः। यद्वा, अन्यैर्वैयाकरणैः प्रयुक्तमपि वैयाकरणैः पाणिनीयादिभिर्नात्यादृतमिति। नात्यादृतमित्यत्र नादृतमिति वा पाठः। नच तत इत्यादिकस्य

## ९०. अच्युताभाव्ययकृद्भ्याश्च न ।

कृष्णं पश्यन्, सेवां कुर्वाणः, सुखं लब्धं लब्ध्वा वेत्यादि । यत्र यत्र समासेन विष्णुभक्त्यर्थो गुप्तः स्यान्नातिव्यक्तश्च स्यात् तत्र तत्र च

---

अमृता०—९०. अच्युताभेति । अच्युताभेन, अव्ययकृद्भिश्च समासो नेष्यत इति शेषः । अत्रापि पूर्वोक्तवत् प्राप्त्यवसरो बोध्यः । अच्युताभेन सहान्यो न समस्यते, अच्युताभस्तु अन्यैः समस्यते—सत्पुरुषः, भ्राजत्कपोलमित्यादि दर्शितं प्राक् । अव्ययशब्देन तत्स्थानिकञ्च गृह्यते, तेन वैष्णवं विधायेत्यादौ च न स्यात् । तत्र णमुल् तु न ग्राह्यः, विशेषोक्तिभि स्तेन नित्यसमासविधानात् । व्याकरणान्तरे विहितानि निषेध वचनानि युक्तिभिरेवोपपादयति—यत्र यत्रेत्यादिभिः । विष्णुभक्तेरर्थे गुप्ते सति विवक्षितार्थे विपरीतार्थं बोधापातात्, तथा अनतिव्यक्ते च प्रकृतार्थानवगमसम्भवात्, तत्र तत्र समासो नहि कर्त्तव्य इत्याशयः । तत्तदुदाहरणानि दर्शयति—यथेति । हेतु तृतीयायां, चिह्नतृतीयायां विशेषलक्षण तृतीयायामित्यर्थः । तथा सहार्थ तृतीयायाञ्च समासो नेष्ट इति सम्बन्धः । यथा चाज्ञानार्थज्ञायोगादेरुत्तरे षष्ठ्यां विषये स नेष्टः । कृष्णेन सुखमिति

---

नात्याद्दतमित्यन्तस्य धात्र्या मृदुरित्यनन्तरं लिखनमुचितमित्यनुमन्यते । किंवा संख्यायामपि गुणिन्युपलक्षितगुणत्वमस्ति । अतस्तस्या अपि समासनिषेधः स्यादिति मनसि कृत्वा पुनः समाससूत्रं विधाय उदाहरणमपि दत्त्वा ततः परं नच तत इत्यादिकं लिखितमिति ज्ञेयं । पूरणेति पूरणप्रत्ययादिभिः सह षष्ठ्यन्तस्य समासो न भवति । इति निषेधो व्याकरणान्तरे वर्त्तते, किन्तु सतु सव्यभिचारः तस्मात् सव्यभिचारत्वादेवास्माभिन विवृतो न कृत इति भावः । भाषावृत्तौ तव्यादिभिरपि निषेध उक्तः, अतः पूरणप्रत्ययादिभिरित्युक्तं । छात्राणां पञ्चमः भिक्षुकानामष्टम इति भाषावृत्तिः विप्राणां दशम इति जुमरश्च, तथापि वाङ्मात्रेण यत् सव्यभिचार इत्युक्तं नतु किञ्चिदुदाहृतं तत्तु हठसूचकमेवेति ज्ञेयं । हठस्तु प्राचामेव । केचिद्वदन्त्यत्र व्यभिचारः केचिद्वदन्ति नेति । कारकेति कारकषष्ठीसमासः उपपदषष्ठीसमासश्चेत्यर्थः । सम्बन्धविवक्षायां दुर्निवार इति कारकोपपदे षष्ठीसमासे निषेधेऽपि सम्बन्धविवक्षायां तत्षष्ठीसमासस्य अनिवार्यत्वादिति भावः । अतस्तन्निषेधोऽकारकोपपदषष्ठीनिषेधोऽपि नास्माभिर्विवृत इति सूचितं । ननु कारकोपपदषष्ठीसमास-सम्बन्धषष्ठीसमासयोर्भेदा वर्त्तते इति चेत्तत्राह स्वरभेद एवेति । हि यद्यपि भेदो वर्त्तते तथापि स्वरभेदातिरिक्तफलाभावात् तन्निषेधविवरणं न बहुप्रयोजनकमिति भावः स्वरभेदस्तु वैदिकैरेव ज्ञायते अतस्तेषामेव तत्र प्रयोजनं नत्वस्माकमिति स्वमतं भर्तृहर्युक्तपद्येन द्रढयति यथोक्तमिति । यथेष्टं चेष्टतामिति निशेषोक्तेरभावादिति शेषः । तस्मात्तत्र विशेषोक्तिर्न प्रवर्त्ततामिति भावः । वैदिकेष्विति । वैदिकमार्गेषु ऐच्छिकव्यवस्था नोचिता तत्र निशेषोक्तिः प्रवर्त्तत इत्यर्थः । तस्माद्भाषायामैच्छिकव्यवस्था न विरुद्धेति भावः । भाव सत्वस्वभावाभिप्रायचेष्टात्मजन्मसु इत्यमरः ॥ ८९ ॥

नसमास इष्टः। यथा हेतु-चिह्न-सहार्थतृतीयाम्, यथा च अज्ञानार्थ ज्ञायोगादितः षष्ठ्याम्। कृष्णेन सुखम्, कौस्तुभेन भगवान्, कृष्णेन गतः। गङ्गाजलस्य ज्ञातं वैष्णवानां मतो बुद्धः पूजितो वा, कृष्णस्यासितं, कृष्णस्यासिका, कृष्णस्य शायिकेत्यादि।

इत्युत्तरपदप्रधाना द्वितीयादिकृष्ण पुरुषाः।

## ६१. अन्यपदार्थात् प्राङ् मध्यपदाप्रयोगिनः।

---

हेतौ तृतीया। अत्र समासेन कृष्णसुखमिति कृते तु षष्ठीसमासः प्रतीयते, अतोहेत्वर्थं स्पष्टाय समास रहिततयैव प्रयोक्तव्यम्। कौस्तुभेनेति विशेष लक्षणे तृतीया। इहापि समासे कृते तु श्यामरामस्य प्रतीतिः स्यात्। कृष्णेन गत इति सहार्थे तृतीया, इह तु समासे कृष्णगत इति जाते कृष्णस्य कर्त्तृत्वप्रतीतिः स्यात्। गङ्गाजलस्य ज्ञातमिति— अज्ञानार्थस्य ज्ञः करणं वेति पक्षे सम्बन्ध सामान्ये षष्ठी, गङ्गाजलबुद्ध्या जलान्तरे प्रवृत्त-मित्यर्थः। अत्र षष्ठी परपदेनेति समासे विहिते तु करणस्थानिक षष्ठ्या स्तथा ज्ञाधातो रज्ञानार्थश्च नातिव्यक्तः, ततो वाक्यार्थबोधे बाधो विलम्बो जायेतेति भावः। ज्ञायोगादित इत्यत्र आदि पदोदाहरणानि च सञ्चिनोति—वैष्णवानां मत इत्यादिना। ञिरामेतो बुद्धीच्छेत्यादिना वर्त्तमाने क्तः, वर्त्तमाने भावे च क्तस्य योगे कर्त्तरि षष्ठीवेति कर्त्तरि षष्ठी, वैष्णवैर्मतो बुद्धः पूजितो वेत्यर्थः। इह समासे कृते तु षष्ठी सामान्यस्योपस्थितिः स्यान्न पुनः कर्त्तृत्व सम्बन्धस्येति। कृष्णस्यासितमिति—अकर्मकगति भोजनार्थेभ्य इत्यधिकरणे क्तः, अधिकरणवाचि क्तस्य योगे कर्त्तरि कर्मणि चेति कर्त्तरि षष्ठी। कृष्णस्यासिकेति— णको लक्ष्म्यां भावे, लक्ष्म्यां णकङापोः प्रयोगे तु कर्त्तरि षष्ठी। एवं कृष्णस्य शायिकेति च। एषु च समासे विष्णुअक्तेः कर्त्तृत्वरूपोऽर्थो नातिव्यक्तः स्यादिति नसमासो विधेय इति भावः। इत्यादि पदेन कर्त्तरि कर्मणोः प्राप्तौ कर्त्तरि षष्ठी वेति कर्मणि नित्यप्राप्ता षष्ठी नैव समस्यते—कृष्णेन कृष्णस्य वा गवां दोहः. तथा तृप्त्यर्थ करणे षष्ठी वेति— नवनीतानां तृप्त इति। प्रपञ्चितानि चैतानि प्राक् टीकायां "पूरणप्रत्ययादिभिर्निषेधस्तु सव्यभिचार" इति व्याख्यायाम्।

**अमृता०**—६१. अन्येति। अधिकार सूत्रम्। ननु मध्यपदलोपिन इत्यनुक्त्वा

---

**बाल०**—सप्त। शौण्डादिभिः सह सप्तम्यन्तं समस्यते। भक्तिशौण्ड इति भक्तौ शौण्ड इति विग्रहः। गम्यसत्तादिक्रियायाः सम्बन्धेन कारकत्वमिति विष्णुभक्त्यर्थप्रकरण एवोक्तं शौण्डः प्रगल्भः। समरसिंह इति समरो युद्धं। इत्यादीत्यादिपदेन अक्षधूर्त्तः रणपण्डितः कार्यनिपुणः भक्तिकुशलः कर्मचपलः साधनसिद्धः छायाशुष्कः शाखापक्वः साधनदक्षः शास्त्रचतुरः युद्धसाहसिक इत्यादिच ज्ञेयं। उत्तमर्ण इति ऋणे उत्तम इति विग्रहः। ऋणग्रहीता ऋणदातेति। उत्तमर्णाधमर्णौ द्वौ प्रयोक्तृग्राहकौ क्रमादित्यमरः। राजदन्तादित्वादिति राजादीनां दन्तादिभ्य इति सूत्रं वक्ष्यते॥ ६०॥

प्रभुरयम् । अत्यादीनामेवातिक्रान्ताद्यर्थत्वात् ।

९२. अत्यादयो द्वितीयया ।

अतिक्रान्ता गङ्गामतिमङ्गः, गोरीपआप इत्यादिनः वामनत्वम् । लक्ष्म्यां पुनराप्—अतिगङ्गा । ईवन्तस्य अतिगोपिः अतिप्रेयसिः नेह वामनः अतिश्रीः । अत्यादित्वात् अभिप्रपन्नो मुखं अभिमुखः, आक्रम्य व्रजं आव्रजम्, तं व्याप्येत्यर्थः एवमन्येऽपि ।

---

मध्यपदाप्रयोगिन इति किमुच्यत इति चेत्तत्र हेतुमाह—अत्यादीनामेवेति । अत्र ये अतिक्रान्तादि शब्दाः समासे न प्रयुज्यन्ते ते नहि स्वतन्त्रशब्दा अपि तु अत्यादीनामेवार्थ बोधका एव । यत्र पृथक् शब्दाः समासे लुप्यन्ते तत्रैव मध्यपदलोपिनो भवन्तीतिभावः ।

**अमृता०**—९२. अत्यादयइति । अत्यादयः अव्ययशब्दा द्वितीयान्तेन विष्णुपदेन समस्यन्ते मध्यपदस्याप्रयोगश्च भवति । लक्ष्म्यां पुनराविति—वामने कृते तु शब्दान्तर प्रवृत्तौ लक्ष्म्यां विषये तदुत्तरं पुनराप् विधीयत इत्यर्थः । अतिगोपिरिति अतिक्रान्तो गोपीमिति विग्रहः । नेहवामन इति—ईवन्तत्वाभावान्न वामन इति भावः । अत्र पीताम्बर समासाभावाद्—न चेयस्याः पीताम्बर इति निषेधप्रवृत्ति र्न, किन्तु वामन एव । आदि शब्दं विवृणोति—अभिपपन्न इत्यादिभिः । एवमन्येऽपीति—प्रतिगतोऽक्षं प्रत्यक्षः, उद्गतो मुखं उन्मुख इन्द्रिय इत्यादयो ज्ञेयाः ।

---

**बाल०**—तीर्थ । व्यक्तार्थमेतत् । क्षेप इति क्षेपे गम्यमाने । क्षेपो निन्दा । तद्वदिति तीर्थकाको यथा न चिरं स्थाता तद्वत् कर्त्तव्ये योऽनवस्थितः स तीर्थकाक इत्यप्युच्यते, कर्त्तव्यं प्रत्यनवस्थितमेवात्र क्षेपः । पिण्डीशूर इति पिण्ड्यामेव शूर इति विग्रहः, पिण्डीशूरशब्दस्य अभिधेयमाह भोजनेति । कार्याक्षम इति यावत् । कूपमण्डूक इति कूपे मण्डूक इवेति विग्रहः, मण्डूको भेकः । उडूम्बरकृमिरिति उडूम्बरे कृमिरिवेति विग्रहः । अत्यल्पज्ञ इति एतौ अत्यल्पज्ञे पुरुषे वर्त्तेते । एवं उडूम्बरमशकः कूपकच्छप इत्यादिच ज्ञेयं । पात्रेसमित इति पात्र एव समित इति विग्रहः । प्रतीति । प्रतिग्रहमात्रपरे पुरुषे वर्त्तते इत्यर्थः । शूरम्मन्ये इति द्वौ शूरम्मन्ये पुरुषे वर्त्तेते एव इत्यर्थः एवमिति उदाहरणानि यथा । गेहेक्ष्वेडी गेहेनर्दी गेहेविजिती गेहेव्याडः गेहेपण्डितः गेहेगेहेप्रगल्भ इति । व्याडो दर्पवान् । उदाहरणान्तरमपि दर्शयति । तथेति । भस्मनिहुतमिति एवं अन्धकारेनटितमित्यादिच ज्ञेयं । अतिव्यर्थकर्मणीति वर्त्तते इति शेषः । अनुचितचेष्टे इति द्वौ अनुचितचेष्टे पुरुषे वर्त्तेते इत्यर्थः । सदेति द्वौ सदाचारभेत्तरि पुरुषे वर्त्तेते इत्यर्थः । चापलेन चाञ्चल्येन अनुचितचेष्टायामिति वर्त्तते इति शेषः । साधु इति वा । टिरिटिरेति चुरुचुरेतिच निष्पादयति टिरिटिरीतीति । तदिति टिरिटिरीति करोतीति टिरिटिरा चुरुचुर्विति करोतीति चुरुचुरा णौ निपातोऽयमिति ॥ ९१ ॥

**बाल०**—अत्र । कृष्णं जगन्वानित्यादौ । द्वितीया श्रितादिभिरित्यनेन समासः स्यादत उक्तं समासे नेष्यते इति ॥ ९२ ॥

## ९३. अवादय स्तृतीयया ।

अवक्रुष्टं वंश्या अववंशि वृन्दावनम् । अधिकरणे क्तः, कृतो बाहुल्यात् । परिलब्धं वीरुधा परिवीरुदित्यादि ।

## ९४. पर्यादय श्चतुर्थ्या ।

परिग्लानो हरिकीर्त्तनाय परिहरिकीर्त्तनः । अलं जातो लक्ष्म्यै अलं लक्ष्मीरित्यादि ।

---

**अमृता०**—९३. अवादय इति । अवादय तृतीयान्तेन विष्णुपदेन समस्यन्ते मध्यपदस्याप्रयोगश्च स्यात् । अवक्रुष्टमिति—अवक्रश्यते यत्रेति अधिकरणे क्तः । ननु—अकर्मक गतिभोजनार्थेभ्यो ह्यधिकरणे क्तो विहितः, क्रुशधातो राह्वानार्थत्वन तत्तदर्थाभावात् कथमधिकरणे क्त इति चेत्तत्र समाधत्ते—कृतो बाहुल्यादिति । लता प्रतानिनी वीरुदित्यमरः । इत्यादिपदेन—सन्नद्धो वर्मणा संवर्मा, अधिगतोऽक्षेण अध्यक्षः, परिवेष्टितो बेलया परिवेलः समुद्र इत्यादयश्च ।

**अमृता०**—९४. पर्यादय इति । परिप्रभृतय श्चतुर्थ्यन्तेन विष्णुपदेन समस्यन्ते, मध्यपदस्याप्रयोगश्च स्यात् । परिग्लानः प्राप्तग्लानिः खन्न इति यावत् । अत्र त्रिरामी

---

**बाल०**—अच्यु । अच्युताभाव्ययकृद्भ्याश्च नेति इत्यते इति शेषः । कृष्णं पश्यन्नित्यादावपि द्वितीया श्रितादिभिरित्यनेनैव समासः स्यात् । इत्यादीत्यादिपदेन वैष्णवस्य कृत्वेत्यादावपि न षष्ठीसमास इति ज्ञेयं । यत्र यत्रेति । क्रमेण उदाहरणानि दर्शयितुं प्रथमतो गुप्तानतिव्यक्तयोः स्थानमाह यथेति । यथा चेति उदाहरणानि दर्शयति । कृष्णेनेति कृष्णेन सुखमिति, अत्र हेतोस्तृतीया इत्यनेन तृतीया । यद्यत्र तृतीयार्थकृतगुणवचनेनार्थादिभिश्चेत्यनेन समासः स्यात्तदा तेन विष्णुभक्त्यर्थो गुप्तः स्यादिति समासः । एवं कौस्तुभेन भगवानित्यत्र कृष्णेन गत इत्यत्रच ज्ञेयं । कौस्तुभेनेति विशेषलक्षणा तृतीया । कृष्णेनेति सहार्थे गम्येऽपीत्यनेन तृतीया । गङ्गाजलस्य ज्ञातमिति । गङ्गाजलबुद्धया जलान्तरे प्रवृत्तमित्यर्थः । अज्ञानार्थस्य ज्ञः करणं वेत्यनेन षष्ठी । यद्यत्र परपदेनेत्यनेन समासः स्या स्यात्तदा विष्णुभक्त्यर्थो नातिव्यक्तः स्यादिति न समासः । एवमन्यत्रच ज्ञेयं । वैष्णवानां मत इति । त्रिरामेतो बुद्धीच्छापूजार्थेभ्यश्च क्तः वर्त्तमान इत्यनेन क्तः । वर्त्तमाने भावेच क्तस्य योगे कर्त्तरि षष्ठी वेत्यनेन न षष्ठो वैष्णवैर्मन्यते इत्यर्थः । एवं वैष्णवानां बुद्ध इति वैष्णवानां पूजित इतिच । कृष्णस्यासितमिति । आस उपवेशने अकर्मकगतिभोजनार्थेभ्यः क्तोऽधिकरणे चेत्यनेन अधिकरणे क्तः, अधिकरणवाचिक्तस्य योगे कर्त्तरि कर्मणिच षष्ठीत्यनेन कर्त्तरि षष्ठी । कृष्णस्यासिकेति । आस उपवेशने णको लक्ष्म्यां भावे णकः, इति कृष्णादाप् लक्ष्म्यामित्याप्, प्रत्ययस्थात् कात् पूर्वस्यारामस्येराम आपीत्यनेन अरामस्येरामः, लक्ष्मीणकङापोः प्रयोगेतु कर्त्तरि षष्ठी । कृष्णस्य शायिकेति शीङ स्वप्ने सर्वं पूर्ववत् ॥ ९३ ॥

**९५. निरादयः पञ्चम्या ।**

निष्क्रान्तो मधुपुर्याः निर्मधुपुरिः, अपगतमर्थात् अपार्थम्, अवैष्णव-शास्त्रमित्यादि ।

इति मध्यपदाप्रयोगिनः पूर्वपदप्रधानाः कृष्णपुरुषाः ।

**९६. एहीहादयोऽन्यपदार्थे साधवः ।**

एहि इहेति यत्र कर्मणि काले वा तत् एहीहम् । एवं एहि यवैरिति यस्यां क्रियायां तत् एहियवम् । अनयोर्ब्रह्मत्वमेव । अथ एहि स्वागत-मिति यस्यां क्रियायां सा एहिस्वागता । एवं अपेहिस्वागता,

---

प्राप्तापन्नालं पूर्व गति समासेषु वाच्यलिङ्गतैवेति वक्ष्यमाण विधिना वाच्यलिङ्गता ज्ञेया । एवं परिग्लानः सेवायै परिसवः, उद्गतो युद्धाय उद्युद्धः । सर्वत्र तादर्थ्ये चतुर्थी ।

**अमृता०**—९५. निरादय इति । निरादयः अव्ययशब्दाः पञ्चम्यन्तेन विष्णुपदेन समस्यन्ते मध्यपदस्याप्रयोगश्च स्यात् । अपगतमर्थादिति वास्तवार्थादित्यर्थः । वाच्य-लिङ्गत्वाद् ब्रह्मत्वम् । एवमुद्गतो निद्राया उन्निद्र इत्यादि च । पूर्वपद प्रधाना इति—पूर्वपदं प्रधानं येषामिति विग्रहः । अत्र गतिसमासप्रकरणे पूर्वपदानां प्राद्यव्ययानां द्योत-कत्वेऽपि तेषामतिक्रान्तादिरूपविशेषार्थवत्त्वात् प्राधान्यं ज्ञेयम् । अतएव लिङ्गनिरूपण प्रसङ्गे–त्रिरामी प्राप्तापन्नालंपूर्वगति समासेष्वित्यनेन वाच्यलिङ्गता विधास्यते, अन्यथा उत्तरपदवल्लिङ्गं रामकृष्ण-कृष्णपुरुषयोरित्येव प्रसज्येतेति बोध्यम् ।

**अमृता०**—९६. एहीहादयइति स्पष्टम् । यत्रेत्यनेनान्यपदार्थं सूचितम् । एहि इहेति यत्रोच्यत इतिशेषः । एहियवैरिति युमिश्रणे । कालस्य विशेषणपक्षेऽप्यनयोर्ब्रह्मत्वमेवा-भिधानादिति भावः । एहिविघसेति—एहिविघसेति यस्यां क्रियायां सा । कत्र विघसेति सम्बोधन पदेन तिङन्तस्य समासः । एवमेहिवाणिजेति च । वणिज इत्यरामान्तोऽपि

---

**बाल०**—अन्य । अधिकारसूत्रमेतत् । मध्यपदलोपिन इत्यनुक्त्वा यत् मध्यपदा-प्रयोगिण इत्युक्तं तत्र हेतुमाह अत्यादीनामेवेति ।। ९४ ।।

**बाल०**—अत्या । अत्यादयो द्वितीयान्तेन विष्णुपदेन सह समस्यन्ते । मध्यपदा-प्रयोगश्च भवति । लक्ष्म्यामिति पुनराविति लक्ष्म्यां वामने कृते पुनरावित्यर्थः । अतिगङ्गेति अतिक्रान्ता गङ्गामिति विग्रहः । अतिगोपिरिति अतिक्रान्ता गोपीमिति विग्रहः । एवमतिप्रेयसिरिति । नचेयस्याः पीताम्बर इत्युक्तं अतोऽत्र वामनो भवत्येव । नेह वामन इति ईवन्तत्वाभावादिति शेषः । अतिश्रीरिति अतिक्रान्तः श्रियमिति विग्रहः । आदिग्रहणफलमाह अत्यादित्वादिति । अभिमुख इति त्रिरामीप्राप्तापन्नालं पूर्वगतिसमासेषु वाच्यलिङ्गतैवेति वाच्यलिङ्गत्वं । तं व्रजं । एवमन्येऽपीति ज्ञेया इति शेषः । ते यथा, प्रतिगतोऽक्षं प्रत्यक्षः उद्गतो विद्यां उद्विद्य इत्यादयः ।। ९५ ।।

ऐहिविघसेत्यादि। एवमेहि वाणिजेति यस्यां क्रियायां सा एहि वाणिजेत्यादि। तथा इहद्वितीया, इहपञ्चमी, आहपुरुषिका, अहम्पूर्विका, अहमहमिका। विकृतश्च प्रकृतश्च यस्यां सा विचप्रचा, निश्चितश्च प्रचितश्च यस्यां सा निश्चप्रचा इत्यादि।

तथा कुन्धि विचक्षणेति विचक्षणमिति वा यस्यां सा कुन्धिविचक्षणा। केवलद्वितीयान्तेन तु भिन्दिलवणा, अहरवसना, आहरवनिता इत्यादि।

**९७. तथाख्यातमाख्यातेन नियोजने।**

यजत नमतेति यत्रोच्यते सा नियोजनक्रिया यजतनमता। उद्धरोत्सृजा, उद्धमविधमा, उत्पतनिपता।

---

शब्दोऽस्ति वणिज एव वाणिज इति स्वार्थे अण्। नैगमो वाणिजो वणिक् इत्यमरः। अत्रापि सम्बोधनपदेन तिङन्तस्य समासः। इत्यादि पदेन—अपेहिवाणिजा, प्रोह वाणिजा इत्यादयश्च। इह द्वितीयेति—इह द्वितीया यस्यां क्रियायामिति विग्रहः। अत्र एहिद्वितीयेति केचित् पठन्ति। आहोपुरुषिका अहमव पुरुष इत्येवं गर्वात्मिकात्मसम्भावना यत्रक्रियायाम् सा। "आहोपुरुषिका दर्पाद् या स्यात् सम्भावनात्मनि" इत्यमरः। अहं पूर्व महंपूर्व मित्यात्मपौरुषख्यापना यस्यां सा अहंपूर्विका। एवमहम्प्रथमिका। अहमेव (श्रेष्ठः) इति परस्पराहंकारो यस्यां सा अहमहमिका। एवं आचितश्च उपचितश्च यस्यां क्रियायां सा आचोपचेत्यादि। कुन्धिविचक्षणेति—कुन्धिविचक्षणेति विग्रहपक्षे विचणणेति सम्बोधनान्ताम् विचक्षणमिति पक्षे तु द्वितीयान्तम्। केवलद्वितीयान्तेन सम्बोधन पदराहित्येनेत्यर्थः। भिन्दिलवणं यस्यां सा भिन्दिलवणा। इत्यादि पदेन—प्रोहकटा, प्रोहकर्दमा, अपोहकर्दमा उद्धरचूडा, आहरचेला, आहरवनिता इत्यादयश्च बोध्याः।

**अमृता०—९७.** तथेति। नियोजनं प्रेरणं, तस्मिन् वाच्ये आख्यातपदेन सहाख्यातपदमन्यपदार्थे पूर्ववत् समस्यते। यजतनमतेति नियोजनं व्यञ्जयति विधातृप्रयोगेण। एवमश्नीतपिबता, खादतमोदता, खादताचमता प्रभृतयश्चानेन नियोजने समस्यन्ते।

---

**बाल०**—अवा। तृतीयान्तेन विष्णुपदेन सह अवादयः समस्यन्ते। मध्यपदाप्रयोगश्च भवति। अवक्रुष्टमिति क्रुश आह्वाने। अवक्रुश्यते यत्रेत्यधिकरणे क्तः। ननु अकर्मकगतिभोजनार्थेभ्य अधिकरणे चेत्युक्तं, क्रुशधातोस्तु अकर्मकत्वं गत्यर्थत्वं भोजनार्थत्वञ्च नास्ति तर्हि कथमधिकरणे क्तो भवति, इति चेत्तत्राह क्तो बाहुल्यादिति। वीरुधेति। लता प्रतानिनी वीरुदित्यमरः प्रतानिनी विस्तारिणी। इत्यादीत्यादिपदेन संनद्धो वर्मणा संवर्मा अधिगतोऽक्षेण अध्यक्षः, प्रतीतोऽक्षेण प्रत्यक्षः, सुसङ्गतो वेलया सुवेल इत्यादिच ज्ञेयं॥ ९६॥

**बाल०**—पर्या। चतुर्थ्यन्तेन विष्णुपदेन सह पर्यादयः समस्यन्ते। मध्यपदाप्रयोगश्च

**९८. हि प्रत्ययान्तं कर्मणाभीक्ष्ण्य-तद्वक्तरि ।**

स्तुहि कृष्णमित्याभीक्ष्ण्यमाह यः स स्तुहिकृष्णः । एवं जहिजोहः । जोहो दासः क्षारं वा इत्यादयो ज्ञेयाः ।

इत्यन्यपदार्थप्रधानः कृष्णपुरुषः ।

॥ इति कृष्णपुरुषप्रकरणमुद्दिष्टम् ॥

**९९. अनेकमन्यपदार्थे पीताम्बरः ।**

प्रभुश्चायम् । अनेकं नामपदन्तु अन्यपदार्थे अभिधेये परस्परं समस्यते, स च पीताम्बरसंज्ञः । बहुव्रीहिरिति प्राञ्चः । अन्यपदार्थवदेव लिङ्गमस्य, अन्यपदार्थश्च यच्छब्देनेदं शब्देन वा निर्देश्यः । द्वयो स्त्रयाणां चतुर्णामेव वा अभिधानम् । अत्र षष्ठ्याद्यन्यपदार्थो यथा,—

अमृता०—९८. छिप्रत्ययान्तमिति । आभीक्ष्ण्यं क्रियासातत्यम् । तस्मिन् गम्यमाने तस्य हिप्रत्ययान्त पदस्य वक्तरि अभिधेये कर्मणा सह हि प्रत्ययान्तं विष्णुपदं समस्यते । एवमिति—जहि जोहमित्याभीक्ष्यण्यमाह यःस जहिजोहः । जहीति हन्ते र्हिप्रत्ययान्तम् । जोप शब्दस्यार्थमाह—जोहोदासः क्षारं वेति । अत्र जोड इति केषाञ्चित् पाठः । तन्मते जुड प्रेरणे धातोः बाहुल्यात् कर्मण्यण् । इति कृष्णपुरुषसमासो व्याख्यातः ।

अमृता०—९९. अनेकमिति । प्रभुश्चायमिति चकारात् समासविधिसूत्रञ्च । अन्य पदार्थे वाच्ये सतीत्यर्थः । अनेकमित्यस्यार्थमाह—द्वयोरित्यादिना । नएकं अनेकमिति एकाधिकस्य द्वित्वबहुत्वस्य संग्रहः । अनेन इतः पूर्वन्तु द्वयोरेव पदयोः समास उक्त इत्यायातम् । पीताम्बर रामकृष्ण समासयोरेवानेक पदसमासो विषयः, नत्वव्ययीभावस्य,

भवति । परिहरिकीर्त्तन इति त्रिरामीत्यादिना वाच्यलिङ्गता । अलंलक्ष्मीरिति ईवन्तत्वाभावान्न वामनः । इत्यादीत्यादिपदेन उद्गतो युद्धाय उद्युद्ध अभिगतः श्रुताय अभिश्रुत इत्यादिच ज्ञेयं ॥ ९७ ॥

बाल०—निरा । पञ्चम्यन्तेन विष्णुपदेन सह निरादयः समस्यन्ते । मध्यपदा प्रयोगश्च भवति । पूर्वपदप्रधाना इति पूर्वपदं प्रधानं येष्विति विग्रहः ॥ ९८ ॥

बाल०—एही । व्यक्तार्थमेतत् । एहीति आगच्छेत्यर्थः । इह एहीति यत्रोच्यते तदेहीहं कर्मेति भाषावृत्तिः । उपाध्यायसर्वस्व यु मिश्रण इत्यस्य यवं निष्पाद्य एहियवैरिति निष्पादितं तस्मात् अत्र यवशब्दोऽन्तस्थयरामादिरिति ज्ञेयं, यवैर्मिश्रणैः । अनयोः एहीहैहियवयोर्ब्रह्मत्वमभिधानादिति शेषः । उदाहरणान्तरमाह अथेति । एवमिति । अपेहि स्वागतामिति यस्यां क्रियायां सा अपेहिस्वागतेति, एहि विघसेति यस्यां क्रियायां सा एहिविष्वसेति । इत्यादीत्यादिपदेन अपेहिप्रघसेत्यादिच ज्ञेयं । एवमिति । वाणिजेति सम्बोधने, वणिजशब्दोऽदन्तोऽप्यस्तीति लक्ष्यते, वणिज एव वाणिजः । एहि वाणिजेति

तत्र समासार्थनोक्तत्वात् प्रथमा—पीतं अम्बरं यस्य स पीताम्बरः। पीतं सूक्ष्मं चाम्बरं यस्य स पीतसूक्ष्माम्बरः। एवमुज्वलपीत-सूक्ष्माम्बरः। प्राप्तः कृष्णो यत्तत् प्राप्तकृष्णं गोकुलम्। कृष्णः प्राप्तो येन स प्राप्तकृष्णो वैष्णवः। प्राप्तः कृष्णो यया सा प्राप्तकृष्णा भक्तिः। दत्तं सर्वस्वं यस्मै स दत्तसर्वस्वः कृष्णः। प्राप्तो वरो यस्मात् स प्राप्तवरः कृष्णः। न्यस्तं मनो यस्मिन् स न्यस्तमनाः कृष्ण इत्यादयः।

**१००. अव्ययञ्च।**

---

अतिष्ठद्गु इत्यादौ व पश्चात् समासो ज्ञेयः। नामपदमिति प्रायः प्रथमान्तमिति मूले स्पष्टी भविष्यति, कण्ठेकाल इत्यादौ तु सप्तम्यन्तं काद,चित्कम्। आधिक्येन व्यपदेशा भवन्तीति न्यायेन नाम पदमित्युक्तम्, क्वचिदाख्यातलोपश्चेति वचनादाख्यात पदञ्च ग्राह्यम्। अन्य पदार्थत्व इति—समस्यमानपदातिरिक्त पदस्यार्थे इति भावः। तत्रेति—अन्यपदार्थं वाचके, समाससिद्ध नाम्नीत्यर्थः। प्राप्त इति कर्त्तरिक्तः, यदिति द्वितीयान्तम्। कृष्णः प्राप्त इति कर्मणि क्तः। ययेति करणे तृतीया, अत्र करणमेवान्यपदार्थः।

अमृता०—१००. अव्ययञ्चेति। अव्ययञ्च नामपदेन सह समस्यते, अन्यपदार्थ

---

यस्यां क्रियायां सा एहिवाणिजेतित्तु जुमरः। नैगमो वाणिजो वणिगित्यमरश्च। इत्यादीत्यादिपदेन अपेहिवाणिजा प्रोहवाणिजेत्यादिच ज्ञेयं। अपरमप्युदाहरणमाह तथेति। इह द्वितीया यस्यां इति इहद्वितीया। एवमिहपञ्चमीति। अहमेव पुरुष इति या आत्मसम्भावना सा आहोपुरुषिका। आहोपुरुषिका दर्पाद्या स्यात् सम्भावनात्मनि इत्यमरः। अहं पूर्वमहं पूर्वमिति य औद्धत्यविशेषः सा अहम्पूर्विका। अहं पूर्वमहं पूर्वमित्यहम्पूर्विका स्त्रियामित्यमरः। एवमहम्प्रथमिका इति यः परस्परमहङ्कारः सा अहमहमिका। अहमिकातु सा स्यात्, परम्परं यो भवत्यहङ्कार इत्यमरः। जुमरटीका-कारेणतु अहमेव पुरुषोऽत्रेति सम्भावनायां आहोपुरुषिका अहं पूर्वमत्रेत्याविष्क्रियायां अहम्पूर्विका। अहं प्रधानमत्रेत्यहङ्कृतौ अहमहमिकेत्युक्तं। यस्यामिति यस्यां क्रियाया-मित्यर्थः। इत्यादीत्यादिपदेन आचितञ्च उपचितञ्च यस्यां सा आचोपचेत्यादिच ज्ञेयं। अन्यदप्युदाहरणमाह अथेति। विचक्षणेति सम्बोधने। केचलेति। अत्र सम्बोधनपक्षाभाव इति भावः। भिन्दि लवणमिति यस्यां सा भिन्दिलवणा। आहर वसनमिति यस्यां सा आहरवसना, आहर वनितामिति यस्यां सा आहरवनिता। इत्यादीत्यादिपदेन—प्रोह कटमिति यस्यां सा प्रोहकटा। प्रोह कर्दममिति यस्यां सा प्रोहकर्दमा। पच लवणमिति यस्यां सा पचलवणा। आहर चेलमिति यस्यां सा आहरचेला। उद्धर चूडामिति यस्यां सा उद्धरचूडेत्यादिच ज्ञेयं॥ ९९॥

नीचैर्मुखमस्य नीचैर्मुखः। सेवितुं कामोऽस्येति विग्रह—

**१०१. तुमो मस्य हरः काम-मनसोः।**

सेवितुकामः, सेवितुमनाः। अस्ति भक्तिरस्य अस्तिभक्तिर्वैष्णवः, नास्तिभक्तिरवैष्णवः॥

समस्तस्यासमस्तेन नित्यापेक्षेण सङ्गतिः।
बाहुल्यादिह तत्रापि समासो वा विधीयते॥

भक्ताय दत्तार्थः। अत्र दानक्रियया नित्यं सम्प्रदानमपेक्ष्यते, अतो यद्यपि गुणीभूतेन दत्तपदेन साक्षादन्वयस्याभावस्तथापि तात्पर्यतः संगम्यते। यथा कृतपूर्वी सृष्टिम्, असूर्यम्पश्य इत्यादौ। किञ्च प्रायः

---

वाच्ये। उच्चैरिति तृतीयान्तप्रतिरूपकमव्ययम्। अत्रान्यपदार्थ इदं शब्देन निर्दिष्टः। यदपि नामपदमित्यनेनाव्ययमपि ग्रहीतुं शक्यते तथापीह अव्ययमिति पृथगुक्तिः गोवलीवर्द इति वत् स्पष्टार्थेति वेदितव्यम्॥

**अमृता०**—१०१. तुमइति। काम मनसोः परयोः तुम्प्रत्ययस्य यस्य हरो भवति। तुमः कृदव्ययत्वाद् मस्य हराप्राप्ते विधानम्। सेवितुमना इति सेवितुं मनोऽस्येति विग्रहः। अस्ति नास्तीति तिङन्तप्रतिरूपकमव्ययद्वयं नत्वाख्यातरूपम्। ननु अलिङ्गोऽव्ययसंज्ञ इति वचनादाख्यातान्तपदानामव्ययत्वं सिद्धमेव, तत्कथंनिराक्रियते? सत्यम्, यद्यपि तत् सिध्यति तथाप्यत्र तन्नमन्यते, पूर्वोक्तसूत्रस्थस्व अव्ययञ्चेत्यस्यानुवर्त्तमानत्वात्। किञ्च नास्तिभक्तिरित्यत्र तिङन्तत्वस्वीकारे तु नञः पृथक्पदत्वेन अनस्तिभक्तिरित्येवं समस्तपदमापद्येतेति दोषः स्यादिति।

ननु भक्ताय दत्तार्थपदेन सह भक्ताय इत्यसमस्तपदस्य कथं सम्बन्धः सम्भवेत्! सम्बन्धेतु सति सापेक्षत्वेन समास एव न स्यादिति शङ्कां निराकुर्वन्नाह—समस्तस्येत्यादिपद्येन। नित्यमपेक्षत इति नित्यापेक्षः, तेनासमस्तपदेन समस्तपदस्य समस्तैकदेशिपदस्य सङ्गतिरन्वयः स्यादित्यर्थः। तत्रापि तादृशापेक्ष स्थलेऽपि बाहुल्याद् विभाषया समासो भवतीत्यर्थः। वस्तुतः समासो नैव प्राप्नोति किन्तु बाषुल्यादेव भवतीति भावः। अत्र नित्यापेक्षकं कारकपदं सम्बन्धपदञ्च बोध्यम्। तत्र कारक सम्बन्धं दर्शयति—अत्रेत्यादिना। गुणीभूतेनेति कृतसमासत्वादित्यर्थः। दृष्टान्तमाह—यथेति। कृतं पूर्वमनेनेति वाक्ये तद्धितेणि प्रत्ययेन कृतपूर्वीति समस्तपदं जातम् तथापि कृत इति कृत् क्रियाया

---

**बाल०**—तथा। नियोजने वाच्ये आख्यातेन सह आख्यातं तथा पूर्वोक्तप्रकारेण समस्यते। उद्धर उत्सृज इति यत्रोच्यते सा नियोजनक्रिया उद्धरोत्सृजा। एवमन्यत्रच ज्ञेयं। अश्लीत पिवतेति सततमुच्यते यस्यां क्षियायां सा अश्लीतपिवतेति जुमरः॥१००॥

समानाधिकरणानामेव पीताम्बरः, तेन नेह—हृते कृष्णे गतं येनेति, वैष्णवैर्भुक्तं यस्येति । प्रायोग्रहणात् क्वचिद् व्यधिकरणानाञ्च,—यदुकुले जन्म यस्य स यदुकुलजन्मा । कण्ठेकालः, अलुगयम् ।

**१०२. न च प्रथमान्यपदार्थत्वे ।**

**सुच्छाये वृन्दावने यः । गते कृष्णे गतो य इत्यत्र तु अन्यपदार्थत्वं नास्ति, गतस्यैव वाच्यत्वात् ।**

---

नित्यं कर्मापेक्षत्वात् सृष्टिमिति कर्मपदेन सह तस्या अन्वयः स्वीक्रियते । तथा असूर्यम्पश्य इत्यत्र सूर्यपदस्य मध्ये व्यवधानेऽपि समस्तैकदेशस्थेन पश्येत्यनेन सह नञोऽन्वयः स्वीकार्यमिति पूर्वञ्च प्रतिपादितम् । इहत्वांशिक दृष्टान्तः । एवं रामस्य गुरुकुलमित्यादौ सम्बन्ध पदस्यापि अन्वयो मन्तव्यः । विशेषमाह—किञ्चेति । समानाधिकरणानामिति समस्यमान पदानामित्यर्थः । हृत इति—अक्रूरेण मथुरां नीते सतीत्यर्थः । अत्र गतमिति व्यधिकरणत्वात् समासाभावः । एवमुत्तरत्र च । प्रायः शब्दोपादानोद्देश्यं प्रकटयति—क्वचिदिति । यदुकुलत्व-जन्मत्वयोः, तथा कण्ठत्व-कालत्वयोश्च भिन्न वस्तुत्वात्, अर्थादेकस्मिन्नर्थे वृत्तित्वाभावाद् व्यधिकरणत्वमिति भावः । सप्तमीविष्णुनिष्ठेत्यादिना सप्तम्यन्तस्य पूर्वनिपातो वक्ष्यते ।

**अमृता०**—१०२. नचेति । प्रथमान्तस्यान्यपदार्थत्वे तु पीताम्बरसमासो न स्यात् । तत्र च समासेनान्यपदार्थत्वरूपार्थ प्रत्ययनासामर्थ्यं हि कारणं कल्प्यम् । तथाहि—सुच्छाये वृन्दावने य इति वाक्याद् योऽर्थः प्रतीयते स तु सुच्छायवृन्दावन इति समसावस्थायां नावबुध्यत इति ।

---

**बाल०**—हिप्र । आभीक्ष्ण्यतद्वक्तरि वाच्ये कर्मणा सह हिप्रत्ययान्तं विष्णुपदं समस्यते । तत्पदेन हि प्रत्ययान्तकर्मणोः परामर्षः । एवमिति । जहिजोहमित्याभीक्ष्ण्यमाह यः स जहिजोहः । जहि इति हन्तेर्जहि इत्यनेन सिद्धं । जोहशब्दस्यार्थमाह जोहः दासः क्षारं वेति । भाषावृत्तावपि जहिजोह इति दृश्यते, उपाध्यायसर्वस्वेतु जुड प्रेरणे इत्यस्य अनुप्रत्ययेन जोडशब्दो निष्पाद्यः जहिजोड इति निष्पादित्तं । इत्यादय इत्यादिपदेन जहिस्तम्बः उज्जहिस्तम्ब इत्यादयोऽपि ज्ञेयाः ॥ १०१ ॥

**बाल०**—अनेक । अन्यपदार्थे इति अन्यपदस्यार्थे इति विग्रहः । प्रभुश्चेति चशब्दोपादानेन अस्य सूत्रस्य विधित्वमधिकारत्वञ्च व्यञ्जितं । अन्येति । अन्यपदाभिधेयवत् इत्यर्थः । अस्येति पीताम्बरसमाससिद्धस्य नाम्न इत्यर्थः, अस्मिन्निति वा पाठः । अस्मिन् समासे इत्यर्थः । अन्येति उद्देश्य इति वाच्य इत्यर्थः । तस्मात् यच्छब्द इदंशब्दश्च अन्यपदार्थवाचकत्वेन निर्दिश्यत इति भावः । उद्देश्य इत्यनन्तरमत्रेति ज्ञेयं । द्वयोरिति द्वयोः परयोरित्यर्थः । एवं त्रयाणामित्यादौ च ज्ञेयं, अभिधानं कथनं । तत्र समासार्थेनेति ।

**१०३. न क्तवत्वाद्यन्तस्य ।**

वैष्णवा भुक्तवन्तोऽस्य, वैष्णवो जग्मिवानस्य ।

**१०४. क्वचिन्मध्यपदलोपः ।**

सिंहस्येव मुखमस्य, सिंह मुखमिव मुखमस्येति वा सिंहमुखः ।

---

**अमृता०**—१०३. नेति । क्तवत्वाद्यन्तस्य च पीताम्बरो न स्यात् बाहुल्यादिति शेषः । आदिशब्देन क्व स्वादेर्ग्रहणमिति दर्शयति—जग्मिवानस्येति ।

**अमृता०**—१०४. क्वचिदिति । पीताम्बरसमासे क्वचिद् मध्यपदस्य लोपो भवति । सिंहस्येवेति—अस्मिन् पक्षे सिंहपदेन तन्मुखं लक्ष्यते, अतस्तेन हि मुखार्थबोधः । एवं चन्द्रसदृशं मुखं यस्याः सा चन्द्रमुखी, बिम्बतुल्य ओष्ठो यस्य स विम्बोष्ठ इत्यादयः ।

---

तत्रेति समाससिद्धे नाम्नीत्यर्थः । पीताम्बर इति अत्र द्वयोरभिधानं । पीतसूक्ष्माम्बर इति अत्र त्रयाणामभिधानं । एवमिति अत्र चतुर्णामभिधानं । प्राप्त इति कर्त्तरि क्तः । यदिति द्वितीयान्तं, प्राप्त इति कर्मणि क्तः । ययेति करणत्वात् तृतीया ॥ १०२ ॥

**बाल०**—अव्यय । अव्ययश्चेति नामपदेन सह समस्यत इति शेषः । नीचैर्मुखमस्य नीचैर्मुखः, इति अत्रान्यपदार्थस्य इदंशब्देनोद्देश्यता ॥ १०३ ॥

**बाल०**—तुमो । कामे मनसिच परे तुमो मस्य हरो भवति । सेवितुमना इति सेवितुं मनोऽस्येति विग्रहः । नास्ति भक्तिरिति नास्ति भक्तिरस्येति विग्रहः । अस्तीति नास्तीतिच तिङन्तप्रतिरूपकमव्ययं । अलिङ्गो ऽव्ययसंज्ञ इत्युक्तमत आख्यातान्तस्याप्य-व्ययत्वमस्त्येव किन्तु तथा सति नास्तिभक्तिरित्यत्र नञो भिन्नपदत्वात् अनस्तिभक्तिरिति स्यादतस्तिङन्तप्रतिरूपकमित्युच्यते । ननु भक्ताय दत्तार्थं इत्यादौ समस्तस्य दत्तपदस्य असमस्तेन सम्प्रदानेन सह कथमन्वयो भवतु सापेक्षत्वात् कथं वा अत्र समासो भवत्विति चेत्तत्र पद्यमाह समस्तस्येति । सङ्गतिरिति भवतीति शेषः । सङ्गतिरन्वयः । बाहुल्यादि-हेति । इह प्रकरणे उक्ताद्बाहुल्यादित्यर्थः । वा विधीयते इति तस्मादत्र विग्रहो वर्त्तते इति भावः । दत्तार्थे इति दत्तोऽर्थो येनेति विग्रहः । साक्षादन्वयस्याभाव इति सम्प्रदानस्येति शेष । सः अन्वयः । दृष्टान्तमाह यथेति । कृतपूर्वी सृष्टिमिति असूर्यम्पश्य इतिच पूर्वमेव व्याख्यातं, असूर्यम्पश्य इत्यत्र सूर्यपदस्य व्यवधानेनापि नञः पश्यतीत्य-नेनान्वयः, इत्यांशिकः दृष्टान्त इति । प्राय इति समानमधिकरणं येषामिति विग्रहः । हृते इति अक्रूरेणेति शेषः । गते इति च पाठो दृश्यते । व्यधिकरणानाञ्चेति पीताम्बरो भवतीति शेषः । कण्ठे कालोऽस्येति विग्रहः । सप्तमी विष्णुनिष्ठाविशेषणकृष्णनाम-सख्यानां दण्डहस्तादिवर्जमित्यनेन सप्तम्यन्तस्य पूर्वनिपातः । स्वाङ्गादमूर्द्धमस्तकात् ङेरकामे इत्यनेन ङेर्महाहरनिषेधः, अलुक्समासोऽयमित्यर्थः ॥ १०४ ॥

**१०५. क्वचिद् वा ।**

अविद्यमानः पाप्मा यस्य सोऽपाप्मा, अविद्यमानपाप्मा, प्रपतितानि पर्णानि यस्य स प्रपर्णः प्रपतितपर्णः ।

**१०६. क्वचिदाख्यातलोपः ।**

पीतमम्बरमस्त्यस्य पीताम्बरः ।

**१०७. अव्ययादूराधिकासन्नाः संख्येयवाचिसंख्यया ।**

दशानां पदार्थानां समीपे उपदशाः । अज् वक्ष्यते सामीप्य प्राधान्ये त्वव्ययीभावः—उपदशम् । एवंदशानामदूरा अदूरदशाः । एवमधिक दशाः, आसन्नदशाः ।

अष्टादशपर्यन्ताः संख्या संख्येये वर्त्तन्ते, ततः पराः संख्याः संख्याने च ।

---

**अमृता०**—१०५. क्वचिद्वेति । पीताम्बरे क्वचिद् मध्यपदस्य लोपो वा स्यात् । पाप्मा पापम् । एवमपगतो धर्मो यस्मात् सः अपधर्म इत्यादि ।

**अमृता०**—१०६. क्वचिदिति । पीताम्बरे क्वचिदाख्यातलोपश्च भवति । एवं मयूरमुकुटो विद्यतेऽस्य मयूरमुकुटः, नास्ति कुतोऽपि भय यस्य सः अकुतोभयः, नविद्यते किञ्चन यस्य सोऽकिञ्चन इत्यादयश्च ।

**अमृता०**—१०७. अव्ययेति । संख्येयवाचिसंख्यया सह अव्ययदूराधिकासन्नाः समस्यन्ते, ते च पीताम्बर संज्ञा भवन्ति । उपदशा इति—दशानां समीपे वर्त्तन्ते ये ते उपदशा उच्यन्ते नव एकदश प्रभृतयः । यद्यपीह यच्छब्देन इदं शब्देन वान्यपदार्थो न निर्दिश्यते तथापि त्वाक्षेपात् प्रथमान्ततयैवावगम्यते सः, अतः प्रथमान्यपदार्थत्वे पूर्वेणा- प्राप्ते आरम्भोऽयम् । अज् वक्ष्यत इति—संख्येयादच् नतु बहोरित्यनेनेति शेषः । सामीप्य प्राधान्ये त्विति—अतएव तत्र विग्रहः—दशानां समीपमिति । पीताम्बरे तु समीपि— प्राधान्यमिति भेदः । उपदशमिति—ब्रह्मणि तु वेति केशवारामः, नान्तस्य नत्वणीयोरिति संसारहरः । अधिकदशा इति—दशानामधिका इति विग्रहः, ते पुनरेकादशादयः । आसन्न- दशा इति दशानामासन्ना इति विग्रहः, नव एकादशो वार्थः । सूत्रे यत् संख्येय वाचीत्युक्तं

---

**बाल०**—नच । प्रथमान्तस्य अन्यपदार्थत्वे पीताम्बरो न भवति बाहुल्यादिति शेषः । सुच्छाय इति शोभना छाया यस्येति विग्रहः । छाया अनातपः । अन्यपदार्थतेति अन्यपदस्य अर्थतेति विग्रहः, अर्थता वाच्यता । हेतुमाह गतस्यैवेति ॥ १०५ ॥

**बाल०**—न क्त । क्तवत्वाद्यन्तस्यच पीताम्बरो न भवति बाहुल्यादिति शेषः । आदिग्रहणस्य फलमाह वैष्णवो जग्मिवानस्येति ॥ १०६ ॥

**बाल०**—क्वचि । पीताम्बरसमासे क्वचिन्मध्यपदलोपो भवति बाहुल्यादिति

यथा—एको वैष्णवः, द्वौवैष्णवौ, त्रयो वैष्णवा इत्यादि। यथा च—ऊनविंशति र्गावः, ऊनविंशतिर्गवामित्यादि। तत्र ऊनविंशत्यादीनां समासो वा। अचि कृते चिति ते ह्ंरो वक्ष्यते। अदूरोन विंशा गावः, अदूरोनविंशति र्गवामित्यादि।

**१०८. संख्या गुणितत्वे वार्थे च।**

**त्रिगुणिता दश त्रिदशाः। द्वौ वा त्रयो वा द्वित्राः। अज्वक्ष्यते। नचेयस्याः पीताम्बरे वामनत्वादि,—बहुप्रेयसी कृष्णः।**

---

व्याख्यया तत् परिचाययति—अष्टादशपर्यन्ता इत्यादिना। ऊनविंशत्यादीनां समासो वेति—संख्येयवाचित्वे पक्षे समासः, संख्यानवाचित्वपक्षे तु न, ततश्च विकल्प इत्यर्थः। इत्यादि पदेन—विंशति वैंष्णवः, विंशति वैंष्णवानामित्याद्या बोध्याः। तेह्ंरो वक्ष्यत इति—विंशते स्तेहर श्चितीत्यनेन। समासासमास पक्षौ दर्शयति—अदूरोनविंशा इत्यादिना। ऊनविंशतेरदूरा इति विग्रहः। नदूरोन विंशति रिति संख्यानवृत्तित्वान्न समस्तः, अदूरा इत्येकं पृथक् पदम्। आदि शब्देन—अदूरविंशा गावः, अदूरा विंशति र्गवाम्, आसन्नविंशा गावः, आसन्नाविंशति र्गवाम्, अधिकविंशति र्गावः अधिका विंशति र्गवामित्यादयो ज्ञेया।।

**अमृता०**—१०८. संख्येति। गुणितत्वे वार्थे च गम्ये संख्येयवाचिसंख्यया सह संख्या वाचि शब्दः समस्यते, स च पीताम्बर संज्ञ. स्यात्। त्रिदशा इबि—संख्येयाद च नतु बहो रित्यनेन अच्। द्वौ वा त्रयो वेति—अत्र वाशब्दः संशये न तु विकल्पे। यदि विकल्पार्थ इह मन्यते तर्हि यदा द्वौ भवत स्तदा तुबहुवचनं नप्रयुज्यते। सशयिते चार्थे द्वित्वे बहुत्वे ऽपि बहु वचनं भवेत, यथा—कति भवतः शिष्या इति। उक्तश्च भाष्ये—अविज्ञातेऽर्थे बहुवचन प्रयोक्तव्यमिति न्यासकृता धृतम्। द्वित्रा इत्यत्र च पूर्ववदच्। एवं पञ्चषाः, लक्षकोटा इत्यादयश्च बोद्धव्याः। नचेयस्याः पीताम्बरे इति सूत्रप्रतीकम्, अनेन वामनत्वादि निषिद्धः। आदिपदेन नेयस इति वक्ष्यमाण निषेधतः "ऋराम गोपीसर्पिरादिभ्यः" इति कप् प्रत्ययश्च न स्यादित्यर्थः। बहुप्रेयसी कृष्ण इति—अनियुवां पश्चात् पुंस्त्वेऽपि गोपीसंज्ञामाहुः, ततो बहुप्रेयसी शब्दः शसं बिना पुंस्यपि गोपीशब्दवदित्युक्तं नामप्रकरणे। अतोऽस्य पुंस्त्वेऽपि गोपीसंज्ञत्वे यिद्धे ( शसं बिता ) नेयस इत्यनेन कप् निषेधः।

पीताम्बरं विभजते—तत्रेति। तद्गुण संविज्ञानः अतद्गुणसंविज्ञानश्चशब्दौ रूढिसंज्ञौ, तयोरन्योन्यभेद इत्थम्—संयोग-समवाययोरेकतरसम्बन्धेन यत्रान्यपदार्थः संलक्ष्यते

---

शेषः। सिंहस्येवेत्यत्र सिंहपदेन सिंहमुखे लक्षणा, अन्यथा सादृश्यं न गम्यते इति। सिंहमुख इति। एवं शास्त्रज्ञानं धनं यस्य स शास्त्रधनः, सुवर्णविकारोऽलङ्कारो यस्य स सुवर्णालङ्कारः, चन्द्रसदृशं मुखं यस्याः सा चन्द्रमुखी, इन्दुसहिता चूडा यस्य स इन्दुचूड इत्यादिच ज्ञेयं।। १०७।।

तत्र ते पीताम्बरा द्विविधाः। समासपदस्य अन्यपदार्थसङ्गित्वे तद्गुणसंविज्ञानाः। तदसङ्गित्वे तु अतद्गुणसंविज्ञानाश्च। यथा—धृतकृष्णनिर्माल्यमानय, दृष्टकृष्णमानय।

**१०६. तत्र तत्र गृहीत्वा तेन तेन प्रहृत्य वा युद्धं वृत्तमिति च सरूपे क्रियाव्यतीहारे पीताम्बरः। तस्मादिराम स्तद्धितः, सचाव्ययम्। पूर्वपदस्य त्रिविक्रम ईशान्तस्यारामो वा विष्णुजनादौ तस्मिन्।**

केशेषु केशेषु गृहीत्वा युद्धं वृत्तं केशाकेशि। दण्डैश्च दण्डैश्च प्रहृत्य युद्धं वृत्तं दण्डादण्डि। युद्धौपाधिकत्वेऽपि—हस्ताहस्ति व्यासज्जेतामिति विस्तरः। मुष्टामुष्टि मुष्टीमुष्टि। वाहावाहवि वाह्वबाहवि। नेहात्वम्—

तत्र पीताम्बर स्तद्गुण संविज्ञानः। तदेवोक्तं मूले—समासपदस्यान्यपदार्थसङ्गित्व इति। यत्र तु तदितर सम्बन्धेनान्यपदार्थः संलक्ष्यते तत्र अतद्गुणसंविज्ञानः। तदेवोक्तम्—तदसङ्गित्व इति। तथाहि प्रथमोदाहरणे अन्य पदार्थो यो भक्त स्तस्य कृष्णनिर्माल्येन सह संयोगसम्बन्धो विद्यते। एवं पीताम्बरः चक्रपाणिरित्यादयश्च। समवायसम्बन्धेन यथा,—चिन्मयीभूमि र्यस्य तत् चिन्मयभूमि वृन्दावनम्। अत्र चिन्मयत्वगुणः समवाय सम्बन्धेन वृन्दावने तिष्ठतीति। द्वितीयोदाहरणे दृष्टकृष्णमित्यत्र अन्यपदार्थे भक्ते तु नहि संयोगादि सम्बन्धः, किन्तु क्रियाकर्मरूपः सम्बन्ध इत्ययमिह अतद्गुणसंविज्ञान इति। एवमधीतविद्य श्च तधर्मा, गृहीतोपदेश इत्यादयश्च। ननु अत्रापीन्द्रियार्थसन्निकर्ष जनित्त'प्रत्यक्षज्ञान सद्भावात् संयोग सम्बन्धो विद्यत एवेति चेत्? सत्यं, अत्र प्रयोक्तृकालमपेक्ष्य हि संयोगादि सम्बन्धद्वयं गृह्यते नतु प्रागघटितमिति। तेन दृष्टकृष्णमानयेति प्रयोजककर्त्तुः प्रयोगवेलायामन्यपदार्थस्य भक्तस्येन्द्रियार्थसन्निकर्षाभावान्न हि संयोग सम्बन्धो वर्त्तमानः, दृष्ट इति भूतविहितप्रत्ययात्। पूर्वत्र तु प्रयोगकाले हि भक्तस्य निर्माल्यधारणरूपः संयोग सम्बन्धः प्रतीयते, धृत इति वर्त्तमाने क्तस्य विधानादिति विवेच्यम्।

**अमृता०**—१०६. तत्रेति। तत्र तत्र गृहीत्वा युद्धं वृत्तमित्यर्थे तथा तेन तेन प्रहृत्य युद्धं वृत्तमित्यर्थे च समरूपे क्रियाव्यतीहारे गम्ये पीताम्बरः स्यात्। वृत्तमिति कर्त्तरि क्तः प्रवृत्तं प्रारब्धमित्यर्थः। तस्मात् समस्तपदादुत्तरे तद्धित इराम प्रत्ययः स्यात्, सच प्रत्ययोऽव्ययम्। तस्मिन् प्रत्यये कृते सति विष्णुजनादौ वर्णे परे पूर्वपदस्य त्रिविक्रमो भवति, ईशान्तस्य पूर्वपदस्य तु विभाषया आरामो भवति, पक्षे त्रिविक्रम एव। केशाकेशीति—अत्र परस्पर केशग्रहणात् क्रिया व्यतीहारः स्पष्टः, उभयत्र हि केशग्रहणमिति

**बाल०**—क्वचिद्वा। कचिन्मध्यपदलोपो वा भवति बाहुल्यादिति शेषः। पाप्मा पापं। अस्त्री पङ्कं पुमान् पाप्मा पापं किल्विषकल्मषमित्यमरः॥ १०८॥

अस्यसि। युद्धमिति किम्—हस्तेन हस्तेन सख्यं वृत्तम्। सरूप इति किम्—हलैश्च मुषलैश्च इत्यत्र नस्यात्।

**११०. द्विदण्डचादयश्च।**

इमे चार्थं विशेषेषु निपात्यन्ते। द्वाभ्यां दण्डाभ्यां प्रहरति द्विदण्डि प्रहरति। उभाहस्ति उभयाहस्ति। एवमुभाङ्गुलीत्यादि।

---

सरूपत्वम्। इराम प्रत्यये कृते अइद्वयस्यहर इत्यरामहरः पूर्वपदस्य त्रिविक्रमः, अव्ययत्वेन विष्णुभक्तं महाहरः। एवमन्यत्रापि बोध्यम्। युद्धोपाधिकत्वेऽपीति—युद्धस्य औपचारिकत्वेऽपि, तदनुकरणेऽपीत्यर्थः। तदुदाहरति विस्तरप्रयोगेण—हस्ताहस्ति व्यासज्जेतामिति। व्यायामविशेषे युद्धमनुक्रियते। हस्तेन हस्तेन गृहीत्वा युद्धवदवतिष्ठत्वित्यर्थः। ईशान्तमुदाहरति—मुष्टामुष्टीति। नेहात्वमिति—प्रत्यये सत्यपि विष्णुजनादिवर्णपरत्वाभावादिह नाराम इत्यर्थः।

---

**अमृता०**—११०. द्विदण्डीति। वृत्तिः स्वयमेवोक्ता। तत्र निपात्यन्त इति—इ प्रत्ययान्तत्वेन निपात्यन्त इत्यर्थः। इह क्रियाव्यतीहाररहित्यात् सरूपत्वाभावाच्च अप्राप्ते इप्रत्यये निपातनमर्थ विशेष एव। सचात्र क्रियाविशेषण रूपः। द्विदण्डीत्यत्र पूर्वपदस्य त्रिविक्रमाभावश्च निपातफलम्।

---

**बाल०**—क्वचिदा। पीताम्बरसमासे क्वचिदाख्यातलोपो भवति, बाहुल्यादिति शेषः। पीताम्बर इति आख्यातस्य अस्तीत्यस्य लोपः॥ १०८॥

**बाल०**—अव्य। संख्येयवाचिसंख्यया सह अव्ययादूराधिकासन्नाः समस्यन्ते सच पीताम्बरसंज्ञः। उपदशा इति अत्र समीपि प्राधान्यं प्रथमान्तस्यान्यपदार्थत्वाभावादन्यपदार्थस्त्वाक्षेपलभ्यस्तस्माद्दशानां पदार्थानां समीपे इमे इति निर्मलितार्थ इति। अज् वक्ष्यते इति। संख्येयादच् नतु वहोरिति सूत्र तद्धितप्रकरणे वक्ष्यते। सामीप्येति। सामीप्यप्राधान्येतु अव्ययं सप्तम्याद्यर्थेषु नित्यमित्यनेन अव्ययीभावो भवति, अव्ययीभावोदाहरणमाह उपदशमिति। दशानां समीपमिति विग्रहः। ब्रह्मणि तु वेत्यनेन केशवारामः। नान्तस्य नत्वनीपोरित्यनेन संसारस्य हरः। अधिकदशा इति दशानामधिका इति विग्रहः। आसन्नदशा इति दशानामासन्ना इति विग्रहः। सख्याने चेति संख्येये संख्याने वर्त्तन्ते इत्यर्थः। विंशत्याद्याः सदैकत्वे सर्वाः संख्येयसंख्ययोरित्यमरः। ऊनविंशतिशब्दस्य विंशत्यन्तत्वात् एकत्वं संख्येयसंख्यानवृत्तिश्च भवतीति। अष्टादशपर्यन्ता इत्युक्तात् इति ज्ञेयं। इत्यादीत्यादिपदेन चत्वारो वैष्णवाः पञ्च ब्राह्मणा इत्यादि ज्ञेयं। ऊनविंशतिर्गवामिति अत्र संख्याने वृत्तिः। इत्यादीत्यादिपदेन विंशतिर्वैष्णवानां एकविंशतिर्गोपानामित्यादि ज्ञेयं। यदातु संख्येये वर्त्तन्ते तदा ऊनविंशतिर्गाव इत्यादि च ज्ञेयं। समासो वेति संख्येये वर्त्तन्ते तदा समासो भवति, यदातु संख्याने वर्त्तन्ते तदा न समास इत्यर्थः। अचि कृत इति। विंशतेस्तेर्हरश्चिति इति सूत्रं तद्धितप्रकरणे वक्ष्यते। अ-इद्वयस्य हरो

## १११. खड्ग कर्ण दन्तैश्च तथा ।

नेह द्विदण्डा शाला । गणपाठात् समासान्तरेऽपि—निकुच्यकर्णि धावति, कर्णौ निकुच्येत्यर्थः । प्रोह्यपादि हस्तिनं वाहयति ।

---

अमृता०—१११. खड्गेति । खड्गकर्ण दन्तैश्च सह द्विप्रभृतयः समस्यन्ते, इप्रत्ययेन निपात्यन्ते च । तदुदाहरणानि यथा,—द्वाभ्यां खड्गाभ्यां, उभाभ्यां कर्णाभ्यां, द्वाभ्यां दन्ताभ्यां प्रहरतीत्यर्थे यथाक्रमं द्विखड्गि, उभाकर्णि, उभाकर्णि, उभयाकर्णि, द्विदन्ति इति । नेहेति—अर्थविशेषविरहादित्यर्थः । गणपाठादिति—द्विदण्ड्यादिगणे पाठादित्यर्थः । समासान्तरेऽपीति—निकुच्यकर्णीत्यत्र मयूरव्यंसकादित्वात् श्यामरामः, तथापि इप्रत्ययेन साधुरित्याशयः । प्रोह्यपादीति पादौ प्रोह्य इत्यर्थे पूर्ववदिप्रत्ययेन श्यामरामः साधुः ।

---

भगवतीत्यनेनारामहरः । अदूरोनविंशा इति ऊनविंशतेरदूरा इति विग्रहः । संख्येयादच् नतु वहोरित्यने अच् तेहरः । अदूरोनविंशतिरिति । अत्र संख्याने वृत्तिरिति न समासः । अदूरेति पृथक् पदं । इत्यादीत्यादिपदेन अदूरविंशा गावः अदूरा विंशतिर्गवामित्यादि ज्ञेयं ।। ११० ।।

बाल०—संख्या । गुणितत्वे वार्थेच गम्यमाने संख्येयवाचिसंख्यया सह संख्या समस्यते । सच पीताम्बरसंज्ञः । त्रिदशा इति सख्येयादच् नतु बहोरित्यनेन अच् । द्वौ वा त्रयो वा द्वित्रा इति, अत्र वार्थः संशयो न विकल्पः यदि विकल्पार्थो वा इह आश्रीयते तदा त्रयो भवन्ति इत्यत्र बहुवचनं भवत्येव यदा द्वौ भवतस्तदा बहुवचनं न स्यात्, तदा संशयो वार्थः । संशयिते चार्थे बहुवचनं भवति, यथा कति भवतः पुत्रा इति । उक्तञ्च भाष्ये । अविज्ञातेऽर्थे बहुवचनं प्रयोक्तव्यमिति । अत्रापि संख्येयादित्यादिनैव अच् । एवं पञ्चषा लक्षकोटा इत्यादि ज्ञेयं । न चेति । ईयस्याः पीताम्बरे वामनत्वादि नच भवति । अयं भावः । नचेयस्याः पीताम्बर इति निषेधात् न वामनत्वं नेयस इति निषेधात् ऋरामगोपीसर्पिरादिभ्य इत्यनेन न कप्च । बहुप्रेयसी कृष्ण इति अनियुवां पश्चात् पुंस्त्वेऽपि गोपीसंज्ञामाह ततो बहुप्रेयसीशब्दः शसं बिना पुंस्यपि गोपीशब्दवदित्युक्तं अतो बहुप्रेयसीशब्दस्य पुंस्त्वेऽपि गोपीशब्दवत्ता । तत्र त इति । तत्रान्यपदार्थे अन्यपदार्थसङ्गित्व इति अन्यपदार्थे सङ्गमस्त्यस्येति अन्यपदार्थसङ्गी तस्य भावस्तत्त्वं तस्मिन् । तदसङ्गित्वेतु अन्यपदार्थासङ्गित्वेतु तस्मिन् अन्यपदार्थे न विद्यते सङ्गमस्येति तदसङ्गी तस्य भावस्तत्त्वं तस्मिन् । समासस्य समासघटकीभूतपदसमुदायस्य अन्यपदार्थसङ्गित्वे सति तद्गुणसम्बिज्ञानाः पीताम्बराः । अन्यपदार्थसङ्गित्वेतु अतद्गुणसम्बिज्ञाना इत्यर्थः । क्रमेणोदाहरणं दर्शयति धृतकृष्णनिर्माल्यमानस्येति । अत्र समासपदस्य धृतकृष्णनिर्माल्यस्य अन्यपदार्थसङ्गित्वं अतः पीताम्बरस्य तद्गुणसम्बिज्ञानत्वं । दृष्टकृष्णमानय इति । अत्र समासपदस्य अन्यपदार्थसङ्गित्वं नास्ति, अतः पीताम्बरस्य अतद्गुणसम्बिज्ञानत्वं । तद्गुणसम्बिज्ञाना इत्यत्र अतदगुणसम्बिज्ञाना इत्यत्रच गुणशब्दो गुणविशेषवाची गौणवाचीतिच ज्ञेयं, तथा सति तस्य समासस्य गुणस्यार्थसङ्गस्य

## ११२. सह शब्द स्तृतीयान्तेनैकक्रियायोगे ।

रामेण सह सहरामो वर्त्तते गच्छति वा कृष्णः । अत्र सहस्य सभावो वक्ष्यते, सरामः । एकक्रियायोगाभावे तु—सह शिशुना दधि मथ्नाति यशोदा । विद्यमानार्थोऽत्र सह शब्दः ।

कथं सकर्मकः सरति, सलोमकः पचति ? कर्मण सह यो वर्त्तते स सकर्मकः, सरतीति पश्चादन्वयः ।

---

**अमृता०**—११२. सहेति । एकक्रियाया योगे सति तृतीयान्तेन सह-शब्दः समस्यते, स च पीताम्बर संज्ञः स्यात् । रामेण सहेति विग्रहः । वर्त्तते गच्छति वेति एकक्रिया योग दर्शनार्थं प्रयुक्तम् । अत्र विद्यमानतारूपायां गमनरूपायां वा क्रियायां कृष्णस्य रामस्य च युगपद् योगः । सभावो वक्ष्यत इति पीताम्बरे वेत्यनेनेति शेषः । ततः समासे सहरामः सरामइति पदद्वयमेव सिद्धम् । विद्यमानार्थोऽत्र सह शब्द इति—ततः सहशिशुनेति शिशौ बाल गोपाले विद्यमाने सतीत्यर्थः । दधिमन्थनक्रियायां मातुरेव योगो नतु शिशोरिति फलितार्थः । एवमेव "सहैव दशभिः पुत्रै र्भारं वहति गर्दभीत्यादौ च । विद्यमानेषु दशसु पुत्रेष्वित्यर्थः । आशङ्कते—कथमित्यादि । सरति क्रियायामन्यपदार्थयोगसद्भावे कर्मणो योगाभावात् तथा पचति क्रियायां लोम्नोऽभावात् कथं सह शब्देन समास इति शङ्का-पक्षार्थः । तत्र समाधत्ते—सरतीति पश्चादन्वय इति । यत्र यत्र समासाङ्गभूत पदेन सह मुख्यक्रियाया योगो न सम्भवेत् तत्र तत्र लुप्ताख्यातः पीताम्बरः, तेन विद्यमानादि क्रियायां योगमाश्रित्य समासानन्तरं सरत्यादिक्रिययान्वयः कर्त्तव्य इत्यदोष इत्यभिप्रायः सन्दर्भस्य ।

---

गुणीभावस्य वा सम्यग्विज्ञानं यत्र ते तद्गुणसम्विज्ञानाः । न विद्यते तस्य समासस्य गुणस्यार्थसङ्गस्य गुणीभूतस्य वा सम्विज्ञानं यत्र ते अतद्गुणसम्विज्ञाना इति ॥ १११ ॥

**बाल०**—तत्र । तत्र तत्र गृहीत्वा युद्धं वृत्तमित्यर्थे तेन तेन प्रहृत्य युद्धं वृत्तं इत्यर्थेच सरूपे क्रियाव्यतीहारे गम्यमाने पीताम्बरो भवति । युद्धं वृत्तमिति युक्तमित्युक्तं, कर्मणो यदि कर्त्तृत्वं स्यात्तदा भिन्नकर्त्तृकत्वात् क्तो न स्यात् । वृत्तमिति अन्तर्भूतण्यर्थत्वात् वर्त्तितमित्यर्थः । सरूप इति समानरूप इत्यर्थः । तस्मादुत्तरे इरामस्तद्धितो भवति स चाव्ययं भवति । तस्मादिति पीताम्बरसिद्धान्नाम्न इत्यर्थः । स इति इरामान्त इत्यर्थः । पूर्वपदस्य त्रिविक्रमो भवति । ईशान्तस्य पूर्वपदस्यतु विष्णुजनादौ तस्मिन् परे आरामो वा भवति । तस्मिन्निति इरामान्ते इत्यर्थः ; आरामो वा भवतीति अन्तस्य स्थाने आरामो वा भवतीत्यर्थः । केशैष्विति । अत्र परस्परकेशग्रहणरूपः सरूपः क्रियाव्यतिहारो गम्यते । केशाकेशि इति इरामे कृते अ-इद्वयस्य हर इत्यनेन अरामहरः पूर्वपदस्य त्रिविक्रमः अव्ययत्वात् विष्णुभक्तिमहाहरः । दण्डैश्चेति । अत्र परस्परदण्डक प्रहरणरूपः सरूपः क्रियाव्यतिहारो गम्यते । दण्डादण्डीति पूर्ववत् । विरत्तरमतमाह युद्धोपाधिकत्वेऽपीति ।

११३. दक्षिण पूर्वादय स्तदन्तराले ।

दक्षिणस्याश्च पूर्वस्याश्च दिशो यदन्तरालं सा दक्षिणपूर्वा विदिक् । देवतासम्बन्धे ऐन्द्रीयाम्यादयस्तु नेष्यन्ते ।

इति पीताम्बर. ।

११४. इतरेतरयोग-समाहारयो रामकृष्णः ।

---

अमृता०—११३. दणिणेति । तत्पदेन दिक् परामृश्यते । दिगन्तराले वाच्ये दक्षिणपूर्वादयः शब्दाः पीताम्बरे निपात्यन्ते । अन्तरालं मध्यम् । आदिशब्दात्—दक्षिण-पश्चिमा, उत्तरपश्चिमा, पूर्वोत्तरा इत्यादयो बोध्याः । देवता सम्बन्ध इति—पूर्वादि दिशां पालका देवता दिक् पाला उच्यन्ते । यथा—इन्द्रस्य दिक् ऐन्द्री पूर्वा, यमस्य यामी दक्षिणा, वरुणस्य वारुणी पश्चिमा, कुबेरस्य कौबेरी उत्तरेति । एते देवतासम्बन्धीया ऐन्द्री प्रभृतयः समसनाय नेष्यन्ते, ऐन्द्रीयामी इत्येवमादि समासो न भवेदित्यर्थः । पूर्वादि रूढि-शब्दा एवात्र समासे निपात्यन्ते इति फलितार्थः । अर्थविशेषेऽयं निपातो ज्ञेयः । इति व्याख्यातः पीताम्बरः ।

अमृता०—११४. इतरेति । इतरेतरयोग-समाहारयोरर्थयो र्गम्यमानयो रनेक-

---

युद्धस्य औपाधिकत्वेऽपीति पीताम्बरादिकं भवतीति । औपाधिकत्वेऽपीत्यस्य औपचारि-कत्वेऽपीति फलितार्थः । तदुक्तमुदाहरणमप्याह हस्ताहस्ति हस्ताहस्ति व्यासज्जेतामिति । मुष्टामुष्टि इति मुष्टिभिश्च मुष्टिभिश्च प्रहृत्य युद्धं वृत्तमित्यर्थः । अत्र इरामे कृते अ-इद्वस्य हर इत्यनेन इरामहरः । पूर्वपदान्तस्य इरामस्य स्थाने आरामः । आरामाभावपक्षे पूर्वपदस्य त्रिविक्रम एव मुष्टीमुष्टीति । वाहावाहवीति बाहुषु बाहुषु गृहीत्वा युद्धं वृत्तमिति बाहुभिश्च बाहुभिश्च प्रहृत्य युद्धं वृत्तमिति वा अर्थः । अत्र इरामे कृते उद्वयस्य गोविन्दो नतु धातोर्नच स्त्रोप्रत्यय इत्यनेन गोविन्दः पूर्वपदान्तस्य उरामस्य स्थाने आरामः । आरामाभावपक्षे पूर्वपदस्य त्रिविक्रमः बाहुबाहवीति । नेहात्वमिति विष्णुजनादित्वा-भावादिति शेषः । अस्यसीति । असिभिश्च असिभिश्च प्रहृत्य युद्धं वृत्तमित्यर्थः । असिः खड्गः । अत्र इरामे कृते इरामहरः । हस्तेन हस्तेनेति प्रहृत्येति शेषः । हलैश्च मुषलैश्चेति प्रहृत्य युद्धं वृत्तमिति शेषः । अत्र परस्परप्रहरणरूपः क्रियाव्यतिहारो गम्यत एव, किन्तु तस्य सारूप्यं नास्तीति न समासः ।। ११२ ।।

बाल०—द्विद । वृत्तिमाह इमे चेति । अर्थविशेषेषु वाच्येषु इमे द्विदण्ड्यादय इ प्रत्ययान्ते निपात्यन्ते । द्वाभ्यां दण्डाभ्यामिति द्विदण्डीत्यस्यार्थकथनं । द्विदण्डीत्यत्र पूर्वपदस्यारामत्रिविक्रमाभावो निपातफलं । उभाहस्तीति उभाभ्यां हस्ताभ्यामित्यर्थः । प्रहरतीति शेषः । उभयाहस्तीति उभयेन हस्तेनेत्यर्थः । अत्रोभशब्दस्योभयादेशो वेति । उभाञ्जलीति उभाभ्यामञ्जलीभ्यामित्यर्थः, तर्पतीति शेषः । इत्यादीत्यादिपदेन उभयाञ्जलीति ।। ११३ ।।

**चशब्दस्य समुच्चयान्वाचयेतरेतरयोगसमाहाररूपार्थाश्चत्वारः। तेषूद्भूतावयवसंख्य इतरेतरयोगः। तिरोहितावयवसंख्यः संहतिप्रधानः समाहारः। तयो र्गम्यमानयोः पदद्वयस्य पदानां वा समासो वाच्यः, स च रामकृष्णसंज्ञः। द्वन्द्व इति प्राञ्चः। तत्रेतरेतरयोगे प्रायः परवदेव लिङ्गम्। तत्र रामश्च कृष्णश्चेति विग्रहे रामकृष्ण इति द्वाविति च शब्दार्थः, रामकृष्णौ। एवं बहुत्वे रामकृष्णश्रीदामानः।**

---

-मर्थादेकाधिकं नामपदं समस्यते, स च रामकृष्णसंज्ञः स्यात्। एतदर्थद्वयश्च चशब्दद्योत्यमिति व्यनक्ति—चशब्दस्येत्यादिना। समुच्चयादिरूपा अर्था चशब्देन हि द्योत्या इत्यर्थः। तत्र समासविषयीभूतयोरितरेतरयोग समाहारयो र्लक्षणेआचष्टे—तेष्विति। उद्भूतावयव संख्य इति—उद्भूता प्रकटीभूता अवयवसंख्या यत्रेति विग्रहः। तिरोहिता अन्तर्हिता अस्पष्टीभूता अवयवसंख्या यत्रेति विग्रहः। साहित्यरूपः परस्पर सम्बन्धार्थ उभयत्र हि विद्यते, किन्तु इतरेतरयोगे द्रव्यं विशेष्यं, साहित्यं विशेषणमर्थाद् गौणम्। समाहारे तु साहित्यमेव प्रधानं, द्रव्यं विशेषणमिति मिथो भेदो विवेच्यः। तदेवाह मूले—संहतिप्रधानः समाहारइति। संहतिः साहित्यं मिलनमिति यावत्। इतरेतर योग इति—इतरस्मिन् इतरस्य योग इत्यर्थः। परदेवदेवलिङ्गमिति—उत्तरपदवल्लिङ्गं रामकृष्ण-कृष्णपुरुषयोरिति वक्ष्यमाण विधानात्।

अत्र प्रायो ग्रहणं—पूर्ववदश्ववडवयो रिति वक्ष्यमाण व्यभिचाराभिप्रायेण। रामकृष्ण इति द्वाविति च शब्दार्थ इत्यनेन इतरेतरयोगे उद्भूतावयवसंख्यत्वं दर्शितम्, समासावयवस्य द्वित्वाद् द्विवचनमित्यर्थः। रामकृष्णश्रीदामान इति—रामश्च कृष्णश्च श्रीदामाचेति विग्रहः। अत्र समस्यमान पदावयवस्य बहुत्वाद् बहुवचनमिति। समाहारोऽग्रे वक्ष्यते।

आनुसङ्गेनोक्तौ समुच्चयान्वाचयार्थौ विवृणोति—समुच्चयेत्यादि। रामो भुङ्क्ते कृष्णश्च भुङ्क्त इत्यर्थः। इतरेतरे साहित्यान्वयः, इहतु प्रत्येकान्वय इति भेदः। अन्वाचये तद्वदर्थत्वेऽपि प्रत्येकान्वयित्वेऽपि अन्तिमस्य अन्तोक्तस्य अनाग्रहविषयत्वम्। तच्च दृष्टान्तयति—कृष्णमनुगच्छेदित्यादि। कनिष्ठतया स्वल्पवलचञ्चलत्वाच्च कृष्णमेव मुख्यरूपेणानुगच्छ; सन्ततविपत् सम्भवात्, रामस्तु स्वयमेव बलवत्त्वात् समर्थः, अतस्तद्रक्षणे न तथावश्यकमिति पित्रोरनाग्रहविषयत्वंरामे। एवं हि श्रीचैतन्य चरितामृतधृतं पाणिनीयोदाहरणञ्च,—वटो! भिक्षामट, गाञ्चानयेति। अचिरोनीतो द्विजो वटुः। तस्य भिक्षाटनमेव मुख्यकार्यम्, हृता गौ श्चेद्दृश्यते तामपि आनय इत्याणुसङ्कितया तदानयने त्वाग्रहाभावो व्यज्यते। एतदर्थयो स्तु न समासः, मिथो निरपेक्षत्वेन एकार्थीभावस्यविरहात्।

---

बाल०—खड्ग। उदाहरणानि यथा द्विखड्ग उभाखड्गि उभयाखड्ग उभाकर्णि उभयाकर्णि उभादन्ति इति। नेहेति क्रियाविशेषणत्वाभावादिति शेषः। द्विदण्डेति द्वौ दण्डौ यस्यामिति विग्रहः। शाला गृहं। गणपाठादिति द्विदण्ड्यादिगणपाठादित्यर्थः।

समुच्चये तु--रामो भुङ्क्ते कृष्णश्च, रामः कृष्णः प्रत्येकमित्यर्थः। अन्वाचये तद्वदर्थत्वेऽप्यन्तिमस्यानाग्रहविषयत्वमिति भेदः। कृष्ण-मनुगच्छ बलञ्च पश्य इति वत्। रामश्च कृष्णश्च पश्य इत्यादौ सापेक्षत्वान्न समासः। किञ्च, द्वन्द्वात् परः पूर्वो वा श्रूयमाणः शब्दः प्रत्येकमभिसम्बध्यते। रामकृष्णसौन्दर्यम्, अ-इद्वयम्।

## ११५. समाहारे ब्रह्मत्वमेकत्वञ्च।

वक्ष्यमाणापवादोऽयम्।

---

द्वन्द्वस्य साहित्यरूपार्थ स्तत् पूर्वपरवर्त्तिभिः शब्दैः स्पष्टीभवतीत्याह—द्वन्द्वात् पर इत्यादिना। राम कृष्णसौन्दर्यमिति—रामश्च कृष्णश्च रामकृष्णौ, तयोः सौन्दर्यमिति रामकृष्णगर्भ षष्ठी कृष्ण पुरुषोऽयम्। तेन रामस्य सौन्दर्यं कृष्णस्य च सौन्दर्यमित्यन्वयो मतः। एवं अद्रयं इद्वयञ्चेति। द्वन्द्वात् पूर्वो यथा—सुन्दररामकृष्णौ, मृदुल पाणिपाद-मित्यादि। ननु दूरान्तिकार्थवहि र्योगे इति सूत्रे मध्यस्थितोऽप्यर्थशब्दः प्रत्येकंकथमभि सम्बध्यते, तथानभिधानादिति चेत् ? तत्रैवं वक्तव्यम्—अत्रार्थशब्दः प्रत्येकं नाभिसम्बध्यते किन्तु परस्थएवासौ पूर्वं सम्बध्नाति। यतः पूर्वादि शब्दा आपेक्षिका एव, यमपेक्ष्य अर्थ-शब्दं मध्यस्थं मन्यसे, तेन वहिः शब्देन तु नहि तस्य सम्बन्धः। तथाहि दूरञ्च अन्तिकञ्च दूरान्तिके, तयोरर्थः दूरान्तिकार्थः, द्वन्द्वगर्भ षष्ठीतत्पुरुषः, ततः सच वहिश्चेति पश्चात् पुन द्वन्द्वः। अतो द्वन्द्वत्वेपि बहिशब्दस्य पश्चात् समासत्वान्न हि मध्यत्वमिति साधूक्त परः पूर्वो वेति।

**अमृता०**—११५. समाहार इति। समाहारे सति समस्तपदस्य ब्रह्मत्वमेकत्वञ्च स्यात्। वक्ष्यमाणापवादोऽयमिति—उत्तरपदवल्लिङ्ग रामकृष्णेत्यादिविधेरयमपवाद इत्यर्थः।

---

समासान्तत्वेऽपीति समासभिन्नेऽपि इप्रत्ययान्तेन साधुरिति शेषः। निकुच्यकर्णीति निकुच्य कर्णाविति विग्रहे मयूरादयो व्यंसकादिभिरित्यस्यान्तर्गणे अत्र याच्छेत्यनेन निपातनात् श्यामरामः। प्रोह्यपादीति पादौ प्रोह्येत्यर्थः। प्रोह्य पादाविति विग्रहे पूर्वोक्तसूत्रेण श्यामरामः॥ ११४॥

**बाल०**—सह। एकक्रियायोगे सति तृतीयान्तेन सह सहशब्दः समस्यते सच पीताम्बरसंज्ञः रामेण सहेति विग्रहः। सहरामः वर्त्तते गच्छति वा कृष्ण इति। अत्र एकक्रियायां कृष्णस्य रामस्य च योगः। सभावो वा वक्ष्यते इति पीताम्बरे वेत्यनेनेति शेषः। विद्यमानार्थोऽत्र सहशब्द इति। ततश्च सह शिशुनेति शिशौ विद्यमाने सति इत्यर्थः। कथमिति। सहरामः वर्त्तत इत्यत्र यथा वर्त्तत इत्यनेन सहरामस्यापि योगोऽस्ति तथा सकर्मको नन्दतीत्यत्र नन्दतीत्यनेन सह कर्मणो योगो नास्ति, तर्हि कथं समासो भवत्वित्ययमत्र विरोधः। सिद्धान्तमाह कर्मणा सहेति। वर्त्तत इत्यनेन सह अन्यपदार्थस्य

## ११६. समाहारः ।

प्रभुरयम् ।

## ११७. शाखाभेदानां तद् विदाश्चानुवादे स्थैणोर्भूतेशप्रयोगे ।

प्रत्यष्ठात् कठकौथुमम्, उदगात् कठकालापम् । सा सा शाखा तत्तद्वेत्ता वा पूर्वोक्तमेव कथयामासेत्यर्थः ।

---

**अमृता०**—११७. शाखेति । अनुवादार्थे गम्यमाने स्थाधातोः इण् धातोश्च भूतेश प्रयोगे सति शाखाभेदानां तद्विदाञ्च समाहारः स्यात् । शाखेति वेदशाखा भेदाना-मित्यर्थः । प्रमाणान्तरावगतस्यार्थस्य शब्देन सङ्कीर्त्तनमिह अनुवाद इति प्राञ्चः । प्रत्यष्ठात् कठकौथुममिति—प्रति-स्था भूतेशदिप्, कठश्च कौथुमश्चेति विग्रहः । कठेन प्रोक्तमधीते वेत्यर्थे—"कलापि-वैशम्पायनयोरन्तेवासिभ्यश्चे"ति णिनिः, ततः "कठचरकाभ्यां महाहर" इति तल्लुक् च । अतः कठप्रोक्तत्वेन वेदशाखा, तथा तदध्ययनत्वेन तद्वेत्ताचेत्यर्थद्वयं कठशब्देन हि लभ्यते । एवं कुथुमिना प्रोक्तमधीत इत्यर्थे अन्तेवासित्वेन पूर्ववद् णिनि स्तन्महाहरश्च, संसारहरः, आदि सर्वेश्वरस्य वृष्णीन्द्रः । एवञ्च कठकालापमिति । अनु-वादत्वं व्यञ्जयति—पूर्वोक्तमेव कथयामासेति ।

---

कर्मणश्च योगोऽस्तीति समासो भवत्येव । सकर्मक इति क्वचिदाख्यातलोप इत्युक्त अतोऽत्र वर्त्तत इत्यस्य लोपः । नन्दतीति नन्दतीत्यनेन सहेत्यर्थः । पश्चादन्वय इति सकर्मक इत्यस्येति शेषः । पश्चादन्वय इत्यनन्तरं क्वचित् क्वचित् पुस्तके तुल्ययोगस्य प्रायिकत्वादिति भाव इति । तदनन्तरं सहैव दशभिः पुत्रैर्भारं वहति गर्दभी । विद्यमानेषु दशसु पुत्रेष्वित्यर्थः । इतिच दृश्यते किन्तु तदसङ्गतमेवेति ज्ञेयं ।। ११५ ।।

**बाल०**—दक्षि । तदन्तराले वाच्ये दक्षिणपूर्वादयो निपात्यन्ते । तदन्तराल इति तन्मध्य इत्यर्थः । आदिग्रहणात् पश्चिमदक्षिणा उत्तरपश्चिमा पूर्वोत्तरा इति पूर्व-दक्षिणेत्यादिच ज्ञेयं । देवेतेति । ऐन्द्र्याश्च याम्याश्च दिशोर्यदन्तरालमित्यत्र ऐन्द्रयामेति नेष्यते । ऐन्द्री पूर्वा दिक्, यामी दक्षिणा दिक् । आदिग्रहणात् यामवारुणी वारुणकौवेरी-प्रभृतयोऽपि नेष्यन्ते ।। ११६ ।।

**बाल०**—इत । इतरेतरयोगसमाहारौ चशब्दस्यैवार्थाविति प्रतिपादयति चशब्द-स्येति । समुच्चयान्वाचयेतरेतरयोगसमाहाररूपार्थाश्चत्वार इत्यत्र समुच्चयान्वाचयेतरेतर-योग-समाहाररूपाश्चत्वारोऽर्था इत्येव पाठो ज्ञेयं । यथावत् स्थितपाठेतु रूपाः स्वरूपा एवार्थाः रूपार्थाःअन्वाचयादयश्च ते रूपार्थाश्चेति विग्रहः । तेषु समुच्चयादिषु । उद्भूतेति उद्भूता प्रकटीभूता अवयवसंख्या यत्रेति विग्रहः । इतरेति । इतरस्मिन्नितरस्य योग इतरेतरयोगः इत्यत्र ज्ञेय इति शेषः । तिरोहितेति । तिरोहिता अस्पष्टीभूता अवयवसंख्या यत्रेति । संहतीति । संहतिः प्रधानं यत्रेति विग्रहः । संहतिर्मिलनं । तयोः इतरेतरयोग-समाहारयोः । चार्थे द्वन्द्व इति भाषावृत्तिसूत्रं । तत्रेति । परवदेव लिङ्गं रामकृष्ण-कृष्ण-पुरुषयोरिति वक्ष्यते । परवदिति परपदवदित्यर्थः । रामकृष्ण इति द्वाविति चशब्दार्थे

## ११८. यजुर्विहित-ससोमक-यागानामक्लीवानाम् ।

अर्काश्वमेधम् । क्लीबेतु-राजसूय-वाजपेये ।

## ११९. समीपाध्ययनानाम् ।

पदकक्रमकम् ।

---

**अमृता०**—११८. यजुरिति । यजुर्वेदे विहिता ये ससोमका यागास्तेषां नपुंसक-वर्जानां समाहारः स्यात् । अर्कश्च अश्वमेधश्चेति विग्रहः । एतयो र्यजुर्वेदे विधानमस्ति । राजसूय-वाजपेययोरपि यज्ञयो स्तत्रैव विधानमस्ति किन्तु नपुंसकत्वान्न समाहारः । ससोमकेति किम्—दर्शपौर्णमासौ । नेमौ सोमपानप्रयोजनकौ यागौ । यजु र्विहितेति किम्—इषुबज्रौ । एतौ तु सामवेदविहितौ ।

**अमृता०**—११९. समीपेति । समीपं निकटमध्ययनं येषां समाहारः स्यात् । अयञ्च वेदविषयकः । पदकं क्रमकमिति—पदमधीते वेद वेति पदकः, एवञ्च क्रमकः । "क्रमादिभ्यो वु"रिति तद्धिते वुः, वोरकः । पदानां क्रमस्य च पाठः प्रत्यासन्न आस्ते ।

---

इत्यनेन उद्भूतावयवसंख्यत्वं व्यञ्जितं । रामकृष्णश्रीदामान इति । रामश्च कृष्णश्च श्रीदामा चेति विग्रहः । आनुषङ्गिकतया उक्तौ समुच्चयान्वाचयौ च विवृण्वेति समुच्चयें त्विति । रामश्च भुङ्क्त इति रामो भुङ्क्ते कृष्णश्च भुङ्क्त इत्यर्थः । रामः कृष्णश्चेति सुन्दर इतिच ज्ञेयं । रामः कृष्णः प्रत्येकमित्यनेन प्रत्येकं समन्वायकं । समुच्चय इति समुच्चयलक्षणं ज्ञापितमिति ज्ञेयं । तद्वदर्थत्वेऽपि प्रत्येकं समन्वायकत्वेऽपि । अन्तिमस्येति अन्तोक्तस्येत्यर्थः । तद्वदर्थत्वादेव अन्वाचये पृथगुदाहरणं न दर्शितं, किन्तु दृष्टान्तेन स्पष्टयति कृष्णमनुगच्छेति । अत्र अन्तिमस्य आग्रहविषयत्वाभावः । किञ्चेति उदाहरण-माह रामकृष्णेति । रामकृष्णयोः सौन्दर्यमिति विग्रहः, रामस्य कृष्णस्यच सौन्दर्य-मित्यर्थः । उदाहरणान्तरमाह अ-इद्वयमिति अद्वयं इद्वयञ्च इत्यर्थः ॥ ११७ ॥

**बाल०**—समा । समाहारे सति ब्रह्मत्वमेकत्वञ्च भवति । वक्ष्यमाणेति । उत्तर-पदवल्लिङ्गं रामकृष्ण-कृष्णपुरुषयोरिति वक्ष्यमाणसूत्रं तदपवादोऽयं योगः । उदाहरणं दर्शयति यथेति । अधिकारसूत्रमेतत् ॥ ११८ ॥

**बाल०**—शाखा । अनुवादे गम्यमाने स्थेनोर्भूतेशप्रयोगे सति शाखाभेदानां तद्विदाञ्च समाहारो भवति । तद्विदामिति शाखाभेदविदामित्यर्थः । प्रमाणान्तराबगत-स्यार्थस्य शब्देन सङ्कीर्त्तनमनुवाद इत्यर्थः । शाखा वेदैकदेशः । प्रत्यष्ठात् कठकौथुममिति । कठश्च कौथुमश्चेति विग्रहः । कठशब्देन कौथुमशब्देनच शाखाभेदस्तत्तद्वेत्ताच उच्यते । कठेन प्रोक्तमधीते इत्यर्थे कलापिवैशम्पायनयोरन्तेवासिभ्यश्चेत्यनेन णिनिः, ततः कठचरकाभ्यां महाहरः इत्यनेन तस्य महाहरो भवति इति कठशब्दस्य शाखाविद्वा-चित्वमपि । प्रत्यष्ठादिति प्रतिपूर्वस्य स्थाधातोर्भूतेशप्रयोगः । उदगात् कठकालापमिति । उदगादिति उत्पूर्वस्य इनधातोर्भूतेशप्रयोगः । उदाहरणद्वयस्यार्थमाह सा सा शाखेति ।

## १२०. अप्राणि द्रव्यजातीनाम् ।

आराशस्त्रि, तुलसी मरुवकम् । अजातित्वे—नन्दकपाञ्चजन्यौ । जातित्वेऽपि नियतद्रव्यविवक्षायां न,—एतौ तुलसीमरुवकौ ।

## १२१. नदी देशनगराणां भिन्नलिङ्गानाम् ।

गङ्गाशोणं, शोणनर्मदं, कुरुकुरुक्षेत्रं, मथुरापाटलीपुत्रम् ।

---

**अमृता०**—१२०. अप्राणीति । मुखनासिकाभ्यां यो वायुः सञ्चरति सप्राणः, स प्राणः, स एषामस्तीति प्राणिनः । तद्वर्जितानां द्रव्यजातीनां समाहारो भवति । आराशस्त्रीति—आरा चर्मभेदिका, शस्त्री छुरिका । मरुवको जम्बीरविशेषः । नन्दक पाञ्चजन्या विति—नन्दको हरेः खड्गः, पाञ्चजन्य स्तस्यैव शङ्खः, अतः संज्ञाशब्दावेतौ न तु जातिवाचिनाविति न समाहारः । द्रव्येति किम्—गुणक्रिययोस्तु न—रूपरसगन्धस्पर्शाः, गमनासनभोजनानि । अप्राणीति किम्—ब्राह्मणक्षत्रियविट्शूद्राः । नियतद्रव्यविवक्षायां नेति—जातित्वसद्भावेऽपि निश्चितद्रव्यविवक्षा चेत्तदा नेत्यर्थः, जातिप्राधान्येऽत्र समासविधानादिति भावः ।

**अमृता०**—१२१. नदीति । नद्यश्च देशाश्च नगराणि चेति नदीदेशनगराणि, तेषां भिन्न लिङ्गानां समाहारो भवति । गङ्गाशोणमिति शोणो नदविशेषः । शोण नर्मदमिति नर्मदा नदी विशेषः । कुरवश्च कुरुक्षेत्रञ्च कुरु कुरुक्षेत्रम्, देशोदाहरणमेतत् । एवं नर्मदा सिन्धु कावेरि, सिन्धुगोदावरीत्यादि । मथुरा च पाटलिपुत्रश्च मथुरापाटलिपुत्रम् । पाटलिपुत्रो नगर विशेषः, पाटना इत्याधुनिक ख्यातिः । एवमुज्जयिनीन्द्रप्रस्थमित्यादि च । भिन्नलिङ्गानामिति किम्—गङ्गायमुने, वङ्गोत्कलौ, काशी मथुरे ।

---

अनुवादे चरणानामिति भाषावृत्तिसूत्रं । स्थेनोर्लुङि शाखावाननुवाद इति जुमरसूत्रं । अत उभयमतदर्शनात् शाखाभेदानां तद्विदाञ्चेत्युक्तमिति ज्ञेयं ।। ११९ ।।

**बाल०**—यजु । अक्लीवानां यजुर्विहित-ससोमकयोगानां समाहारो भवति । यजुर्विहितेति । ससोमकाश्च ते यागाश्चेति ससोमकयागाः, यजुर्विहिताश्च ते ससोमकयागाश्चेति विग्रहः । ससोमका इति सोमपानोपलक्षिता इत्यर्थः । अर्काश्वमेधमिति । अर्कश्च अश्वमेधश्चेति यागविशेषष्य अर्कस्याश्वमेधस्यच यजुर्विहितत्वं ससोमकत्वञ्चास्तीति समाहारः । राजसूयवाजपेये इति । यागविशेषयोर्यजुर्विहितत्वं ससोमकत्वञ्चास्ति, किन्तु क्लीवत्वात् न समाहारः । यजुर्विहितेति किं इषुवज्रौ एतौ सामवेदविहितौ । ससोमकेति किं दर्शपौर्णमासौ ।। १२० ।।

**बाल०**—समी । समीपं प्रत्यासन्नं अध्ययनं येषां तेषां समाहारो भवति । पदकक्रमकमिति । पदमधीते वेद वा, क्रममधीते वेदवा इत्यर्थे क्रमदिभ्यो वुरित्यनेन वुः ततः पदकश्च क्रमकश्चेति ।। १२१ ।।

## १२२. नित्य वैरिणाम् ।

गरुडनागम् । कार्यवैरेतु—देवासुराः ।

## १२३. कारूणाम् ।

तक्षायस्कारम् ।

## १२४. शूद्राणामवहिष्कृतानाम् ।

---

अमृता०—१२२: नित्येति । नित्यं स्वाभाविकं वैरं शत्रुता विद्यते एषामिति नित्य-वैरिणः, तेषां समाहारो भवति । गरुडनागमिति नागः सर्पः, अनयो र्नित्य वैरिता विख्याता । एवञ्च अहि नकुलं, श्व-शृगालं, मार्जारमूषिकइत्यादयः । प्रत्युदाहरति—कार्यवैरेत्विति । देवैः सहासुराणां विरोधस्तु नैमित्तिकः कदाचित् स्वार्थमुद्दिश्य भवति, नतु शाश्वतिक इति भावः । एवं कुरुपाण्डवा इति च ।

अमृता०—१२३. कारूणामिति स्पष्टम् । कारुः शिल्पी । तक्षायस्कारमिति—तक्षा सूत्रधरः काष्ठशिल्पी, अयस्कारः कर्मकाराख्यः, लौहशिल्पीत्यर्थं । अत्र तक्षायस्कारमिति "शूद्राणामि" त्यग्रिमसूत्रेणापि सिध्यति किन्तु बहिष्कृत कारूणां संग्रहार्थमेतद् वचनम्, तेन चर्मकार हड्डिपमित्यादौ चरितार्थता सूत्रस्य । हड्डिपो मलेग्रही, पुरीष-मार्जक इत्यर्थः ।

अमृता०—शूद्राणामिति । येन भुक्ते सति पात्रं संस्कारेणापि न शुध्यति स बहिष्कृद् उच्यते । न बहिष्कृताः अबहिष्कृता स्तेषां शूद्राणां समाहारः स्यात् । शूद्राणामिति

---

बाल०—अप्रा । मुखनासिकाभ्यां यो वायुर्निःसरति स प्राणः सोऽस्त्येषामिति प्राणिनिः । न प्राणिनः अप्राणिनः । अप्राणिनश्च ते द्रव्यजातयश्चेति अप्राणिद्रव्यजातयस्तेषां अप्राणिद्रव्यजातीनां समाहारो भवति । अप्राणिजातीनामिति प्राणिव्यतिरिक्त-द्रव्यजातिवाचकानामित्यर्थः । आराशस्त्रीति । आरा चर्मप्रभेदिका इत्यमरः । स्याच्छस्त्री चासिपुत्रीच छुरिका चासिधेनुका इति चामरः । तुलसीमरुवकमिति मरुवको जम्बीर-विशेषः । नन्दकपाञ्चजन्याविति नन्दको हरेः खड्गः पाञ्चजन्यस्तस्य शङ्खः संज्ञाशब्दावेतौ नतु जातिवाचिनौ । अप्राणीति किं ब्राह्मणक्षत्रियौ । द्रव्येति किं रूपरसगन्धस्पर्शाः । रूपादयो गुणजातिवचनाः । जातित्वेऽपीति नियतद्रव्यविवक्षायां नेति बाहुल्यादिति शेषः । एताविति । त्रीणि वदरामलकानि सन्ति इह भाण्डे इति जुमरः ॥ १२२ ॥

बाल०—नदी । भिन्नलिङ्गानां नदीदेशनगराणां समाहारो भवति । नदीदेश-नगराणामिति ज्ञापकात्तु नदाश्च नद्यश्च नद्य इति वक्ष्यते । गङ्गाशोणमिति शोणो नदभेदः । शोणनर्मदमिति नर्मदा नदीविशेषः । कुरुश्च कुरुक्षेत्रञ्च कुरुकुरुक्षेत्रं देशोदाहरणमेतत् । मथुराच पाटलिपुत्रश्च मथुरापाटलिपुत्रं पाटलिपुत्रो नगरविशेषः । भिन्नलिङ्गानामिति किं गङ्गायमुने कर्णाटवरेन्द्रौ अयोध्याकाश्यौ ॥ १२३ ॥

रजकतन्त्रवायम् । नेह—चाण्डालमृतपाः ।

**१२५. गवाश्वादीनाम् ।**

गवाश्वं गवाविकम् । अवश्चानयो नित्यः । गवैडकं, अजाविकं, अजैडकं, कुब्जवामनं, पुत्रपौत्रं, दर्भशरं, भागवतीभागवतं, स्त्रीकुमारं, दासीदासं, शाटीप्रच्छदं, उष्ट्रखरं, श्वचाण्डालं, मूत्रपुरीषमित्यादि ।

**१२६. प्राण्यङ्गानाम् ।**

पाणिपादम् ।

---

सामान्यतो ग्रहणेन कारूणामकारूणाञ्च वचनमिदम् । रजको वस्त्ररञ्जनकृत् नतु वस्त्रधौतकृत्, स तु बहिष्कृत शूद्रः । तन्त्रवायो वस्त्रवयनकारी, तन्तुवाय इति पाठेऽपि स एवार्थः । एवं गोपनापितमित्यादि च । चाण्डालाः श्वपचः, कुक्कुर भोजि हीन जातिः, मृतपः शवदाही, श्मशानवासी जातिः ।

**अमृता०**—१२५. गवाश्वादीनामिति । एषां समाहारः साधुः स्यात् । आदिपदेनान्यांश्च संगृह्णाति—गवाविकमित्यादिभिः । अविको मेषः । "वृक्षमृगे"त्यादिवक्ष्यमाणेन विभाषया समाहारः प्राप्यते, तन्निरासार्थमिह साधुत्वकरणम् । एवं दर्भशरमित्यस्य नित्यतार्थमिह पाठः । अवश्चानयो नित्यमिति—गोरोरवः सर्वेश्वरे वेति विभाषा तु न स्यात् निपातनादित्यर्थः । गवैडमिति एडका मेषी । अत्र तु अवादेशो विभाषया होष्टः, तेनादेशाभाव पक्षे गवेडकमिति । पुत्र पौत्रमिति—ननु कथं पुत्रपौत्राणां दर्शक इति समाहाराभावः ? बहुत्वविवक्षात इतरेतर इति । प्रच्छकः सवावयवच्छादक वस्त्रम् । इत्यादि पदेन—मांसशोणितं, तृणोपलमित्यादि च । अत्र गणे पाठात् भागवती भागवतमित्यादि पक्षमु "लक्ष्म्या सहोक्तौ पुरुषोत्तमस्य तन्मात्रञ्चेद्विशेष" इति वक्ष्यमाणेन त्वेकशेषो निराकृतो निपातबलात् ।

**अमृता०**—१२६. प्राण्यङ्गानामिति । सुगमम् । प्राणयोकादङ्गमपि प्राण्येव, अन्यथा—अप्राणि द्रव्य जातीनामित्यनेन हि समाहार सिद्धेः । एवं ललाटनासिकं अक्षिकर्णमित्यादि च । मुखनासिके इति तु बाहुल्यात् समाहार व्यभिचारः । केचित्तु दधिपय आदिषु पठन्तीमम् ।

---

**बाल०**—नित्य । नित्यं वैरं विद्यते येषां ते नित्यवैरिणः तेषां नित्यवैरिणां समाहारो भवति । वैरं विरोधः ततश्च नित्यविरोधिनामित्यर्थः । गरुडनागमिति नागः सर्पः । एवं अश्वमहिषं अहिनकुलमित्यादिच ज्ञेयं । देवासुरा इति एषां नैमित्तिको विरोध इति न समाहारः । एवं कुरुपाण्डवा इत्यादिच ज्ञेयं ।। १२४ ।।

**बाल०**—कारू । कारूणां समाहारो भवति । कारुः शिल्पी । तक्षायस्कारमिति तक्षा काष्टतट् अयस्कारः कर्मकारः । तक्षायस्कारमिति शूद्राणामवहिष्कृतानामित्यनेनापि सिध्यति, किन्तु बहिष्कृतकारूणामपि चर्मकारादीनां समाहारार्थमेतत् सूत्रं कृतमिति ज्ञेयं ।। १२५ ।।

१२७. तूर्यं वादकानाम् ।

मार्दङ्गिक-पाणविकम् ।

१२८. सेनाङ्गक्षुद्रजन्तुफलानां बहुत्वे ।

हस्तिनश्च अश्वाश्च हस्त्यश्वम् ।

क्षुद्रजन्तु रनस्थिः स्यात् सहस्रेणाञ्जलिर्यतः ।

---

**अमृता०**—१२७. तूर्येति । तूर्यं वाद्यम् । तूर्य वादकानां वाद्यवादनजीविनां समाहारो भवति । मार्दङ्गिकपाणविकमिति—मृदङ्गवादनं शिल्पमस्य, पणववादनं शीलमस्य इत्यर्थे माधव ठः, ठइकः । पणवो वाद्ययन्त्रविशेषः, भेरीइति ख्यातः । एवं वैणिकवैणविक मित्यादि । कारूणामित्यनेनैवेतत् सिद्धेऽपि अकारूणामपि प्राप्त्यर्थमिदं वचनम् । तेन मृदङ्गकुशलं दुन्दुभिवादकमित्यादि च सिध्यति ।

**अमृता०**—१२८. सेनाङ्गेति । एषां बहुत्व एव विषये समाहारो भवति । हस्त्यश्वरथपादातं सेनाङ्गं स्याच्चतुष्टयमित्यमरः । हस्त्यश्वमिति—एवं हस्तिपदाति, हस्तिरथ मित्यादि । क्षुद्रजन्तुरिति स्मृत्युक्त पारिभाषिकः शब्द इति दर्शयन् तस्य पञ्चविधत्वमाह —क्षुद्रेत्यादि स्मृतिकृत् पद्यसार्द्धकेन । नविद्यते अस्थि यस्य सोऽनस्थिः, मांसशोणित चर्ममयः क्षुद्रजन्तुरुच्यते । यतो यस्य सहस्रेण परिमितेन अञ्जलिः पूर्यते स च क्षुद्रजन्तुः स्यात् । गोचर्म प्रमाणस्य यस्य हननात् स्मृतौ पातकत्वं न स्पृशति स च क्षुद्रजन्तुः, अशोणितः रुधिरशून्यश्च जीवः क्षुद्रजन्तुः । तथा नकुलपरिमाणपर्यन्तः क्षुद्रजन्तुरुच्यते ।

---

**बाल०**—शूद्रा । अवहिष्कृतानां शूद्राणां समाहारो भवति । अवहिष्कृतानामिति अपतितानामित्यर्थः । येन भुक्ते बिना पात्रं संस्कारेण न शुध्यति । स एव वहिष्कृतः शूद्रो ज्ञातव्यः कथ्यते बुधैः । इति मे यान्ति दिवसाः समं रजकनापितैरिति त्वेकशेषेणेति ज्ञेयं । मृतपो हड्डिपः ॥ १२६ ॥

**बाल०**—गवा । गवाश्वादीनां समाहारो भवति । गौश्च अश्वश्च गवाश्वं गवाविकमिति अविको मेषः । अवयः शैलमेकषार्का इति नानार्थवर्गः । अवश्चेति । अनयोरिति सप्तमीद्विवचनान्तं । अनयोरुदाहरणयोरित्यर्थः । अवश्च नित्य इति बाहुल्यादिति शेषः । तस्माद्गोरोरवः सर्वेश्वरे वेति वक्ष्यमाणसूत्रेण नात्राव इति भावः । गवैडकमिति । एडका मेषः । अत्रतु अव इत्यनेन अवः । गोरोरवः सर्वेश्वरे वेत्यनेन पक्षे अवे कृते गवैडकमितिच ज्ञेयं । अजाविकमिति । अजश्छागः, वामनः खर्वः, दर्भः कुशः, माणवकः शिशुः, प्रच्छदः सर्वाच्छादकवस्त्रं । खरो गर्द्धभः । श्वा कुक्कुरः । मूत्रं प्रस्रावः । पुरीषं विष्ठा । इत्यादीत्यादिपदेन मांसशोणितमित्यादिच ज्ञेयं । वृक्षमृगशकुनितृणधान्यविशेषाणाञ्च वा बहुत्वे इत्यनेन विकल्पे प्राप्ते नित्यतार्थं दर्भशरमिति गवाश्वादिषु पठितमिति ज्ञेयं । गणपाठादेव भागवतीभागवतमित्यत्र दासीदासमित्यत्रच लक्ष्म्या सहोक्तौ पुरुषोत्तमस्य तन्मात्रं चेद्विशेष इत्यनेन एकशेषो न भवतीतिच ज्ञेयं ॥ १२७ ॥

यद् गोचर्मप्रमाणस्य हननान्नैव पातकम् ।
अशोणितः क्षुद्रजन्तु र्नकुलावधिः कथ्यते ।। इतिस्मृतेः ।
दंशमशकम् बदरामलकम् ।

**१२९. वृक्षमृगशकुनितृण धान्यविशेषाणाञ्च वा बहुत्वे ।**

प्लक्षवटं, रुरुपृषतं, हंसचक्रवाकं कुशकाशं, व्रीहियवम् । पक्षे प्लक्षवटा इत्यादि ।

**१३०. व्यञ्जनानां वा ।**

दधिघृतं दधिघृते ।

---

वचनमिदं खलु प्राचीनस्मृत्युक्तं नतु वैष्णवसिद्धान्त सम्मतम् । प्राणिमात्रं प्रति उद्वेगकर-व्यवहारस्य यत्रनिषेधः कुतस्तत्र हननसम्भावनमिति । दंशमशकमिति—दंशाश्च मशकाश्चेति विग्रहः । वदराणि चामलकानि चेति विग्रहः । बहुत्व इति किम्—हस्ती च अश्वश्च हस्त्यश्वौ, दंशश्च मशकश्च दंशमशकौ, वदरश्च आमलकश्च वदरामलके । फलानाम्—अप्राणिद्रव्यजातीनामित्यनेन सिद्धेऽपि समाहारे बहुत्वार्थं इह नियम उक्तः ।

**अमृता०**—१२९. वृक्षेति । वृक्षादीनां बहुत्वे विषये समाहारो वा स्यात् । प्लक्षवटमिति प्लक्षाश्च वटाश्चेति विग्रहः । एवं सर्वत्र विग्रहे बहुत्वं ज्ञेयम् । रुरुपृषतमिति मृगोदाहरणम् । मृगशब्दः कुरङ्गे पशुमात्रे च वर्त्तते, तेन सिंहव्याघ्रं सिंहव्याघ्रा इत्यादि च । शकुनि शब्दः पक्षिवाची । कुशकाशमिति तृणोदाहरणम् । व्रीहियषमिति धान्योदाहरणम् । माषादयः शमीधान्ये शूकधान्ये यवादय इत्यमरः । इत्यादिपदेन—रुरु पृषताः हंसचक्रवाकाः, कुशकाशाः, व्रीहियवा इति विभाषापक्षोदाहरणानि । बहुत्वे किम्—प्लक्षवटौ ।

**अमृता०**—१३०. व्यञ्जनमिति स्पष्टम् । अप्राणि द्रव्यजातीनामित्यनेन नित्यं प्राप्ते विभाषार्थं विधानमेतत् । एवं शाकसूपं शाकसूपे इत्यादि ।

---

**बाल०**—प्राण्य । प्राण्यङ्गानां समाहारो भवति । प्राणयोगात् अङ्गमपि प्राण्येव अतोऽप्राणिद्रव्यजातीनामित्यनेनाप्राप्ते विधानं । ननु कथं मुखनासिकाभ्यां यो निष्क्रामति वायुरिति प्रयोग इति चेत्तत्रोच्यते । मुखसहिते नासिके मुखनासिके इति समासः करणीयः । पुटद्वयभेदादत्र द्विवचनं । मुखनासिकाभ्यामिति दधिपय आदिषु पाठादितितु रक्षितः ।। १२८ ।।

**बाल०**—तूर्य । वादकानां समाहारो भवति । तूर्येति वाद्यवादकानामित्यर्थः । मार्दङ्गिकपाणविकमिति मृदङ्गवादनं शिल्पमस्य पणववादनं शिल्पमस्य इत्यर्थः । तदस्य शिल्पमित्यनेन माधव-ठः । पणवो वाद्यविशेषः । मार्दङ्गिकपाणविकमिति कारूणामित्यनेनापि सिध्यति, किन्तु अकारूणामपि तूर्यवादकानां समाहारार्थमेतत् सूत्रं कृतमिति ज्ञेयं । अतो मृदङ्गवादकपणववादकमिति ।। १२९ ।।

## १३१. विरोधिनामद्रव्यानां वा ।

सुखदुःखं सुखदुःखे ।

## १३२. न दधिपयआदीनाम् ।

---

**अमृता०**—१३१. विरोधिनामिति । अद्रव्यवाचिनां विरोधिनां समाहारो वा भवति । नित्यवैरिणामित्यनेन तु द्रव्यानां समाहारो विहित इत्यायातम् । सुखदुःखमिति—सुखदुःखयो र्गुणयोः सहानवस्थानलक्षणेनमिथो विरोधित्वम् । एवं शीतोष्णं शीतोष्णे, हिमातपं हिमातपौ । अद्रव्याणामिति किम्—सुखदुःखे जन्णमरणे संसारिणाम् । विरोधिनां किम्—कामक्रोधौः क्रुद्धस्यापि कामाचार दर्शनात् ।

**अमृता०**—१३२. नेति । दधिपय आदीनां समाहारो न स्यात् । पूर्वोक्तै विधानैः प्राप्ते प्रतिषिध्यते । तेन चैषामितरेतर द्वन्द्व एव भवतीत्यर्थः । अत्र दधि पयसी, मधुसर्पिषी इति व्यञ्जनत्वेन विकल्पेन समाहारः प्राप्तः । सर्पिर्मधुनी इति—धर्मार्थादिषु यथेष्टमिति यथेष्ट पूर्वनिपातः । शुक्लकृष्णावित्यत्र-विरोधिनामित्यादिना समाहारः प्राप्तः । अनयोरिति—अन्तिमोदाहरणयोः ऋक्सामे वाङ्मनसोरित्यनयो रित्यर्थः । अत् तद्धित इति—धेन्वनडुहौ स्त्रीपुंसादयश्चेत्यनेन साधुतेत्यर्थः । प्रकरणमिदं नियमार्थम्, तेन शाखा भेदानामित्यारभ्य तूर्यवादकानामित्यन्तानां द्वन्द्वः समाहार एव भवति, सेनाङ्गादीनां

---

**बाल०**—सेना । सेनाङ्गादीनां बहुत्वे समाहारो भवति । ईष्यन्ते पृतनाङ्गानि हस्त्यश्वरथपत्तय इति कात्यायनः । हस्त्यश्वरथपादातं सेनाङ्गं स्याच्चतुष्टयमित्यमरः । अतः सेनाङ्गपदेन खरोष्ट्राशरस्त्रादयो न गृह्यन्ते । क्षुद्रजन्तोः पाञ्चविध्यं स्मृतिवाक्येनाह क्षुद्रजन्तुरिति । यस्य अस्थिर्न विद्यते । १ चर्मशोणितमांसमात्रमस्ति स क्षुद्रजन्तुः स्यात् । २ यतो यस्य सहस्रेणाञ्जलिरिति पूर्यते इति शेषः स क्षुद्रजन्तुः स्यात् । ३ यद्यस्य गोचर्मप्रमाणस्य हननात् पातकं नैवास्ति, सच क्षुद्रजन्तुः स्यात् । ४ अशोणित इति यस्य आत्मीयं शोणितं नास्ति सच क्षुद्रजन्तुः स्यात् । ५ नकुलादिश्च क्षुद्रजन्तुः स्यादिति पाञ्चविध्यं । नकुलावधि इति सर्पोपसंग्राहकं लक्षणं । शतं गावो वृषश्चैको यत्र तिष्ठन्त्ययन्त्रिताः । गोचर्ममात्रां तां भूमिं प्रवदन्ति मनीषिणः । इति शास्त्रान्तरं । दंशाश्च मशकाश्च दंशमशकं । दंशस्तु वनमक्षिका इत्यमरः । वदराणिच आमलकानिच वदरामलकं । फलोदाहरणमेतत् । बहुत्वे इति किं हस्त्यश्वौ दंशमशकौ वदरामलके ॥ १३० ॥

**बाल०**—वृक्ष । वृक्षादीनाञ्च बहुत्वे समाहारो वा भवति । प्लक्षाश्च वटाश्च प्लक्षवटं एवं सर्वत्र ज्ञेयं । प्लक्षः पर्कटी । रुरुपृषतमिति रुरुः पृषतश्च मृगभेदः । हंसचक्रवाकमिति शकुन्युदाहरणं । शकुनिशब्दः । कुशकाशमिति तृणोदाहरणं । व्रीहियवमिति धान्यविशेषोदाहरणं । माषादयः शमीधान्ये शूकधान्ये यवादयः इत्यमरः । इत्यादीत्यादिपदेन रुरुपृषताः । हंसचक्रवाका इत्यादिच । बहुत्वे इति किं प्लक्षवटावित्यादि ॥ १३१ ॥

दधिपयसी, मधुसर्पिषी, सर्पिर्मधुनी, शुक्लकृष्णौ, ऋक्सामे वाङ्मनसे इत्यादि । अनयोरत् तद्धितः ।

**१३३. संख्या प्रयोगे तु न ।**

दश मार्दङ्गिकपाणिविकाः ।

**१३४. विभाषा समीपे ।**

उपदशं, दन्तौष्ठम्, उपदशा दन्तौष्ठाः ।

---

बहुत्व एव समाहारः, द्वित्वे त्वितरेतर इत्युभयथैव, वृक्षमृगादीनाञ्चोभयथैव, दधिपय आदीनान्तु इतरेतर एवेति संक्षेपः ।

**अमृता०**—१३३. संख्येति । संख्या प्रयोगे तु समाहारो न स्यात्, तत्प्रयोगे सति संहति-प्रधानत्वस्यहानेरित्येव तत्र बीजं ज्ञेयम् ।

**अमृता०**—१३४. विभाषेति । समीपेऽर्थे संख्याप्रयोगे तु विभाषया समाहारः स्यात् । उपदशं दन्तौष्ठमिति प्राण्यङ्गानामित्यनेन नित्यप्राप्त-समाहारस्य संख्याप्रयोगे निषेध उक्तः, अनेन तद्विकल्पः कृतः । उपदशमिति विशेषणं सामीप्य प्राधान्यादव्ययीभावः । 'उपदशा' इति तु सामीपि-प्राधान्यात् अव्ययदूराधिकासन्ना इत्यादिना पीताम्बर उक्तः ।

---

**बाल०**—व्यञ्ज । व्यञ्जनवाचिनां समाहारो वा भवति । दधिघृतमिति । अत्र क्षुद्रप्राणिद्रव्यजातीनामित्यनेन नित्यं समाहारः स्यादिति विकल्पविधानं कृतं ॥ १३२ ॥

**बाल०**—विरो । अद्रव्याणां विरोधिनां समाहारो वा भवति । सुखदुःखमिति सुखदुःखयोर्गुणयोः सहानवस्थानलक्षणेन विरोधेन विरोधित्वं । एवं शीतोष्णं शीतोष्ण इत्यादिच ज्ञेयं । विरोधिनामिति किं कामक्रोधौ । क्रुद्धोऽपि सन् काममाचरति इति नानयोः परस्परविरोधित्वं । अद्रव्याणामिति किं शीतोष्णे उदके ॥ १३३ ॥

**बाल०**—न दधि । दधिपय आदीनां समाहारो न भवति । दधिपयसी इति । अत्र व्यञ्जनत्वात् समाहारो वा स्यादिति निषेधविधानं । मधुसर्पिषी सर्पिर्मधुनी इति अत्रापि व्यञ्जनत्वात् समाहारो वा स्यात् । धर्मार्थादिषु यथेष्टमित्यनेन यथेष्ट पूर्वनिपातः । शुक्लकृष्णाविति । अत्र विरोधिनामद्रव्याणां वेत्यनेन समाहारः स्यादिति निषेधविधानं । ऋक्सामे वाङ्मनसे इत्यत्र समाहारनिषेधान्न समाहारे द्वन्द्वः किन्तु इतरेतरयोग एव । समाहारे द्वन्द्वे सति समाहारे ब्रह्मत्वमेकत्वञ्च इत्यनेन ब्रह्मत्वमेकत्वञ्च स्यात् । इत्ययं प्रकरणाभिप्रायः । येषां समाहारो नित्यं विहितस्तेषां समाहार एव द्वन्द्वो भवति नतु इतरेतरयोगे । येषां समाहारो विकल्पेन विहितस्तेषां समाहारेइतरेतरयोगेच द्वन्द्वो भवति । येषां समाहारो निषिद्धस्तेषां इतरेतरयोग एव द्वन्द्वो भवति नतु समाहारो येषान्तु समाहारविषये विधिनिषेधौ नस्तः । तेषां समाहारे इतरेतरयोगेच द्वन्द्वो भवति

## १३५. सर्वेऽपि रामकृष्णा विभाषयैकवद्भवन्ति ।

यथा ह्रस्वदीर्घप्लुत इति पाणिनीयसूत्रम् ।

प्रसङ्गात् समासान्तरलिङ्गान्यपि निरूप्यन्ते ।

## १३६. उत्तरपदवल्लिङ्गं रामकृष्ण-कृष्णपुरुषयोः ।

---

**अमृता०**—१३५. सर्वेऽपीति । सर्व इति—इतरेतरसमाहार प्रकरणयो निर्दिष्टा यावन्त इत्यर्थः । ते विभाषया एकवद् भवन्ति । पक्षे अवयवसंख्यानुरूपं द्वित्वादिकञ्च भजन्तीति भावः । परिभाषेयम् । तत्रेतरेतरे ह्यस्याः सम्यक् चरितार्थता ज्ञेया, समाहारे तु नित्यत्वेन विहितानामेव, नतु विभाषितानां, वैयर्थ्य पातात् । उदाहरणत्वेन पाणिनीय सूत्रांशमुद्धरति—ह्रस्वदीर्घप्लुत इति , सम्पूर्णसूत्रन्तु—ऊकालोऽज् ह्रस्वदीर्घप्लुत इति । द्वन्द्वैकवद्भावे पुंलिङ्गनिर्देशः सौत्र इतितद्व्याख्यायां वामनः । सूत्रे वेदवद्व्यवहारात् पुंस्त्वनिर्देश इति तदाशयः, वस्तुतो ब्रह्मत्वमेव प्राप्तमित्यर्थः । ननु एकवदित्यनेन इतरेतर द्वन्द्वानामेकत्त्व पक्षे यथा परनिपातं पुंस्त्वादिलिङ्गत्रयमेव भवतु, कथं ब्रह्मत्वमात्रमिति चेत् ? नैवम्, परिभाषासूत्रमिदं नतु विधिसूत्रम् । तस्मादनेन एकत्वमात्रं परिभाष्यते, न हि विधीयते; विधानन्तु द्वन्द्वेषु समाहारानुगतत्वेन—"समाहारे ब्रह्मत्वमेकत्वञ्च" इत्यनेनैव । तत एकत्वस्य परिभाषितं ब्रह्मत्वमेव न्यायत आपद्यत इति । ह्रस्वदीर्घप्लुत इत्यत्र एकवदभावे तु इतरेतरे ह्रस्वदीर्घप्लुता इति बहुत्वञ्च भवति । एवं स्वग्रन्थेऽपि—"अपिः स्तोकता योग्यतास्वैरानुज्ञा गर्हासमुच्चये" इत्युपेन्द्रविधौ । विष्णुजनारामान्तादिति समासकार्ये च । तथा—श्रीभागवतीयैकादशस्कन्धे—त्रिभुवनविभवहेतवे इत्यत्र क्रमसन्दर्भे —त्रिभुवनविभवाय किमुततद्धेतवे इत्यर्थः । सर्वोऽपि द्वन्द्वो विभाषयैकवद् भवतीति न्यायादेक वचनमिति ग्रन्थकृतां व्याख्या । किञ्च वदनमिदं शिष्टप्रयोगसमाधानार्थं, न किन्तु सर्वत्र यथेष्टप्रवृत्त्यर्थम्, अन्यथा उद्भूतावयवसंख्यत्वादि लक्षणानां व्यर्थतापत्तेरिति दिक् ।

प्रसङ्गादिति समाहारे ब्रह्मत्वनिरूपणप्रसङ्गादित्यर्थः ।

**अमृता०**—१३६. उत्तरेति । रामकृष्णे कृष्णपुरुषे च समासे उत्तरपदस्य लिङ्गमिव समस्तपदस्य लिङ्गं भवति । राधाकृष्णाविति—अत्र प्रत्येकपदार्थ प्राधान्येऽपि उत्तरपदस्य कृष्णस्य लिङ्गं पुरुषोत्तमत्त्वमित्यर्थः : एवं कृष्णराधे इत्यत्रोत्तरपदस्य राधा

---

इति । इत्यादीत्यादिपदेन स्वर्गापवर्गौ श्रद्धामेधे उदूखलमुषले अध्ययनतपसी दीक्षातपसी आद्यवसाने इत्यादिच ज्ञेयं । अनयोरिति अन्तिमयोरुदाहरणयोरित्यर्थः । अत् तद्धित इत्यत्र टस्तद्धित इति पाठः सभ्यः, टप्रकरण एव धेन्वनड्हौ स्त्रीपुंसादयश्चेति सूत्रस्य वक्ष्यमाणत्वात् । अथवा टप्रत्ययस्य अरामविशेषत्वनैव अदित्युक्तं ॥ १३४ ॥

**बाल०**—संख्या । संख्याप्रयोगेच सति समाहारो न भवति । दश मार्दङ्गिकपाणविका इत्यत्र तूर्यवादकानामित्यनेन समाहारः स्यात् इति निषेधः कृतः ॥ १३५ ॥

तत्ररामकृष्णे—राधाकृष्णाविमौ, कृष्णराधे इमे।

कृष्णपुरुषे—अर्द्धामलकी, कृष्णभार्या, मुखचन्द्रः।

**१३७. त्रिरामी प्राप्तापन्नालं-पूर्व-गतिसमासेषु वाच्यलिङ्गतैव।**

पञ्चकपालः सूपः, प्राप्तजीविकाः, आपन्नजीविकः अलंकुमारिः प्रतिगतोऽक्षं प्रत्यक्षः कृष्णः, निर्मधुपुरिः।

---

शब्दस्य लक्ष्मीत्वात् समस्त पदस्य च लक्ष्मीत्वम्। श्यामराम प्रकरणे समास उक्तः। अत्र पूर्वपदार्थ प्रधानत्वेऽपि उत्तरपदवल्लिङ्ग दर्शितम्। कृष्णभार्येति कृष्णस्य भार्येति षष्ठी कृष्णपुरुषः। अत्र तूत्तरपदप्राधान्यात् स्वत एव तत्प्राप्तिः सिद्धा। मुखचन्द्र इति मुखं चन्द्र इवेति विग्रहे उपमेयं व्याघ्रादिभिरुपमानै रित्यनेन श्यामरामः। अत्र पूर्ववद प्रधानत्वेऽप्युत्तरपदवत् लिङ्गम्। उत्सर्गविधिरयम्, अपवादस्तु रामकृष्ण समाहारे ब्रह्मत्वमेकत्वञ्चेति कथित एव। कृष्णपुरुषे चाह—

**अमृता०**—१३७. त्रिरामीति। त्रिरामीसमासे, प्राप्तापन्नालं-पूर्वसमासेषु, तथा गतिसमासेषु च वाच्य लिङ्गता हि स्यात्, नतूत्तरपदवल्लिङ्गम्। वाच्यलिङ्गतेति—समस्त पदस्य वाच्यो यः पदार्थ स्तस्यलिङ्गं समस्तपदं प्राप्नोतीत्यर्थः। पञ्चकपालइति—पञ्चसु कपालेषु संस्कृत इति तद्धितार्थे संख्यापूर्वं त्रिरामी। कपालो मृत्पात्रम्। "तत्र संस्कृतं भक्षञ्चेदि"त्यनेन केशवणः, त्रिरामीतः सर्वेश्वरादीत्यादिना तस्य महारहश्च वक्ष्यते। कपालशब्दः पुंसि ब्रह्मणि च वर्त्तते, अत्रतु वाच्यस्य सूपस्य लिङ्गवत् पुरुषोत्तमता। प्राप्त-जीविक इति—प्राप्तो जीविकामिति विग्रहे प्राप्तापन्ने द्वितीययेत्यनेन द्वितीया कृष्णपुरुषः। अत्र जीविकाशब्दस्य लक्ष्मीत्वेऽपि वाच्यो यो भक्तादि स्तदवल्लिङ्गता, एवमापन्नजीविक इति च।

अलंकुमारिरिति—अलं जातः कुमार्यै इति विग्रहे पर्यादयश्चतुर्थ्येत्यनेन चतुर्थीकृष्ण-कृष्णपुरुषः, ईपो वामनत्वम्। अत्रापि कुमारीत्यस्य लक्ष्मीत्वेऽपि वाच्यस्य पुंस्त्वात् पुरुषोत्तमता। प्रत्यक्षइति—अक्षशब्द इन्द्रियवाची नपुंसकः, अत्यादयो द्वितीययेति कृष्ण-पुरुषत्वेऽपि प्रादीनां क्रियायोगे हि गतिसंज्ञेति वचनात् गतादि क्रियायोगे ह्यत्र गति-समासोदाहरणमिदम्। एवं निर्मधुपुरिरिति—निष्क्रान्तो मधुपुर्या इति विग्रहे निरादयः

---

**बाल०**—विभा। समीपेऽर्थे संख्याप्रयोगे सति विकल्पेन समाहारः स्यात्। उपदशं दन्तोष्ठमिति। अत्र प्राण्यङ्गानामित्यनेन प्राप्तस्य समाहारस्य संख्याप्रयोगेतु नेत्यनेन निषेधः स्यात्। अतो विभाषासमीप इति कृतं। उपदशमिति। अत्र सामीप्यप्राधान्यात् अव्ययीभावः। ब्रह्मणितु वेत्यने केशवारामः। नान्तस्य नत्वनीपोरित्यनेन संसारस्य हरः। सामीप्यप्राधान्यात् एकवचनमेव। उपदशा इति। अत्र समीपिप्राधान्यात् अव्यया-दूराधिकासन्नाः संख्येयवाचिसंख्ययेत्यनेन पीताम्बरः। संख्येयादच् नतु वहोरित्यनेन अच संसारहरः। समीपिप्राधान्यात् बहुवचनं॥ १३६॥

## १३८. पूर्ववदश्व-वडवयोः ।

अश्ववडवौ, अश्ववडवान् ।

## १३९. रात्राह्नाहाः पुंसि ।

पञ्चम्या इति कृष्णपुरुषत्वेऽपि गति समासः । एवं प्रगतो वैष्णवः प्रवैष्णव इत्यादि च ज्ञेयम् ।

**अमृता०**—१३८. पूर्वेति । अश्ववडवयोः समासे पूर्ववत् लिङ्गं समस्तपदस्य भवति । वडवा घोटकी । अश्ववडवयो रिति द्विवचनमतन्त्रमिति सूचयितु मश्ववडवानिति बहुवचनान्तञ्चोदाहृतम् । तत्र अश्वाश्च वडवाश्च अश्ववडवा स्तान् । अश्ववडवै रिति काशिकायामुदाहृतम् ।

**अमृता०**—१३९. रात्रेति । रात्राह्नाहाः समस्ताः पुंस्येव वर्त्तन्ते । अत्र रात्राह्नाहा इति समासान्तारामप्रत्ययेन निर्देशः । अहोरात्राविति—अहश्च रात्रिश्चेति विग्रहे "धेन्वनडुह" इत्यादिना टप्रत्ययः, अइद्वयस्य हरः, द्वित्वे—कहोरात्रौ । इमाविति पुंस्त्वबोधनाय । अत्र सामान्यत्त उत्तरपदवल्लिङ्गतायां लक्ष्मीत्वे प्राप्ते वचनमिदम् । तस्यां प्रक्रियाकौमुद्याम् । हठ इति—नपुंसकत्वस्य भाष्यादेरसम्मतत्वादिति भावः । अहश्च रात्रिश्च अहोरात्र इति काशिका, तथैव भाष्यम् । अहोरात्राविमौ पुण्यौ इति भाषावृत्तिश्च । तस्मादेतेषां विरोधात् तस्या हठत्वमेवावसीयते । एकवद्भावात् क्लीवतेति तस्याः सिद्धान्त उपेक्ष्य एवेति निष्कर्षः ।

पूर्वाह्णइति—पूर्वमह्न इति विग्रहे पूर्वापराधरोत्तरादीनीत्यादिना कृष्णपुरुषः, राजाहः सखिभ्य इति केशवारामः, सर्वाव्ययाभ्यामेकवजं संख्या संख्यातैकदेशेभ्य इति

---

**बाल०**—सर्वे । व्यक्तार्थमेतत् । पाणिनीयसूत्रमुदाहरणत्वेन दर्शयति यथेति । प्रसङ्गादिति लिङ्गस्येति शेषः ॥ १३७ ॥

**बाल०**—उत्त । रामकृष्णे कृष्णपुरुषेच उत्तरपदवल्लिङ्गं भवति । राधाकृष्णाविति । अत्र उभयपदार्थप्रधानत्वेऽपि उत्तरपदवदेव लिङ्गं । एवं कृष्णराधे इति । अर्द्धामलकीति अर्द्धं आमलक्या इति विग्रहे । अर्द्धं समविभागे वेत्यनेन समासः । अत्र पूर्वपदार्थप्रधानत्वेऽपि उत्तरपदवल्लिङ्गं । कृष्णभार्येति कृष्णस्य भार्येति विग्रहः । अत्र उत्तरपदार्थप्रधानत्वादपि उत्तरपदवल्लिङ्गं भवति अत उदाहरणमिदं न बहुप्रयोजनकमिति ज्ञेयं । मुखचन्द्र इति मुखं चन्द्र इवेति विग्रहे उपमेयं व्याघ्रादिभिरुपमानैरित्यनेन श्यामरामः । अत्र पूर्वपदार्थप्रधानत्वेऽपि उत्तरपदवल्लिङ्गं ॥ १३८ ॥

**बाल०**—त्रिरा । त्रिरामीसमासे प्राप्तापन्नालंपूर्वसमासे गतिसमासेच वाच्यलिङ्गत्वैव भवति नतूत्तरपदवल्लिङ्गमिति शेषः । प्रादीनां क्रियायोग एव हि गतिसंज्ञेति पूर्वमुक्तं । पञ्चकपालः सूप इति । पञ्चसु कपालेषु संस्कृत इति दिक्संख्ये तद्धितार्थोत्तरपदसमाहारेष्वित्यनेन त्रिरामी । तत्र संस्कृतं भक्ष्यं चेदित्यनेन केशव-णः । त्रिरामीतः

अहोरात्राविमौ पुण्यौ। अहोरात्रमिति तस्यां हठः। पूर्वाह्णः, द्व्यहः एकाहः।

**१४०. अर्द्धर्चादयो ब्रह्मणि च।**

अर्द्धर्चः अर्द्धर्चम्, यूथः यूथम् इत्यादि।

**१४१. पुण्य-सुदिनाभ्यामहो ब्रह्म, संख्याव्ययाभ्यां पथः।**

पुण्याहं सुदिनाहम्। द्विपथं चतुष्पथं विपथं उत्पथं अपथम्।

---

अहन् शब्दस्य अह्नादेशः, अरामादह्नस्येति णत्वम्। अहन् शब्दस्य ब्रह्मत्वात् तत्प्राप्ते विधानम्। द्व्यह इति—द्वयोरह्नोः समाहार इति विग्रहे दिक्संख्ये इत्यादिना त्रिरामी, राजाहः सखिभ्य इतिसमासान्तः केशवारामः, अह्नष्टखरामयोरेवेति संसारहरः। सर्वाव्ययाभ्यामित्यादौ समाहारवर्जं टे इति निषेधान्नात्र अह्नादेशः। त्रिराम्या लक्ष्मीत्वेप्राप्त विधानमिदम्। एकाह इति—एकश्च तदश्चेति श्यामरामः, अन्यत् सर्वं पूर्ववत्, संख्याव्ययाभ्यामित्यादौ एकवर्जनाद् नाह्नादेशः। नपुंसकत्वे प्राप्ते विधानम्।

**अमृता०**—१४०. अर्द्धेति। अर्द्धर्चादि शब्दा ब्रह्मणि च वर्त्तन्ते, चकारात् पुंसि च। अर्द्धर्चमिति—अर्द्धं ऋच इति विग्रहे—अर्द्धं समविभागे वेत्यनेन कृष्णपुरुषः, ऋक् पथिपुरष इत्यरामः समासान्तः। इत्यादि पदेन गोमय मधु शङ्ख पद्म चरण धर्म सार द्रोण आढक कर्पूर वर्ण बज्र दिवस ब्रत प्रभृतिरर्द्धर्चादिर्गणः काशिकादौ द्रष्टव्यः। इह यूथाद्यसमस्त पदानामपि द्विलिङ्ग व्यवस्था नचिदर्थभेदेन मन्तव्या। यथा—मधुशब्दो मकरन्दमाक्षिकाणां वाची द्विलिङ्ग, चैत्रादिमासि वाची तु पुंलिङ्ग एव। पद्मशङ्खौ जलजे द्विलिङ्गौ, निधिवाचिनौ यदातदा पुंल्लिङ्गावेव, एवं यथासम्भवं वेदितव्यम्।

**अमृता०**—१४१. पुण्येति। पुण्य-सुदिनशब्दाभ्यां परः अहन् शब्दो ब्रह्म स्यात्तथा संख्यावाचकादव्यय-शब्दाच्चपरः पथ इत्येवं शब्दोऽपि ब्रह्म भवति। पुण्याह सुदिनाहमिति—पुण्यञ्च तदहश्चेति विग्रहे श्यामरामः। सुदिन शब्दो मंगलवाची। रात्राह्नाहाः

---

सर्वेश्वरादिप्राग्दिव्यति यस्य महाहरोऽन्प्रत्यय इत्यनेन तस्य महाहरः। अतः कपालशब्दस्य ब्रह्मत्वं ज्ञेयं। प्राप्तजीविक इति। प्राप्तो जीविकामिति विग्रहे प्राप्तापन्ने द्वितीययेत्यनेन द्वितीयाकृष्णपुरुषः। एवं आपन्नजीविक इति। अलंकुमारिरिति अलं जातः कुमार्यै इति विग्रहे पर्यादयश्चतुर्थ्येत्यनेन कृष्णपुरुषः ईपो वामनः। प्रतिगतोऽक्षमिति विग्रहः। अक्षशब्द इन्द्रियवाचकः। प्रत्यक्ष इति अत्यादयो द्वितीययेत्यनेन कृष्णपुरुषः गतिसमासोदाहरणमिदं। निर्मधुपुरिरिति। निष्क्रान्तो मधुपुर्या इति विग्रहे निरादयः पञ्चम्येत्यनेन कृष्णपुरुषः। इदमपि गतिसमासोदाहरणं॥ १३९॥

**बाल०**—पूर्व। अश्ववडवयोः पूर्ववल्लिङ्गं भवति। पूर्ववदिति पूर्वपदवदित्यर्थः अश्ववडवाविति अश्वश्च वडवा चेति विग्रहः। वडवा अश्वा। अश्ववडवयोरिति द्विवचनमत्रातन्त्रं तेन बहुवचनेऽपि भवति। एतत् सूचयितुं अश्ववडवानिति चोदाहृतं॥१४०

पीताम्बरे तु विपथ इत्यादि । "व्यध्वो दुरध्वो विपथः कदध्वा कापथः समाः" इति त्वमर कोषे यत् पुंस्त्वं तत्तु काशिका—भाषावृत्ति क्षीरस्वामिनामसम्मतम् । स्वयमपि लिङ्गादि संग्रहे—"पथः संख्याव्ययाभ्यां पर" इति नपुंसकवर्गे स्वीकृतम् ।

## १४२. नञ् श्यामरामौ विना कृष्णपुरुषो ब्रह्म ।

**प्रभुरयम् ।**

---

पुंसीति प्राप्ते ब्रह्मत्वविधानम् । द्विपथमिति—द्वयोः पथोः समाहार इति वाक्ये दिक् संख्ये इत्यादिना त्रिरामी । ऋक्पथीति समासान्तोऽरामः । एवं चतुष्पथमिति च । अरामान्ता त्रिरामी लक्ष्मीरिति प्राप्ते ब्रह्मत्वविधानम् । विपथमिति—विरुद्धः पन्था इति विग्रहे कुप्रादयो मध्यपदलोपश्चेति श्यामरामः । पथिन् शब्दस्य पुरुषोत्तमत्वादिह ब्रह्मत्वविधानम् । एवमुत्पथमिति च । अपथमिति—नपन्था इति नञ् कृष्णपुरुषः, नञः अव्ययत्वात्तदुत्तरस्य पथः क्लीवत्वम् । नञ् कृष्णपुरुषाच्च न, पथस्तु वेत्यनेन समासान्तोऽरामः । पक्षे अपन्था इति । पथ इत्यरामप्रत्ययान्तत्वेन निर्देशान्नेह ब्रह्मता ।

पीताम्बरे तु विपथ इत्यादीति—एतेन विधानमिदं कृष्णपुरुष एवेति ज्ञाप्यते । अत्र विरुद्धः पन्था यत्रेति विग्रहः, अरामः पूर्ववत् । अत्रामरसिंहस्य प्रमादं दर्शयति—व्य ध्व इत्यादिना । तत्र चाध्वपर्याये ह्येषां ग्रहणात् पीताम्बरादि समान्तरेण सङ्गति नैवेष्टेति प्राचीनमतं रुपपादयति—काशिकेत्यादि । क्षीरस्वामिना अमरटीकायामेवमुक्तम् —विपथं कापथञ्च क्लीवमाहुः । यद् वामनः—पथः संख्याव्ययादेः, संख्याव्यय पूर्वस्य पथः क्लीवतेति । भाषावृत्तौ च तथैव वार्त्तिकमुल्लिख्य द्विपथं विपथमित्याद्युदाहृतम् । नपुंसकवर्गे

---

**बाल०**—रात्रा । रात्राह्नाहाः प्रयोगाः पुंसि वर्त्तन्ते । अहोरात्राविति अहश्च रात्रिश्चेति समाहारे द्वन्द्वः । टस्तद्धितः टप्रकरणे धेन्वनडुहौ स्त्रीपुंसादयश्चेति सूत्रं वक्ष्यते इरामहरः । अह्नो विष्णुसर्गो विष्णुपदान्ते इत्यनेन विष्णुसर्गः । समाहारे ब्रह्मत्वमेकत्वञ्च इत्यनेन ब्रह्मत्वे एकत्वेच प्राप्ते पुंस्त्वविधानात् ब्रह्मत्वाभावः एकत्वन्तु भवत्येव ततोऽहोरात्रश्चाहोरात्रश्चेति एकशेषेणाहोरात्राविति । अहोरात्राविमौ पुण्याविति भाषावृत्तौच दृश्यते । तस्यां प्रक्रियाकौमुद्यां । पूर्वाह्ण इति पूर्वं अह्न इति विग्रहे पूर्वापराधारोत्तरादीन्यवयविनैकद्रव्यत्वे इत्यनेन कृष्णपुरुषः । राजाहःसखिभ्य इत्यनेन केशवारामः । सर्वाव्ययाभ्यामेकवर्जं । संख्यासंख्यातैकदेशेभ्यश्चाहःशब्दस्याह्नः समाहारवर्जं टे इत्यनेन अहःशब्दस्याह्नः अरामान्तादह्नस्येति णत्वं अहःशब्दस्य नपुंसकत्वात् नपुंसकत्वेऽपि प्राप्ते विधानं । द्व्यह इति द्वयोरह्नोः समाहार इति दिक्संख्ये इत्यादिना त्रिरामी । राजाहःसखिभ्य इत्यनेन केशवारामः । अह्नष्ट खरामयोरेवेत्यनेन संसारहरः । अरामान्ता त्रिरामी लक्ष्मीरित्यनेन लक्ष्मीत्वे प्राप्ते विधानं । एकाह इति एकञ्च तदहश्चेति श्यामरामः केशवारामः संसारहरः अहःशब्दस्य नपुंसकत्वात् नपुंसकत्वे प्राप्ते विधानं ॥ १४१ ॥

**१४३. उपज्ञोपक्रमौ तयोरादे राख्या चेत् ।**

**उपज्ञोपक्रमान्तौ कृष्णपुरुषौ ब्रह्मलिङ्गौ स्यातामित्यर्थः । कर्मसाधनाविमौ । श्रीभागवतोपज्ञे । कृष्णतद्भक्तौ । श्रीभागवतादेव एतौ प्रथमं ज्ञातावित्यर्थः । एवमुपज्ञायते इत्युपज्ञा, सर्वज्ञस्य उपज्ञा सर्वज्ञोपज्ञं वेदः । सर्वज्ञेनादावुपज्ञायत इत्यर्थः । श्रीकृष्णपक्रमं भक्तकृपा, श्रीकृष्णेनैव प्रथमं सा प्रारब्धेत्यर्थः ।**

---

स्वयममरेण तत् स्वीकृत्यापि यद् विपथ इत्यादौ पुंस्त्वं निर्दिष्टं तत्तस्य खल्वनवधानमेव । अतएव अमर वचनस्य—प्रमादएवायमिति बहव इति दीक्षितश्च ।

**अमृता०**—१४३. उपज्ञेति । स्वयमेव सूत्रार्थ उक्तः । उपज्ञान्तः उपक्रमान्तश्च कृष्णपुरुषो ब्रह्मलिङ्गः स्यात्, चेद् यदि तवोरुपज्ञोपक्रमयीरादेः कथनं भवेदित्यर्थः । कर्मसाधनाविति—उपज्ञायत इत्युपज्ञा, सोपेन्द्रारामाच्चेति कर्मणि ङाप्, उपक्रम्यत इत्युपक्रमः, कर्मणि घण् । श्रीभागवतोपज्ञा शब्दस्य—ब्रह्मान्तत्रिविक्रमस्येति वामनः, ततो द्विवचनम् । भयभीतीत्यादौ आनीतादिभिश्चेत्यादिपदेन बाहुल्यादुपज्ञेन पञ्चमी कृष्णपुरुषः । सर्वज्ञोपज्ञमिति—सर्वज्ञस्य उपज्ञा इति विग्रहः । कर्त्तरि षष्ठ्या सह समासः । तदेव स्फुटयति—सर्वज्ञेनेति तृतीयान्तेन । अत्र आगमोपज्ञे धर्माधर्मौ, मनूपज्ञं लोकवृतम्, आढ्योपक्रमं दानम्, ब्राह्मणोपक्रमं प्रतिग्रह इति भाषावृत्तिः ।

---

**बाल०**—अर्द्ध । पुंसि चेत्यत्र ब्रह्मणि चेत्येव पाठो ज्ञेयः, पूर्वस्मात् पुंसीत्यनुवर्त्तमानत्वात्, किम्वा पुंसीत्यनेन विहितं पुंस्त्वं ब्रक्तत्वन्तु वाच्यत्वेन प्राप्तमपि चकारेण सूचितमिति । अर्द्धर्चादयः प्रयोगाः पुंसि ब्रह्मणिच वर्त्तन्ते । अर्द्धर्चमिति अर्द्ध ऋच इति विग्रहे । अर्द्धं समविभागे वेत्यनेन समासः । ऋक् पथिपुरप इत्यनेन अरामः समासान्तः । आदिग्रहणफलमाह यूथं यूथः । इत्यादीति आदिपदेन गोमयं गोमयः, चषकं चषकः, शङ्खं शङ्खः, पद्मं पद्मः, दिवसं दिवसः, धर्मं धर्मः, चरणं चरणः, वर्णं वर्णः, वज्रं वज्रः, सारं सारः, सैन्धवं सैन्धवः, आढकं आढकः, द्रोणं द्रोणः, कवचं कवचः, कर्पूरं कर्पूरः, कर्म कर्मा इत्यादि ज्ञेयं । क्षपयत्यशुभं कर्म कर्माणं चिनुते शुभमिति भाषावृत्तिः ॥ १४२ ॥

**बाल०**—पुण्य । पुण्यसुदिनाभ्यां परोऽह्नः ब्रह्म भवति । संख्या । संख्याव्ययाभ्यां परः पथः ब्रह्म भवति । पुण्याहं सुदिनाहमिति श्यामरामः केशवारामः संसारहरः । रात्राह्नाहाः पुंसि इत्यनेन पुंस्त्वे प्राप्ते ब्रह्मत्वविधानं । सुदिनाहमित्यत्र सुदिनशब्दो मुक्तावयवार्थमङ्गलवाची । द्विपदमिति द्वयोः पथोः समाहार इति दिक्संख्ये इत्यादिना त्रिरामी, ऋक्पथिपुरप इत्यनेन अरामः समासान्तः । अरामान्ता त्रिरामी लक्ष्मीरित्यनेन लक्ष्मीत्वे प्राप्ते ब्रह्मत्वविधानं । एवं चतुष्पथमिति । शृङ्गाटकचतुष्पथे इत्यमरः । विपथमिति विरुद्धः पन्थाः इति विग्रहे कुप्रादयो मध्यपदलोपश्च इत्यनेन श्यामरामः । पथिशब्दस्य पुरुषोत्तमत्वात् पुंस्त्वे ब्रह्मत्वविधानं । एवमुत्पथमिति । अपथमिति न

१४४. छाया छायावतां बाहुल्ये ।

तुलसीनां छाया तुलसीच्छायम्। नेह—तुलस्याश्छाया तुलसीच्छाया ।

१४५. राजशब्दं राजविशेषनाम च विनेश्वरवाचकात् रक्षः-पिशाचादिवाचकाच्च सभा ।

सभात्रशाला । ईश्वरसभं, इनसभं, नृपतिसभम् । नेह— राजसभा, युधिष्ठिरसभा । रक्ष आदेः—रक्षःसभं, पिशाचसभम् । नेह—मनुष्य-सभा, देवसभा ।

---

अमृता०—१४४. छायेति । छायावतां बाहुल्ये बहुत्वे गम्यमाने छायान्तकृष्णपुरुषो ब्रह्म स्यात् । षष्ठीसमास एषः । उत्तरपदवल्लिङ्गं रामकृष्णेत्यादिना लक्ष्मीत्वे प्राप्ते विधिरयम् । नेहेति—तुलस्या इत्येकत्वनिर्देशान्नेत्यर्थः ।

अमृता०—१४५. राजेति । अत्रेश्वरशब्दोराजवाचकः । राजपर्यायवाचकात् तया रक्षः पिशाचादि वाचकाच्च परः सभान्तः कृष्णपुरुषो ब्रह्म स्यात्, किन्तु तत्र राज वाचकेषु राज शब्दात् राजविशेषनाम्नश्चोत्तरे सभान्तः कृष्णपुरुषो लक्ष्मीरेव भवति । षष्ठीकृष्ण-पुरुषोऽयञ्च । ईश्वरसभमिति—ईश्वरस्य सभेति विग्रहः । एवं इनसभं, नृपतिसभमिति च । इनः सूर्ये प्रभौ इत्यमरः । ननु कथं—नृपतिसभामगमन्न वेपमान इति कीचकबधे ? राजविशेष विवक्षायां गजपतिवदिति भाषावृत्तिः । तथा—नृपत्युपलक्षिता सभा इति शाकपार्थिवादित्वात् ( मध्यपदलोपिश्यामरामत्वात् ) इति पद्मनाभः । नेहेति—राज-शब्दस्य वर्जनादित्यर्थः । युधिष्ठिरसभेति—युधिष्ठिरः पाण्डव मुख्यो राजा प्रसिद्धः । पिशाचादीत्यत्र आदिपदेन भूतसभं, निशाचर सभमित्यादि च ज्ञेयम् । नेहेति—मनुष्य-देव शब्दयो रीश्वर वाचित्वं रक्ष आदि वाचित्वं वा नास्तीति नानयो र्ब्रह्मत्वमिति ।

---

पन्थाः इति विग्रहे नञ् इत्यनेन समासः । नञ् कृष्णपुरुषाच्च न पथस्तु वेत्यनेन अरामः समासान्तः । अरामाभावपक्षे अपन्था इति ज्ञेयं । पथ इति निर्देशात् नात्र ब्रह्मत्वं । अपन्थास्त्वपथं तुल्ये इत्यमरः । पीताम्बरेतु विपथ इत्यादि । इति तस्मात् संख्या-व्ययाभ्यां पथ इति कृष्णपुरुषे प्रवर्त्तते इति भावः । विपथ इति विरुद्धः पन्थाः यस्मिन्निति विग्रहः ऋक्पथिपुरपः इत्यनेन अरामः समासान्तः । इत्यादीत्यादिपदेन उत्पथः अपथः इति काशिका-भाषावृत्ति क्षीरस्वामिनामसम्मतमिति व्यध्वादीनां कुप्रादयो मध्यपद-लोपश्चेत्यनेन कृष्णपुरुषसमासादिति शेषः । स्वयमपि इति अमरसिंहेनापीत्यर्थः ॥ १४३ ॥

बाल०—नञ् । अधिकारसूत्रमेतत् ॥ १४४ ॥

बाल०—उप । सूत्रार्थमाह उपज्ञोपक्रमान्ताविति । उपज्ञान्त उपक्रमान्तश्चेत्यर्थः । तयोरिति चेद्यदि तयोरुपज्ञोपक्रमयोरादेराख्या कथनं भवतीत्यर्थः । उपज्ञेति । उपज्ञायते इति सोपेन्द्रारामाच्चेत्यनेन कर्मणि ङाप् कृतो बाहुल्यात् । उपक्रम इति कर्मणि घण् ।

## १४६. अशालार्था च ।

गोपीनां सभा समूहः गोपीसभम् ।

## १४७. संघातार्थे सर्वतः सभा इति व्यक्तम् ।

राज्ञां सभा राजसभं, श्रीसभम् ।

## १४८. सेना सुराच्छाया शाला निशा वा ।

---

अमृता०—१४६. अशालार्थेति । सभाशब्दस्य शालार्थ उक्तमेव पूर्वसूत्रे, इदानीं तदितरार्थे च विधीयते । अतएवाह—गोपीनां सभा समूहइति ।

अस्मिन्नर्थे पूर्वोक्तनियमा नेष्यन्त इत्याह—

अमृता०—१४७. संघातार्थे इति । संघातार्थे समूहार्थे सर्वस्मात् शब्दादुत्तरः सभा-शब्दो ब्रह्म भवति । तेन राजशब्दादुत्तरश्च सभा नपुंसकमित्युदाहृतम् । राजसभमत्र राजसमूह इत्यर्थः । पूर्वन्तु गृहार्थे हीश्वरादिवाचकान्नियम उक्त इत्येव विशेषः ।

अमृता०—१४८. सेनेति । सेनादि पञ्चान्तः कृष्णपुरुषो ब्रह्म स्यात् विभाषया ।

---

एतदेवाह कर्मसाधनाविति । इमौ उपज्ञोपक्रमौ श्रीभागवतोपज्ञं इति ब्रह्मत्वात् ब्रह्मान्त-त्रिविक्रमस्य वामन इत्यनेन वामनः । कृष्ण-तद्भक्तौ कृष्ण-कृष्णभक्तौ एतौ कृष्णतद्भक्तौ । आद्योपज्ञे धर्माधर्मौ । मनूपज्ञं लोकवृत्तमिति भाषावृत्तिः । एवं उपज्ञायत इत्युपज्ञा सर्वज्ञोपज्ञं वेद इति जुमरोक्तमुदाहरणं । सर्वज्ञेनादावुपज्ञायते इत्यर्थः । सा भक्तकृपा । आढ्योपक्रमं दानं ब्रह्मणोपक्रमं प्रतिग्रह इति भाषावृत्तिः । उपज्ञोपक्रमान्तश्च तदादित्व-प्रकाशने इति नपुंसकवर्गः । उपज्ञा ज्ञानमाद्यं स्यात् ज्ञात्वारम्भमुपक्रममित्यमरः ।।१४५।।

बाल०—छाया । छायावतां बाहुल्ये सति छायान्तकृष्णपुरुषो ब्रह्म भवति । बाहुल्यं प्राचुर्यं । नेहिति बाहुल्याभावादिति शेषः ।। १४६ ।।

बाल०—राज । व्यक्तार्थमेतत् । ईश्वरवाचकादिति राजवाचकादित्यर्थः । सभात्र शालेति । शाला सभेत्यमरः । ईश्वरसभमिति ईश्वरस्य सभेति विग्रहः । इनसभमिति इनशब्दो राजवाचकः । इनः सूर्ये प्रभाविति नानार्थवर्गः । नृपतिसभेतिच भवतीति जुमरमतं । तथाच कीचकवधे । नृपतिसभामगमन्न वेपमाना इति । नृपतिशब्दस्य गजपतिशब्दवत् राजविशेषवाचित्वमप्यस्तीति । नृपतिसभेतिच भवतीति भाषावृत्तिमतं । नेहेति राजशब्दस्य राजविशेषनाम्नश्च वर्जनादिति शेषः । राजसभेति राज्ञः सभेति सभेति विग्रहः । पिशाचसभत्ति । एवं भूतसभमित्यादिच ज्ञेयं । दासीसभं नृपसभं रक्षःसभमिमादिशः इत्यमरः । मनुष्यसभा देवसभेति मनुष्यशब्दस्य देवशब्दस्यच राजवाचकत्वं वक्षःपिशचादिवाचकत्वञ्च नास्तीति न ब्रह्मत्वं ।। १४७ ।।

कृष्णस्य सेना कृष्णसेनमित्यादि । पक्षे कृष्णसेनेत्यादि ।

॥ इति रामकृष्णनिर्णयस्तदादिलिङ्गनिर्णयश्च ॥

**१४९. अव्ययीभावः ।**

प्रभुरयम् ।

**१५०. तस्याव्ययत्वं ब्रह्मत्वञ्च ।**

**१५१. अव्ययं सप्तम्याद्यर्थेषु नित्यम् ।**

नामपदेन नित्यमव्ययं समस्यत इति ज्ञेयम् । हरिमधिकृत्य प्रवृत्तेति विग्रहे हरिमधीति स्थिते, सूत्रे तृतीयान्तेनेत्यादिषु प्रथमान्तस्य पूर्वनिपातात् अधिहरि कथा प्रवर्त्तते । आदिग्रहणात् समीपादिषु । तत्र समीपे—कृष्णस्य समीपमिति विग्रहे—

---

कृष्णसेनमिति—इत्यादिपदेन—यवसुरं यवसुरा, धातृच्छायं धातृच्छाया, गोशालं गोशाला, ब्रह्मनिशं ब्रह्मनिशेति । तदादिलिङ्ग निर्णयः—रामकृष्णादि लिङ्गनिर्णय इत्यर्थः ।

**अमृता०**—१४९. अव्ययीभाव इत्यधिकार सूत्रम् ।

**अमृता०**—१५०. तस्येति । तस्य अव्ययीभावस्य अव्ययत्वं ब्रह्मत्वञ्च परिभाष्यते ।

**अमृता०**—१५१. अव्ययमिति । वृत्तिमाचष्टे—नामपदेनेत्यादि । नित्यमव्ययं समस्यत इति—नित्यसमासानां स्वपदविग्रहविरहादिति भावः । तत एव हरिमधिकृत्य प्रवृत्तेति तदर्थेन पदान्तरेण विग्रहो दर्शितः । अत्र सप्तम्यर्थे वाक्यं, हरौ विषये इत्यर्थः । अधिहरीति—अव्ययत्वात् स्यादे र्महाहरः, तस्य ब्रह्मत्वात् कथाया विशेषणत्वेऽपि नईप् । आदिग्रहणफलं दर्शयति—समीपादिष्विति । कृष्णस्य समीपमिति विग्रह इति—अत्र चोप-शब्देनाव्ययेन नहि विग्रहः किन्तु तदर्थेन समीपशब्देन, अतः स्वपद विग्रहत्वाभावः समास नित्यता चेति बोध्यम् । एवमग्रेऽपि ज्ञेयम् ।

---

**बाल०**—अशा । एतदपि व्यक्तार्थं । अशालार्थेत्यस्य समूहार्थेति फलितार्थः । स्त्रीसभमिति स्त्रीणां सभेति विग्रहः ॥ १४८ ॥

**बाल०**—संघा । व्यक्तार्थम् ॥ १४९ ॥

**बाल०**—सेना । एतच्च व्यक्तार्थं । इत्यादीत्यादिपदेन यवसुरं धात्रीच्छायं गोशालं गोनिशमिति । आदिपदेन यवसुरा धात्रीच्छायेत्यादि । तदादिलिङ्गनिर्णयः रामकृष्णादि-लिङ्गनिर्णयः ॥ १५० ॥

**बाल०**—अव्य । अधिकारसूत्रमिदं । अनव्ययं अव्ययं भूयते इत्यव्ययीभावः ॥१५१॥

**१५२. अरामान्तादव्ययीभावान्न स्वादे र्महाहरः किन्त्वम्, स च पञ्चमीवर्जम् ।**

उपकृष्णम् । पञ्चम्यास्तु उपकृष्णात् ।

**१५३. तृतीया सप्तम्यो स्तु वा ।**

उपकृष्णेन उपकृष्णं, उपकृष्णे उपकृष्णम् । एवं समृद्धयाद्यर्थेषु । तत्र समृद्धौ—माथुराणां समृद्धि, सुमाथुरम् । अत्र तु सप्तम्या नित्यममभावः ।

**१५४. सम्प्रत्युपयोगाभावे ।**

अन्नस्य सम्प्रत्युपयोगाभावः अत्यन्नं, एकादश्याम् ।

---

**अमृता०**—१५२. विशेषमाचष्टे—अरामान्तादिति । अरामान्तादव्ययीभावादुत्तरस्य स्वादे र्महाहरो नस्यात् किन्तु स्वादेः स्थाने अम् इत्यादिश्यते, स चादेशः पञ्चमीं वर्जयित्वा षड्विभक्तिष्वेव भवति । पञ्चम्याः स्थाने त्वम् न भवति किन्तु यथाप्राप्तं ङस्यादय एव भवन्तीति भावः । उपकृष्णमिति—प्रथमाद्वितीययोरेकत्वे तु ब्रह्मकृष्णात् सोरमिति सिद्धमेव, अथ च द्वित्व बहुत्वयो स्तथा तृतीयादौ च सिध्यर्थं वचनमेतत् । तेन कृष्णस्य समीपाय स्पृहयतीत्यत्र उपकृष्णमित्यादावेव सम्यक् चरितार्थता सत्रस्येति विवेकः ।

**अमृता०**—१५३. तृतीयेति । अरामान्तादव्ययीभावादुत्तरयो स्तृतीयासप्तम्योः स्थाने तु अमादेशो वा भवति । समीपादिषु इत्यत्रादिपदेनान्यांश्च संगृह्णाति—एवं समृद्धयाद्यर्थेष्विति । माथुराणामिति—मथुरायां भवाः, मथुरा निवास एषामिति वार्थे तद्धित णः—माथुरा स्तेषां समृद्धि रुन्नतिराढ्यतेत्यर्थः । अत्रेति समृद्धयर्थे सप्तम्यानित्यमम् भावः—"सप्तम्या ऋद्धि नदी समास संख्याव्ययेभ्यो नित्यमम् वक्तव्यमिति वार्त्तिकवचनात् । एवञ्च उन्मत्तगङ्गं, लोहितगङ्गमित्यादौ च ज्ञेयम् ।

**अमृता०**—१५४. सम्प्रतीति । उपयोग उपभोगः, तस्य अभावः अत्यन्ताभाव इत्यर्थः । एवमतिनिद्रमित्यमित्यादि च ।

---

**बाल०**—तस्य । तस्य अव्ययीभावस्य अव्ययत्वं ब्रह्मत्वञ्च भवति ॥ १५२ ॥

**बाल०**—अव्ययं । वृत्तिमाह नामपदेनेति । सप्तम्याद्यर्थेष्विति सप्तम्याद्यर्थेषु गम्यमानेष्वित्यर्थः । नित्यसमासानां स्वपदविग्रहो नास्तीति । हरिमधिकृत्य प्रवृत्तेति पदान्तरेण विग्रहं दर्शितवान् । एवमन्यत्रच ज्ञेयं । अधिहरीति अव्ययीभावस्य अव्ययत्वात् स्वादेर्महाहरः इत्यनेन विष्णुभक्तिमहाहरः । तस्य ब्रह्मत्वाच्च अधिहरीत्यत्र कथाया विशेषणत्वेन प्राप्ते ईपः स्थाने वामनः । ब्रह्मान्तत्रिविक्रमेत्यनेनेति । एवं सर्वत्र ज्ञेयं । आदिग्रहणस्य फलमाह आदिग्रहणादिति । तत्र समीप इति उदाहरणं दर्शयत इति शेषः । गृहस्योपरि तिष्ठति उपरि शिरसश्च घट इत्यादौ सामीप्यस्याविवक्षितत्वात् अव्ययीभावाभावो द्विरुक्त्यभावश्च ज्ञेयः । उपर्यध्यधसां सामीप्य इति द्विरुक्तिसूत्रं ॥ १५३ ॥

**१५५. अतिक्रमे ।**

संसारस्यातिक्रमः अतिसंसारम् ।

**१५६. अभावे ।**

संसारस्याभावः निः संसारम् ।

**१५७. ऋद्धिविगमे ।**

अवैष्णवानामृद्धेर्विगमः दुरवैष्णवम् ।

**१५८. ख्यातौ ।**

हरे स्तन्नाम्नः ख्यातिः इतिहरि तद्धरि ।

---

**अमृता०**—१५५. अतिक्रम इति । अतिक्रमः अत्ययः ध्वंसाभावः । अतिसंसारं संसारस्य ध्वंस इत्यर्थः । एवं हिमस्यातिक्रमः अतिहिमम् ।

**अमृता०**—१५६. अभाव इति अत्यन्ताभाव इत्यर्थः । निःसंसारंवैष्णवानामिति शेषः । एवञ्च निर्मक्षिकमित्यादि ।

**अमृता०**—१५७. ऋद्धीति । ऋद्धिः समृद्धिः, तस्या विगमे गम्यमाने नामपदेन सह नित्यमव्ययं समस्यते । दुरवैष्णवमिति—अत्र च अवैष्णवानामृद्धेरभावो गम्यते । एवं दुर्भिक्षं दुर्यवनमित्यादि ।

**अमृता०**—१५८. ख्याताविति । ख्यातिः प्रसिद्धिः प्रकाशो वा । उद्धरीति—हरि नाम्नो लोके ख्यातिं गत इत्यर्थः । तद्धरीति त्वपपाठः । उद्‌विक्रमादित्यमिति—भाषावृत्तौ तथा उत्पाणिनीति सुपद्मे च दर्शनात् ।

---

**बाल०**—अरा । अरामान्तादव्ययीभावादुत्तरस्य स्वादेर्महाहरो न भवति । किन्तु तस्य स्थाने अम् भवति, सच अम् पञ्चमीवर्जं भवति, तस्मात् पञ्चम्या स्थाने अम् न भवतीत्यर्थः । अव्ययीभावस्याव्ययत्वात् अव्ययात् स्वादेर्महाहर इत्यनेन स्वादेर्महाहरः स्यादिति स्वादिमहाहरो निषिद्धः ॥ १५४ ॥

**बाल०**—तृती । व्यक्तार्थमेतत् । तस्मादरामान्तादव्ययीभावात् तृतीयाया सप्तम्याश्च स्थाने अम् वा भवतीत्यर्थः । एवं समृद्ध्याद्यर्थेष्विति । अव्ययीभावो ज्ञेय इति शेषः । तत्र समृद्धाविति उदाहरणं दर्श्यत इति शेषः । एवमग्रेऽपि ज्ञेयं । मथुराणामिति मथुरा-वासिनामित्यर्थः । अत्रेति सुमाथुरमित्यत्रेत्यर्थः । सप्तम्या नित्यसम्भाव इति बाहुल्यादिति शेषः ॥ १५५ ॥

**बाल०**—सम्प्रत्यु । उपयोगो भोगः । अतिक्रम इति अतिक्रमः प्रध्वंसाभावः । अत्यन्तमित्यत्र सम्प्रति भोगाभावो गम्यते ॥ १५६ ॥

**बाल०**—अति । अतिसंसारमित्यत्र प्रध्वंसाभावो गम्यते ॥ १५७ ॥

**१५९. पश्चाद् योग्ययोः ।**

कृष्णस्य पश्चाद् योग्यो वा अनुकृष्णं प्रद्युम्नः ॥

**१६०. वीप्सायाम् ।**

गोपीं गोपीं प्रति प्रतिगोपि ॥

**१६१. सादृश्ये ।**

सहस्य सभावो वाच्यः । हरेः सादृश्यं सहरि प्रद्युम्नो ॥

**१६२. सम्पत्तौ ।**

शर्मणः सम्पत्तिः सशर्मं वैष्णवानाम् ॥

**१६३. यौगपद्ये ।**

चक्रेण सहैक कालं सचक्रं शार्ङ्गं निधेहि ॥

---

**अमृता०**—१५९. पश्चादिति । पश्चादर्थे योग्यार्थे चाव्ययं नामपदेन नित्यं समस्यते । एवं सर्वत्रार्थः कल्पनीयः : अनुकृष्णमिति—कृष्णस्य पश्चात् प्रद्युम्नः, तथा रूपगुणादिभिः कृष्णस्य योग्यः प्रद्युम्न इत्यर्थः । एवं अनुरथं पदातिकाः, अनुरूपं शीलमित्यादि ।

**अमृता०**—१६०. वीप्सायामिति । युगपत् स्वजातीयानां व्याप्ति र्वीप्सा । प्रतिगोपि अनुरज्यते कृष्ण इतिशेषः । एवं प्रतिदिनं प्रतिगृहमित्यादि ।

**अमृता०**—१६१. सादृश्यइति । सभावो वाच्यइति वक्ष्यत इत्यर्थः । अव्ययीभावे चाकाले इत्यनेनेति शेषः ।

**अमृता०**—१६२. सम्पत्ताविति । शर्म सुखम् । सशर्मेति पूर्वोक्तसूत्रेण सहस्य सः ।

**अमृता०**—१६३. यौगपद्य इति । युगपदो भावो यौगपद्यम्, एककालता । सचक्रमिति पूर्ववत् सभावः ।

---

**बाल०**—अभा । निःसंसारमित्यत्रतु अत्यन्ताभावो गम्यते इति भेदः ॥ १५८ ॥

**बाल०**—ऋद्धि । ऋद्धिविगम इति ऋद्धेवृद्धेर्विगमोऽभावः । निःसंसारमित्यत्र संसारस्याभावो गम्यते । दुरवैष्णवमित्यत्रतु न अवैष्णवानां अभावो गम्यते, किन्तु तदीयाया ऋद्धेरिति महान् भेदः । एवं भिक्षाया ऋद्धेर्विगमः दुर्भिक्षमिति ज्ञेयं ॥ १५९ ॥

**बाल०**—ख्यातौ । तन्नाम्नो हरिनाम्नः । उद्धरीति क्वचित् पुस्तके दृश्यते तत्तु न सङ्गतं प्राचीनानामसम्मतत्वात्, किन्तु तद्धरीत्येव पाठः । तदित्यव्ययमिति पाणिनिः । तद्विक्रमादित्यमिति भाषावृत्त्युदाहरणे ॥ १६० ॥

**बाल०**—पश्चा । भाष्यवृत्त्यादौ योग्यतायामित्युक्तं । सहस्येति । वाच्य इति वक्ष्यते इत्यर्थः ॥ १६१ ॥

**बाल०**—सादृश्ये । सहरीति अव्ययीभावेच काल इति सहस्य सः ॥ १६२ ॥

**बाल०**—सम्पत्तौ । शर्मणः सुखस्य । सशर्मेति सहस्य सः ॥ १६३ ॥

**१६४. साकल्ये ।**

**सपत्रमत्ति विष्णु नैवेद्यम् ।**

**१६५. अन्तार्थे ।**

**सद्वादशस्कन्धमधीते ।**

**१६६. अनतिक्रमे ।**

**शक्तिमनतिक्रम्य यथाशक्ति । एवमन्येऽपि ।**

**१६७. अनुक्रमे ।**

**अनुज्येष्ठं प्रवेशय । ज्येष्ठं ज्येष्ठमनुक्रमेणोत्यर्थः ।**

**१६८. तथा यावदियत्तायाम् ।**

**समस्यते । यावत्पात्रं वैष्णवानामन्त्रयस्व ।**

---

**अमृता०**—१६४. साकल्यइति । सकलस्य भावः साकल्यम् । सपत्रमिति पत्रेण सहितं, पत्रमप्यपरित्यज्येत्यर्थः । पूर्ववत् सभावः ।

**अमृता०**—१६५. अन्तार्थ इति । सद्वादशस्कन्धमिति—द्वादशस्कन्धेन सह, द्वादश स्कन्धस्यान्त पर्यन्तमित्यर्थः । पूर्ववत् सभावः । एतावान् मया अध्येतव्य इति यावतो ग्रन्थ प्रदेशस्य परिग्रहसंकल्पः कृतः, तदपेक्षसमाप्तिरिह अन्तशब्देन विवक्षिता, साचासा-कल्येऽपि सम्भवतीति साकल्यात् पृथगुक्तिः । तेनसदशमसर्गं माघमधीत इत्यपि सिध्यति ।

**अमृता०**—१६६. अनतिक्रम इति । एवमन्येऽपीति—यथाज्ञानं यथामति यथातथ-मित्यादि च । अनतिक्रम इति किम्—यथा विष्णु स्तथा लक्ष्मीः ।

**अमृता०**—१६७. अनुक्रम इति । आनुपूर्व्यं इत्यर्थः । ज्येष्ठंज्येष्ठमिति—आनुपूर्वे चेति द्विरुक्तिः ।

**अमृता०**—१६८. तथेति । यावदित्ययं इयत्तायामर्थे नित्यं समस्यते । इयदेव इयत्ता, परिमाणनिश्चय इत्यर्थः । एवं यावदासनं भिक्षूनामन्त्रयस्व ।

---

**बाल०**—यौगपद्ये । शार्ङ्गं हरिधनुः ।। १६४ ।।

**बाल०**—साकल्ये । सपत्रमत्तीति पत्रेण सह साकल्यं पत्रस्थितस्य साकल्यं वेति पत्रमति न त्यजतीत्यर्थः ।। १६५ ।।

**बाल०**—अन्तार्थे । सद्वादशस्कन्धमिति द्वादशस्कन्धेन सहान्तं अन्तपर्यन्तमित्यथः । सतद्धितमधीत इति भाषावृत्तुदाहरणं सद्वादशस्कन्धमधीत इति साकल्येऽपि सिध्यतीति । अन्तार्थे सालोकमधीत इत्युदाहरणं ज्ञेयं । आलोकान्तमधीत इत्यर्थः । अत्राध्ययनस्य साकल्यं न गम्यते । यतोऽसाकल्येऽप्यध्ययने आलोकान्तेनाध्ययनसमाप्तिर्भवति ।। १६६ ।।

**बाल०**—अनतिक्रमे । एवमिति यथाशब्दस्य अनतिक्रमे यथाशक्तीत्युदाहृतं अर्थान्तरेतु अन्येऽपि प्रयोगा ज्ञेया इत्यर्थः । ते यथा । ये ये वृद्धा यथावृद्धं, ये ये तथाभूता यथातथमित्यादयः ।। १६७ ।।

## १६९. स्वाद्यन्तं प्रतिना लेशार्थे ।

न सुखप्रति संसारे । नदुःखप्रतिविष्णुभक्तौ । तत्र तत्र तत्तल्लेशोऽपि नास्तीत्यर्थः ।

## १७०. अक्षशलाका संख्याः परिणा द्यूत व्यवहारे ।

अक्षपरि शलाकापरि । एकेनाक्षेण शलाकया वा उत्तानमवाग् वा पतितेन न तथा जयो वृत्तो यथा सर्वोत्तानादिपातेनेत्यर्थः । एवमेकपरि द्विपरि ।

॥ इत्यव्ययीभावेषु नित्यसमासाः ॥

---

**अमृता०**—१६९. स्वाद्यन्तमिति । लेशार्थे अत्यल्पार्थे वर्त्तमानेन प्रतिना सह स्वाद्यन्तं नित्यं समस्यते । अत्राव्ययन्तूत्तरपदम् । लेशार्थ इति किम्—कृष्णं प्रति स्निह्यति गोपी ।

**अमृता०**—१७०. अक्षेति । द्यूतव्यवहारे गम्यमाने अक्षशलाकासंख्या शब्दाः परिणा सह नित्यं समस्यन्ते । अक्षेण विपरीतं वृत्तमित्यर्थे अक्षपरि । विशदर्थमाह—एकेनेत्यादिना । लिङ्गपरिणामेण—एकया शलाकयावेत्यर्थः । एवं पतितेनेत्यत्र पतितया वेति योज्यम् । यथा सर्वोत्तानादि पातेनेति—अत्रायं भावः—पञ्चका नाम द्यूत क्रीडा पञ्चभिरक्षैः शलाकाभि र्वा भवति, तत्र यदा पञ्चैव युगपदुत्तानं अवाक् वा पतन्ति तदा पातयितु र्यदा जयः स्यात्, तदन्यथा पाते सति तथा जयो न भवतीति । एवमेकादिसंख्या-शब्दैश्च अक्षःशलाका वाभिधीयते । तत एकपरि द्विपरि इत्यनयोरपि स एवार्थः ।

---

**बाल०**—अनुक्रमे । अनुज्येष्ठमिति-अनुनैवानुक्रमस्य द्योतितत्वात् आनुपूर्वे चेत्यनेन द्विरुक्तिरिति ज्ञेयं । वीप्सायामपि अव्ययीभावो भवतीति ज्ञेयं । वीप्सायां—प्रतिदिनं ददातीति भाषावृत्तेः । वीप्सायामिति जुमरसूत्राच्च ॥ १६८ ॥

**बाल०**—तथा । सूत्रान्तराणि वक्तुमारभते तथेति । वृत्तिमाह समस्यते इति । यावदित्यव्ययं । इयत्ता इयदेवेति निश्चयः तस्यां गम्यमानायामित्यर्थः । यावत्पात्रमिति । पात्रशब्दोऽत्र योग्यवाची भाजनवाची वा । योग्यभाजनयोः पात्रमिति नानार्थवर्गः । इयत्तायामिति किं । यावद्दत्तं तावद्भुक्तं । अत्र यावदिति पृथक् पदं ॥ १६९ ॥

**बाल०**—स्वाद्य । लेशार्थे वर्त्तमानेन प्रतिना सह स्वाद्यन्तं समस्यते । तत्र तत्रेति संसारे सुखलेशोऽपि नास्ति, विष्णुभक्तौ दुःखलेशोऽपि नास्ति इति । लेशार्थ इति किं । कृष्णं प्रति पतति पुष्पवृष्टिः । अत्र लक्षणे प्रतिशब्दो वर्त्तते । कृष्णप्रवचनीयैर्योगे द्वितीया इत्यनेन द्वितीया ॥ १७० ॥

अथ विभाषिताः।

## १७१. अनु र्यस्य समीपमाह यस्य च दैर्घ्यं तेन ।

अनु वृन्दावनं यमुना, तत् समीपेत्यर्थः। अनुयमुनं वृन्दावनम् तद्वद् दीर्घमित्यर्थः। पक्षे वृन्दावनमनु यमुनेत्यादि। लक्षणाद्यन्तर्भावादनयो द्वितीयैव।

## १७२. अभिप्रती लक्षणेनाभिमुख्ये ।

---

**अमृता०**—१७१. अनुरिति। अनुरित्यव्ययं यस्य समीपं दैर्घ्यं वा आह द्योतयति तेन सह विभाषया समस्यते। तत् समीपा वृन्दावनसमीपा। समीपशब्दइहधर्मिवचनः, वृन्दावन समीपस्था इत्यर्थः। अनुयमुनमिति—ब्रह्मान्तत्रिविक्रमस्येति वामनः। एवमनु-ग्रामंपुलिन्दा वसन्ति, ग्रामस्य निकटमित्यर्थः। अनुगङ्गं वाराणसी, गङ्गावद् दीर्घेत्यर्थः। पक्षे इति विग्रहपक्ष इत्यर्थः। ननु "वृन्दावनस्य अनु" इत्येवं वाक्यं प्रयुज्यताम्, कथमत्र द्वितीयेति चेत्तत्राचष्टे—लक्षणाद्यन्तर्भावादिति। अनयोः सामीप्य-दैर्घ्यार्थयो र्लक्षणान्त-र्भावात् तद् द्योतकेनानुशब्दयोगेन द्वितीयैव, कृष्णप्रवचनीयैर्योगे द्वितीयेति लक्षणात्। तस्मारेवं व्याख्येयम्—वृन्दावनसमीपं लक्षीकृत्य यमुना प्रवहति, यमुना दैर्घ्य सदृश दैर्घ्योपलक्षितं वृन्दावनंविराजत इति।

**अमृता०**—१७२. अभीति। आभिमुख्ये द्योत्ये अभिप्रती लक्षणेन चिह्नेन सह विभाषया समस्येते। अभिहरीति—अत्र लक्षणं हरिः, तंलक्षीकृत्य यानमिति तल्लक्ष्यम्, तयो र्लक्ष्य लक्षणयोः सम्बन्धः अभिशब्देन द्योत्यते, अतः पूर्ववद् वाक्ये कृष्णप्रवचनीयै र्योगे द्वितीया—हरिमभिवैष्णवो यातीति एवं अग्निमभि अभ्यग्नि पतन्ति शलभा इति।

---

**बाल०**—अक्ष। द्युतव्यवहारे गम्यमाने अक्ष-शलाका-संख्याः परिणा सह समस्यन्ते। अक्षपरीत्यस्य शलाकापरीत्यस्यच अर्थमाह एकेनेति। एकया शलाकया वेत्यर्थः। पतितेनेति प्रथमोक्तस्य अक्षेणेत्यस्य विशेषणं, शलाकयेत्यस्यतु पतितयेति विशेषणं ज्ञेयं। सर्वोत्तानादिपातेनेति। अयम्भावः। पञ्चका नाम द्युतं पञ्चभिरक्षैः शलाकाभिर्वा भवति, तत्र यदा पञ्च उत्तानाः पतन्ति अवाञ्चो वा तदा पातयितुर्यथा जयो भवति, तथा अन्यथा पाते न भवतीति। अक्षशलाकयोरेकत्वे वर्त्तमानयोरेवायं समासो भवतीति ज्ञेयं। एवमिति। एवं त्रिपरि चतुष्परीति ज्ञेयं। एकपरीत्यादावपि एकादिशब्दैरक्ष एवाभिधीयते इति ज्ञेयं। अक्षशलाकैकद्वित्रिचतुरां परिणा कितवपराजय इति जुमरसूत्रं॥ १७१॥

हरिमाभिमुख्येन अभिहरि वैष्णवो याति । लक्षणेनेति किम्—भ्रान्त्या हरिमभियाति चेत्तदा न स्यात् ।

**१७३. अपपरिबहिरञ्चन्ताः पञ्चम्या, आङ् च मर्यादाभिविध्योः ।**

**अपमाथुरं, परिव्रजं, तांस्तं वर्जयित्वेत्यर्थः । बहिर्गोष्ठं, प्राग् वृन्दावनम् । तथा आवैकुण्ठं संसारः, आवैकुण्ठं व्यासकीर्त्तिः । पक्षे अपमाथुरेभ्यः ।**

---

एवं प्रति वंशीध्वनि सम्मिलन्ति गावः, वंशीध्वनिं प्रति वा । भ्रान्त्येति चित्तभ्रान्त्या, अत्र मनो वैकल्यात् नतु हरि र्लक्षणम्, ततश्च हरिमिति कर्मणि द्वितीया । एवञ्च दिङ्मोहेन ( वृन्दावन भ्रान्त्या ) मथुरामभिगच्छतीत्यादि ।

**अमृता०**—१७३. अपेति । अञ्च् अन्ते यस्य सः अञ्चन्तः, अञ्चुधातो क्विवन्तस्य ग्रहणम् । अपप्रभृतयः पञ्चम्या सह वा समस्यन्ते, आङ् च मर्यादाभिविध्यो रर्थयोः पञ्चम्या सह वा समस्यते । तांस्तमिति—तान् माथुरान् तं व्रजं वर्जयित्वा । वर्जनार्थस्तु पञ्चम्या हि लभ्यते, अप परियुक्तात् पञ्चमी वर्जन इति लक्षणात् । पक्ष इति समासाभावे, विग्रह पक्षे । वहिर्गोष्ठमिति—गोष्ठाद् वहिरित्यर्थः । दूरान्तिकार्थवहि र्योगे षष्ठी पञ्चमी चेति पञ्चमी । सूत्रे पञ्चम्येति निर्देशात् षष्ठी योगे तु न समासः, करस्य करभो वहिरित्यमरः । वृन्दावनात् प्राक् अत्र अन्यार्थादिभि र्योग इति पञ्चमी । आवैकुण्ठात् ससार इति—आङ् युक्तात् पञ्चमी मर्यादाभिविध्योरिति पञ्चमी । इह पञ्चम्या इत्यनेनैव मर्यादाद्यर्थे लब्धेऽपि पुनरर्थयोरुक्तिः सुखबोधाय, कारकसूत्रे तत्तदर्थेहि पञ्चम्या विधानात् ।

---

**बाल०**—अनु । अनुर्यस्य समीपमाह यस्य दैर्घ्यमाह तेन सह समस्यते अनुरिति शेषः । तत्समीपा वृन्दावनसमीपा । समीपशब्दोऽत्र धर्मिवचनः । यथा ग्रामस्य समीपो वृक्ष इति । अनुयमुनमिति अव्ययीभावस्य ब्रह्मत्वात् ब्रह्मान्तत्रिविक्रमस्य वामन इत्यनेन वामनः । अनुवनं चौराः तत्समीपा इत्यर्थः । अनुगङ्गं वाराणसी गङ्गावदायातेति भाषावृत्तिः । अथ विभाषिता इत्युक्तमत आह पक्ष इति । इत्यादीत्यादिपदेन यमुनामनु वृन्दावनमिति । लक्षणाद्यन्तर्भावादिति समीपदैर्घ्ययोरिति शेषः । अनयो वृन्दावन-यमुनयोः । यद्वा, अनयोः समीपदैर्घ्ययोर्लक्षणाद्यन्तर्भावादिति हेतोस्ताभ्यां योगे अनयो-र्द्वितीयैवेति कृष्णप्रवचनीयैर्योगे द्वितीयेत्यनेनेति शेषः । द्वितीयैव भवति नतु समास इत्येवशब्दाभिप्रायः ॥ १७२ ॥

**बाल०**—अभि । आभिमुख्ये वर्त्तमानौ अभिप्रती लक्षणेन सह समस्येते । अभिहरीति । अत्र हरिर्लक्षणं तेन वैष्णवस्य यानं लक्ष्यते तयोर्लक्ष्यलक्षणसम्बन्धोऽभिना द्योत्यते कृष्णप्रवचनीयैर्योगे द्वितीयेत्यनेन द्वितीया । एष अभिशब्दः शब्दशक्तिस्वभावाद्यथा लक्ष्यलक्षणसम्बन्धं द्योतयति तथा आभिमुख्यमपि अतएव हरिमाभिमुख्येनेत्युक्तं । एवं प्रतिहरीति । पक्षे अभिहरि प्रतिहरि वैष्णवो यातीति । भ्रान्त्येति । अत्र हरेर्लक्षणत्वं नास्ति, अतो हरिमिति कर्मणि द्वितीयेत्यनेन द्वितीया । अभिमुख्यं पुनर्विद्यत एव तदा न

## १७४. पारे मध्ये इत्येतौ षष्ठ्या ।

यमुनायाः पारे पारेयमुनम् । एवं मध्येयमुनम् । सप्तम्यलुग् निर्देशात् । एवमग्रेवणं, अन्तर्वणमित्यपि । णत्वं तु वाच्यम् ।

॥ इति पूर्वपदप्रधानाव्ययीभावाः ।

## १७५. संख्या विद्यायोनि सम्बन्धिना समाहारे ।

द्वौ मुनी द्विमुनि व्याकरणस्य । एकविंशतिभारद्वाजं तद्वंशस्य । अभेदविवक्षायां द्विमुनि व्याकरणमित्यपि स्यात् ।

---

अमृता०—१७४. पारे इति । एतौ षष्ठ्या सह समस्येते । पारेयमुनमिति ब्रह्माण्ड त्रिविक्रमस्येति वामनः । एवं मध्येयमुनमिति यमुनाया मध्ये इति विग्रहः । अत्र विष्णु-भक्तैर्महाहरस्तु न भवतीत्याह—सप्तम्यलुगिति । तत्र हेतुः—निर्देशादिति । सूत्रे सप्तम्यन्त-त्वेन निर्देशादित्यर्थः । अत्रपाणिनीया विभाषाया अनुवर्त्तमानेऽपि पुन र्वापाठात् पक्षे षष्ठी समासञ्चेच्छन्ति । श्मशानपारं गङ्गा मध्यमिति भाषावृत्त्यादौ । अग्रवणमिति—वनस्याग्रे इति विग्रहे बाहुल्यादव्ययीभावः । राजादीनां दन्तादिभ्य इति सप्तम्यन्तस्य पूर्वनिपातः । अग्रे प्रभृतिभ्य एव वनस्य संज्ञायामिति णत्वं वक्ष्यते । अत्रापि निर्देशबलात् सप्तम्या अलुक् । एवंवनस्य अन्तः अन्तर्वणमिति च । णत्वन्तु वाच्यमिति—प्रणिरन्तः शरेत्यादिना वक्ष्यत इत्यर्थः ।

अमृता०—१७५. संख्येति । समाहारे गम्ये विद्या सम्बन्धिना योनि सम्बन्धिना च शब्देन सह संख्या समस्यते । त्रिराम्या अपवाद एषः । द्विमुनीति—समहृताविति गम्यते । द्विमुनि पाणिनि—कात्यायनावित्यर्थः । इह विद्यासम्बन्धिना मुनिशब्देन संख्यायाः समासः । एकविंशति भारद्वाजमिति—एकविंशति भारद्वाजा इति विग्रहः । तद्वंशस्ये-त्यनेन योनिसम्बन्धोऽवगम्यते । द्विमुनि व्याकरणमिति—अत्रविद्याविद्यावतोरभेदविवक्षया सामान्याधिकरण्यम्, द्वौमुनी समाहृतावत्र इति निर्गलितार्थः । द्विमुनि व्याकरणं, त्रिमुनि आश्रम इत्यादौ त्वन्यपदार्थप्रधानत्वाद् बहुव्रीहिरिति केचित् ।

---

स्यादिति समास इति शेषः । लक्षणेन किं दिङ्मोहात् श्रुघ्नं प्रति गत इति भाषावृत्तिः । श्रुघ्नान्मथुरां चलितो दिङ्मोहात् श्रुघ्नमेव प्रतिगत इत्यर्थः । आभिमुख्य इति किं यमुनामभिवसति । अत्राभिमा लक्ष्यलक्षणसम्बन्धो द्योत्यते नत्वाभिमुखं ॥ १७३ ॥

बाल०—अप । व्यक्तार्थमेतत् । पञ्चम्येति पञ्चम्यन्तेन सहेत्यर्थः । अपमाथुरं परिव्रजं इति । अपपरियुक्तात् पञ्चमी वर्जन इत्यनेन पञ्चमी । तान् माथुरान्, तं व्रजं । वहिर्गोष्ठमिति दूरान्तिकार्थवहिर्योगे षष्ठी पञ्चमीचेत्यनेन पञ्चमी । प्राग्वृन्दावनमिति अन्यार्थादिभिर्योगे पञ्चमीत्यनेन पञ्चमी । आवैकुण्ठमिति आङ्युक्तात् पञ्चमी मर्यादाभि-विध्योरित्यनेन पञ्चमी । अप माथुरेभ्य इति । एवं परि व्रजात् वहिर्गोष्ठादित्यादि ॥१७४॥

## १७६. नदीभिश्च समाहारे ।

अस्य कृष्णपुरुषत्वञ्च वाच्यम्, ततोऽद् वक्ष्यते । सप्तगोदावरं द्वियमुनम् ।

॥ इति समाहारप्रधानाव्ययीभावाः ॥

## १७७. तिष्ठद्गुप्रभृतीनि कालविशेषादौ ।

**अमृता०**—१७६. नदीभिश्चेति । समाहारे गम्ये नदीभिश्च सह संख्या समस्यते—कृष्णपुरुषत्वञ्च वाच्यमिति—संख्यापूर्वमसौ त्रिरामीत्युक्तविधिवलात् त्रिरामो च भवति । अद् वक्ष्यत इति—संख्यातो नदीगोदावरीभ्यामिति समानसामान्ये अद्विधानात् त्रिरामीत्वमव्ययीभावत्वञ्चास्य नविरोध इति भावः । सप्तगोदावरमिति—सप्तानां गोदावरीणां समाहार इति विग्रहः । एवं द्वियामुनं पञ्चनदमित्यादि च ।

**अमृता०**—१७७. तिष्ठदगु इति । एतानि कालविशेषादौ अव्ययीभावे निपात्यन्ते । अत्र अन्य पदार्थवाचित्वेऽपि निपातबलादेवाव्ययीभावः । तिष्ठद्गु इति—ब्रह्मान्त त्रिवि-

**बाल०**—पारे । पारे मध्ये इतेतौ षष्ठ्यन्तेन सह समस्येते । अथ विभाषिता इत्युक्तं । अतो यमुनायाः पारे इति विग्रहं दर्शितवान् । पारेयमुतमिति ब्रह्मान्तत्रिविक्रमस्य वामन इत्यनेन वामनः । मध्येयमुनमिति यमुनाया मध्ये इति विग्रहे । ननु विष्णुभक्तिमहाहरः, कथं न भवतीति चेत्तत्राह सप्तम्यलुगिति हेतुमाह निर्देशादिति सप्तम्यन्तनिर्देशादित्यर्थः । पारे मध्ये षष्ठ्या वेतितु भाषावृत्तिसूत्रं जुमरसूत्रञ्च, पारेश्मशानं मध्येगङ्गं । पक्षे षष्ठीतत्पुरुषः श्मशानपारं गङ्गामध्यमिति भाषावृत्त्युदाहरणानि । पारं गङ्गायाः पारेगङ्गं अव्ययीभावे निपात् एत्वं । पुनर्वा वचनात् षष्ठीसमासः गङ्गापारं । एवं मध्यं गङ्गायाः मध्येगङ्गं गङ्गामध्यमिति जुमरोदाहरणानि । एवमग्रेवणमन्तर्वणमित्यपीति बाहुल्यादिति शेषः । वनस्य अग्रे अग्रेवणं बाहुल्यादत्राव्ययीभावः । राजादीनां दन्तादिभ्यः इत्यनेन सप्तम्यन्तस्य पूर्वनिपातः । अग्रेप्रभृतिभ्य एव वनस्य संज्ञायामित्यनेन णत्वं । अत्रापि अग्रेप्रभृतिभ्य इति निर्देशात् सप्तम्यलुक् । वनस्य अन्तः अन्तर्वणं । अत्रापि बाहुल्यात् अव्ययीभाव एव राजादीनामित्यादिना पूर्वनिपातः । प्रनिरन्तः—शरकाशाम्रखदिरेक्षुप्लक्षपीयूक्षाभ्यो वनस्यासंज्ञायाञ्चेत्यनेन णत्वं । णत्वन्त्विति वाच्यमिति वक्ष्यत इत्यर्थः ॥ १७५ ॥

**बाल०**—संख्या । समाहारे गम्यमाने विद्यासम्बन्धिना योनिसम्बन्धिनाच सह संख्या समस्यते । द्वौ मुनीति विग्रहः, इत्यत्र समाहृताविति गम्यते । एवमुत्तरत्रापि ज्ञेयं । मुनी पाणिनिकात्यायनौ । द्विमुनीति । अत्र विद्यासम्बन्धिना सख्यायाः समासः । व्याकरणस्येति सम्बन्धषष्ठी । एकविंशतिभारद्वाजमिति । एकविंशतिर्भारद्वाजा इति विग्रहः । भारद्वाजशब्दो गोत्रप्रत्ययान्तः पौत्रप्रभृत्यपत्यं गोत्र । तद्वंशस्येति सचासौ वंशश्चेति विग्रहः । द्विमुनिव्याकरणमिति । अत्र विद्याविद्यावतोरभेदविवक्षया समानाधिकरण्यं, द्वौ मुनी समाहृतावत्रेति निर्गलितार्थः । जयादित्यस्यापि एतदेव मतं । द्विमुनि व्याकरणं त्रिमुनिरागम इत्यादौतु अन्यपदार्थप्रधानत्वाद्बहुव्रीहिरितितु जुमरः ॥ १७६ ॥

अव्ययीभावे निपात्यन्ते। तिष्ठन्ति गावो यस्मिन् काले स तिष्ठद्गु। आयन्ति गावो यस्मिन् आयतीगवम्। तथा खलेयवं, संस्कृतयवं, संह्रियमाणयवं, खलेबुषमित्यादि। तथा शोभना समास्स्वत्सरोऽस्मिन् सुषमम्। एवं विनिर्दुरायतीपापपुण्यान्युदाहार्याणि। विषममित्यादि। तथा समा भूमिरत्र काले क्रियायां वा समंभूमि, एवं समंपदाति। प्रक्रान्तमहोऽत्र प्राह्णम्। प्रगतारथा अत्र प्ररथम्, एवं प्रमृगम्। प्रकृता दक्षिणा अत्र प्रदक्षिणं कालः क्रिया वा। तिष्ठद्ग्वादीनां नान्यः समासः —परमं तिष्ठद्गु। अव्ययीभावस्तु स्यादेव,—आतिष्ठद्गु जपन् सन्ध्यामिति भट्टिः। ४।१४।

॥ इत्यन्यपदार्थप्रधाना अव्ययीभावाः समाप्ताः॥

---

क्रमस्य वामन इत्योरामस्य उरामः। वहद्ग्विति—वहन्ति गावो यस्मिन् काले इति विग्रहः। आयन्तीति—आङ् पूर्व इण्गतौ, शत्रादेशः, पुंवद्भाव विरहः, समासान्तप्रत्ययश्चेह निपातादेव। खले यवो यस्मिन् काले स खलेयवम्। एवं खलेबुषमिति च : इत्यादि पदेन—लूनयवं पूयवं पूयमानयवं सहृतयवमित्येते च ज्ञेयाः। एवमिति—विषमं,निःषमं, दुःसमं, आयतीसमं, पापसमं, पुण्यसममिति। समं पदातीति—समाः पदातयो यत्र काले क्रियायां वेति विग्रहः। प्रमृगमिति प्रगता मृगा यत्र काले इति विग्रहः। नान्यः समास इति—बाहुल्यादिति भावः। परमं तिष्ठद्गु इत्यत्र श्यामरामः प्राप्तः, सतु न स्यादित्यर्थः। "अन्यः समासो न" इत्यनेनाव्ययीभाव स्तु भवत्येव, तत् पोषकत्वेन शिष्टप्रयोगं दर्शयति—आतिष्ठद्ग्विति। आङ् च मर्यादाभिविध्योरित्यनेन आङा सह पुनरव्ययीभावः।

॥ इति व्याख्याताः समासाः॥

---

**बाल०**—नदी। समाहारे वाच्ये नदीभिश्च सह संख्या समस्यते। अस्य कृष्णपुरुषत्वञ्च वाच्यमिति तत इतिच अप्रयोजकमेवेति ज्ञेयं। यतः संख्यातो नदीगोदावरीभ्यामिति सूत्रं सर्वत्र समासे प्रवर्त्तते। अज् बक्ष्यते इति। अत्रच अरामो वक्ष्यते इत्येव पाठो ज्ञेयः। अरामो वक्ष्यते इत्येव पाठो ज्ञेयः। अरामप्रकरण एव सूत्रस्य वक्ष्यमाणत्वात्। सप्तगोदावरमिति सप्तानां गोदावरीणां समाहार इति विग्रहः। अरामे समासान्ते कृते इरामहरः। एवं द्वियमुनमिति भाषावृत्तौ अव्ययीभावप्रकरणे अन्यपदार्थेच संज्ञायामिति सूत्रं उन्मत्तगङ्गं नामदेश इति तदुदाहरणमपि दृश्यते। जुमरेच, नित्यं नदीभिरन्यपदार्थे संज्ञायामिति सूत्रं। उन्मत्तगङ्गं लोहितगङ्गमित्यादीन्युदाहरणानिच दृश्यन्ते। अथापि गोस्वामिचरणैः सूत्रमेतत् कथं नोक्तमिति नावकलितं। किम्वा केनचिदेतद्वृत्तं गोस्वामिपादेनतु न दत्तमित्यनुमीयते। तिष्ठद्गुप्रभृतीनि कालविशेषादावित्यनेनैव उन्मत्तगङ्गमित्यादिकं सेत्स्यति इति न वाच्य तथा सति, तिष्ठद्ग्वादीनामन्यसमासाभावात्। परमोन्मत्तगङ्गमित्यादिकं न स्यात्॥ १७७॥

**१७८. समास साङ्कर्ये तु ।**

**कमले इव लोचने यस्य स कमललोचनः, कमललोचनश्चासौ कृष्णश्च कमललोचनकृष्ण इति पीताम्बरगर्भ श्यामरामः । शारदश्च तत् सरसिजञ्चेति शारदसरसिजं, शारदसरसिजे इव नयने यस्य स शारद-सरसिजनयन इति श्यामरामगर्भपीताम्बरः ।**

**।। इति समासविशेषाः ।।**

---

**अमृता०—१७८.** समासेति । सङ्करस्य मिश्रणस्य भावः साङ्कर्यम् । समासानां साङ्कर्ये तु उदाह्रियत इति शेषः । अत्र आद्योदाहरणे प्रथमं पीताम्बर स्ततः श्यामराम इत्यत आह—पीताम्बरगर्भश्यामराम इति । वैपरीत्यनेन च दर्शयति—शारदञ्चेति । अत्र प्रथमं श्यामराम स्ततः पीताम्बरः, तेन श्यामरामगर्भ पीताम्बर एषः । एवं श्रीभागवते निगमकल्पतरुफलमिति श्यामरामगर्भ कृष्णपुरुषः । निगम एव कल्पतरुरिति रूपकश्यामरामः, तस्य फलमिति ।

---

**बाल०—**तिष्ठ । वृतिमाह अव्ययीभावेनेति । कालेति कालविशेषादौ वाच्य इत्यर्थः । काल इति कालविशेषे इत्यर्थः, स कालविशेषः । एवमिति वहन्ति गावो यस्मिन् काले स वहद्गु । आयान्तीत्येव पाठः । यस्मिन्निति यस्मिन् काले इत्यर्थः । आयती-गवमिति आयन्ति गावोऽस्मिन्निति इन गतावित्यस्मात् शतृरितितु जुमरटीकाकारः । उदाहरणान्तरमाह तथेति । खले यवा यस्मिन काले स खलेयव । एवं संहृतयवमिति । संह्रियमाणा यवा यस्मिन् काले स संह्रियमाणयवं खले वुषा यस्मिन् काले स खलेवुषं । इत्यादीत्यादिपदेन लूयमानयवं पूयमानयवमित्यादि ज्ञेयं । उदाहरणान्तरमप्याह तथेति । शोभनत्वं समस्य सुषममितितु जुमरः । विषममिति विरुद्धाः समाः सम्वत्सरोऽस्मिन्निति विग्रहः । इत्यादीत्यादिपदेन निःषमं दुःषमं आयतीसमः पापसमं पुण्यसममिति । आयती-सममिति आयती समा यस्मिन्निति विग्रहः । अपरमप्युदाहरणमाहः तथेति । समा समाना । समत्वं भूमेः सभूमिसमं भूमि इतितु जुमरः । समंपदातौति समाः पदातयो यत्र काले क्रियायां वेति विग्रहः । प्राह्णमिति प्रगतत्वमह्न प्राह्णमितितु जुमरः । प्रमृगमिति प्रगता मृगा यत्रेति विग्रहः । तिष्ठद्ग्वादीनां नान्यसमास इति बाहुल्यादिति शेषः । परममिति, अत्र श्यामरामाभावः । अव्ययीभावस्तु स्यादेवेति नान्यसमास इत्युक्तत्वादिति शेषः । शिष्टप्रयोगं दर्शयति, आतिष्ठदिग्वति । अत्र अपपरिवहिरञ्चन्ताः । पञ्चम्याः आङ्तु मर्यादाभिविध्योरित्यनेन पुनरव्ययीभावः इति अव्ययीभावसमासोऽपि न भवतीति केचिद्वदन्ति तन्मते आतिष्ठदिग्वति असमस्तमेव अव्ययात् स्वादेमहाहर इति पञ्चम्या महाहरः, किन्तु आखलेयवमित्यादावपि पुनरव्ययीभावार्थं अव्ययीभावस्तु स्यादेवेत्युक्त-मिति ज्ञेयं ।। १७८ ।।

**१७९. केवल समासाश्च दृश्यन्ते ।**

भूतः पूर्वं भूतपूर्वः, विष्पष्ट पटुः, तत्प्रथमः, पुनर्नवः, अध्वगन्तव्य इत्यादयो भाषावृत्तौ ।

**१८०. अथ समासकार्यविशेषाः ।**

वासुदेवोऽयम् ।

**१८१. तत्र पूर्वनिपातः ।**

विभुरयम् ।

**१८२. राजादीनां दन्तादिभ्यः ।**

---

**अमृता०**—१७९. केवलेति । भूतः पूर्वमित्यर्थकथनं नतु विग्रहः । एषां विग्रहाभाव स्तथा कथितसमासेषु अन्तर्भावश्च नास्तीति केवल समासा इत्याख्या निर्दिष्टा ।

**अमृता०**—१८०. अथेति । वासुदेवनामा बृहदधिकारः । परत्र च विभुनामाधिकारः ।

**अमृता०**—१८२. राजेति । दन्तादिभ्य उत्तरेषां राजादिशब्दानां पूर्वनिपातः स्यात् । दन्तानां राजेति विग्रहे 'षष्ठी परपदेनेति षष्ठी कृष्णपुरुषः । सूत्रे प्रथमान्तस्य पूर्वनिपातनियमेन षष्ठ्यन्तस्य दन्तादेरेव पूर्वनिपातेप्राप्ते तदपवादार्थं विधानमेतत् । राजविद्येति विद्यानां राजेति विग्रहः । अत्र राजन् शब्दस्य प्रधानत्वेऽपि उत्तरपद वल्लिङ्ग रामकृष्णेति विधिबलादुत्तरपदवत् स्त्रीलिङ्गता । ततएव गोरीप आप इति न वामनः । राजगुह्यमिति गुह्यानां राजेति विग्रहः । इहापि पूर्वरीत्या ब्रह्मत्वम् । एवमग्रे च बोध्यम् । अन्तर्वणमिति—वनस्य अन्तरिति विग्रहः, प्रणिरन्तरिति वनस्य संज्ञायां णत्वं वक्ष्यते ।

---

**बाल०**—समा । क्रमेण समासानामुदाहरणानि दर्शयित्वासमाससाङ्कर्योदाहरणमपि दर्शयति समासेति । समाससाङ्कर्येतु समासा दर्श्यन्ते । कमललोचनः कृष्ण इत्यन्वयः । समाससाङ्कर्ष्यं विग्रहेण स्पष्टयति कमले इवेति । नन्वयं कीदृक् श्यामराम इति चेत्तत्राह पीताम्बरगर्भश्यामराम इति । समाससाङ्कर्ये अपरमप्युदाहरणं दर्शयितुं प्रथमतो विग्रहं दर्शयति शारदञ्चेति उदाहरणमाह शारदसरसिजनयन इति । नन्वयं दीदृक् पीताम्बर इति चेत्तत्राह श्यामरामगर्भपीताम्बरः इति । एवमन्यानिच समाससाङ्कर्योदाहरणानि ज्ञेयानि ॥ १७९ ॥

**बाल०**—केव । केचलसमासाश्च दृश्यन्त इत्युक्त्वा भाषावृत्तौ दृष्टान् केवलसमासप्रयोगान् दर्शयति भूतः पूर्व इति । भूतः पूर्वं इत्यर्थकथनमेव नतु विग्रहः इति ज्ञेयं । भूतपूर्वादीनां विग्रहो नास्ति अतः केवलेत्युक्तं । भूतपूर्वादयः पूर्वोक्तविधिभिर्न सिध्यन्ति अतः दृश्यन्त इत्युक्तं ॥ १८० ॥

**बाल०**—अथ । अधिकारसूत्रमेतत् ॥ १८१ ॥

पूर्वनिपातः स्यात्। दन्तानां राजा राजदन्तः। राजविद्या, राजगुह्यम्। अन्तर्वणं, अधोभुवनं, सपत्नीमाता, ऋणे अधमः अधमर्णः, एवमुत्तमर्ण इत्यादि।

**१८३. रामकृष्णे।**

प्रभुरयम्।

**१८४. हरिसंज्ञस्य, सर्वेश्वराद्यरामान्तस्य, अल्पसर्वेश्वरस्य, लघ्वक्षरस्य, पूजितस्य च, स्वगणे तु यथोत्तरम्।**

---

सपत्नीमातेति मातुः सपत्नीति विग्रहः। अधमर्ण इति—सप्तमी शौण्डादिभि रित्यनेन सप्तमीकृष्णपुरुषः। इत्यादि पदेन—अग्रेवणं गणरात्रः परश्व इत्यादि। श्वो भाविदिनं, तस्मात् परं परश्वः।

**अमृता०**—१८४. हरीति। वृत्तिमाह—हरिसंज्ञादेरिति। सर्वेश्वर आदौ यस्य स सर्वेश्वरादिः, स चासौ अरामान्तश्चेति सर्वेश्वराद्यरामान्तः तस्येत्यर्थः। स्वगणे त्विति—सूत्रनिर्दिष्टगणेषु मध्ये कस्यचित् पूर्वनिपाते प्राप्ते तु यथोत्तरं स भवति। सिन्धुशैलमिति—अप्राणिद्रव्यजातीनामिति समाहारः। अत्र हरिसंज्ञस्य सिन्धुशब्दस्य पूर्वनिपातः। एवं कविनटौ, विधु सूर्यौ, अहि नकुलमित्यादि च। अगतरु इति—अत्र तरुशब्दस्य हरिसंज्ञत्वेऽपि स्वगणे तु यथोत्तरमित्यनेन सर्वेश्वराद्यरामान्तस्य अग शब्दस्य हि पूर्वनिपातः। अगः पर्वतः। सर्वेऽपि रामकृष्णा विभाषयैकवदिति ब्रह्मत्वमेकत्वञ्च। एवमिन्द्रवायु,

---

**बाल०**—तत्र। एतदप्यधिकारसूत्रं ॥ १८२ ॥

**बाल०**—राजा। वृत्तिमाह पूर्वनिपातः स्यादिति। राजदन्त इति परपदेनेत्यनेन कृष्णपुरुषः। सूत्रे तृतीयान्तेन प्रथमान्तं समस्यते। तच्च पूर्वमित्यनेन षष्ठ्यन्तस्य पूर्वनिपातः स्यादत एतत् सूत्रं कृतं। एवमन्यत्र ज्ञेयं। राजविद्येति विद्यानां राजेति विग्रहः। यद्यप्यत्र राजपदस्य प्राधान्यं तथापि उत्तरपदवल्लिङ्ग रामकृष्ण कृष्णपुरुषयोरित्यनेनोत्तरपदवल्लिङ्गं। अतोऽत्र गोरीप आप इत्यनेन न वामन इति। राजगुह्यमिति गुह्यानां राजेति विग्रहः। अन्तर्वणमिति वनस्यान्तरिति विग्रहः। अधोभुवनमिति भुवनस्य अध इति विग्रहः। सपत्नीमातेति मातुः सपत्नीति विग्रहः। अधमर्ण इति। सप्तमी शौण्डादिभिरित्यनेन कृष्णपुरुषः सप्तम्यन्तस्य पूर्वनिपातः पूर्वनिपातः स्यात् अत एतत् सूत्रं कृतं। इत्यादीत्यादिपदेन वनस्य अग्रे अग्रेवणं, रात्रीणां गणः गणरात्रं, अन्तरं गृहं गृहान्तरं अन्तरशब्दोऽन्यार्थः। श्वो भावि दिनं तस्मात् परं परश्व इत्यादि ज्ञेयं। गृहान्तरमित्यत्र श्यामरामसमासो ज्ञेयः। अन्यार्थदृष्ट्या पञ्चमीकृष्णपुरुषे कृते पूर्वोक्तसूत्रेण पञ्चम्यन्तस्य पूर्वनिपातसिद्धेः। गणरात्रमिति गणशब्दस्य संख्यावाचकत्वात् वर्षादीर्घसख्यातसर्वपुण्यैकदेशाव्ययसंख्याभ्योरात्रेरित्यनेन अरामसमासान्तः ब्रह्मत्वमभिधानात्। गणरात्रं निशा बह्वय इत्यमरः ॥ १८३ ॥

हरिसंज्ञादेः पूर्वनिपातः स्यात् । तत्र च स्वगणे यथोत्तरं स्यात् । सिन्धुशैलं, अगतरु, धरासनं, कुशकाशं, मातापितरौ । अत्र सख्यु र्हरित्वं न मतम्, तेन हितसखायावित्यपि । व्यभिचरति च—नरनारायणौ, उलूखलमुषले, भार्यापती, जायापती ।

**१८५. अनेकप्राप्तावेकस्य नियमो नान्यस्य ।**

---

अमरदानवावित्यादि । धरासनमित्यादि—धरा चासनञ्चेति विग्रहे अप्राणिद्रव्यजातीनामिति समाहारः । इह आसनशब्दस्य सर्वेश्वराद्यरामान्तत्वेऽपि अल्पसर्वेश्वरस्य हि पूर्वनिपातः, सूत्रे तस्य परत्वेन निर्देशात् । कुशकाशमिति—कुशाश्च काशाश्चेति विग्रहे वृक्षमृगेत्यादिना समाहारः । अत्रोभयोरेवाल्पसर्वेश्वरत्वेऽपि लघ्वक्षरस्य कुशस्य पूर्वनिपातः । एवं सुखदुःखं, पुत्रपौत्रमित्यादि ।

मातापितराविति—इहपितृशब्दस्य लघ्वक्षरत्वेऽपि मातुरेव पूजितत्वात् पूर्वनिपातः । पितु र्माता सहस्रेण गौरवेणातिरिच्यते । गर्भधारणपोषाभ्यां तेन माता गरीयसीति स्मृतेः । एतेन लक्ष्म्याश्च पूर्वनिपातो दर्शितः । तेन लक्ष्मीनारायणौ, सीतारामौ, राधाकृष्णावित्यादयो बहुलप्रयोगा लभ्यन्ते । पूज्यत्वस्य तु विवक्षाधीनत्वात् क्वचिद् व्यभिचारश्च—हरगौर्यौ, कृष्णराधिके इत्यादि । अत्रेति—रामकृष्णसमासे पूर्वनिपातप्रसङ्गे सखि शब्दस्य हरि संज्ञत्वं नमतं प्राचीनानामिति शेषः । स्वीकृते तु हरि संज्ञत्वे 'सखिहितौ' इत्येवं सखिशब्दस्य पूर्वनिपातः स्यादिति भावः : व्यभिचरति चेति—सूत्रनिर्दिष्ट पूर्वनिपात नियम इति शेषः । नरनारायणावित्यत्र नारायणस्य हि पूजितत्वात् पूर्वनिपात उचितः, उदूखलमुषले इत्यत्राल्पसर्वेश्वरत्वात् मुषलस्य, भार्यापती इत्यादौ हरिसंज्ञत्वात् लघ्वक्षरत्वात् पूजितत्वाच्च पतिशब्दस्य हि पूर्वनिपातः प्राप्तः, किन्तु तद्वैपरीत्यनिपातेन व्यभिचारो ज्ञेयः । एवं धूमाग्नी स्नातकराजानौ रूपसनातनावित्यादौ च बोध्यम् ।

**अमृता०**—१८५. अनेकेति । अनेकस्य युगपत् पूर्वनिपाते प्राप्ते एकस्यैव तन्नियमः स्यात्, शेषयोः शेषाणां वा नियमो नेष्टः । हरिगुरुहरा इति—शास्त्रदृष्टयात्र सर्वेषां हि पूजितत्वं लभ्यते । यथा हि—हरिरेव सदाराध्यः सर्वदेवेश्वर इत्यादि पाद्मोक्तेः श्रीहरेः पूज्यत्वं प्रसिद्धं । आचार्यं मां विजानीयात्⋯⋯ सर्वदेवमयो गुरु रिति श्रीभागवते

---

**बाल०**—राम । अधिकारसूत्रमेतत् ॥ १८४ ॥

**बाल०**—हरि । वृत्तिमाह हरिसंज्ञादेरिति इरामोरामान्ता हरिसंज्ञः । यथोत्तरं स्यादिति पूर्वनिपात इति शेषः । सिन्धुशैलमिति सिन्धुश्च शैलश्च इति विग्रहः । अप्राणिद्रव्यजातीनामित्यनेन समाहारः । अत्र हरिसंज्ञस्य सिन्धोरेव पूर्वनिपातः । एवं कविनटौ दुन्दुभिमृदङ्गमित्यादिच ज्ञेयं । कमण्डलुकृष्णाजिनमिति भाषावृत्तिः । अगतर्विति । अत्र तरुशब्दस्य हरिसंज्ञत्वेऽपि स्वगणेतु यथोत्तरमित्युक्तत्वात् सर्वेश्वराद्यरामान्तस्य अगशब्दस्यैव पूर्वनिपातः । एवं इन्द्रवायू इत्यादि ज्ञेयं । धरासनमिति धराश्च आसनाश्चेति

हरिगुरुहरा, हरिहरगुरवः ।

**१८६. धर्मार्थादिषु यथेष्टम् ।**

**धर्मार्थौ कामार्थौ शब्दार्थौ अन्तदी मधुसर्पिषी गुणवृद्धी इन्द्राग्नी इत्यादि । तथा अर्थधर्मावित्यादि ।**

---

श्रीभगवदुक्तेर्गुरोः पूज्यत्वं व्यक्तम् । तथा "मद्भक्तपूजाभ्यधिका" इति श्रीभगवदुक्तेः, तथा "वैष्णवानां यथा शम्भु"रि भागवतीय प्रमाणाच्च हरस्यापि पूज्यत्वमबाधम् । इति स्थिते प्रथमोक्त प्रमाणेन तथा–यथा तरोर्मूलनिषेचनेन तृप्यन्ति तत् स्कन्धभुजोपशाखाः । प्राणोपहाराच्च यथेन्द्रियाणां तथैव सर्वार्हणमच्युतेज्या । इति श्रीभागवत वचनाच्च हरेरेव सर्वमूलत्वे सुतरां हि सर्वपूज्यत्वे च लब्धे हरिशब्दस्य पूर्वनिपातो नियमितः । शेषयो र्गुरुहरयोस्तु न तन्नियम इष्ट इति क्रमेण तयोः स दर्शित उदाहरणद्वये । समधर्मं पूजितत्वं विहायापि विचारेण गुरुहरयो र्मध्ये हरिसंज्ञगरोरेव पूर्वनिपातः सिध्येत्, तदपि 'नान्यस्य' इत्यनेन निषिद्धइति विवेकः ।

**अमृता०—१८६.** धर्मेति । रामकृष्ण समासे धर्मार्थादिषु यथेष्टं पूर्वनिपातः स्यात् । तत्र प्रथमं धर्मार्थादि त्रिषु अप्राप्तपक्ष उदाहृतः, ततः अन्तादी प्रभृतिषु यथाप्राप्ति पूर्व-निपात पक्षो दर्शितः । इत्यादिपदेन—चन्द्रार्कौ वायवाकाशौ वृद्धिक्षयौ इत्यादि च ज्ञेयम् । विपर्ययेण पक्षान्तरञ्च दर्शयति—तथेति । इह चेत्यादिपदेन—अर्थकामौ, अर्थशब्दौ, आद्यन्तौ सर्पिर्मधुनी, वृद्धिगुणौ, अग्नीन्द्रौ इति तथा अर्कचन्द्रौ, आकाशवायू, क्षयवृद्धी इत्यादि च वेदितव्यम् ।

---

विग्रहः । वृक्षमृगशकुनितृणधान्यविशेषाणाञ्च वा बहुत्वे इत्यनेन समाहारः । अत्र आसन-शब्दस्य सर्वेश्वराद्यरामान्तत्वेऽपि अल्पसर्वेश्वरस्य धराशब्दस्यैव पूर्वनिपातः । कुशकाशमिति कुशाश्च कालाश्चेति विग्रहः, वृक्षमृगेत्यादिना समाहारः । अत्र लघ्वक्षरस्य कुशस्यैव पूर्वनिपातः । काशकुशावलम्बनमित्यसाधुरिति जुमरः । मातापितराविति माता च पिता चेति विग्रहः । ऋरामस्याराम ऋरामान्तपुत्रयोर्विद्यायोनिसम्बन्धक इत्यनेन ऋरामस्या-रामः । अत्र पितृशब्दस्य लघ्वक्षरत्वेऽपि पूजितत्वात्, मातृशब्दस्य पूर्वनिपातः । पितुर्माता सहस्रेण गौरवेणातिरिच्यते । गर्भधारणपोषाभ्यां तेन माता गरीयसी । इत्यादि स्मृतेर्मातुः पूजितत्वं । एवं युधिष्ठिरार्जुनौ सनातनरूपावित्यादिच ज्ञेयं । अत्रेति न हरित्वं मतमिति पूर्वाचार्यैरिति शेषः । हितसखायाविति हितश्च सखाचेति विग्रहः । उक्तमतस्य सर्वसम्मतत्वं नास्तीति सूचयितुं इत्यपीतुक्तं । ततश्च सखिहिताविति च ज्ञेयं । व्यभिचरति चेति पूर्वनिपात इति शेषः । नरनारायणाविति । अत्र पूजितत्वात् नारायणस्यैव पूर्वनिपातः स्यात् । अत उक्तं व्यभिचरति चेति । उदूखलमुषले इत्यत्र अल्पसर्वेश्वरत्वात् मुषलस्यैव पूर्वनिपातः स्यात् । भार्यापती इति । अत्र हरिसंज्ञत्वात् लघ्वक्षरत्वात् पूजितत्वाच्च पतिशब्दस्यैव पूर्वनिपातः स्यात् । एवं जायापती इति । एवं धूमाग्नी लक्षणहेतू समुद्राभ्रे स्नातकराजानौ प्रतिष्ठालिप्से इत्यादावपि व्यभिचारो ज्ञेयः ॥ १८५ ॥

**१८७. ऋतुनक्षत्र संख्या वर्णानां क्रमेण ।**

हेमन्त शिशिरवसन्ताः, पुष्याश्लेषामघाः, षश्चषट्, विप्रक्षत्रविट्शूद्राः ।

अनेकेष्वनियमो न स्यात् ।

**१८८. संख्यायामल्पीयस्याश्च ।**

एकश्च दश च एकादश ।

---

**अमृता०**—१८७. ऋत्विति । रामकृष्ण समासे ऋतूनां नक्षत्राणां संख्यानां वर्णानाञ्च क्रमेण पूर्वनिपातः स्यात् । क्रमेण चत्वार्युदाहरति—हेमन्तेत्यादि । यदुक्तम्—हेमन्तो मार्ग पौषाभ्यां शिशिरो माघफाल्गुनौ । वसन्तश्चैत्रवैशाखो ग्रीष्मो ज्यैष्ठशुची पुनः । वर्षा श्रावणभाद्राभ्यां शरदाश्विनकार्त्तिकौ ॥ इति ॥ ननु वर्णानां ब्राह्मणो गुरुरित्यादि वचनाद् विप्रस्य पूजिततया प्रसिद्धेः स्वत एव पूर्वनिपातः सिध्यति तर्हि किमनेनेति चेत्तत्राह—अनेकेष्विति । एकस्य नियमे सति नान्यस्येत्युक्तेः क्षत्रादीनां वैपरीत्येन विप्र शूद्र विट् क्षत्रा इत्येवमपि निपातः प्रसज्येत, तदपाकरणमिह वर्णानां क्रमेणेति नियम इति भावः ।

**अमृता०**—१८८. संख्यायामिति । रामकृष्णसमासे संख्यायां सत्यामल्पीयस्याश्च संख्यायाः पूर्वनिपातः स्यात् । पूर्वं क्रमेण विहितः पूर्वनिपातः, इहतु तदभावे अल्पीयस्या एव स विधीयते । एकादशेति—"षोडशैकादशौ च निपात्यौ" इति निपातादारामो वक्ष्यते । एवं द्वित्राद्द्वादशेत्यादि च ।

---

**बाल०**—अने । व्यक्तार्थमेतत् । नान्यस्येति एकस्यैवेत्युक्तत्वात् अन्यस्य नियमो न भवतीत्यर्थः । हरिगुरुहरा इति । अत्र सर्वेषामेव पूजितत्वात् सर्वेषामेव पूर्वनिपाते प्राप्ते एकस्य हरेरेव नियमः गुरुहरयोस्त्वनियमः अतो हरिहरगुरव इतिच । हरिरेव सदाराध्यः सर्वदेवेश्वर इत्यादिपद्मपुराणवचनात् हरेः पूजितत्वं प्रसिद्धमेव । आचार्यं मां विजानीयान्नावमन्येत कर्हिचित् । न मर्त्तबुद्ध्यासूयेत सर्वदेवमयो गुरुरित्येकादशस्कन्धोक्तश्रीमुखवचनात् गुरोरपि पूजितत्वं व्यक्तमेव । मद्भक्तपूजाभ्यधिका इति श्रीभागवतोक्तश्रीमुखवचचात् वैष्णवानां यथा शम्भुरिति दृष्टान्तत्वेन प्रसिद्धस्य हरस्यापि पूजितत्वं शास्त्रसिद्धमेवेति ज्ञेयं ॥ १८६ ॥

**बाल०**—धर्मा । रामकृष्णसमासे धर्मार्थादिषु यथेष्टं पूर्वनिपातः स्यात् । धर्मार्थादिषूभयमिति भाषावृत्तिः । धर्मार्थाविति धर्मश्च अर्थश्चेति विग्रहः । एवं सर्वत्र विग्रहः कल्प्यः । इत्यादीत्यादिपदेन अर्कचन्द्रौ, अग्निसमीरणौ, आकाशवायू, वृद्धिक्षयौ, लघुदीर्घौ, गतिहिंसे इत्यादिच ज्ञेयं । तथेति इत्यादीत्यादिपदेन अर्थशब्दौ अर्थकामावित्यादि चन्द्राकौं समीरणाग्नी इत्यादिच ज्ञेयं ॥ १८७ ॥

**बाल०**—ऋतु । रामकृष्णसमासे धातुप्रभृतीनां पूर्वनिपातः स्यात् । व्यतिक्रमनिरासार्थं क्रमेणेत्युक्तं । ऋतुप्रभृतीनां चतुर्णां क्रमेण चत्वारि उदाहरणानि दर्शयति

**१८९. पीताम्बरे ।**

प्रभुरयम् ।

**१९०. सप्तमी–विष्णुनिष्ठा–विशेषण–कृष्णनामसंख्यानां दण्ड-हस्तादि वर्जम् ।**

पूर्वनिपातः स्यात् । कण्ठेकालः, उरसिलोमा, द्वयमप्यलुक् । कृतहरि-

---

अमृता०—१८९. पीताम्बर इत्यधिकारसूत्रम् ।

अमृता०—१९०. सप्तमीति । पीताम्बरसमासे सप्तम्यन्तस्य विष्णुनिष्ठान्तस्य विशेषणस्य कृष्णनाम्नः संख्यायाश्च पूर्वनिपातः स्यादित्यन्वयः । दण्डहस्तादिषु सप्तम्यन्तानां हस्तादीनां पूर्वनिपातं बाधित्वा परनिपात एव भवतीत्यर्थः । कण्ठेकालइति—कण्ठे कालो यस्येति विग्रहः, महादेव इत्यर्थः । इहसप्तम्यन्तस्य पूर्वनिपातः । एवञ्च उरसिलोमेति । द्वयमप्यलुगिति—स्वाङ्गादमूर्द्धमस्तकाद्ङेरकामे इत्यलुग् वक्ष्यते । कृत-हरिभक्तिरिति—कृता हरिभक्ति र्येनेति विग्रहः, अत्र विष्णु निष्ठान्तस्य पूर्वनिपातः, वाच्यलिङ्गलक्ष्मीरित्यादिना कृता इत्यस्य पुरुषोत्तमता । कृत्तिश्चर्म, कृत्तिवासाः शिवः, कृत्ति र्वासो यस्येति विग्रहः । अत्र कृत्तिशब्दस्य प्राधान्याद् विशेषणत्वम्, कृष्णमित्रो गोप इति वत् । निष्ठाशब्देनात्र क्तप्रत्ययस्यैव ग्रहणम्, क्तवतो समासनिषेधात् ।

ननु क्तप्रत्ययान्तशब्दो विशेषणमेवदृश्यते, तर्हि विशेषण ग्रहणेनैव सिद्धे कथमिह पुन र्निष्ठाया ग्रहणमिति चेत्तदुच्यते—धृतसूक्ष्मवसन इत्यादौ धृत-सूक्ष्मयो र्द्वयो रपि विशेषणत्वेऽपि क्तान्तस्यैव पूर्वनिपातो यथा स्यादिति । यथा हि—तमुद्यतनिशातासि प्रत्युवाच जिजीविषु रिति भट्टिः । एवं कृष्णनामसंख्ययोश्च विशेषणत्वे सिद्धे पूनर्ग्रहणं तयोरेव पूर्वनिपातार्थम् । तच्च दर्शितमेव सर्वकृष्ण इत्युदाहरण युग्मे । सप्तरक्त इति—

---

हेमन्तेति । यदुक्तं । हेमन्तो मार्गपौषाभ्यां शिशिरौ माघफाल्गुनौ । वसन्तश्चैत्रवैशाखौ ग्रीष्मो ज्यैष्ठशुची पुनः । वर्षा श्रावणभाद्राभ्यां शरदाश्विनकार्तिकौ । क्षत्रः क्षत्रियः । ननु विप्रक्षत्रविट्शूद्रा इति अनेकप्राप्तावेकस्यैव नियम इत्यनेनापि सिध्यतीति चेत्तत्राह अनेकेष्व नियमो न स्यादिति यद्यत्र अनेकप्राप्तावित्यदिसूत्रं प्रवर्त्तते, तदा अनेकेषु अनियमः स्यात् । इदानीन्तु अनेकेषु अनियमो न स्यान्न भवतीत्यर्थः । ऋतुवाचकस्य समानाक्षरत्वे क्रमेण पूर्वनिपातो भवतीतितु भाषावृत्तिमतं जुमरादिमतञ्च अतस्तत्तन्मते ग्रीष्मवसन्तौ चित्राश्विन्यावित्यदिकमपि ज्ञेयं ।। १८८ ।।

बाल०—संख्या । रामकृष्णसमासे संख्यायामल्पीयसश्च पूर्वनिपातः स्यात् । एकञ्च दश चेति विग्रहः । एकादशेति । अत्र अल्पीयस एकस्यैव पूर्वनिपातः । षोडशैकादशौ च निपाताविति वक्ष्यते । एवं द्वादश इत्यादिकञ्च ज्ञेयं । द्विशब्दस्य संसारस्यारामो वक्ष्यते ।। १८९ ।।

भक्तिः, कृत्तिवासाः। तथा सर्वकृष्णः, सप्तरक्तः। नेह दण्डहस्तः, चक्रपाणिः। आदिना गडुकण्ठः, अरुशिराः, दुहितृगर्भा इत्यादि।

**१९१. जातिकालसुखादिभ्यः क्तस्य परनिपातः।**

**ना जग्धोऽनेन नृजग्धः, सारङ्गजग्धी, जातो मासोऽस्य मासजातः, सुख हीनः, कृच्छ्रजातः।**

---

सप्त रक्तानि यस्येति विग्रहः, श्रीकृष्ण इत्यर्थः। सप्तेति—नेत्रान्तः, करचरणयोस्तालू, अधरः, ओष्ठः, जिह्वा, नखानीति सप्ताङ्गानि रक्तानि महापुरुषचिह्नानि। दण्डहस्त इति दण्डो हस्ते यस्येति विग्रहः। इह हस्तस्य सप्तम्यन्तत्वेन पूर्वनिपाते प्राप्ते निषेधः। इत्यादि पदेन—शूलपाणिः, पद्मनाभः श्रीवत्सवक्षा इत्यादि ज्ञेयम्।

**अमृता०**—१९१. जातीति स्पष्टम्। पूर्वेण सूत्रेण क्तस्य पूर्वनिपाते प्राप्ते तद्बाधनमिदं विधानम्। ना मनुष्यः, नृजग्धो राक्षसादिः। सारङ्गजग्धीति—सारङ्गो मृगविशेषो जग्धोऽनयेति विग्रहः। जाते वा नत्वाच्छादनादिति लक्ष्म्यामीप् वक्ष्यते। मासजात इत्यत्र कालात् क्तस्यपरनिपातः। सुखहीन इति हीनं सुखमस्येति विग्रहः। एवं जातं कृच्छ्रमस्येति कृच्छ्रजातः।

---

**बाल०**—पीता। अधिकारसूत्रमेतत्॥ १९०॥

**बाल०**—सप्तमी। वृत्तिमाह पूर्वेति। कण्ठे काल इति कण्ठे कालो यस्येति विग्रहः। अत्र सप्तम्यन्तस्य पूर्वनिपातः। स्वाङ्गादमुर्द्धमस्तकात् ङेरकामे इत्यनेन ङेर्महाहरनिषेधः। उरसिलोमेति उरसि लोमान्यस्येति विग्रहः। अत्रापि सप्तम्यन्तस्य पूर्वनिपातः। स्वाङ्गादित्यादिना ङेर्महाहरनिषेधः। कृतहरिभक्तिरिति कृता हरिभक्तिर्येनेति विग्रहः। अत्र क्तप्रत्ययान्तस्त पूर्वनिपातः। वाच्यलिङ्गलक्ष्मीस्तुल्याधिकरणलक्ष्म्यामित्यनेन पुरुषोत्तमवत्वं। ननु कृतहरिभक्तिरित्यादौ कृतादिशब्दानां विशेषणत्वादेव पूर्वनिपातो भविष्यति किं विष्णुनिष्ठाग्रहणेन इति चेत्तत्रोच्यते धृतसूक्ष्मवसन इत्यत्र धृतसूक्ष्मयोर्विशेषणत्वेऽपि क्तान्तस्यैव पूर्वनिपातार्थं विष्णुनिष्ठेत्युक्तं। विशेषणोदाहरणमाह कृत्तिर्वासा इति कृत्तिर्वासो यस्येति विग्रहः। कृत्तिश्चर्म, कृत्तिवासाः शिवः। कृष्णमित्रा गोपाः कुलालकर्त्तृको घटः साधनपरा वैष्णवाः घृतोत्तरः सूपः इत्यादौ यथा अप्रधानत्वादेव कृष्णादिशब्दानां विशेषणत्वं तथा कृत्तिवासा इत्यत्रापि कृतिशब्दस्य विशेषणत्वं अवगन्तव्यं। सर्वनामोदाहरणमाह सर्वकृष्णो यस्येति विग्रह। कृष्णः श्यामः। अत्र कृष्णशब्दस्य गुणवचनत्वाद्विशेषणत्वं सर्वशब्दस्यतु विशेष्यत्वं यदातु कृष्णनाम्नां विशेषणत्वं भवति तदा विशेषणत्वेनैव पूर्वनिपातः सिध्यति। संख्योदाहरणमाह सप्तरक्त इति सप्त रक्तानि यस्येति विग्रहः। सप्तेति नेत्रान्त-पाद-कर-तालु-अधरौष्ठ-जिह्वा-नखानि इत्यर्थः। रक्तानि रक्तिमयुक्तानि सप्तरक्तः श्रीकृष्णः। अत्र सप्तशब्दस्य विशेष्यत्वं। दण्डहस्त इति दण्डो हस्ते यस्येति विग्रहः। अत्र सप्तम्यन्तस्य पूर्वनिपातः स्यात्। अत उक्तं

## १९२. आहिताग्न्यादिषु वा ।

अग्न्याहितः अस्युद्यतः पुत्रजातः दन्तजातः श्मश्रुजातः घृतपीतः भार्योढः प्रियगूढ इत्यादि । पक्षे आहिताग्निरित्यादि ।

॥ इति पूर्वपरनिपाताः ॥

## १९३. एकस्य शेषो रामकृष्णे ।

प्रभुरयम् ।

---

**अमृता०**—१९२. आहितेति । एषु आहितादि शब्दानां क्तान्तानां परनिपातो ना भवति । पूर्वेण क्तान्तानामेषां पूर्वनिपाते प्राप्ते विकल्पवचनम् । तत्रादौ परनिपातमुदाहरति—अग्न्याहित इति । आहितः अग्निर्येनेति विग्रहः । प्रियगूढ इति—प्रियो गूढो यस्येति विग्रहः । इत्यादिपदेन एषामाकृतिगणत्वं सूचितम् । तेन तैलपीतः भार्यागतः अर्थगत इत्यादि च बोध्यम् । पक्ष इति क्तान्तस्य पूर्वनिपातपक्षे इत्यर्थः । इत्यादि पदेन—उद्यतासिः जातपुत्रः जातदन्त इत्यादि तथा पीततैल इत्यादि च ।

**अमृता०**—१९३. एकस्येत्यधिकारसूत्रम् । इदानीं रामकृष्ण समासस्यापवाद विधय उच्यन्ते । "प्रत्यर्थं शब्दाभिनिवेश" इति भाष्यवचनात् यावन्तस्ते पदार्था स्तावतां हि शब्दानां प्रयोगनियमे प्राप्ते तदपवाद एकशेषो विधीयते । नचायमेकशेषोऽपि द्वन्द्वभेद इति वाच्यम्, ऋग्भ्यां पथिभ्यामित्यादौ समासान्तारामप्राप्तेः प्रसक्तेः । ननु समासान्तविधेरनित्यत्वादिति चेत् तर्हि पुञ्जौ युञ्ज इत्यादौ युजौ युज इत्येवं प्रसक्तेरनिवार्यत्वादिति विवेच्यम् । सचैकशेषो द्विविधः, सरूपैकशेषः, विरूपैकशेषश्चेति । तत्राद्यमाचष्टे—

---

दण्डहस्तादिवर्जमिति । चक्रपाणिरिति चक्रं पाणौ यस्येति विग्रहः । एवं शूलपाणिः कमण्डलुपाणिः दुहितृगर्भा पद्महस्त इत्यादिच ज्ञेयं ॥ १९१ ॥

**बाल०**—जाति । व्यक्तार्थमेतत् । पूर्वसूत्रेण पूर्वनिपाते प्राप्ते पर निपातविधानं । ना पुरुषः नृजग्धो राक्षसादिः । सारङ्गजग्धीति सारङ्गो जग्धोऽनयेति विग्रहः । जातेर्वा नत्वाच्छादनादित्यनेन ईप् । सारङ्गश्चातको मृगश्च । मासजात इति अत्र कालात् क्तस्य परनिपातः । सुखहीन इति हीनं सुखमस्येति विग्रहः । कृच्छ्रजात इति जातं कृच्छ्रं यस्येति विग्रहः ॥ १९२ ॥

**बाल०**—आहि । आहिताग्न्यादिषु परनिपातो वा भवति । आहितादीनां पूर्वनिपाते प्राप्ते विकल्पार्थं वचनं । अग्न्याहित इति आहितोऽग्नि र्येनेति विग्रहः । अस्युद्यत इति उद्यतोऽसिर्येनेति विग्रहः । असिः खड्गः । पुत्रजात इति जातः पुत्रोऽस्येति विग्रहः । एवं दन्तजात इति । श्मश्रुजात इति जातं श्मश्रुर्यस्येति विग्रहः । तनूरुहं लोम रोम तद्वृद्धौ श्मश्रु पुंमुखे इत्यमरः । घृतपीत इति पीतं घृतं येनेति विग्रहः । भार्योढ इति ऊढा भार्या येनेति विग्रहः । प्रियगूढ इति प्रियः गूढः यस्येति विग्रहः, प्रियगुड इत्यपि गुडः प्रियो यस्येति विग्रहः । इत्यादीत्यादिपदेन तैलपीतः भार्यागतः अर्थगत इतिच ज्ञेयं । पक्ष इति । इत्यादीत्यादिपदेन उद्यतासिः जातपुत्रः इत्यादि, पीततैल इत्यादिच ज्ञेयं ॥ १९३ ॥

**१९४. तुल्यशब्दानां भिन्नार्थानामपि ।**

**एकस्य शेषः स्यात् । गोपी च गोपी च गोप्यौ । सर्वत्रावशिष्ट एव लुप्तस्य शक्त्यारोपो दृश्यते, यथा व्यतीसे इत्यादौ । तद्वदिहापीति गोपीशब्देन द्वयमुच्यते । द्वौ च द्वौ च इत्यादौ तु न, अनभिधानात् । भिन्नार्थानामपि—कृष्णो वासुदेवः कृष्णश्चार्जुनः तौ कृष्णौ । एवं रामाः ।**

**१९५. समानार्थानाञ्च भिन्नरूपाणां क्वचित् ।**

**वक्रदण्डश्च कुटिलदण्डश्च वक्रदण्डौ ।**

---

**अमृता०**—१९४. तुल्येति । भिन्नार्थवतामपि तुल्यशब्दानां मध्ये एकस्यशेषः स्यात् । अन्येषान्तु लोपो भवतीति भावः । भिन्नार्थानामित्यत्र अपि पदेन एकार्थानाञ्च तुल्यशब्दानामेकशेषो भवतीत्यायाति । तत एव प्रथमं तदेवोदाहरति—गोपी चेति । ननु गोप्यौ इत्यत्र एकेन गोपीशब्देन द्वयोरपि बोधः कथं स्यादिति चेत्तदुपपादयति—सर्वत्रावशिष्ट इत्यादिना । लुप्तस्येति जीतावेकत्वम् । तत्र दृष्टान्तमाह—यथेति । व्यतीसे इति —व्यतिहारार्थे व्यतिपूर्वस्य असधातोरच्युतात्मपदस्य मध्यमपुरुषैकवचनम् । तत्र श्मस्त्योररामहरो निर्गुण इति अस्धातोररामहरः, अस्तेः सलोपेः से इति सस्य च हरः । ततः सम्पूर्णप्रकृते लोपेऽपि यथा सेप्रत्यये हि परस्परविद्यमानतारूपप्रकृत्यर्थशक्तिरारोप्यते तथात्र चैकस्मिन् गोपीशब्देलुप्तस्य गोपी शब्दस्य शक्तिरारोप्यत इति सरलार्थः । यथा ह्युक्तम्—सरुपसमुदायाद्धि विभक्ति र्या विधीयते । एकस्तत्रार्थवान् सिद्धः समुदायार्थ-एकस्तत्रार्थवान् सिद्धः समुदायार्थवाचकः ।। इति ।। एवं बहुत्वे गोपी च गोपी च गोपी च गाप्य इत्यादि । अनभिधानादिति—पूर्वाचार्यैरकथनात् नस्यादेकशेष इत्यर्थः । एवं रामा इति—रामो दाशरथिः, रामो बलरामः, रामः परशुरामः, ते रामाः । एवञ्च पादश्चरणः, पादः श्लोकस्य चतुर्थ भागः, पादः प्रत्यन्तपर्वतः, ते पादा इत्यादि ।

**अमृता०**—१९५. समानेति । रामकृष्णसमासे क्वचिद् भिन्नरूपाणानाञ्च समानार्थानां शब्दानामेकस्य शेषः स्यात् । वैरूपकोद्वितीयभेदोऽयम् । वक्रेति—वक्रकुटिल शब्दयोः समानार्थत्वादेकस्य वक्रस्यात्र शेषो दर्शितः । अत्रैव विग्रहे कुटिलदण्डावित्यपि भवतीति बोध्यम् । एवं घटश्च कुम्भश्च घटौ कुम्भौ वा ।

---

**बाल०**—एकस्य । अधिकारसूत्रमेतत् ।। १९४ ।।

**बाल०**—तुल्य । वृत्तिमाह एकस्य शेषः स्यादिति । एकस्य शेषः स्यादित्युक्ते अपरस्य निवृत्तिः स्यादित्यायातम् । तुल्येति एकार्थानां भिन्नार्थानामपि तुल्यशब्दानामित्यर्थः । ननु गोप्यावित्यत्र एकेन गोपीशब्देन कथं गोपीद्वयमुच्यते इति चेत्तत्राह सर्वत्रावशिष्ट एवेति । यथेति । यथा येन प्रकारेण व्यतिसे इत्यादौ एक सेप्रत्ययेन क्रियाव्यतिहारशक्त्यारोपात् प्रकृतिप्रत्ययद्वयार्थं परस्परभवनमुच्यते इह स्थलेऽपि तद्वद्गोपीशब्देन द्वयमप्युच्यते

## १९६. लक्ष्म्यासहोक्तौ पुरुषोत्तमस्य तन्मात्रञ्चेद्विशेषः ।

**गोपाश्च गोप्यश्च गोपाः । नदीदेशनगराणामिति ज्ञापकात्तु नदाश्च नद्यश्च नद्यः ।**

## १९७. यूना सहोक्तौ वृद्धस्य, लक्ष्मीश्च पुरुषोत्तमवत् ।

---

**अमृता०**—१९६. लक्ष्म्येति। रामकृष्ण समासे लक्ष्म्या सह पुरुषोत्तमस्योक्तौ सत्यां यदिलक्ष्मीपुरुषोत्तमतामात्रं विशेषो भेदः स्यात्तमस्य शेषो भवति, लक्ष्म्यास्तु निवृत्तिः स्यादित्यर्थः। समस्यमानवाच्यलिङ्ग शब्दानां यदि स्वरूपतोऽभेदः, लक्ष्मीत्वादिबोधक प्रत्ययांशमात्रे विशेषः अर्थाद् वैरूप्यं वर्त्तते तदा पुरुषोत्तम एव शिष्यत इति फलितार्थः। गोपा इति—अत्र गोपगोपी शब्दयो स्वरूपतो न भेदः किन्तु लक्ष्मीप्रत्ययेन ईपा हि तयो र्वैशिष्ट्यमुपलभ्यते, अयन्तु स्वरूपैकशेषः। एवं ब्राह्मणश्च ब्राह्मणी च ब्राह्मणौ, विद्वान् च विदुषी च विद्वांसौ, श्रीमान् च श्रीमती च श्रीमन्तौ, कर्त्ता च कर्त्री च कर्त्तारौ, युवा च युवतिश्च युवानौ, भवश्च भवानी च भवौ इत्यादि।

तन्मात्रञ्चेद् विशेष इति किम्—गोपश्च ब्राह्मणश्च गोपब्राह्मणौ। इह तु शब्दयोः स्वरूपत एव भेदान्नैकशेषः किन्तु समास एव। क्वचिद् व्यभिचारश्च भवतीत्याह—नदीदेशेत्यादि। ज्ञापकादिति—समाहारप्रकरणे नदीदेशेत्यादि सूत्रे नदीत्यनेन लक्ष्म्याश्च क्वचिदेक शेष इष्यत इति ज्ञापितमित्यर्थः। तथाहि—नदीत्यनेन तत्र स्त्रीलिङ्गस्य पुंलिङ्गस्य च लाभः, भिन्न लिङ्गानामिति वचनात्। तेन नदाश्च नद्यश्चेति विग्रहे नद्य इत्येकशेषो विहितः, पुनः समुदायसमासे विष्णुभक्त लुंकि नदीत्येवं रूपं जातम्। अन्यथा अक्ष्म्या सहोक्ताविति सूत्रेणैकशेषे कृते तु पुरुषोत्तमस्यैकशेष विधानात् नद देश नगराणामित्येवं सूत्रं क्रियेत, तस्मात् तत्र नदीत्युक्तिरेव एतस्य व्यभिचारज्ञापिकेति ज्ञेयम्।

**अमृता०**—१९७. यूनेति। रामकृष्णसमासे यूना सह वृद्धस्योक्तौ सत्यामेकस्य वृद्धस्य शेषः स्यात्, यूनो निवृत्ति र्भवति। तत्र लक्ष्मीश्च पुरुषोत्तमवद् भवति यदि प्रत्यय-

---

इति ज्ञेयं। व्यतिसे इति धातोः क्रियाव्यतिहारे आत्मनेपदमिष्यते इत्यात्मनेपदं। श्नमस्त्योररामहरो निर्गुण इत्यनेन अस्तेररामहरः। अस्तेः सलोपः से इत्यनेन सलोपः। अत्रावशिष्टे प्रत्यय एव प्रकृतिशक्त्यारोपः। एवं गोपश्च गोपश्च गोपौ, वृक्षश्च वृक्षश्च वृक्षौ वृक्षश्च वृक्षश्च वृक्षश्च वृक्षा इत्यादि ज्ञेयम्। इत्यादौ नेति एकस्य शेषः समासश्च इति शेषः। हेतुमाह अनभिधानादिति। भिन्नार्थानामपीति उदाहरणं दर्श्यते इति शेषः। रामा इति रामो दाशरथिः रामो बलदेवः रामो जामदग्न्यस्ते रामाः। एवं अक्षः पाशकः अक्षो विभीतकः अक्षो रथावयवः ते अक्षाः। माषो व्रीहिः, माषो मूर्खः, माषो माषकस्ते माषाः। पादश्चरणः पादश्चतुर्था भागः पादः प्रत्यन्तपर्वतस्ते पादाः। इत्यादिच ज्ञेयम्॥ १९५॥

**बाल०**—समा। रामकृष्णसमासे क्वचिद्भिन्नरूपाणां समानार्थानाञ्च एकस्य शेषः स्यात्। वक्रति वक्रकुटिलशब्दयोः समानार्थत्वेन वक्रदण्डकुटिलदण्डशब्दयोः समानार्थत्वं। जुमरमते कुटिल दण्डाविति च भवतीतिज्ञेयम्॥ १९६॥

**तन्मात्रञ्चेद् विशेषः। गार्ग्यश्च गार्ग्यायणश्च गार्ग्यौ। गार्गी च गार्ग्यायणश्च गार्ग्यौ, भ्यामि गार्ग्याभ्याम्। तथा भ्रातृ स्वसारौ भ्रातरौ, पुत्रदुहितरौ पुत्रौ, माता पितरौ पितरौ, श्वश्रू श्वशुरौ श्वशुरौ इत्यादि ज्ञेयम्।**

---

मात्रांशेन युव-वृद्धत्वरूप वैशिष्ट्यं भवेत्। अत्र युवत्वं वृद्धत्वञ्च तद्धित प्रत्ययस्याचार्य कलितसंज्ञया लभ्या। तत्र "पौत्रप्रभृत्यपत्यं गोत्रमिति", "पित्रादौ जीवतिरपत्यं पौत्रादे युवा" इति च वक्ष्यते। गार्ग्यश्चेति—गर्गस्य गोत्रापत्यं गार्ग्यः, गर्गादि र्माधव य इति माधव यप्रत्ययः। गार्ग्यायिण इति—गर्गस्य युवापत्यमित्यर्थे 'गोत्रप्रत्ययान्तात्' फराम इत्यनेन गार्ग्य शब्दात् फप्रत्ययः, फआयनः। अत्र वृद्धसंज्ञस्य गार्ग्यस्य शेषः, युव संज्ञस्य गार्ग्यायिणस्य निवृत्तिः। लक्ष्म्याः पुरुषोत्तमवत्त्वं दर्शयति—गार्गी चेति। गार्गीति गार्ग्य शब्दादीप्, विष्णुजनात्तद्धित यस्य हरो भगवत्यारामं विनेति यलोपः। अत्रापि वृद्धसंज्ञस्य गार्गी शब्दस्य शेषः, यूनो गार्ग्यायिणस्य लोपः। गार्ग्याविति—एकशेषे पुरुषोत्तमवत्त्वे पुनः गार्ग्य इत्येवंरूपं, तस्य द्विवचनान्तम्।

नन्वत्र स्त्रीलिङ्गस्य गार्गी शब्दस्यापि द्वित्वे तदेवरूपं सिध्यति, को लाभस्तर्हि पुरुषोत्तमवत्तायामिति चेत्तत्राह—भ्यामि गार्ग्याभ्यामिति। अकृते तु पुरुषोत्तमवत्त्वे गार्गी शब्दस्य भ्यामि गार्गीभ्यामित्येवमनिष्टरूपमापद्येत इत्यभिप्रायः। अयञ्च सरूपैकशेषः। पूर्व समानार्थानाञ्च भिन्नरूपाणामित्यनेन भिन्न रूपशब्दानां समानार्थत्वे विरूपैकशेषो दर्शित। तत्र चकारोपादानात् भिन्नरूपशब्दानामसमानार्थानाञ्च एकशेषो भवतीत्यधुना सोदाहरणं दर्शयति—तथेत्यादिना। तन्मात्रविशेषाभावान्नात्र सरूपैकशेषः। अत्रैकशेष पक्षे भ्रातृ शब्देन भ्रातृ स्वसारौ, पुत्र शब्देन पुत्र दुहितरौ लक्ष्येते, तथा पितृशब्देन जनक-दम्पती, श्वशुरशब्देन पत्नीजनकदम्पती, पति जनकदम्पती वा लक्ष्येते इति केचित्। तत्र प्रथमद्वयस्य नित्यमेकशेषः, तृतीयचतुर्थयोस्तु विभाषयेति काशिकाभाषावृत्ति सुपद्मादयः।

---

**बाल०**—लक्ष्म्या। रामकृष्णसमासे लक्ष्म्या सहोक्तौ सत्यां एकस्य पुरुषोत्तमस्य शेषः स्यात्। लक्ष्म्या निवृत्तिः स्याच्चेद्यदि तन्मात्रं विशेषो भवति। तन्मात्रं लक्ष्मीपुरुषोत्तममात्रं विशेषो भेदः। तदितराविशेषवत्वे सति तद्विशेषवत्वं तन्मात्रविशेषवत्वमिति केचिम्। गोपा इति। अत्र तन्मात्रभेदः। अन्यत् सर्वं समानम्। एवं ब्राह्मणश्च ब्राह्मणीच ब्राह्मणौ। पटुश्च पट्वीच पटू। गौश्चायं गौश्चेयं गावाविमौ गोमांश्च गोमतीच गोमन्तौ इत्यादि ज्ञेयम्। तन्मात्रञ्चेद्विशेष इति किं कुक्कुटश्च मयूरीच कुक्कुटमयूर्यौ। अत्र जातिरूपकृतोऽपि भेदो वर्तते। नदीदेश इति ज्ञापकात्त्विति नदीदेशनगराणामिति ज्ञापकात् पुरुषोत्तमेन सहोक्तौ लक्ष्म्या अपि एकशेष इत्यभिप्रायः। अन्यथा पुरुषोत्तमस्य शेषे सति नदा इति स्यादिति। ननु नदीदेशेत्यनेन अत्र समाहारविहितः कथमत्रैकशेषः कस्मिन्नंशे वा नदीदेशेत्यस्य ज्ञापकत्वमिति ज्ञायते भद्रमुच्यते। अत्र यथा नदीति सूत्रविधानात् समाहारो विहितस्तत्रापि तुल्यशब्दानामित्यनेनैकशेषः सिद्धः तस्मिन् सिद्धेच सति लक्ष्म्या

## १६८. अन्यैः सहोक्तौ तदादे स्तदादिभिस्तु परपरस्य ।

**सच वैष्णवश्च तौ, यश्च कश्च कौ, स च त्वञ्च युवाम्, स च त्वञ्च अहञ्च वयम् ।**

---

**अमृता०**—१६८. अन्यैरिति । रामकृष्णविषये अन्यैः सह तदादेरुक्तौ तदादेः शेषः स्यात्, तदादिभिः सह तदादेरुक्तौ तु तदादेः परपरस्य शेषः स्यात्, पूर्वपूर्वस्य तु निवृत्तिः । इह परत्वं गणपाठ क्रमादेवावगन्तव्यम् । तेन कश्च यश्चेति वाक्येऽपि कौ इत्येव भवत्येकशेषः, तदादि गणे यत् शब्दात् परं हि किम्शब्दस्य पाठात् । एवंअहञ्च त्वञ्च आवाम्, अहञ्च त्वञ्च सचेति वयमित्यपि बोध्यं व्युत्क्रमवाक्ये च ।

---

सहोक्तावित्यनेन पुरुषोत्तमस्यैकशेषे प्राप्ते तद्व्यभिचाराय तत्र गङ्गाशोणं शोणनर्मदं मित्यादौ परिवृत्तित्वेन यः पूर्वपरनिपातो दर्शितः, स एवात्र ज्ञापकत्वेनात्थापित इति, किन्तु नदीदेशादीनां यत्र भिन्नरूपभिन्नलिङ्गत्वं तत्रैव समाहारः, यत्रतु न रूपभिन्नलिङ्गत्वं तत्रैकशेष इत्यपि वोद्धव्यमिति ।। १६७ ।।

**बाल०**—यूना । वृत्तिमाह तन्मात्रञ्चेदिति । रामकृष्णसमासे यूना सहोक्तौ सत्यां एकस्य वृद्धस्य शेषः स्यात् । यूना निवृत्तिः स्यात् लक्ष्मीश्च पुरुषोत्तमवद्भवति, यदि युववृद्धत्वमात्रं विशेषः स्यात्तदा अपत्यमन्तर्हितं वृद्धमुच्यते इति भाषावृत्तिः । अपत्य-मन्तर्हितमिति पौत्रप्रभृत्यपत्यमित्यर्थः । गार्ग्यश्चेति । गार्ग्य इति गर्ग्यस्य गोत्रमित्यर्थे गर्गादिर्माधव-यरामः इत्यनेन माधव-यरामः । पौत्रप्रभृत्यपत्यं गोत्रमिति तद्धितप्रकरणे वक्ष्यते । गार्ग्यायिण इति गर्गस्य युवापत्यमित्यर्थे गोत्रप्रत्यन्तात् फरामः इत्यनेन फरामः । फ आयनः । गार्ग्याविति । अत्र वृद्धस्य गार्ग्यस्य शेषः । यूनो गार्ग्यायणस्य निवृत्तिः । युवगोत्रतद्धितान्त इति जूमरसूत्र। अतो भाषावृत्तिमते पितामहस्य वृद्धत्वं जूमरमते पितुर्वृद्धत्वं अस्माकं मतेतु वृद्धस्यानियमात युवापत्यात् पूर्वं सर्वे वृद्धाः इति गर्गश्च गर्गश्च गार्ग्यायिणश्च गर्गौ, गार्गिश्च गार्ग्यायिणश्च गार्गी । इत्यादिकमपि स्यात् । गार्गी चेति । गार्गीति गार्ग्यशब्दात् ईप् विष्णुजनात्तद्धितयस्य हरो भगवत्यारामं विनेत्यनेन यस्य हरो । गार्ग्याविति अत्रापि । वृद्धस्य शेषः युनो निवृत्तिः । लक्ष्म्याः पुरुषोत्तमवत्त्वञ्च । स्त्रीपुंवच्चेति भाषावृत्तिसूत्रं जूमरसूत्रञ्च । ननु गार्ग्याविति । पुरुषोत्तमवत्त्व विनापि सिध्यति इति । किं पुरुषोत्तमवत्त्वेन इति चेत्तत्राह भ्यामीति । गार्ग्याभ्यामिति पुरुषोत्तम-वत्त्वेन कृते गार्गीभ्यामित्यानिष्टरूपं स्यात् । तन्मात्रञ्चेद्विशेष इति । किं गार्ग्यश्च वात्स्यायनश्च गार्ग्यवात्स्यायनौ । अत्र जातिरूपकृतोऽपि भेदः तथा गार्गीच वात्स्यायनश्च गार्गीवात्स्यायनौ । तथेति भ्राताश्च स्वसा चेत्यत्र भ्रातृस्वसाराविति च ज्ञेयम् । भ्रातरा-वित्येव भवति । इति तु भाषाबृत्तिमतं जूमरमतञ्च । स्वसा भगिनी । भ्रातृभगिन्यौ भ्रातरावुभावित्यमरः । पुत्रश्च दुहिता चेत्यत्र पुत्रदुहितराविति पुत्राविति च ज्ञेयम् । पुत्रावित्येव भवतीतितु भाषावृत्तिमतं जूमरमतञ्च । दुहिता कन्या । पुत्रौ पुत्रश्च दुहिता चेत्यमरः । माता च पिता चेत्यत्र मातापितराविति च ज्ञेयम् । भाषावृत्तिजूमरयोरप्येतदेव

**१९९. अतरुणेऽनेकशफग्राम्यपशुसंघे लक्ष्म्याः ।**

गावइमाः अजा इमाः । अग्राम्यपशुसंघत्वे तु—इमा रुरवश्च इमे रुरुवश्च रुरव इमे । असंघे तु— गौश्चायं गौश्चेयं गावाविमौ । एकशफत्वे तु—अश्वा इमे । तरुणे तु—वत्सा इमे ।

**२००. समरूपाणां ब्रह्मणा सहोक्तौ ब्रह्मणः, तत्रैकत्वञ्च वा ।**

श्यामः कृष्णः, श्यामा यमुना, श्यामं वृन्दावनं, तानि श्यामानि, तदिदं श्यामं वा ।

**इत्येकशेषः ।**

---

**अमृता०**—१९९. अतरुणेति । ग्राम्यश्चासौ पशुसंघश्चेति ग्राम्यपशुसंघः, अनेकं शफं खुरो यस्य सोऽनेकशफः, सचासौ ग्राम्यपशुसंघश्चेति तथा सचातरुणवयस्क स्तस्मिन् वाच्य इत्यर्थः । तादृशि रामकृष्णे सति लक्ष्म्याः शेषः स्यात् । लक्ष्म्या सहोक्तौ पुरुषोत्तमस्येति प्राप्ते तदपवादार्थमिदम् । गाव इमा इति—इमा यावश्च इमे गावश्चेति विग्रहः । अत्र लक्ष्म्याः शेषः, एवमन्यत्र च ज्ञेयम् । अग्राम्यपशुत्वे तु यथा प्राप्तं पुरुषोत्तमस्यैव शेष इति प्रत्युदाहरति—रूरवश्चेति । रूरवो वन्यमृगा इत्यग्राम्याः । अश्वानां शफन्तु न विभक्तमित्येकशफाः । वत्सा अल्पवयस्का इत्यर्थः ।

**अमृता०**—२००. समेति । रामकृष्ण समासे ब्रह्मणा सह समरूपाणामब्रह्मणामुक्तौ ब्रह्मणः शेषः स्यात्, तत्र ब्रह्मणि विभाषया एकवचनञ्च भवति । समरूपाणामब्रह्मणामिति किम्—शुक्लंवस्त्रं, शुक्लं यशः, शुक्लं हास्यं तानि शुक्लानि, नात्र विभाषयैकत्वम् । समरूपाणामिति किम्—सितश्चन्द्रः धवला वङ्गा शुक्लमम्बरं तानि सितधवलशुक्लानि । अत्र भिन्न लिङ्गत्वात् समानार्थानाञ्च भिन्नरूपाणां क्वचिदित्यनेनापि नैक शेषः ।

॥ इति व्याख्यात एकशेषः ॥

---

मतं । मातापितरौ पितरावित्यमरः । श्वश्रुश्च श्वशुरश्चेत्यत्र श्वश्रुश्वशुराविति श्वशुराविति च ज्ञेयम् । भाषावृत्तिजूमरयोरपि एतदेव मतं । श्वश्रुश्वशुरौ श्वशुरावित्यमरः ॥१९८

**बाल०**—अन्यैः । रामकृष्णसमासे अन्यैः सहोक्तौ सत्यां तदादेः शेषः स्यात् अन्येषां निवृत्तिः स्यात् । तदादभिस्तु सहोक्तौ सत्यां परपरस्य तदादेः शेषः स्यात् । पूर्वपूर्वस्य निवृत्तिः स्यात् । परत्वमत्र गणपाठापेक्षमिति ज्ञेयं । तदादीनां यद्यत्परं तत्तच्छिष्यत इत्येके इति भाषावृत्तिः । ताविति । अत्र तच्छब्दस्य शेषः वैष्णवस्य निवृत्तिः । एवमन्यत्र ज्ञेयं ॥ १९८ ॥

**बाल०**—अतरु । व्यक्तार्थमेतत् । अनेकेति । ग्राम्यश्चासौ पशुसङ्घश्चेति ग्राम्यपशुसङ्घः । अनेकं शफं खुरो यस्य सोऽनेकशफः अनेकशफश्चासौ ग्राम्यपशुसङ्घश्चेति

**२०१. पूर्वपदान्महाहरनिषेधः ।**

विभुरयम् ।

**२०२. समासे सर्वादिपदं पूर्वपदं, सर्वान्तपदमुत्तरपदम् ।**

**२०३. ओजोऽञ्जः सहोऽम्भस्तमस स्तृतीयायाः ।**

ओजसा कृतमित्यादि । तपसश्चेत्येके, तपसा प्रसिद्धमिति व्योष्ठ काव्ये । पूर्वपदादेव, ओजसो मध्यपदत्वे तु महौजः कृतमिति भाषावृत्तिः ।

---

अमृता०—२०१. पूर्वेति । समासे सत्यन्तरङ्गत्वादे यों महाहरो नियमित स्तस्यापवाद विधि रयम्, विधुनामाधिकारः । पूर्वपदस्य पारिभाषिकलक्षणमाह—

अमृता०—२०२. समास इति । पूर्वोत्तरादिशब्दा आपेक्षिकाः, तत्रोत्तरपरमपेक्ष्य मध्य वर्त्ति पदञ्च पूर्वपदत्वेन व्यपदेष्टुं शक्यते, तथा पूर्वपदमपेक्ष्य मध्यवर्त्तिपदमुत्तर-पदत्वेन व्यपदेष्टुं पार्यते, इत्येवमनिष्टनिरासार्थ मियं परिभाषा ज्ञेया, अग्रे च व्यक्ती-भविष्यति ।

अमृता०—२०३. ओज इति । पूर्व पदादोजः प्रभृतिभ्यः पञ्चभ्य उत्तरे तृतीयाया महाहर निषेधः स्यात् । ओजसाकृतमिति—कर्त्तृकरणे कृतेत्यनेन कृष्ण पुरुषः । ओजो बलम् । एवमञ्जसाधीतं, सहसा कृतं, अम्भसाप्लुतं, तमसावृतमिति । तपसश्चेति—तपसश्च तृतीयाया महाहर निषेधः स्यादित्येके वदन्ति । तत्र शिष्टप्रयोगञ्च दर्शयन् तन्मतमनुमोदते—तपसाप्रसिद्धमिति । तपः कृशाभ्यामुपपत्तिमैच्छदित्यादि महाकवि-प्रयोगे व्यभिचारलाभान्मतमिदं न हि सर्वसम्मतमिति सूत्रे न गृहीतम् । प्रत्युदाहरति—

---

विग्रहः । तस्मिन् रामकृष्णे सति लक्ष्म्याः शेषः । शफं क्लीवे खुरः पुमानित्यमरः । गाव इति । इमा गावश्च इमे गावश्च गाव इमाः इत्यत्र लक्ष्म्याः शेषः । इमा अजाश्च, इमे अजाश्च अजा इमा इति । अश्वा इमे इति । इमे अश्वाश्च इमा अश्वाश्च अश्वा इमे । इत्यत्र लक्ष्म्यां सहोक्तौ पुरुषोत्तमस्य तन्मात्रञ्चेद्विशेष इत्यनेन पुरुषोत्तमस्य शेषः । एवं गर्दभा इमे इति । इमे वत्साश्च इमा वत्साश्च वत्सा इमे । अत्रापि पुरुषोत्तमस्य शेषः । ग्राम्येति किं इमे रुरवश्च इमा रुरवश्च इमे रुरवः । असङ्घत्वेतु गौश्चायं गौश्चेयं गावाविमौ ॥ २०० ॥

बाल०—समरू । एतदपि व्यक्तार्थं । ब्रह्मणा सहोक्ताविति अब्रह्मणा इति शेषः । ब्राह्मणेत्यत्र अब्राह्मणेति वा पाठः । नपुंसकमनपुंसकेनैकवच्चान्यतरस्यामिति भाषावृत्तिसूत्रं । क्लीवाक्लीवयोः क्लीवं सचैकवद्वेति जुमरसूत्रञ्च । तत्र ब्रह्माण एकत्वञ्च वा भवति । समरूपाणामिति किं सितश्च धवलश्च शुक्लञ्च तानि सितधवलशुक्लानि ॥ २०१ ॥

बाल०—पूर्वं । अधिकारसूत्रमेतत् ॥ २०२ ॥

## २०४. आत्मनस्तृतीयायाः पूरणे ।

आत्मनापञ्चमः ।

## २०५. मनस आज्ञायिनि ।

मनसाज्ञायी । मनसादेव्यादयस्तु संज्ञाः ।

---

महौजः कृतमिति । अत्र ओजः शब्दस्य सर्वादिपदत्वविरहान्न महाहरनिषेधः, अर्थान्महाहर एव । एवञ्च माघे—उदन्वदम्भः परिवीतमूर्त्तिरिति ।

**अमृता०**—२०४. अत्मन इति । पूरणप्रत्ययान्ते परे आत्मन स्तृतीयाया महाहरनिषेधः स्यात् । आत्मनापञ्चम इति—प्रकृत्यादिभ्य इति तृतीया, क्वचिद्—कृपापीत्यनेन समासः । पञ्चम इति पञ्चन् शब्दात् "तस्य पूरणे" इत्यनेन केशवाच्, नान्तादसंख्यादेरमचीति अम् वक्ष्यते तद्धिते ।

**अमृता०**—२०५. मनस इति । आज्ञायिनि परे मनस उत्तरस्य तृतीयाया महाहर निषेधः स्यात् । मनसाज्ञायीति—मनसा आज्ञातुं शीलमस्येति "अजातावनुपेन्द्रोपपदे णिनि स्ताच्छील्ये" इत्यादिना णिनिः, उपेन्द्रोर्यादीत्यादिना कृत्समासः, इह त्वलुगर्थं वचनम् । मनसा देव्यादयः संज्ञाशब्दाः, तेन तदर्थं सूत्रकरणं नावश्यकमिति भावः । एवं मनसादत्ता मनसागुप्तेत्यादयश्च ।

---

**बाल०**—समा । पूर्वपदस्य लक्षणमाह समास इति, समासे सर्वादिपदं पूर्वपदमुच्यते । आनुसङ्गिकतया उत्तरपदस्यापि लक्षणमाह सर्वान्तेति । सर्वान्तपदमुत्तरपदमुच्यते ।। २०३ ।।

**बाल०**—ओजो । पूर्वपदादोजः प्रभृतेरुत्तरस्यातृतीयाया महाहरनिषेधो भवति । ओजसाकृतमिति, ओजसा कृतमिति विग्रहे कर्त्तृकरणे कृतेत्यनेन कृष्णपुरुषः । ओजो बलं । ओजसाकृतमित्यस्यैकपदत्वात् ओजसाकृतस्येदं औजसाकृतमिति तद्धितप्रत्ययेन सेत्स्यति इति ज्ञेयं । इत्यादीत्यादिपदेन अञ्जसानिष्पादितं, सहसाकृतं, अम्भसाप्लुतं तमसापिहितमिति, अञ्जस्त्वं तत्वेन निष्पादितमित्यर्थः । सहो बलं, अम्भो जलं, तमोऽन्धकारः । तपश्चेति तपसश्च तृतीयाया महाहरनिषेधो भवतीति एके वदन्ति, एतस्य मतस्य शिष्टसम्मतत्वञ्च व्यञ्जयति तपसाप्रसिद्धमितीति, किन्तु तपःकृशाभ्यामुपपत्तिमैच्छत्तपःकृशतरैरङ्गै रित्यादिमहाकविप्रयोगदर्शनादेतस्य सर्वसम्मतत्वं नास्तीति गम्यते । महौजःकृतमिति महौजसा कृतमिति विग्रहः । अत्र ओजसः सर्वादिपदत्वाभावात् पूर्वपदत्वाभावः अतो महाहरो भवत्येव । तथाच उदन्वदम्भःपरिवीतमूर्त्तिरिति माघः ।। २०४ ।।

**बाल०**—आत्म । व्यक्तार्थमेतत् । पूर इति पूरणप्रत्ययान्ते परे इत्यर्थः । आत्मनापञ्चम इति प्रकृत्यादिभ्यस्तृतीया इत्यनेन तृतीया नान्तादसंख्यादेर्मच् इत्यनेन पूरणेऽर्थे पञ्चशब्दान्मच् क्वचिदकृतापीत्यनेन कृष्णपुरुषः । जनार्दनश्चात्मचतुर्थ एवेत्यत्र आत्मा चतुर्थोऽस्येति बहुव्रीहिरिति ज्रुमरः ।। २०५ ।।

**२०६. पुंसानुज-जनुषान्धौ साधू ।**

**२०७. स्तोकादिभ्यः पञ्चम्याः क्ते ।**

स्तोकान्मुक्तः कृच्छ्रान्मुक्तः ।

**२०८. ब्राह्मणाच्छंसी ऋत्विग्भेदे ।**

साधुः ।

---

**अमृता०**—२०६. पुंसेति स्पष्टम् । पुंसानुजइति—प्रकृत्यादिभ्य स्तृतीया, क्वचिदकृतापीति समासः । अत्र तृतीया महाहराभाव एव निपात फलम् एवंच जनुषान्ध इति । जनुजन्म । आत्मनेपदं परस्मैपदमित्यादि संज्ञाशब्देषु तादर्थ्ये चतुर्थ्या अलुग्विधानं कृतं कैश्चित् ।

**अमृता०**—२०७. स्तोकेति । क्तान्तेपरे पूर्वपदेभ्यः स्तोकादिभ्य उत्तरस्याः पञ्चम्या महाहरो न भवति । स्तोकान्मुक्त इति—स्तोकाल्पकृच्छ्रकतिपयेभ्यः करणे पञ्चमी वेति पञ्चमी, "स्तोकान्तिकदूरार्थाः कृच्छ्रञ्च क्तेन" इति कृष्णपरुषः । आदिपदेन—अल्पान्मुक्तः अन्तिकान्मुक्त इत्यादि च ।

**अमृता०**—२०८. ब्राह्मणादिति । ऋत्विग्भेदे ब्राह्मणाच्छंशीति निपात्यते । ब्राह्मणो वेदैकदेशः, तस्मादुद्धृत्य शंसितुंशीलमस्येति णिनिः, उपेन्द्रोर्यादीत्यादिना कृत्समासः, पञ्चम्या महाहराभावोनिपातस्य प्रयोजनम् ।

---

**बाल०**—मन । आज्ञायिनि परे मनस उत्तरस्यास्तृतीयाया महाहरनिषेधो भवति । मनसाज्ञायीति मनसा आज्ञातुं शीलमस्यैति अजातावनुपेन्द्रोपपदे णिनिस्ताच्छील्ये इत्यादिना णिनिः । उपेन्द्रोर्यादिव्यन्ताजन्तपूर्वपदानि कृदन्तेन समस्यते इति समासः । मनसादेव्यादयस्त्विवति । संज्ञा इति संज्ञाशब्दा इत्यर्थः । तस्मादेतदर्थं सूत्रकरणं सबहुप्रयोजनकमिति भावः । मनसो नाम्नीति जुमरसूत्रं । मनसादेवी मनसागुप्ता मनसासङ्गतेति तदुदाहरणानि ॥ २०६ ॥

**बाल०**—पुंसा । व्यक्तार्थमेतत् । पुंसानुज इति प्रकृत्यादिभ्यस्तृतीया इत्यनेन तृतीया । क्वचिदकृतापि इत्यनेन कृष्णपुरुषः तृतीयामहाहरनिषेध एव निपातफलं जनुषान्ध इति जनुर्जन्म तेनान्धः प्रकृत्यादिभ्य इत्यादिना तृतीया क्वचिदित्यादिना कृष्णपुरुषः निपातफलं पूर्ववत् ॥ २०७ ॥

**बाल०**—स्तोका । क्तान्ते परे पुर्वपदेभ्यः स्तोकादिभ्यः उत्तरस्याः पञ्चम्या महाहरनिषेधो भवति । स्तोकान्मुक्त इति स्तोकाल्पकृच्छ्रकतिपयेभ्यः करणे पञ्चमी । स्तोकान्तिकदूरार्थाः कृच्छ्रञ्च क्तेनेत्यनेन कृष्णपुरुषः । एवं कृच्छ्रान्मुक्त इति । आदिग्रहणात् । अल्पान्मुक्तः अन्तिकान्मुक्त इत्यादिच ज्ञेयं क्त इति किं कृच्छ्रमयं ॥ २०८ ॥

## २०९. अपः सुपो योनिमतियेषु ।

अप्सुयोनिरग्निः, अप्सुमतिः । यस्तद्धितः, गोविन्दो वक्ष्यते, ओद्वयस्यावावौ—अप्सव्यः ।

## २१०. अन्तेगुरु-मध्येगुरू ।

साधू ।

## २११. त्वचिसारादयः संज्ञायाम् ।

साधवः ।

---

**अमृता०**—२०९. अप इति । योनिमतियेषु परेषु पूर्वपदस्थाया अप उत्तरस्य सुपो महाहरनिषेधः स्यात् । अप्सुयोनिरिति—सप्तमी शौण्डादिभिरिति कृष्णपुरुषः, शौण्डादेराकृतिगणत्वात् । एवमप्सुमतिरिति—सूत्रमेतत् कृष्णपुरुषे हि प्रवर्त्तते इति ज्ञेयम्, पीताम्बरे तु—अब्योनिः अम्मतिरिति । अप्सव्य—अप्सुभव इत्यर्थे "दिगादिभ्य" इति यरामस्तद्धितः । गोविन्द इति—उद्वयस्य गोविन्दो नतु धातो र्नच स्त्रीप्रत्यये इत्यनेनेति शेषः । उद्वयस्यावावौ प्रत्यय ये इति सम्पूर्णसूत्रम् ।

**अमृता०**—२१०. अन्ते इति । एतौ साधू स्याताम् । पूर्ववत् सप्तमीशौण्डादिभिरिति कृष्णपुरुषः । निपाताद् ङेर्नमहाहरः । पीताम्बरे तु—अन्तगुरुः सगणः, मध्यगुरुः जगण इति च्छन्दः शास्त्रम् । अन्ते गुरु र्यस्येत्यादि विग्रहेः ।

**अमृता०**—२११. त्वचीति । एते कृष्णपुरुषे संज्ञायां साधवो भवन्ति । त्वचिसारो वंशः । वंशे त्वक्सार कर्मार त्वचिसार तृण ध्वजा इत्यमरः । त्वक्सार इति तु पीताम्बरे निष्पन्नम् । आदि शब्देन युधिष्ठिरः गविष्ठिरः मृदिस्पृक् दिविस्पृक वनेकिंशुकाः कूपेपिशाचका इत्यादयो ज्ञेयाः ।

---

**बाल०**—ब्राह्म । वृत्तिमाह साधुरिति निपात्यते इत्यर्थः । ब्राह्मणाच्छंसीति ब्राह्मणो वेदैकदेशः तत उद्धृत्य शंसितुं शीलमस्येति णिनिः उपेन्द्रेत्यादिना समासः निपातात् पञ्चम्या महाहरनिषेधः । ब्राह्मणाच्छंसी ऋत्विग्विशेषः ब्राह्मणाद्गृहीत्वा शंसति । ब्राह्मणाच्छंसी ऋत्विग्भेद इति जुमरः ॥ २०९ ॥

**बाल०**—अपः । योनिमतियेषु परेषु अप उत्तरस्य सुपो महाहरनिषेधो भवति । अप्सुयोनिरिति शौण्डादेराकृतिगणत्वात् महाहरनिषेधविधानसामर्थ्याद्वा कृष्णपुरुषः । एवं अप्सुमतिरिति सूत्रमिदं कृष्णपुरुष एव प्रवर्त्तत इति ज्ञेयं । अतः पीताम्बरेतु अब्योनिः अम्मतिरिति । गोविन्दो वक्ष्यते इति । उद्वयस्य गोविन्दो नतु धातोर्नच स्त्रीप्रत्यये इति गोविन्दसूत्रं । ओद्वस्यावावावितितु ओद्वयस्यावावौ प्रत्यय इति तद्धितप्रकरणोक्तसूत्रस्योल्लेखः । अप्सव्य इति अप्सु भव इत्यर्थे दिगादिभ्यः यरामः इति यस्तद्धितः । सुपो महाहरनिषेधः ॥ २१० ॥

**२१२. विष्णुजनारामान्तात् ।**

प्रभुरयम् ।

**२१३. स्वाङ्गादनूर्द्धमस्तकात् ङेरकामे ।**

उरसि लोमान्यस्य उरसिलोमा, एवं कण्ठेकालः। नेह—अङ्गुलित्राणः मूर्द्धशिखः मस्तकमणिः मुखकामः ।

**२१४. अस्वाङ्गादपि बन्धेवा ।**

हस्तेबन्धो हस्तबन्धः, चक्रेबन्धः चक्रबन्धः। विष्णुजनारामान्तादेव, नेह गुप्तिबन्धः ।

---

**अमृता०**—२१२. विष्णिवति अधिकारसूत्रम् । विष्णुजनान्तात् अरामान्ताच्चेत्यर्थः। सर्वेऽपि रामकृष्णा विभाषयैकवद् भवन्तीत्येकत्वम् ।

**अमृता०**—२१३. स्वाङ्गादिति। कामभिन्ने परे सति विष्णुजनारामान्तात् मुर्द्ध-मस्तके—तरात् स्वाङ्गादुत्तरस्य ङेर्महाहरनिषेधः स्यात् । उरसिलोमेति—सप्तमीविष्णु-निष्ठेत्यादिना सप्तम्यन्तस्य पूर्वनिपातः। उरसीति विष्णुजनान्तमत्र पूर्वपदम्, कण्ठेकाल इति त्वरामान्तम् । व्यधिकरणपीताम्बरावेतौ । प्रत्युदाहरति—नेहेति । अङ्गुलीति स्वाङ्गस्य स्वाङ्गस्य विष्णुजनान्तत्वाभावादरामान्तत्वाभावाच्च न महाहरनिषेधः। एवं जङ्घावलिः, उरुलोमेत्यादि च । मूर्द्धशिख इति—मूर्द्धनि शिखा यस्येति विग्रहः। स्वाङ्ग-त्वेऽपि सूत्रे वर्जनान्न निषेधः, एवं मुखकामश्च ।

**अमृता०**—२१४. अस्वाङ्गादिति। बन्धे शब्दे परे विष्णुजनारामान्तात् स्वाङ्गात् अस्वाङ्गादपि उत्तरस्य ङेर्महाहरनिषेधो वा स्यात् । पूर्वेण नित्यमेव निषेधे प्राप्ते विकल्प-विधानम् । हस्ते बन्धो यस्येति विग्रहः। चक्रेबन्ध इत्यादौ महाहरनिषेधेऽप्राप्ते विभाषा-विधानम् । एवमुरसिबन्धः उरोबन्ध इत्यादि च ज्ञेयम् । गुप्तिबन्धइति—गुप्तौ बन्धो यस्येति विग्रहः, गुप्ति भूगर्त्तः ।

---

**बाल०**—अन्ते। वृत्तिमाह साधू इति। अन्तेगुरुः इति शौण्डादेराकृति गणत्वात् महाहरनिषेधसामर्थ्याद्वा कृष्णपुरुषः। एवं मध्येगुरुरिति सूत्रमिदं कृष्णपुरुष एव प्रवर्त्तत इति ज्ञेयं। अतः अन्ते गुरुरस्य मध्ये गुरुस्येति पीताम्बरेतु अन्त गुरुः मध्यगुरुरिति भवति। सोऽन्तगुरुरिति। क्वापि न मध्यगुरुर्गण एक इतिच छन्दःशास्त्रं ॥ २११ ॥

**बाल०**—त्वचि। वृत्तिमाह साधव इति। त्वचिसार इति सप्तमो शौण्डादि भरिति कृष्णपुरुषः। निपातात् ङेर्महाहरनिषेधः। त्वचिसारः वंशः। तक्सार इतितु पीताम्बर-समासेनेति ज्ञेयं। वंशे त्वक्सार-कर्मार त्वचिसार-तृणध्वजा इत्यमरः। आदिग्रहणात् गविष्ठिरयुधिष्ठिरप्रभृतयोऽपि ज्ञेयाः। गविष्ठिरः कश्चित् । युधिष्ठिरः प्रसिद्धः ॥ २१२ ॥

**बाल०**—विष्णु। अधिकारसूत्रमेतत् ॥ २१३ ॥

२१५. हलादौ प्राच्यकरनाम्नि ।

पूर्वदेशकरनाम्नि वाच्ये, हलादौ पूर्वपदे सति, तस्मात् हलादे ङेर्महाहरो वा भवतीति ज्ञेयम् । हले हले द्विपदिका हलेद्विप‍ि.का हलद्विपदिका । वामनमते तु नित्यम् ।

२१६. कालान्ङेर्वा तरतमकालतनेषु ।

विधिबलात् सप्तम्यन्तात् तरतमौ तनश्च । एते तद्धिताः । पूर्वाह्णेतरे

**अमृता०**—२१५. हलादाविति । वृत्तिमाह—पूर्वदेशेत्यादिना । तत्र करः—वणिक् पशु पाल कर्षकादिभ्यो ग्राह्यो राजभागः । पूर्वदेशीय करस्य नाम्नि वाच्य इत्यर्थः । हले हलेद्विपदिकेति विग्रहे शौण्डादित्वात् सप्तमी कृष्णपुरुषः । द्विपदिका करसंज्ञाविशेषः । आदि पदेन—मुकुटेकार्षापणं, दृषदि माषकः सूपे शाण इत्यादयश्च । वामनः काशिका वृत्तिकृत् । तत्र तु वाऽनुवृत्तिविरहान्नित्यमेव सप्तम्या अलुग् भवतीति तन्मतम् ।

**अमृता०**—२१६. कालादिति । तरतमकाल तनेषु परेषु कालादुत्तरस्य ङेर्महाहरो वा स्यात् । पूर्वाह्णेतर इत्यादौ सप्तम्यन्तात् तरादि प्रत्ययविधानस्य सूत्रमेव नास्तीति कथं तेषु ङेर्महाहरो निषिध्यत इति मनस्याशङ्क्य तत्समाधान माचष्टे-विधिवलादिति । तादृशविधानसूत्रस्याभावेऽपि ङेर्महाहररूपोऽयमेव विधिः—सप्तम्यन्तात् तरादि भवतीति ज्ञापयति, अन्यथा विधानमिदमप्रतिपन्नं स्यादिति भावः । तनश्चेति—सप्तम्यन्तादित्यनेन

**बाल०**—स्वाङ्गा । अकामे परे विष्णुजनारामान्तात् अमूर्द्धमस्तकात् पूर्वपदात् स्वाङ्गादुत्तरस्य ङेर्महाहरनिषेधो भवति । उरसिलोमेति सप्तमी विष्णुनिष्ठेत्यादिना सप्तम्यन्तस्य पूर्वनिपातः । अत्र स्वाङ्गस्य विष्णुजनान्तत्वं । कण्ठेकाल इति । अत्र स्वाङ्गस्य आरामान्तत्वं । अङ्गुलित्राण इति अङ्गुलौ त्राणं यस्येति विग्रहः । अत्र स्वाङ्गस्य विष्णुजनारामान्तत्वं नास्ति, अतो ङेर्महाहरः । एवं जङ्घावलिरितिच ज्ञेयं । मूर्द्धशिख इति मूर्द्धनि शिखा यस्येति विग्रहः । अत्र विष्णुजनान्तत्वेऽपि मूर्द्धवर्जनान्न महाहरनिषेधः । मस्तकमणिरिति मस्तके मणिर्यस्येति विग्रहः । अत्रारामान्तत्वेऽपि मस्तकवर्जनात् न महाहरनिषेधः । मुखकाम इति मुखे कामो यस्येति विग्रहः । अकाम इत्युक्त अतोऽत्र न महाहरनिषेधः ।। २१४ ।।

**बाल०**—अस्वा । बन्धे परे विष्णुजनारामान्तात् स्वाङ्गात् अस्वाङ्गादप्युत्तरस्य ङेर्महाहरनिषेधो वा भवति । हस्तेबन्धो हस्तबन्ध इति हस्ते बन्धो यस्येति विग्रहः । अत्र पूर्वसूत्रेण नित्यं महाहरनिषेधः स्यात् विकल्पेन निषेधविधानं । चक्रेबन्धश्चक्रबन्ध इति । चक्रे बन्धो यस्येति विग्रहः । अत्र महाहरनिषेधो न स्यादिति विकल्पेन महाहरनिषेध-विधानं । एवं उरसिबन्ध उरोबन्ध इत्यादि ज्ञेयं । गुप्तिबन्ध इति गुप्तौ बन्धो यस्येति विग्रहः । गुप्तिः क्षितिव्युदासेऽपीति नानार्थवर्गः । क्षितिव्युदासे भूगर्त्ते । एवं काराबन्ध इतिच ज्ञेयं ।। २१५ ।।

गायति हरिः । पूर्वाह्णेतमे, पूर्वाह्णेकाले कृतम् । पूर्वाह्णेतनी हरिगाथा । पक्षे पूर्वाह्णतर इत्यादि । विष्णुजनारामान्तादेव, नेह—रात्रितरायां जागर्त्ति ।

## २१७. अकालाद् वासवासिशयेषु ।

**खेवासः खवासः ।**

---

हि सम्बन्धो नतु विधि बलादित्यनेन । तद्धितप्रकरणे—पूर्वाह्णेतनापराह्णेतने वेति निपात सूत्रस्य विद्यमानत्वात् । एते तरतमतन प्रत्यया स्तद्धिता इत्यर्थः । पूर्वाह्णेकाले इति पूर्वाह्णे कालः (मुहूर्त्तादिलक्षणः) इति विग्रहे सप्तमीकृष्णपुरुषः, तस्मिन् कृतम् । पूर्वाह्णेतनीति पूर्वाह्णेजाता इत्यर्थः । तनप्रत्ययस्य केशवसंज्ञत्वादीप् सप्तम्या महाहर पक्षं दर्शयति—पक्ष इति । इत्यादिपदेन पूर्वाह्णतने पूर्वाह्णकाले पूर्वाह्णतनीति । कालादिति किम्—शुक्लतरे कृष्णतमे ।

**अमृता०**—२१७. अकालादिति । वास वास शयेषु परेषु कालेतरशब्दादुत्तरस्य ङेर्महाहर निषेधो वा भवति । खेवास इति—एवं वृन्दावनेवासी वृन्दावनवासी, जलेशयः जलशय इति । अकालादिति किम्—पूर्वाह्णशयः ।

---

**बाल०**—हला । पूर्वदिग्भवकरनाम्नि परे हलादौ पूर्वपदे सति तस्मात् हलादेर्ङेर्महाहरौ भवतीति । हले हले द्विपदिका इति विग्रहे शौण्डादित्वात् सप्तमीकृष्णपुरुषः । द्विपदिका करविशेषा दशगण्डिकोपरि चतुःपणाः । वामनेति । वामनो ग्रन्थविशेषः । तन्मतेतु नित्यं हलपूर्वपदाद्वर्त्तमानस्य ङेर्महाहरनिषेधः स्यात् ॥ २१६ ॥

**बाल०**—कालात् । तरतमकालतनेषु परेषु कालादुत्तरस्य ङेर्महाहरनिषेधो वा भवति । पूर्वाह्णेतर इत्यादौ सप्तम्यन्तात् तरादिविधानस्य सूत्रं नास्ति, अत आह विधिवलादिति । तद्धितप्रकरणे पूर्वाह्णेतनापराह्णेतने वेति निपातसूत्रं वक्ष्यते । तथापि तनश्चेति कथमत्रोक्तमिति नावकलितं । अथवा विधिवलादित्युक्तेन पाठकानां वक्ष्यमाणानुसन्धानं न स्यादेव अतस्तत्स्मरणाय तनश्चेत्यप्युक्तं । किम्वा विधिवलात् सप्तम्यन्तात्तरतमावित्युक्त्वा वक्ष्यमाणस्यानुस्मरणाय तनश्चेति पृथगुक्तं । अन्यथा तरतमतना इत्युक्तं स्यादिति । एत इति एते तरतमतनास्तद्धितप्रत्ययाः । पूर्वाह्णेतरे इति एतत् पूर्वाह्णे एतत् पूर्वाह्णे इत्यनयोर्मध्ये अतिशयेन पूर्वाह्णे इत्यर्थे सप्तम्यन्तात्तरः । सप्तम्यामहाहरनिषेधः । एवं पूर्वाह्णेतमे इति गायति हरिरिति शेषः । पूर्वाह्णे काले कृतमिति पूर्वाह्णे मुहूर्त्तादिलक्षणः कालः पूर्वाह्णेकाल इति सप्तमीकृष्णपुरुषः तस्मिन् कृतं । पूर्वाह्णेतनीति पूर्वाह्णे जाता इत्यर्थः । तनप्रत्ययस्य शवत्वात् ईप् । इत्यादीत्यादिपदेन पूर्वाह्णतमे पूर्वाह्णकाले पूर्वाह्णतनी इति । रात्रितरायामिति । अत्र ङेर्महाहरनिषधाभावः ॥ २१७ ॥

२१८. षष्ठ्याः ।

प्रभुरयम् ।

२१९. संज्ञा-भर्त्सनयोः ।

दिवोदासः, चौरस्य कुलं, देवानां प्रिय श्छागः ।

२२०. पुत्रे वा ।

दास्याः पुत्रो दासीपुत्रः ।

२२१. वाचोयुक्ति-दिशोदण्ड-पश्यतोहराः ।

साधवः ।

२२२. अदस आयनकुलिकादिषु ।

---

अमृता०—२१९. संज्ञेति । संज्ञायां विषये भर्त्सने गम्यमाने च पूर्वपदादुत्तरस्याः षष्ठ्याः महाहरनिषेधः स्यात् । दिवोदास इत्येकस्य नृपते र्नाम । एवं दिवस्पतिः वाचस्पति रित्यादयश्च । चौरस्य कुलमित्यादौ खलु भर्त्सनं गम्यते । तदभावे तु ब्राह्मणकुलम् ।

अमृता०—२२०. पुत्रइति स्फुटम् । इहापि भर्त्सना गम्यते ।

अमृता०—२२१. वाचोयुक्तीति । संज्ञाभर्त्सनाभावेऽप्येषां षष्ठ्या महाहरनिषेधो निपातबलात् । पश्यतोहर इत्यनादरे षष्ठी, पश्यन्तमनादृत्यहरतीत्यर्थः, स च निपुणचौरः, यथा स्वर्णकारः ।

अमृता०—२२२. अदस इति । आयन कुलिकादिषु परेषु अदसः षष्ठ्या महाहर निषेधो भवति । आमुष्यायण इति—अमुष्य गोत्रापत्यं पुमानित्यर्थे—"अमुष्येत्यस्य षष्ठ्यलुक् चे"ति माधव फः, फ आयनः, आदिसर्वेश्वरस्य वृष्णीन्द्रः । आमुष्यायणः प्रशस्त-कुलजन्मा इत्यर्थः । अनेन हि षष्ठ्या महाहरनिषेधे सिद्धेऽपि तद्धितसूत्रे—षष्ठ्यलुक् चेत्युक्तिः स्पष्टतार्थेति बोध्यम् । आमुष्यकुलिकेति—अमुष्यकुलस्य भाव इत्यर्थे "राम-कृष्णान्मनोज्ञादेश्च" इत्यनेन नृसिंह वुः, वोरकः, आदि सर्वेश्वरस्य वृष्णीन्द्रः, लक्ष्यामाप्,

---

बाल०—अकालात् । व्यक्तार्थमेतत् ।। २१८ ।।

बाल०—षष्ठ्या । अधिकारसूत्रमेतत् ।। २१९ ।।

बाल०—संज्ञा । संज्ञायां विषये भर्त्सनेच गम्यमाने उत्तरपदे परे पूर्वपदात् षष्ठ्या महाहरनिषेधो भवति । दिवोदासो नृपतिविशेषः । एव शुनःशेफः शुनःपुच्छः शुनोलांगुल इति । वाचस्पतिदिवस्पतिप्रभृतयोऽपि ज्ञेयाः । शुनःशेफादयः ऋषिविशेषाः । वाचस्पति-र्बृहस्पतिः । दिवस्पतिरिन्द्रः । चौरस्य कुलमित्यत्र भर्त्सनं गम्यते, स्वरूपाख्यानेतु चौरकुलमित्येव भवति । एव दास्याः पतिरिति देवानां प्रिय इति । अत्रापि भर्त्सनं गम्यते ।। २२० ।।

बाल०—पुत्रे वा । भर्त्सने गम्ये पुत्रे पर षष्ठ्या महाहरनिषेधो वा भवतीत्यर्थ ।।२२१

तद्धितप्रयोगोऽयम्। अमुष्यायणः। भावे आमुष्यकुलिका, आमुष्य-पुत्रिका, अमुष्यपुत्रता।

**२२३. ऋरामाद् विद्या योनिसम्बन्धे, स्वसृ-पत्योस्तु वा।**

**होतुः शिष्यः, पितुः पुत्रः। तथा मातुः स्वसा मातृष्वसा, दुहितुः पतिः दुहितृपतिः उभयोरपि तत्सम्बन्धे स्यात्, नेह—होतृधनं पितृधनम्।**

**इत्यलुक् समासाः।**

---

"प्रत्ययस्थात् कात्" इत्यादिना पूर्वारामस्येरामः। प्रख्यातकुलत्वमित्यर्थः। आदि शब्दात्—आमुष्य पुत्रिकादि। अमुष्यपुत्रस्य भाव इत्यर्थे पूर्ववत् नृसिंह वुः। अमुष्य पुत्रतेति—पूर्ववद् भावार्थे ताप् प्रत्ययः। एवममुष्यपुत्रत्वमिति च।

**अमृता०**—२२३. ऋरामादिति। विद्या सम्बन्धे योनि सम्बन्धे च गम्यमाने—ऋरामादुत्तरस्याः षष्ठ्या महाहरो न स्यात्। स्वसृ-पत्योस्तु परयो स्तत्तत् सम्बन्धे गम्यमाने तयोः षष्ठ्या महाहरो वा भवति। होतुः—शिष्य इति—अत्र पूर्वोत्तरपदयो रुभयो र्हि विद्या सम्बन्धो गम्यते। पितुः पुत्र इत्यत्र तूभयो र्योनिसम्बन्धः। ऋरामादिति किम्—मातुलपुत्रः। मातुः स्वसा मातृष्वसेति—षत्वप्रकरणे सुषामादयश्चेति निपात सूत्रं वक्ष्यते। तत्र "अलुकि वा" इति वचनादलुक् पक्षे—मातुः स्वसेति, षत्वविकल्पश्च वक्ष्यते, लुक् पक्षे तु नित्यं षत्वम्। ऋरामादित्येव, नेह—आचार्यस्वसा। उभयोरेवेति—पूर्वोत्तरपदयोरेव विद्यायोनिसम्बन्धे सति महाहरनिषेधः प्रवर्त्तत इत्यर्थः। अतएव प्रत्युदाहरणद्वये होतृपित्रो र्यथाक्रमं विद्यायोनिसम्बन्धो विद्यते एव किन्तु उत्तरपदयो र्धनशब्दयो स्तत्तत् सम्बन्धाभावान्न हि महाहरनिषेधः।

---

**बाल०**—वाचो। वृत्तिमाह साधव इति। षष्ठ्या महाहरनिषेधो निपातफलं। पश्यतोहर इत्यत्रानादरे षष्ठी पश्यन्तमनादृत्य हरतीत्यर्थः। पश्यतोहरः स्वर्णकारः ॥२२२

**बाल०**—अद। आयनकुलिकादिषु परेषु अदसः षष्ठ्या महाहरनिषेधो भवति। आमुष्यायण इति। अमुष्य गोत्रमित्यर्थे अमुष्येत्यस्य षष्ठ्या लुक् चेत्यनेन माधवः फः टणिन्माधवफः आयनः आदिसर्वेश्वरस्य वृष्णीन्द्रो नृसिंहे इत्यनेन वृष्णीन्द्रः आमुष्यायणः प्रशस्तकुजन्मा। तद्धितप्रकरणोक्तसूत्रे अमुष्य इत्यस्य षष्ठ्यन्तत्वेन निर्देशात् षष्ठ्यलुक् चेत्युक्तत्वाच्च आमुष्यायणः इत्यत्र षष्ठ्या महाहरनिषेधः सिध्यत्येव तत् कथमत्रायनेत्युक्तं तदेतच्चिन्त्यं। आमुष्यकुलिकेति अमुष्य कुलस्य भावः इत्यर्थे रामकृष्णान्मनोज्ञादेश्चेत्यनेन नृसिंह वुः। आदिसर्वेश्वरस्य वृष्णन्द्रः। लक्ष्म्यामाप्। प्रत्ययस्थात् कात् पूर्वस्याराम-स्येराम- आपीत्यनेन अरामस्येरामः। आमुष्यकुलिका प्रख्यातकुलता। आमुष्यपुत्रिकेति। अमुष्य पुत्रस्य भावः इत्यर्थे सर्वं पूर्ववत्। आमुष्यपुत्रिका प्रख्यातपितृकता। अमुष्य-पुत्रतेति अमुष्यपुत्रस्य भावः इत्यर्थे ताप्प्रत्ययस्तद्धितः॥ २२३॥

२२४. रामकृष्णे ।

प्रभुरयम् ।

२२५. ऋरामस्याराम ऋरामान्तपुत्रयो विद्यायोनिसम्बन्धे ।

होतापोतारौ, मातापितरौ, मातापुत्रौ ।

२२६. इन्द्रादेररामस्याराम उत्तरपदे यज्ञप्रसिद्धयुग्मत्वे ।

इन्द्राबृहस्पती, मित्रावरुणौ ।

---

अमृता०—२२५. ऋरामस्येति । विद्या सम्बन्धे योनिसम्बन्धे च गम्ये ऋरामान्त-शब्दे पुत्रे च परे रामकृष्णसमासे ऋरामस्य स्थाने आराम: स्यात् । होतायोताराविति—होता च पोता चेति विग्रह: । अत्र ऋरामान्त पोतृशब्दे परत्वे विद्यासम्बन्धो गम्यते, अतश्च ऋरामस्यारामादेश: । होत्रादय ऋत्विग्विशेषा हि विद्या सम्बन्धरूपेण निर्दिष्टा: प्राचीनै: । ते च यथा,—होतृ उद्गातृ श्रोतृ पोतृ प्रतिस्नातृ अग्रेस्तृ उन्नेतृ इति ऋदन्ता: । मातापितराबित्यादौ योनि सम्बन्ध: प्रसिद्ध: । अत्र पुत्र शब्दे परे इत्यत्र पुत्रवाचिनि परे इति च केषाञ्चिन्मतम् अत स्तन्मते दुहितात्मजौ इत्यपि सिध्यति ।

अमृता०—२२६. इन्द्रादेरिति । रामकृष्णसमासे यज्ञविषयक प्रसिद्ध युग्मत्वे सति उत्तरपदे परे इन्द्रादे: अरामस्य आरामादेश: स्यात् । इन्द्राबृहस्पती इति यज्ञेऽनयो: सह-दानं विहितमस्तीति प्रसिद्धयुग्मत्वमनयो: । एवं मित्रावरुणाविति । मित्र: सूर्य: । एवञ्च इन्द्रासोमौ इन्द्रावरुणौ सूर्याचन्द्रमसौ इत्याद्या ज्ञेया: । यज्ञप्रसिद्ध युग्मत्वाभावेतु—ब्रह्म-प्रजापती शिववैश्रवणावित्यादौ नाराम: ।

---

बाल०—ऋरामाद्विद्या । विद्यासम्बन्धे योनिसम्बन्धेच सति गम्यमाने वा ऋरामा-दुत्तरस्या: षष्ठ्या महाहरनिषेधो भवति । विद्यायोनिसम्बन्धे गम्यमाने स्वसृपत्योस्तु परयो: ऋरामादुत्तरस्या: षष्ठ्या महाहरनिषेधो वा भवति । होतु: शिष्य इति । अत्र उभयोरेव विद्यासम्बन्धो गम्यते । पितु: पुत्र इति अत्रो भयोरेव योनिसम्बन्धो गम्यते । ऋरामादिति किं मातुलपुत्र: । ननु अमरकोषे पितामह: पितृपितेति कथं भवतीति चेत्तत्रोच्यते पितृसम्बन्धिपिता पितृपिता इति मक्ष्यपदलोपी श्यामराम: । अथवा पित्रे पिता पितृपितेति केचित्तदविवक्षायाश्चे त्यनेन चतुर्थीकृष्णपुरुष: । यद्वा, सूत्रसिदमेक-वचन एव प्रवर्त्तत इति ज्ञेयं । ततश्च पितॄणां पिता पितृपितेति, पितॄणामिति आदराधिक्ये बहुवचनं । मातु: स्वसा मातृष्वसेति षत्वप्रकरणे सुषामादयश्चे ति निपातसूत्र वर्त्तते । तत्र अलुकि वेत्युक्तमतोऽलुक् । पक्षे विकल्पेन षत्वं लुक्पक्षेतु नित्यमिति । ऋरामादिति किं आचार्यस्वसा मातुलस्वसा उभयोरेवेति तत्सम्बन्धे विद्यायोनिसम्बन्धे स्यादिति महाहरनिषेध इति शेष: । होतृधनं पितृधनमिति । अत्र उत्तरपदे विद्यासम्बन्धो योनि-सम्बन्धश्च न गम्यते । अतो न महाहरनिषेध: ॥ २२४ ॥

बाल०—राम । अधिकारसूत्रमेतत् ॥ २२५ ॥

**२२७. अग्नीषोमावग्नीवरुणौ च ।**

साधू ।

**२२८. वृष्णीन्द्रे त्रिविक्रमाभावः ।**

अग्निसोमम् ।

**२२९. आग्नावैष्णव्यादयश्च ।**

---

**अमृता०**—२२७. अग्नीषोमेति । पूर्वत्र त्रिविक्रमः षत्वञ्च निपातफलम्, उत्तरत्र त्रिविक्रममात्रम् ।

**अमृता०**—२२८. वृष्णीन्द्र इति । स्पष्टम् । आग्निषौममिति—अग्निश्च सोमश्च अग्निसोमौ, तौ देवते अस्येत्यर्थे "सास्य देवते"ति केशवण स्तद्धितः । देवताद्वन्द्वे चेति उभयपदयोरादिसर्वेश्वरस्य वृष्णीन्द्रः । अत्र वृष्णीन्द्रसद्भावात् त्रिविक्रमाभावः, तत एव षत्वाभावश्च । एकयोगनिर्दिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिरिति न्यायात् । एवमाग्निवारुणमित्यादि ।

**अमृता०**—२२९. आग्नेति । आग्नावैष्णवीति—अग्निश्च विष्णुश्च अग्नाविष्णू, तौ देवतेत्यर्थे केशवणः, उतयस्येति गोविन्दः, देवताद्वन्द्वे इत्युभय पदयो वृ ष्णीन्द्रः,

---

**बाल०**—ऋरामस्या । विद्यासम्बन्धे योनिसम्बन्धेच गम्यमाने ऋरामान्ते सूत्रेच परे रामकृष्णसमासे ऋरामस्य स्थाने आरामो भवति । होतापोतारौ होता च पोता चेति विग्रहः । अत्र विद्यासम्बन्धो गम्यते । होत्रादय ऋत्विग्विशेषास्तेषां विद्यायाः सम्बन्धः, तेच कात्यायनसूत्रे दर्शिताः । तद्यथा । ब्रह्मोद्गातृसोतृ अध्वर्युब्राह्मणाच्छंशि प्रशोतृ श्रोतृ मैत्रावरुणि प्रतिष्णातृपोतृप्रतिहन्तृ आच्छावक अग्रेस्तृ अग्नीध्र ब्राह्मण्य ग्रावस्तुत् उन्नेतृ उन्नेस्तृन् वृणोतीति । माता च पिता चेति विग्रहः । अत्र योनिसम्बन्धो गम्यते । पितापुत्राविति । पिताच पुत्रश्चे ति विग्रहः । अत्रापि योनिसम्बन्धो गम्यते । पुत्रवाचकशब्दे परे ऋरामस्यारामो भवतीति केचित् तन्मते दुहितात्मजाविति तथाच पुत्रौतु दुहितात्मजाविति ॥ २२६ ॥

**बाल०**—इन्द्रा । रामकृष्णसमासे यज्ञप्रसिद्धयुग्मत्वे सति उत्तरपदे परे इन्द्रादेररामस्यारामो भवति । यज्ञप्रसिद्धयुग्मत्वे इति पूर्वोत्तरपदयोरिति शेषः । इन्द्रावृहस्पती इति इन्द्रश्च वृह स्पतिश्चे ति विग्रहः । यज्ञे अनयोः सहदानमुक्तं । एवं मित्रावरुणाविति । मित्रः सूर्यः । इत्यादीत्यादिपदेन इन्द्रासोमौ इन्द्रावरुणौ सूर्याचन्द्रमसौ इत्यादिच ज्ञेयं । यज्ञप्रसिद्धयुग्मत्वाभावेतु ब्रह्मप्रजापती स्कन्दविशाखावित्यादि ॥ २२७ ॥

**बाल०**—अग्नी । वृत्तिमाह साधू इति । अग्नीषोमाविति अग्निश्च सोमश्चेति विग्रहः । अत्र त्रिविक्रमविधानं षत्वञ्च निपातफलं । अग्नीवरुणाविति अग्निश्च वरुणश्चेति विग्रहः । अत्र त्रिविक्रमविधानमेव निपातफलं । अग्नेरीत् सोमवरुणयोरिति जुमरसूत्रं ॥ २२८ ॥

साधवः । आग्नावैष्णवी क्रिया, आग्नावैष्णवं हविः । आग्नेद्रो यागः । द्यावाधरण्यौ, द्यावाभूमी, दिवस्पृथिव्यौ, द्यावापृथिव्यौ, उषसानक्तं, उषसासूर्यं, मातरपितरावित्यादि । मातापितरावित्ति पूर्वेण । अदन्तत्वान्निपातस्य मातरपितराभ्यामिति भाष्यम् । मातरपितृभ्यामित्यन्ये । कुशलवौ कुशीलवौ वा ।

**२३०. जायायाः पत्यौ जम्भावो दम्भावश्च वा ।**

**जम्पती दम्पती जायापती । रामकृष्ण इति निवृत्तम् ।**

---

केशवत्वादीप् लक्ष्म्याम् । अत्र इरामस्यारामो निपात कार्यम् । आग्नेन्द्र इति—अग्निश्च इन्द्रश्च अग्नीन्द्रौ, तौ देवते अस्येति केशवणः, नेन्द्रस्य परस्येति इन्द्रशब्दस्यादिसर्वेश्वरस्य न वृष्णीन्द्रः, किन्तु पूर्वपदस्यैव वृष्णीन्द्रः । अत्र च पूर्ववन्निपात फलम् । द्यावाधरण्याविति —द्यौश्च धरणी चेति विग्रहः । दिवो द्यावादेश इह निपातफलम् । एवं द्यावाभूमी द्यावापृथिव्याविति च । दिवस्पृथिव्यावित्यत्र दिव् शब्दस्य दिवस्भावो निपातफलम् । उषसानक्तमिति उषश्च नक्तञ्चेति विग्रहः । इह सान्तस्याप्यारामान्तत्वं निपातकार्यम् । उषसासूर्यमिति—उषश्च सूर्यश्चेति विग्रहे रामकृष्णे समाहारः, पूर्ववन्निपातफलम् । उषः प्रभातकालः । मातरपितराविति—अत्र मातृशब्दस्य मातरादेशो निपातात् । पूर्वेणेति—ऋरामस्याराम ऋरामान्तपुत्रयो रिति पूर्वसूत्रेणेत्यर्थः । अदन्तत्वादिति—पूर्वोत्तरयो ऋरामस्य अर आदेश इति भाष्येउक्तम्, अतोभ्यामि अकारान्तशब्दवत् त्रिविक्रमो भवतीति तन्मतम् । मातरपितृभ्यामित्यन्य इति—तन्मते पूर्वपदस्थस्यैव ऋरामस्य अर आदेशो न तूत्तर पदस्येति । कुशलवाविति सिध्यत्येव, कुशीलवावित्यत्र अरामस्य ईरामो निपातफलम् ।

**अमृता०**—२३०. जायाया इति । रामकृष्णे पतिशब्दोत्तरपदे जायाया जमादेशो दमादेशश्च वा स्यात् । जाया च पतिश्चेति विग्रहे पदत्रयम् । "दम्पती जम्पती जायापती भार्यापती च तौ" इत्यमरः ।

---

**बाल०**—वृष्णी । वृष्णीन्द्रे सति त्रिविक्रमोभावो भवति, त्रिविक्रमो न तिष्ठतीत्यर्थः । आग्निसोममिति अग्निसोमौ देवते अस्य इत्यर्थे सास्य देवतेत्यनेन केशव-णः । आदिसर्वेश्वरस्य वृष्णीन्द्रः, वृष्णीन्द्रसद्भावात् त्रिविक्रमाभावः देवताद्वन्द्वे । चेत्यत्र सूक्तहविषोरेवाभिधानमित्युक्तमतो नात्र उभयोः पदयोर्वृष्णीन्द्रः । सूक्तहविषोस्तु-आग्निसोममिति । जुमरे आग्निसोममिति न भवति, किस्त्वाग्नीषोममिति । आग्निसोम-मित्यषत्वमितिच जुमरमतं । एवमाग्निवारुणमिति ।। २२९ ।।

**बाल०**—आग्ना । वृत्तिमाह साधव इति । आग्नावैष्णवी क्रियेति अग्निश्च विष्णुश्च अग्नाविष्णू तौ देवते अस्या-इत्यर्थे केशव-णः उद्वयस्य गोविन्दः इत्यादिना गोविन्दः, उभयोः पदयोर्वृष्णीन्द्रः केशवत्वादीप् । अत्र इरामस्यारामविधानं । उभयपदवृष्णीन्द्रश्च

## २३१. त्रिविक्रमः ।

प्रभुरयम् ।

## २३२. लक्षणस्य कर्णे, नतु रिष्टाष्टपञ्चभिन्नच्छिन्नच्छिद्रस्त्रुव स्वस्तिकादीनाम् ।

---

अमृता०—२३२. लक्षणस्येति । कर्णशब्दे परे लक्षणस्य त्रिविक्रमः स्यात्, किन्तु तस्मिन् परे रिष्टाद्यष्टानां त्रिविक्रमो न भवति । रिष्टादीनामपि लक्षणत्वात् दीर्घत्वे प्राप्ते प्रतिषेधः । लक्षणमिह कृत्रिमंगृह्यत इति—पशूनां स्वामिना सह सम्बन्ध ज्ञापनार्थं यत् दात्रादिचिह्नं क्रियते तदिह लक्षणमुच्यते नतु श्यामत्वदीर्घत्वादिकम् । दात्राकृती इति—क्वचिन्मध्यपदलोप इत्यनेनाकृतिपदस्य लोपः । द्व्यङ्गुला कर्ण इति—द्वयोरङ्गुल्योः समाहार इति द्व्यङ्गुलम्, संख्याव्ययाभ्यामङ्गुले रित्यनेन समासान्तोऽरामः । ततो द्व्यङ्गुलाकृती कर्णौ यस्येति विग्रहे पूर्ववदाकृते र्लोपः । रिष्टः खड्गः । लक्षणस्येति किम्—शोभनकर्णः ।

अमृता०—२३३. कोटरेति । कोटरवणादयः शब्दाः संज्ञायां त्रिविक्रमेण निपात्यन्त इत्यर्थः । कोटरावणमिति—कोटराणां वनमिति विग्रहे "अग्रे प्रभृतिभ्य एव वनस्य संज्ञायामि"ति णत्वं वक्ष्यते । एवं मिश्रकावणमित्यादयः । किंशुलुकागिरिरिति—किंशुलुकानां गिरि रिति षष्ठीकृष्णपुरुषः । किंशुलुकः पलाशवृक्षः । इत्यादिना—अञ्जनागिरिः

---

निपातफलं । आग्नावैष्णवं हविरिति देवताद्वन्द्वे चेत्यनेन उभयोः पदयोर्वृष्णीन्द्रः । अत्र इरामस्यारामविधानमेव निपातफलं । आग्नेन्द्रो याग इति । अग्निश्च इन्द्रश्च अग्न्येद्रौ तौ देवते अस्येत्यर्थे केशव णः । अत्रापि इरामस्यारामविधानमेव निपातफलं । द्यावाधरण्या-विति द्यौश्च धरणी चेति विग्रहः । अत्र निपातात् दिवो द्यावादेशः । एवं द्यावाभूमी इति । दिवस्पृथिव्याविति । द्यौश्च पृथिवी चेति विग्रहः । अत्र निपातफलं दिवसादेशः । द्यावा-पृथिव्याविति । अत्र द्यावादेशो निपातफलं । उषसानक्तमिति उषश्च नक्तञ्चेति विग्रहः । अत्र निपातात् उषस उषसादेशः । उषः प्रभातं । उषसासूर्यमिति उषश्च सूर्यश्चेति समाहारे रामकृष्णः । अत्रापि निपातात् उषस उषसादेशः । मातरपितराविति माता च पिता चेति विग्रहः । अत्र निपातात् मातुर्मातरादेशः । मातुर्मातरश्च पितरीति जुमरसूत्रं । मातापितरौ पितरौ मातरपितरौच तावित्यमरः । पूर्वेणेति सिद्धमिति शेषः । पूर्वेणेति पूर्वोक्तसूत्रेणेत्यर्थः । अदन्तत्वादिति । पूर्वोत्तरपदयोर्ऋकारस्यारादेश इति भाष्यं । अत उक्तं अदन्तत्वान्निपातस्येति । जुमरेऽपि पितुश्च पितर इति क्षपणक इत्युक्तं । कुशश्च लवश्चेति विग्रहे कुशलवाविति सिध्यत्येव, पक्षे कुशीलवावित्यपि भवतीति सूत्रार्थः ।।२३०।।

बाल०—जाया । व्यक्तार्थमेतत् । जम्पती इति जायाच पतिश्चेति विग्रह । एवं दम्पती इति । दम्पती जम्पती जायापती भार्यापती च तावित्यमरः ।। २३१ ।।

बाल०—त्रिवि । अधिकारसूत्रमेतत् ।। २३२ ।।

लक्षणमिह कृत्रिमं गृह्यते। दात्राकृती कर्णौ यस्य स दात्राकर्णः। द्व्यङ्गुलाकर्णः। नेह— रिष्टकर्णः।

**२३३. कोटरावणादयः संज्ञायाम्।**

कोटरावणं मिश्रकावणं सिध्रकावणं पुरगावणं शारिकावणं किंशुलकागिरि रित्यादि।

**२३४. ईशान्तस्य वहे नतु पीलोः।**

ऋषीवहं कपीवहम्। नेह पीलुवहम्।

**२३५. शुनो दन्तदंष्ट्राकर्णेषु, पदपुच्छयो र्वा।**

---

कुक्कुटागिरिः रोहितागिरिः पिङ्गलागिरि रित्यादयो ज्ञेयाः। संज्ञायामिति किम्—कोटरैर्युक्तं वनं कोटर वनमिति त्रिविक्रम-णत्वाभावः।

**अमृता०**—२३४. ईशान्तस्येति। वह शब्दे परे ईशान्तस्य त्रिविक्रमः स्यात्, किन्तु पीलु शब्दस्य त्रिविक्रमो नभवति। ऋषीवहमिति—ऋषेः वहमिति षष्ठीसमासः। वह शब्दः पचादेरत् प्रत्ययान्तः। पीलुवहमिति—पीलुशब्दोऽत्र हस्ति वाची। द्रुमप्रभेद मातङ्ग काण्ड पुष्पानि पीलव इत्यमरः।

**अमृता०**—२३५. शुन इति। दन्त दंष्ट्रा कर्णेषु परेषु पूर्वपदस्थस्य शुनस्त्रिविक्रमः

---

**बाल०**—लक्ष। कर्णशब्दे परे लक्षणस्य त्रिविक्रमो भवति, लक्षणं चिह्नं। नतु। कर्णे परे रिष्टादीनान्तु त्रिविक्रमो न भवति। एतेषां लक्षणत्वात् त्रिविक्रमः स्यादिति निषेधविधानं। लक्षणमिह कृत्रिमं गृह्यते इति। पशूनां स्वामिविशेषसम्बन्धज्ञापनार्थं यत् दात्राकारादि क्रियते तदिह लक्षणं गृह्यते। नान्यत् श्यामत्वमहत्त्वदीर्घशृङ्गत्वादीत्यर्थः। दात्राकृती इति। दात्राकृतिरिव आकृतिर्ययोरिति विग्रहः क्वचिन्मध्यपदलोप इत्युक्तं अत आकृतिरिवेत्यस्य लोपः। ययोरिति सप्तमीद्विवचनान्तं। दात्राकर्ण इति। अत्र आकृतिपदस्य लोपः। दात्रमिव कर्णे चिह्नं यस्य स दात्राकर्णो गौरिति जुमरः। द्वयोरङ्गुल्योः समाहार इति संख्याव्ययाभ्यामङ्गुलेरित्यनेन अराम: समासान्तः। ततश्च द्व्यङ्गुलाकृती कर्णौ यस्येति विग्रहः। लक्षणस्येति किं शोभनकर्णः। रिष्टकर्ण इति। एवं अष्टकर्णः पञ्चकर्णः भिन्नकर्णः छिन्नकर्णः छिद्रकर्णः स्रवकर्ण स्वस्तिककर्ण इति॥ २३३॥

**बाल०**—कोट। संज्ञायां कोटरावणादयस्त्रिविक्रमेण निपात्यन्ते। कोटरावणमिति कोटराणां वनमिति षष्ठीसमासः। कोटरैर्युक्तं वनमिति तृतीयामध्यपदलोपी समासो वा। अग्रेप्रभृतिभ्यः एव वनस्य संज्ञायामित्यनेन णत्वं। एवं मिश्रकावणमित्यादि। कोटरादेर्वन इति जुमरसूत्रं। कोटरामिश्रकासिध्रकाशारिकापुरगाश्च पञ्चामी। किंशुलुकागिरिरितिच षष्ठीसमासः। इत्यादीत्यादिपदेन अञ्जनागिरिः भञ्जनागिरिः कुक्कुटागिरिरिति। किंशुलुकादेर्गिराविति जुमरसूत्रं। किंशुलुकाञ्जनलोहितभञ्जनकुक्कुटाश्च पञ्चैव॥ २३४॥

श्वादन्त इत्यादि । तथा श्वापदः श्वपदः ।

**२३६. अष्टनः संज्ञायाम् ।**

अष्टावक्र ऋषिः, अष्टापदं सुवर्णम् ।

**२३७. विश्वस्य वसुराटोः ।**

विश्वावसुः, विश्वाराट् विश्वाराट्ट् । टान्तनिर्देशान्नेह—विश्वराड् विश्वराजौ ।

**२३८. विश्वानरोनाम्निः, विश्वामित्र ऋषौ ।**

साधू ।

---

स्यात्, पदपुच्छयोः परयो स्तु शुन स्त्रिविक्रमो वा भवति । श्वादन्त इति—शुनो दन्त इति षष्ठी समासः । इत्यादि पदेन श्वादंष्ट्रा श्वाकर्ण इति । श्वाकुन्दः श्वावराह इति च वार्त्तिककारः । श्वापद इति शुनः पद इति विग्रहः । एवं श्वापुच्छः श्वपुच्छ इति च ।

**अमृता०**—२३६. अष्टनइति । संज्ञायां विषये पूर्वपदस्थस्य अष्टन् शब्दस्यत्रिविक्रमः स्यात् । अष्टावक्र इति—अष्टौ वक्राण्यस्येति यथाकथञ्चिद् विग्रहे पीताम्बरः, नामान्तस्य नस्य हरः, तत स्त्रिविक्रमः ।

**अमृता०**—२३७. विश्वस्येति । वसु-राटोः परयोः पूर्वपदस्थविश्वस्य त्रिविक्रमः स्यात् । विश्वावसुरिति—विश्वं वसु अस्येति विग्रहः । विश्वाराटिति—विश्वस्मिन् राजत इति विग्रहे क्विप्, छशो राजित्यादिना षत्वम्, षस्य डः, डस्य टः, विरामे द्वित्वश्च । नेहेति—त्रिविक्रमो न, टान्तत्व विरहादित्यर्थः ।

**अमृता०**—२३८. विश्वेति स्पष्टम् । विश्वानरः कस्यचिन्नाम । अनाम्नितु—विश्वस्य नरो भूषणं विश्वनरः साधुजनः । ऋषौ वाच्ये विश्वामित्रः साधुः । विश्वं मित्रं यस्येति विग्रहः । ऋषाविति किम्—विश्वमित्रो भक्तिमान् ।

---

**बाल०**—ईशा । बहशब्दे परे ईशान्तस्य त्रिविक्रमो भवति, पीलोस्तु न भवति । ईषीबहमिति षष्ठीसमासः । बहशब्दोऽत्प्रत्ययान्तः पचादेरदिति अत्सूत्रं । एवं कपीबहमिति । द्रुमप्रभेदमातङ्गकाण्डपुष्पाणि पीलवः । इति नानार्थवर्गः । पील्वादेस्त्रिविक्रमो न भवतीति जुमरमतं । अतस्मन्मते चारुवहं दारुवहमित्यादिच ज्ञेयं ॥ २३५ ॥

**बाल०**—शुनो । दन्तादिषु परेषु शुनस्त्रिविक्रमो भवति । पदपुच्छयोः परयोः शुनस्त्रिविक्रमो वा भवति । श्वादन्त इति शुनो दन्त इति विग्रहः । इत्यादीत्यादिपदेन श्वादंष्ट्रा अश्वाकर्ण इति । जुमरमते श्वाकूर्द्ध इतिच भवति । वराहेऽपि त्रिविक्रमो भवति इत्येके वदन्ति । अतस्तन्मते श्वावराहाविति । श्वापदं श्वपदमिति शुनः पदमिति विग्रहः । एवं श्वापुच्छः श्वपुच्छ इति ज्ञेयं ॥ २३६ ॥

**बाल०**—अष्ट । संज्ञायां विषये अष्टनस्त्रिविक्रमो भवति । अष्टावक्र इति इति अष्टौ वक्राण्यस्येति पीताम्बरः । एवं अष्टापदमिति ॥ २३७ ॥

**२३९. अथ वामनः ।**

प्रभुरयम् ।

**२४०. ईशस्य वोत्तरपदे, ईवव्ययसेयुवो विना ।**

विश्वनिभक्तः विश्वनीभक्तः, गोपवधुरमणः गोपवधूरमणः, ब्रह्मबन्धुपुत्रः ब्रह्मबन्धुपुत्रः । ईवादेस्तु—गोपीनाथः, कृष्णीभूतं, श्रीकुलं, भ्रूकुलम् ।

**२४१. ईवापोः संज्ञायां बहुलम् ।**

रोहिणिपुत्रः रोहिणीपुत्रः, वैदेहिपुत्र वैदेहीपुत्रः, शिलवहं शिलावहं नाम

---

**अमृता०**—२३९. अथेति । प्रभुनामाधिकारोऽयम् ।

**अमृता०**—२४०. ईशस्येति । उत्तरपदे परे ईवव्ययसेयुवो विना ईशान्तस्य वामनो वा स्यात् । विश्वनिभक्त इति—विश्वन्यो भक्त इति षष्ठी समासः । गोपवधुरमण इति—गोपवध्वा रमण इति षष्टी समासः । एवं ब्रह्मबन्धु पुत्र इति च । अत्र बधू बन्धू ऊङन्तौ । प्रत्युदाहरति—ईवादेस्त्विति । इय् च उव् च इयुवौ, ताभ्यां सह वर्त्तमाना इति सेयुवः, ईप् च अव्ययश्च सेयुवश्चेति ईवव्ययसेयुव स्तान् शब्दान् विनेति विग्रहार्थौ । गोपीनाथ इति—गोपीशब्द ईवन्तः । कृष्णीभूतमिति—अकृष्णं कृष्णं भूतमिति अभूत तद्भावार्थे कृभ्वस्ति योगे वि प्रत्ययस्तद्धितः, तस्य च सर्व इत्, अद्वयस्य वावीराम इत्यरामस्य ईरामः । विप्रत्ययान्तस्याव्ययत्वान्नात्र वामनः । श्रीकुलं भ्रूकुलमित्येतयोः सेयुवत्वान्न वामनः ।

**अमृता०**—२४१. ईवापो रिति । संज्ञायां विषये बहुलं यथास्यात्तथा ईप आपश्च वामनः स्यात् । बहुलमित्यनेन प्रवृत्त्यप्रवृत्तिविभाषान्यरूपो श्चत्वारो भेदा अत्रैव दर्श्यन्ते । तत्राद्युदाहरणत्रये विभाषा । रोहिण्याः पुत्र इति विग्रहः । बलराम इत्यर्थः । वैदेहिपुत्र इति-विदेह राजस्य जनकस्य अपत्यं स्त्री वैदेही श्रीसीता, तस्याः पुत्रः कुशो लवश्चेत्यर्थः ।

अथाप्रवृत्ति दर्शयति—क्वचिन्नैवेति । नान्दीघोष इति—नान्दीरथः, नान्द्योक्ता मङ्गलवाग् वा, तस्य तस्या वा घोषः शब्दइत्यर्थः । अप्राप्तप्रवृत्तिमुदाहरति—मन्दुरज

---

**बाल०**—विश्व । वसुराटोः परयो विश्वस्य त्रिविक्रमो भवति । विश्वावसुरिति विश्वं वसु अस्येति पीताम्बरः विश्वाराडिति विश्वस्मिन् राजते इति क्विप छशो राजेत्यादिना जस्य षत्वं ततः यस्य डत्वं डस्य टत्वं । नेहेति त्रिविक्रम इति शेषः ।। २३८ ।।

**बाल०**—विश्वा । नाम्नि विषये विश्वानरः साधुः । विश्वानर इति विश्वेनरा यस्येति विग्रहः । विश्वानरः कश्चित् । अनाम्नितु विश्वनरो राजा । ऋषौ वाच्ये विश्वामित्रः साधुः । विश्वामित्र इति विश्वं मित्रं यस्येति विग्रहः । ऋषाविति किं । विश्वमित्रो ब्राह्मणः । साधू इति एतौ विश्वानर-विश्वामित्रो साधू इत्यर्थः ।। २३९ ।।

**बाल०**—अथ । अधिकारसूत्रमेतत् ।। २४० ।।

नगरम्। क्वचिन्नैव,—नान्दीघोष। क्वचिदसंज्ञायाञ्च,— मन्दुरजः कलज्ञः। क्वचिदन्यथा च,—भ्रकुंशश्च भ्रुकुंशश्च भ्रूकंशश्चेति नर्त्तकः। एवं भ्रकुटि र्भ्रुकुटि र्भूकुटि रित्यादि।

## २४२. इष्टकेषीकामालानां चिततूलभारिषु।

**इष्टकचितं, इषीकतूलं, मालभारी। एवं पक्वेष्टकचितमित्यादि।**

---

इति। मन्दुरायां घोटकशालायां जात इत्यर्थे सप्तम्यन्त जनेरच् इत्यच् प्रत्ययः उपेन्द्रे-त्यादिना कृत् समासः। कलज्ञ इति—कलां जानातीति कर्मण्यनुपेन्दादारामात् इति कप्रत्ययः, पूर्ववत् समासः। अथान्यथात्वं दर्शयति—भ्रकुंशश्चेति। भ्रुवौ कुंशयति कुटिलयतीति पचादेरत् प्रत्ययः। अत्र ऊरामस्य अराम इत्यन्यथाभावः। भ्रुकुंश इत्यत्र वामनः, भ्रूकुंश इति यथास्थिति। नर्त्तक इति स्त्रीवेशधारी पुरुष इत्यर्थः। भ्रकुटिरिति भ्रुवः कुटिः कौटिल्यमिति विग्रहः। पूर्ववदन्यथाभावो वामनः स्वरूपावस्थितिश्च।

**अमृता०**—२४२. इष्टकेति। चित तूल भारिषुपरेषु इष्टकेषीकामालानां वामनो भवति। इष्टकचितमिति—इष्टकाभिश्चितमिति विग्रहे कर्त्तृकरणे कृतेति कृष्ण पुरुषः। ईषीकतूलमिति—इषिकाया स्तूलमिति विग्रहः। इषीका शर शलाका वीरणशलाका वा। माल भारीति—मालां विभर्त्तीति—अजातावनुपेन्द्रोपपदे णिनि स्ताच्छील्ये, जातावपि व्रताभीक्ष्णयो रित्यनेनव्रते आभीक्ष्णे वा णिनिः, उपेन्द्रे त्याविना कृत्समासः। लक्ष्म्यां—मालभारिणी गोपी। इष्टकादीनां तदन्तविधिरिष्यत इति ब्रूते—एवं पक्वेष्टकचित-मित्यादि। इत्यादि पदेन—मुञ्जेषीकतूलम्, उत्पलमालभारीति।

---

**बाल०**—ईश। उत्तरपदे परे ईवव्ययसेयुवो विना ईशस्य वामनो वा भवति। विश्वनिभक्तः विश्वन्यो भक्त इति विग्रहः। गोपेति गोपवध्वा रमण इति विग्रहः। ब्रह्मेति ब्रह्मबन्ध्वाः पुत्र इति विग्रहः। तथाच भारविः। परिणतजम्बुफलोपभोगतुष्टेति। ईशस्येति किं राधाहस्तः। गोपीनाथ इति गोप्या नाथ इति विग्रहः। गोपीशब्दः ईवन्तः। कृष्णीभूतं इति अकृष्णं कृष्णं भूतमित्यर्थे अभूततद्भावे कृभ्वस्तियोगे विरिति विः। विः सर्व इत् अद्वयस्य वा ईरामः इत्यनेन अरामस्य ईरामः अव्ययत्वान्नात्र वामनः। श्रीकुलं भ्रूकुलमिति षष्ठीसमासः॥ २४१॥

**बाल०**—ईवा। संज्ञायां विषये बहुलं यथा स्यात्तथा ईश आपश्च वामनो भवति। रोहिणिपुत्रः रोहिण्याः पुत्र इति विग्रहः। बहुलमित्युक्तमतो रोहिणीपुत्र इतिच। वैदेहिपुत्र इति वैदेह्याः पुत्र इति विग्रहः। बहुलग्रहणात् वैदेहीपुत्र इति च। शिलवहमिति शिलां वहतीति पचादेरत् इत्यनेन अत्। बहुलमित्यस्य अपरं फलमाह क्वचिन्नैवेति। क्वचिद्वामनो नैव भवतीति। नान्दीघोष इति नान्द्या घोष इति विग्रहः। बहुलमित्यस्य फलान्तरमप्याह क्वचिदिति। क्वचिदसंज्ञायाञ्च वामनो भवति। मन्दुरज इति मन्दुरायां जात इति सप्तम्यन्ते जनेरच इत्यनेन अच् उपेन्द्रेत्यादिना समासः। वाजिशालातु

**२४३. उक्तपुरुषोत्तमस्येवन्तस्यानेक सर्वेश्वरस्य ब्रुव-मत-हत-गोत्रेषु ।**

ब्रुवो निन्द्यः । ब्राह्मणि ब्रुवा, वैष्णविमता, वैष्णविहता, गोपिगोत्रा । नेह—तुलसीमता ।

**२४४. अनीवन्तगोप्या एकसर्वेश्वरेवन्तस्य च ब्रुवादिषु वा ।**

---

**अमृता०—२४३.** उक्तेति । उक्तः तुरुषोत्तमो यस्य स उक्तपुरुषोत्तमः, यस्यपुंसि रूपं वर्त्तत इत्यर्थः, भाषित पुंस्क इति यावत् । पुनः कथम्भूतस्य ? अनेक सर्वेश्वरोऽस्ति यस्य तादृशस्य ईवन्तस्य ब्रुवादिषु परेषु वामनः स्यात् । ब्राह्मणिब्रुवेति—ब्राह्मणी चासौ ब्रुवा चेति विग्रहः । ब्रुवेति—ईशोद्धवेत्यादिना ब्रूञ् धातोः कप्रत्ययः, पश्चादाप् । एवं वैष्णविमता वैष्णविहतेति च । गोपिगोत्रेति—गोप्या गोत्रमिव गोत्रं यस्या इति विग्रहः । ब्राह्मणी वैष्णवी गोपी शब्दानां पुरुषोत्तमे ब्राह्मण प्रभृति रूपमस्तीतिवामनत्वमेषाम् । नित्यस्त्रीत्वे तु नेत्याह—तुलसीमतेति । एवं धात्री वाणीत्यादीनाञ्च न वामनः । ईवन्तस्येति किम्-सेनानीमता ।

**अमृता०—२४४.** अनीवन्तेति । ईवन्तेतरगोपीसंज्ञाया स्तथा एकसर्वेश्वरेवन्तस्य च ब्रुवादिषु परेषु वामनो वा स्यात् । पूर्वेणाप्राप्ते विभाषेयम् । गोपेति—गोपवामोरू

---

मन्दुरेत्यमरः । कलज्ञ इति कलां जानातीति कर्मण्यनुपेन्द्रादारामात्क इत्यनेन कः उपेन्द्रेत्यादिना समासः । बहुलग्रहणस्य अन्यदपि फलमाह क्वचिदन्यथा चेति । क्वचिदन्यप्रकारश्च भवति । भ्रकुंश इति भ्रुवौ कुंशयतीति पचादरत् इत्यनेन अत् । अत्र ऊरामस्य अरामः । भ्रुकुंश इति, अत्र वामनः । भ्रूकुंश इति, अत्र उरामस्यैव स्थितिः । नर्त्तका इति प्रमादपाठः नर्त्तक इति ज्ञेयं । भ्रकुंशश्च भ्रुकुंशश्च भ्रूकुंशश्चेति नर्त्तकः । स्त्रीवेशधारी पुरुष_ । इत्यमरात् । भ्रकुटिरिति भ्रुवो कुटिरिति विग्रहः । कुटिः । कौटिल्यं । अत्र ऊरामस्यारामः । भ्रकुटिरित्यत्रतु वामनः । भ्रूकुटिरित्यत्र ऊरामस्यैव स्थितिः । भ्रकुटिर्भ्रूकुटिः स्त्रिय इत्यमरः । अमरकोषेतु भ्रूकुंशभ्रूकुटिशब्दौ दीर्घान्तपूर्वपदवसाधू इति जुमरः ॥ २४२ ॥

**बाल०—**इष्ट । चिततूलभारिषु परे इष्टकेषीका-मालानां वामनो भवति । इष्टकचितमिति इष्टकाभिश्चितमिति विग्रहः । कर्त्तृकरणे कृतेत्यनेन कृष्णपुरुषः । इषीकतूलमिति इषीकायास्तूलमिति विग्रहः । इषीका शरशलाका काशशलाका वीरणशलाकाच । मालभारीति अजातावनुपेन्द्रोपपदे णिनिस्ताच्छील्ये जातावपि व्रताभीक्ष्ण्ययोश्च कर्मुपमाने चेत्यनेन व्रते आभीक्ष्ण्ये वा णिनिः, उपेन्द्रेत्यादिना समासः । एवमिति पक्वेष्टकाभिश्चितमिति विग्रहः । इत्यादीत्यादिपदेन मुञ्जेषीककृततूलं । मल्लिकामालभारीतिच । मल्लिकामालभारिण्यः सर्वाङ्गीनार्द्रचन्दना इति दण्डी । पक्वेष्टकचितमित्यादिसिध्यर्थं जुमरे तदन्तस्य चेति पृथक् सूत्रं कृतं ॥ २४३ ॥

गोपवामोरुमता गोपवामोरूमता । स्त्रिमता स्त्रीमता । एवं हतादौ ॥

**२४५. कृद्गोप्या निषेधः ॥**

लक्ष्मीमता ।

**२४६. चतुर्भुजानुबन्धगोप्याः पुरुषोत्तमवत्त्वञ्च वा ॥**

विदुषिमता विदुषीमता विद्वन्मतेत्यादि । उक्तो वामनः ।

**२४७. अथ पुरुषोत्तमवत् ।**

प्रभुरयम् ॥

---

शब्द ऊङन्तः, ईऊ लक्ष्मी गोपीसंज्ञेति गोपीत्वम् । स्त्रिमतेति स्त्रीशब्द ईवन्त एकसर्वेश्वर विशिष्टश्चेति विभाषा ।

**अमृता०**—२४५. कृदिति । ब्रुवादिष परेषु कृद्गोप्या वामन निषेधः स्यात् । अनीवन्त गोप्या इत्यनेन विकल्पे प्राप्ते प्रतिषिद्धम् । लक्ष्मीमतेति—लक्षे मुँट् चेति कृत् प्रकरणे लक्ष्मीशब्दो निष्पन्नः । एवं तरीमता अवीमता इत्यादौ च न वामनः, तथा श्रीमता ह्रीमतेत्यादौ च न ।

**अमृता०**—२४६. चतुर्भुजेति । चतुर्भुजोऽनुबन्धो यस्य तादृशगोप्याः पुरुषोत्तमवत्त्वञ्च वा स्यात्, चकाराद् वामनश्च वा भवति ब्रुवादिषु परेषु । विदुषि मतेति—विदुषी चासौ मता चेति श्यामरामः । विद्वसुशब्दादीप् प्रत्ययः । अत्र वामनः, तदभाव विदुषीमतेति । विद्वन्मतेति तु पुरुषोत्तमवत्त्वपक्षे । ध्वंसुस्रंसु वस्वनडुहां दो विष्णुपदान्त इति सस्य दः । शतृ क्वसु वसु ईयसु प्रभृतय श्चतुर्भुजानुबन्धाः प्रत्ययाः । तत्र वेत्तेः शतुर्वसु र्वेत्यनेन यो विद्वसुशब्दः सिद्धस्तस्योदाहरणमिदम् । अन्येषाञ्च यथा,—पचन्तिब्रुवा, पचन्तीब्रुवा, पचद् ब्रुवा, भेजुषिमता, भेजुषीमता, भेजिवन्मता, श्रेयसिमता, श्रेयसीमता, श्रेयोमतेत्यादयः ।

---

**बाल०**—उक्त । व्यक्तार्थमेतत् । ब्राह्मणिब्रुवेति । ब्राह्मणी चासौ ब्रुवा चेति विग्रहः । वैष्णविमतेति वैष्णवी चासौ मता चेति विग्रहः । एवं वैष्णविहतेति गोपिगोत्रेतिच । गोपीगोत्रमिव गोत्रमस्या इति विग्रहः । तुलसीमतेति श्यामरामः, तुलसीशब्दस्य उक्तपुरुषोत्तमवत्त्वं नास्तीति न वामनः । ईवन्तस्येति किं भीरुमता । अनेकसर्वेश्वरस्येति किं वीमता ॥ २४४ ॥

**बाल०**—अनी । एतदपि व्यक्तार्थं । अप्राप्ते विभाषेयं । गोपेति गोपवामोरूशब्द ऊङ्प्रत्ययान्तः । स्त्रिमतेति स्त्रीशब्द ईवन्तः ॥ २४५ ॥

**बाल०**—कृद्गोप्या । ब्रुवादिषु कृद्गोप्या वामननिषेधो भवति । अनीवन्तेत्यादिना विकल्पेन प्राप्ते निषेधः । लक्ष्मीमतेति लक्ष्मीशब्द ईप्रत्ययान्तः, ईप्रत्ययः कृत् ॥ २४६ ॥

**बाल०**—चतु । चतुर्भुजानुबन्धगोप्या वामनः पुरुषोत्तमवत्त्वञ्च वा भवति । विदुषीमतेति श्यामरामः । अत्र न वामनः नापि पुरुषोत्तमवत्त्वं । विदुषिमतेति वामनपक्षे,

२४८. वाच्यलिङ्गलक्ष्मीस्तुल्याधिकरणलक्ष्म्यां, नतूङ् न च पूरणी-प्रियादिषु ।

पुरुषोत्तमवत् स्यात् । तत्र श्यामरामे, उत्तरगोपी । पीताम्बरे, वैष्णवभार्यः । सन्निहितस्यैव स्यात्—मृद्वी पट्वचौ भार्ये यस्य स मृद्वीपटुभार्यः । वाच्यलिङ्गेति किम्—वनमालाशोभः । तुल्येति किम्—कल्याणीमाता । लक्ष्म्यामिति किम्—गोपीजनः । नतूङ् किम्—गोपवामोरूरमणकः । नच पुरण्यादिषु । कृष्णा पञ्चमी रात्रि र्यासां रात्रीणां ताः कृष्णपञ्चमाः रात्रयः । तुल्यार्थान्यपदार्थत्व एव निषेधः, समासान्तोऽत् प्रत्ययश्च । अन्यत्र तु नतौ किन्तु कप् प्रत्ययः । कृष्णा पञ्चमी रात्रिर्यत्र पक्षे स कृष्णपञ्चमीकः पक्षः ।

अमृता०—२४८. वाच्येति । तुल्याधिकरणलक्ष्म्यां परस्यां वाच्यलिङ्गलक्ष्मीः पुरुषोत्तमवत् स्यात् । तत्र ऊङन्तलक्ष्मीस्तु पुरुषोत्तमवन्न भवति, तथा पूरणीप्रत्ययान्त शब्दे परे प्रियादिशब्देषु च परेषु पुरुषोत्तमवन्न भवति । उत्तरगोपीति—उत्तरा चासौ गोपी चेति विग्रहः । वैष्णवभार्य इति—वैष्णवी भार्या यस्येति विग्रहः । सन्निहितस्यैवेति—परवर्त्ति लक्ष्म्या निकट वर्त्तिन एव पुरुषोत्तमवत्त्वं स्यादित्यर्थः । मृद्वीपटुभार्य इत्यत्र भार्याशब्दसन्निहितस्य पट्वी शब्दस्यैव पुंवत्त्वं नतु दूरस्थस्य मृद्वी शब्दस्य । वनमाला शोभ इत्यत्र माला शब्दस्य वाच्यलिङ्गत्वाभावात् ( अर्थान्नित्य लक्ष्मीत्वात् ) न हि पुरुषोत्तमता । अत्र वाच्यलिङ्गेत्यस्य साफल्यं दर्शितम् ।

अन्यपदसाफल्यञ्चदर्शयति—तुल्येति किमिति । कल्याणीमातेत्यत्र तु कल्याण्या मातेति विग्रहः, मातृशब्दस्य लक्ष्मीत्वसद्भावेऽपि कल्याणीशब्देन सह तुल्याधिकरणत्वाभावान्न पुंवत्त्वम् । गोपीजन इति—गोपी चासौ जनश्चेति श्यामरामः । अत्र तुल्याधिकरणत्वमस्त्येव किन्तु जनस्य लक्ष्मीत्वाभावान्न पुंवत्त्वम् । गोतेति—गोप वामोरू रमणी यस्येति विग्रहः । वामोरू शब्द ऊङन्त इति पुंवत्त्वनिषेधः । ऋरामगोपी सर्पिरादिभ्य इत्यनेन कप् प्रत्ययस्तद्धितः । पञ्चमीति—पञ्चन् शब्दात् "तस्य पूरणे केशवाच्" इत्यच् प्रत्ययः, 'नान्तादसंख्यादेरमचि' इत्यमागमः, ततः पञ्चमशब्दादीप् । कृष्णा पञ्चमा इति—अत्र पूरणीप्रत्ययान्त पञ्चम शब्दपरत्वान्न पुंवत्त्वम् । लक्ष्मी पूरण प्रत्ययात् प्रमाणी शब्दाच्चेति अरामः समासान्तः । तुल्यार्थेति—तुल्यार्थः समानाभिधेयः अन्यपदार्थो यस्याः पूरण्याः सा तुल्यार्थान्यपदार्था, तस्या भाव स्तत्त्वम् तस्मिन् । अन्यपदार्थः पूरणी प्रत्ययान्तेन सह तुल्यार्थ श्चेत् तदैव पुंवत्त्वस्य निषेध इत्यर्थः ।

विद्वन्मतेति पुरुषोत्तमवत्त्वपक्षे । ध्वंसु-स्रंसु-वस्वनडुहां दो विष्णुपदान्ते इत्यनेन सरामस्य दः ॥ २४७ ॥

प्रियादौ,—कृष्णा श्यामवर्णा प्रिया यस्य स कृष्णाप्रियः । प्रियादयस्तु,—

प्रिया कान्ता दृढा भक्ति र्वामना दुहिता क्षमा ।
सुभगा दुर्भगा तद्वद् विदुषी चपलादयः ॥

## २४९. श्लिष्टप्रियादिषु च पुरुषोत्तमवत् ।

पूर्वनिषेधापवादोऽयम् । श्लिष्टप्रियः, विभुक्तकान्तः, दृढभक्तिः, प्रिय-दुहिता ।

---

नताविति—ननिषेधः, अत् प्रत्ययश्च किन्तु ऋराम गोपीत्यादिना कप् प्रत्ययः ? कृष्णा प्रिय इति—गोरीपआप इत्यादिना वामनः । चपलादय इति—आदिपदेन मनोज्ञा कल्याणी समा प्रभृते र्ग्रहणम् ।

**अमृता०**—२४९. श्लिष्टेति । व्यक्तार्थम् । श्लिष्टाप्रिय इति—श्लिष्टा प्रिया येनेति विग्रहः । विभुक्ता कान्ता येन स विभुक्तकान्तः, दृढा भक्ति र्यस्य स दृढभक्तिः, प्रिया चासो दुहिता चेति प्रियदुहिता । एवं मृगचपला, महाष्टमी, पुण्य नवमीत्यादि च । न च पूरणी-प्रियादिष्विति निषेधे प्राप्तेऽयमपवादविधि र्ज्ञेयः ।

---

**बाल०**—अथ । अधिकारसूत्रमेतत् ॥ २४८ ॥

**बाल०**—वाच्य । ऊङस्तु पुरुषोत्तमवन्न भवति । पुरणीप्रियादिषु परेषुच पुरुषोत्तमवन्न भवति । विधिसूत्रस्य वृत्तिमाह पुरुषोत्तमवत् स्यादिति । तुल्येति । तुल्याधिकरणलक्ष्म्यां परस्यामित्यर्थः । अत्र श्यामराम इति उदाहरणं दर्श्यते इति शेषः । एवं पीताम्बर इति । वैंष्णवभार्य इति । वैष्णवी भार्या यस्येति विग्रहः । सन्निहितस्यैव निकटवर्त्तिन एव स्यादिति पुरुषोत्तमवत्त्वं इति शेषः । सन्निहितैव स्यादिति वा पाठः । सन्निहितैव वाच्यलिङ्गलक्ष्मीः पुरुषोत्तमवत् स्यादित्यर्थः । मृद्वीपट्वाविति मृद्वीच पट्वीच इति विग्रहः । मृद्वीपटुभार्य इति अत्र पट्वीशब्दस्यैव पुरुषोत्तमवत्त्वं नतु मृद्वीशब्दस्य । वनमालाशोभ इति वनमाला शोभा यस्येति विग्रहः । वनमालाशब्दस्य वाच्यलिङ्गत्वं नास्तीति न पुरुषोत्तमवत्त्वं । तुल्यार्थेति किं इति । तुल्याधिकरणलक्ष्म्यामिति किमित्यर्थः । कल्याणीमातेति कल्याण्याः मातेति विग्रहः । अत्र मातृशब्दस्य लक्ष्मीत्वमस्त्येव, किन्तु तुल्याधिकरणत्वं नास्तीति न पुरुषोत्तमवत्त्वं । गोपीजन इति श्यामरामः । अत्र जन-शब्दस्य तुल्याधिकरणत्वमस्ति, किन्तु लक्ष्मीत्वं नास्तीति न पुरुषोत्तमवत्त्वं । गोपेति गोपवरोरूः रमणी यस्येति विग्रहः । ऋरामगोपीसर्पिरादिभ्य इत्यनेन कप् । कृष्णेति पञ्चमीत्यस्य विशेष्यमाह रात्रिरिति । कृष्णा पञ्चमी यासामित्येव विग्रहः । कृष्णापञ्चमा इति पञ्चम्यत्र पुरणी । अतो न पुरुषोत्तमवत्त्वं लक्ष्मीपूरणप्रत्ययात् प्रमाणीशब्दाच्च इत्यनेन अरामः समासान्तः । तुल्यार्थेति । तुल्यार्थः समानाभिधेयोऽन्यपदार्थो यस्याः सा तुल्यार्थान्यपदार्था तस्याभावस्तत्त्वं तस्मिन् । तुल्यार्थान्यपदार्थत्व एवेति पूरण्या इति शेषः । निषेध इति पुरुषोत्तमवत्त्वस्येति शेषः । अन्यत्र त्विति तुल्यार्थान्यपदार्थत्वाभावे

## २५०. कृष्णनामवृत्तिमात्रे ।

वृत्तिमात्रमेकपदत्वं, तत्र पुंवत् । सर्वासां प्रियः सर्वप्रियः । एवमन्यतनयः, तन्मुखं, एकक्षीरम् । नकृष्णनाम द्वन्द्व इति कृष्णनामत्व निषेधात्, कथं दक्षिणोत्तरपूर्वाणां, पूर्वदक्षिणपश्चिमा इति ? तत्र न पुंवद्भाववर्जं कार्यमिति कातन्त्रविस्तरः । भवतीप्रसादादित्यत्र व्यभिचारोऽपीष्यते ।

## २५१. कुक्कुट्यादयोऽण्डादिषु ।

कुक्कुट्या अण्ड कुक्कुटाण्डम् । एवं मृगपदं, मृगक्षीरं, काकशावकः ।

---

**अमृता०**—२५०. कृष्णेति । वृत्तिमात्रे एकपदत्वे समासे इत्यर्थः, कृष्णनाम पुंवत् स्यात् । अन्यतनय इति अन्यस्याः तनय इति विग्रहः । एवं तस्या मुखं तन्मुखं, एकस्याः क्षीरं एकक्षीरमिति । श्यामरामस्त्वत्र नेष्ट, पुंवत्त्वोदाहरणाचरितार्थत्वात् । आशङ्के—कथमित्यादि । कथं पुंवद्भावः स्यादित्याशङ्कापक्षः । तत्र हेतुः—कृष्णनामत्वनिषेधादिति । समाधातुं प्राचीन वचनमुद्धरति—तत्र ने त्यादि । तत्र द्वन्द्वे पुंवद्भावं वर्जयित्वा अन्यत्यत् कार्यं ( कृष्णनामकार्यं ) तन्न स्यादित्यर्थः । अतो द्वन्द्व समासे पुंवत्त्वरूपकृष्णनामकार्यं भवत्येवेति कातन्त्रविस्तराशयः, स एव प्रकृतसिद्धान्त इति भावः । व्यभिचार इति पुरुषोत्तमवत्त्वस्येति शेषः । भवतीप्रसादादिति प्रयोग आर्ष इति केचित् । एवञ्च ' एकोऽहं भवतीसुतक्षयकरोमातः कियन्तोऽस्य'' इति वेणीसंहार प्रयोगः प्रामाणिक एवेत्याहुः ।

**अमृता०**—२५१. कुक्कुटीति । अण्डादिषु परेषु कुक्कुटीप्रभृतयः पुरुषोत्तमवद् भवन्ति । मृगपदमिति मृग्याः पदमितिविग्रहः । एवं मृगक्षीरमित्यादि च ।

---

त्वित्यर्थः । तौ निषेधात् प्रत्ययौ । कृष्णापञ्चमा रात्रय इत्यत्र पुरणी तुल्यार्थान्यपदार्थी अतो निषेधात् प्रत्ययौ । कृष्णपञ्चमीकः पक्ष इत्यत्रतु पुरणी तुल्यार्थान्यपदार्थी अतो निषेधात् प्रत्ययौ, किन्तु ऋरामगोपीसर्पिरादिभ्य इत्यनेन कप् । कृष्णाप्रिय इति गोरीप आप इत्यादिना वामनः । प्रियादयस्त्विति । प्रियादयस्तु एते । प्रियाकान्ताद्दृढादयः । चपलादय इत्यादीत्यादिपदेन मनोज्ञा कल्याणी सचिवास्वासमानां ग्रहणं । जुमरादौ विदुषी क्षमाच न दृश्यते ।। २४९ ।।

**बाल०**—श्लिष्ट । वृत्तिमाह पुरुषोत्तमवदिति स्यादिति शेषः । श्लिष्टप्रियादिषु प्रयोगेषु उत्तरपदे परे पुरुषोत्तमवत् स्यादित्यर्थः । पूर्वेति पूर्वोक्तस्य निषेधस्य अपवादो बाधकोऽयं योग इति । पूर्वनिषेधापवाद इत्यत्र निषेधापवाद इति वा पाठः । श्लिष्टप्रिय इति शिष्टा प्रिया येनेति विग्रहः । विमुक्तकान्त इति विमुक्ता कान्ता येनेति विग्रहः । दृढेति दृढा भक्तिरस्येति विग्रहः । प्रियेति प्रिया दुहिता यस्येति विग्रहः । श्लिष्टप्रियादिषु नतूङो नच पूरणीप्रियादिष्वित्यनेन निषेधः स्यात् ।। २५० ।।

## २५२. प्राप्तापन्ने अपि ।

प्राप्ता गोपिकां प्राप्तगोपिका, एवमापन्नगोपिका । अपि शब्दात् द्वितीया भिक्षायाः द्वितीयभिक्षा इत्याद्यपि ।

## २५३. न संज्ञापूरण्यौ णक स्तद्धितकरामोद्धवश्च ।

आख्यातकृत्तद्धितेषु च निषेधोऽयम् । एवमुत्तरत्र । दत्ता भार्या यस्य

---

**अमृता०**—२५२. प्राप्तेति । प्राप्तापन्ने अपि पुरुषोत्तमवद् भवतः परपदे सतीति शेषः । प्राप्तगोपिकेति प्राप्तापन्ने द्वितीययेत्यनेन कृष्णपुरुषः । अपि शब्दात् तुल्याधिकरण लक्ष्म्याः परत्वाभावेऽपि पुंवत्त्वं केषाञ्चिदिष्टमित्युदाहरति—द्वितीया भिक्षाया इति । द्वितीयतृतीय चतुर्थ तुर्यतुरीय तलाग्रादयश्च वेत्यनेन व्यधिकरण श्यामरामः ।

**अमृता०**—२५३. न संज्ञेति । संज्ञापूरण्यौ पुरुषोत्तमवन्न भवतः, णकप्रत्ययान्तस्तथा करामोद्धवतद्धितश्च पुरुषोत्तमवन्न भवति । तद्धितेति—तद्धिते कराम उद्धवो यस्य स तद्धितकरामोद्धवः । आख्यात कृत्तद्धितेषु चेत्यत्र चशब्दात् समासे तुल्याधिकरणलक्ष्म्यामित्याकृष्यते, आख्याताादिषु परेषु चेत्यर्थः । एवमुत्तरत्रेति—वक्ष्यमाण निषेधाश्च तुल्याधिकरणलक्ष्म्यामाख्यात कृत्तद्धितेषु परेषु च ज्ञेया इत्यभिप्रायः । योगरूढिरिति—योगिकत्वेऽपि रूढित्वं यथा पङ्कजशब्दः । तथा केनचिज्जनेनदत्तेति योगार्थः, दत्तेति तस्या नाम चेति रूढ्यर्थश्च । एवं गुप्तेति कस्याश्चिन्नाम, केनापि सा लुक्कायिता चेति योगरूढित्वम् । दत्तायत इति—दत्तेवाचरतीत्यर्थे दत्ता शब्दात् क्यङ् । वाच्यलिङ्गलक्ष्मीः पुरुषोत्तमवत् क्यङ्मानिनो णौ चेति विहितस्य पुंवत्त्वस्यायं निषेधः । इह पुंवत्त्वे कृतेऽपि दत्तायते इत्येव पदं स्यात्, ततो निषेध सार्थकता तु रुक्मिणीयते इत्यादावेव बोध्या । कृति परे चोदाहरणं यथा—दत्तामानिनीत्यादि ।

---

**बाल०**—कृष्ण । वृत्तिमाह वृत्तीति । अत्र पुम्बदिति स्यादिति शेषः । पुम्वदित्यत्र पुरुषोत्तमवदिति वा पाठः । अन्यतनय इति अन्यस्यास्तनय इति विग्रहः । तन्मुखमिति तस्या मुखमिति विग्रहः । एकेति एकस्याः क्षीरमिति विग्रहः । न कृष्णनामेति । दक्षिणेति । दक्षिणाच उत्तराच पूर्वा चेति विग्रहः । पूर्वेति पूर्वाच दक्षिणाच पश्चिमा चेति विग्रहः । कथं पुम्वद्भावो भवत्वित्ययमत्र विरोधः । पूर्वदक्षिणपश्चिमा इत्यमरकोषोक्तमिति ज्ञेयं । सिद्धान्तमाह तत्रेति । तत्र द्वन्द्वे पुम्बद्भावं वर्जयित्वा कार्यं कृष्णनामकार्यं न स्यात् । पुम्बद्विषये तत् कार्यं भवतीति कातन्त्रविस्तरः । अतो पुम्बद्भावो भवत्येवेति न कश्चिद्विरोधः । भवतीप्रसादादिति । भवत्याः प्रसाद इति विग्रहः । व्यभिचार इति पुरुषोत्तमवत्त्वस्येति शेषः ॥ २५१ ॥

**बाल०**—कुक्कुट्या । अण्डादिषु परेषु कुक्कुट्यादयः पुरुषोत्तमवद्भवन्ति । मृगपदमिति मृग्याः पदमिति विग्रहः । एवं मृगक्षीरमिति । काकशावक इति काक्याः शावक इति विग्रहः । शावकः शिशु । (छागदुग्ध) ॥ २५२ ॥

स दत्ताभार्यः। योगरूढिरेषा दत्तेति। एवं गुप्ताभार्यः। दत्तायते। तद्धिते तु वक्ष्यमाणविधेर्निषेधः। दत्ताकल्पा, दत्तापाशा। एवं पञ्चमीभार्य इत्यादि।

णकः—गोपिकाभार्यः। तद्धितः—मद्रिकाभार्यः। णकस्तद्धित इति किम्—जल्पाकभार्यः।

## २५४. न वृष्णीन्द्रहेतु तद्धितलक्ष्मीररक्तविकारयोः।

वक्ष्यमाणविधेरिति—"वाच्यलिङ्गलक्ष्मीः पुरुषोत्तमवत् त्रादिषु नतूङि" इति यद् विधानं तद्धिते वक्ष्यते तस्यायं निषेध इत्यर्थः। तत्र त्रतसी तरतमौ चरट् जातीयौ कल्प-देश्य देशीया रूप पाशौ त्रादय इति च वक्ष्यते। तेन दत्ताकल्पा दत्तापाशा इत्यादौ पुंवत्त्वे प्राप्ते निषिध्यतेऽनेन। संज्ञायामेव आख्यातादद्युदाहरणप्रपञ्चो दर्शितः, पञ्चमीभार्य इति पूरण्या उदाहरणम्। तस्याश्च प्रपञ्चो यथा—आख्याते पञ्चमीयते, कृति पञ्चमी-मानिनी, तद्धिते—पञ्चमीतः पञ्चमीदेश्या इत्यादि, तथा सप्तमीभार्यः, सप्तमीयते इत्यादि च ज्ञेयम्। गोपिकाभार्य इति—गोपिकेति गुप गोपने धातो र्णक प्रत्ययः, लक्ष्म्यामापि कृते अरामस्य इरामः। मद्रिकेति—मद्रशब्दात् संज्ञायां कप्रत्यय स्तद्धितः, पूर्ववदिरामः। णकस्तद्धित इति किमिति—करामोद्धव इत्येवनिषेधसूत्रलक्षणमस्तु किं तद्धित ग्रहणेनेति संशयपक्षः। जल्पाकभार्य इति जल्पाकी भार्या यस्येति विग्रहः। जल्पभिक्ष कुट्टेत्यादिना आकट् प्रत्ययः कृत्। तद्धितेति विशेष्यमनुक्त्वा केवलं करामोद्धव इत्युक्ते तु अत्रापि पुंवत्त्वस्य निषेधः स्यादिति दोष आपद्येतेति भावः।

अमृता०—२५४. नवृष्णीन्द्रेति। वृष्णीन्द्रहेतु र्य स्तद्धित स्तस्माद् विहितो लक्ष्मी-प्रत्ययः पुरुषोत्तमवन्न भवति। रक्तार्थे विकारार्थे तु तादृशलक्ष्मीः पुरुषोत्तमवत् स्यादेवे-त्यर्थः। यादवीति यदुशब्दात् केशवणः, णित्वादादि सर्वेश्वरस्य वृष्णीन्द्रः, उरामस्य गोविन्दः, केशवत्वादीप् वक्ष्यते। माथुरीमानिनीति,—आत्मानं माथुरीं मन्यत इत्यर्थे—

बाल०—प्राप्ता। प्राप्तापन्ने अपि परपदे पुरुषोत्तमवद्भवतः। प्राप्तगोपिकेति प्राप्तापन्ने द्वितीययेत्यनेन कृष्णपुरुषः। आपन्नगोपिकेति आपन्ना गोपिकामिति विग्रहः। द्वितीयभिक्षेति, द्वितीयतृतीयचतुर्थतुर्यतुरीयतनाप्रादयश्च वेत्यनेन कृष्णपुरुषः। इत्यादी-त्यादिपदेन शिष्टप्रयोगानुसारेण अन्यत्रापि पुरुषोत्तमवत्त्वं ज्ञेयं॥ २५३॥

बाल०—न संज्ञा। संज्ञादयः पुरुषोत्तमवन्न भवति। आख्यातकृत्तद्धितेषु चेत्यत्र चशब्दात् तुल्याधिकरणलक्ष्म्यां आख्यातकृत्तद्धितेष्वपि परेष्वित्यर्थः। आख्यातकृदित्यत्र आख्याततद्धितयोश्च इत्येव पाठो ज्ञेयः। यतः कृत्प्रकरणे कृदन्ते परे पुरुषोत्तमवत्त्वस्य विधिसूत्रं न दृश्यत इति। किन्त्वाख्यातप्रकरणे नामधातुगणे वाच्यलिङ्गलक्ष्मीस्तुल्याधि-करणलक्ष्म्यां क्यङ्मानिनोनौ चेत्यत्र सूत्रे मानिन् दृश्यते सतु कृदिति गोस्वामिपादेनात्र कृदिति गृहीतमिति। एवमुत्तरत्रेति तस्माद्वक्ष्यमाणनिषेधोऽपि तुल्याधिकरणलक्ष्म्यां

यादवीभार्यं, माथुरीमानिनी। वृष्णीन्द्रेति किम्—मध्यमभार्य। अरक्त-विकारयोरिति किम्—कौङ्कुमपटीकः, लौहेशो रथः।

## २५५. न जाति-स्वाङ्गाभ्यामीप्।

—'मन्यतेः खश् णिनी आत्ममनने' इत्यनेन णिनिः, ऋरामाच्चतुर्भुजानुबन्धान्नरामादित्यादिना ईप्। माथुरीति मथुरायां भवा इत्यर्थे केशवणः, पूर्ववद् वृष्णीन्द्र ईप् च। मध्यमभार्थ इति—मध्यमा भार्या यस्येति विग्रहः। मध्यमेति मध्यशब्दात् तत्रभवार्थे केवलः अरामो मुमागमेन निपात्यते, तत आप्। अत्र तद्धित प्रत्ययस्य वृष्णीन्द्रहेतुकत्वाभावान्ननिषेधः। कौङ्कुमपटीक इति—कौङ्कुमी पटी यस्येति विग्रहः। कौङ्कुमीति कुङ्कुमेन रक्ता इत्यर्थे—तेन रक्तं रागादिति केशवणः। लौहेश इति—लौही ईशा यत्रेति विग्रहः। लौहीति लोहस्य विकार इत्यर्थे—तस्य विकार इति केशव णः। ईशा रथावयवविशेषा। उभयत्र वृष्णीन्द्रहेतु तद्धितलक्ष्मीत्वेऽपि रक्त विकारार्थत्वान्न हि पुंवत्त्व निषेधः। निषेधेतु सति लौहीशा इत्येवं रूपं स्यात्। एवमुत्तरत्र इत्युक्तित आख्यातादावपि यथा—यादवीयते, यादवीमानिनी, यादवीकल्पेत्यादि।

**अमृता०**—२५५. नजातीति। जातिस्वाङ्गाभ्यामीवन्तः पुरुषोत्तमवन्न भवति। गोपीभार्य इति—गोपीभार्या यस्येति विग्रहः। गोपीति जातिवाचकाद् गोपशब्दाद् ईप्। सुकेशीति—स्वाङ्गवाचकात् सुकेश शब्दात् "स्वाङ्गाद् वा" इत्यनेन ईप्। अत्रापि निषेधो

---

आख्यातकृत्तद्धितेषु प्रवर्त्तत इति भावः। योगरूढिरिति। एकस्याः एव नाम सा केनापि दत्ता चेति योगरूढित्वं। एवमिति गुप्ता भार्या यस्येति विग्रहः। गुप्तेत्यकस्या नाम सा केनापि लुक्कायिताच। कृदन्ते उदाहरणमत्र ग्रन्थकृता न दत्तं। तत्तु दत्तामानिनीति ज्ञेयं। दत्तायत इति दत्तेवाचरति इति दत्ताशब्दात् क्यङ् वाच्यलिङ्गलक्ष्मीः पुरुषोत्तमवत् क्यङ् मानिनोर्नौ चेत्यनेन विहितस्यापि पुरुषोत्तमवत्त्वस्य निषेधः। दत्तायत इति पुरुषोत्तमवत्त्वे कृतेऽपि भवति। निषेधस्य प्रयोजनन्तु रुक्मिणीयते पञ्चमीयत इत्यादौ विद्यत एवेति ज्ञेयं। तद्धिते त्विति तद्धितप्रकरणे वाच्यलिङ्गलक्ष्मीपुरुषोत्तमवत्रादिषु नतूङि सूत्र वक्ष्यते तस्यापि निषेधोऽयं। त्रतसीतरतमौ चरड्जातीयौ कल्पदेश्यदेशीया रूपपाशौ त्रादर इति वक्ष्यते। गोपिकाभार्य इति गोपिका भार्या यस्येति विग्रहः। अत्र पूरण्याः पुरुषोत्तमवत्त्वनिषेधः, इत्यादीत्यादिपदेन षष्ठीभार्यः सप्तमीभार्यः पञ्चमीयत इत्यादि ज्ञेयं। गोपिकाभार्य इति गोपिका भार्या यस्येति विग्रहः। गोपिकेति गुप गोपने णकतृणावित्यनेन णकः। लक्ष्म्यामपि कृते अरामस्य इरामः। मद्रिका भार्या यस्येति विग्रहः। मद्रिकेति मद्रशब्दात् कप्रत्ययस्तद्धितः, लक्ष्म्यामपि कृते अरामस्य इरामः। णकस्तद्धित इति किमिति करामोद्धव इत्येवास्त्विति शेषः। जल्पाकभार्य इति जल्पाकी भार्या यस्येति विग्रहः। जल्पाकीति जल्पभिक्षकुट्टलुण्टवृङ् आकट् इत्यनेन आकट् टित्त्वादीप्॥ २५४॥

**बाल०**—न वृष्णी। वृष्णीन्द्रहेतुस्तद्धितोऽन्तो यस्यास्तथाभूता लक्ष्मीः पुरुषोत्तमवन्न

गोपीभार्यः, सुकेशीभार्यः, गोपीयते ।

**२५६. मानिनि न निषेधः ।**

ब्राह्मणमानिनी, सुकेशमानिनी ।

**२५७. अनूङो न ते निषेधाः श्यामरामे, जातीय-देशीययोश्च ।**

कृष्णपञ्चमी, कृष्णप्रिया, दत्तभार्या, पञ्चमभार्या, गोपकभार्या, मद्रकभार्या, यादवभार्या, गोपभार्या, सुकेशभार्या । जातीय-देशीयौ तद्धितौ ।

---

ऽयमाख्यात कृत्तद्धितेषु च ज्ञेयः । तत उदाहृतमाख्याते—गोपीयत इति । एवं तद्धिते च गोपीकल्पेत्यादि । कृति तु पुंवद्भाव इष्ट इत्याचष्टे,—

**अमृता०**—२५६. मानिनीति स्फुटम् । ब्राह्मण मानिनीति—आत्मानं ब्राह्मणीं मन्यत इत्यर्थे पूर्ववत् णिनिः । एवं सुकेशमानिनीति च ।

**अमृता०**—२५७. अनूङइति । श्यामराम समासे ऊङन्तभिन्ना स्ते पूर्वोक्ता निषेधा न भवन्ति, तत्र तत्र पुंवद्भावो भवत्येवेत्यर्थः । तथा जातीयदेशीययोश्च प्रत्यययोः परयो स्ते निषेधा न स्युः । तत्रादौ निषेध विषयान् दर्शयति—कृष्णपञ्चमीत्यादि । कृष्णा चासौ

---

भवति । अरक्तविकारयोरिति रक्ते विकारे चार्थे यदा वृष्णीन्द्रहेतुस्तद्धितः क्रियते, तदा निषेधो न भवतीत्यर्थः । यादवीभार्य इति यादवी भार्या यस्येति विग्रहः । यादवीति यदुशब्दात् केशवणस्तद्धितः, आदिसर्वेश्वरस्य वृष्णीन्द्रः उरामस्य गोविन्दः । केशवत्वादीप् । माथुरीमानिनीति आत्मनं माथुरीं मन्यते इति मन्यतेः खश् णिनी आत्ममनने इत्यनेन णिनी । माथुरीति मथुरायां भवा इत्यर्थे केशवणस्तद्धितः । मध्येति मध्ये भवा मध्यमा सा भार्या यस्येति विग्रहः । अत्र वृष्णीन्द्रलक्ष्मीत्वाभावात् पुम्वद्भावः । निषेधोऽयं आख्यातेच प्रवर्त्तते अतो यादवीयते माथुरीयते इत्याद्यपि । कौङ्कुमपटीक इति कौङ्कुमी पटी यस्येति विग्रहः । कौङ्कुमीति कुङ्कुमेन रक्ता इत्यर्थे तेन रक्तं रागादित्यनेन केशवणः । लौहेश इति लौही ईशा यत्रेति विग्रहः । लौहीति लोहस्य विकार इत्यर्थे तस्य विकार इत्यनेन केशवणः, ईशात्र रथावयवविशेषः । वृष्णीन्द्रहेत्विति किं । वैयाकरणभार्यः वैयाकरणी भार्या यस्येति विग्रहः । वैयाकरणीति व्याकरणमधीते वेद वा इत्यर्थे तदधीते वेद वा इत्यनेन केशवणः वृष्णीन्द्रस्थानचतुःसनादेशविष्णुपदान्तयोर्द्वारादिस्थयोश्च वृष्णीन्द्रं निषिध्य यवरामयोरैयौवौ नतु स्वागतादरित्यनेन यरामस्य ऐय ।। २५५ ।।

**बाल०**—न जाति । व्यक्तार्थमेतद् । गोपीभार्य इति गोपी भार्या यस्येति विग्रहः । गोपीति जातिवाचकाद्गोपशब्दादीप् । सुकेशीभार्य इति सुकेशी भार्या यस्येति विग्रहः । सुकेशीति स्वाङ्गाद्वेत्यनेन ईप् । गोपीयते इति निषेधोऽयं आख्यातेच प्रवर्त्तते । अतोऽत्रापि पुरुषोत्तमवत्त्वस्य निषेधः ।। २५६ ।।

कृष्णजातोयेत्यादि, कृष्णदेशीयेत्यादि । ऊङस्तु निषेधएव,—गोपवरोरू रमणी । इति पुंवद्भावः ।

**२५८. गोत्र याप ईः पुत्र-पत्योः कृष्णपुरुषे न च वामनः पीताम्बरे तु बन्धौ, मातृक-मातृ-मातेषु वा ।**

कारीषगन्ध्यायाः पुत्रः कारीषगन्धी पुत्रः । एवं कारीषगन्धी पतिः कृष्णपुरुषे किम्—कारीषगन्ध्यापति र्ग्रामः । तथा कारीषगन्धी बन्धुः,

---

पञ्चमी चेति विग्रहः । एवं सर्वत्रोदाहरणे श्यामराम स्तद्विग्रहश्च योज्यः । अत्र कृष्ण-प्रियेत्यत्र च—'नच पूरणीप्रियादिषु' इति निषेधे प्राप्ते पुनस्तन्निषेधेनानेन विधानमर्थात् पुंवत्त्वमेव प्रापितमितिभावः । दत्तभार्यादि चतुर्षु—'न वृष्णीन्द्रहेतुतद्धित लक्ष्मीरित्यादिना निषेधः प्राप्तः, गोपभार्यादिद्वये—न जातिस्वाङ्गाभ्यामित्यनेन । कृष्णजातीयेति—'प्रकारवती'त्यादिना प्रकारार्थे जातीय प्रत्ययः । कृष्णेति संज्ञा, यमुना द्रौपदी वा, तत् प्रकारेत्यर्थः । इत्यादि शब्देन—गोपकजातीया, यादवजातीया, ब्राह्मणजातीया, सुकेश जातीयेत्यादि । कृष्णदेशीयेति—ईषदसमाप्तौ कल्पदेश्यदेशीया इत्यनेन देशीयप्रत्ययः । इहापि कृष्णेति संज्ञा बोध्या । इत्यादिना गोपक देशीयेत्याद्युन्नेयम् । गोपवामोरूरमणीति श्यामरामः, पीताम्बरेऽपि नास्य पुंवत्वमिति दर्शितमेव प्राक् ।

**अमृता०**—२५८. गोत्रेति । कृष्णपुरुष समासे पुत्र-पत्योः परयोः गोत्रयापः स्थाने ईरामादेशो भवति नतु वामनः । पीताम्बरसमासे तु बन्धु शब्दे परेगोत्रयापः स्थाने ईरामः स्यात् वामनो न स्यात् । पीताम्बर समासे मातृक मातृ-मातेषु परेषु गोत्रयाप ईरामो वा भवति, न च वामनः । गोत्र याप इति गोत्र प्रत्ययान्ताद् याप इत्यर्थः । कारीषगन्ध्याया इति—करीषः शुष्कगोमय इव गन्धो यस्य स करीषगन्धः, तस्य गोत्रापत्यं कारीषगन्धः, तदिताण् प्रत्ययः । ततो—"गुरूपोत्तमाभ्यामनार्षाभ्यां गोत्र-विहिताणिण् प्रत्ययाभ्यां याप्" इति यावन्तेन कारीषगन्ध्या शब्दे निष्पन्ने षष्ठी कृष्ण पुरुषे याप ईरामे कृते—ईशस्य वोत्तरपदे ईवव्ययसेयुवो विनेति यद् वामनत्वं प्राप्तं तन्निरासार्थमिह—नच वामन इति निषेधः । एवं कारीष गन्धीपतिरिति । कारीषगन्धी बन्धुरिति—कारीषगन्ध्या बन्धुर्यस्येति विग्रहः । हे कारीषगन्धीमातृकेति—कारीषगन्ध्या माता यस्येति विग्रहः, ऋराम गोपीत्यादिना कप् प्रत्ययः । अत्र याप ईरामो विभाषया ।

---

**बाल०**—मानि । एतदपि व्यक्तार्थं । ब्राह्मणमानिनीति आत्मानं ब्राह्मणीं मन्यते इति णिनिः । सुकेशमानिनी आत्मानं सुकेशीं मन्यते णिनिः ॥ २५७ ॥

**बाल०**—अनू । श्यामरामसमासे ते पूर्वोक्ता निषेधा अनुङो न भवन्ति । अनूङ इति उङ्भिन्नस्येत्यर्थः । जाती । जातीयदेशीययोश्च परयोस्ते निषेधा न भवन्ति । कृष्णपञ्चम्यादिषु श्यामरामः कर्त्तव्यः । कृष्णपञ्चम्याद्युदाहरणद्वये नतूङो नच पूरणी

हे कारीषगन्धीमातृक हे कारीषगन्ध्यामातृकेत्यादि । मातृपक्षे कप्रत्ययाभावस्तु निर्देशबलादेव ।

## २५९. महतः संसारस्याराम एकाधिकरण-जातीययोः, घास-कर-विशिष्टेषु च पुरुषोत्तमवच्च ।

इत्यादि पदेन हे कारीषगन्धीमातः, हे कारीषगन्ध्या मातः, हे कारीषगन्धीमात, हे कारीषगन्ध्या मातेति । मातृपक्षइति—हे कारीषगन्धीमातरित्यादि युग्मे ऋरामान्तत्वात् ऋरामगोपीत्यादिना प्राप्तः कप् प्रत्यय इह न भवति, सूत्रे मातृ निर्देशसामर्थ्यादित्यर्थः । समासान्त विधेरनित्यत्वादिति च वक्तुं शक्यते । अन्तिमद्वये तु—"बुद्धेतु मातृकस्य मातादेशो वाच्यः पूज्यपुत्रे वाच्ये" इत्यरामान्त एव मातादेशः ।

**अमृता०**—२५९. महतइति । एकाधिकरणे शब्दे परे जातीये प्रत्यये च परे महतः संसारस्य आराम आदिश्यते । तथा घासकर विशिष्टेषु च परेषु महतः संसारस्याराम आदिश्यते, महच्छब्दो लक्ष्मीश्चेत्तदा तस्य पुरुषोत्तमवत्वञ्च भवति । महादेव इति तुल्याधिकरणे श्यामरामः । महाभुज इति समानाधिकरणे पीताम्बरः । महतः प्रकार इत्यर्थे

प्रियादिष्वित्यनेन निषेधे प्राप्ते निषेधविधानं । दत्तभार्यादिचतुर्षु न संज्ञापूरण्यावित्यादिना निषेधे प्राप्ते निषेधविधानं । यादवभार्या इत्यत्र न वृष्णीन्द्रहेतुतद्धितान्तेत्यादिना निषेधे प्राप्ते निषेधविधानं गोपीभार्याद्युदाहरणद्वयेन जातीत्यादिना निषेधे प्राप्ते निषेधविधानं । अनुङ् इत्यत्र जातीयेति दत्ता प्रकारवतीत्यर्थे प्रकारवतीजातीय इत्यनेन जातीयस्तद्धितः । अत्र न संज्ञापूरण्यावित्यादिना निषेधे प्राप्ते निषेधविधानं । कृष्णजातीयेत्यादि इति पाठो बहुषु पुस्तकेषु दृश्यते नतु दत्तजातीयेति । यद्येवं तदा कृष्णेति गुणवाचिका किन्त्वत्रापि संज्ञैवेति ज्ञेयं । कृष्णात्र यमुना द्रौपदी वा । इत्यादीत्यादिपदेन गोपकजातीया यादवजातीया इत्यादि दत्तदेशीयेति ईषदसमाप्तौ कल्पदेश्यदेशीया इत्यनेन देशीयस्तद्धितः । अत्रापि न संज्ञेत्यादिना निषेधे प्राप्ते निषेधविधानं । कृष्णदेशीयेत्यादि इत्यत्रापि संज्ञैव नत्व येति । आदिपदेन गोपदेशीयेत्यादि । गोपवरोरूरमणीति श्यामरामः ॥ २५८ ॥

**बाल०**—गोत्र । कृष्णपुरुषसमासे पुत्रपत्योः परयोर्गोत्रयापः स्थाने ईर्भवति नच वामनः । पीता । पीताम्बरसमासेतु बन्धौ परे गोत्रयापः स्थाने ईर्भवति नच वामनः । मातृ । पीताम्बरसमासे मातृकमातृमातेषु परेषु गोत्रयापः स्थाने ईर्वा भवति नच वामनः । कारीषगन्ध्याया इति अणप्रत्ययान्तात् कारीषगन्धशब्दात् । गोरूपोत्तमाभ्यामनार्षाभ्यां गोत्रविहिताणिञ्प्रत्ययाभ्यां याप् इत्यनेन याप् । करीषगन्धीपुत्र, इति ईरामे कृते ईशस्य वोत्तरपदे ईवव्ययसेयुवः विनेत्यनेन वामनः स्यादिति तन्निरासार्थं निषेधविधानं । एवं कारीषगन्धीपतिरिति । कारीषेति कारीषगन्ध्याः पतिर्यत्रेति विग्रहः । तथेति कारीषगन्ध्या बन्धुर्यत्रेति विग्रहः । हे कारीषगन्धीमातृकेति कारीषगन्ध्या माता यस्येति विग्रहः ।

**महांश्चासौ पुरुषश्च महापुरुषः । महादेवः । महान् भुजोऽस्य महाभुजः । महाजातीयः । महतीप्रिया यस्येत्यादौ नेष्यते, लिङ्गविशिष्टग्रहणस्य प्रायिकत्वादिति जुमरः । महतीप्रियः ।**

---

जातीय प्रत्यये महाजातीयः । अत्र जातीयस्य पृथगुपादानादेकाधिकरणत्वाभावेऽपि आरामादेशप्रवृत्तिः । ननु यद्यपि घाषादिषु हि पुंवद्भाव उक्तस्तथापि नाम्नो ग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति न्यायेन एकाधिकरणे स्त्रीलिङ्गस्यापि महच्छब्दस्य संसारस्यारामो भवत्विति चेत्तन्निरस्यति—लिङ्गविशिष्टस्येति । प्रायिकत्वादनित्यत्वादित्यर्थः । पुंवद्भावनिषेधविषयेतु नाराम इति जुमराशयः । नच पूरणीप्रियादिषु इति पुंवत्वनिषेधस्य विषय एषः । कृते त्विह आरामे स्त्रीप्रत्ययार्थो गुप्तः स्यादित्येव तत्र वीजं ज्ञेयम् । महतीप्रियइति गोरीप आप इत्यादिना वामनः ।

---

ऋरामगोपीसर्पिरादिभ्य इत्यनेन कप् । इत्यादीत्यादिपदेन हे कारीषगन्धीमातः हे कारीषगन्ध्यामातरिति हे कारीषगन्धीमात हे कारीषगन्ध्या मातेति । कारीषगन्धी मातरित्यादौ मातृपक्षे कप्प्रत्ययाभावस्तु सूत्रे मातृनिर्देशसामर्थ्यात् न केवलमयमेव हेतुः, किन्तु समासान्तप्रत्ययस्यानित्यत्वाच्च । कारीषगन्धीमातेत्यत्रतु बुद्धेतु मातृकस्य मातादेशो वाच्यः । पूज्यपुत्रे वाच्ये मातृकस्य मातादेशः ।

"चैतन्याख्यं जगन्नाथं नित्यानन्दं जगद्गुरुं ।
नत्वादौ तत्प्रसादेन सर्वसिद्धिं लभामहे ॥ १ ॥
गुरुं हरिं रूपसनातनौच श्रीभट्टयुग्मं रघुनाथदासं ।
श्रीजीवदेवं परमादरेण निपत्य भूमौ शिरसा नमामि ॥ २ ॥
हरिनामामृतं वन्दे शब्दशासनवारिधिं ।
यस्य सन्दर्शनात् स्पर्शादधमोऽप्युत्तमो भवेत् ॥ ३ ॥
सर्वान् जीवयते यो हि वैष्णवांश्च विशेषतः ।
भक्तिशास्त्रविभागेन स जीवः कथ्यते बुधैः ॥ ४ ॥
हरते या हरेश्चित्तं हरा सा राधिकोच्यते ।
तस्या इर्व्रजकन्दर्पः कृष्ण इत्याभिधीयते ॥ ५ ॥
तस्मिन् कृष्णं मनःसत्वं नित्यं यस्य स उच्यते ।
हरेकृष्णाभिधश्चास्मिन् स्वर्णमुख्यां प्रतिष्ठितः ॥ ६ ॥
परोपकारी शुद्धात्मा ग्रन्थपूर्णं विना किल ।
संसारविषयं हित्वा पितुः शापाद्व्रजं गतः ॥ ७ ॥
तस्य कीर्त्तिं हरेर्नाम्नोऽमृतस्य शब्दशासने ।
बालानां तोषणीं नाम्ना टीकां वै स्वप्रयत्नतः ॥ ८ ॥
बह्वायासात् समाहृत्य क्रमं कृत्वा विशुध्यच ।
भ्रातरं श्रीलगोविन्ददासाख्यं स्वं समन्वयात् ॥ ९ ॥

**२६०. अभूत तद्भावे व्यभिचारः ।**

महद्भूतो विधुः। घासादौ—महतोमहत्या वा घासः महाघासः ।

**२६१. द्व्यष्टनोः संसारस्यारामो दशादौ प्राक्शतात्, त्रेस्त्रयस्, नवतिपर्यन्त चत्वारिंशदादिषु तु वा, नतु पीताम्बराशीत्योः ।**

---

**अमृता०**—२६०. अभूतेति । अभूततद्भावे तु व्यभिचारः स्यात्, महतः संसारस्यारामो न स्यादित्यर्थः । महद्भूत इति—अमहान् महान् भूत इत्यर्थे "अभूत तद्भावे कृभ्वस्ति योगे विः" इति विप्रत्ययः, केवलस्य प्रत्यय वेर्हर इति तस्य हरः । विधुश्चन्द्रः, महद्भूतोविधुरिति पौर्णमास्याश्चन्द्र इत्यर्थः । एवं महद्भूता ब्राह्मणीत्यत्र च नात्वम् । महाघास इति—एवं महाकरः महाविशिष्ट इति च । एकाधिकरण इति किम्—महतः पुत्रः महत् पुत्रः । महत्याः पुत्रः महतीपुत्र इत्यादौ तु नारामः ।

**अमृता०**—२६१. द्व्यष्टनोरिति । शतात् प्राक् पूर्ववर्त्तिनि दशदौ परे द्विशब्दस्य अष्टन् शब्दस्य च संसारस्य आरामो भवति, शतात् प्राक् दशादौ परे त्रि शब्दस्य त्रयस् इत्यादिश्यते, चत्वारिंशदादि नवति पर्यन्तेषु परेषु तु तत्तदादेशौ वा भवतः, पीताम्बर समासे तथा अशीति शब्दे परे चादिष्ट कार्ये न स्याताम् । दशादावित्यादि शब्देन विंशति त्रिंशतो रेव ग्रहणम् । पीताम्बरे निषेधात् समास सामान्ये चायं विधिरित्यायाति । तेन

---

पाठायामास कात्स्न्र्येन श्रीगोपीचरणाख्यया ।
सार्द्धं दासो वराकोऽपि स्ववाक्शुद्ध्यर्थिको मुदा ।। १० ।।

ततः परमभागवताग्रगण्य-श्रीमन्महामहोपाध्यायावलिनिषेविताङ्घ्यब्ज श्रीमज्जीव-गोस्वामिप्रभृतिगुरुणां चरणरजांस्यवलम्ब्यावशिष्टव्याख्यानायोद्यममिममाधुनिकोऽपि करोमि तत्प्रसादादयं पूर्णश्चेत्तदा तेषामेव महिमप्राबल्यं न चेत्तदा मम किं सामार्थ्यमिति ।। २५९ ।।

**बाल०**—महतः । एकाधिकरणे जातीयेच परस्मिन् महतः संसारस्य स्थाने अरामो भवति। एकं तुल्यमधिकरणं यस्येति विग्रहः। घास । घासश्च करश्च विशिष्टश्च ते घासकरविशिस्तेषु महतः संसारस्यारामः स्यात् लक्ष्मीश्चेत् पुरुषोत्तमवच्च पुरुषोत्तमवत्त्वेच संसारस्यारामः स्यादिति । महादेव इति महांश्चासौ देवश्चेति विग्रहः । महान् भुजोऽस्येति पीताम्बरेऽपि एकाधिकरणसम्भवात् महाभुज इति। महाजातीय इति। महतो महत्या वा प्रकारः महाजातीयः । जातीयादावसामानाधिकरण्येऽपि महतस्तयोराकारः पृथग्विधानादित्येके । महती प्रिया यस्येत्यादौ नेष्यते आराम इति शेषः । हेतुमाह लिङ्गेति । नाम्नो ग्रहणे लिङ्गविशिष्टग्रहणस्य प्रायिकत्वात् । बाहुल्यादिति जुमर आह, गोस्वामिपादानामप्येतदेव मतं जुमरमतेनैवोदाहरणदर्शनात् । महती प्रिया यस्येति विग्रहः । गोरीप इत्यनेन वामन इति ।। २६० ।।

द्वादश, अष्टादश, त्रयोदश, द्वाविंशति रित्यादि । तथा द्वाचत्वारिंशत् द्विचत्वारिंशदित्यादि । नेह द्विशतं द्विदशाः द्व्यशीतिरित्यादि ।

**२६२. संज्ञायाञ्च नेष्यते ।**

**द्विविंशतिः कश्चित् ।**

---

द्वादश इति द्वौ च दश चेति रामकृष्णः, तथा द्वाभ्यामधिका दश, दशभ्यः अधिकौ द्वौ इति वा विग्रहे मध्यपदलापी श्यामरामः । संख्यायामल्पीयस इति पूर्वनिपातः । एवमष्टादश त्रयोदश इति च । द्वाविंशतिरित्यत्रादिपदेन—अष्टाविंशतिः त्रयोविंशतिः, द्वात्रिंशत् अष्टात्रिंशत् त्रयस्त्रिंशदिति । एवमष्टाचत्वारिंशत् अष्ट चत्वारिंशत् त्रयश्चत्वारिंशत् त्रिचत्वारिंशत् । द्वापञ्चाशत द्विपञ्चाशत, अष्टापञ्चाशत् अष्टपञ्चाशत् त्रयः पञ्चाशत् त्रिपञ्चाशत् । द्वाषष्टिः द्विषष्टिः अष्टाषष्टिः अष्टषष्टिः त्रयः षष्टिः त्रिषष्टिः । द्वासप्ततिः द्विसप्ततिः अष्टसप्ततिः अष्टसप्ततिः त्रयः सप्ततिः त्रिसप्ततिः । द्वानवतिः द्विनवतिः अष्टा नवतिः अष्ट नवतिः त्रयो नवतिः त्रिनवति रिति । नेह द्विशतमिति—प्राक्शतादिति निर्देशादितिभावः ।

द्विदशाइति—द्वाभ्यां गुणिता दश इति पीताम्बरे अच् प्रत्ययान्तः । द्वशीतिरिति—द्वाभ्यां गुणिता त्रशीतिरिति पीताम्बरे, द्वाभ्यामधिकाअशीतिरिति मध्यपदलोपि श्यामराम च नारामः, अविशेषेण अशीते र्ग्रहणात् । इत्यादिना अष्टाशीतिः त्रशीति रित्यत्र च न तत्तत् कार्यम् ।

---

**बाल०**—अभू । अभूततद्भावे एकाधिकरणादौ व्यभिचारः । उक्तान्यथाचारः । सूत्रद्वयस्यानुवर्त्तनात् महतः संसारस्यारामे प्राप्ते प्रकारान्तरेण निषेधविधानं । अमहान् महान् भूत इत्यर्थे अभूततद्भावे विः कृभ्वस्त्यनुप्रयोगश्च केवलप्रत्ययवेर्हरः । महद्भूतो विधुरिति विधुश्चन्द्रः कृष्णो वा । विधुः श्रीवत्सलाञ्छन इत्यमरात् । कृष्णस्य महदद्भूतत्वं कस्यचित् कस्मिंश्चित् कार्ये दर्शनापेक्षया विधोस्तु पूर्णमास्यामिति भेदः । अमहती महतीभूता महद्भूता ब्राह्मणीत्यत्रापि न स्यात् व्यभिचारात् । एकाधिकरणेति किं महतो महत्या वा पुत्रः महत्पुत्रः महतीपुत्र इत्यादौ न स्यात् । घासादाविति रूपं दर्श्यते इति शेषः । महतो महत्या वा घास इति महाघासः । एवं महाकरः महाविशिष्ट इति । घासादाविति किं महत्सर्गः ॥ २६१ ॥

**बाल०**—द्व्यष्ट । शतात् प्राक् पूर्वस्मिन् दशादौ परे द्व्यष्टनोः संसारस्यारामो भवतीति शेषः । त्रिस्त्र । शतात् प्राक् तस्मिन्नेव परे त्रिशब्दस्य त्रयस् स्यात् । नव । नवतिपर्यन्ता सीमा येषां चत्वारिंशदादिर्येषां तेच तेच ते । नवतिपर्यन्तचत्वारिंशदादिषु परेषु द्व्यष्टनोः संसारस्यारामस्त्रेस्त्रयश्च वा स्यात् । ननु । यावत् सम्भवस्ताद्विधिरिति न्यायेन पीताम्बरे समासे शतात् प्राक् दशाद्यादिषु परेषु द्व्यादीनां विहितं कार्यं न स्यात् । अशीतीति परस्याञ्च अशीत्यादिदशाद्यन्तः पातात् पीताम्बरसमासेऽशीति ग्रहणं विनैव

**२६३. षोडशैकादश च निपात्यौ।**

**२६४. अष्टन आ कपाले हविषि, गवि तु युक्ते।**

**अष्टसु कपालेषु संस्कृतं अष्टाकपालं हविः। अष्टौ गावो युक्ता यत्र तत् अष्टागवं ब्राह्मणशकटम्।**

---

**अमृता०**—२६३. षोडशेति। षोडश एकादश चेत्येतौशब्दौ निपात्यौ इत्यर्थः। षोडशैकादशशब्दयो र्बहुवचनान्तत्वाद् निपात्यावित्यनेनान्वयो न सम्भवेत्, ततएव शब्दावित्यध्याहार्यं हि समन्वयः कार्यः। षट् च दश च षोडश, अन्तरङ्गत्वादे र्महाहरे सति निपातात् षस्य सः, सस्य विष्णुसर्गः, आदरामगोपालयोरित्युरामः, दश शब्दस्य निपातात् दस्य डः, षणान्तसंख्यात इति जशो महाहरः। एकादश इत्यत्र एकशब्दस्य संसारस्यारामो निपात कार्यम्।

**अमृता०**—२६४. अष्टनइति। हविषि वाच्ये कपालशब्दे परे अष्टनः संसारस्य आराम आदिश्यते, गवि परे तु युक्ते वाच्ये अष्टनः संसारस्यारामः स्यात्। कपालं पात्रम्। अष्टागवमिति—गोरतद्धितलुकीति समासान्तः टप्रत्ययः। अष्टगोयुक्तत्वं ब्राह्मणस्याति मानार्थमिति बोध्यम्।

---

तस्यां निषेधः सिध्येत् तथाप्यशीतिपृथग्ग्रहणमेतज्ज्ञापयति अशीत्यां परस्यां पीताम्बरे समासान्तरेऽपि निषेधः स्यादिति। दशादावित्यादिपदेन विंशतित्रिंशच्छब्दयोर्ग्रहणं। अन्यथा तृतीयसूत्रे नवतिपर्यन्तचत्वारिंशदादिषु विकल्पविधानमनर्थकं स्यात्, द्वैकादश इत्यादिप्रयोगदर्शनाच्च। ननु पीताम्बरेत्यत्र प्राप्तौ निषेधादयं विधिः समासमात्र एव लभ्यते। अशीत्यां निषेधस्तु नवत्यन्तःपातात् प्राप्तेरिति। द्वादश इति द्वौच दश चेति दशभ्योऽधिकौ द्वाविति द्वाभ्यां गुणिता दश इति वा विग्रहः। संख्यायामल्पीयस इत्यनेन पूर्वनिपातः। एवं अष्टादश त्रयोदश। द्वाविंशतिरित्यादीत्यादिपदेन अष्टाविंशतिः त्रयोविंशतिः द्वात्रिंशत् त्रयस्त्रिंशदिति। अथेति द्वाचत्वारिंशत्। द्विचत्वारिंशदित्यादीत्यादिपदेन अष्टाचत्वारिंशत् अष्टचत्वारिंशत् त्रयश्चत्वारिंशत् त्रिचत्वारिंशत्। एवं द्वापञ्चाशत् द्विपञ्चाशत् अष्टापञ्चाशत्, त्रयःपञ्चाशत् त्रिपञ्चाशदिति। तथा द्वाषष्टिः द्विषष्टिः, अष्टाषष्टि अष्टषष्टिः, त्रयःषष्टिः त्रिषष्टिरिति। द्वासप्तति: द्विसप्ततिः, अष्टासप्ततिः अष्टसप्ततिः, त्रयःसप्ततिः त्रिसप्ततिरिति। एवं द्वानवतिः द्विनवतिः, अष्टानवतिः अष्टनवतिः, त्रयोनवतिः त्रिनवतिरिति। नेह द्विशतं त्रिशतं इति शतात् प्राक् दशादीनां ग्रहणादिति शेषः। द्विदशा इति द्वाभ्यां गुणिता दश इति पीताम्बरेणाच्प्रत्ययान्तः। द्व्यशीतिरिति द्वाभ्यां गुणिता अशीतिरिति पीताम्बरे द्वाभ्यामधिका अशीतिरिति समासान्तरेऽपि। द्व्यशीतिरित्यादीत्यादिपदेन पूर्ववत् अष्टाशीतिरित्यादयो ज्ञेयाः॥ २६२॥

**बाल०**—संज्ञा। संज्ञायां वाच्ये शतात् प्राक् दशाद्यासौ परे द्व्यादीनां यत् कार्यं विहितं तन्नेष्यते। द्वाभ्यामधिका विंशतिर्यत्रेति विग्रहः। संज्ञाशब्दानां यथा कथञ्चिद्व्युत्पत्तित्वात्। कश्चिदिति व्यक्तिविशेष॥ २६३॥

**२६५. सहस्य सः ।**

विभुरयम् ।

**२६६. पीताम्बरे वा ।**

प्रभुर्विधिश्चायम् । सकृष्णः सहकृष्णः ।

**२६७. अशिषि गोवत्स हलेष्वेव ।**

स्वस्ति सगवे सहगवे इत्यादि । नेह— स्वस्ति सहकृष्णाय ।

---

अमृता०—२६६. पीताम्बर इति । पीताम्बर समासे उत्तरपदे परे सह शब्दस्य स आदिश्यते विभाषया । प्रभुविधिश्चायमिति—प्रभुत्वेनाग्रिमसूत्रेऽप्यस्याधिकारो भवतीति विकल्पोऽनुवर्त्तते, विधित्वेन सहस्य सभावरूपं कार्यञ्च भवति । कृष्णेन सह वर्त्तमान इति विग्रहे सकृष्ण सकृष्ण इति द्वयम् । विधित्वाभावे तु एतत्पदयुगलमन्यानि चानुक्तानि न सिध्येयु रिति विवेच्यम् । पीताम्बर इति किम्—सहयुद्धा, कृत्समासेऽत्र न सभावः ।

अमृता०—२६७. आशिषीति । पीताम्बर समासे आशिषि गम्यमानायां गोवत्स हलेषु एव परेषु सहस्य स आदिश्यते विभाषया । सगवे इति—गवा सह वर्त्तत इति सगौः तस्मै स्वस्ति मङ्गलं भूयादिति आशीर्गम्यते । इत्यादिना—सवत्साय स्वस्ति, सहलाय स्वस्ति । पक्षे सह वत्साय सहलायेति । नेहेति—गवादित्रयपरत्वे एव नियमात् अन्य-परत्वे सति स भावो न भवतीत्यर्थः ।

---

बाल०—षोड । षोडशैकादशच द्वौ निपात्यौ निपात्येयाताम् । षोडशैकादश इति द्वावपि बहुबचनान्तौ । सूत्रे वेदवद्व्यवहारत्वात् निर्देशे द्वयोरेकत्वमव्ययत्वञ्च तस्मात् स्वादेर्महाहर इति । ननु यद्यनयोरव्ययत्वं तर्ह्यव्ययविशेषणं ब्रह्मत्यनेन निपात्याबित्यत्र कथं न ब्रह्मत्वं सत्यं । सूत्रे वेदवद्व्यवहारादेवाव्ययत्वं वास्तवस्तु न तस्मात् तयोः पुरुषोत्तमत्वज्ञापनाय विशेषणस्यास्य नारायणत्वमिति । षट्च दशच एकश्च दशच इति विग्रहः । षोडश इत्यत्र अन्तरङ्गस्वादेर्महाहर इत्यनेन स्वादेर्महाहरे सति निपातनत्वात् सत्वापाये विष्णुसर्गन्तस्य आदगोपालयोरित्यनेन उरामः । दशशब्दस्य दस्य डत्वं निपात-फलं बहुत्वात् सनन्तसंख्येत्यनेन जसो महाहरः । एकादशेत्यत्र एकशब्दस्य संसारस्यारामो निपातफलमिति ॥ २६४ ॥

बाल०—अष्ट । हरिषि वाच्ये कपाले परे युक्ते तु वाच्ये गवि परे अष्टनः संसारस्यारामः । अष्टावित्यपि विग्रहः । अष्टागवमित्यत्र गोरतद्धितलुकीति समासान्तष्ट-स्तद्धितः । ब्राह्मणशकटस्याष्टगोयुक्तत्वं प्रसिद्धमन्यथा ब्राह्मणस्य गोघ्नत्वं स्यात् ॥ २६५ ॥

बाल०—सह । अधिकारसूत्रमेतत् । अस्य विभुत्वेन तदवान्तरसजातीयविजातीया-नेकाधिकारव्यापित्वात् परत्राव्ययीभावेऽपि सहस्य सादेशः स्यात् ॥ २६६ ॥

बाल०—पीता । एतदप्यधिकारसूत्रं । अस्य केवलैकाधिकारव्यापित्वात् पीताम्बरे सहस्य सादेश एव नान्यत्र । नन्वत्र प्रभुश्चायमित्येव लक्षणमस्तु विधीति किमर्थमिति

२६८. नित्यं ग्रन्थान्ताधिकानुमेयेषु ।

साङ्गं श्रीभागवतमध्यैष्ट, अन्तपर्यन्तमित्यर्थः । सद्रोणा खारी, द्रोणादधिकेत्यर्थः । सविष्णुभक्ति वैष्णवसङ्घः । वैष्णवसङ्घात् सा भवेदित्यनुमीयते ।

२६९. अव्ययीभावे चाकाले ।

सचक्रं निधेहि शङ्खम् । अकाल किम्—सापराह्णम् ।

इति सहस्य सः ।

---

**अमृता०**—२६८. नित्यमिति । ग्रन्थान्ते अधिके अनुमेये च वाच्ये उत्तरपदे परे सहस्य स भावो नित्यं स्यात् । साङ्गमिति अङ्गेन सह वर्त्तमानमिति विग्रहः । सद्रोणेति द्रोणेन सहाधिकेति वाक्यम् । एवं विष्णुभक्त्या सह विद्यमानः सविष्णुभक्तिरिति । अत्र संज्ञाग्रन्थान्ताधिकानुमेये इति सुपद्मलक्षणम् । तत्र संज्ञायां साश्वत्थं स्थानमित्युदाहरणम् । एवमनुमेये च—साग्निः कपोतः, गृहे कपोतपातात् भाव्यग्नि रनुमीयत इत्यर्थः ।

**अमृता०**—२६९. अव्ययीति । अव्ययीभावे समासे च अकाले वाच्ये सहस्य स आदिश्यते । सचक्रमिति—चक्रेण सहैककालमिति विग्रहे—"यौगपद्ये" इत्यव्ययीभावः । सहापराह्णमिति—अपराह्णेन सहैककालः, दिवस इत्यर्थः । इह कालस्य वाच्यत्वान्नहि सभावः ।

---

चेत् केनाप्युच्यते तदैवं वाच्यं । प्रभुर्विधिश्चायमित्यत्र प्रभुश्चायमिति पाठेऽस्य सूत्रस्य विधित्वाभावे सकृष्ण इति उदाहरणद्वयं न सिध्यत् विध्यन्तराभावात् । नन्वेकस्य द्विविधत्वं कथमिति वाच्यं । नच यथा कर्मसीमांसायां संयोगपृथक्त्वन्यायेन खादीरे पशुं बध्नीयात्, खादीरं युपं कुर्वीत, भूतिकाम इत्यत्रैकस्यैव खादीरस्य नित्यत्वकाम्यत्वे । एकस्योभयलिङ्गत्वे संयोग पृथक्त्वमिति लिङ्गं हि चिह्नं फलश्रुत्यभावे नित्यत्वं फलश्रुत्यान्तु काम्यत्वं । यथैकस्या एव सन्ध्योपासनाया नित्यत्वं काम्यत्वञ्च । तद्वदिहापि एकस्यैव प्रभुत्वं विभुत्वञ्चेति । विधिपक्षे एवं व्याख्येयं । पीताम्बरे समासे सति उत्तरपदे परे सहस्य सो वा स्यात्, सहकृष्ण इति कृष्णेन सह वर्त्तमान इति विग्रहः ॥ २६७ ॥

**बाल०**—आशि पीताम्बरे समासे आशिषि गम्यमाने गवादिषु एव सहस्य सो वा स्यात् । गवा सह वर्त्तते यस्तस्मै स्वस्ति मङ्गलं भूयादिति आशीर्गम्यते इत्यादीत्यादिपदेन स्वस्ति सवत्साय स्वति सहवत्साय स्वस्ति सहलाय स्वस्ति सहहलाय इति । नेह गवादि परत्वाभावादिति शेषः । सहकृष्णाय श्रीनन्दायेत्यर्थः ॥ २६८ ॥

**बाल०**—नित्यं । ग्रन्थान्तश्च अधिकश्च अनुमेयश्च तेषु वाच्येषु उत्तरपदे परे नित्यं सहस्य सः स्यात् । पीताम्बर इत्यधिकाराल्लभ्यते । साङ्गमिति अङ्गेन सह वर्त्तमानं साङ्गमिति विग्रहः । साङ्गमन्तपर्यन्तं श्रीभागवतमधीतवानित्यर्थः । द्रोणेन

## २७०. समानस्य सः ।

प्रभुरयम् ।

## २७१. ज्योतिर्गणजनपदरात्रि नाभिबन्धुगन्धपिण्डलोहितकुक्षि वेणीपत्नीपक्षेषु ।

सज्योतिरित्यादि ।

## २७२. सब्रह्मचारी वेदाध्ययनार्थं समानव्रतचारिणि ।

साधुः ।

---

**अमृता०**—२७१. ज्योरिति । ज्योति प्रभृति त्रयोदशसु परेषु समानस्य स आदिश्यते । सज्योतिरिति—समानं ज्योतिरस्येति, समानञ्च तज्ज्योतिश्चेति वा विग्रहः, विशेषाधिकाराभावात् । इत्यापि पदेन—सगणः सजनः सपदः सरात्रिः सनाभिः सबन्धुः सगन्धः सपिण्डः सलोहितः सकुक्षिः सवेणी सपत्नीति । एषां यथायोग्यं कृष्णपुरुषे पीताम्बरे वा सभावः, सपत्नीति तु पीताम्बर एव, सपत्न्यादयः पीताम्बरे इति ईबन्तनिपातस्य वक्ष्यमाणत्वात् ।

**अमृता०**—२७२. सब्रह्मेति स्पष्टम् । समानं ब्रह्म व्रतं चरितुं शीलमस्येति शीलार्थ णिनिः । वेदाध्ययनार्थ एवास्य निपातः ।

---

सहाधिका इति विग्रहे सद्रोणा खारीति द्रोणादधिकेति निर्गलितार्थः । विष्णुभक्त्या सह वर्त्तमान इति विग्रहः । अनुमेयार्थन्तु स्वयं ग्रन्थकृता व्याख्यात एव वैष्णवेत्यनेन । अत्र सूत्रे अस्मन्मते संज्ञार्थो न दृश्यते अन्यमतेतु दृश्यते । तद्यथा । संज्ञाधिकानुमेयग्रन्थ-समाप्तिषु नित्यमिति कस्यचित् सूत्रं एष्वर्थेषु सहस्य सो नित्यं स्यात्, हे इति तट्टीका हेति बहुव्रीहावित्यर्थः । तत्र संज्ञायां अश्वत्थेन सह वर्त्तते यत्तत् साश्वत्थं नक्षत्रचक्रं । एवं सपलाशं सशिंशपं स्थलं । अन्यार्थेषु यथा सकाकलीको द्रोणः काकल्या अधिक इत्यर्थः । काकली परिमाणविशेषः । साग्निः कपोतः । गृहे कपोतपातात्तु भाव्यग्निरनु-मीयते इत्यग्निरनुमेयः । एवं सपिशाचा वात्या । साङ्गान् वेदानधीते अङ्गानां समाप्ति यावदित्यर्थः । एतानि तदुदाहरणानि ॥ २६९ ॥

**बाल०**—अव्य । अव्ययीभावे समासे अकाले वाच्ये उत्तरपदे परे सहस्य सः स्यात् । चक्रेण सहैककालं यत् किमपि तन्निधेहीत्यर्थे सचक्रं शङ्खमित्यर्थः । अकालेति अपराह्णेन सहैककालमित्यर्थे सहापराह्णं दिवसमित्यर्थः । इह काल एव वाच्यः । अतो न स्यादिति ॥ २७० ॥

**बाल०**—समा । यथास्वं समानस्य सः स्यात् । एतधिकारसूत्रं ॥ २७१ ॥

२७३. सतीर्थ्यः समानगुरुकुलवासिनि ।

साधुः ।

२७४. विभाषा रूपगोत्रनामस्थानवर्णधर्मवयोवचनोदर्यगर्भ जातीयेषु ।

सरूपः समानरूप इत्यादि । विस्तरादि सम्मतं प्रयुक्तश्चेदम् ।

---

**अमृता०**—२७३. सतीर्थ्य इति । समानञ्चतद् गुरुकुलञ्चेति समानगुरुकुलम्, तत्र वसतीति समानगुरुकुलवासी, तस्मिन्नर्थे तद्धित यप्रत्ययेन सतीर्थ्य इति साधुः स्यात् । तीर्थं ऋषिजुष्ट जले गुरावित्यमरः । एकगुरुः सतीर्थ्यः स्यादिति कोषान्तरञ्च ।

**अमृता०**—२७४. विभाषेति । रूपादिषु एकादशसु परेषु विभाषया समानस्य स आदिश्यते । समानं रूपं यस्येति विग्रहे सरूपः समानरूप इति । इत्यादि पदेन—सगोत्रः समानगोत्रः, सनामा सस्थानः सवर्णः सधर्मः सवयाः सवचनः सोदर्यः सगर्भः सजातीय इति । सोदर इत्यपि दृश्यते । त्वंसोदरस्यातिमदोद्धतस्येति भट्टिः । समान उदरो मातृकुक्षि र्यस्येति सोदरः सोदर्यश्च भ्राता ।

ननु पाणिनीये—विभाषोदरे इत्येव सूत्रं दृश्यते, तर्हि रूप गोत्रादिकं स्वकल्पितमेवेति चेत्तत्राचष्टे—विस्तरादिसम्मतमिति । आदिशब्देन पद्मनाभ-वोपदेवादे र्ग्रहणम्, तेषामपि सम्मतत्वात् । नकेवलं तेषां सम्मतम्, अपि तु महाकविभिः प्रयुक्तश्च, अतः प्रसिद्धप्रयोगा एते इतिभावः ।

---

**बाल०**—ज्योति । ज्योतिश्च गणश्च जनपदश्च रात्रिश्च नाभिश्च बन्धुश्च गन्धश्च पिण्डश्च लोहितश्च कुक्षिश्च वेणीच पत्नीच पक्षश्च एषु त्रयोदशसु परेषु समानस्य सः स्यात् । सज्योतिरिति समानं ज्योतिर्यस्येति विग्रहः । समानञ्च तत् ज्योतिश्चेति वा विग्रहः । एवं इत्यादीत्यादिपदेन सगणः सजनपदः सरात्रिः सनाभिः सबन्धुः सगन्धः सपिण्डः सलोहितः सकुक्षिः सवेणी सपत्नी सपक्ष इति । जनपदशब्दस्य योगविभागात् सजनः सपद इत्यपि ज्ञेयं । पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु इत्यमरः । सपत्नीति समानः पतिरस्या इति वाक्ये पतिशब्दादीप् तस्मिन् पत्युः पत्नभावश्च वक्ष्यते ॥ २७२ ॥

**बाल०**—सब्रह्म । व्यक्तार्थमेतत् । ब्रह्म वेदः तदध्ययनार्थं यदुक्तं तदपि ब्रह्म । वेदाध्ययनार्थं समानं ब्रह्म व्रतं चरितुं शीलमस्येति विग्रहे सब्रह्मचारी । यद्वा, ब्रह्म व्रतं चरतीति ब्रह्मचारी ग्रहादित्वाण्णिनिः । ततः समान एव ब्रह्मचारी सब्रह्मचारी तस्यैव वेदाख्यस्य ब्रह्मणः सदृशं व्रतं चरतीत्यर्थः ॥ २७३ ॥

**बाल०**—सती । एतदपि व्यक्तार्थं । समानस्तीर्थो गुरुकुलवासो यस्येति विग्रहे सतीर्थ्यः । समाने गुरुकुले वसतीत्यर्थः । समानस्तीर्थो गुरुर्यस्येति वा सतीर्थ्यः । तीर्थं ऋषियुष्टजले गुरावित्यमरात् । एक गुरुः सतीर्थ्यः स्यादिति कोषान्तराच्च । समाने तीर्थे

**२७५. अन्यस्यान्यत् कारकशब्दे ।**

**२७६. अषष्ठी तृतीयास्थस्य तु आशीः आशा आस्था आस्थित उत्सुक ऊति राग इत्येषु च ।**

**२७७. अर्थे तु वा ।**

अन्यत् कारकः अन्यदासीः इत्यादि । तथा अन्यदर्थः अन्यार्थः । नेह—अन्यस्य अन्येन वा आशीः अन्याशीः ।

**२७८. कृष्णपुरुषे ।**

प्रभुरयम् ।

---

अमृता०—२७६. अषष्ठीति । आशीरादिषु सप्तसु परेषु तु अषष्ठीस्थस्य अतृतीयास्थस्य च अन्यस्य अन्यदादेशः स्यात् । षष्ठी तृतीयास्थस्य तु नान्यदादेश इत्यर्थः ।

अमृता०—२७७. अर्थ इति । अर्थ शब्दे परे अषष्ठीतृतीयास्थस्य अन्यस्य अन्यदादेशो वा स्यात् । अन्यत् कारक इति—अन्यश्चासौ कारकश्चेति श्यामरामः । एवं अन्या चासौ आशीरिति, अन्यस्मै अन्यस्मात् अन्यस्मिन् वा आशीरिति अन्यदाशीः । इत्यादि पदेन—अन्यदाशा, अन्यदास्थितः, अन्यदास्था अन्यदुत्सुकः, अन्यदूतिः, अन्यद्राग इति । तथेति—अर्थशब्द एष इदंवाची, तेन अन्यस्म अयमित्यर्थे—'इदंवाच्यर्थ शब्देन' इति नित्य समासः । नेहेति—अषष्ठीतृतीयास्थस्येति निर्देशान्नादेश इत्यर्थः । एवं अन्येनान्यस्य वार्थः अन्यार्थ इत्यत्र च नादेशः ।

---

गुरौ वसतीत्यर्थे (सतीर्थाद् यो वासिनि, इति ये कृते) सतीर्थ्यः एकगुरुः । समाततीर्थशब्दादिति केचित् ॥ २७४ ॥

बाल०—विभा । रूपादिष्वेकादशसु परेषु विभाषा विकल्पेन समानस्य सः स्यात् । समानं रूपं यस्येति समानश्च तत् रूपश्चेति वा सरूपेत्यादिद्वयं । एवमित्यादिपदेन सगोत्रः सनामा सस्थानः सवर्णः सधर्मः सवयाः सवचनः सोदर्यः सगर्भः सजातीय इति । पक्षे समानगोत्र इत्यादयश्च । सोदर्य इति समान उदरे शयिता इत्यर्थे यः । अत्रोदर्यशब्देनोदरशब्दोऽपि गृह्यते सोदरप्रयोगदर्शनात् । समानार्थसहशब्दस्य सादेश उदरे परे इति कस्यचिन्मतं । तथाच । त्वं सोदरस्यातिमदोद्धतस्येति भट्टिः । ग्रन्थकृता स्वयमेव विस्तारादिमतश्चोक्तमिति ॥ २७५ ॥

बाल०—अन्य । सुगमं ॥ २७६ ॥

बाल०—अषष्ठी । इत्येषु आशीरादिषु परेषु षष्ठीतृतीयाभ्यामन्यत्र स्थितस्य पुनरन्यस्यान्यत् स्यात् ॥ २७७ ॥

बाल०—अर्थे । अर्थेतु परस्मिन्नन्यस्यान्यद्वा । अप्राप्ते विकल्पोऽयं । मध्यषष्ठीतृतीयस्थवर्जनात् सूत्रत्रयं प्रायः समासमात्रे प्रवर्त्तते । अन्यदिति अन्यस्य कारक इति

२७९. कोः कत् सर्वेश्वर-त्रि-वद-रथेषु ।

कदन्नं कत्त्रयः कद्वदः कद्रथः ।

२८०. कोः का पथ्यक्षयो रीषदर्थे च ।

कापथं काक्षं । अनयस्तद्धितोऽद् वाच्यः । ईषदर्थे काम्लम् ।

---

अमृता०—२७९. कोःकदिति । सर्वेश्वरे परे तथा त्रि-वद-रथेषु च परेषु कृष्णपुरुष समासे कुशब्दस्य कदित्यादेशः स्यात् । आदेशी कुशब्दः सर्वत्राव्ययम् । पृथिव्यादि-वाचकस्यतु नकुत्राप्यादेश इति विवेच्यम् । सूत्रे यद् सविष्णुभक्तिकं निर्दिष्टं तत्तु अनुकरण-त्वमाश्रित्य । कदन्नमिति—कुत्सितं तदन्नञ्चेति विग्रहे—कुप्रादयो मध्यपदलोपश्चेति श्यामरामः । कत्रय इति—कुत्सिताश्च ते त्रयश्चेति विग्रहः । धृतशङ्खो न यो जिष्णु र्यश्चाढ्यो यज्ञनिष्पृहः । कामी यश्च जरन्नेते क्षत्र वंशेषु कत्तयः । इति कवि प्रयोगः । एवं कद्वद इत्यादि । वद इति पचादेरदन्तः ।

अमृता०—२८०. कोः केति । पथि अक्षे च परे तथा ईषदर्थे गम्ये च कृष्णपुरुषे समासे कुशब्दस्य का इत्यादिश्यते । कापथमिति—कुत्सितश्चासौ पन्थाश्चेति विग्रहः । संख्याव्ययाभ्यां पथ इति ब्रह्मत्वम्, समासान्तोऽत् प्रत्ययः । एवं कुत्सितञ्च तदक्षञ्चेति काक्षम् । अत्र अक्ष शब्दस्य इन्द्रिय वाचित्वाद् ब्रह्मत्वम् । यद्वा कुत्सिते अक्षिणी यस्येति अक्षि शब्देन पीताम्बरः । वक्ष्यमाण समासान्तप्रत्ययमुद्दिश्य सूत्रे अरामान्ततया निर्देशः । अतएवाह—अनयोस्तद्धितोऽद्वाच्य इति । वक्ष्यत इत्यर्थः । तत्रपथिन् शब्दस्य—ऋक्पथि पुरप इत्यनेन अरामः । अक्षिशब्दस्य तु पीताम्बराधिकारे—स्वाङ्गाभ्यामक्षि सक्थिभ्या-मित्यनेन ।

ननु अक्षिशब्दपरत्वे कादेशे स्वीकृते कृष्णपुरुष इत्यधिकारभङ्गः स्यादिति चेत् ? सत्यम्, अवधीयताम्—पक्षद्वयाश्रयणात् नासौ दोषः । प्रथमपक्षाश्रयेण हि ( अक्षपरत्वे ) अधिकारस्य चरितार्थता । द्वितीय पक्षस्तु चकार व्यञ्जनया लभ्यते इत्यदोष इति । एव-मेव न्यासकारादिभिः प्राचीनै र्मीमांसितम् । भट्टि काव्ये—काक्षेणानादरेक्षित इत्यत्र टीकाकृता मल्लिनाथेन च पक्षयुगं समाकलितम् । वोपदेवः—पथि पुरुषे वा इति लक्षित्वा कापथं कुपथमिति रूपद्वयमुदाहरति स्म ।

---

अन्यश्चासौ कारकश्चेति वा न नियमः । अन्यदेति अन्यस्मै अन्यस्माद्वा आशीरिति विग्रहः । एवमित्यादीत्यादिपदात् अन्यस्मिन् अन्यस्माद्वा आशा अन्यदाशा अन्यस्मात् अन्यस्मिन् वा आस्था अन्यदास्था । तथा अन्यदास्थितः अन्यदुत्सुकः अन्यदूति अन्यद्राग इति । ऊतिर्लीला । तथेति अन्यस्मै अयमिति नित्यसमासे सपदविग्रहाभावः । नेहेति अषष्ठीत्युक्तादिति शेषः ॥ २७८ ॥

बाल०—कृष्ण । अयं विधिरधिकारः ॥ २७९ ॥

## २८१. कापुरुषौ-कुपुरुषौ साधू ।

ईषदर्थ इति सर्वेश्वरे विष्णुजने वेति न नियमः। तेन सर्वेश्वरे परे पूर्वापवादः—कु ईषदम्लं काम्लम्, कु ईषदरुणः कारुण इत्यादि। अनीषदर्थे तु सर्वेश्वरे कदादेश एव—कदाकारः। ईषदर्थे विष्णुजने यथा—कुईषत् मधुरं कामधुरम्, कु ईषत् तन्त्रं कातन्त्र-मित्यादि।

**अमृता०**—२८१. कापुरुषेति। अनीषदर्थे पुरुषशब्दे परे कोः का वा निपात्यते इति फलितार्थः। अप्राप्तविभाषेयम्। ईषदर्थे तु—कु ईषत् पुरुषः कापुरुष इति नित्यम्।

---

**बाल०**—कोः। सर्वेश्वरश्च त्रयश्च वदश्च रथश्च ते। कृष्णपुरुषे एतेषु परेषु कोः कत् स्यात्। परसूत्रे ईषदर्थे चेति विशेषणात् कुरयमव्ययो नच पृथिवीवाचकस्तथापि शब्दानुकरणान्नाशात् षष्ठ्या महाहरः। यदुक्तमन्यैः। सम्भवव्यभिचारे हि विशेषण-मनर्थवदिति। अनीषदर्थोऽयं योग इति। कदन्नमिति कुत्सितश्च तदन्नञ्चेति विग्रहे कुप्रादयो मध्यपदलोपश्चेत्यनेन श्यामरामः। एवं कत्रय इत्यादयः। कद्वद इति वदः पचाद्यदन्त॥ २८०॥

**बाल०**—कोः का। पन्थाश्च अक्षश्च तौ अनयोः परयोरीषदर्थेऽन्यस्मिन् परे कोः का स्यात्। कापथमिति कुत्सितश्चासौ पन्थाश्चेति। एवं काक्षं अक्षशब्दोऽयमिन्द्रिय-वचनोऽत्र गृह्यते। अक्षः पाषाणमिन्द्रिय इत्यमरशासनात्। अनयोरिति तद्धितोऽद्वाच्यः वक्ष्यते इत्यर्थः। ऋक्पथिपुरप इत्यादिनेति शेषः। संख्याव्ययाभ्यां पथ इत्यनेन ब्रह्मत्वं। पथः संख्याव्ययात् पर इति लिङ्गादिसंग्रहः। अस्मन्मते पथि परे कोः कादेशे विकल्पो न भवेत् कस्यचिन्मतेतु विकल्पः स्यादेव। कोः का वा पथिपुरुषयोरिति सूत्रं। कोः का स्याद्वा पथि पुरुषयोरिति तत्सूत्रार्थः। कापथं कुपथमिति तदुदाहरणञ्चेति। कापथ इतितु ईषदर्थे वर्त्तमानस्य कुशब्दस्य पथिशब्दसदृशार्थपथशब्दे कादेशो भवतीति। परेतु कापथमिति नित्यमाहुरिति तेनैवोक्तञ्च। अतोऽन्येपि कुपथमित्यसाधुः। पथिशब्देन सह समासे नित्यं कादेशादिति न सत्कुर्वन्ति पथिशब्दसमानार्थेन पथशब्देन समासे क्लीवत्वा-भाव इति सत्कुर्वन्तिच। ईषेति प्रयोगो दृश्यते इति शेषः। ईषदर्थे चेति पृथग्विधानं पथ्यक्षयोरनुवर्त्तमानार्थं। अतएव काम्लमित्युदाहृतं। कु ईषच्च तदम्लञ्चेति विग्रहः। एवं काजलं कालवणं कावादः काकार इत्यादि। अत्रैव ईषद्वदो यत्र कावादः। ईषदा-कारोऽस्येति। काकार इत्यादौतु अचि कदादेशो बाध्यते। अपेक्षितविधित्वात् परत्वा-च्चेत्यनेन प्रकारेण कृष्णपुरुषाधिकारं व्यभिचारयित्वा बहुव्रीहावपि कश्चित् कोः कादेशं करोति स्वमतपरिपोषणाय। देवाकानिनि कावादे वाहिका स्वस्वकाहि वा। काकारेभभरे काकानिस्वभव्यव्यभस्वनीति भारविश्चोत्थापयति (१५२५)। एतदभिप्रेत्य अन्योऽपि ईषदर्थे कृष्णपुरुष एव पथ्यक्षानुवर्त्तनाभावं मनसिकृत्य कु ईषदक्षोऽस्येति वाक्ये काक्षो विप्र इत्यत्र समासान्तरे कृतेऽपि अक्षपरता विद्यत एवेति कादेशं करोति। एतन्मतं परे न बहु मन्यन्ते ईषदाकारो यस्येत्यन्तरमस्तीत्यध्याहारात् तत्पुरुषत्वं कृत्वा अर्श आदित्वाद-

२८२. कोष्ण-कवोष्ण-कदुष्णा मन्दोष्णे ।

साधवः ।

२८३. हृदयस्य हृल्लेख-लासयो र्याणोश्च ।

लेख इत्यणन्तो गृह्यते । हृल्लेखः हृल्लासः । हृद्यं हार्दम् । घणि तु हृदयलेखः ।

---

**अमृता०**—२८२. कोष्णेति । कृष्णपुरुषे ईषदुष्णे वाच्ये कोष्णादयस्त्रयो निपात्यन्त इत्यर्थः । सर्वेश्वरे परेऽपीषदर्थत्वात् कोः कादेशः प्राप्त इति कोष्ण इत्येव सिध्यति । कवोष्ण इति कोः कवादेश स्तथा कदुष्ण इति कदादेश श्चात्र निपातफले । तृणे च परे कोः कत् स्यात् । 'तृणे च जातौ' इति पाणिनीय सूत्रम् । कत्तृणं नाम जातिः । जाताविति किम्—कुत्सितानि तृणानि कुतृणानीति काशिका ।

**अमृता०**—२८३. हृदयस्येति । कृष्णपुरुषे लेखलासयोः परयोः, तथा तद्धित याणोश्च परयोः हृदयस्य हृद् आदिश्यते । अणन्तोगृह्यत इति—कर्मण्यण् इत्यनेन अण् प्रत्ययसिद्ध इत्यर्थः । तेन हृदयं लिखतीत्यर्थे कर्मण्यण्, उपेन्द्रोर्यादीत्यादिना पूर्वपदेनसह समासकाले हि हृदादेश इतिभावः, दतौ परवर्णाविति सन्धिः । हृल्लास इति—लस्यते इति घणन्तो लासः, हृदयस्य लास इति षष्ठीसमासः, हृदादेश सन्धिश्च । हृद्यमिति—'हृदयात् प्रिये' इत्यनेन प्रियार्थे तद्धित यः । हार्दमिति—हृदयस्य इदमित्यर्थे 'तस्येदमिति केशवणः, आदिसर्वेश्वरस्य वृष्णीन्द्रः । इह तद्धितप्रत्यययो र्याणोः परयोः समासाभावेऽपि प्रसङ्गादेकत्र आदेश उक्तः, किन्तु कृष्णपुरुषाधिकार दर्शनान्नात्र समासतया भ्रमितव्यम्, समासकार्यं प्रकरणेऽत्र समासातिरिक्तञ्च किञ्चित् किञ्चित् कार्यमुपदिश्यते इत्यग्रे व्यक्त भावि । घणि त्विति—घणन्ते तु न हि हृदादेशः, अणन्तस्यैव ग्रहणात् । तेनात्र हृदयस्य लेख इति विग्रहः ।

---

दित्याह तन्निरर्थकत्वात् । भारविटीकाकृतस्तु कं मदजलमाकिरति काकारः । एवं कस्य मस्तकस्यावादः स्थैर्यं यत्रेति कावाद इत्याहुरिति भङ्ग्या तट्टीकाकारमतेनैव दूषयन्ति चेति ॥ २८१ ॥

**बाल०**—कापुरुष । वृत्तिमाह साधू इति निपात्येते इत्यर्थः । अनीषदर्थेऽपि पुरुषे परे कोः का वा निपात्यते इति निर्गलितोऽर्थः । विग्रहस्तु पूर्ववत् । ईषदर्थ कोः पुरुषे परे कादेशो वेति भागवृत्तिः । तन्मतो कु ईषच्चासौ पुरुषश्चेति कापुरुषः कुपुरुष इति ॥ २८२ ॥

**बाल०**—कोष्ण । अत्रापि साधव इति वृत्तिः । कृष्णपुरुषे मन्दोष्णे वाच्ये कोष्णादयः साधवो निपात्यन्ते इत्यर्थः । अर्थात् उष्णे परे कोः का कव कत् आदेशोः भवन्तीत्यर्थ. ईषदर्थे कोः कत्कवकाः स्युरग्न्युष्णयो परयोरिति केचित् । तन्मते कदग्नि-रित्यादयोऽपि । परेतु अग्निशब्दे परे काकवादेशौ नाहुः । कदुष्णमित्यौदौ अनीषदर्थेऽपि

**२८४. शोकरोगयो र्वा ।**

हृच्छोकः हृदयशोक इत्यादि ।

**२८५. नासिकाया नस् य-तसि-क्षुद्रेषु नतु वर्ण-नगरयोः ।**

नस्यं नस्तः नःक्षुद्रः । नेह—नासिक्यमक्षरं नगरं वा ।

---

**अमृता०**—२८४. शोकेति । कृष्णपुरुषे शोक-रोगयोः परयोः हृदयस्य हृदादेशो वा स्यात् । हृच्छोकइति—हृदयस्य शोक इति विग्रहः । इत्यादि पदेन हृद्रोगः हृदयरोग इति । सौहार्दमिति तु 'सुहृन्मित्रे' इत्यनेन निपातितात् सुहृच्छब्दात् तस्येदमित्यर्थे केशवणः, हृद्भगसिन्ध्वन्तानामित्युभयपदवृद्धिः । सौहृद्यमिति तु नोत्तरपदवृद्धिः । किञ्च, हृच्छब्दोऽप्यस्ति, हृत्सरोजं हृच्छल्यमित्यादि भूरिप्रयोग दर्शनात् । ततस्तेन हि सिद्धेऽपि विधानमेतत् हृदयलास इत्यादिरूपबाधनार्थमिति विवेकः ।

**अमृता०**—२८५. नासिकाया इति । य-तसि क्षुद्रेषु परेषु नासिकाया नस् इत्यादेशः स्यात् । वर्ण-नगरयो र्वाच्ययोस्तु नसादेशो न भवति । नस्यमिति—नासिकायां भवः, नासिकामर्हतीत्यर्थे वा यराम स्तद्धितः । नस्त इति—नासिकाया इत्यर्थे पञ्चमीत स्तसिरिति तसिप्रत्ययः । नः क्षुद्रइति—कृष्णपुरुषाधिकारात् नासिकायाः क्षुद्रः, नासिकायां क्षुद्र इति वा विग्रहे कृष्णपुरुषः । नेहेति—नासिकायां भवो नासिक्यो वर्णो विष्णुचाप इत्यर्थः ।

---

कोरुष्णे शब्दे परे कत्कवकादेश इत्यन्ये । कोः कत् कुले जाताविति वक्तव्यं । तृणशब्दे परे कोः कद्भवति । कत्तृणं नाम जातिः । जाताविति किं कुत्सितानि तृणानि कुतृणानि ॥ २८३ ॥

**बाल०**—हृद । कृष्णपुरुषे लेख लासयोः परयोः तद्धितयाणोश्च परयोर्हृदयस्य हृद्भवति । इत्यणन्त इति कर्मण्यनिति । हृदयं लिखतीत्यर्थे कर्मण्यन् ततः कर्त्तृकर्मणोः षष्ठीत्यनेन षष्ठी पश्चात् षष्ठीकृष्णपुरुषः । दतौ परवर्णावित्यनेन तरामस्य लरामः । लस्यते लासः घणन्तः, ततो हृदयस्य लास इति विग्रहे पूर्ववत् । हृद्यमिति हृदयात् तत्प्रिय इत्याद्यर्थे यत् । हार्दमिति हृदयस्येदमित्याद्यर्थे तस्येदमित्यनेन केशवणः । घणि त्विति घणन्ते त्वित्यर्थः । हृदयलेख इति लेखः पचाद्यदन्तः । लेखधातोर्बहुलकुटादित्वादुभयत्र गोविन्दः । हृदयसमानार्थात् हृच्छब्दात् हृल्लेखादयः सिध्यन्त्येव, हृदयशब्दाल्लेखादौ परे हृदयलेखादिप्रयोगनिरासार्थमिदं सूत्रं ॥ २८४ ॥

**बाल०**—शोक । शोकरोगयोः परयोर्हृदयस्य हृदादेशो वा स्यात् । हृच्छोक इति हृदयस्य शोकः हृदये शोकः इति वा विग्रहः । इत्यादीत्यादिपदात् हृद्रोगः हृदयरोग इति । किञ्च, शोकरोगयोरेव परयोर्हृदयस्य हृद्वा स्यात्, इति न वाच्यं, यतोऽत्रैव वा शोकशल्यस्यङ्रोगेस्विति पाणिनिसूत्रात् । हृच्छल्यं हृदयशल्यमित्यादिप्रयोगदर्शनाच्च । स्यङ् अत्र यरामः ॥ २८५ ॥

२८६. पादस्य-गादिषु-पद्ग-पदाजि-पदाति-पदोपहताः, पद्धिम पत्काषि-पद्धति-पद्याश्च। पद्घोष-पन्मिश्र-पच्छब्द पन्निष्कास्तु वा।

साधवः।

२८७. उदकस्योदः।

प्रभुरयम्।

---

**अमृता०**—२८६. पादस्येति। पादशब्दस्य पदादेशेन पद्गादयो निपात्यन्ते, पद् घोषादयश्चत्वारो वा निपात्यन्ते। पद्ग इति—पदाभ्यां गच्छतीति वाक्ये गमे रच् प्रत्ययः। यद्वा पादाभ्यां गाते, गाङ् गताविथस्मात् अकर्मण्यारामात् कः। उपेन्द्रेत्यादिना समासः, उत्तरपदप्राधान्यात् कृष्णपुरुषान्तर्गत एव, कर्त्तकरणे कृतेति लक्षणात्। एवमन्यत्रापि योज्यम्। पदाजिरिति—पादाभ्यामजतीति इण् प्रत्यय उणादिकः, निपातादिह वीभावनिषेधश्च। पादाभ्यामततीति पदातिः। अत सातत्यगमने इत्यस्मात् पूर्ववदिण्। पादेन पादाभ्यां वा उपहतः पादोपहतः, निपातादरामान्तादेशः। पादयो हिमं पद्धिमम्। पादाभ्यां कषतीति पत्काषी, ताच्छील्ये णिनिः। पादाभ्यां हतिः पद्धतिः, कर्त्त करणे कृतेति समासः। पद इति—पादौ विध्यतीत्यर्थे—'तद्विध्यति नचेद्धनुषा' इत्यनेन तद्धित यरामः। पद्यः कण्टकः। तत्र च पादस्य पद्य आदिश्यते। तादर्थ्ये तु न—पादाभ्यामिदं जलं पाद्यम्। पद् घोष इति—पादाभ्यां घोषति मिश्रयति शब्दयतीत्यर्थेषु यथाक्रमं पद् घोषः, पन्मिश्रः, यच्छब्द इत्येते पचाद्यदन्ताः। पादाभ्यां निष्काषतीति पन्निष्कः, कष ण्यन्तः। पक्षे च पाद घोष इत्यादयः। सर्वत्र पादस्य पदादेशः।

---

**बाल०**—नासि। यतसि क्षुद्रेषु परेषु नासिकाया नसादेशः स्यात्। वर्णनगरयोर्वाच्ययोरेषु परेषु नासिकाया नस् नतु स्यात्, नस्यमिति नासिकायां भवः नासिकामर्हतीत्याद्यर्थे यरामान्तं। नस्त इति नासिकाया इति पञ्चम्यास्तस्। नःक्षुद्र इति नासिकायाः क्षुद्रः नासिकायां वा क्षुद्र इति विग्रहः। नेहेति नासिकायां भव इत्यर्थे नासिक्यमक्षरं नगरं वेति स्वयमेव दर्शितमिति॥ २८६॥

**बाल०**—पाद। ग आदिर्येषां ते गादयः तेषु परेषु सत्सु कृष्णपुरुषसमासे निपातनात् पादशब्दस्य पद्पदाभ्यामादेशाभ्यां सह एते पद्गादयश्चत्वारो यथेष्टं साधवो भवन्ति। तथा हिमादिषु परेषु पादस्य पद्धिमादयश्चत्वारः। पद्घो। घोषादिषु परेषु पादस्य पदादेशेन पद्घोषादयन्तु चत्वारो वा साधवो भवन्ति। साधव इति वृत्तिः। पूर्वसूत्रेण नित्ये प्राप्ते विकल्पार्थमिदं। एते सर्वे गादेरन्तर्गणाः। पद्ग इति पादाभ्यां गच्छतीति गाते वा इति वाक्ये गमेरजित्यनेन अच् संसारस्य हरश्चितीति अजन्तः गः। गाङ् गताविथस्माच्च अकर्मण्यारामात् क इत्यनेन कप्रत्ययान्तो गः। ततः उपेन्द्रोर्यादीत्यनेन समासः। सोऽपि कृष्णपुरुष एव कर्त्तृकरणे कृतेत्युक्तत्वात्। एवमुत्तरत्रापि

## २८८. धि-पेष-वास-वाहनेषु ।

उदधिः उदपेषं पिनष्टि ।

## २८९. मन्थौदनशक्तुबिन्दुवज्रभारहारविविधवीरुधगाहेषु वा ।

---

**अमृता०**—२८८. धिपेषेति । कृष्णपुरुषे धि-पेष-वास-वाहनेषु परेषु उदक शब्दस्य उद इत्यरामान्त आदिश्यत । उदधिरिति—उदकं धीयते अस्मिन्नित्यर्थे—उदध्यादयश्च साधव इत्यनेन संज्ञायां कि प्रत्ययान्तः । उदपेषमिति—उदकेन पिनष्टीति स्नेहद्रव्ये पिष इत्यनेन णमुः, धातोरनुप्रयोगश्च । कृत्समासत्वेऽपि उत्तरपदप्राधान्यादेषां कृष्ण-पुरुषत्वम् । एवं उदकस्यवासः, उदके वासो वा, उदवासः, उदकस्य वाहनः उदवाहन इति ।

**अमृता०**—२८९. मन्थेति । कृष्णपुरुषे मन्थादि दशसु परेषु उदकस्य उद इति विकल्पेनादिश्यते । उदमन्थ इति—मथ्यतेऽनेन मन्थः, उदकस्य मन्थः उदमन्थः । उदकेन मिश्र ओदनः उदौदनः, उददेन श्लिष्टः शक्तुः उदशक्तुः, संस्कार द्रव्यं भक्ष्येणेति कृष्णपुरुषः । उदविन्दुः उदवज्रः उदभारः उदवीवध इत्येषां षष्ठी समासः । वीवध इति विपूर्वहनो घण्, उपेन्द्रस्य त्रिविक्रमः, वधादेशश्च । विवधो वीवधो भारे पर्याहाराध्वनो-रपीति हेमचन्द्रः । अत्र तु पर्याहारोऽर्थः, दुग्धजलादि भाराहरणार्थः साधनविशेषः,

---

यथोयोग्यं । पदाजिरिति पादाभ्यां अजतीति अज गतौ क्षेपणेच, इण्च भावे, कृत्प्रकरणे इत्युक्त स इण् कृद्वाहुल्यात् अत्रैव निपातनाद्वा अस्माद्धातोः कर्त्तर्यपि स्यादजेर्वीनिषेधश्च । उद्धवारामस्येति वृष्णीन्द्रः । एवं पादाभ्यामततीति अत सातत्यगमने इत्यस्मादिण् । अथैवस्रादेरिणित्युपपदे इण् बाहुल्यादजेर्वी न भवतीत्यन्ये । पादेनोपहतः पादोपहतः, इत्यत्र पादस्य अदन्तः पदादेशः अन्यथायं प्रयोगो न सिध्येत् । पदसमानार्थपच्छब्देनापि पद्गपदाजिपदातीत्यादिसिद्धौ पादगपादाजिप्रभृतीनां निरासार्थमिदं सूत्रं । पदातिः पत्तिः पद्ग इत्यमरः । पदोपहतेत्यत्रादन्तपदादेशफलदर्शनात् यथायोग्यं पद्ग इत्यादिकमपि ज्ञेयं । पद्धिममिति पादयोर्हिममिति षष्ठीकृष्णपुरुषः । पत्काषीति पादाभ्यां कषतीति कषहिंसायामित्यस्मात् णिनिस्तच्छीलादावित्यनेन णिनिः । पद्धतिरिति पादाभ्यां हतिरिति विग्रहे कर्त्तृकरणे कृतेत्यनेनक्तचन्तत्वेन हतिशब्देन समासः । पद्ग इति पादाभ्यां यातीति अकर्मण्यारामादित्यनेन कः आरामहरः कंसारीत्यनेन आरामहरः । अतदर्थे यतीति लक्षणेन अतदर्थे यति परे पादस्य ह्रस्वो भवति, स्वयं तद्विदधातीति पद्याः सशर्करा इत्यन्ये तन्मते तद्धितान्तोऽयं प्रयोगः । पादाभ्यां घोषति पादाभ्यां शब्दयतीत्यादौ वाक्ये पद्घोषादित्रयः पचाद्यदन्ताः । पादाभ्यां निष्कासयतीति कै शब्दे अकर्मण्यारामेत्यनेन कप्रत्ययान्तः पन्निष्क इति । एवं पादघोषादयः । पादस्य पत्पदौ गादिषु इति तद्धितेऽपि पद्गादयः सिध्यन्त्येव, तथापि गणदर्शनोदाहरणदर्शनाभ्यां ग्रन्थबाहुल्यभयादेव न कृतमिति ॥ २८७ ॥

**बाल०**—उद । अधिकारोऽयं, कृष्णपुरुषस्तु पूर्वतोऽनुवर्त्तते ॥ २८८ ॥

उदमन्थः उदकमन्थ इत्यादि ।

**२९०. तत्पूर्यैकविष्णुजनादौ च वा ।**

उदकुम्भः उदककुम्भः । अपूर्यत्वे तु उदकगिरिः । एकेति किम्— उदकस्थाली ।

---

वाहक इति वङ्गादौ प्रसिद्धः । विविध धीरुध इति त्वपपाठः । उदकं हरति उदहारः, भारीति प्रसिद्धः । उदकं गाहते उदगाहः । एतौ अणन्तौ । पक्षे उदकौदन इत्यादयश्च ।

**अमृता०**—२९०. तदिति एको विष्णुजन आदि र्यस्य स एकविष्णुजनादिः, तेन पूर्यः तत्पूर्यः । तत्पूर्यश्चासौ एकविष्णुजनादिश्चेति तथा । तस्मिन् परे उदकस्य उदो वादिश्यते कृष्णपुरुषे । उदकुम्भ इति—उदकेन पूर्णः कुम्भ इति विग्रहे—पूरण द्रव्यं पात्रेणेति समासः । एवमुदघटः उदकघटः, उदपात्रं उदकपात्रमित्यादि । अपूर्यत्वे त्विति—उदकेन व्याप्तो गिरि रिति विग्रहे उदकगिरिः । तत्रैव समासोदाहरणे तुलस्युदकमितिवत् समासः । इह गिरेः पात्रत्वाभावेन पूर्यत्व विवहान्नादेशः । उदकस्थालीत्यत्र उत्तरपदस्थस्यादि-वर्णस्य सत्सङ्गवत्त्वेनैकविष्णुजनत्वाभावान्न त्वादाशः । षष्ठीसमासोऽयम् ।

---

**बाल०**—धि । कृष्णपुरुषसमासे धिपेषवासवाहनेषु परेषु उदकस्योदो भवति । उदकं दधातीति उदधिः समुद्रः । इकस्तिप् धातुनिर्देश इत्यनेन यद्यपि इक् धातुनिर्देश एव विहितस्तथाप्यत्र संज्ञात्वप्रतीतेः कर्त्तर्यपि स स्यात् संज्ञाशब्दानां यथाकथञ्चित् व्युपत्तित्वात् । एतत्तु छात्राणां व्युत्पत्तिवैचित्र्यार्थं वक्रोक्त्या मयोक्तं, वास्तुवम्तु उदध्यादयः संज्ञायां साधव इत्यनेन किप्रत्ययान्त उदधिरिति । उदधिरिति उदकं धीयते-ऽस्मिन्निति स्नादेरिण् इति इण् । तत्रैवोक्तं । आङ्पूर्वडुधाञ् धारणपोषणयोराल्लुविति । तत्राङ्पूर्व इत्युपलक्षणं प्रादिपूर्वे कर्मपूर्वेच भवतीति तेन विधिः शरधिः वालधिरित्या-दीत्यन्ये । तन्मते कृष्णपुरुषनियमाभावात् । उदकेन पिनष्टीति उदपेषं पिनष्टि । स्नेहद्रव्ये पिष इत्यनेन णमुर्णम्वन्तोऽनुप्रयोगश्च । एवं उदकस्य वासः उदवासः, उदकस्य वाहनः उदवाहनः ॥ २८९ ॥

**बाल०**—मन्थौ । मन्थश्च ओदनश्च शक्तुश्च विन्दुश्च वज्रश्च भारश्च हारश्च विविधश्च वीरुधश्च गाहश्च ते । कृष्णपुरुषे मन्थेत्यादिषु परेषु उदकस्योदो वा स्यात् । मथ्यते अनेनासौ मथ्यते इति वा मन्थोऽदन्तः । उदमन्थ इति । उदकेन मन्थः कर्त्तृकरणे कृतेत्यनेन समासः । एवं उदकेन युक्त ओदनः उदौदनः उदकेन मिश्रः शक्तुः उदशक्तुः इत्यत्र संस्कारद्रव्यं भक्षेणेत्यनेन कृष्णपुरुषः । द्रवद्रव्ययुक्तः शक्तुरुच्यते । शकधातोः सिङ्गादेस्तुरित्यनेन तुप्रत्ययान्तः । तथा, उदकस्य विन्दुः उदविन्दुः । विन्दुरिच्छुश्च साधू इत्यनेनोणप्रत्ययान्तो विन्दुः । उदकस्य वज्रः उदवज्रः, वज्रः कुलिशं । उदकं विभर्त्ति उदकं हरतीति उदभारोदहारौ कर्मण्यणन्तौ । उदकस्य विविधः उदकस्य वीरुध इति उदविविधोदवीरुधौ षष्ठीकृष्णपुरुषसिद्धौ । वीरुध इति ईशोद्भवकिरतिगिरतीत्यनेन

**२८१. उदमेघ-क्षीरोदादयः।**

साधवः।

**२८२. पश्चाच्छब्दस्य पश्चभावोऽर्द्धे।**

पश्चार्द्धः।

**२८३. मांस्पचन-मांस्पाकौ वा।**

---

**अमृता०**—२८१. उदमेघेति। उदमेघ-क्षीरोदादय उदादेशेन सह साधवो भवन्ति। अत्र अप्राप्ते निपातेनादेशः। उदकस्य मेघः उदमेघः। क्षीरमयमुदकमस्य क्षीरोदः, इह निपातात् पीताम्बरे, उत्तरपदे चोदादेशः। आदि पदेन—दुग्धोदः लवणोदः सुधोदः उदवाहः उदवलाहक इत्यादयो बोध्याः।

**अमृता०**—२८२. पश्चादिति। कृष्णपुरुषे अर्द्ध शब्दे परे पश्चादित्यव्ययस्य पश्च-भावः स्यात्। पश्चात् (पश्चिमस्य) अर्द्धः पश्चार्द्ध इति षष्ठी समासः।

**अमृता०**—२८३. मांसम्पचनेति। एतौ वा निपात्येते। मांसस्य पचनमित्यादि

---

कप्रत्ययान्तः। उदवीरुध इत्यत्र उदवीवाधा इति कश्चित्। उदकं गाहते उदगाहः अणन्तः इति। पक्षे उदकौदन इत्यादयः॥ २८०॥

**बाल०**—उत्पू। तेन पूर्यः तत्पूर्यः, एकविष्णुजन आदिर्यस्य स एकविष्णुजनादिः, तत्पूर्यश्चासौ एकविष्णुजनादिश्चेति तत्पूर्यैकविष्णुजनादिः, तस्मिन् परे उदकस्य उद इत्ययमादेशो वा स्यात्। अत्रैकशब्दः उत्तरपदस्थादिसत्सङ्गादिव्यावर्त्तकः। पूर्यश्चाधि-करणभूतं विशिष्टमेव लोकप्रसिद्धं कुम्भादिग्राह्यं। उदकेन पूर्णः कुम्भः उदकुम्भः। एवं उदघटः उदकघटः, उदकलसः, उदपात्रं उदकपात्रमित्यादयोऽत्र यथासम्भवमुह्याः। अपूर्ये त्विति रूपं दर्श्यते इति शेषः। उदकेन युक्तो व्याप्तो वा गिरिरित्यर्थे। उदकस्य स्थलीति विग्रहे॥ २८१॥

**बाल०**—उद। उदमेघः क्षीरोदश्च आदिर्येषां ते उदमेघक्षीरोदादयः। एते उदमेघ-क्षीरोदादय उदकस्य उदादेशेन संज्ञायां साधवो निपात्यन्ते। साधवः साधू साधुरित्यादयस्तु प्रायः सर्वत्रैव वृत्तयो ज्ञेयाः। उदकस्य मेघ उदमेघ इत्यत्र मेघे परे उदकस्य उदादेशो निपातफलं पूर्वसूत्रादप्राप्तेः। क्षीरेति। क्षीरमिवोदकमिति। उपमानमुभयस्थधर्म-वचनैरिति कृष्णपुरुषे, क्षीरमिवोदकमस्येति पीताम्बरेऽपि क्षीरोदः साधुः। क्षीरोदः क्षीरसमुद्रः। कृष्णपुरुषे पूर्वपूर्वसूत्रेणोत्तरपद एव परे उदकस्योदविधानमतः क्षीरोदे-त्यत्रोत्तरपदस्य तदादेशो न प्राप्नोतीति सूत्रमिदं। अथोवा संज्ञायां विषये उत्तरस्य पदस्य स्थाने सामान्येनैवोदादेशो भवतीति सूचनार्थं क्षीरोदादय इति निपातितं। आदिपदेन उदवलाहकः उदवाह इत्यादयः। लवणोदः सुधोदः मुण्डोद इत्यादयश्च यथायथमुह्याः॥२८२

निपातौ। पक्षे मांसपचनं मांसपाकः।

**२९४. समो मस्य हरो वा तत-हितयोः।**

सततं सन्ततं, सहितं संहितम्। सातत्यमित्यत्र तु नित्यम्।

**२९५. अद्वयस्य हर एवेऽनवधारणे।**

अनवधारण इति काश्मीरकमतम्। अतएव इवार्थे इति कातन्त्रपरिशिष्टम्। अनियमार्थे इति पदचन्द्रिका। एकार्थश्च सर्वैर्मन्तव्यम्। एवौपम्येऽवधारणे इति विश्वप्रकाशात् तथैव तात्पर्यात्।

---

विग्रहः। अत्र मांस शब्दस्य संसार हरेण समासनिपातः। निपाताभावपक्षे मांसपचनमित्यादौ यथाप्राप्तं।

अमृता०—२९४. समइति। तत-हितयोः परयोः समित्यव्ययस्य मस्य हरो वा स्यात्। ततमिति तनुविस्तारे भावे क्तः। हि गतौ भावे क्तः। उपेन्द्रोर्यादीत्यादिना समासः। सन्ततं सर्वदा, संहितं सह। सातत्यमित्यत्र तु नित्यमिति—सततस्य भावः सातत्यम्, भावार्थे तद्धितयण् प्रत्ययः। सन्ततशब्दस्य तु तद्धित यण् नाभिप्रेत इति भावः।

अमृता०—२९५. अद्वयस्येति। अनवधारणार्थे एव-शब्दे परे पूर्वपदस्थितस्य अद्वयस्य हरः स्यात्। अत्र 'एवेऽनियोगे' इति वोपदेवलक्षणम्, तथा 'एवे चानियोगे पररूपं वक्तव्य'मिति वार्त्तिकञ्च दृष्ट्वा विरुद्धायमाण स्वकृतलक्षणस्य समञ्जसाय मतान्तरमुट्टङ्कयति—अनवधारण इतीत्यादि। तत्र च काश्मीरकादित्रयाणां विभिन्नोक्ती रेकार्थपर्य्यवसतां नयति—एकार्थञ्चेति। कोषशिरोमणौ विश्वप्रकाशे औपम्यावधारणरूपमर्थद्वयं हि निर्दिष्टम्, अतोऽवधारणेतरो योऽपर औपम्यार्थ स्तत्रैव एवशब्दस्याद्वयहरो भवतीत्यायातमेतावता। तदुपममिति कृष्णनाम तुल्यमित्यर्थः। समासकार्यप्रकरणे प्रोक्तोऽपि विधिरयं न समासाश्रितः किन्तु केवल सन्धिसम्बन्धी, एवेन सह समासविधानाभावात्। समासातिरिक्तकार्यश्चात्र विव्रियत इत्यदूरे ज्ञापयिष्यते।

---

बाल०—पश्चा। सुगमं। पश्चाच्छब्दस्य पश्चेति कृतेऽपि प्रयोगः सिध्यत्येव, किन्तु पश्चाच्छब्दस्य प इत्यादेशे इति मन्दधियामाशङ्का स्यात्, तन्निवासार्थं भावपदमुपन्यस्तं। पश्चात् पश्चिमस्यार्द्ध इति विग्रहे पश्चार्द्धः॥ २९३॥

बाल०—मांस्प। वाच्यते इति अन-णकप्रत्ययान्तौ पचनपाकौ। मांसस्य पचनं मांसस्य पाक इति वाक्ये पचनपाकयोः परयोर्मांसब्दस्य संसारहरेणैव मांसपचनमांसपाकौ वा निपातौ निपात्येते। पक्षे इति निपाताभावपक्षे इत्यर्थः। उदाहरणद्वयन्तु स्वयमेव दर्शितं॥ २९४॥

बाल०—समो। ततञ्च हितञ्च ते ततहिते। एतयोः परयोः समुशब्दस्य मस्य

कृष्णनाम एव कृष्णनामेव रामनाम, तदुपममित्यर्थः। अर्थवद् ग्रहणे-नानर्थकस्येति न्यायान्नेह—अथ एवेत्याह। एवेति शब्दमनुकृतवानित्यर्थः। अवधारणे तु—कृष्णनामैव परमं, ममैव कृष्णः।

**२८६. औपम्ये तु नियोगेऽप्यद्वयहरः स्यात्।**

राधा एव राधेव कृष्णं भज। अत एवेचानियोगे इति वार्त्तिकेऽप्यनियोगपदस्यानवधारण एव तात्पर्यं मन्यन्ते।

---

अथ एवेति—एव शब्दो नात्रावधारणार्थको न वा उपमार्थकः किन्तु अनुकरणशब्द एष इति नाद्वयहरः। प्रत्युदाहरति—अवधारणे त्विति। इतरव्यावृत्तिपुरः सरमेकनिश्चयः अवधारणलक्षणमिति भावः। कृष्णनामैव परमं सर्वसु नामसु कृष्णनाम हि श्रेष्ठमिति वक्तुर्विवक्षा। एवं ममैव कृष्णो नान्यस्येति व्यावृत्ति र्गम्यते।

**अमृता०**—२८६. औपम्य इति। उपमार्थे एवशब्दे परे सति नियोगेऽपि प्रेरणेऽपि पूर्वस्याद्वयहरः स्यात्। पूर्वस्यैव प्रपञ्चोऽयम्। अपि शब्दादप्रेरणे चाद्वयहरः पूर्वेण सिद्धः। राधेवेति—राधा यथा सर्वाननपेक्ष्य कृष्णं भजति तथा त्वमपि भजेत्यर्थः। अत्र विधातृहि-प्रत्ययान्तेन भजेत्यनेन नियोगो बोध्यते। वार्त्तिकाद्यभिप्रायं प्रकटयति—अतएवेत्यादिना। तत्रानियोग शब्दस्यानवधारणार्थ एव तात्पर्येण मन्यते तैर्वार्त्तिकादिभिरपि, अत औपम्यार्थे हि तदपि पर्यवसितम्।

---

हरो वा भवति। सततमित्यादिचतुर्षु उपेन्द्रोर्यादिव्यन्तेत्यनेन समासः। ततमिति तनु विस्तारे इत्यस्माद्भावे क्तः। हितमिति हि गतावित्यस्मादपि स एव क्तः। सातत्यमिति सततस्य भाव इत्यर्थे इत्यत्रतु नित्यं समो मस्य हर इति शेषः। एतद्विधिवाक्यं न सूत्रमिति वाशब्दस्य व्यवस्थावाचित्वात् सातत्यमित्यत्र नित्यमित्येके॥ २८५॥

**बाल०**—अद्व। अनवधारणे नियमाभावार्थे वर्त्तमान एवशब्दे परे आरामस्यच हरो भवति। अथवा न विद्यते अवधारणं नियमो यत्र तदनवधारणं तस्मिन्नेव परे। अनेति। अनवधारणे एवे अद्वयस्य लोपः स्यादिति काश्मीरकस्य ग्रन्थकारविशेषस्य मतं। अत इति एवार्थे एवे, अतः अद्वयस्य लुक् भवतीति कातन्त्रपरिशिष्टं कलापपरिशेषकारमतमिति। अनीति। अनियमार्थे एवे परेऽद्वयस्य लोप इति पदचन्द्रिकाख्य-स्वारस्वतटीकाकृदाह। एकार्थश्चेति सर्वैर्मन्तव्यमित्यत्र हेतुमाह एवाविति। विश्वप्रकाशाच्च तथैव प्रकारेण तात्पर्यात् गोस्वामिचरणैरेतैरेव स्वमतं स्थापितमिति। कृष्णनाम एवेति केवलसमासवाक्यं दर्शितं कृष्णनाम इवेत्यर्थः। तदुपममिति तत्तुल्यमित्यर्थः। एवं कृष्णेव प्रद्युम्नः, रामेव लवः, राधेव ललिता, ललितेव विशाखा, सख्येव पद्मा इत्यादयः। अर्थवदित्यादौ अनर्थकस्येत्यत्र न ग्रहणमिति शेषः। अथ एवेत्याह इति वाक्ये अथैवेत्याहेति। अत्र न एवे परे अथशब्दस्याद्वयहरः, इवार्थाभावात्। अत्र प्रकारान्तरेण स्वयमेव हेतुमाह एवेतीत्यनेन। शब्दमनुकृतवानिति शब्दानुकरणं कृतवानित्यर्थः। तत्

२९७. ओत्वोष्ठयो स्तु वा।

श्यामोतुः श्यामौतुः। कृष्णोष्ठं कृष्णौष्ठं। अनयोस्तु समास एव। नेह—तवौष्ठं।

२९८. ऋण-प्र-वसन-वत्सर-वत्सतर-दश-कम्बलानां मिलित्वा वृष्णीन्द्र ऋणे।

---

**अमृता०**—२९७. ओत्विति। ओतुश्च ओष्ठश्च अत्वोष्ठौ, तयोः, परयोः पूर्वस्थस्या द्वयस्य हरो वा भवति। ओतुर्मार्जारः। ओतु विडालो मार्जार इत्यमरः। एवं कृशोतुः कृशौतुः, बिम्बोष्ठः बिम्बौष्ठः। अनयोस्त्विति—कृष्णपुरुषाधिकारात् समासे एवाद्वयहरो लभ्यते, तथापि समासएवेति नियमोक्तिरिह ज्ञापयति—क्वचिदसमासेऽपि कतिचित् कार्याणीह प्रकरणे सन्निवेशितानि सन्तीति। तथाहि,—तद्धितादेशः—हार्दं हृदर्यमित्यादि, केवलसन्धिकार्यम्—कृष्णनामेवेत्याद्युक्तम्। तथा णत्वप्रकरणे—लक्ष्मण इति, षत्वप्रकरणे च—सर्पिष्काम्यति, यजुष्पठेत्यादयो वक्ष्यन्ते। एतदुद्दिश्य हि सन्धिप्रकरणे प्रोक्तम्—अद्येव हलीशा प्राच्छंति ऋणार्णं गोऽग्रं गवेन्द्र इत्यादयस्त्वाख्यात-समासयो र्वक्ष्यन्ते दुर्गमत्वादिति। नच 'सुपां सुपा तिङे'त्यादि वैयाकरण भूषणोक्त मतेन तिवादिभिश्च समासस्येष्टत्वात् सर्पिष्काम्यतीत्यादिषु च सुबन्तस्य तिङन्तेन समासः सङ्गच्छत एवेति वाच्यम्, तत्र सुप्तिङ् समासे गतिकारकसंज्ञकानां प्राद्यव्ययानामेवाभीष्टत्वेन प्रभवतीत्याद्युदाहरणोपन्यासादिति।

**अमृता०**—२९८. ऋणेति। ऋणे परे ऋणादि सप्तानामरामः परस्थेन ऋरामेण सह मिलित्वा वृष्णीन्द्रः स्यात्। सन्धिसूत्रेण अर् प्राप्ते तदपवादविधानमेतत्। सन्धि-

---

शब्दानुकरणमत्र वाक्यालङ्कार एव। अथ इत्याह इत्यर्थः। अवधारणे त्विति रूपं दर्श्यते। कृष्णनामेति परमं श्रेष्ठं। ममेति कृष्ण इति सर्वस्वमिति शेषः॥ २९६॥

**बाल०**—औप। उपमायां भव औपम्यं तस्मिन् औपम्ये उपमायां प्रवर्त्तमानेतु एवे परे नियोगे प्रेरणे अपिशब्दादनियोगे चाप्रेरणे अद्वयस्य हरो भवति। राधा एवेति विग्रहः, पूर्ववत् राधेवेति राधा यथा कृष्णं भजति तथैव त्वमपि भजेत्यर्थः। अत्र विधातृहिप्रत्ययान्तो भजप्रयोगो नियोगं बोधयतीति। ननूपमानोपमेययोः क्रियायां पुरुषभिन्नस्य दोषत्वमलङ्कारे प्रोक्तं, तथापि गोस्वामिपदेन कथमेवमुक्तमिति चेत्तदैवं वाच्यं, नाममध्यमोत्तमपुरुषवैषम्यादिदोषत्वं यदलङ्कारादावुक्तं तत्तु काव्यमधिकृत्यैवात्र विचार इत्युक्तदिशा पद्यपरं नतु वाक्यपरमिति लक्ष्यते, अतो ग्रन्थबाहुल्यभयादत्र नो विचारितमिति। अतएवे चेति अनियोगेच एवे परे, अतोऽद्वयस्य लोप इत्यर्थः। चानियोगे इत्यस्मादुत्तरे इति वार्त्तिकसूत्रमिति पूरणीयं। अत्र स्थितेतिशब्दस्तु हेतौ। किम्वा एक एवेतिशब्दः काकाक्षिगोलकन्यायेनोभयत्रान्वयात् इति वार्त्तिकसूत्रमितुक्त्वा हेतावपि वर्त्तते तस्मादेवं व्याख्येयं। अत्र एवे चानियोगे इति वार्त्तिकसूत्रमिति हेतोर्वार्त्तिकेऽपि मतेऽनियोगपदस्य सर्वे पण्डिता अनवधारणेऽर्थे एव तात्पर्यं मन्यन्ते इति समुदायार्थः॥२९७

**ऋणार्णं प्रार्णं वसनार्णं वत्सरार्णं वत्सतरार्णम्। वत्सतरमनादृत्य वत्सश्चान्द्रकाशिकादौ पठ्यते, तदिहासम्मतं पतञ्जलि शाकटायनादीनां वत्सरस्यैवेष्टत्वात्, तरप्रत्ययोऽत्र भाष्यादावुक्तः।**

**२९९. अद्वयस्य मिलित्वा वृष्णीन्द्र ऋते तृतीया समासे।**

**कृष्णेन ऋतः कृष्णार्त्तः, अश्वेन ऋतः अश्वार्त्त इति।**

---

प्रकरणोक्तानां मध्ये—अद्वयस्य हर एवेऽनवधारण इत्यनेन अद्यत्रेति सिद्धम्, प्राच्छतीति त्वाख्याते प्रोक्तम्, अनेन च ऋणार्णमितिसिद्धम्, अन्यानि चाग्रे साधयिष्यन्ते। ऋणस्य ऋणं ऋणार्णम्, ऋण परिशोधनाय यदन्यदृणं क्रियते तद् ऋणार्णमुच्यते। प्रार्णमिति—प्रकृष्टञ्च तदृणञ्चेति, प्रगतमृणादिति वा विग्रहः। वत्सरार्णमिति वत्सरेण देयमृणमित्यर्थः समास्तु षष्ठीकृष्णपुरुषः। वसनाय ऋणं, एवं कम्बलायऋणमिति चतुर्थी कृष्ण पुरुषः। दृश ऋणानि सन्त्यस्येति पीताम्बरे हि दशाणः। वत्सतरः अप्राप्तर्त्तु गौरित्यर्थः। मतान्तरमाह—वत्सतरमित्यादि। तदिति चान्द्रादि मतम्। पतञ्जलिर्भाष्यकारः, शकटायणः प्राचीनवैयाकरणः, तेषामसम्मतम्। तत्र हेतुः—वत्सतरस्यैबेष्टत्वादिति। तच्च दर्शयति—तरप्रत्ययइति। अत्र वत्सशब्दे तर प्रत्ययो भवतीति भाष्यादावुक्त इत्यर्थः। तस्माद् वत्सतरएव सर्वेषामभीष्टइति निर्णीतमिति भावः।

**अमृता०**—२९९. अद्वयस्येति। तृतीया समासे सति ऋतशब्दे परे तेन मिलित्वा द्वयस्य वृष्णीन्द्रः स्यात्। सन्धिसूत्रेण ऋद्वये अर् प्राप्ते तदपवादोऽयम्। ऋतः प्राप्तो युक्तो वेत्यर्थः। तृतीया समास इति किम्—परमर्त्तः। समास इति किम्—सुखनर्त्तः सुखेन ऋतइति विभाषा।

---

**बाल०**—ओत्वो। ओतुश्च ओत्वोष्ठे अनयोस्तु परयोः अद्वयस्य हरो भवति। श्यामश्चासौ ओतुश्चेति कृष्णश्च तदोष्ठश्चेति इति वाक्ये वाक्ये श्यामेत्यासिद्धयं। ओतुर्विडालमार्जार इत्यमरः। अनयोस्त्विवति। यद्यपि सूत्रे सामान्यतः ओत्वोष्ठयोरित्युक्तं, तथापि कृष्णपुरुषाधिकारादनयोस्तु परयोः समासे एवाद्वयहरः तेन नेहेति शेषः। अत्र समास एवेति नियमात् अन्यत्र क्वचिदसमासेऽपि किञ्चित् कार्यं स्यात्, तेन तथैवेत्याह सुपुंस्कृष्णभजनमित्यादि स्यात्॥ २९८॥

**बाल०**—ऋण। ऋणञ्च प्रच वसनञ्च वत्सरश्च वत्सतरश्च दशच कम्बलश्च ते ऋणप्रवसनवत्सरवत्सवरदशकम्बलास्तेषां। अत्रावयवसम्बन्धे षष्ठी तेन एतेषां वृष्णीन्द्रयोग्यावयवं परेण मिलित्वा वृष्णीन्द्रं जनयति, अतएव ऋणे परे तेन सह मिलित्वा ऋणादीनामरामो वृष्णीन्द्रः स्यात्। सन्धिप्रकरणोक्तसूत्रेणाप्राप्ते इदं सूत्रं। तत्रैवोक्तञ्च अद्येव हलीशा प्राच्छति ऋणार्णमित्यादयस्त्वाख्यातसमासयोर्वक्ष्यन्ते दुर्गमत्वादिति। ऋणार्णमिति ऋणस्य ऋणमित्यर्थे। प्रार्णमिति प्रगत ऋणात् प्रकृष्टञ्च तत् ऋणञ्चेति वा। वसनार्णमिमि ऋणमिति। वत्सरार्णमिति वत्सरेण देयं ऋणमित्यर्थः। वत्सतरार्णमिति

## ३००. गोररामे वा सन्धिः ।

गो अग्रं गोऽग्रम् ।

## ३०१. गोरोरवः सर्वेश्वरे वा ।

गवेशः गवीशः, वस्य हरे ग ईशः । गवाग्रमित्यपि । गामञ्चति गवाङ् गवाञ्चौ । शसि कार्यार्थमक्षरमित्यादि न्यायेन पुनर्विश्लेषात् गव-अच् इति स्थिते अचोऽराम हरे । नैमित्तिकापायश्च,—गोचः । उत्तरपद इत्येव—पञ्चगवप्रियः ।

---

अमृता०—३००. गोरिति । सर्वेश्वरे परे गोशब्दसम्बन्धी सन्धिर्वा भवति । एओभ्यामस्य हरो विष्णुपदान्त इति नित्यं प्राप्तेऽनेन विकल्पः कृतः । गोरग्रमिति विग्रहे षष्ठी समासः ।

अमृता०—३०१. गोरोरिति । सर्वेश्वरे परे गोशब्दस्य ओरामस्य अव इत्यादेशो वा भवति । अव इत्यरामान्तनिर्देशः, विष्णुपनान्तादेशस्तु—ओ अविति सन्धिसूत्रेणैव सिद्धः । तत्र च सन्धिसूत्रे विशेषनिर्देशाभावाद् विष्णु पदान्ते अविष्णुपदान्ते चावादेशो लब्धः, तत इह समासाधिकाराद् विष्णुपदान्ते तत्प्राप्ते निर्वाधत्वेन गवीशः गईश इति रूपद्वयंसिद्धम् । गवामीश इति षष्ठीसमासः । गवाग्रमित्यपीति—सर्वेश्वरे वेत्युक्तत्वात्, अरामेतरसर्वेश्वरग्रहणाभावात् तथा विष्णुपदान्त विषयत्वसद्भावाच्च विभाषया अवादेशश्च भवतीत्यर्थः । ओ अव् तु न स्यात् अरामे परे हरकार्यस्यैवान्तरङ्गत्वादिति । नैमित्तिकापायश्चेति—अचः अरामरूपनिमित्तस्यापाये सति नैमित्तिकस्य अवादेशस्य चापाय इत्यर्थः । उत्तरपद इत्येवेति—उत्तरपदे परे उत्तरपदस्थादिसर्वेश्वरे परे हि गोरोरव आदिश्यते नान्यत्रसर्वेश्वर इति तात्पर्यम् । तेन पञ्च गवप्रिय इति—पञ्च गावः प्रिया यस्येति पीताम्बरे टप्रत्ययसिद्धः । अत्र गोशब्दस्य सर्वान्तपदत्व विरहान्नोत्तरपदता किन्तु मध्यपदता, तत एव न हि अवादेशः, पूर्वेण सन्धिकार्येण अव् ।

---

वत्सतरस्य ऋणमिति । एवं दशानां ऋणं दशार्णं कम्बलानां ऋणं कम्बलार्णं । वत्सतरः अप्राप्तर्त्तुः गौरिति । वत्सतरमिति । चान्द्रकाशिकादाविति ग्रन्थे इति शेषः । पठ्यते इति चान्द्रादिकृद्भिरिति शेषः । तदिति चान्द्रादिमतं । हेतुमाह पतञ्जलीति । तथेति । अत्र वत्से तरप्रत्ययो भाष्यादावप्युक्त इत्यर्थः । तस्मात् सर्वेषामेतदेव मतमिति निश्चितं ।।२९९

बाल०—अद्व । तृतीयासमासे सति ऋते परे तेन सह मिलित्वा अद्वयस्य वृष्णीन्द्रो भवति । विग्रहोदाहरणन्तु स्वयमेव दत्तं । इतिशब्दोऽत्राद्यर्थः । तेन शीतेन ऋतः शीतार्त्तः इत्यादि यथायोग्यमुह्य ।। ३०० ।।

बाल०—गोर । अरामे परे गोशब्दस्य सम्बन्धी सन्धिर्वा स्यात् । अर्थादरामे परे एओभ्यामित्यनेन प्राप्तसन्धिर्गोशब्दाद्वा स्यात् । गो अग्रमित्यादौ गोरग्रमिति वाक्यं ।। ३०१ ।।

## ३०२. गवाक्षो गृहरन्ध्रे, गवेन्द्रो गवेशे ।

अवेन साधू ।

## ३०३. गव्यूतिः क्रोशयुग्मे ।

साधुः । अन्यत्र गोयूतिः ।

---

**अमृता०**—३०२. गवाक्ष इति । गृहरन्ध्रो वातायन स्तस्मिन् वाच्ये अक्षशब्दे परे गोशब्दस्य अवादेशेन नित्यं गवाक्ष इति साधुः स्यात्, तथा गवेन्दे अर्थात् षण्डे वाच्ये इन्द्रे परे गोशब्दस्यावादेशेन नित्यं गवेन्द्र इति साधुः स्यात् । गवाक्ष इति गवां किरणानामक्षीवेति यथाकथञ्चिद् विग्रहः । अक्ष्णोऽप्राण्यङ्गे इत्यनेनाक्षि शब्दात् समासान्तः अरामः । यद्वा अक्षशब्द इन्द्रियवाची, तत्रापि चक्षुरेव लक्ष्यते, तेन गवां किरणानामक्षमिवेति वा विग्रहः । वातायने हि रूढौ गवाक्ष शब्दः, अन्यत्र तु गोरक्षिणी इवाक्षिणी यस्येति पीताम्बरे—स्वाङ्गाभ्यामक्षिसक्थिभ्यामिति टः गवाक्षः गोऽक्षः गो अक्ष इति यथाप्राप्तविकल्पः स्यादेव । गवामिन्द्रः गवेन्द्रः, अन्यत्र तु गौरिन्द्र इवपूज्या यत्र स गवेन्द्रो यज्ञः, गविन्द्रः ग इन्द्र इति च ।

**अमृता०**—३०३. गव्यूतिरिति । क्रोशद्वये वाच्ये यूति शब्दे परे गोरवादेशेन गव्यूति रिति साधुः स्यात् । अन्यत्रेति—गोयूति गवां मिलनमित्यर्थः । यूतिरिति यु मिश्रणामिश्रणयोरित्यस्य 'ऊत्यादयः साधव' इति क्तिप्रत्ययान्तः ।

---

**बाल०**—गोरो । सर्वेश्वरे परे गोरोरामस्य अवो वा स्यात् । अव इत्यरामान्तनिर्देशः सविष्णुसर्गदर्शनात् । विष्णुजनान्तस्तु पूर्वेणैव सिध्येत्, तदर्थं लक्षणमनर्थकमिति । गवामीश इति वाक्ये गवेत्यादिद्वय । इत्यपीति सर्वेश्वरे वेति सर्वेश्वरग्रहणादिति शेषः । वस्येति अयादीनां यवयोर्वा इत्यनेन वस्य हरे सतीति शेषः । गामञ्चति गच्छतीति गोशब्दादञ्चधातोः क्विप् । गवाच् ततः प्रथमैकवचनं सु अचश्चतुर्भुजानुबन्धेत्यनेन नुम् । तवर्गस्य चवर्गः सोर्हरः । सत्सङ्गान्तहरः चवर्गस्य कवर्गश्च । गवाङ् । एवमरामे सन्धिविकल्पात् गो अङ् गोऽङित्यपि । शसीति शसि सति कार्यार्थमक्षरमित्यत्र विश्लेषयेन्मिलयेच्चेत्यूह्य । इत्यादीत्यादिपदेन यावत् सम्भवस्तावद्विधिरित्यस्यापि ग्रहण । पुनर्विश्लेषादिति सन्धि निवर्त्त्य पुनरक्षरविश्लेषादिति । अचोऽरामहरो भगवतीत्यनेन अरामहरस्तस्मिन् हरे सति निमित्तापाये नैमित्तिकस्याप्यपायश्चेति न्यायेन च सन्धि निवर्त्त्य पुनरामश्लेषात् गव अच् इति स्थिते सत्यचोऽरामहरो भगवतीत्यरामहरे निमित्तापाये नैमित्तिकस्याप्यपायाच्च गोचः इति । शसीत्युपलक्षणं टादावपि, गोचा गोचे इत्यादयः । गो चइत्यादौ पक्षत्रये समानं अरामहरत्वादिति । उत्तरपद इत्येवेति पूर्वस्यैव विवरणं नेदं सूत्र । उत्तरपदे परे उत्तरपदस्थादिसर्वेश्वरे एव गोरोररामान्तावादेशो नान्यसर्वेश्वरे, तेन नेहेति भावः । पञ्चगवप्रिय इति पञ्च गावः प्रिया यस्येति टप्रत्ययान्तः सिद्धः पूर्वमेवोक्तः ।। ३०२ ।।

## ३०४. अक्षौहिणी सेना संख्याविशेषे ।

मिलित्वा वृष्णीन्द्रेण साधुः ।

## ३०५. शकन्ध्वादयोऽरामहरेण साधवः ।

शकस्य अन्धुः शकन्धुः कूपः । सीमानमन्तति बध्नाति सीमन्तः केशविन्यास रेखायाम् । अन्यत्र सोमान्तः । कुलान्यटतीति कुलटा, रूढ्या भिक्षुकी असतीचोच्यते । भाष्ये एतदेवोदाहृतम् । आकृतिगणत्वमिति

---

**अमृता०**—३०४. अक्षौहिणीति । सेनायाः संख्या विशेषे वाच्ये ऊहिनी शब्दे परे अक्षशब्दस्यारामेण सह मिलित्वा ऊरामस्य वृष्णीन्द्रः स्यान्निपातात् । अन्यथा उद्वये ओ इत्येव प्रसज्येत । ऊहः समूहोऽस्या अस्तीति ऊहिनी । 'संज्ञायां नतु गात्' इति णत्वं वक्ष्यते । २४८७० संख्यकगजानां, तावतामेव रथानां, ७४६१० संख्यकाश्वानां तथा १०९३५० संख्यक पदातीनां समवाय संख्या अक्षौहिणी कथ्यते ।

**अमृता०**—३०५. शकन्ध्वादय इति । अन्ध्वादौ परे शकादीनामरामहरेण शकन्धुप्रभृतयः साधवो भवन्ति । शकस्य राजविशेषस्येत्यर्थः । सीमानमन्ततीति—अति बन्धने धातुः, इरामेत्त्वान्नुम् । सीमान्त इति सीम्नोऽन्त इति विग्रहः । यथा ग्रामस्य सीमान्तः । कुलानीति—नाना गोत्राणि गृहाणि भिक्षार्थमटतीति कुलटा भिक्षुकी, नाना कुलानि गोत्राणि अभिसरार्थमटतीति कुलटा असतीत्यर्थः । पचाद्यदन्तात् स्त्रियामाप् । अन्येत्त्विति —चान्द्रादय इत्यर्थः । बहूदाहरणप्रदर्शनात् तन्मते शकन्ध्वादीनांमाकृति सन्धार्यते ।

---

**बाल०**—गवा । गृहरन्ध्रे वातायने वाच्ये अक्षे परे गोशब्दस्यावादेशेन नित्यमेव गवाक्षः साधुः । किञ्च, अक्ष्णोऽप्राण्यङ्गे इत्यनेनाक्षिशब्दात् समासान्ताराम इति वक्ष्यते । गवे । गवेशे गोस्वामिनि वाच्ये इन्द्रे परे गोशब्दस्यावादेशेन नित्यं गवेन्द्र इत्यपि साधुः । अतएव वृत्तावेवेन साधू इति द्विवचनान्तं । गवाक्ष इति गोः अक्षीति षष्ठीकृष्णपुरुषः । अनेत्रार्थादक्ष्ण इति टस्तद्धितः, किन्तु गवाक्ष इति निपातनात् प्राण्यङ्गे वाच्ये अक्षे परे गोरोरामस्यारामान्तावादेशो न स्यात् । अपितु गोररामे वेत्यनेन विकल्पः सन्धिः स्यादिति गो अक्षः गोक्ष इत्येव । अत्राक्षमिन्द्रियवचनं, किम्वा गोरिवाक्षिणी यस्येति स्वाङ्गाभ्यामक्षिसक्थिभ्यामिति पीताम्बरे टः । यदा त्वक्षशब्दः शकटादौ वर्त्तते, तदा गो अक्षः गोऽक्षः गवाक्ष इति यथायोग्यं विकल्पः स्यात् ॥ ३०३ ॥

**बाल०**—गव्यू । क्रोशयुगे क्रोशद्वये वाच्ये गवां यूतिरिति वाक्ये युतिशब्दे परे गोरवा सह गव्युतिः साधुः स्यात् । यूतिरिति यु मिश्रणामिश्रणयोरित्यस्य ऊत्यादयः संज्ञायां साधव इत्यनेन क्तिप्रत्ययान्तः साधुः । क्रोशयुगेऽमिश्रणार्थो ज्ञेय इति । अन्यत्रेति । गोयूतिः गवा मिलनमित्यर्थः ॥ ३०४ ॥

**बाल०**—अक्षौ । सेनानां संख्याया विशेषे वाच्ये ऊहिनीशब्दे परे अक्षारामेण सह मिलित्वा उरामस्य वृष्णीन्द्रेणाक्षौहिणी साधुः । मिलित्वेति वृत्तावुक्तत्वात् ।

नोक्तम् । अन्ये तूदाहरन्ति—शुद्धोदनः, समनन्तरं, समशनं, अर्द्धशनं, हलीशा, लाङ्गलीशा ।

**३०६. पुत्रतरामस्य न द्वित्वं हत-जग्धयो रादिनि पुत्रादिनि चाक्रोशे ।**

**पुत्रहती पुत्रजग्धी पुत्रादिनी पुत्र पुत्रादिनी ।**

---

शुद्धोदनइति—शुद्धश्चासौ ओदनश्चेति विग्रहः । एवं समश्च तदनन्तरश्च, समश्च तदशनश्च, अर्द्धश्च तदशनश्च, हलस्य ईशा, लाङ्गलस्य ईशा इति क्रमेण विग्रहा ज्ञेयाः । ईशेति—ईशोद्धव किरति पृणातीत्यादिना कः, लक्ष्म्यामाप् । केचित्तु मूर्द्धण्यषान्तं पठन्ति । सङ्गतमशनमनेन, अस्मिन् काले वेति बहुब्रीहिरयमित्यपि केचिदाहुः ।

**अमृता०**—३०६. पुत्रेति । आक्रोशार्थे गम्ये हत-जग्धयोः परयोः, तया आदिनि पुत्रादिनि च परे पुत्र शब्दस्य तरामस्य द्वित्वं न भवति । पुत्र शब्दस्य व्युत्पत्ति र्द्विविधा, यथा,—पुनातीति पुत्रः, पुवो ह्रस्वश्चेति उणादि त्रप्रत्ययः । तथा पुत् नाम्नो नरकात् त्रायत इति पुत्त्रः, पूर्व वत् त्रायतेः क प्रत्ययः । आद्यपक्षे—विष्णुजनो विष्णुजने वेति विभाषया द्वित्वे प्राप्ते तन्निषेधः । उत्तरपक्षे नित्यद्वित्वे सिद्धेऽपि तत्प्रतिषेध इति विवेच्यम् । पुत्रहतीति—पुत्रो हतो ययेति विग्रहः, एवं पुत्रजग्धीति च । पुत्रादिनीति—पुत्रमत्तुं शीलमस्या इति विग्रहः । एवं पुत्रस्य पुत्रमत्तुं शीलमस्या इति पुत्र पुत्रादिनीति । आक्रोश इतिकिम्—पुत्रो हतो यस्याः केनापि सा पुत्त्रहतीति भवत्येव द्वित्वम् ।

---

अक्षाणामूहनमिति ऊह वितर्के तस्माद्भावे घण् । सोऽस्यामस्तीति णिनिः, अक्षानूहितुं शीलमस्येति शीलार्थे वा णिनिः, तस्माल्लक्ष्म्यामीप् क्वचिद्भिन्नपदेऽपि णत्वमिति णत्वं । अक्षौहिणीसंख्या त्वमरादौ ज्ञेयेति ॥ ३०५ ॥

**बाल०**—शक । शकन्धुरादिर्येषां ते शकन्ध्वादयः । अन्धादौ परे शकादीनामरामहरेण शकन्धादयः साधवो भवन्ति । शकस्येति राजविशेषस्येत्यर्थः । अन्ध्वर्थः स्वयमेवोक्तः कूप इति । शकस्य अन्धुः कूप इत्यनन्तरं शकन्धुरिति वा पाठः । अन्धुशब्दस्यैव कूपार्थसम्भवात् । सीमानमित्याद्यर्थप्रदर्शनं नतु सूत्रं शकान्धादय इत्यत्रादिशब्दग्रहणात् । अन्ततीति अति बन्धने इरामेद्धातोर्नुमिति नुम् । अन्यत् स्पष्टं । सीमान्त इति सीम्नोऽन्त इत्यर्थे ग्रामस्य सीमान्त इति । कुलानीति नानागोत्राणि भिक्षार्थं अभिसारार्थम्वा अटतीति पचाद्यदन्ता कुलटा । रूढ्येति रूढ्या वृत्त्या कुलटाशब्देनेति शेषः । कुलटा भिक्षुकी दासीत्यनुशासनात् । भाष्य इति । अस्माभिर्यदुदाहृतमेतदेव भाष्यग्रन्थे भाष्यकृद्भिरुदाहृतं । आकृतिगणत्वं भवतीति हेतुः बहुविधमुदाहरणं नोक्तं । किम्वा भाष्ये एतदेव उदाहृतं आकृतिगणत्वं भवतीति नोक्तमिति तन्मते आकृतिगणत्वं न भवतीति लक्ष्यते । अन्येतु चान्द्रादयो यथासम्भवमुदाहरन्ति तन्मते बहुदाहरणेन आकृतिगणत्वं सूचितं । शुद्धोदन इति शुद्धश्चासावोदनश्चेति वाक्ये । एवं समश्च तदनन्तरश्चेति । समश्च तदशनश्चेति अर्द्धश्च तदशनश्चेति हलस्य ईशा लाङ्गलस्य ईशा इति ।

**३०७. भीरुष्ठान-गविष्ठिर-युधिष्ठिरादयः संज्ञायाम् ।**

एते षत्वेन साधवः ।

**३०८. सुषामादयश्च ।**

सुषामा दुःषामा सुषन्धिः दुःसन्धिः अङ्गुलिषङ्गः दुन्दुभिषेवणं हरिषेणः दिविषत् इत्यादि । तथा पितृष्वसा भ्रातृष्वसा ।

---

**अमृता०**—३०७. भीरुष्ठानेति । संज्ञायां गम्यमानायां भीरुष्ठान प्रभृतयः षत्वेन साधवो भवन्ति । भीरुष्ठान इति—स्थीयतेऽत्रेति स्थानम्, टनः करणाधिकरणयो रिति टनः, भीरोः स्थानं भीरुष्ठानं, प्रत्ययविरिश्चि सरामाभावादप्राप्त षत्वे निपातः, षत्वे सति टवर्गत्वं, सज्ञातया पुंस्त्वं, कस्यचिन्नामेत्यर्थः । स्थीयते इति स्थिरः, स्थाधातोः इरक्, आरामहरः, गवि स्वर्गादौ स्थिर इति गविस्थिरः शिवः । पूर्ववद्प्राप्तषत्वे निपातः । युधिष्ठिरः प्राण्डवाग्रजः प्रसिद्धः । सूत्रनिर्देश सामर्थ्यात् सप्तम्या अलुक् । आदि शब्देन कुष्ठलं परिष्ठलमित्यादे र्ग्रहणम् ।

**अमृता०**—३०८. सुषामेति । संज्ञायां गम्यमानायां सुषामादयश्च षत्वेन निपात्यन्ते । सुशोभनः सामा वेदविशेषो यस्य स सुषामा कश्चिद् विप्रः । पूर्ववदप्राप्ते षत्वे निपातः । दुर्गतः सामा यस्मात् स दुःषामा कश्चित् । सु शोभनः सन्धि र्यस्य स सुषन्धिः । दुर्गतः सन्धिर्यस्मात् स दुःषन्धिः । अङ्गुलिषङ्ग इति—अङ्गुलेः सङ्ग इति विग्रहः । दुन्दुभीनां सेवनं दुन्दुभिषेवणम् । हरिः सेना यस्य स हरिषेणः, षत्वे सति णत्वम् । दिवि स्वर्गे सीदति वसतीति दिविषत् क्विवन्तः, समासे ङेर्न महाहरः कृति बहुलमिति सप्तम्यलुक् । इत्यादि पदेन अग्निष्टोमः दिविष्ठ इत्यादि च ज्ञेयम् । तथेति—पितृष्वसेत्यादौ च निपातादेव षत्वमित्यर्थः ।

---

ईशोद्धवकिरतीत्यनेन कप्रत्ययान्तादीशधातोर्लक्ष्म्यामाप् । ईशा लाङ्गलपद्धतिरित्यमरः । हलीषा लाङ्गलीषा चेति मूर्द्धण्यान्तं केचित् पठन्ति, तन्मते ईष गतिहिंसादनेष्वित्यस्य गुर्वादिहनन्तादवीपादेरिति स्त्रियामादित्यादन्तरूपं । एवं संज्ञाशब्दानां यथाकथञ्चिद्व्युत्पत्तित्वात् शिष्टप्रयोगानुसारेण कर्कश्वासाबन्धूश्चेत्यादौ वाक्ये कर्कन्धूरित्यादयोऽपि यथायोग्यमूह्याः । सङ्गतमशनेनेति तत्पुरुषे सङ्गतमशनं यस्मिन् काले इति बहुव्रीहौच । तथा सङ्गतमनन्तरमत्रेत्यादौ समशनं समनन्तरमित्यन्ये ।। ३०६ ।।

**बाल०**—पुत्र । आक्रोशेऽर्थे गम्यमाने हतजग्धयोः परयोः आदिनि पुत्रादिनिच परे पुत्रशब्दस्य तरामस्य द्वित्वं न भवति । विष्णुजने विष्णुजनो वेत्यनेन विकल्पे द्वित्वे प्राप्ते निषेधविधानं । पुत्रहतीत्यादौ पुत्रो हतो यया पुत्रो जग्धो यया पुत्रं अत्तुं शीलमस्याः, इत्यादीनि वाक्यनीति । पुत्रपुत्रादिनीत्यत्र पुत्रतरामस्य पुत्रादिनि स्यात्, परत्र आदिनि न स्यात् । उभयत्र न द्वित्वं । आक्रोशादन्यत्रतु पुत्रो हतो यस्याः पुत्रो जग्धो यस्याः केनापीत्यर्थादिगम्यते नतु तया । एवमन्यस्याः पुत्रमत्तुं शीलं यस्या इत्यादिवाक्यं यथायोग्यं कल्पनीयं । एवम्भूते सति पुत्रजग्ध्यादीनां दित्वं स्यात् ।। ३०७ ।।

## ३०९. अलुकि वा ।

**मातुः ष्वसा पितुः ष्वसा, मातुः स्वसा पितुः स्वसा । तथा रोहिणीषेण इत्यादि ।**

---

**अमृता०**—३०९. अलुकीति । ऋरामाद् विद्यायोनि सम्बन्धे स्वसृ पत्यो स्तु वेत्यनेन विष्णुभक्त्योर्यो विकल्पालुग् विहितः, तत्रालुक्पक्षे षत्वं वा स्यात्, लुक्पक्षे तु नित्यमित्युपरि दर्शितम् । तथेति—रोहिणिषेण इत्यादौ च षत्वं निपातादेवेति बोध्यम् । रोहिणी रक्त-वर्णोपलक्षिता सेना यस्य स रोहिणिषेणः कश्चित् । ईवापोः संज्ञायां बहुलमिति वामनः ।

---

**बाल०**—भीरु । संज्ञायां वाच्ये भीरुष्ठानादयस्त्रयः षत्वेन साधवः स्युः । वृत्तौ षत्वेनेत्युपलक्षणं तेन यथासम्भवमन्येनापि साधव इति । भीरुस्थान इति स्थीयतेऽत्रेति । टनः करणाधिकरणयोरित्यनेन टनप्रत्ययान्तः स्थान इति । ततः भीरोः स्थान इति षष्ठीकृष्णपुरुषः षत्वं । षत्वे सति षात् परस्य टवर्गयुक्तस्येत्यनेन थस्य ठत्वं । गविष्ठिर इति गवि सर्गादौ स्थीयते इति वाक्ये निपातात् स्थाधातोरिरक् षत्वञ्च । समासे ङेर्न महाहरः कृति-बहुलमित्यनेन सप्तम्या न महाहरः । इरकः क इत् आरामहरः कंसारि-सर्वेश्वर इत्यनेननारामहरः । षत्वे थस्य ठत्वं पूर्ववत् । एवं युधि युद्धे स्थीयते इति युधिष्ठिरः इति । भीरुष्ठानः कश्चित् । परिष्ठिरो महादेवः । युधिष्ठिरः प्रसिद्धः । कस्य-चिन्मते गरिष्ठिरादौ मदादेरिर इति औणादिक इरः ॥ ३०८ ॥

**बाल०**—सुषा । संज्ञायां सुषामादयश्च षत्वेन साधवो भवन्ति । सु शोभनः सामा वेदो यस्य स सुषामा कश्चित् । दुर्गतः सामा यस्मात् स दुःषामा कश्चित् । योऽन्त-कर्मणीत्यस्य मनन्तः सामन् इति । सु शोभनश्चासौ सन्धिश्चेति सु शोभनः सन्धिर्यत्र इति वा सुषन्धिरिति । सोपेन्द्रदामोदरात् किर्भावादावित्यनेन किप्रत्ययान्तः सन्धिः । एवं दुर्गतः सन्धिर्यस्मात् स दुःषन्धिरिति । अङ्गुलेः सङ्ग इति अङ्गुलिषु सङ्गोऽस्येति वा विग्रहे अङ्गुलिषङ्ग इति । सञ्जनं सङ्ग इति सन्जधातोर्भावघणन्तः । दुन्दुभिषु सेवनं वा दुन्दुभिषेवणमिति सेवृ सेवने इत्यस्य अनन्तरूपं । हरिः सेनो यस्य स हरिषेण इति षत्वे कृते णत्वञ्च । दिवि सर्गे सीदतीति दिविषद् इति क्विवन्तः । इत्यादीत्यादिपदेन अग्नीनां स्तोम इति अग्निष्टोमः । दिवि स्थीयते इति दिविष्ठ इत्यादयोऽपि शिष्टप्रयोगानुसारेण ज्ञेयाः । नौषेचिका प्रतिष्ठिका गौरिषक्थ इत्यादयश्च चान्द्रादौ जयादित्यादौच दृश्यन्ते । नौषेधिकेति सिचिर क्षरणे इत्यस्मात् पचादेरदित्यत् । प्रतिष्ठिकेति स्ना शौचे इत्यस्मात् । उपेन्द्र आरामात् क इत्यनेन कः । तदनन्तरं नौषेचप्रतिष्ठयोरल्पार्थे कः । लक्ष्म्यामाप् आपि सति प्रत्ययस्थात् कादित्यनेन पूर्वारामस्येरामः । अल्पार्थे कप्रत्ययार्थं एष प्रयासः । णको लक्ष्म्यां भावे इत्यनेनापि एतौ सिध्यत इति । गौरीषक्थ इति गौरी सक्थीव सक्थि अस्येति स्वाङ्गाभ्यामित्यनेन पीताम्बरे टः । अ इद्वयस्य हर इत्यनेन इरामहरः । तद्धितस्य बाहुल्यात् पूर्वपदान्तस्य वामनः । तद्धितेस्त्रातोः संज्ञायां बहुलमिति पूर्वपदस्य ह्रस्वत्वमित्यन्ये । तथेति पितुः स्वसा मातुःस्वसा इति वाक्ये ॥ ३०९ ॥

## ३१०. पूर्वपदात्संज्ञायामगः ।

प्रभुरयम् ।

## ३११. संज्ञायां नतु गात् ।

नारायणः । प्रत्ययमात्रस्य भिन्नपदत्वाभावात् पूर्वपदान्तर्भाव एव, लक्ष्मणः । संज्ञायां किम्—दीर्घनयना । नतु गात्—ऋगयनम् । पूर्वोक्तनिमित्तत्वे सत्येव । नेह—अर्द्धनसः ।

## ३१२. अग्रे प्रभृतिभ्य एव वनस्य संज्ञायाम् ।

---

**अमृता०**—३१०. पूर्वेत्यधिकार सूत्रम् । समासे सर्वादिपदं पूर्वपदमिति स्मर्त्तव्यम् ।

**अमृता०**—३११. संज्ञायामिति । संज्ञायां गम्यमानायां पूर्वपदादुत्तरस्य नस्य णत्वं स्यात्, पूर्वपदात् गरामात्तु नस्य णत्वं न भवति । णत्वविधौ समानविष्णुपद नियमादत्र तु भिन्नपदे तदप्राप्ते विधानमिदम् । नारायण इति—नारं अयनं आश्रयो यस्येति विग्रहः । नराणां समूहो नारम् । नरशब्दस्य विशेषार्थः संज्ञा प्रकरणे व्याख्यातः । ननु लक्ष्मण इत्यत्र समासविरहात् पूर्वपदत्वाभावेन विहितलक्षणतो णत्वं कथं क्रियत इति चेत्तत् समाधानमाह—प्रत्ययमात्रस्येत्यादिना । लक्ष्मीः शोभा अस्त्यस्य इत्यर्थे—लक्ष्मी शब्दात् मत्वर्थीयो नप्रत्ययः, लक्ष्मणो लक्ष्मीवतीत्यनेन निपातो वक्ष्यते । निपातात् लक्ष्मीशब्दस्य लक्ष्मभावः । लक्ष्मीशब्दस्तु लक्षे मुंट् चेत्यनेन उणादीवन्तः प्रोक्तएव । अत्र उणादिप्रत्ययस्य प्रकृत्या सहैकपदत्वेन भिन्नपदत्वाभावात् तदन्तशब्दस्य च पूर्वपदत्वं मन्यत इत्याशयः । तेन तदुत्तरस्य तद्धित नप्रत्ययस्य णत्वं न विरुद्धमिति भावः ।

दीर्घनयनेति—दीर्घे नयने यस्या इति या काचिदेव दीर्घनयना बोध्यत इति संज्ञाभावान्न णत्वमिति भावः । ऋगयनमिति—ऋक् अयनं यस्येति विग्रहः । पूर्वोक्तेति—पूर्वमुक्तं यन्निमित्तं—रषऋद्वयेभ्य इति, तस्मिन् विद्यमाने हि सर्वत्र षत्वणत्वे भवत इति प्रागुक्तस्य ह्यनुवादः । अर्द्धनस इत्यत्र ररामात् परस्मात् धरामसद्भावान्नणत्वम्, तत्र सर्वेश्वर हयवकवर्गपवर्गाणामेव व्यवधान स्वीकारात् । अतो गरामव्यवधाने प्राप्त णत्वेऽयं निषेधो—नतुगात् इति ।

**अमृता०**—३१२. अग्र इति । संज्ञायां गम्यमानायां अग्रे प्रभृतिभ्यः शब्देभ्य एवोत्तरस्य वन सम्बन्धिनो नस्य णत्वं स्यात् । अग्रेवणमिति—वनस्याग्रे इति विग्रहे षष्ठीकृष्णपुरुषः, राजदन्तादित्वात् पूर्वनिपातः अग्रे पदस्य । सूत्रे सप्तम्यन्तनिर्देश बलादेव

---

**बाल०**—अलु । स्वसृपत्योस्तु वेत्यनेन षष्ठ्या अलुकि सति षत्वं वा स्यात् । तथेति रोहिणी रक्तवर्णा सेना यस्येति निपातात् षत्वं पूर्वपदस्य वामनश्च । इत्यादीत्यादिपदेन यथास्वमन्येऽप्युह्याः ।। ३१० ।।

**बाल०**—पूर्वं । पूर्वपदादुत्तरस्य नस्य यथास्वं णत्वं स्यात् । अधिकारोऽयं ।। ३११ ।।

अग्रेवणं सारिकावणम् । एवं पुरगा-मिश्रका-सिध्रका-कोटराभ्यः । नेह—भद्रवनम् ।

**३१३. प्रनिरन्तः शर-कार्श्याम्र - खदिरेक्षु - प्लक्ष - पीयूक्षाभ्यो वनस्यासंज्ञायाञ्च ।**

---

ञ्ने महाह्रदः । सारिकावणमित्यादौ च षष्ठी समासः । पुरगावणमित्यादौ—कोटरा- वणादयः संज्ञायामितित्रिविक्रम उक्तः । नेहेति—अग्रे प्रभृतिभ्य एवेति नियमोक्तेरेतेभ्योऽन्यस्मात्तु न णत्वमित्यर्थः ।

**अमृता०**—३१३. प्रनिरन्त इति । संज्ञायां असंज्ञायाञ्च प्रनिरादिभ्यो दशभ्य उत्तरस्य वन सम्बन्धिनो नस्य णत्वं भवति । प्रवणमिति—प्रगतो वनमिति विग्रहे—कुप्रादयो मध्यपदलोपश्चेति कृष्णपुरुषः । एवं निष्क्रान्तो वनात् निर्वणं, वनस्य अन्तः

---

**बाल०**—संज्ञा । संज्ञायां वाच्यायां पूर्वपदादुत्तरस्य नस्य णत्वं स्यात् । गात् पूर्वपदात्तु न । नस्येत्युत्तरपदस्यान्यस्य वा नियमः । अत एवाधिकारसूत्रे उत्तरपदस्य नस्येति नोक्तं । नारमयनमाश्रयोऽस्येति विग्रहे नृणां नराणां नारीनां वा वृन्दं नारं । अय गतौ इन गतौ इत्यनयोः टनः करणाधिकरणयोरित्यनेन अयनमिति । आपो नारा इति प्रोक्ता आपो वै नरसूनवः । अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः । इति पौराणिकादिव्युत्पत्तौ यदा नारायणः साध्यते तदानेन णत्वं । यदातु नरशब्दात् गर्गादे- रायण इति केनापि साध्यते, तदा अनेन रष-ऋद्वयेभ्य इत्यनेन वा णत्वं । एवं रामायण उत्तरायण इत्यादयः । प्रत्ययमात्रेति अधिकारसूत्रे पूर्वपदग्रहणात् पूर्वपदान्तर्भाव इत्यनन्तरं वाच्य इति शेषः । गत्यन्तराभावात् । तथाच, प्रत्ययमात्रस्य प्रकृत्यैकपदत्वेन भिन्नपदत्व- स्याभावात् पूर्वपदान्तर्भावः । पूर्वपदगुणीभूतो वाच्य एव अन्यथा विरोधापत्तेः । अथवा प्रकृतिप्रत्यययोरवयवभेदपरिकल्पनया प्रत्ययमात्रस्य भिन्नपदत्वस्य आ ईयद्भावात् पूर्व- पदान्तर्भाव एवेति । भिन्नपदत्वाभावादिति क्वचित् पुस्तके दृश्यते तदपि नासङ्गतं । यत एवं आङ्पूर्व भा दीप्तावित्यस्मात् उपेन्द्र आरामात् कप्रत्ययान्तः आभः सदृशार्थः । तथाच, प्रत्ययमात्रस्यावयवकल्पनया भिन्नपदत्वाभावात् । पूर्वेत्यादिपूर्ववत् । लक्ष्मण इति लक्ष्मण चिह्न इत्यस्मात् नन्दादेरनस्तस्मिन् परे मुट्च । एवमाग्रहायणीत्यादयोऽपि । संज्ञायामिति किं किमर्थं संज्ञा यर्हि न स्यात्तर्हि किं स्यादिति दीर्घे नयने यस्या इत्यत्र संज्ञा नास्ति अतो न णत्वं । नन्विति गवर्जनादिति शेषः । ऋग् अयनमस्येति । पूर्वेति पूर्वोक्तनिमित्तत्वं तावत् रय ऋद्वयेभ्य इति तस्मिन् विद्यमाने एव षत्वणत्वे भवत इति पूर्वोक्तं सूचितमिति । तथाप्यत्र यत्र कुत्रचिद्यल्लक्षणान्तरं तत्तु किञ्चिद्वैलक्षण्यमङ्गी- कृतैवेति ज्ञेयं । अतएव येन नाव्यवधानं सम्भवति तेन व्यवधानेऽपीति न्यायेन गव्यव- धानेनापि णत्वे प्राप्ते नतु गादिति निषेधितं । नेहेति पूर्वोक्तनिमित्तत्वाभावादिति शेषः । अर्द्धा नासिका यस्य स अर्द्धनसः कश्चित् । अत्र संज्ञात्वमस्त्यत एव कालायस महानसादयः संज्ञायां साधव इत्यनेनाप्रत्ययान्तः सिद्ध इति ॥ ३१२ ॥

प्रवणमित्यादि। कार्श्यवणमिति तालव्य-व्यवधानेऽपि।

**३१४. वृक्षौषधिभ्यो वनस्य वा, नतु द्व्यधिकसर्वेश्वरात् तिमिरादेश्च।**

**धात्रीवणं धात्रीवनं, धात्रिकावणं धात्रिकावनं, दूर्वावणं दूर्वावनम्। नेह—देवदारुवनं तिमिरवनं ईरिकावनं हरिद्रावनं भद्रिकावनम्।**

---

अन्तर्वणम्। शरवणमित्यादौ षष्ठी कृष्णपुरुषः, मध्यपदलोपी श्यामरामो वा, असंज्ञायाञ्चेत्युक्तत्वात्। तालव्यव्यवधाने त्वप्राप्ते णत्वे विधिवलादेवात्र भवतीति वक्ति—तालव्येति। क्वचित्तु कार्ष्यवण मित्येवं मूर्द्धण्यमध्य पाठो दृश्यते।

**अमृता०**—३१४. वृक्षेति। संज्ञायामसंज्ञायाञ्च वृक्षेभ्य ओषधिभ्यश्चोत्तरस्य वनस्य नस्य णत्वं वा स्यात्, किन्तु त्रिभ्योऽधिक सर्वेश्वरात् वृक्षादे रुत्तरस्य तथा तिमिरादेश्चोत्तरस्य वनस्य णत्वं न भवति। वृक्षः शाखापल्लवयुक्तो द्रुमः, ओषधिः फलपाकान्ता इति भेदः। धात्रीवणमिति—धात्रीणां वनं, धात्रीभिर्युक्तं वनमिति वा विग्रहः। दुर्वावणमित्योषधेरुदाहरणम्। देवदारुवनमितु प्रत्युदाहरणं—त्र्यधिक सर्वेश्वरस्य, शेषानि तु तिमिरादेः।

---

**बाल०**—अग्रे। संज्ञायां वाच्यायां अग्रे प्रभृतिरादिर्येषां ते अग्रे प्रभृतयस्तेभ्य एवोत्तरस्य वनस्य नस्य णत्वं स्यात्। वनस्य अग्रे इति विग्रहे राजदन्तादित्वात् अग्रे इत्यस्य पूर्वनिपातः। पारे मध्ये इत्येतौ षष्ठ्या, इत्यत्र एवमित्यनेनातिदेशात् डेर्न महाहरः। राजदन्तादित्वात् वनशब्दस्य परनिपातः। गोहलन्ता दन्तानां संज्ञायां सप्तम्या लुगित्याहाजिनेन्द्रः। संज्ञाशब्दानां यथा कथञ्चिद्व्युत्पत्तिरिति। अग्रं वनमिति समासे वाक्यं कृत्वा निपातादेकारः। एतदर्थमेव सूत्रे अग्रे इत्येकारनिर्देश इति जुमरटीकाकृत्। सारीति सारिकाणां वनं सारिकैर्युक्तं वा वनमिति। एवमित्यत्र पुरगेत्यादौ कोटरावणादयः संज्ञायामित्यनेन विहितो यस्त्रिविक्रमः स एव निर्दिष्टः। वाक्योदाहरणन्तु पूर्वं दर्शितमेवेति। नेहेति अग्रादित्वाभावादिह णत्वं नेत्यर्थः। भद्राणां वनमिति वाक्ये॥ ३१३॥

**बाल०**—प्रनि। संज्ञायां चशब्दादसंज्ञायामपि प्रनिरादिभ्यो दशसङ्ख्केभ्य उत्तरस्य वनस्य नस्य णत्वं स्यात्। परत्र वृक्षौषधिभ्य इत्यनेन विकल्पे प्राप्ते नित्यतार्थोऽयं योगः। प्रगतं वनं निर्गतं वनमिति विग्रहे कुप्रादयो मध्यपदलोपश्च इत्यनेन कृष्णपुरुषः। प्रगतो वनात् निष्क्रान्तो वनादिति निरादय पञ्चम्या इत्यनेन वा कृष्णपुरुषः। एवमेवं प्रकारेण यथैव प्रवणं तथैव निर्वणमिति श्यामरामेण अव्ययीभावेन वा अन्तर्वणमिति। शराणां वनं शरैर्युक्तं वा वनमिति षष्ठीकृष्णपुरुष तृतीयामध्यपदलोपिकृष्णपुरुषाभ्यां शरवणं। एवं कार्श्यवणमिति तालव्यव्यवधानेऽपीति सूत्रे तालव्यनिर्देशात्। इत्यादीत्यादिपदादेवमाम्रवणं खदिरवणं इक्षुवणं प्लक्षवणं पीयूक्षवणमितिच॥ ३१४॥

**३१५. अरामान्तादह्नस्य ।**

पूर्वाह्णः । अह्नस्येत्यरामान्तनिर्देशः किम्— दीर्घाह्नी प्रावृट् ।

**३१६. त्रि-चतुर्भ्यां हायनस्य वयसि ।**

त्रिहायणो वत्सः, त्रिहायणी गौः । चतुर्हायणः चतुर्हायणी । वयसि किम्—त्रिहायनं गृहम् ।

**३१७. परादे रयनस्य, अन्तर स्त्वदेशे ।**

परायणं पारायणं अन्तरयणम् । देशे तु—अन्तरायना माथुराः ।

---

**अमृता०**—३१५. अरामान्तादिति । अरामान्तात् पूर्वपदादुत्तरस्य अह्न इत्यस्य णत्वं स्यात् । पूर्वाह्ण इति—पूर्वमह्न इति विग्रहे—पूर्वापराधरोत्तरादीनीत्यादिना श्याम. रामः, राजाहः सखिभ्य इति समासान्त ट प्रत्ययः । सर्वाव्ययाभ्यामित्यादिना अहन् शब्दस्य अह्नादेशः । एवं प्राह्णः पराह्ण इत्यादि च । सूत्रे अह्नस्येति विहित समासान्त-प्रत्ययस्य हि ग्रहणत् तदभावे तु णत्वाभाव इति प्रत्युदाहरति—दीर्घाह्नीति । दीर्घं अहो दिनं यस्यां सा वर्षा । कृष्णपुरुषाधिकारात् पीताम्बरेऽत्र नतुट प्रत्ययः ।

**अमृता०**—३१६. त्रि-चतुर्भ्यामिति । वयसि गम्यमाने त्रि चतुर्भ्यामुत्तरस्य हायन शब्दस्य नस्य णत्वं स्यात् । त्रिहायण इति त्रीणि हायनानि वत्सरा अस्येति विग्रहः, तेनात्र वयो गम्यते । गृहस्य तत्प्रतीतेरभावान्न णत्वम् ।

**अमृता०**—३१७. परादेरिति । परप्रभृतेरुत्तरस्य अयनस्य नस्य णत्वं स्यात्, अन्तर् शब्दादुत्तरस्य अयनस्य त्वदेशे वाच्ये हि णत्वं भवति नान्यार्थे । नारायण इत्यादौ संज्ञाया-मेव इह त्वसंज्ञायामिति भेदः । परं अयनं यस्य तत्, परञ्च तदयनञ्चेति वा विग्रहः । अन्तः अयनं गति र्यस्य तत् अन्तरयणम् । देशे तु अन्त र्मध्ये अयनं येषु तेऽन्तरायना माथुराः, मथुरामध्यवर्त्तिनो देशा इत्यर्थः ।

---

**बाल०**—वृक्षौ । वृक्षाश्च ओषधयश्च ते वृक्षौषधय तेभ्यः । त्रिभ्योऽधिकाः सर्वेश्वरा यत्र स त्र्यधिकसर्वेश्वरः तस्मात् । तिमिर आदिर्यस्य स तिमिरादिः तस्मात् । संज्ञायाम-संज्ञायाञ्च विषये वृक्षौषधिभ्यो वनस्य नस्य णत्वं स्यात् । त्र्यधिकसर्वेश्वरात् तिमिरादेश्च उत्तरस्य नतु स्यात् । वृक्षा शाखापल्लवयुक्ताः ओषधयश्च फलपाकान्ता इति भेदः । धात्रीणां धात्रीभिर्युक्तं वा वनमित्येवं वाक्यन्तु पूर्ववत् । धात्रीवणप्रभृतीनि वृक्षोदा-हरणानि । एवं जम्बीरवणं खदीरवणं खर्जूरवणमित्यादयश्च । दुर्वावणमिति ओषध्युदा-हरणं । एवं रम्भावणं कोद्रवणमित्यादयः । नेहेति देवदारुवनादिद्वयं वृक्षोदाहरणं । ईरिकावनादित्रयमोषधेः । प्रथमं त्र्यधिकसर्वेश्वरस्य पराणितु तिमिरादेः ॥ ३१५ ॥

**बाल०**—अरा । अरामान्तात् पूर्वपदादुत्तरस्य अह्नशब्दस्य नस्य णत्वं स्यात् । अह्नस्येति कृतसमासान्त टप्रत्ययसहितस्य ग्रहणं । पूर्वाह्ण इति अह्नः पूर्वमित्यर्थे । तथा प्राह्णः प्रकृष्टमहरिति । एवं पराह्ण इतिच । किं किमर्थं दीर्घं अहो यस्यां सा ॥३१६॥

## ३१८. आहितवोढव्याद् वाहनस्य ।

उह्यते येन स वाहनः, औणादिकष्टनण् । रामवाहणो रथः । नेह—रामसम्बन्धी वाहनः रामवाहनः ।

## ३१९. पानस्य देशे, भाव-करणयो स्तु वा ।

क्षीरपाणा माथुराः । क्षीरपाणं क्षीरपानं वा कृष्णस्य । क्षीरपाणी क्षीरपानी वा पात्री ।

---

**अमृता०**—३१८. आहितेति । वाहने यदारोपितमुह्यते तत् आहितवोढव्यमुच्यते, तस्मादुत्तरस्य वाहनस्य णत्वं स्यात् । वाहनशब्दः करणे उणादि टनण् प्रत्ययसिद्ध इत्याह—उह्यत इति । रामस्य वाहनः रामवाहणः । नेहेति—अत्र रामशब्दः रामस्वामिको वाहन इति सम्बन्धमात्रं द्योतयति नतु तस्य तत्रारोहणमिति णत्वाभावः ।

**अमृता०**—३१९. पानस्येति । देशे वाच्ये निमित्तभूतात् पूर्वपदादुत्तरस्य पानस्य नस्य णत्वं स्यात् । भावकरणयोस्तु पूर्वपदात् पानस्य णत्वं वा भवति । क्षीरपाणा इति—क्षीरस्य पानं येषु ते, माथुरा मथुरामध्यस्थदेशाः । यद्वा क्षीरं पानं येषां ते क्षीरपाणाः माथुरा स्तत्रत्य जनाः, मनुष्याभिधानेऽपि देशाभिधानं गम्यते इति । अत्र पानमिति कर्मणि टनः, टनः कर्मादौ चेत्यनेन । क्षीरपाणं कृष्णस्येति—आदिपदेनात्र भावे टनः । क्षीर पाणीत्यत्र तु करणे, टित्त्वादीप् ।

---

**बाल०**—त्रिचतु । वयसि गम्ये त्रिचतुर्भ्यामुत्तरस्य हायनस्य णत्वं स्यात् । त्रीणि हायनानि अस्येति अत्र वयो गम्यते । एवं त्रिहायण्यादिषु । गृहस्य वयःप्रतीतेरभावान्नेह ।। ३१७ ।।

**बाल०**—परा । पर आदिर्यस्य तस्मात् अयनस्य णो भवति । आदेशे वाच्ये त्वन्तरः परस्य । परायणमित्यादि नारायणादिवत् साधनीयं । संज्ञायां नतु गात् इत्यनेन परायणादौ सिद्धेऽपि यदत्र सूत्रं तदेतज्ज्ञापयति तत् संज्ञायामेतदसंज्ञायामिति । अतएव यत्र यत्र संज्ञा गम्यते, तत्र तत्र तत्सूत्रस्य विषयः, यत्र यत्र संज्ञा न गम्यते, तत्र तत्रास्य विषय इति भेदः । अन्तरयणमिति किमपि । देशे त्विति णत्वं नेति शेषः । अन्तर्मध्ये अयेनं येषां ते ।। ३१८ ।।

**बाल०**—आहि । आहितः स्थापितः वोढव्यः यत्र स आहितवोढव्यस्तस्माद्वाहनस्य नस्य णत्वं भवति । उह्यत इत्यनेन स्वयमेव करणे वाच्ये ओणादिकटनण् सिद्धो वाहन उक्तः । रामस्य वाहन इति विग्रहः । रथोऽत्र वाहनः, किन्तु यदा तदुपरि रामस्थितस्तदैवायं प्रयोगः । रामवाहन इत्यत्रतु रामस्य सम्बन्धमात्रमुपलभ्यते नरामो वर्त्तते इति ।। ३१९ ।।

## ३२०. प्रादे र्नसः ।

नासिकाया नस् वक्ष्यते । प्रणसं दुर्णसम् ।

## ३२१. गिरि नद्यादिषु वा ।

गिरिणदी गिरिनदी । एवं वक्रणदी, वक्रणितम्बः, गिरिणितम्बः, गिरिणद्धः, माषोणः । णत्वेन साधवः ।

---

अमृता०—३२०. प्रादेरिति । प्राद्यव्ययादुत्तरस्य नसो नरामस्य णत्वमादिश्यते । नस्वक्ष्यत इति—प्रादे र्नासिकाया नस् चेत्यत्र चकारात् समासान्तोऽरामो विधास्यते, भावि तत्प्रत्ययमपेक्ष्य आदेशोऽयं ज्ञेयः । प्रणसमिति—प्रकृष्टा प्रगता वा नाशिका यत्र (मुखे) इति विग्रहः । एवं निर्णसं परिणसमित्यादयश्च ।

अमृता०—३२१. गिरीति । गिरि नदी प्रभृतिषु प्रयोगेषु णत्वं वा स्यात् निपातादित्यर्थः । गिरिणदीति—गिरे र्नदीति विग्रहः । वक्रणदीति—वक्रा चासौ नदी चेति श्यामरामः । एवं वक्रणितम्बः । गिरे र्नितम्बः ( मध्यदेशः ) इति वाक्यम् । गिरिणा नद्धः गिरिणद्धः, मासेन उन मासोणः । वक्रनद्यादीनाञ्च णत्वाभाव पक्षा उन्नेयाः ।

---

बाल०—पान । पूर्वपदादित्यनुवर्त्तते देशे वाच्ये पूर्वपदादुत्तरस्य पानस्य णत्वं नित्यं स्यात् । भावकरणयोस्तु वाच्ययोस्तस्मात् पानस्य नस्य णो वा स्यात् । क्षीरस्य पानं येषु ते । माथुरा इति मथुरामध्यवर्त्तिनो देशाः । मथुरायां भवा माथुरास्तेऽस्यां सन्तीत्यनेन विहितप्रत्ययस्य स्मरहरस्तस्मिन् कृते पूर्वेषां लिङ्गवचनयोः प्रत्यावृत्तिरतो बहुवचनं वाच्यातु मथुरैव इति वा । स्मरहरो वक्ष्यते । पीयते इति पानं क्षीरस्य पानमिति भावप्राधान्यं । एवं विषपानमित्यादि । क्षीरं पीयतेऽनयेति टनः करणाधिकरणयोरित्यनेन टनः टित्त्वाल्लक्ष्म्यामीप् । पात्रीति अल्पं पात्रमित्यल्पार्थादीप् ।। ३२० ।।

बाल०—प्रादे । प्रादेरुत्तरस्य नसो नस्य णः स्यात् । नस इति भावी षो नसादेशस्तस्यैव षष्ठ्यन्तरूपं । ननु किमर्थमेतदुच्यते भवता निशानासिकयोर्निश्नसावादेशौ पद्दुषु वेत्यनेन यो नसादेशस्तस्य रूपे सति को दोष इति चेदुच्यते, निशानासिकयोरित्यनेन सादेशस्य वैकल्ल्यात् यदा नासिकास्थितिस्तदापि णत्वं सम्भवेत् । नैवं प्रादेर्नासिकाया नस् चेत्यनेन तद्धिते नित्यं नसादेशस्य वक्ष्यमाणत्वात् प्रादेर्नासिकास्थितिसम्भवनैव नास्ति, कथं णत्वस्यावकाशः सत्यं, यद्येवं तथापि गौरवकल्पनाया लघुकल्पना गरीयसीति न्यायेन भाव्यादेशस्यैव गरीयस्त्वमिति । प्रणसमिति । प्रगता प्रकृष्टा वा नासिका यत्रेति वाक्ये । प्रादेर्नासिकाया नसच् इत्यनेन अरामस्तस्मिन् परे नसादेशश्च । दुर्नसमिति दुष्टा वा नासिका यत्रेति पूर्ववत् । अत्र द्वये मुखमेव विशेष्यं । एवं परणसं निर्णसं परिणसमिति ।। ३२१ ।।

## ३२२. नामान्त-विष्णुभक्त्यो र्वा नतु युवादेः, एकसर्वेश्वरे कवर्गवति चोत्तरपदे सति नित्यम् ।

पूर्वमप्यारोहत्ययम् । हरिभाविणौ हरिभाविनौ । नुम् चात्रनामान्तः, हरिभव्याणि हरिभव्यानि । हरिभावेण हरिभावेन । अत्र तु नित्यम्— वृत्रहणौ, हरियोग्याणि, हरियोग्येण । समासावस्थायां यन्नामान्तत्वं तदिह गृह्यते, तेन हरे र्भगिनी हरिभगिनीत्यत्र न ।

हरिभगोऽस्यामस्तीति हरिभगिणीत्यत्र तु स्यादेव । रषऋद्वयेभ्य इत्यनेनैव । विष्णुसर्गस्य सर्वेश्वरधर्मत्वात् तद्व्यवधानेऽपि । यथा,—उरसा कार्येति उरः कः, तेन उरः केण । तदेकोद्भवत्वाज्जिह्वामूलीयस्यापि तद्रूपत्वम्—उर×केण । एवमुरःपेण उर⌒पेण ।

---

**अमृता०—३२२.** नामान्तेति । पूर्वपदादुत्तरस्य नामान्तस्य नस्य विष्णुभक्ते र्नस्य च णत्वं वा स्यात् । पूर्वपदादुत्तरस्य युवादे र्नस्य तु णत्वं न भवति । एकसर्वेश्वरविशिष्टे शब्दे उत्तरपदे तथा कवर्गवति च शब्दे उत्तरपदे सति, तादृशोत्तरपदस्थयो र्नामान्त— विष्णुभक्त्यो र्नस्य तु णत्वं नित्यं भवति । विष्णुभक्ते र्नस्येति विष्णुभक्ति जातस्य नस्येत्यर्थः । हरिभाविणविति—हरिं भावयितुं शीलं ययो स्तौ, शीलार्थे णिनिः । एकवचने नान्तत्वेन स्थिते रभावाद् द्विवचने उदाहृतम् । सर्वत्र पूर्वोक्तनिमित्तादेव पूर्वपदादिति बोद्धव्यम् ।

अथ पाणिनीये—'प्रातिपदिक नुम्विभक्तिषु चे'ति लक्षणे नुमश्च पृथग् ग्रहणं दृष्ट्वा तत् खलु नावश्यकमिति प्रतिपादयति—नुम् चात्रेति । 'सर्वेश्वरवैष्णवान्तयो र्नुम् शौ' इति यो नुमादिष्ट स्तस्य मित्त्वेन । अन्त्यसर्वेश्वरात् परं मितः स्थानमिति न्यायात् नामान्ते हि स्थितिर्निश्चीयते, नतु परसम्बन्धिघटिदागमवत् प्रत्ययभाक्त्वमस्य । तत इह नुमो नामान्त लक्षणेनैव हरिभव्याणीत्यादौ विभाषया णत्वं सिद्धमिति निष्कर्षः । हरौ भवन्ति यानि तानि हरिभव्याणि, भव्य गेयेत्यादिना कर्त्तरि यत् ।

अथ विष्णुभक्तिनराममुदाहरति—हरिभावेणेति । कृष्णात् टा इन इति विष्णुभक्ति जातोऽयं नरामः । अत्रतु नित्यमिति—वृत्र हणावित्यत्र एक सर्वेश्वरवदुत्तरपदम्, तत्र नरामो नामान्तः । 'ब्रह्म-हन-वृत्रेषु' इति भूते क्विप्, कृतसमासः । हरेर्योग्यानीति हरियोग्याणि कवर्गवदुत्तरपदस्योदाहरणमिदम्, अत्र च नरामो नामान्तः । हरियोग्येणेति विष्णुभक्ते र्नरामः । समासावस्थायामिति—समासकरणकाले हि नरामस्य नामान्तत्वेन

---

**बाल०**—गिरि । गिरिनद्यादिषु प्रयोगेषु गिरिणदीति णत्वेन वा साधुः । एवं वक्रनद्यादयः पञ्च णत्वेन साधवो वा भवन्ति । गिरिनदीत्यादिषु गिरेर्नदी वक्रश्चासौ नदी चेति । वक्रः नितम्बोऽस्य गिरिरिव नितम्बोऽस्य गिरिणा नद्धः माषेण ऊन इत्येते

हन्तेरत्पूर्वस्येति वाच्यम् । नेह—असुरघ्नः शत्रुघ्नः । धादेशे प्रतिषेधो वाच्य इति भाष्यम् । हो घे हन इति कातन्त्रपरिशिष्टे निषेधसूत्रश्च । युवादेस्तु—आभीरयूना, हरिपक्षेन अग्रगामिनौ, शास्त्रवाक्यानि, छात्रगामिना । आङोऽन्येन विष्णुपदेन व्यवधानेन णत्वं नेति हरियागयोगेन । तद्धिते तु न निषेधः—हरिवाङ् मयेण ।

इति षत्व-णत्वे ।

## ३२३. पुमः सरामो हरिकमल-हरिखड्गयो र्यादवेतरपरयोः, स च

भवितव्यम्, तत् पूर्वसिद्धस्य नामान्त नस्य तु णत्वं न भवतीति भावः। भगोऽस्या अस्तीति भगिनी हरे र्भगिनी हरिभगिनोति वाक्यम्। अत्र समासात् पूर्वमेव भगिनीति नामान्त नरामः सिद्ध एवास्तीति नास्य णत्वम्। अत्र परत्र च अस्त्यर्थे णिनिः, लक्ष्म्याभीप्।

अथ णत्वे व्यवधानविषयं विचारयति—विष्णुसर्गस्येति। उरसा कायतीति कैशब्दे कप्रत्ययः। तदेकोद्भवत्वादिति—स विष्णुसर्गः एक उद्भव उत्पत्तिस्थानं यस्य स तदेकोद्भवः, तस्य भाव स्तस्मात्। तद्रूपत्वं—सर्वेश्वररूपत्वम्। एवमित्यतिदेशेन उपाध्मानीयस्य च सर्वेश्वरत्वं मन्तव्यम्। अत्पूर्वस्येति अरामपूर्वस्येत्यर्थः। यद्यपि सामान्यत एकसर्वेश्वर इति लक्षणं विहितं तथापि हनधातुसम्बन्धि णत्वंतु अत् पूर्वस्यैव नस्य भवतीति वाच्यं नतु पूर्वारामहीनस्य। असुरघ्न इति—असुरं हन्तीति हन्ते ष्टक्, उद्धवादर्शनं, हनो हस्य घः। एवं शत्रुघ्न इति च। स्वमत पोषणाय भाष्यवचनं प्रमाणी करोति—घादेश इति। घादेशे सति हन्ते र्णत्वस्य प्रतिषेधो वाच्य इत्यर्थः। घादेशश्च पूर्वारामादर्शने सत्येव भवतीति तदेव तात्पर्यम्। कातन्त्रपरिशिष्टस्य च तदेवोद्देश्यम्। युवादे र्णत्वप्रतिषेधं दर्शयति—आभीरयूनेत्यादि।

हरिपक्षेनेति—हरेः पक्षः सहाय स्तेन। अग्रगामिनाविति—अग्रं गमिष्यतीत्यर्थे गमिगाम्यादयो भविष्यतीति णिनिः। अग्रगामिनावित्यादिषु केचित्तु णत्वं मन्यन्ते। भाषावृत्तौ—युवादेः प्रतिषेध इति वार्त्तिकमधृत्वा-क्षुभ्नादित्वान्न णत्वमित्येवं समाहितम्। आङोऽन्येनेत्यादि पूर्वोक्तस्य प्रपञ्चः। तद्धिते त्वन्येन विष्णुपदेन व्यवधानेऽपि णत्वमिष्यत इत्याशयः। हरिवाङ्मयेणेति—हरे र्वाक्प्राचुर्यमित्यर्थे मयट् तद्धितः।

**अमृता०**—३२३. पुमइति। यादवेभ्य इतर वर्णः परो ययो स्तथाभूतयो र्हरिकमल-हरिखड्गयोः परयोः पुमो मस्य सराम आदिश्येते, स च सरामः विष्णुचक्र पूर्वः, विष्णुचाप

यथाक्रमं विग्रहा ज्ञेयाः। यथा णत्वपक्षे स्वयमुदाहरणानि दर्शितानि। एवमणत्वपक्षेऽपि ज्ञेयानि ॥ ३२२ ॥

**बाल०**—नामा। पूर्वपदादुत्तरयोर्नामान्तविष्णुभक्त्योर्नस्य णो वा स्यात्। युवादेरुत्तरयोर्युवादेः सम्बन्धिनोस्तयोर्नस्य णत्वं वा न स्यात्। एक। एकः सर्वेश्वरो यस्य स

**विष्णुचक्रपूर्वो विष्णुचापपूर्वो वा, तत्र कखपफेषु विष्णुसर्गनिषेधश्च ।**

पूर्वो वा भवति । तत्र सरामे सति कखपफेषु परेषु विष्णुसर्गनिषेधश्च स्यात् । सररामयोर्विष्णुसर्ग इति प्राप्तेऽयं निषेधः । पुम इति पुमुस् शब्दस्य भावि समासे सत्सङ्कान्तहरे यत् पुम् इत्यवशिष्यते तस्यैव षष्ठयन्तो निर्देशो ज्ञेयः । पुंस्कृष्ण इति—पुमान् चासौ कृष्णश्चेति विग्रहः । एवं पुंश्चतुर्भुज इत्यादौ च बोध्यः । टिट्टिमः पक्षिभेदः । कखपफेषु हि निषेधात् चछ टठ तथेषु सरामस्य विष्णुसर्गः स्यादेवेति दर्शितम्, ततो विष्णुसर्गः स्यादेवेति दर्शितम्, ततो विष्णुसर्गस्य यथाक्रमं शषसाः । पुमांश्चासौ तारकश्चेति वाक्यम् । पक्ष इति विष्णुचाप पूर्वत्वे पक्षे । पुंक्षीरमिति पुंसः ( सम्बन्धि ) क्षीरमिति विग्रहः । अत्र हरिकमलस्य षरूपयादवपरत्वान्न सरामः ।

---

एकसर्वेश्वरस्तस्मिन् कवर्गः विद्यतेऽस्य कवर्गवत् । तस्मिन् पूर्वपदादुत्तरस्मिन्नेवम्भूते उत्तरपदे विद्यमाने उत्तरपदस्थयोर्नामान्तविष्णुभक्त्योर्नस्य नित्यं णत्वं भवति । विष्णुभक्तिपदेनात्र विष्णुभक्तेर्नरामः लक्षणया विष्णुभक्तेर्जातश्च नरामो गृह्यते, अन्यथा स्वादिविष्णुभक्तौ नरामस्याविद्यमानत्वात् कस्य णत्वं भवेत् तिवादिविष्णुभक्तौतु आनिप इत्यस्य नरामो विद्यत एव अतस्तत्र स्यादिति न कश्चिद्विरोधः । ननु, नारोहति परः पूर्वं, असिद्धरूपं न त्याज्यमित्यादुक्तं । तर्हि कथं निरवोचत् पूर्वमपीति भद्रमुच्यते, गङ्गास्त्रोतोवदेवास्य भवेद्विधिरित्यनेन यत्रोपाधिर्विद्यते, तत्र परः पूर्वं नारोहति, यत्र पुनरुपाधिर्विद्यते, तत्र परोऽपि पूर्वमारोहतीत्यर्थ । दृष्ट्या यो निर्णेतुमशक्यः स एवोपाधिरत उपाधेर्विद्यमानत्वेनायं विधिः परोऽपि पूर्वं ग्रन्थमारोहति व्याप्नोति सर्वसंग्राहकत्वात् । अथवा, असिद्धरूपं न त्याज्यं प्रतिज्ञेयं कृदन्तिका । तच्च कृत्पर्यन्तं ज्ञेयं । न समासतद्धितयोरिति यदुक्तं तज्ज्ञापकमन्यदपि ज्ञापयति तद्यथा असिद्धरूपं न त्याज्यमिति प्रतिज्ञाया यथा समासतद्धितयोव्यभिचारस्तथा नारोहति परः पूर्वमित्यस्यापि व्यभिचारः । एवं साधनानुक्रमार्थश्च नाधिकारेण सूत्र्यते इत्यस्यच । अतएवायं परोऽपि पूर्वमारोहति । किञ्च, तदानीं छात्रोणामध्ययनाद्यभावात् सन्ध्यादौ झटिति बुद्धेः प्रवेशकता नास्ति, भिन्ना प्रक्रिया कडचाप्रभृतिरन्वेषणीया चेति साध्यानां पदानामनुक्रमार्थमनुक्रमायाधिकारे सूत्रणं । इदानीन्तु तेषां सन्ध्यादिपञ्चपादाध्ययनसंस्कारबलात् सर्वत्रैव बुद्धिः प्रवर्त्तते । तस्मात् प्राचां मतदर्शनायच समासतद्धितयोः क्वचित् क्वचित् साधनानामनुक्रमार्थं सूत्रकरणेऽपि न दोष इति । हरिभाविणाविति हरिं भावयितुं शीलमस्येति णिन्यन्तं सौ अत्र नान्तत्वाभावात् द्विवचने दर्शितं । नुमो विष्णुत्वेन प्रकृतिप्रत्यययोरनुपघातित्वात् क्वचित् प्रकृतिभाक्त्वञ्च । अत्र पुनः सहायत्वेन नुमो नामान्तत्वमेव गृह्यते इत्याह नुम् चेति । हरौ भवन्ति यानि तानि हरिभव्याणीति कर्त्तरि यत्प्रत्ययान्तं । हरेर्भावोऽभिप्रायः तेन कृष्णाट्टा इत्यनेनात्र विष्णुभक्तिजनराम इति । नित्यमेकसर्वेश्वरत्वात् । वृत्रं हतवानित्यर्थे पूर्ववद्द्विवचनान्तं । हरेर्योग्यानाति विग्रहः । समासावस्थायामित्यादिकं स्पष्टं । इत्यत्र णत्वमिति शेषः । इत्यत्रतु णत्वं स्यादेव समासावस्थायां तद्धितणिनेर्नान्तत्वात् । इत्यनेनैव सूत्रेण

पुंस्कृष्णः, पुंश्चतुर्भुजः, पुंष्टिट्टिभः, पुंस्तारकः, पुंस्परमः। पक्षे पुंस्कृष्ण इत्यादि। यादवपरत्वे तु पुंक्षीरम्। यदा तु सुपुंस् इत्यनुकृत्य यादव परता तदा शब्दानुकरणे यादवे सलोपो वा। सुपुंकृष्णभजनं सुपुंस्कृष्ण-भजनम् वा।

## ३२४. विष्णुसर्गस्य सः, ईश्वरात्तु षः कखपफषु तौ स्थानिवच्च।

शब्दानुकरणे तु सरामो न भवतीति ब्रूते—यदा त्वित्यादि। अनुकृत्येति सुपुंस् शब्दस्यानुकरणं कृत्वेत्यर्थः। तदा सलोपो वेति—अनुकृतशब्दस्य ( सुपुंस् इत्यस्य ) स लोपो विभाषया भवति, तदा पुमः सरामो न भवति, सरामव्यवधानेन हरिकमलपरत्वा-भावादिति भावः। सुपुंस्कृष्ण इत्यत्र अनुकरणत्वान्न सतसङ्क्रान्तहरः।

**अमृता०**—३२४. विष्ण्वति। कखपफेषु परेषु विष्णुसर्गस्य स आदिश्यते, अद्वयात्

सर्वेश्वरादिकस्य व्यवधानत्वेन स्वीकरणात्। सर्वेश्वरविष्णुजनसंज्ञयोर्मध्यपाठत्वेन विष्णु-सर्गस्योभयधर्मत्वेऽप्यत्र सर्वेश्वरधर्मत्वात् तस्य विष्णुसर्गस्य व्यवधाने निश्चितं णत्वं स्यात्। उरःक इति। कै गै शब्दे इति कै धातोः कप्रत्ययान्तं। तदेति स विष्णुसर्ग एक उद्भव उत्पत्तिस्थानं यस्य स तदेकोद्भवस्तस्य भावस्तस्मात्। तद्रूपत्वं सर्वेश्वरत्व-मित्यर्थः। एवमित्यतिदेशेन उपध्मानीयस्य तद्रूपत्वमिति सूचितं। उरःपेणेत्यादिद्वयं उरसा पिबतीति पा पाने इत्यस्य कप्रत्ययान्तरूपं। अनेकसर्वेश्वर इति विशेषणात् असुरघ्न इत्यादावपि णत्वं भवतु एकसर्वेश्वरस्य सत्त्वादित्यत आह हन्तेरिति। यद्यपि सामान्यत एकसर्वेश्वर इत्युक्तं। तथापि हन्तेर्हनधातोरत् पूर्वस्यैव नस्य णत्वमिति वाच्यं नत्वदन्तस्य। असुरं हन्तीति हन्तेष्टक् गम हन जन खन घसामुद्धवादर्शनमित्यनेना-रामहरः। हनो हस्य घो णिन्नयोरित्यनेन हस्य घः। एवं शत्रुघ्नः वैरघ्नः पापघ्नः इत्यादयोऽपि ज्ञेयाः। स्वमतदृढीकरणाय भाष्यमतमाह घादेश इति। प्रतिषेधो वाच्य इति णत्वस्येति शेषः। भाष्यमतमुक्त्वा मतान्तरमप्याह हो घेति। हनधातोर्हकारस्य घे सति णत्वं न स्यादिति तत्सूत्रार्थः। इति कातन्त्रपरिशिष्टे तदाख्यग्रन्थे निषेधसूत्रञ्च वर्त्तत इति। युवादेस्त्विवति रूपं दर्श्यते। आभीरस्य युवाभीरयुवा तेन टा श्वन् युवन् मघवन् इत्येतेषां वस्य उः। इत्यनेन वस्य उः। ततस्त्रिविक्रमः। हरेः पक्षः सहायः तेन। अग्र गमिष्यतः इति गमिगाम्यादयो भविष्यतीति अग्रगामिनौ णिन्यन्तौ। शास्त्रस्य शास्त्राणां वा वाक्यानि। छात्रं गमिष्यतीति पूर्ववत् तेन। आङोऽन्येनेति पूर्वोक्तं सूचितं हरेर्योगस्य योगस्तेन। ननु आङोऽन्येनेति सूचितं। तर्हि यत्र यत्राङोऽन्यव्यवधानं, तत्र तत्र णत्वं भवतु इत्यत्राह तद्धित इति, इत्यपि वक्तव्यलक्षणं। तद्धितेतु स निषेधो न स्यात्। हरेर्वाचः प्राचुर्यमिति हरेर्वाचो विकार इति हरिं वाक्प्राचुर्येण स्तुतमिति वा हरिवाङ्मयं तेन। इति षत्वणत्वे दर्शिते इत्यर्थः॥ ३२३॥

प्रभुरयम् ।

---

परस्येत्यर्थः । ईश्वरात् परस्यतु विष्णुसर्गस्य षः स्यात् तेषुपरेषु । तौ च सषौ स्थानिवच्च स्यातामित्यधिकारः ।

---

**बाल०**—पुमः । हरिकमलञ्च हरिखङ्गश्च तौ हरिकमलहरिखङ्गौ तयोः यादवेभ्य इतरो भिन्नः परो ययोस्तौ यादवेतरपरौ तयोः । ननु पुंस्कृष्ण इत्याद्युदाहरणे पुंसुशब्दस्य रूपमित्यवगम्यते । तच्छब्दस्यतु पुंस इति षष्ठ्यन्तं न सम्भवति तथापि कथं पुम् इति चेत्तदैवं वाच्यं । भाविनि भूतवदुपचाराङ्गीकारेण समासादनन्तरमन्तरङ्गस्वादेर्महाहरे सत्यन्तर्भिन्नपदत्वेऽत्येकेत्यनेन विष्णुपदत्वात् सत्सङ्गान्तहरे कृते पुंसो यदवशिष्ट पुमिति तस्येदं षष्ठ्यन्तं । ननु पुंसः सत्सङ्गान्तहरे सविष्णुचक्रं पुं सिध्येत् नतु पुम् तर्हि कथमुच्यते भवता यदवशिष्टपुमिति सत्यं श्रूयतां । विष्णुपदान्तस्य नस्य मस्यच विष्णुचक्रं वैष्णव इत्युक्तमतोऽत्रहरे वैष्णवपरत्वाभावात् तन्निमित्तस्य विष्णुचक्रस्याप्यभाव इति पुंसिद्धं । यद्येवं तथाप्येकदेशविकृतमनन्यवदिति न्यायेन पुंस इति ज्ञेयं । किन्त्वेवं व्याख्येयं । यादवेतरपरभुतयोर्हरिकमलहरिगङ्गयोः परयोः सतोः पुंसः सत्सङ्गान्तहरे मरामस्य सरामः । नन्वेवं कष्टकल्पनया किं, पुंस इति कृते को दोष उच्यते । यदि पुम इत्यकृत्वा पुंस इति कृतं स्यात्, तदात्र निर्देशसामर्थ्येन समासे सत्सङ्गान्तहरो न स्यात्, पुंसः सस्य स इति प्रतीतेः । अनेन यदा सत्सङ्गान्तहरो न भवेत्, तदापि पुंस्कृष्ण इत्यादि सिध्येत्, किन्त्वेतद्दृष्ट्या सर्वत्रैव समासे तद्धरो न स्यादिति मन्दधियामाशङ्का भवेत् तन्निरासार्थेयं कल्पनेति समासाधिकल्पः । सच । विष्णुचक्रं पूर्वे यस्य स विष्णुचक्रपूर्वः । विष्णुचापः । पूर्वं यस्य स विष्णुचापपूर्वः । सच विहितः सरामः । एवमेवं पूर्वं स्यात् । पूर्वस्यैव प्रपञ्चोऽयं नतु पृथक् । नेयं वृत्तिः सूत्रे विष्णुचक्रविष्णुचापयोरश्रवणात् । अस्य वृत्तितापि घटयितुं शक्यते । सूत्रस्थितानां वर्णानामर्थानाञ्च प्रतीतये । विशुद्धा चाधिका व्याख्या वृत्तिरिष्टा मनीषिभिरित्युक्तदिशा । तत्र । ननु तत्रेति द्विवचनान्तं वहुवचनान्तं वा यद्याद्यं तर्हि द्वयोर्मध्ये बहूनां निर्द्धारणमसङ्गतं यद्यन्तं तदपि दुर्घटं पूर्वत्र हरिकमलहरिखङ्गयोरित्युक्तत्वात् । कथमत्र समाधेयं । भो श्रृणु । पूर्वत्र सूत्रे गणसंख्यया द्विवचनान्तं । अत्र पुनः कचटतपा हरिकमलानि खछठथफा हरिखङ्गानीत्युक्तेन बहुवचनान्तमिति न कश्चिद्विरोधः । तत्र तेषु हरिकमलहरिखङ्गेषु मध्ये कखपफेषु विहितसरामस्य विष्णुसर्गस्य निषेधश्च स्यात् । पुंश्चासौ कृष्णश्चेति विग्रहः । एवं पुंश्चतुर्भुजादिद्वयं । किन्त्वत्र सरामस्य विष्णुसर्गे कृते पश्चाच्छसौ । टिट्टिभ इति पक्षिविशेषः । गां टिटीति नीचोक्तिः । पुं मां सम्भवयतीति णकः । किम्वा तरतीति तारकः । पश्चात् पूर्ववत् श्यामरामादिः । पुमांश्चासौ परश्चेति पुमान् परमो यस्येति वा । इत्यादीत्यादिपदेन पुंश्चतुर्भुजः पुंष्टिट्टिभः पुंस्तारकः पुंस्परम इति । यादवेति रूपं यथा । पुंसः क्षीरमिति विग्रहे । कषसयोगे क्ष इत्युक्तत्वात् हरिकमलस्य षरूपयादवपरतात्र ज्ञेया । यदा पुनः सुपुंस इत्यनुकृत्य अनुकरणं कृत्वा तदुत्तरे यादवस्य परता भवेत् तदा शब्दानुकरणभूते यादवे परे सति सुपुंसुशब्दस्य सस्य लोपो वा स्यात् । पारिभाषिकेयं अनुकरणं तावद्द्विविधं अव्यक्तानुकरणं शब्दानु-

## ३२५. निर्दुर्वहिः प्रादुराविश्चतुराम् ।

निष्कृष्णः, दुष्कर्मा । स्थानिवत्त्वाड् डत्वाभावः, तथा निष्पानमित्यादौ णत्वाभावश्च ।

## ३२६. ईश्वरारामाभ्यां पाशकल्पकेष्वनव्ययस्य ।

पाशादयस्तद्धिताः । ज्योतिष्पाशः, यशस्कल्पः, यशस्कल्पः, सर्पिष्कम् । अव्ययस्य तु स्वः पाशः, उच्चैःकल्पं ।

---

**अमृता०**—३२५. निर्दुरिति । एतेषां निरादीनां विष्णुसर्गस्य षः स्यादुत्तरपदे, सच स्थानिवद् भवति । निष्कृष्ण इति—निर्गतः कृष्णाया इति विग्रहः । दुष्कर्मेति—दुष्ठु कर्म यस्येति विग्रहः । स्थानिवत्त्वप्रयोजनं दर्शयति—डत्वाभाव इति । स्थानिवत्त्वाभावे सति—षस्य डो विष्णुपदान्त इति प्रसज्जेतेत्यर्थः । एवं निष्पानमित्यत्र च षनिमित्तत्वात् परामे व्यवधाने णत्वं स्यात्, किन्तु स्थानिवत्त्वेन विष्णुसर्गवद्भावान्नात्र तत्तत् कार्यमिति भावः ।

**अमृता०**—३२६. ईश्वरेति । ईश्वरश्च अरामश्च ईश्वरारामौ, ताभ्यामुत्तरस्य विष्णु सर्गष्य यथाक्रमं सषौ भवतः, पाशकल्पकेषु प्रत्ययेषु परेषु, तौच स्थानिवत् स्याताम् । अव्यय सम्बन्धिनो विष्णुसर्गस्य तु पाशादि परेष्वपि तौ नभवतः । ज्योतिष्पाश इति निन्दितं ज्योतिरित्यर्थः । यशः कल्प इति यशः सदृश इत्यर्थः । सर्पिष्कमिति स्वल्पं सर्पिरित्यर्थः । स्वः पाश इति—स्वर् शब्दो वाचकाव्ययं स्वर्गवाची, अतो नहि विष्णु-सर्गस्य सः । उच्चैः शब्दश्च तथेति नात्र षत्वम् । पाशादय स्तद्धिता इति किम्—पाशो बन्धनरज्जुः, निः पाशः ।

---

करणञ्चेति अतोऽत्र शब्दानुकरण इत्युक्तेन पूर्वत्र सुपुंस् इत्यव्यक्तानुकरणं प्रतीयते । सुपुंस्कृष्णभजनमिति न षष्ठीकृष्णपुरुषनिष्पन्नं तद्यदि स्यात्तदा नित्यं सत्सङ्गान्तहरः स्यात् । न ह्यत्र सुपुंस्शब्दः शोभनपुरुषमभिधत्ते तं यद्यभिदध्यात् तदा सुपुमानित्येव रूपं स्यात् । नहि सुपुंसिति कृष्णभजनस्य विशेषणं तद्यदि स्यात्तदा सुपुमिति ब्रह्मलिङ्गं भवेत् । नतु तत् किञ्चिदपि । अतोऽर्थनिश्चयाभावात् यथा पटत् पटदित्यादिकं तद्रूपं सत्तन्मात्रं बोधयित्वा अव्यक्तानुकरणं भवेत् तद्वदिहापीति, किन्तु सुपुंसित्येकं पदं । कृष्णभजनमप्यत्र न कृष्णसेवावाचकं किन्तु तत्सदृशशब्दाकरमात्रमिति शब्दानुकरणं । अतएव कृ यादवे परे पूर्वस्य सुपुंसः यस्य पाक्षिकहरत्वं दिङ्मात्रमुदाहृतं । एवम्भूतेषु यादवेषु चान्यत्राप्येवं ज्ञेयमिति ॥ ३२४ ॥

**बाल०**—विष्णु । अधिकारोऽयं । ईश्वरात्तु ष इति यथासङ्ख्यनिर्देशात् अद्वयात् स इत्यर्थाल्लभ्यते इति कखपफेषु परेषु ॥ ३२५ ॥

**बाल०**—निर्दु । निर्दुर्वहिः प्रादुराविश्चतुरां विष्णुसर्गस्य षः स्यात् स स्थानिवच्च । निर्गतः कृष्णादिति वाक्ये दुर्गतः कर्मण इति वाक्येच निरादयः पञ्चम्या इत्यनेन

## ३२७. काम्ये तु न-रामजविष्णुसर्गं विना।

पयस्काम्यति सर्पिष्काम्यति। अतएव सजुष् इत्यादौ इसुसन्त धातो रित्यत्र धातुग्रहणं कृतम्। हविष्काम्यति। काम्यादि ग्रहणात् प्रकरण-मिदं पूर्वत्राप्यारोहति। निष्करोतीत्यादौ स्यात्। नेह—अहः काम्यति, गीः काम्यति, सुपूः—काम्यति।

---

**अमृता०**—३२७. काम्यइति। नरामश्च ररामश्च न-ररामौ ताभ्यां जातं विष्णुसर्गं विना अन्यजातस्य विष्णुसर्गस्य सषौभवतः काम्ये प्रत्यये परे। पयस्काम्यतीति—पय इच्छतीत्यर्थे काम्यप्रत्ययो नामधातौ प्रोक्तः। एवं सर्पिष्काम्यतीति च। अत एवेति—एतद् विधानमपेक्ष्य एवेत्यर्थः। इसुसन्तधातो रित्यत्र धातुग्रहणेऽकृते तु सामान्यतः सर्वेषा-मिसुसन्तानां ररामः स्यात्, ततश्च ररामजविष्णुसर्गत्वादिह सर्पिष्काम्यतीत्यादौ षत्वं न प्राप्येत इत्याशयः। अत स्तत्र धातूपादानेन इसुसन्तशब्दव्यावर्त्तनात् तेषां विसर्गस्य षत्वे न कोऽपि बाधप्रसङ्ग इति फलितार्थः।

प्रकरणमिति षत्वप्रकरणमित्यर्थः। तेन निष्करोतीति आख्यातपरत्वेऽपि नि र्दुः प्रादुरित्यादिना षत्वमिष्टम्। एवं कृदन्तपरत्वेऽपि बहिष्कृतमित्यादि सिद्धम्। किञ्च, प्रकरणमेतत् क्वचिदसमासस्यापि विषयीभूतमिति सूच्यते। अतएवाख्यातोदाहरणमपि सङ्गच्छते। एवमग्रे च सर्पिष्कुरु इत्यादावपि बोध्यम्। नेह अहः—काम्यतीति—अत्र अह्नो विष्णुसर्गो विष्णुपदान्त इत्यनेन अहन् शब्दस्य नरामस्य विष्णुसर्गविहितत्वात् नरामजविष्णुसर्गस्य न सत्वम्। एवञ्च गीरित्यत्र इसुसन्तधातोश्च इत्यनेन ररामजत्वाद् विष्णुसर्गस्य नषत्वम्।

---

कृष्णपरुषसमासः। स्थानिवत्त्वफलं स्वयमुक्तं स्थानिवच्चेति। यदि स्थानिवत्त्वं न कृतं तदा निष्कृष्ण इत्यादौ षत्वे कृते यस्य ड इति डः स्यात्। एवं निष्पानमित्यादौ रषऋद्वयेभ्य इत्यनेन निमित्तत्वात् पव्यवधानेऽपि णत्व स्यात्। एवं वहिष्कर्त्ता प्रादुष्कर्त्ता आविष्कारः चतुष्फलं॥ ३२६॥

**बाल०**—ईश्व। ईश्वरश्च आरामश्च तौ ईश्वरारामौ ताभ्यां। पाशादयस्तद्धिता इति वृत्तित्वेनोक्ताः। तेन पाशादयः प्रत्यया गृह्यन्ते नतु शब्दा इति पाशकल्पकेषु प्रत्ययेषु परेषु। अनव्ययस्य नाम्नः सम्बन्धिभ्यामीश्वरारामाभ्यामुत्तरस्य विष्णुसर्गस्य षसौ भवतस्तौ स्थानिच्च। ज्योतिषः मनागित्याद्यर्थे मनागूणनिन्दादौ पाशः। एवं यशस सदृशः यशस्कल्पः। सर्पिषोऽल्लमित्यल्पादावर्थे कप्रत्ययान्तं सर्पिष्कमिति तद्धितप्रत्ययानां बहून्यर्थानि सम्भवन्ति तानि विवृत्य वक्ष्यन्ते। अव्ययस्य त्विति रूपं दर्श्यत इति शेषः। स्वः सर्गस्य सदृशः स्वःपाशः इति। उच्चैः उच्चप्रदेशस्य मनाक् उच्चैःकल्पमिति। यद्यप्यनव्ययस्येत्युक्तं। तथापि लाक्षणिकप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणमिति न्यायेन स्वतःसिद्धस्याव्ययस्य वर्जनं नत्वव्ययीभावसमासेन विहितस्याव्ययस्य तेन

## ३२८. असन्तस्य कृ-कमि-कंस-कुशी-पाश-कर्णी-कुम्भ-पात्रेष्वनुत्तरपदस्थस्यानव्ययस्य समासे ।

**अमृता०**—३२८. असन्तस्येति । कृ-कमि प्रभृतिषु परेषु असन्तस्य अनव्ययस्य विष्णुसर्गस्य, समासे अनुत्तरपदस्थस्य सः स्यात्, स च स्थानिवत् स्यात् । पूर्वसूत्रे काम्येत्विनेन समासादन्यत्र च कार्यस्य व्याप्तिज्ञापनादिह समास इति नियमः कृतः । वेधस्कृतिरिति—वेधसो ब्रह्मणः कृति रिति विग्रहः । एवमयस्कार इत्यादि च । विष्टरश्रवसं विष्णुं कामयत इति विष्टरश्रवस्कामः, कर्मण्यण् । अम्भस्कुम्भ इति—अम्भसा पूर्णः कुम्भ इति विग्रहे—पूरण द्रव्यं पात्रेणेति समासः । अम्भस्कुम्भीति—अस्त्यर्थे षश्चात् तद्धित णिनिः ।

उपसर्पिष्पाशः इत्यादौ षसौ स्यातामेव । अव्ययीभावस्यनव्ययत्वात् उपपयस्पाश इत्यादौ न विसर्ग इत्येके । पाशादयस्तद्धिता इति किं । निर्गतः पाशात् निःपाश इत्यादि । पाशोऽत्र बन्धनरज्जुः । तेन षरामो न स्यात् ॥ ३२७ ॥

**बाल०**—काम्ये । नश्च रश्च नरौ रामश्च रामश्च रामौ नरौच तौ रामौ चेति नररामौ ताभ्यां जातः नररामजः स चासौ विष्णुर्गश्चेति नररामजविष्णुसर्गस्तं विना काम्यप्रत्यये परे अनव्ययस्य ईश्वराभ्यामुत्तरस्य विष्णुसर्गस्य षसौ तौ स्थानिच्च । पय इच्छति पयस्काम्यति । एवं सर्पिष्काम्यति । अत इति । अतएव नररामजविष्णुसर्गवर्जनादेवेत्यर्थः । धातोरित्यत्र धातुग्रहणं कृतमित्युक्तमतोऽनेनैतदेव ज्ञापितं । इसुसन्तधातोरित्यत्र यदि धातुग्रहणं न कृतं स्यात्तदापि सुपीः सुतूरित्यादि सिध्येत्, किन्तु सर्पिर्यजुरित्यादीनामपि इसुसन्तत्वात् ररामः स्यात् तत्र धातुग्रहणात्तु न स्यादिति । किञ्च, सजुष आशिष इत्यत्र रविधानं न कृत्वा सजुष आशिष इत्यनयोरिसुसन्तधातोश्चोद्धवस्य त्रिविक्रम इत्येवं सूत्रयित्वा त्रिविक्रमं विधाय पश्चात् सजुष आशिष इति द्वयस्य विष्णुपदान्तत्वात् निमित्तत्वनिवृत्तेरित्यनेन षत्वं निवर्त्त्य सररामयोर्विष्णुसर्ग इत्यनेन विष्णुसर्गं विधाय सजूरादिद्वयं साधयेत् स्म । इसुसन्तधातोस्तु पूर्वत्रिविक्रमः, पश्चात् विष्णुसर्गे कृते सुपीरादि सिध्येत् । तथापि तेषां यद्ररामविधानं तदपि ज्ञापकं । तस्मात् तेषामनव्ययत्वेऽपि ररामजविष्णुसर्गत्वादनेन यत् कार्यं विहितं तन्न स्यादिति । किञ्च, यतएवेत्यादौ धातुग्रहणं कृतमित्युक्त्वापि सजूःकाम्यतिः आशीःकाम्यतीत्यादिकं न दत्वा यद्धविष्काम्यतीति दत्तं तत्फलन्त्वेवमनुसन्धेयं । सजुष आशिष इत्यनेन यत्र रविधानं तत्रैव इरुरन्तधातोरित्यनेनोद्धवस्य त्रिविक्रम इति । किम्वा, सजुष आशिष इत्यादौ धातुग्रहणं कृतमतएव तत्र नास्य विषय इत्युदाहरणान्तरदर्शनाय हविष्काम्यतीत्येव दत्तं । काम्यादीत्यादिपदेन वक्ष्यमाणकारकृत्वादीनां घणकत्वान्तानां पाशादीनां वा ग्रहणं । अत्र काम्यादिग्रहणादिदं प्रकरणं सषविधानप्रकरणं पूर्वत्राप्याख्यातादिष्वप्यारोहति प्रवर्त्तते इत्यर्थः । तेन हेतुना निष्करोतीत्यादौ स्यात् । षत्वादिकमिति शेषः । निष्करोतीति निर्दुर्बहिरित्यनेन षत्वं नत्वनेन । अनव्ययस्येत्यनुवर्त्तनात् । पूर्वपरसूत्रयोरनव्ययस्य धृतत्वादत्राप्यनव्ययस्यैव ग्रहण तेन अधः काम्यतीत्यादौ न स्यात् । नेहेति अहरिच्छति

वेधस्कृतिः, विष्टरश्रवःकामः, अम्भस्कुम्भः, अम्भस्कुम्भीत्यपि । उत्तर-पदस्थत्वे तु परमवेधः कृतिः ।

## ३२९. नमः पुरसो र्गतिसंज्ञयोः कृञि।

नमस्कृत्य नमस्कारः नमस्कुरु ।

---

एवमयस्कंसः अयस्कुशी अयस्पाशः अयस्कर्णी अयस्पात्रमिति । अय इव कठिनौ कर्णौ यस्याः सेतिविग्रहः । परमवेधः कृतिरिति—परमश्चासौ वेधाश्चेति परमवेधाः, तस्य कृतिरिति श्यामरामगर्भषष्ठीकृष्णपुरुषः । अत्र वेधस् शब्दस्य प्रथमसमासे उत्तरपदत्वाद् विष्णुसर्गस्य न सरामः । समास इति किम्—मनः करोति । अनव्ययस्येति किम्—प्रातः कृत्यम् ।

**अमृता०**—३२९. नम इति । कृञि परे गति संज्ञकयो र्नमः पुरः शब्दयो र्विष्णुसर्गस्य सः स्यात्, स च स्थानिवत् । नमस्कृत्येति—नमः पूर्वात् कृञ उत्तरे क्त्वा, तस्य समासे यप् चादेशः, वामनात्तुक् । एते उपन्द्रवदाख्याते कृति च धातोः प्राक् प्रयोज्या गति संज्ञा इति वचनाद् गति संज्ञा । तेन तदभाव पक्षे नमः करोतीति, पुरस् शब्दस्यतु नित्यं गतिसंज्ञा । तेन पुरस्कृत्य पुरस्कारः पुस्कुरु पुरस्कृतमित्यादिषु नित्यमेव सत्वम् ।

---

अहःकाम्यति । एतद्व्यावृत्त्यर्थं सूत्रे नररामजेत्युक्तं । नन्वत्र ररामजविशेषणमेवास्तु नरामजेत्यर्थकं यतोऽह्नो विष्णुसर्गो विष्णुपदान्त इत्यनेन नस्य विष्णुसर्गं विधाय पश्चादह्नो विष्णुसर्गस्य रो रात्रिरूपरथन्तरादन्येष्वित्यनेन ररामः करणीयः । ततोररामत्य विष्णुसर्गे कृते ररामजत्वेनैवेदं सिध्येदिति वाच्यं नैवं यथा अहरादीनां पत्यादाविति वक्ष्यमाणे पक्षे रविधानबलात् अहर्पतिरित्यादौ विष्णुसर्गो न स्यात् । तद्वदिहापि रविधानसामर्थ्यात् विष्णुसर्गो न स्यादतो ररामजविष्णुसर्गाभावादिदं न सिध्येत् । तस्मान्नरामजेत्यपि नानार्थकमिति । गिरं वाचं काम्यतीति गीःकाम्यति । शोभना पूः सुपूः तां काम्यतीति सुपुःकाम्यति काम्यादिग्रहणादित्यनेन काम्यप्रत्यय इति सूचितं । तेन पयःकाम्येत पयःकाम्यमित्यादौ न स्यत् । ऋद्वयविष्णुजनाभ्यामित्यनेनात्र ण्यत्प्रत्ययान्तं काम्यं न प्रत्यय इति ज्ञेयं ॥ ३२८ ॥

**बाल०**—अस् । अस् अन्ते यस्य स असन्तस्य कृश्च कमिश्च कुशीच पाशश्च कर्णीच कुम्भश्च पात्रञ्च तानि कृकमिकुशीकर्णीकुम्भपाणि तेषु नोत्तरपदे स्थीयतेऽनुत्तर-पदस्थस्तस्य । न अव्ययोऽनव्ययस्तस्य । समासे सति कृकम्यादिषु परेष्वनुत्तरपदस्थस्यासन्तस्य विष्णुसर्गस्य स स्यात् सच स्थानिवत् । वेधसः ब्रह्मणः कृतः वेधस्कृतिरिति क्त्यन्तं । वेधस्कृतीति कश्चित् पुस्तके निर्विष्णुसर्गान्तं दृश्यते तत्तु एवं साधनीयं, वेधसः कृतमस्यास्तीति वेधस्कृति णिन्यन्तं ब्रह्मलिङ्गं । कृ इति सामान्यनिर्देशात् अयः करोतीति कर्मण्यणन्तः अयस्कार इत्यपि अय गतावित्यस्य सर्वधातुभ्योऽसीत्यनेनासन्तत्वात् । विष्टरे अश्वत्थतरौ श्रूयते इति श्रुधातोरस् विष्टरश्रवा विष्णुस्तं कमते इति कर्मण्यनन्तः विष्टर-श्रवस्कामः । सरामस्य स्थानिवत्त्वात् विष्णुसर्गत्वे अद्व्यवधानेऽपि विष्टरश्रवस्कामेणेत्यत्र

## ३३०. तिरस स्त्वगतौ च वा ।

**तिरस्कृत्य तिरः कृत्य । केचिद् गतिग्रहणं नानुवर्त्तयन्तीति । भाषा-वृत्तौ नित्यं तु तिरस्कारः साधुः ।**

---

**अमृता०**—३३०. तिरस इति । कृञि परे गतौ अगतौ च संज्ञायां वर्त्तमानस्य तिरसो विष्णुसर्गस्य सः स्याद् विभाषया । तिरोऽन्तर्धि वचनमित्यनेन उर्यादित्वाद् गति-संज्ञा । तदितरार्थे त्वगति संज्ञेत्यर्थः । गतिग्रहणं नानुवर्त्तयन्तीति—तेषां युक्तिश्चेयम्—अन्तर्द्धाविव तिरसो गति संज्ञा किन्तु पराभवेऽपि तिरस्कार शब्दः प्रयुज्यत इति । अत-स्तन्मते सामान्यतो विकल्पादेशो नतु गतावगतौ चेति । भाषा वृत्तौ तु तिरस्कार इति पराभवार्थे नित्यं सत्वं मन्यते । तत्र विकल्पे प्राप्ते नित्यतार्थं साधुरिति । स्वमते त्वत्रापि विभाषेति भाति ।

---

णत्वं स्यात् । अत्र कमीत्यण्यन्तनिर्देशात् यदा रामधातुके कमेर्णिङ् वा स्यात् । तदा विष्टरश्रव.कामयिता इत्यादौ न स्यात् । यद्यपि बालकल्कितातृणन्तयोः कामयिता स्यात्तथाप्यत्र समासानुरोधात् तृणन्तो ज्ञेयः । एवमयसः कंस इति विग्रहे अयस्कंस इति कंसः षष्ठीपलात्मकः परिमाणविशेषः । ननु कमेरेव औणादिक सप्रत्ययान्तेन कंसो व्युत्पादितः तस्मादत्र कमिग्रहणेन कंसोऽपि न लभ्यते किं कंसग्रहणेन । उच्यते । कमिग्रहणेनैव कंसग्रहणे सिद्धेऽपि यत् पृथक् कंसग्रहणं तदेतज्ज्ञापयति औणादिका व्युत्पन्ना अव्युत्पन्नाश्चेति । यदा व्युत्पन्नस्तस्मिन्नसन्तः विष्णुसर्गस्य सः, यदात्वव्युत्पन्न-स्तस्मिन्नेति । एवमयसः कुशी अयस्कुशी अयसः पाशः अय इव कर्णौ यस्याः सा अयस्कर्णी । कुशी लौहविकारे इत्यनेन तद्धितपादे ईप्रत्ययसिद्धा कुशी वक्ष्यते । कुशा वल्गा इति न लौहविकार इत्यभिप्रायः । तत्र हि कुशाल्लौहविकार इति ईप्रत्ययौ भवति । तत्परेऽकस्कादित्वादयःकुशीति केचित् । तत्त्वस्माकं ग्रन्थकारस्य नाभीष्टमत्रैव कुशीशब्दोपादानात् । पाशोऽत्र बन्धनरज्जुः शब्दसाहचर्यात् प्रत्ययस्तु पूर्वमेवोक्तः । नासिकोदरोष्ठजङ्घादन्तकर्णपुच्छश्रृङ्गाङ्गगात्रान्ध्रनेत्रकण्ठेभ्यो न निषेध प्रत्यनेन प्राक-रणिकविकल्पे ईप्रत्ययान्ता कर्णी ज्ञेया । कर्णीति लक्ष्मीलिङ्गनिर्देशाल्लिङ्गविशिष्टस्य ग्रहणस्य प्रायिकत्वेनच शिष्टप्रयोगानुसारात् पुरुषोत्तमेतु अयःकर्ण इति न विष्णुसर्गस्य सः । अम्भसा पूर्णः कुम्भः अम्भस्कुम्भ इति नाम्नो ग्रहणे लिङ्गविशिष्टस्य ग्रहणमिति न्यायेन अम्भस्कुम्भीत्यप्युक्तं । उत्तरेति परमश्चासौ वेधाश्चेति परमवेधास्तस्य कृतिः । असन्तस्येति किं ज्योतिः कामः । अनव्ययस्येति किं स्वःकामः ॥ ३२९ ॥

**बाल०**—नमः । नमश्च पुरश्च नमः पुरसौ तयोः । गतिः संज्ञा ययोस्तौ गतिसंज्ञौ तयोः । कृञि परे गतिसंज्ञयोर्नमः पुरसोर्विष्णुसर्गस्य स भवति । नमस्कृत्येति । नमः पूर्वात् कृञः क्त्वा इति स्थिते साक्षान्मित्था लवणं वशे प्रादुराविस् नमश्च प्रसिद्धार्था इत्यनेन नमःशब्दस्योदित्वं । एते उपेन्द्रवदाख्याते कृतिच धातोः प्राक् प्रयोज्याः गतिसंज्ञा इत्यनेन

## ३३१. द्वि त्रि चतुरां वारार्थवृत्तीनां वा ।

द्विष्कृत्वा द्विः कृत्वा, त्रिष्कृत्वा त्रिःकृत्वा, चतुष्कृत्वा चतुःकृत्वा । अत्र वारार्थे तद्धितः सुः । अवारार्थे चतुष्पार्श्वमिति नित्यं पूर्वेण ।

## ३३२. इसुसो क्रियापेक्षायां वा ।

सर्पिष्कुरु सर्पिः कुरु, यजुष्पठ यजुः पठः । इसुसोरत्रौणादिकयोरेव ।

---

**अमृता०**—३३१. द्वित्रीति । वारार्थे वृत्ति वर्त्तनं येषां ते वारार्थवृत्तय स्तेषां द्वित्रि चतुर् शब्दानां विष्णुसर्गस्य सो वा स्यात् कखादिषु परेषु, स च स्थानिवत् । अत्र विशेष-परत्वाग्रहणात् सिंहावलोकन्यायेन पूर्वतः कखपफेष्वित्यनुवर्त्तयम् । द्वौ वारौ कृत्वेत्यर्थे द्विष्कृत्वेति । द्वित्रि चतुर्भ्यः सु रिति वारार्थे सु प्रत्ययः । एवं त्रीन् वारान् चतुरो वारान् कृत्वा इत्यर्थे त्रिष्कृत्वा चतुष्कृत्वेति । चतुष्पार्श्वमिति–चत्वारि पार्श्वान्यस्येति पीताम्बरः, चतुर्णां पार्श्वानां समाहार इति त्रिरामी वा, पात्राद्यन्ताद् ब्रह्मत्वम् । पूर्वेणेति—निर्द र्वहि रित्यादिनेति शेषः ।

**अमृता०**—३३२. इसुसोरिति । क्रियाया अपेक्षायां सत्यां कखादिषु परेषु इसन्तस्य उसन्तस्य च विष्णुसर्गः षो वा स्यात्, स च स्थानिवद्भवति । सर्पिष्कुरु इत्यादौ विधातृ प्रयोगेण वियोगः प्रार्थनं वा गम्यते । सर्पिरूप कर्मणः क्रियापेक्षा नित्यं हि विद्यते, तस्मात्

---

गतिसंज्ञत्वञ्च । तत उपेन्द्रोर्यादिव्यन्तेत्यनेन नित्यसमासः । क्त्वा यवनञ्पूर्वसमासे इत्यनेन क्त्वा यप् वामनात् तुक् पृथावित्यनेन तुक् । नमः करोतीत्यर्थे कर्मण्यणित्यनेन अण् । अत्राप्युपेन्द्रोर्यादीत्यनेन समासः । एवं नमस्कुरु हिप्रत्ययान्तं त्वमित्यर्थाल्लभ्यते । किञ्च, इतः कृञि विकल्प इत्यनेन नमःशब्दस्य कृञि पाक्षिकोर्यादित्वात् । योगात् द्वितीयेत्युक्तं नारायणाय नमः कुर्यादित्यत्र नमःशब्दस्य कर्मत्वेनागुणीभूतत्वात् तद्योगे चतुर्थीत्यपि भङ्ग्या दर्शितं समासाभावपक्षे नमस्कर्त्ता इत्यादिकं शास्त्रान्तरसिद्धं न, किन्तु भिन्नपदत्वे रूपभेदोऽर्थभेदोऽपि नास्ति, स्वरभेद एव केवलं फलमेतावता विशेषः प्रयासोऽत्र परिहृत इति । तथा पुरष्कृत्य पुरस्कारः पुरस्कुर्वित्यादयः । पुरोऽग्रादा-वित्यादिना पुरःशब्दस्योर्यादित्वादिकं पूर्ववत् । किन्त्वस्य इतः कृञि विकल्प इत्यस्मात् प्राग्दर्शितत्वेन वैकल्पिकोर्यादित्वं नेति पुरः कृत्वेत्यादिकं न भवेदेव ।। ३३० ।।

**बाल०**—तिर । कृञि परे अगतौ गतौच संज्ञायां वर्त्तमानस्य तिरसो विष्णुसर्गः स वा भवति । तिरोऽन्तर्द्धिवचनमित्यनेनास्योर्यादित्वेन गतिसज्ञत्वं । गतिसज्ञायां तिरस्कृत्येत्यादिद्वयं अन्तर्द्धाय तिष्ठतीत्यर्थः । गतौतु तिरस्कृत्येत्यादिद्वयं समासाभावेऽप्यत्र पाक्षिकः सः । पराभूय गत इत्यर्थः । केचिदिति केचित् पण्डिता गतिग्रहणमत्र नानुवर्त्त-यन्तीत्यनेन तन्मते तिरस्कृत्य इत्यादिद्वयं सूचितं । भाषावृत्तौतु नित्यं तिरस्कारः साधू-रित्युक्तमत उभयमत प्रदर्शनेन ग्रन्थकृता सूत्रे गतौ चेत्युक्तमिति ।। ३३१ ।।

तेन नेह—पितुः कृतिः, मुहुः पक्तिः। क्रियापेक्षायामिति परस्थितायाः कखपफादिक्रियायाः सम्बन्धे सतीत्यर्थः। तस्यामिति किम्? स्थापय सर्पिः पिबोदकम्।

## ३३३. अनुत्तरपदस्थयोरिसुसोः समासे, अधः शिरसोः पदे।

विधानमेतत् कारक क्रियासम्बन्धापेक्षि, समासाविषयकमिति ज्ञेयम्। तेन नेहेति—पितुरिति पितृशब्दस्य पञ्चम्यां—'ऋरामतो ङसि ङसो रस्य उच्' इति स्वादिजत्वादस्य उसो विष्णुसर्गस्य नषत्वम्। एवं मुहुरिति वाचकाव्ययम्, मुह वैचित्ते इति धातोः—'चक्षादेरुसिः' इत्युणादिसिद्धत्वेऽप्यव्ययत्वान्न तस्य ग्रहणम्। स्थाप्य सर्पि रिति—भो विष्णुमित्र! सर्पिः स्थापय तत उदकं पिबेत्यन्वयः। तस्मात् सर्पिः पदेन परस्थित पानक्रियायाः सम्बन्धाभावादत्र न षत्वमिति भावः।

अमृता०—३३३. अनुत्तरेति। न उत्तरपदे तिष्ठतीति अनुत्तरपदस्थः, तथाभूतयोरिसुसोः समासे सति कखादिषु परेषु विष्णुसर्गस्य नित्यं षत्वं स्यात्, तथा पदे शब्दे परे अनुत्तरपदस्थयोः अधः शिरसो विष्णु सर्गस्य नित्यं सत्वं भवति। पूर्वस्मिन् सूत्रे क्रियापेक्षायामित्यनेन असमासविषयकत्वमुक्त्वा तन्निवृत्त्यर्थमिह समासग्रहनं कृतम्। सर्पिष्कुण्डमिति—सर्पिषः कुण्डं, यजुषः पाठ इतिविग्रहौ। अधस्पदमिति—पदस्य अध इति विग्रहे—

बाल०—द्विस्त्रि। वारार्थे वृत्तिर्वर्त्तनं येषां ते वारार्थवृत्तयस्तेषां। सिंहावलोकिताधिकारेणात्र कखपफा अनुवर्त्तन्ते विशेषग्रहणाभावात्। कखपफेषु परेषु वारार्थवृत्तीनां द्वित्रिश्चतुःशब्दानां विष्णुसर्गस्य सो वा स्यात्। द्विप्रकारं कृत्वा इत्यादौ वाक्ये द्विष्कृत्वादयः षट्। अत्रेति। अत्र द्वित्रिचतुर्षु वारार्थे क्रियाप्रकारगणने तद्धितः सुप्रत्यय इत्यर्थः। द्विस्त्रिश्चतुरिति पदानां क्रियावारगणनबोधकेन सुप्रत्ययेनैव कृत्वार्थे लब्धे कृत्वेति ग्रहणं स्पष्टतार्थं। द्विष्कृत्वा निष्कृत्वेत्यादौ प्रथमं सुं कृत्वा ततो द्विरादीनां कर्मत्वादमो महाहरः॰क्त्वामान्तश्च कृदव्ययमित्यनेन कृत्वेत्यस्याव्ययत्वात् सोर्महाहरः। इत्यवयस्य पूर्वेषामपि पदत्वं लभ्यते। नापदं शास्त्रे प्रयुञ्जीतेति वचनात् तस्मात् सररामयोरित्यनेन सोर्विष्णुसर्गं विधाय मूर्द्धण्य-षरामः कार्यः। पक्षे विष्णुसर्गस्य स्थितिश्च। चतुष्कृत्वेत्यत्र चतुरित्यस्मात् पूर्वं सुः पश्चात् रात् सस्यैव सत्सङ्गान्तरहरविधिरित्युक्त्वा सत्सङ्गान्तस्य इर इत्यनेन तस्य हरश्च ततो ररामस्य विष्णुसर्गस्तस्य षश्च, पक्षे विष्णुसर्गस्यैव स्थितिः। विशेषविहितमपि षत्वं नहि विष्णुसर्गं बाधते सूत्रे विकल्पस्य वैयर्थ्यापातात्। अवारार्थे चेत्यत्र नित्यं पूर्वेणेति निर्दुर्त्वहिरादिश्चतुरामित्यनेनेति शेषः। चतुष्पार्श्वमिति चत्वारि पार्श्वान्यस्येति पीताम्बरे चतुर्णां पार्श्वमिति षष्ठीकृष्णपुरुषे चतुर्णां पार्श्वानां समाहार इति त्रिराम्याञ्च, किन्तु पात्राद्यन्ताद्यन्तर्भावादस्य ब्रह्मत्वं न लक्ष्मीता॥ ३३२॥

बाल०—इसु। क्रियाया अपेक्षा क्रियापेक्षा तस्यां सत्यां कखपफेषु परेषु इसुसन्तयोर्विष्णुसर्गः षत्वमापद्यते वा। वैष्णवाचार्यो वैष्णवं नियुङ्क्ते सर्पिष्कुर्विती-

सर्पिष्कुण्डं यजुष्पाठः। अधस्पदं शिरस्पदम्। उत्तरपदस्थत्वे तु महासर्पिः कुण्डं, परमसर्पिः कुण्डं, परमाधः पदम्।

## ३३४. कस्क आदिषु च।

द्वितीय तृतीयेत्यादिना विभाषया श्यामरामः। पक्षे षष्ठीसमासः। शिरस्पदमिति—शिरसः शिरसि वा पदं स्थानमिति विग्रहः। महासर्पिकुण्डमिति—महच्च तत् सर्पिश्चेति महासर्पिस्तस्य कुण्डमिति पश्चात् समासः। अत्रसर्पिः शब्दस्योत्तर पदस्थत्वान्न षत्वम्। एवं परमसर्पिः कुण्डमित्यत्र च। परमश्च तदधश्चेति परमाधः, पदस्य परमाध इति परमाधः, पदस्य परमाध इति परमाधः पदम्। एवं परमशिरः पदमिति च। परमसर्पिः कुरु इति त्वपपाठः, अस्य समासविषयकत्वात्। ननु सुपां सुपा तिङा नाम्नेत्यादिना तिङन्तेनापि सह सुबन्तानां समासोपदेशात् महासर्पिः कुरु इत्यत्र च समासः सङ्गच्छत एवेति चेत्? नैवम्, तत्र सुपामित्यनेन प्राद्यव्ययरूपगतिसंज्ञकानां ग्रहणं ह्यभीष्टत्वात्, प्रभवतीत्याद्युदाहरण दर्शनाच्चेति।

अमृता०—३३४. कस्क इति। कस्क आदिषु प्रयोगेषु निपातेन यथायोग्यं सषौ भवतः। कस्क आदि गणे केचित् शब्दाः समस्ता गृह्यन्ते केचित् पुनरसमस्ताः। कस्क इति—कः कः इति वीप्सायां द्विरुक्तिः, किमः को विष्णुभक्ताविति सौ कादेशः। कौतस्कुत इति—कुतः कुत आगत इत्यर्थे केशवणः, पूर्वपदस्यादिसर्वेश्वरस्य वृष्णीन्द्रः, वीप्सां द्विरुक्तिः। एतौ त्वसमस्तौ। कुतइति किम् शब्दात् तस् प्रत्यान्तो निपातः। भास्कर इति—भासं करोतीत्यर्थे आद्यन्तानन्तेत्यादिना टप्रत्ययः। भासृ दीप्तौ धातोः क्विप् भास। अहः दिनं करोतीति अहस्करः, द्वावपि सूर्य वाचिनौ। तमसां काण्डं समूहः तमस्काण्डम्।

---

त्यादिना कृष्णसेवार्थं सर्पिर्निष्पादयेत्यर्थः। एवं यजुष्पठेत्यादि। इस्विति। अत्र सूत्रे औणादिकयोरेवेसुसन्तयोर्ग्रहणमित्यर्थः। तेन हेतुभूते नेह स्थाने न स्यादौणादिकत्वाभावात्। पितुः कृतिः क्रियेत्यर्थः। मुहुर्वंचित्य इत्यस्मात् चक्षादेरुसिरित्यनेन उस्प्रत्ययेन सिद्धत्वेऽप्यव्ययवर्गे पाठादस्याव्ययत्वं तेनात्रापि न मुहुर्वारं वारं पक्तिः पाकक्रियेत्यर्थः। अपेक्षाहि कस्मैचित् कार्यायैकं प्रतीक्ष्यान्तस्य वर्त्तनं सा च परस्परं संबध्नाति। तत्त्वन्यत्रान्यदिह पुनः कारकक्रिययोरेवेत्याह क्रियापेक्षेति सूत्रस्यैव फलितार्थेन वृत्तिकथनमिदं। ननु कथान्तरमिति। तस्यां क्रियापेक्षायामिति। तस्यां क्रियापेक्षायामिति किं किमर्थं, यदा क्रियापेक्षार्थः। स्थापय सर्पि पिबोदकमित्यत्र भो वैष्णव सर्पिः स्थापय उदकं पिबेति परस्परसम्बन्धः। ननु सर्पिः पिब उदकं स्थापय इति। यतो लोके घृतस्थापनप्रयत्नं विना कोऽप्युदकस्थापनयत्नं न करोतीति प्रसिद्धेः। यदि कश्चिद्दयालुः कमपि भृत्यं क्लेशितं दृष्ट्वा उदकं स्थापय सर्पिः पिबेति ब्रूयात्तदा सर्पिष्पिबेत्यपि स्यात्। तिष्ठतु सर्पिः पिब त्वमुदकमिति। सर्पिरिति कर्त्तृपदं। तिष्ठत्विति क्रियापदमपेक्षते पिबेति क्रियापदं उदकमिति कर्मपदमपेक्षेते ननु सर्पिः पिबेतानयोः परस्परापेक्षास्तीत्युत्तरसूत्रेणापि विकल्पो न भवतीत्येके॥ ३३३॥

कस्कः कौतस्कुतः। भास्करः अहस्करः तमस्काण्डं मेदस्पिण्डः वाचस्पतिः अयस्कील इत्यादि।

## ३३५. अहरादीनां पत्यादौ रो वा।

मेदसः पिण्डः मेदस्पिण्डः, मेदो धातुभेदः। वाचो वाण्याः पतिः वाचस्पतिः बृहस्पतिरित्यर्थः। विष्णुजनारामान्तादित्यादिना षष्ठ्या अलुक्। अयस लौहस्यकिलः शङ्कुः अयस्कीलः। अविहितलक्षणाः सर्वे कस्कादिषु ग्राह्याः।

**अमृता०**—३३५. अहरिति। पत्यादौ परे सति अहरादीनां विष्णुसर्गस्य रो वा स्यात्। अहर्पतिरिति—अह्नो दिवसस्य पति रिति विग्रहः। सूर्य इत्यर्थः। अह्नो विष्णु-

---

**बाल०**—अनु। न उत्तरपदे स्थीयते अनुत्तरपदस्थौ तयोः समासे सत्यनुत्तरपदस्थितयोरिसुसन्तयोः कखपफेषु विष्णुसर्गस्य षत्वं स्यात्। अधः। अनुत्तरपदस्थयोरधःशिरःशब्दयोस्तु पदे परे सत्वं भवति। सर्पिषः कुण्डं यजुषः पाठः। इति विग्रहे अधःस्थितं पादमिति विग्रहे पदस्य अधः इति वा विग्रहे राजदन्तादित्वात् अधस्पदमिति। शिरसि पदमिति विग्रहे शिरश्च पदञ्च तयोः समाहार इति विग्रहे प्राण्यङ्गानामित्यनेन समाहारे वा शिरस्पदमिति। उत्तरेति। अनुत्तरपदस्थेति ग्रहणादुत्तरपदस्थत्वेतु न स्यादित्यर्थः। महासर्पि कुण्डमित्यादित्रये पूर्वपूर्वपदे श्यामरामसमासानन्तरं पश्चात् पूर्ववद्वाक्यं योज्यं। एवं परमशिरः पदमित्यपि। ननु यद्यप्यनेन महासर्पिः कुण्डं परमसर्पिः कुर्वित्यादौ षत्वं न स्यात्तथापि इसुसोः क्रियापेक्षायामिति पूर्वसूत्रेण कथं पाक्षिकषत्वं न स्यात्। उच्यते। समासे ह्येकार्थीभावलक्षणः सम्बन्धौ नतु परम्परापेक्षा सा हि क्रियाकारकयोरेव भवति। समासार्थे वाक्येच इह पुनर्नास्तीति भवता यदुक्तं तन्न स्यात्। तथाहि, समासे विशेषणं स्वार्थं परित्यज्य विशेष्यार्थमभिधत्ते अतएकार्थीभवलक्षणः सम्बन्धोऽत्र न परस्परापेक्षा। नन्वेवं सति जहत्स्वार्थलक्षणा वृत्तिः स्वीकार्येति चेत् सापि न घटते। नहि विष्णुदूतं पश्येत्युक्ते दूतमात्रे प्रतीतिः कस्यापि जायते विशेषणमात्रोपयोगिनोऽर्थस्यापरित्यागात्। विष्णुशब्दस्तु जहदपि स्वार्थं नात्यन्तं जहाति। किन्तु यः प्रधानार्थविरोधी स्वार्थस्तं जहातीति। यथा शिल्पकारो राजकर्मणि वर्त्तमानः प्रधानार्थविरोधि शिल्पकर्म जहाति नतु हिक्कित-हसितकण्डूयितानि तथा विष्णुशब्दोऽपि विशेष्यार्थे विरोधिनमन्यसम्बन्धार्थं जहाति न विशेषणभावं। अथवा वाक्ये दृष्टस्योपसर्जनीभूतार्थस्य वृत्तौ स एवायमित्यवगमात् तदर्थावगमो भवति। यथा मल्लिकासम्पुट श्चम्पकसम्पुट इति। तस्मात् तद्वचपनीतेऽपि तत्तत्पुष्पे तत्र तत्र तदर्थावगमस्तद्वदिहापि। अतएव महासर्पिः कुण्डमित्यादौ एकार्थीभावसम्बन्धो न परस्परापेक्षारूपः। यद्यपि सच परस्परसम्बन्धार्थानामित्यनेन समासलक्षणोक्तेन परस्परसम्बन्धोऽङ्गीक्रियते तथाप्यत्र क्रियापेक्षाभावात् पाक्षिकषत्वं न स्यात्। तयोऽत्र क्रियापेक्षा नास्ति कुतः क्रियापेक्षा परमसर्पिः कुरु इत्यत्र क्रियापेक्षा घटते, किन्तु सुप् सुपेत्यनुवृत्तेस्तिङापीत्यनेन यस्तिङ्समासो विहितस्तेन बाध्यतेऽतोऽत्रापि न पाक्षिकषत्वं। किंवात्र क्रियापेक्षायामपि तामनादृत्य उत्तरपदस्थसमासाभावाभ्यां द्वयङ्गवैकुल्यं प्रत्युदाहरणमुपन्यस्तवानिति॥ ३३४॥

अहर्पतिः अहः पतिः, धूर्पतिः धूःपतिः, गीर्पतिः गीःपतिः । कस्क आदित्वात् गीष्पतिः । स्वःपतति स्वर्पतति ।

## ३३६. उषर्बुधोऽग्नौ निपात्यते, नार्पतादयश्च कृष्णीन्द्रे ।

नृपतेरिदं । नार्पतं नार्कटं, नार्कपालम् नार्पतं, रति जुमरः ।

---

सर्गो विष्णुपदान्त इति नरामस्य यो विष्णुसर्गो विहितः, तस्यैव ररामोऽत्र विभाषया विधीयते, पक्षे विष्णुसर्गस्य हि स्थितिः । इह रादेशात् पश्चात् पुनः मररामयोरिति विष्णु सर्गस्तु नभवति, विधानसामर्थ्यात् ।

ननु 'अह्नो विष्णुसर्गस्य रो रात्रिरूपरथान्तरादन्येषु' इत्यनेन हि पत्यादौ च परे रराम: सिध्यतीति किमनेनेति चेन्न, तत्र सर्वश्वरगोपालयोरित्यनुवृत्तेः पत्यादौ न प्राप्नोतीत्यतो विधानमेतत् । किञ्च तत्र नित्यं रविधानमिह तु विभाषयेति । धुरां भाराणां पतिः धूर्पतिः, धूरिति क्विबन्तः । इरुरन्तधातोरित्यादिनोद्धवस्य त्रिविक्रमः । एवं गीर्पतिरिति च । स्वः स्वर्गात् पतति स्वर्पतति ।

**अमृता०**—३३६. उषर्बुध इति । अग्नौ वाच्ये उषर्बुध इति ररामेण निपात्यते । उषसः प्रातः कालस्य बुध इति संज्ञत्वाद् यथाकथञ्चिद् व्युत्पत्तिः । नार्पतादयश्च वृष्णीन्द्रे सति ररामेण निपात्यन्ते । नृपतेरिदमित्यर्थे तस्येदमिति केशवणः, आदिसर्वेश्वरस्य ऋरामस्य वृष्णीन्द्रः, वृष्णीन्द्रे कृते निपातात् ररामस्य विष्णुसर्गाभावः । नार्कटमिति—नुः मनुष्यस्य कटिः नृकटिः, तस्येदमिति पूर्ववत् केशवणः । नृकपालस्य वदं नार्कपालम् ।

---

**बाल०**—कस्कः । कस्क आदिर्येषां ते कस्कादयः तेषु । कस्क आदिषु प्रयोगेषु यथायोग्यं सषौ भवतः । सूत्रे कस्क इत्यदिना सह समासेऽप्यन्तरङ्गस्वादेर्महाहराभावः । कस्कपदे समासप्रतीतिः, अन्यथा किं किमादिषु चेत्येवं स्यात् । कः इति प्रश्ने । किमः को विष्णुभक्ताविन्यनेन प्रथमान्तः क इति त्वरायां यावद्बोधः इत्यनेन द्विरुक्तौ कस्क इति । पञ्चम्यास्तम् तद्धित इत्यनेन तद्धितनिपातः कृतः । वदादित्वादव्ययश्च ततो वीप्सायां द्विरुक्तिः स्वार्थे केशवणः पूर्वपदस्य वृष्णीन्द्रः । केशवणरामे संसारहरश्च वक्ष्यते । सररामयोरित्यनेन सोर्विष्णुसर्गः इति । कौतस्कुतः । भासृ दीप्तौ भासते इति क्विप् भास तां करोतीति वाक्ये आद्यन्तानन्तेत्यादिषु गणेषु कर्मसु डु कृञष्ट इत्यनेन कृत्प्रकरणोक्त टप्रत्ययान्तः भास्कर इति । एवं अहः दिवसं करोतीति अहस्करः । भास्कराहस्करब्रध्न-प्रभाकरविभाकरा इत्यमरः । तमसां काण्डं समूहः इति तमस्काण्डं । मेदसः मांसविशेषस्य पिण्ड इति वाक्ये । वाचो वाण्याः पतिरिति वाक्ये विष्णुजनारामान्तादित्यादिना षष्ठ्या अलुक् । अयसः लोहस्य कीलः शङ्कुरिति वाक्ये । इत्यादीत्यादीपदेन पूर्वोक्तैः सूत्रैर्यन्न सिध्येत् तत्तदनेनैव साधनीयमिति ॥ ३३५ ॥

**बाल०**—अह । अहरादिर्येषां ते अहरादयस्तेषां पत्यादौ परस्मिन् अहरादीनां शब्दानां विष्णुसर्गस्य रो वा स्यात्, अह्नो दिवसस्य पतिरिति विग्रहे अहर्पतिरित्यादिद्वयं ।

## ३३७. उत्तरपदस्य पीताम्बरे ।

विभुरयम् ।

## ३३८. जायाया जानिः ।

रुक्मिणीजानिः ।

## ३३९. धनुषो धन्वन्, संज्ञायान्तु वा ।

---

**अमृता०**—३३७. उत्तरेत्यधिकारसूत्रम् । पीताम्बरसमासे उत्तरपदस्य वक्ष्यमाणा आदेशा भवन्तीति विभुनामायमधिकारः ।

**अमृता०**—३३८. जायाया इति । पीताम्बरे उत्तरपदस्थस्य जाया शब्दस्य जानिरित्यादिश्यते । रुक्मिणीजानिरिति रुक्मिणी जाया यस्येति विग्रहः । एव युवती जाया यस्य स युवजानिः, देवी जाया यस्य स देवजानिरित्यादि । वाच्यलिङ्गलक्ष्मीस्तुल्याधिकरण लक्ष्म्यामिति पुरुषोत्तमवत्त्वम् । युवजानि र्धनुष्पाणि रिति भट्टिः ।

**अमृता०**—३३९. धनुष इति । पीताम्बरसमासे उत्तरपदस्थस्य धनुष् शब्दस्य धन्वन् इत्यादिश्यते, संज्ञायान्तु विकल्पेन तदादेशो भवति । दृढधन्वेति—दृढ धनु र्यस्येति विग्रहे दृढधन्वन् शब्दात् सु, नान्तधातु वर्जितेति उद्धवस्य त्रिविक्रमः, सोर्हरः । शार्ङ्गधन्वेति

---

नन्वहर्पत्यादौ सररामयोरित्यनेन ररामस्य विष्णुसर्गः कथं न स्यात् । मैवं । यदि ररामस्य विष्णुसर्गो भवेत् तदा ररामविधानमनर्थकं स्यादतोऽत्र ररामविधानादहर्पत्यादौ पुनाररामस्य विष्णुसर्गो न स्यात् । धूर्वीधातोः क्विवन्तः धूः । धुरां भाराणां पतिरिति विग्रहे धुर्पतिरित्यादयं । किन्तु इरुरन्तर्धातोरित्यनेन उरामस्य त्रिविक्रमः । एवं गिरां वाचां पतिरिति वाक्ये गीर्पतिरित्यादिद्वयं । कस्क आदित्वात् । कस्क आदेराकृतिगणत्वाद्गीष्पतिरित्यपि स्यात् । गीष्पतिर्द्धिषणो गुरुरित्यभिधानादौ दृश्यतेत्र । स्वः स्वर्गात् पतति स्वः पततीति द्वयं ।। ३३६ ।।

**बाल०**—उषः । अग्नौ वाच्ये उषर्बुध इति ररामेण सह निपात्यते । संज्ञाशब्दानां यथाकथञ्चिद् व्युत्पत्तित्वादुषसः प्रातःकालस्य बुध इति विग्रहो ज्ञेयः । बुधः कप्रत्ययान्तः । नार्पं । नार्पतमादिर्येषां ते नार्पतादयः । वृष्णीन्द्रे कृते सति ररामस्य विष्णुसर्गाभावेण नार्पतादयश्च निपात्यन्ते । चकारोऽत्रानुक्तसमुच्चये तेन यथास्वमन्येप्युदाहर्त्तव्याः । नृणां नराणां पतिः नृपतिः । तस्येदमित्यनेन केशवणः । वाक्योदाहरणं स्वयं दर्शितमिति । आत्मोदाहरणं दत्वा जुमरोदाहरणत्रयमाह नार्कटमित्यनेन । नुः कटेरिदं नार्कटं । तथा नुः कपालस्येदं नार्कपालं नार्पतन्तु पूर्ववत् । किन्त्विदं क्वचित् पुस्तके न दृश्यतेच तदपि नासङ्गतं सूत्रस्थादिपदात् सर्वसिद्धेः ।। ३३७ ।।

**बाल०**—उत्तर । पीताम्बरे समासे सत्युत्तरपदस्य यथास्वमादेशो भवति । उत्तरपदस्येति पूर्वपदमपेक्ष्यते । अतः पूर्वपदादुत्तरस्येति योज्यं । विभुनामाधिकारोऽयं ।। ३३८ ।।

दृढधन्वा, शार्ङ्गधन्वा। शार्ङ्गधनुः। शतधन्वा शतधनुः। धनुरुदन्तः पुंलिङ्गोऽस्ति। तेन,—

स्वयमतनुः कुसुमधनुस्त्रिभुवनविजयी कथं मदनः।
यदि तु सरसिरुहनयना न किरति नयनाञ्चलान्दोलम्॥

संज्ञात्वमपि नास्तीति।

**३४०. प्रसंभ्यां जानुनो ज्ञुः।**

**प्रगते जानुनी यस्य स प्रज्ञुः। संहते जानुनी यस्य स संज्ञुः।**

---

—शृङ्गस्य विकारः शार्ङ्गः, तादृशं धनु र्यस्येति विग्रहः। यद्यपि शार्ङ्गं धनु र्वासुदेवस्यैव प्रसिद्धं, तथाप्यमरकोषादौ संज्ञाशब्दतया शार्ङ्गी इति इनन्तस्यैव ग्रहणात्, शार्ङ्गधन्वा इत्यग्रहणाच्च नायं संज्ञाशब्दतया स्वीकृतः प्राचीनैः। एवं गाण्डीवधन्वेति अर्जुने रूढ्यपि सज्ञात्वेन न गृहीतः पाणिनिभिः। शतधन्वेति—स्यमन्तकमन्यपहरणार्थं शत्राजितो हन्ता क्षत्रियः। अतः संज्ञात्वाद् विभाषयादेशः—शतधनुरिति। एवं पुष्पधन्वा पुष्पधनुरित्यादि।

ननु शार्ङ्गधन्वेति रूढित्वेऽपि यदा संज्ञात्वाभाव स्तर्हि कुसुमधनु रिति प्रयोगः संज्ञाभावेन कथमुपपद्यत इति शङ्कायां समाधत्ते—धनुरुदन्त इति। धनुष् शब्द उषन्तो नपुंसको हि प्रसिद्धः, किन्तु उरामान्तः पुंलिङ्गश्च धनु शब्दो विद्यते। तत् समर्थनाय कवि प्रयोगमुट्टङ्कयति—स्वयमतनुरित्यादि पद्यम्। अर्थः सुगमः। अत्र मदनशब्दो विशेष्यम्, कुसुमधनुरिति तद् विशेषणम्, संज्ञा शब्दश्च प्राधान्येन विशेष्यमेवभवति, अतश्चास्य संज्ञत्वाभावः। तच्च स्पष्टीकृतम्—संज्ञात्वमपि नास्तीति। किञ्च—कुसुमेषुरनन्यज इत्यमर शासनात् इषु शब्देन हि कुसुमशब्दस्य समासे कामदेवसंज्ञा लभ्यते नतु धनुष् शब्देन। यथा हि गोत्रभित् शब्देन खल्विन्द्रसंज्ञा प्रसिद्धि र्नतु पर्वतभित् शब्देन, तद्वदिहापि। तस्मात् क्वचिद् रूढित्वेऽपि कोषादिर्गिर्दिष्टा हि शब्दाः संज्ञाशब्दत्वेन ग्राह्या इत्येव सिद्धान्तो बोध्यः।

**अमृता०—३४०.** प्रसंभ्यामिति। पीताम्बर समासे प्रसंभ्यामुत्तरस्य जानु शब्दस्य ज्ञु-रित्यादेशः स्यात्। प्रगते नष्टे इत्यर्थः। संहते मिलिते।

---

**बाल०**—जाया। पीताम्बरे पूर्वपदादुत्तरस्य जायाया जानिः स्यात्। रुक्मिणीजाया यस्य सः। एवं देवी जाया यस्य स देवजानिः। देवीशब्दस्य वाच्यलिङ्गलक्ष्मीस्तुल्याधीत्यनेन पुरुषोत्तमवत्त्वं। तथा मायाजानिः, दत्तजानिरित्यादयोऽपि॥ ३३९॥

**बाल०**—धनु। पीताम्बरे सति पूर्वपदादुत्तरस्य धनुःशब्दस्य धन्वन् स्यात्। संज्ञा। पीताम्बरे संज्ञायां विषये पूर्वपदादुत्तरस्य धनुषो धन्वन् वा स्यात्। पूर्वस्मान्नित्ये प्राप्ते विकल्पार्थोऽयं योगः। दृढं धनुर्यस्य इति दृढधन्वन् नान्तधातुर्वजितेत्यनेन त्रिविक्रमः। राधाविष्णुजनाभ्यामित्यनेन सोर्हरः। एवं ऋजुधन्वा वक्रधन्वा चक्रधन्वा

## ३४१. ऊद्ध्र्वात्तु वा ।

ऊद्ध्र्वज्ञुः ऊद्ध्र्वजानुः ।

## ३४२. सु-संख्याभ्यां दन्तस्य दतृ वयसि ।

---

**अमृता०**—३४१. ऊर्द्धादिति स्फुटम् । ऊर्द्ध्वे जानुनी यस्येति विग्रहः ।

**अमृता०**—३४२. सु-संख्याभ्यामिति । वयसि गम्यमाने पीताम्बरे सुशब्दात् संख्या वाचकाच्चोत्तरेभ्य दन्तस्य दतृ रिति ऋरामान्तादेशो भवति । सुदन्निति—शोभना दन्ता अस्येति सुदतृ, ऋराम इत्, ततः सुदत् शब्दात् सु, नुम्, सोर्हरः, सत्सङ्गान्तहरश्च । वयः

---

इत्यादयः । चक्रमिव धनुरस्येति वाक्ये चक्रधन्वा आकर्षणे कुण्डलीभूतत्वात् चक्रवदिति । शृङ्गेन निर्मितं शार्ङ्गं तद्धनुर्यस्य स शार्ङ्गधन्वा शार्ङ्गधनु शार्ङ्गधन्वा श्रीकृष्ण इति प्रसिद्धरत्र संज्ञात्वं । तथा पुष्पधन्वा पुष्पधनुः । धनुरुषन्तं ब्रह्मलिङ्गमिति प्रसिद्धमित्यत आह धनुरुदन्त इति । धनुरुदन्तपुंलिङ्गमित्युक्त्वा तत्पोषकं पद्यमाह तेनेत्यादिना । यदि सरसिजनयना वराङ्गना नयनाञ्चलान्दोलं नयनप्रान्तचाञ्चल्यं न विकिरति न क्षिपति तदा स्वयमतनुः तनुहीनः कुसुमधनुः सन्मदनः कथं त्रिभुवनविजयी भवेदित्यर्थः । अत्र कन्दर्पस्य तनुरहितत्वेन पुष्पस्य कोमलत्वात्तन्निर्मितधनुस्त्वेनच दुर्वलत्वं सूचितमतः सरसिजनयनाञ्चलान्दोलविक्षेपेण तस्य त्रिभुवनविजये समर्थता । पुष्पधन्वा रतिपतिरित्यादिना पुष्पधन्वन्शब्दस्यैव संज्ञात्वं न कुसुमधनोरित्यस्य विशेषतस्तस्मिन् पद्ये मदन इत्यस्य विशेषत्य दर्शनात् कुसुमधनुरित्यस्य विशेषणत्वमेव निर्द्धारितमित्यत आह संज्ञात्वमपि नास्तीति । यद्यत्र संज्ञात्वं स्यात्तदा संज्ञायां धन्वनादेशस्य वैकल्प्यात् पक्षे उसन्तधनुषोऽपि कुसुमधनुरिति स्यात् तन्नास्तीति । ननु पुष्पकुसुमयोरेकपर्यायत्वेन यथा पुष्पधन्वा संज्ञायां वर्त्तमानः कन्दर्पवाची तथा कुसुमधनुरपि तद्वाची मदनशब्दन्तु यौगिकवृत्त्या जनमादकत्वेन विशेषणमिति । कुचोद्यं कृत्वा यद्यपि केचिदूचुस्तथापि प्रथमायाः सौ पर एव धनुषः कुसुमधनुरिति सिध्येत्, औप्रभृतौतु कुसुमधनुरिति न सिध्येत्, तत् साधूक्तं धनुरुदन्त इति ॥ ३४० ॥

**बाल०**—प्रसं । सूत्रे वेदवद्व्यवहाराच्छब्दानुकरणं कृत्वा प्रसंभ्यामित्युक्तमन्यथा-द्वयोरव्ययत्वात् स्वादेर्महाहरः स्यात् । पीताम्बरे सति प्रसंशब्दाभ्यामुत्तरस्य जानुनो ज्ञुरादेशो भवति । वाक्योदाहरणं स्वयमेव दर्शितं । प्रगते नष्टे इत्यर्थः संयुते मिलिते इत्यर्थः । प्रसंभ्यां जानुनो ज्ञुज्ञाविति जुमरसूत्रं । प्रसं इत्येताभ्यामुत्तरस्य जानुशब्दस्य स्थाने बहुव्रीहौ ज्ञुज्ञ इत्येतावादेशौ भवत इत्यर्थः । तट्टीकाकारस्तु प्रज्ञ इत्युक्त्वा परमतमप्याह अकारान्तोऽयमादेशो बहुभिः कृतः, उकारान्तोऽपि कैश्चित् । तथाच मनुनागप्रयोगः उद्ध्र्वज्ञुरिति । मतद्वयाङ्गीकारादिहादेशद्वयविधानमिति । एवमूद्ध्र्वं-शब्दादपि तन्मते ज्ञज्ञु भवतः, किन्तु ज्ञज्ञुविधानादुद्ध्र्वज्ञ इत्यपि सिध्येत् । विकल्पाभावा-त्त्रोर्द्धजानुरिति न सिध्येदेवेति ज्ञेयं ॥ ३४१ ॥

सुदन् कुमारः, सुदती कुमारी, द्विदन् वत्सः । वयसि किम्—
द्विदन्तो गजः ।

**३४३. अग्रान्त-शुद्ध-शुभ्र-श्यावारक-वृष-वराहादि-गर्दभ-मूषिक-शिखरेभ्यो दन्तस्य दतृ वा ।**

कुशाग्रदन् कुशाग्रदन्तः, शुद्धदन् शुद्धदन्तः ।

**३४४. संख्यासूपमानेभ्यः पादस्यान्तहरः ।**

---

प्रतीत्यर्थः कुमार इत्युपन्यासः । कुमारः पञ्चवर्षीय इति मेदिनी । सुदतीति ऋरामानुबन्धत्वादीप् लक्ष्याम् । द्विदन् वत्स इति—द्वौ दन्तौ जातावस्येति विग्रहः, गोवत्स इत्यर्थः । द्विदन्तो गज इति—गजस्य द्विदन्तत्वं स्वभावसिद्ध नतववस्था बोधकमिति दन्ताभ्यां तस्य वयोऽधिगमाभावान्नादेशः ।

**अमृता०**—३४३. अग्रेति । पीताम्बरे अग्रान्तात् शब्दात् तथा मुद्धादिभ्यो दशभ्यश्चोत्तरस्य दन्तस्य दतृरादेशो विभाषया भवति । कुशाग्रदन्निति कुशाग्रमिव दन्तो यस्येति विग्रहे रूपद्वयम् । शुद्धा दन्ता अस्येति विग्रहे शुद्धदन्निति द्वयम् । एवं शुभ्रदन् श्यावदन् अरोकदन् वराहदन् अहिदन् गर्दभदन् मूषिकदन् शिखरदन् । पक्षे शुभ्र दन्त इत्यादीनि च । श्यावः श्यामवर्णः । अरोकेति रुच दीप्तौ, भावे घण्—रोकः, ततो नञ्समासे अरोकः, अदीप्त इत्यर्थः । वृषादयः षड् उपमानपूर्वाः । तेन वृषस्य दन्ता इव दन्ता यस्येति विग्रहः । सर्वत्र लक्ष्मीत्वे सतीप् स्यात् ।

**अमृता०**—३४४. संख्येति । पीताम्बरे संख्या वाचिशब्दात् सुशब्दात् तथा उपमान वाचकाच्चोत्तरस्य पादस्य अन्तहरः अर्थादरामहरः स्यात् । क्रमत उदाहरणानि—द्विपादित्यादीनि । द्वौ पादौ यस्य स द्विपात् मनुष्यः । शोभनौ पादौ यस्य स सुपात् । सिंहस्येव

---

**बाल०**—ऊद्ध्वा । पीताम्बरे समासे ऊद्ध्वादुत्तरस्य जानुनस्तु ज्ञुर्वा स्यात् । अप्राप्ते विभाषेयं ! ऊद्ध्वं गते जाते जानुनी यस्येति विग्रहे ऊद्ध्वज्ञुरित्यादिद्वयं ।। ३४२ ।।

**बाल०**—सुसं । वयसि गम्यमाने पीताम्बरे सुसंख्याभ्यामुत्तरस्य दन्तस्य दतृर्भवति । दतृरिति शब्दनिर्देशात् दतेति न स्यात् । सुदन्निति शोभना दम्भा अस्तेति सुदतृ इत्यस्य ऋरामे इत्, सु अचश्चतुर्भुजानुबन्धानाञ्चेत्यनेन नुम् । राधाविष्णुजनाभ्यामित्यनेन सोर्हरः सत्सङ्गान्तस्य हर इति तरामहरः । वयःप्रतीतयेऽत्र कुमार इति विशेष्य दर्शितं । शोभना दन्ता अस्याः सुदतीति ऋरामानुबन्धादीप् वक्ष्यते । अत्रापि कुमारीति पूर्ववत् । द्वौ दन्तौ यस्य स द्विदन् वत्स इति गोवत्सः । वयसीति किं यहि वयसीति न स्यात् तर्हि नस्यात् । द्वौ दन्तौ यस्य स द्विदन्तो गज इत्यत्र गजस्य स्वभावद्विदन्तत्वात् दन्तस्य दत्रादेशो न स्यात् । नहि दन्तेनास्य वयो गम्यते अपितु वयसि चिह्नान्तरमनुसन्धेयं ।। ३४३ ।।

द्विपात् सुपात् सिंहपात् ।

**३४५. न हस्त्यादेः ।**

हस्तिपादः कण्डोलपादः ।

**३४६. कुम्भपद्यादयः ।**

---

पादा यस्य, सिंहस्य पादा इव पादा यस्येति वा विग्रहे सिंहपात् । सर्वत्र विष्णुदासस्य हरिकमलं वेति तरामः, पक्षे दरामश्च । एवं चतुष्पात् पशुः, षट्पात् मधुपः, तथा मृगपादित्यादीनि । एतदुद्दिश्य हि शब्द प्रकरणे—पाच्छब्दस्य वामनो भगवतीत्युक्तेः शसि द्विपदः सिंहपद इत्यादि रूपाणि ज्ञेयानि । कुण्डली गूढपादित्यमरधृतो गूढपाच्छब्दस्तु संज्ञायां निपातितः ।

**अमृता०**—३४५. नेति । हस्ति प्रभृत्युपमानवाचकादुत्तरस्य पादस्यान्तहरो न भवति । हस्तिनः पादा इव वादौ यस्य स हस्तिपादः । हस्त्यादे र्गणो यथा—हस्ती कटोल गण्डोलौ गणिका महिला तथा । दासी कुशूल कण्डोला अष्टौ हस्त्यादयो मताः ॥ इति ॥

**अमृता०**—३४६. कुम्भेति । पीताम्बरे अन्त्यलोपेन ईबन्तेन च कुम्भपदीप्रभृतयो निपाताः स्युः । पाद ईप् वक्ष्यते, तद् विकल्पबाधनार्थं इह निपातः । कुम्भाविव पादौ

---

**बाल०**—अग्र । अग्रान्तश्च शुद्धश्च शुभ्रश्च श्यावश्च अरकश्च वृषश्च वराहश्च अहिश्च गर्द्धभश्च शिखरश्च ते तेभ्यः । पीताम्बरे वयस्यवयसिच गम्ये अग्रान्तादिभ्यो दशशब्देभ्यः परस्य दन्तस्य दतृर्वा स्यात् । कुशाग्रमिव दन्त अस्येति विग्रहे कुशाग्रदन्नित्यादिद्वयं । शुद्धा दन्ता अस्नेति शुद्धदन्नित्यपि द्वयं । एवं शुभ्रदन् श्यावदन् अरकदन् । श्यावः स्वभावतः कृष्णवर्णः । अरकः द्रव्यविशेषः । तथा वृषदन्त इव दन्तो यस्य स वृषदन् । वराहदन्तः इव दन्तो यस्य स वराहदन् गर्द्धभदन्त इव दन्तो यस्य सगर्द्धभदन् । शिखर इव दन्तो यस्य स शिखरदन् इति वृषददादयश्चत्वार उपमानपूर्वाः । शिखर इति पर्वताग्रं । पक्षे शुभ्रदन्त इत्यादयः । लक्ष्म्यान्तु कुशाग्रदतीत्यादयोऽपि ॥ ३४४ ॥

**बाल०**—संख्या । संख्याच सुच उपमानश्च तानि संख्यासूपमानानि तेभ्यः । पीताम्बरे सति संख्यासूपमानेभ्यः परस्य पादस्यान्तहरो भवति । द्वौ पादौ यस्येति द्विपात । शोभनौ पादौ यस्येति सुपात् । सिंहपादाविव पादौ यस्येति सिंहपात् । द्विपादित्यादौ सोर्हरे कृते विष्णुदासस्य हरिकमलं वेत्यनेन दरामस्य तरामः । एवमेकपात् त्रिपात् चतुष्पात् पञ्चपात् षट्पात् सप्तपादित्यादयः । तथाश्वपात् मृगपात् गोपादित्यादयोऽपि पादान्तच्चेति स्त्रियामीप्रत्ययो नास्ति, समासकृताल्लोपस्य पादस्तत्र ग्रहणात् गूढपात् सर्पीयेत्वकारलोपं कुर्वन्ति तैर्गूढपदीव्यावृत्तये यत्नः करणीय इति जुमरटीकाकृत् । पद गतौ पादयतीति ण्यन्तात् पादयतीति ण्यन्तात् पादयतेः क्विप् णेर्लुक् पात् । गूढः पाद् यस्येति गूढपाद्भुजङ्ग इति दुर्गसिंहः । गूढपादित्यत्र लक्षणाभावात् पृषोदरादित्वात् अकारलोपं पाणिनीयाश्चान्द्राश्च वदन्तीति । कुण्डली गूढपाच्चक्षुःश्रवाः काकोदरः फणीत्यमरश्च ॥ ३४५ ॥

साधवः । कुम्भपदी शतपदी गोधापदीत्यादि ।

**३४७. पूर्णादेः ककुदस्य ककुदवस्थायाम् ।**

पूर्णककुत् अजातककुत् । अवस्थायां किम्—श्वेतककुदः ।

**३४८. त्रिककुत् गिरौ ।**

साधुः ।

---

यस्याः सा कुम्भपदी, उपमानपूर्वत्वादन्तहरः, तत ईपि पाच्छब्दस्य वामनो भगवतीति वामनः । शतपदीत्यत्र संख्यापूर्वत्वादन्तहरः, अन्यत् समानम् । सर्वत्र निपातबलान्नित्यमीप् । एते कुम्भपद्यादिषु पठ्यन्ते—कुम्भपदी शतपदी अष्टापदी जालपदी एकपदी माला पदी मुनिपदी गोधापदी गोपदी कलसीपदी घृतपदी दासीपदी निष्पदी आर्द्रपदी कुणपदी कृष्णपदी द्रोणपदी द्रुपदी शकृत्पदी पञ्चपदी अर्वपदी स्तनपदी स्थूलपदी सूत्रपदी द्विपदी कलहंसपदी सुपदीति ।

अमृता०—३४७. पूर्णादेरिति । पीताम्बरे अवस्थायां गम्यमानायामुत्तरपदस्थस्य ककुदस्य ककुदित्यादिश्यते । कालादिकृत वयः प्रभृतिधर्मविशेषः अवस्था । वृषादेः स्कन्धस्थमुच्चमांसपिण्डं ककुदमुच्यते । पूर्णककुदिति—पूर्णं ककुदमस्येति विग्रहः, युवा वृष इत्यर्थः । अजात ककुदिति बाल्यावस्था मम्यते । एवं स्थूलककुद् बलवान् वृष इत्यादि । श्वेतककुदित्यत्र तु नहि कालकृतवयोधर्म उच्यते किन्तु स्वाभाविक देह लक्षणमिति ।

अमृता०—३४८. त्रिककुदिति । ककुदमिह गिरेः शृङ्गं लक्षयति ।

---

**बाल०**—न ह । पीतम्बरे समासे उपमानाद्धस्त्यादेरुत्तरस्य पादस्यान्तहरो न पूर्वेण प्राप्ते प्रतिषेधोऽयमिति । हस्तिनः पादा इव पादौ यस्येति वाक्ये । कण्डोल इव पादो यस्येति विग्रहे । सूत्रस्थादिपदं प्रसिद्धगणविशेषग्राहकं, तद्यथा । हस्ती महांश्च गणिका कटोलः कण्डोलस्तथा । गण्डोलः कुशलश्चैव दास्यष्टौ हस्तिकादयः ।। ३४६ ।।

**बाल०**—कुम्भ । कुम्भपदी आदिर्येषां ते कुम्भपद्यादयः । पीताम्बरसमासे कुम्भपद्यादयश्च ईप्प्रत्ययान्ताः साधवो भवन्ति । कुम्भाविव पादौ यस्याः सा कुम्भपदी । शतं पादा यस्याः सा शतपदी । गोधाया पादाविव पादौ यस्याः सा गोधापदी । इत्यादीत्यादिपदेनान्येऽप्युह्याः । कुम्भादिगणो यथा । कुम्भाष्टौ शतजालौ हि मणिसूत्रं शितिस्तथा । सूत्रं द्रोणः कुणिः कृष्णकुशलश्च ततः परः । विनिरर्द्धशकृत् शूच्यः शूकरश्च तदुत्तरः । दास्यैकगोधा कुम्भाद्या एकविंशतिसंख्यकाः । गोधा स्वर्णगोधिका ।। ३४७ ।।

**बाल०**—पूर्णा । पीताम्बरे समासे अवस्थायां गम्यमानायां पूर्णादेः पूर्वपदादुत्तरस्य ककुदस्य ककुद्भवति । कालादिकृतो वयोविशेषः धर्मविशेषश्चावस्था तस्यां । पूर्णं ककुदं स्कन्धाग्रं यस्येति पूर्णककुत् युवा वृषः । अजातं ककुत् यस्येति अजातककुत् तरुणः गौः । एवं स्थूलककुद्बलवान् । यष्टिककुत् मध्यमः । नास्तिस्थूलो नातिस्थूलो नातिबलवानित्यर्थः ।

**३४६. उद्विभ्यां काकुदस्य काकुदवस्थायां, पूर्णाद् वा ।**

उत्काकुत् विकाकुत् । पूर्णकाकुत् पूर्णकाकुदो वा । काकुदं तालु ।

**३५०. सुहृन्मित्रे दुर्हृच्छत्रौ ।**

साधू ।

**३५१. युष्मदो गौणस्य त्वद्-युवद्-युष्मद एकत्वादिषु, अस्मदो मदावदस्मदः ।**

---

**अमृता०**—३४६. उदिति । पीताम्बरे अवस्थायां गम्यमानायांमुद्विभ्यामुत्तरस्य काकुदस्य काकुदित्यादिश्यते, पूर्णादुत्तरस्य तु विभाषया काकुदादेशो भवति । उत्काकुदिति—उद्गतं काकुदमस्येति विग्रहः । विगतं काकुदमस्येति विकाकुत् । जिह्वाया ऊर्द्ध्वभागः काकुदं तालु चोच्यते ।

**अमृता०**—३५०. सुहृदिति । पीताम्बरे मित्रे वाच्ये सुशब्दादुत्तरस्य हृदयस्य हृदादेशो निपात्यते: तथा शत्रौ वाच्ये दुःशब्दादुत्तरस्य तस्य हृदादेशश्च निपात्यते । शोभनं हृदयं यस्येत्यादि विग्रहः । अत्र यदुत्वाभावाद् हृदयस्य हृदित्यादेशेऽप्राप्ते निपातवचनमिदम् ।

**अमृता०**—३५१. युष्मद इति । गौणस्य युष्मदः स्थाने एकत्व द्वित्व वहुत्वेषु यथाक्रमं त्वद् युवद् युष्मद् इत्येते आदेशा भवन्ति, तथा गौणस्य अस्मदः स्थाने एकत्वादिषु यथाक्रमं मद् आवद् अस्मद् इत्येते आदेशा स्युः । पीताम्बराधिकाराद् गौणत्वं गम्यत एव तदपि गौणस्येति वचनं कृष्णपुरुषे च प्राप्त्यर्थम् । त्वामतिक्रान्त इति वाक्ये अति त्वद्, युवामतिक्रान्तः अतियुवद्, युष्मानतिक्रान्तः अतियुष्मदिति ।

---

पीताम्बरे इति किं पूर्णश्च तत्ककुदश्चेति पूर्णककुदमिति । अत्रापि तारुण्यादिकं गम्यत एव । ककुच्छब्देनापि पूर्णककुदित्यादौ सिद्धेऽप्यस्मिन् सूत्रे यत् ककुच्छब्दस्य ग्रहणमिदं तत्पीताम्बरादन्यत्र पूर्णककुदाद्यरामान्तप्रयोगाभावनिरासार्थं । अवस्थायामिति किं अवस्था यर्हि न स्यात् । श्वेतं ककुदं यस्येति ॥ ३४८ ॥

**बाल०**—त्रिक । गिरौ वाच्ये त्रिशब्दात् ककुदस्यारामहरेण त्रिककुत् साधुर्निपात्यत इत्यर्थः । त्रीणि ककुदानि यस्येति त्रिककुदो नाम पर्वविशेषः । अवस्थात्र न गम्यते इतोऽप्राप्ते विधानं । अत्र शृङ्गमेव ककुदाकारत्वात् ककुदमिव ककुदमिति । गिराविति किं त्रिककुदं क्षेत्रं ॥ ३४६ ॥

**बाल०**—उद्वि । अवस्थायां गम्यमानायामुद्विभ्यामुत्तरस्य काकुदस्य काकुत् स्यात् । पूर्णात् । पूर्णादुत्तरस्य ककुदस्यावस्थायां काकुद्वा स्यात् । उदगतं काकुदं यस्येति विग्रहे । विगतं काकुदं यस्येति वाक्ये । पूर्णकाकुत् पूर्णकाकुदो वा । काकुदं तालिवति जिह्वाया ऊद्र्ध्वभागः ॥ ३५० ॥

गौणस्येति कृष्णपुरुषेऽपि गृह्यते। ततः अतित्वत् अतियुष्मदित्यादि। नाम्नः। स्वादौ रूपाणि दर्शितान्येव।

**३५२. द्व्यन्तर्भ्यामप ईपः, अद्वयान्तान्यतः प्रादेश्च।**

द्वयो र्गता आपोऽस्मिन् द्वीपः। एवमन्तरीपः दुरीपः अन्वीपः। अद्वयान्तात्तु प्रापं परापम्।

---

एवंमामतिक्रान्तः अतिमदित्यादयः। पीताम्बरे च—परमस्त्वं यस्य स परमत्वदित्यादयः। परमत्वदित्यादयश्च। रूपाणि दर्शितान्येवेति—तेषां सर्वेषां त्वमहमादय एव सुजस् ङे ङस् सु, अन्यत्र वमपर्यन्त मक्षराणि प्रकृतपदवत् कार्याणीति सूत्र द्वयेन रूपाण्यादिष्टानीत्यर्थः। अतः अतित्वमित्यादिरूपाणि तत्रैव द्रष्टव्यानि।

**अमृता०**—३५२. द्व्यन्तर्भ्यामिति। पीताम्बरे द्विशब्दात् अन्तः शब्दाच्चोत्तरस्य अप् शब्दस्य ईप इत्यादेशः स्यात्, अद्वयान्तवर्जं प्रादेश्चोत्तरस्य अप ईप इत्यादेशोभवति। द्वीपइत्यत्र ईपादेशे कृतेऽपि एकदेशमनन्यवदिति न्यायेन—ऋक्पथिपुरप इति समासान्तः अरामः, अन्यथा विष्णुजनान्तापत्तेः। एवमन्तर्गता आपोऽस्मिन् अन्तरीपः। दुर्गता आपोऽस्मिन् दुरीपः। अनुगता आपोऽस्मिन् अन्वीप इति। ननु कथं तर्हि सुवन्तप्रकरणे ब्रह्मणि स्वप् स्वपी स्वाम्पि इति दर्शितम् तत्र च पीताम्बरसमासाश्रयादिति चेत्? सत्यं, समासस्य बाहुल्यात् तत् कार्यस्यापि बाहुल्यं मन्तव्यम्। अतो न तत्र ईपादेशः, तथा समासान्तविधेरनित्यत्वान्न तत्र समासान्तराम प्रत्ययश्च। प्रापमिति—प्रगता आपोऽत्रेत्यादि विग्रहः।

---

**बाल०**—सुहृत्। मित्रे वाच्ये सुहृत् साधुः। शत्रौ वाच्ये दुर्हृत् साधुः। सु शोभनं हृदयमस्येति सुहृत्। दुष्टं हृदयमस्येति दुर्हृत्॥ ३५१॥

**बाल०**—युष्म। एकत्वादिषु एकत्वद्वित्वबहुत्वेषु विषयेषु गौणस्य युष्मदः स्थाने यथासंख्यं त्वद् युवद् युष्मद् इत्यादेशा भवन्ति। गौणस्यादस्मदस्तु मदावदस्मद इत्येते आदेशा भवन्ति। विभुरित्यधिकारोऽत्रानुवर्त्तते। अतो यस्मिन् कस्मिन् समासेऽपि गौणत्वे सत्येते यथासम्भवमनयोरादेशाः, किन्तु पीताम्बरे एव गौणस्य सर्वत्र सम्भवः कृष्णपुरुषेतु क्वचिदित्याह गौणस्येति। विभुरित्यधिकारसामर्थ्यात् गौणस्येति पदं कृष्णपुरुषे पीताम्बरेऽपि गृह्यते। ततो हेतोः त्वामतिक्रान्त इत्यर्थे अतित्वद् युवमतिक्रान्त इत्यर्थे अतियुवद् युष्मानतिक्रान्त इत्यर्थे अतियुष्मद्। एवं मामतिक्रान्त इत्यर्थे अतिमद् आवामतिक्रान्त इत्यर्थे अत्यावात् अस्मानतिक्रान्त इत्यर्थे अत्यस्मद्। तथा पीताम्बरे परमस्त्वं यत्र स परमत्वद् परमौ युवां यत्र स परमयुवद् परमा यूयं यत्र सपरमयुष्मद्। एवं श्रेष्ठोऽहमत्र श्रेष्ठमद्। श्रेष्ठावावामत्र श्रेष्ठावद् श्रेष्ठा वयमत्र श्रेष्ठास्मद्। इत्यादीत्यादिपदेन एतेषां ग्रहणं। स्वादौ परे इत्यादिनाम्नो रूपाणि दर्शितान्येवेत्यर्थः। यद्यपि ग्रन्थकारेणैतदुक्तं, तथापि यथाकथञ्चिन्मया दर्श्यते तेषां सर्वेषां त्वमहमादय एव सुजस्ङेङस्सु इत्यनेन त्वां युवां युष्मानतिक्रान्त इत्याद्यर्थे अतित्वं अतित्वं अतित्वं।

## ३५३. अनूपो देशे ।

साधुः । जलप्रायमनूपं स्यात् । इत्युत्तरपदादेशाः ।

---

**अमृता०**—३५३. अनूप इति । देशे वाच्ये अनूप इति साधुः स्यात् । अनोरुत्तरस्य अपः उप इत्यादेशो भवति निपातादित्यर्थः । तस्यार्थमरकोषवचनेन प्रकटयति—जल-प्रायमिति । प्राचुर्यार्थे प्राय शब्दः, तेन जलप्रचुरं स्थलमित्यर्थः । उत्तरपदस्य आदेशाधि-कारः समाप्तः ।

---

एवमतियूयमित्यादि तथा मां आवां अस्मानतिक्रान्त इत्याद्यर्थे अत्यहं अत्यहमित्यादि । एवं परमत्वं श्रेष्ठाहमित्यादि । अन्यत्र वमपर्यन्तवर्जमक्षराणि प्रकृतपदवत् कार्याणीत्यनेन अतित्वां अतिमां अतित्वया अतिमया इत्यादि ।। ३५२ ।।

**बाल०**—द्व्यन्त । पीताम्बरे द्व्यन्तर्भामुत्तरस्यापशब्दस्य ईप् इत्ययमादेशः स्यात् । अद्व । अद्वयान्तादन्यतो भिन्नात् प्रादेश्च परस्यापः ईप् इत्ययमादेशो भवति । द्वयोरिति विग्रहो दर्शितः । द्वीप इत्यादौ अप ईप इत्यादेशे कृतेऽपि एकदेशविकृतमनन्यवदिति न्यायात् ऋक्पथिपुरप इत्यनेन समासान्ताराम: । एवमिति अन्तर्मध्ये गता आपो यस्मिन्निति अन्तरीपः । दुर्गता आपोऽस्मिन्निति दुरीपः । अनुगता आपो अस्मिन्निति अन्वीपः । तथा सु शोभना आपोऽस्मिन्नित्यादौ स्वीपः निरीपः परीप इत्यादयोऽपि । ननु यद्येवं स्वीप इत्यादिकं सिद्धं तर्हि सुबन्तपादे स्वप् स्वपी स्वाम्पीति कथमुक्तं भद्र । समासस्य बाहुल्यात् समासकार्यस्यापि बाहुल्यमस्माद्धेतोः स्वप् स्वपी स्वास्पीत्यादावप ईपादेशो न स्यात् । एवं समासान्तराराम प्रत्ययस्यानित्यत्वात् सोऽपि न स्यात् । अद्वयान्तात्त्विति रूपं दर्श्यते इति शेषः । प्रापमिति प्रगता आपोऽत्रेति विग्रहे । परापमिति परा आपोऽत्रेति विग्रहे । एवं समागता आपोऽत्रेति समापमित्यादौ । सर्वत्रैव ऋक्पथिपुरप इत्यनेनात्प्रत्ययः अप्शब्दं प्रति क्रियानुगतत्वाभावात् अनकारान्तादुपसर्गादित्यत्र उपसर्गग्रहणं प्राद्युपलक्षणार्थं । समापमिति समाङ्पूर्वस्यापशब्दस्य रूपं सञ्ज्ञात्वमस्य लोकप्रसिद्ध्यैव ज्ञेयं । अतएवाह समापं नाम देवयजनमिति । तस्मात् समापो नाम्नीति चान्द्रलक्षणमनर्थकमित्यन्ये ।। ३५३ ।।

**बाल०**—अनु । देशे वाच्ये अनूप इति साधुः । अर्थात् देशे वाच्ये अनोरुत्तरस्य अप् इत्यस्य उप इत्यादेशः स्यादेशः स्यादिति निर्गलितार्थः । स्वमतमुक्त्वा अर्थ-प्रदर्शनार्थममरमुत्थापयति । जलप्रायमिति जलप्रायं जलप्राचुर्यमित्यर्थः । इत्येवमुत्तर-पदानामादेशा दर्शिताः ।



अथ सुटा निपाताः ।

**३५४. अपरस्पराः क्रियासातत्ये, गोष्पदं गोभिः सेविते, गोपद-प्रमाणे च, प्रतिष्कशो वार्त्तावह पुरुषे सहाये पुरोयायिनि च, पारस्कर प्रभृतीनि संज्ञायामिति ।**

---

**अमृता०**—३५४. अपरस्परा इति। क्रियायाः सातत्ये नैरन्तर्ये सुटागमेन सह अपरस्परा इति निपात्यते। अपरे च परे चेति रामकृष्णे निपातः। अपरस्परा वैष्णवा गच्छन्ति। अपरे अर्वाचीनाः परे प्राचीनाश्च वैष्णवाः अविच्छेदेन गच्छन्तीति क्रियायाः सातत्यम्। न कृष्णनाम द्वन्द्वे जसि वेत्यनेन विभाषया जसः शिरिति प्राप्ते तदभावः सुट च निपातफलम्। गोष्पदमिति—गोभिः सेविते, गोपदप्रमाणे स्थाने च गोष्पदमिति सुट् षत्वाभ्यां निपातः। गोष्पदं वृन्दावनम्, गावोऽस्मिन् स्थाने प्रपद्यन्त इत्यर्थः। पदं व्यव-सिति त्राणेत्यादि कोषात् पदशब्दस्य स्थानवाच्यता। तथा गोष्पदं गोपदपरिमित स्थानम्, यथा, गोष्पदं प्रं वृष्ट इन्द्र इति। अन्यत्र गोः पदं गोपदम्।

प्रतिष्कश इति—वार्त्तावहपुरुषे अर्थात् दूते, सहाये तथाग्रगामिनि च वाच्ये प्रति-ष्कश इति सुट् षत्वाभ्यां निपात्यते। प्रतिपूर्व कश गति शासनयो धातुः पचाद्यदन्तः। अन्यत्र प्रतिगतः कशामिति प्रतिकशोऽश्वः। पारस्कर इति—संज्ञायां विषये पारस्कर प्रभृतीनि सुटादिङा निपात्यन्ते। पारस्करो देशविशेषः। आद्यन्तानन्तेत्यादिना डुकृञ ष्ट प्रत्यये कर इति सिद्धः। प्रभृति पदेन—तत्करोतीति तस्करश्चौरः, मस्करी परिव्राजकः, मस्करो वेणुः, वृहतां पतिः वृहस्पति देवगुरुः, आस्पदं स्थानम्, आश्चर्यमद्भुतम्, प्रायश्चित्तं पापापनयनम्, वनस्पति वृक्षः, हरिश्चन्द्रो राजा, किष्किन्ध्या गुहा इत्यादयः। आकृति-गणोऽयम्।

---

अथेति अथानन्तरं सुटा सह निपाता दर्श्यन्ते ॥ ३५४ ॥

## ३५५. इतरेतरान्योन्यपरस्परा ब्रह्मैकवचनान्ताः कर्मव्यतीहारे ।

**अमृता०**—३५५. इतरेतरेति । कर्मात्र क्रिया । क्रियाया व्यतीहारे विनिमये इतरेतरं अन्योन्यं परस्परमित्येते ब्रह्मैकवचनान्ता निपात्यन्ते । कर्म व्यतीहारे इतर अन्य पर इत्येषां कृष्णनाम्नां निपातेन द्विरुक्तिः समासवच्च भवतिः पुनः सर्वविभक्तिष्वेव ब्रह्मैक

---

**बाल०**—अप । सततस्य भावः सातत्यं नैरन्तर्यं क्रियायाः सातत्यं अस्मिन्नर्थे सुटागमेन अपरस्परा इति निपात्यन्ते । अपरेच परे चेति रामकृष्ण समासवाक्ये अपरस्पराः साधवो वर्त्तन्ते । अपरेच परेच साधवो नित्यं वर्त्तन्ते इत्यर्थः । वर्त्तमानक्रियायाः सातत्य-मत्राधीयते । क्रियासातत्यमिति किं अपरपरा प्राथिनो गच्छन्ति अपरेच गच्छन्तीत्यर्थः । न कृष्णनामद्वन्द्वे जसितु वेत्यनेन विकल्पकृष्णनामत्वात् कृष्णनाम कृष्णतो जसः शिरिति पक्षेशिर्न स्यात् । गोष्प । गोकर्त्तृकसेविते गोविन्दप्रमाणेच वाच्ये सुट्षत्वाभ्यां गोष्पदमिति निपात्यते । गोष्पदं राष्ट्रं गोभिः सेवितं पदमित्यर्थः । पदं व्यवसितित्राणेत्यनेन पदशब्दस्य स्थानवाचकत्वात् राष्ट्रमिति विशेष्यपदं । गावोऽस्मिन् राष्ट्रे प्रपद्यन्ते इति निर्गलितार्थः । आ विद्यमानं गोष्पदमस्मिन्निति पीताम्बरवाक्ये अत्यन्तासम्भवेऽपि गोष्पदं सिध्यति । गोष्पदमात्रं कुण्डं गोपदप्रमाणमित्यर्थः । अतएव वृष्टिप्रमाणे उरामहरश्च वेति सूत्रेण गोष्पदप्रं वृष्टो देवो गोष्पदपुरं वेत्यत्र गोष्पदशब्देन वृष्णिप्रमाणमुच्यते । प्रति । वार्त्ता-वहपुरुषे दूतादौ सहाये सख्यादौ पुरोयायिनि अग्रगामिनिच वाच्ये सुट्षत्वाभ्यां सह प्रतिष्कशः वार्त्तावहपुरुषादिः । प्रतिपूर्वः कश ताड़ने सौत्रस्तालव्यान्त इत्यसौ पचाद्य-दन्तोऽत्र गृह्यते नतु कस गतिशातनयोरिति दन्त्यान्तो भ्वादिगणपठितः । वार्त्तावहपुरुषे-त्यादिकं । प्रतिगतः कशामिति अत्यादयो द्वितीयया इत्यनेन प्रतिकशोऽश्वः इत्येव । अश्वादेस्ताडनी कशा इत्यमरः । पारस्क । पारस्करः प्रभृतिरादिर्येषां तानि पारस्कर-प्रभृतीति । इति हेतौ प्रकरणे प्रकारादिसमाप्तिष्वित्यनेन संज्ञायामित्यस्मिन्निति शब्दः प्रकारार्थे गृह्यते । संज्ञायां प्रकारे पारस्करप्रभृतीनि सुटा सह निपात्यन्ते । प्रकारो भेदः । पारं करोतीति वाक्ये आद्यन्तानन्तबहुनान्दीलिपिलिविभक्तिबलिकर्त्तृचित्रक्षेत्रजङ्घाबाहू-रूरस्सङ्ख्यादिवादितदादिषु कर्मसु डुकृञष्टः । इत्यत्र सूत्रे दिवादीत्यादिपदग्रहणात् कृधातोः ट प्रत्ययः पारस्करः कश्चित् । एवं मस्करो वेणावित्यपि सुटा निपात्यते । मस्करशब्दो जलजन्तुविशेषवाचकोऽपि सुट्निपातत्वेन वेणुं वक्ति । परिव्राजके वाच्ये मस्करीति सुडिन्भ्यां निपात्यते । कश्चिदेवमाह माङ्युपपदे करोतेः करणेऽल्प्रत्ययेन सह माङो ह्रस्वत्वं सुट्च निपात्यते मा क्रियते प्रसिध्यते येन स मस्कारो वेणुः । वेणुग्रहणञ्च दिङ्मात्रप्रदर्शनार्थमन्यत्रापि भवति । मस्करो दण्डः परिव्राजके तथैव इन् निपात्यते । पारस्करप्रभृतीनीत्यत्र प्रभृत्युपादानात् शिष्टप्रयोगानुसारेणान्यानि कानिचित् दर्श्यन्ते । आश्चर्यमद्भुते वाच्ये इष्यते, आङ्पूर्वचरधातुरित्यस्य कृदन्तपादे आचर्यमगुरावित्यनेन यत्प्रत्ययान्तं निपातितमत्र पुनर्गुरोरन्यत्र सुटा निपात्यमिति भेदः । अद्भुते इति किं आचर्यं कर्णशोभनमिति कश्चित् स्थाने प्राप्तत्वे चास्पदमिष्यते । अङ्पूर्वात् पद गत्या-वित्यस्मात् पचादेरत् निपातनात् सुट् । धन्याकेऽभिधेये कुस्तुम्बुरु चेतीष्यते । संज्ञाशब्दानां

साधवः। अन्योन्यं वैष्णवा न स्पर्द्धन्ते किन्तु नमन्ति। अन्योन्येन वैष्णवै र्न स्पर्द्धयन्ते किन्तु नम्यते। अन्योन्यस्मै अन्योन्यस्मात् अन्योन्यस्मिन् वा साधवः। एवं परस्परमितरेतरश्च।

---

वचनान्तत्वं निपातफलमेषाम्। अतएव पुंसि बहुवचनोदाहरणानि दर्शयति—अन्योन्यमित्यादीनि। अत्र विष्णुसर्गागमश्च निपातकार्यं ज्ञेयम्। नस्पर्द्धन्ते किन्तु नमन्तीति—तेषां तृणादपि सुनीचत्वधर्मत्वादित्यर्थः। न स्पर्द्धयन्त इत्यादि भावे प्रयोगः, कर्त्तरि तृतीया। एवमन्योन्यस्मै वैष्णवेभ्यो विष्णु प्रसादं गृह्णन्ति, अन्योन्यस्य वैष्णवानां प्रेमालिङ्गनं राजते, अन्योन्यस्मिन् वैष्णवेषु स्वाभाविकी प्रीति वर्द्धत इति। चतुर्थ्यादिषु वा शब्देन पक्षे अन्योन्येभ्य इत्यादियथाप्राप्तं बहुवचनादिकं ज्ञेयम्। अन्योन्येषां पुष्करै रामृषन्त इति माघः। परस्परमित्यत्र सुडागमश्च निपातफलम्। परस्परं वैष्णवा न स्पर्द्धन्त इत्याद्युदाहरणानि समुन्नेयानि।

---

यथा कथञ्चित् व्युत्पत्तित्वात् कुत्सितश्चासौ तुम्बुरुश्चेति व्युत्पत्तिमात्रेण कुस्तुम्बुरुरिति सुटा निपात्यन्ते। कुस्तुम्बुरु च धन्याक इत्यमरोक्तात्। कस्तुम्बुरु इति धन्याकाख्यौषधिविशेषस्य वृक्षस्तत्फलमपि कुस्तुम्बुरु। यथा पिलुशब्दस्य वृक्षे पुरुषोत्तमत्वं फलेतु ब्रह्मत्वं तथायमपि वृक्षे पुरुषोत्तमः फले ब्रह्म। यदातु तुम्बरोः कुत्सा गम्यते तदा कुतुम्बुरुरिति भवति। प्रस्कण्वहरिश्चन्द्रौ च ऋषौ सुटा निपात्येते। प्रगतं कथं पापमस्येति प्रस्कण्वः। हरिरिव चन्द्रो इत्यत्रापि संज्ञात्वात् यथाकथञ्चिद्व्युत्पत्तिः। ऋषाविति प्रगतं कथमस्मादिति प्रकथो देशः। हरिश्चन्द्रो मानवकः। प्रायश्चित्तं पापापनयने निपात्यते। प्राय इति तपःपुण्यं चित्तं निश्चयः पापमपनयति येन तत् प्रायश्चित्तमिति धातुपारायणं। प्रायो नाम तपः प्रोक्तं चित्तं निश्चय उच्यते। तपो निश्चयसंयुक्तं प्रायश्चित्तं विदुर्बुधाः। चित्तमिति चिती संज्ञाने भावे क्तः। वनस्पतिरिति महावृक्षे निपात्यते। वनस्य पतिरिति विग्रहे पत्यौ परे वनशब्दात् सुट् निपातनात्। रथास्येति नद्यां सुट्षत्वाभ्यां निपात्यं। रथमायातीति कर्मण्यनुपेन्द्रादारामात् क इति कप्रत्ययः। आरामहर इत्यनेनारामहरः। ततो लक्ष्म्यामाप्। परिमाणगुहयोः किष्कुकिष्किन्धे यथासंख्यं निपात्यते। किंशब्दः कुत्सायां। तस्मात् कौ पृथिव्यां सुट् किशब्दस्य महामहरः। षत्वञ्च निपातफलं। किष्कुर्हस्तो वितस्तिर्वा। किष्कुर्हस्ते वितस्तौ चेत्यमरः। किं किं दधातीति डु धाञ धारणपोषणयोरित्यस्मात् कर्मण्यनुपेन्द्रेत्यनेन कः आरामहरः। तत आप् सुट् महर षत्व-निपातानि। विष्णुचक्रस्य हरिवेणुरिति परकिंविष्णुचक्रस्य हरिवेणुः। किष्किन्धा गुहा। शतात् परा इत्यादौ परःशता इत्यादयो निपाताः। इति पञ्चमीकृष्णपुरुषे उक्तं। अतएव परस्शतं परस्सहस्रमित्यादयोऽप्यत्र ज्ञेयाः, किन्तु राजदन्तादित्वात् परशब्दस्य पूर्वनिपातः। परोलक्षं परःकोटीतिच रूपरत्नाकर आह। अप्रत्यक्षे परोक्षमित्यपि निपात्यते। अक्षात् परमिति परोक्षं निपातात् सुट्। यत् परमाण्वादिकं प्रत्यक्षं न भवति, परोक्षशब्देन अभिधीयते। पञ्चमीकृष्णपुरुषः पूर्वनिपातश्च पूर्ववत्। अक्षि अक्षि परि परोक्षमिति। अव्ययं सप्तम्याद्यर्थेषु नित्यमित्यनेनाव्ययीभावे परेः परस्मात् अक्षिशब्दात्

## ३५६. लक्ष्मीब्रह्मणोरमादीनामाम् वा।

अमृता०—३५६. लक्ष्मीति। लक्ष्मी ब्रह्मणो विषययोः प्रोक्त निपातानां अमादीनां

समासान्तष्टप्रत्ययः परे परश्च। एवम्भूतपरोक्षशब्दः समासपादसाधनीयः। तेन प्रत्यक्ष-मेवोक्ष्णो यत्र गृहीतं परोक्षशब्देन तदभिधीयतेऽयन्तु न तथाविध इति भेदः। तस्माद्यदर्थो यत्र गृहीतस्तस्मिन् तदर्थाभिधायक इति सर्वत्र। टिदागमः परसम्बन्धीत्यनेन सुटः परभाक्तत्वेन सर्वत्र बिष्णुसर्गाभावः। कदाचित्तु निपातत्वाद्विष्णुसर्गोऽपि, अतएव परोलक्षं परोक्षमित्यत्र अन्योन्यमित्यादौ वक्ष्यमाणेच विष्णुसर्गः। इतरेत। कर्मक्रिययोरेकपर्याय-पाठत्वात् कर्मव्यतिहार इति पदेन क्रियाव्यतिहार इत्युच्यते। तेन क्रियाव्यतिहारे गम्यमाने इतरेतरानान्योन्यपरस्परास्त्रयो ब्रह्मलिङ्गस्यैकवचनान्ताः सुटा सह निपात्यन्ते। निपातत्वादेकशेषं विधाय पश्चाद्द्वित्वञ्चेति। कर्मव्यतिहारे सर्वनामद्विर्भवति समासच्च। सर्वनाम इति सामान्याभिधानेऽपि त्रयाणां ग्रहणमित्यन्ये। परिशिष्टेषु कर्मव्यतिहारा-भिधाशक्त्यसम्भवात् विपर्ययेण क्रियाप्रवर्त्तनं कर्मव्यतिहार इत्यप्याहुः। सप्तविभक्तिष्वे-वामीषां द्विवचनबहुवचनयोरभाव इति वृद्धाः। अतएव शाकटायनेनोक्तं इमे परस्परादयः शब्दा कर्म्यव्यतिहारैकत्वविषया इति प्रथमाया अप्यभावमपरे वदन्तीति प्रदर्शनार्थं ग्रन्थकारोऽपि अन्योन्यं वैष्णवान् स्पर्द्धन्ते, किन्तु नमन्तीत्यादावन्तर्भूतण्यर्थविबक्षया द्वितीयान्तादिकमेवोदाहरति स्म। किन्त्वत्र धातुद्वयस्याकर्मकत्वात् प्रथमान्तमपि सम्भव-तीति अन्यान्येन वैष्णवैरित्यत्र न स्पद्धर्यते नम्यते इत्यनयोर्भावप्रत्यययोऽकर्मकत्वात्। अन्योन्यं अन्योन्येनेत्यत्रकवचननियमादेकवचनं। वैष्णवा वैष्णवैरित्यनयोर्विशेष्ययो-र्नियमाभावाद्बहुवचनं, किन्तु बहूनां विशेषणत्वेऽप्येकत्वमित्यनेन विशेष्यविशेषणभावः। ग्रन्थकारस्यैतदुदाहरणमवलम्ब्य परत्रापि विशेष्यस्य यथासम्भवं बहुवचनमिति। अन्यो-न्यस्मै इत्यादयश्चत्वारः ब्रह्मैकवचनान्ताः साधवो वा भवन्ति। अन्योन्यस्मै वैष्णवेभ्यो वैष्णवाः प्रसादं प्रयच्छन्ति। अन्योन्याभ्यां वैष्णवाभ्यां अन्योन्येभ्यो वैष्णवेभ्यो वा। अन्योन्यस्मात् वैष्णवेभ्यो वैष्णवाः प्रसादं गृह्णन्ति। अन्योन्याभ्यां वैष्णवाभ्यां अन्यो-न्येभ्यो वैष्णवेभ्यो वा। अन्योन्ययोर्वैष्णवयोः अन्यान्येषु वैष्णवेषु वैष्णवा इति वा। अन्योन्यतः पथि वताविभितामिभोष्ट्रौ। इति माघे ५।५। अन्योन्यस्य वैष्णवानां स्तवादिकं वैष्णवाः कुर्वन्ति। अन्योन्ययोः वैष्णवयोः अन्योन्येषां वैष्णवानां स्तवादिकं वा। अन्योन्यस्मिन् वैष्णवेषु वैष्णवाः शिष्यायन्ते। अन्योन्ययोर्वैष्णवयोः अन्यान्येषु वैष्णवेषु वैष्णवा इति वा। एवमित्यातिदेशे लक्षणं। तस्मात् परम्परस्मै परस्परस्मात् परस्परस्य परस्परस्मिन्निति। एवमितरेतरस्मै इतरेतरस्मात् इतरेतरस्य इतरेतर-स्मिन्नितिच। परस्परस्मै वैष्णवेभ्यो वैष्णवाः प्रसादं प्रयच्छन्ति। परस्पराभ्यां वैष्णवाभ्यां परस्परेभ्यो वैष्णवेभ्यो वैष्णवा इति वा। इतरेतरस्मै वैष्णवेभ्यो वैष्णवाः प्रसादं प्रयच्छन्ति, इतरेतराभ्यां वैष्णवाभ्यां इतरेतरेभ्यो वैष्णवेभ्यो वैष्णवा इति वा। एवमन्यो-न्येऽप्युदाहरणानि पूर्ववत्। इतरेत्यत्र यद्यपि सुट् न निपातफलं किन्तु ब्रह्मैकवचनमेव तथापि तस्य कर्मव्यतिहारबोधकत्वेन निपातफलत्वमिति॥ ३५५॥

अन्योन्यां अन्योन्यं वा वैष्णव्यौनमतः, वैष्णवकुले वा। एवमन्योन्यामन्योन्येन वेत्यादि। निपातोऽयं समासे सत्येव, तंबिना तु द्वित्वमात्रम्। अन्यमन्यमिमे वैष्णवा नमन्तीत्यादि।

## ३५७. पृषोदरादयः।

निपातेन साधवः। पृषदुदरमस्य पृषोदरः, पृषद्वानित्यर्थः। मह्यां रौति

---

स्थाने आमादेशो भवति विभाषया। अन्योन्यां अन्योन्यं वेत्यत्र वैष्णव्यो र्विशेषणत्वेन यथा विकल्पेन आम्, तथैव कुलयोर्विशेषणत्वे। अमादीनामिति आदि शब्दः सप्तविभक्तिग्राहक इति दर्शयति—एवमन्योन्यामन्योन्येन वेत्यादि। न स्पर्द्धयत इति शेषः। इत्यादिपदेन—अन्योन्यामन्योन्यस्मै, अन्योन्यामन्योन्यस्मात्, अन्योन्यामन्योन्यस्य, अन्योन्यामन्योन्यस्मिन् वेत्युह्यम्। एव—मितरेतरां इतरेतरं वा, परस्परां परस्परं वा, एवं सर्वविभक्तिषु योज्यम्। परस्परां विस्मयवन्तीलक्ष्मीमालोकयाञ्चक्रुरिवादरेण इति भट्टिः।

**अमृता०**—३५७. पृषोदरेति। वृत्तिमाह—निपातेन साधव इति। पृषोदरादयः शब्दा ये शास्त्रेण नव्युत्पाद्यन्ते अथ च लभ्यन्ते प्रयोगेषु, तेखलु यथोपदिष्टा हि साधवो भवन्त्यनेन लक्षणेन। यथोपदिष्टा इति शिष्टैरुच्चारिताः प्रयुक्ताश्चेत्यर्थः। वक्ष्यमाण पञ्चविधनिरुक्तिषु मध्ये केचित् कस्मिंश्चिदन्तर्भावनीयाः। पृषोदरमिति पीताम्बरे पृषत् शब्दस्य तरामहरो निपातात्। मह्यां रौतीति रुशब्दे अत् प्रत्ययः: महीशब्दस्य वर्ण

---

**बाल०**—लक्ष्मी। विशेषणत्वेन वर्त्तमानयोर्निपातसिद्धयोर्लक्ष्मीब्रह्मणोरमादीनां स्थाने आम् वा स्यात्। अन्योन्यामन्योन्यं वेत्यत्र वैष्णव्योर्विशेषणत्वेन लक्ष्मीत्वं कुलयोर्विशेषणत्वेन ब्रह्मत्वमिति लक्ष्म्यां ब्रह्मणिच आम् विकल्पः। वैष्णवकुले इत्यस्यापि नमत इत्यनेनान्वयः। द्वितीयायामत्राम्। यदा आम् न स्यात्, तदा प्रधानार्थाद्वा समास इति विकल्पेन लुक् इत्यन्ये। तन्मते अन्योन्यत् वैष्णव्यौ नमत इत्यपि, किन्तु यः स्वमोस्लुकं नेच्छति तन्मते अन्योन्यमिति तैरैवोक्तमितिच। एवमन्योन्यामन्योन्येनेत्यत्र न स्पर्द्धन्ते किन्तु नम्यते इति शेषः। इत्यादीत्यादिपदेन अन्योन्यामन्योन्यस्मै अन्योन्यामन्योन्यस्मादित्यादयोऽपि। स्त्रियामपि पुम्वदित्येक इति तन्मतेऽन्योन्यं पुत्रानिमे ब्राह्मण्यौ भोजयतः। पक्षेऽन्योन्यस्य पुत्रानिति वा। निपातोऽयमिति। समासे सत्येवायं निपातः तं समासं विनातु द्वित्वमात्रमिति यदुक्तं तत्तु आभीक्ष्ण्यवीप्सयोरित्यनेन किन्त्वधिकारसूत्रात् सर्वस्येत्यनुवर्त्तनात् क्वचिन्नाम्नां क्वचित् पदानामपीति पूर्वत्र अन्योन्येभ्य इत्यादावेकशेषादनन्तरं नाम्नो द्वित्वमुक्तमित्यादीनान्तु पदस्याप्याह अन्यमन्यमिम इति ॥३५६॥

**बाल०**—पृषो। पृषोदर आदिर्येषां ते पृषोदरादयः। एते वक्ष्यमाणाः पृषोदरादयः यथेष्टं निपातेन साधवो भवन्ति। अयं योगस्तु यथासम्भवं संज्ञायामसंज्ञायाञ्च। यद्यत् सूत्रेणानुत्पन्नं तत्सर्वं निपातनात् साधु इति पाणिनीयैरप्युक्तं। पृषदुदरमित्यनेन विग्रहोदाहरणे स्वयमेव दर्शिते। पृषोदर इत्यत्र पृषच्छब्दस्य तरामहरो निपातफलं।

मयूरः। ब्रुवन्तः सीदन्त्यस्यां वृषी। मनस ईषा मनीषा। पतन्नञ्जलिरस्य पतञ्जलिः। संराजते सम्राट्। तत् करोति तस्कर श्चौरे। वृहतां पति वृहस्पति र्देवगुरौ। वारिवाहो बलाहकः। पूर्यते गलति च पुद्गलः। रते स्तननमस्मात् रत्नम्। वाहितं पापमनेन ब्राह्मणः। कौ

---

विकारे मयूभावो निपातात्, अथचात्र रुधातो रमणार्थत्वात् धातोर्रतिशयार्थ योगे रूप निपातश्च। वृषीति—ब्रूञो वृ आदेशो वर्ण विकारनिपातः। षदलृधातोरधिकरणे टच् प्रत्ययेन ईपा च षीति निष्पन्नम्। व्रतिनामासनं वृषीत्यमरः। मनीषेत्यत्र मनस् शब्दस्य अस् भागस्य हरो निपातात्, मनीषा बुद्धिः। पतञ्जलिरित्यत्र पूर्वापरशब्दयोर्यथाक्रमं अन्तादी वर्णौ लुप्येते। यद्वा पतच्छब्दस्य अद्भागस्य लोपो निपातात्। सम्राडिति—राजत इति राट् क्विवन्तः, संशब्दस्य विष्णुचक्रस्य मत्वं निपातेन, सम्राट् राजचक्रवर्त्ती। तस्कर इति तरासस्य सरामो वर्णविकारो निपातः। वृहस्पतिरिति—वृहत् शब्देन महदुच्यते, अत्र तु देवो लक्ष्यते, तरामस्य सरामो वर्ण विकार निपातः। वारिवाह इति वहते रण्। वारि वाहक इत्यपि पाठः, तत्रतु णकः। बलाहक इति पूर्वपदस्य (वारीत्यस्य) वादेशः, उत्तर पदस्य (वाहकस्य) आदिवर्णस्य लादेशश्चेति वर्णविकार रूपो निपातः।

---

पृषत् विपुलं। पृषद्वानिति यदुक्तं तत्तु पीताम्बरेणैव प्रतीयते। मह्यां रौतीति विग्रहे रु शब्दे इत्यस्मात् प्रत्ययेन सह ऊरः मह्याः मयच् निपातफलं। संज्ञात्वमत्र गम्यते नहि यो यो मह्यां रौति सोऽभिधीयते। मयूरः शिखी। ब्रुवन्तः सन्तः सीदन्त्यस्यामिति निपातनात् ब्रूञः वृ सदे रीप्प्रत्ययान्तषीति वृषी। व्रतिनामासनं वृषीत्यमरः। मनस ईषा इति वाक्ये विष्णुनिष्ठा सेट्कगुरुमदित्यनेन ईषधातोर्ङीप् मनसोऽस्हरो निपातफलं। मनीषा बुद्धिः। पतन्नञ्जलिर्यस्येति विग्रहे पतच्छब्दस्याद्भागहरो निपातफलं। पतञ्जलिर्मुनिः। संराजते इति राजृ दीप्तावित्यस्मात् क्विप निपातात् संशब्दस्य विष्णुचक्रस्य म। सम्राट् राजा। तत् चौर्यं करोतीति कृधातोष्टः तच्छब्दस्य स निपातफलं वृहतां देवानां पतिर्नाम्नोषदेशेन पालक इति वृहस्पतिर्देवगुरुः। वृहत्तरामस्य स निपातत्वात्। वृहच्छब्देन महदुच्यते। नहि देवेभ्योऽन्ये महान्तः सन्ति वृहच्छब्देनात्र देवाः प्रतीयन्ते वृहस्पतिः सूराचार्यो गीष्पतिरित्यमरः। वारि वहतीति वह प्रापने इत्यस्मात् कर्मण्यणित्यनेनाण प्रत्ययान्तः बारिवाहः। मेघवाच्योऽत्र निपातफलं नान्यत्। यतोऽन्यस्मिन् घटादौ बारिवाहके सत्यपि ग्रन्थकृता बलाहक इत्युक्तं। पूर्यते गलति चेति पुद्गलो देहः। पुरी आप्यायने इत्यस्य पुद् क्षरणार्थस्य गलधातोररामान्तगलश्च निपातफलं। रतेः रागस्य तननं विस्तार इति रत्नं मणिः। निपातनादत्र रतेस्तिहरस्तनधातोस्तश्चेति। वाहितं पापमनेनेति ण्यन्तवहधातोः टनः करणाधिकरणयोरिति टनः वारामे रराागमो हरामे मरामागमश्च निपातफलं। कौ पृथिव्यां जीर्यतीति जॄष वयोहानौ इत्यस्य क्विवन्तस्यारामान्तजरादेशस्तस्मिन् परे कुशब्दात् ञरामागमश्च निपातफलं। कुञ्जरो हस्ती। हिनस्तीति हिसि हिंसायामित्यस्मात् पचादेरत्। इरामेद्धातोर्नुमिति नुम् निपातसामर्थ्यात्

जीर्यति कुञ्जरः। हिनस्ति सिंहः। केन जलेन उम्भ्यते पूर्यते कुम्भः। आगच्छन्त्यत्र अङ्गनम्। प्राङ्गणन्तु मूर्द्धण्यान्तम्। जीवतीति जीमूतः। शवानां शयनं श्मशानम्। षट् दन्ता अस्य षोडतृ, षोडन् षोडन्तौ।

---

पुद्गल इति–पूर्यतदति पुर् क्विप्, गल इति पचादेरत्, ररामस्य दरामो निपातात्। पुद्गलो देहः। रत्नमिति—रतेः रागस्य वर्णस्येत्यर्थः, तननं विस्तारः, रत्नं मणिः। इह रतिशब्दस्य ति लोपः, तन धातोः त्नभावो वर्ण विकारो वर्णनाशश्च निपातः। ब्राह्मण इति—ण्यन्त वहधातोः करणे टनः—वाहनः, तत्रादि वर्णे ररामागमो हरामस्य चान्तलोपे मरामागम इति वर्णागमो वर्ण विकारश्च। कुञ्जर इति—कौ पृथिव्यां जीर्यति, कुञ्जरो हस्ती। जॄष वयोहानौ धातो र्बाहुल्यात् अत् प्रत्ययः—जरः। अत्र कुशब्दात् मुमागमो निपातात्। हिनस्तीति हिसि हिंसायां पचादेरत्—हिंस इत्यत्र हस्य सादेशः, सस्य च हादेश इति वर्ण विपर्यय रूपो निपातः। कुम्भ इति—उन्भ पूरणे करणे घण्—उम्भः। कशब्दस्य अरामहरो निपातात्। आगच्छन्तीति—आङ् पूर्वाद् गमे रधिकरणे घण्। अत्र आरामस्य वामनः, मुमागमः, मस्य नरामादेशश्चेति वर्णागम-वर्ण विकारौ निपत कार्ये। जीमूतो मेघः। जीवतीति—अन्तर्भूत ण्यर्थत्वात् जीवयतीत्यर्थः। कर्त्तरि क्तः—जीवितः, वि स्थाने मूङत्यादेशो निपातात्। जीवनस्य मूतः जीमूतः, वनस्य लोप इति तु वामनः। शवानां शयनमिति—अधिकरणे टनः। श्मशनमिति शव शब्दस्य श्मभावः, शयनस्य च शान इत्यादेशौ निपात कार्ये। षडिति—षट् दन्ता अस्येति पीताम्बरः। अत्र षष् शब्दस्यान्तस्य विष्णुसर्गः, दन्तस्य दतृ आदेशः, दस्य डत्वञ्च निपातात्। पश्चात् आदराम-गोपालयो रिति उः। एवं षट् च दश च षोडश इत्यपि। तथा षट् धा षोढा इत्यपि ज्ञेयम्। त्रिपिष्टपं स्वर्ग इत्यर्थः। अत्र तृतीयशब्दस्य त्रिभावोनिपातकार्यम्।

---

वर्णविपर्ययेण इरामस्य सरामो हरामश्च। सिंहो मृगेन्द्रः। केनेत्यत्र उम्भ्यते इति उम्भ पूरणे इत्यस्मात् करणे घण् उम्भस्तस्मिन् परे निपातात् कस्यारामहः। कुम्भः कलसः। जना आगच्छन्त्यत्रेति वाक्ये अधिकरणे आङ्पूर्वाद्गमेर्घण् गमो मस्य नः आरामस्य वामनः तस्मात् मुमूच निपातफलं। अङ्गनं प्रसिद्धं। मूर्द्धन्यान्तमिति प्रनिमित्तेन यथा-सम्भवव्यवधानात् णत्वं। जीवतीति वाक्ये जीव बलप्राणधारणयोरित्यस्मात् कर्त्तरि क्तः तस्मिन् परे इडभावो वस्य मूच् निपातफलं जीवधातुरत्रान्तर्भूतण्यर्थः। तेन जीवयति जनान् जलदानेनेति जीमूतो मेघः। शवानां शयनमिति विग्रहे शवशब्दस्य श्म शयन-शब्दस्य शानञ्च निपातफलं। शयनशब्दस्याधिकरणटणान्तत्वेन तदादेशस्याप्यधिकरण-वाचित्वं श्मशानं। शवानां शयनस्थाननित्यर्थः। षट् दन्ता अस्येति विग्रहे षट्शब्दस्य षोड दन्तशब्दस्यातृ च निपातत्वात्। षोडनिति। अचश्चतुर्भुजानुबन्धानाञ्चेत्यनेन नुम् सत्सङ्ज्ञान्तस्य हरः इति सत्सङ्ज्ञान्तहरः। शतुरपि अतृभागावशिष्टत्वात् तत्सदृशरूप-प्रदर्शनार्थं षोडन्ताविति विद्वचनान्तमुपन्यस्तं। तृतीयं पिष्टपं पिठकाकारमिति विग्रहे निपातनात् तृतीयस्य त्रिभावः। त्रिपिष्टपं सर्गः। द्विगुणा वेदिरिति वाक्ये द्विपूर्वा-यास्ताः समासान्तारामः तावत्याः तीहरः द्विशब्दात् सुट्च निपातफलं। उक्तार्थानाम-

तृतीयं पिष्टपं त्रिपिष्टपम् । द्विगुणा वेदिः द्विस्तावा त्रिस्तावा। वेदितोऽन्यत्र तु—द्विस्तावती रज्जुः । गवामिन्द्रो गोविन्दः । केशिनं हतवान् केशवः। अक्षस्याधो जात इव अधोक्षजः । मन्दमभियाति, मुक्तिं ददाति वा मुकुन्दः । आकृतिगणोऽयम् ।

---

द्विस्तावेति—वेदि वाच्ये द्विगुणितेत्यर्थे द्वितावतीशब्दात् समासान्तारामप्रत्ययः, तीभागस्य हरः, द्विशब्दात् सु प्रत्ययश्च निपात कार्याणि । रज्जुवाच्ये तु न तानि किन्तु क्रियाभ्यवृत्तौ सु प्रत्यय एव। गवामिन्द्र इति—गोशव्द इहेन्द्रियवाचकः, इन्द्रशब्दश्च राजवाचकः, प्रभु वाचक इत्यर्थः, इन्द्रियाणां मनश्चास्मीति श्रीगीतोक्तेः । यद्वा गोशब्दथाची, तस्य इन्द्रः उपेन्द्र इत्यर्थः। अत्र गोशब्दात् वरामादेशः, इन्द्रस्य च ररामहरो निपातात् केशिनमिति केशिनामानं दैत्यमित्यर्थः । अत्र केशिन् शब्दस्य केश भावः, हतवदित्यस्य वभावश्च निपातफलम् । अक्षस्येति रथावयवस्येत्यर्थः । जात इवेति व्रजवासिनमुत्प्रेक्षा, पुन र्जन्म प्राप्त इवेत्यर्थः, निपातादधः शब्दस्य पूर्वस्थितिः । अधः कृतमक्षजं ज्ञानं येन यत्र वेतिवाक्ये चाधोक्षजशब्दो भगवद् वाची । मन्दं यथा स्यात्तथा यातीत्यर्थे मुकुन्दो गोविन्दः । मन्दस्य मुकु भावः, अभियातीत्यस्य सनुम् दरामादेशो निपातात् । मुक्तिं ददातीत्यत्र मुक्तिशब्दस्य मुकुभावः, दाधातोः कप्रत्ययः, नुमागमश्च निपातात् । मुखे कुन्दइव हासो यस्य इत्यर्थेऽपि मुकुन्दशब्दस्य व्यवहारो दृश्यते ।

---

प्रयोग इति न्यायेन गुणशब्दस्याप्रयोगः । वेद्या विशेषणत्वेन अजादित्वाल्लक्ष्म्यामाप् द्विस्तावा वेदिरित्यर्थः । त्रिस्तावेति । त्रिगुणा वेदिरिति वाक्ये समासान्तारामादिकं पूर्ववत् । द्विस्तावतीति द्वितावतीशब्दान्न समासान्तारामो वेदिवाच्यताभावात् समासान्तविधेरनित्यत्वाच्च, किन्तु द्विशब्दात् प्रकारार्थे सुट् भवत्येव । गवामिन्द्रमिति विग्रहे निपातनात् गोशब्दात् ररामागम इन्द्रस्य ररामहरश्च । स्वर्गेषुपशुवागित्यनेन गोशब्दस्य नानार्थत्वात् गोविन्दशब्देन स्वर्गादीनामीश्वरः कृष्ण उच्यते । किशिनं केशिनामानं दैत्यं हतवानिति केशिनः केशः, हतवानित्यस्य वश्च निपातः, द्वौ मिलित्वा केशव इति श्रीकृष्णमभिधत्ते । अक्षस्य रथावयवस्याधो जात इव नतु जात इति विग्रहे अधःशब्दस्याव्ययत्वादधिकरणे जनेरच् इत्यनेन प्रथमतो जरूपं निष्पाद्य पश्चान्निपातसामर्थ्यादधःशब्दस्य पूर्वनिपातः अक्षेण सह जयागश्चेति अधोक्षजः प्रसिद्धः। अधःकृतमधक्षजमिन्द्रियजं ज्ञानं येनेति मध्यपदलोपिपीताम्बरेणाप्यत्र सिद्धो योऽधोक्षजशब्दः सोऽपीमं वक्तीति। मन्दमभियाति मुक्तिं ददातीति वा विग्रहे मुकुन्दः। पूर्वत्र मन्दस्य मुकुरभियातेर्नरामयुक्तारामान्त दश्च निपातफलं। परत्र मुक्तेर्मुकुर्ददातेस्तु कप्रत्ययान्त-दस्तत्पूर्वं मुम्च निपातफलमिति। आकृतीति। आकृत्या सादृश्या गण्यतेऽसौ आकृतिगणः। अस्याकृतिगणत्वात् शिष्टप्रयोगानुसारेण ऊह्यान्युदाहरणान्तराणि तेषां विवरणेन किमिति। अत्रेति। अत्र आकृतिगणे चाहुः प्राचीना इति शेषः। वर्णागम इति। तत् निपातनं पञ्चविधं पञ्चप्रकारं निरुक्तं निरूपणं उच्यते, वृद्धैरिति शेषः । सामान्यत उक्त्वा विशेषमाह

अत्र चाहुः—

वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ ।
धातोस्तदर्थातिशयेन योग स्तदुच्यते पञ्चविधं निरुक्तम् ॥

॥ इति समासकार्याणि ॥

---

आकृतिगण इति—आकृत्या सादृश्येन गण्यत इत्यर्थः । शास्त्रेणाकृतलक्षणाः पृषोदरादिषु गण्यत इत्यर्थः । तेन—ऊर्द्धं खं छिद्रमस्येति, ऊर्द्धं मुखमस्येति वा उलूखलं, पिशितं मांस मश्नातीति पिशाचः, जितमेनोऽनेन जीनः, यशः कौति शब्दायतेऽस्येति यक्ष इत्यादयश्चावगन्तव्याः । आकृतिगणेऽस्य निरुक्ति लक्षणभेदान् दर्शयति प्राचीनोक्त पद्येन—वर्णागम इत्यादि : निश्चयेनोच्यतेऽर्थोऽनेनेति निरुक्तम् । तच्च विधं भवति । (१) अपूर्वस्य वर्णस्यागमनं वर्णागमः, यथा कुञ्जरेः । (२) वर्णयोः वर्णानां वः स्थिति विपर्ययो वर्णविपर्ययः, यथा सिंहः । (३) वर्णस्य रूपान्तरापादनं वर्ण विकारः, यथा षोडन् । (४) वर्णानामदर्शनं वर्ण नाशः, यथा पृषोदरः । (५) धातो र्योऽर्थातिशयः अर्थविशेषः तेन योगः, यथा ययूर इति । ग्रथितश्च वृद्धैः—वर्णागमो गोविन्दादौ सिंहे वर्ण विपर्ययः । षोडशादौ विकारः स्यात् वर्ण नाशः पृषोदरे । वर्णविकारनाशाभ्यां धातोरति शयेन यः । योगः स कथ्यते प्राज्ञै र्मयूर जीमुतादिषु ।

॥ इति व्याख्यातानि समासकार्याणि ॥

---

वर्णेति । कश्चिन्निपातो वर्णागमः कश्चित् वर्णविषर्ययश्च वर्णविकारनाशौ अपरौच द्वौ निपातौ तदर्थातिशयेन धात्वर्थातिशयेन धातोर्योगश्चापरो निपात इत्यर्थः । वर्णानां मध्ये पोषकत्वेन वर्णानामागमनं वर्णागमः यथावत् स्थितानां वर्णानां व्यतिक्रमेण न्यासो वर्णविपर्ययः । वर्णानां स्वरूपादन्यथाभावो वर्णविकारः । वर्णानामदर्शनं वर्णनाशः । धातूनामनेकार्थत्वात् तेषु नानार्थेषु केनचित् तदर्थातिशयेन धातोर्योगः धात्वर्थेनान्वय इत्यर्थः । एवं पञ्चविधानां मध्ये क्वचिन्निपाते एकविधत्वं क्वचिद्द्विविधत्वं क्वचित्त्रिविधत्वादिकमिति न नियमः । तत्र पृषोदर इत्यत्र पृषच्छब्दे तरामहरेण वर्णनाशः । मयूर इत्यत्र वर्णविकारः पूर्वं दर्शितः । सिंह इत्यत्र वर्णविपर्ययः । ब्राह्मण इत्यत्र वर्णागमः । अङ्गनमित्यत्र गमधातोर्गत्यर्थत्वेऽपि आङ्पूर्वत्वेनागमनार्थत्वात् तदर्थातिशयेन योगः । एवमन्येषु यथायोग्यमनुसन्धेयमिति । उक्तञ्च वृद्धैः । वर्णागमो गवेशादौ, सिंहे वर्णविपर्ययः । षोडशादौ विकारः स्यात्, वर्णनाशः पृषोदरे वर्णविकारनाशाभ्यां धातोरतिशयेयेन यः । योगः स कथ्यते प्राज्ञैर्मयूरजीमूतादिषु । इति समासकार्याणि दर्शितानि ।

अथेति । इति समासेत्यनेन समासकार्यसमापनात् । अथ द्विरुक्तिप्रकरणमिति । द्विरुक्तिप्रकरणे समासादिकं नापेक्षणीयति लभ्यते, अतएव ग्रन्थकारः परत्र ग्रन्थे एकस्य पीताम्बरवत्त्वञ्चेत्यत्र श्यामरामवदुत्तरेष्वित्यत्र चातिदेशं स्वीकरिष्यति अन्यथादेशेन किं ॥ ३५७ ॥

अथ द्विरुक्तिप्रकरणम् ।

## ३५८. सर्वस्य द्विरुक्तिः ।

प्रभुरयम् ।

## ३५९. आभीक्ष्ण-वीप्सयोः ।

**भजति भजति । नत्वा नत्वा स्तौति, नामं नामं वा । वीप्सायाम्—**

---

**अमृता०**—३५८. सर्वस्येति । अधिकारसूत्रम् । सर्वस्य पदस्येत्यर्थः । तेन नाममात्रस्य धातुमात्रस्य वा व्यावृत्तिः क्रियतेऽनेन ।

**अमृता०**—३५९. आभीक्ष्येति । आभीक्ष्ण्य वीप्सयो र्गम्यमानयोः पदस्य सर्वस्य द्विरुक्ति र्भवति । आभीक्ष्ण्यं पौनः पुन्यं नैरन्तर्यञ्च, तच्च क्रिया धर्मः । अतस्तिङन्ता अव्ययकृतश्चास्य विषयाः, अव्ययकृताञ्च भावे एव विधानात् । आख्यातस्य क्त्वा-णमुलोश्च द्विर्वचनापेक्षायामेव पौनः पुन्य प्रकाशने शक्तिः यङस्तु तन्निरपेक्षतयेति यङ्—यङ्-लुगन्तानां पुन र्नद्विरुक्तिः, उक्तार्थानामप्रयोग इति न्यायेन । हरिनामग्राहीत्यादौ समासेनैवाभीक्ष्ण्य वाच्यत्वान्न द्विरुक्ति, वाक्ये तु भवत्येव—हरिनाम गृह्णाति गृह्णातीति ।

---

**बाल०**—सर्व । अधिकारोऽयं । यथायोगं सर्वस्य द्विरुक्तिः स्यात् सर्वस्येत्यनेन धातूनां धातुविष्णुपदानां नामविष्णुपदानाञ्च ग्रहणं । तत्र धातूनां यङ्यङ्लुग्विषययोरेव नान्यत्र तत्रैव पौनःपुन्यश्रवणात्, यद्यपि तत्र यङि परे यङ्लुग्विषये द्विरुक्तिस्तथाप्याभीक्ष्ण्यापेक्षयैव अत उक्तार्थानामप्रयोग इत्यनेन यङ्यङ्लुक्सिद्धानां पुनर्न द्विरुक्तिरिति कारकपादे प्रकारान्तरेण ग्रन्थकृतोक्तञ्चेति ॥ ३५८ ॥

**बाल०**—आभी । अभीक्ष्णस्य निरन्तरस्य भाव आभीक्ष्ण्यं । व्याप्तुमिच्छा वीप्सा । आभीक्ष्ण्यवीप्सयोरर्थयोः सर्वस्य द्विरुक्तिर्भवति । अत्राभीक्ष्ण्ये प्रथमं दर्शयति भजतीत्यादिना । आभीक्ष्ण्यं पौनःपुन्यं तच्च साध्यस्वरूपायाः क्रियायाः सम्भवतीति तस्या एव धर्मः । नतु सिद्धरूपायोः क्रियाद्रव्ययोः सिद्धरूपक्रियाया भावघणाद्यभिहितत्वात् सिद्धरूपद्रव्यस्यतु सुबन्तैरभिधानात् । साच क्रियातिवादिना कृताच प्रायेणाभिधीयते । यां क्रियां प्रधानभूतां नैरन्तर्येण कर्त्ता भूयोभूयः करोति तस्यामाभीक्ष्ण्यं क्वाप्यविच्छेदप्रधानं नैरन्तर्यं यथा पुनः पुनर्भजतीति, भजति भजति । कुत्राप्यन्यक्षणान्तरिते गौणं । नैरन्तर्यं यथा पुनः पुनः नत्वा स्तौतीति नत्वा नत्वा स्तौतीति नामं नामं स्तौतीति नामं नामं स्तौतीति वा ।

गृहे गेहे वैष्णवाः। वैष्णवोवैष्णवो रमणीयः। इह सत्तमं सत्तममानयेतिजातप्रकर्षस्य द्विरुक्तिरिष्यते। किन्तु आख्यातस्य द्विरुक्तिरेव प्राक् ततः प्रकर्षार्थे स्तद्धितः। भजति भजतितराम्।

क्वचिद् वृत्तावुक्तार्थाद् द्विरुक्ति निवर्त्तते। द्वौ द्वौ पादौ ददाति

---

वीप्सा सजातीयद्रव्याणां गुणेन क्रियया वा युगपद् व्याप्तिः, तेन सुवन्तेषु हि सा सम्भवतीति भावः। भजति भजतीति—अविच्छेदेन भजतीत्यर्थः। नत्वा नत्वा स्तौतीत्यत्र पुनः पुन र्नमति स्तौति चेत्यर्थः। एवं नामं नाममित्यत्र च। गृहे गृहे वैष्णवीत्यत्र वैष्णव रूप द्रव्यै गृहरूपद्रव्यानि व्याप्तुं वक्तुरिच्छा गम्यते। वैष्णवो वैष्णवोरमणीय इत्यत्र रमणीयत्वगुणेन वैष्णवान् व्याप्तुमिच्छा। सत्तममिति—अयं सन् अयं सन् अयं सन्, एषां मध्ये अयमिति—शयेनसन्निति वाक्ये बहूनां मध्ये एकस्याति प्रकर्षे विवक्षितेतम प्रत्ययः, तेन च सच्छब्दस्य प्रकर्ष उच्यत इति जातप्रकर्षं द्रव्यं क्रियया व्याप्तुमिष्टम्। किन्तु इति—आभीक्ष्ण्ये द्योत्ये आख्यातस्य द्विरुक्तिः पूर्वमेव भवति, ततः पश्चात् प्रकर्षार्थे तद्धितप्रत्ययः। तथाहि—अयं भजति अयं भजति, अनयो र्मध्ये अयमतिशयेन अविच्छेदेन वा भजतीत्यर्थे भजति भजतितरामिति। गुणप्रकर्षे आख्यातात् तरां तमाञ्च प्रत्ययौ वक्षेते। क्वचिदिति—वृत्तौ एकपदी द्विरुक्त्यर्थस्योक्तत्वात् द्विरुक्ति निवर्त्तते, उक्तार्थानामप्रयोग इति न्यायात्।

---

क्त्वार्थे णमुश्चाभीक्ष्ये इत्यनेन क्त्वा णमुश्चेति। स्तवलक्षणेन पुनः पुनर्नमनमन्तरितमतोऽत्र गौणं नैरन्तर्यं एतदिति दिङ्मात्रं यथासम्भवमन्यदप्युह्यं। ननु यद्येवं तर्हि कथं गृहप्रवेशमास्ते इत्यत्र द्रव्यस्य व्याप्तौ हरिनामग्राहीत्य त्राभीक्ष्न्येच द्विरुक्तिर्न स्यात्। समासेनैव तत्तदुक्तत्वादिति। यदातु समासो न स्यात्, तदा यथासम्भवं द्विरुक्तिः स्यादेव, तत्तु ग्रन्थकृता कृदन्तपादे स्वयमेवोक्तमिति। तद्यथा। गृहं गृहं प्रवेशमास्ते हरिरिति। वीप्सायामिति रूपं दर्श्यते इति शेषः। वीप्सा युगपत् सजातीयानां व्याप्तिरिति यदुक्तं। तच्चेतरेतरयोगमाप्तानां पृथक्संख्यायुक्तानां सकलानां सिद्धरूपाणां पदार्थानां द्रव्येण गुणेन क्रियवा युगपद्व्याप्त्याभिधानमिति शेषः प्रतिपत्त्या गृह्यते। द्रव्यगुणक्रियाभिः पदार्थान् व्याप्तुमिच्छेति निर्गलितोऽर्थः। गृहे गृहे वैष्णवा इत्यत्रान्योन्ययोगमप्राप्ताः पृथक्संख्यायुक्ताः सर्वे एव गृहाः सिद्धरूपाः वैष्णवैर्द्र वैर्युगपद्व्याप्त्याभिहिता इति वीप्सायां द्विरुक्तिः। वैष्णवो वैष्णवो रमणीय इत्यत्र पूर्ववत् सर्वे वैष्णवा रमणीय गुणेन युगपद्व्याप्ताफिहिता इति द्विरुक्तिः। इह सत्तममित्यत्र जातप्रकर्षस्य इति यदुक्तं। तत्त्वेवमनुसन्धेयं। जातः प्रकर्षो यस्य स जातप्रकर्षस्तस्य। अयं सन् अयं सन् अयं सन्नित्येषां मध्ये अतिशयेनायं सन्निति वाक्ये वहूनां मध्ये एकस्यातिशयत्वेन निर्द्धारणे तमस्तेन सच्छब्दस्य प्रकर्ष उच्यते। इति प्रकर्षस्य सत्तमस्य पश्चाद्द्विरुक्तिः। इह सत्तमं सत्तममानयेत्यत्र सर्वे जातप्रकर्षाः सत्तमा आनयनक्रियया युगपद्व्याप्त्या कथिताः। किञ्च, अत्र गृहे गायति अत्र गृहे गायतीत्यत्र क्रमेण वीप्साभिधानं, नतु युगपदिति न द्विरुक्तिः। अत्र वने तुलसीधात्र्यश्वत्था रम्याः। अत्र वनेऽश्वत्था रम्या इत्यादावन्योन्ययोगं प्राप्तानां तुलस्यादीनामेव

द्विपदिकां ददाति। द्वौ द्वौ देहि द्विशो देहि। सप्त सप्त पर्णान्यस्य सप्तपर्णः। कुलं कुलमटति कुलटा। क्वचिदुक्तार्थस्यापि प्रयोगः। एकैकशो देहि।

---

द्वौ द्वौ पादौ करविशेषौ ददातीति—तद्धितार्थ समासः कप्रत्ययश्च, ततो लक्ष्म्यामाप्, अरामस्येरामश्चेति द्विपदिका। अत्र वृत्त्या अर्थात् तद्धितार्थयुक्त समासेनैव तदर्थस्याभिधानात् द्विरुक्ति र्निवृत्तेति भावः। सप्तपर्ण इत्यत्र कुलटेत्यत्र च समासेनैव द्विरुक्त रभिधानात् तदप्रयोगः। क्वचिदिति—वृत्तौ उक्तार्थस्यापि क्वचित् द्विरुक्तिः प्रयुज्यते शिष्टैरित्यर्थः। एकमेकं देहीत्यर्थे एकैकशो देहीति वीप्सायां शस् प्रत्ययः। अत्रानेन हि प्रत्ययेन वीप्साया उक्तत्वेऽपि शिष्टै द्विरुक्तिः प्रयुज्यत इति भावः।

---

रामकृष्णे रामकृष्णैकशेषे चाभिधानं, किन्तु कतिपयानां तुलस्यादीनां रम्यत्वेऽयं प्रयोगः क्रियते नतु सकलानामिति वीप्साभावात् द्विरुक्तिर्न स्यात्। यदातु कृतैकशेषाणां बहूनामश्वत्थानामेव साकल्यं विवक्ष्यते, तदा द्विरुक्तिर्भवेदेव। यथा अश्वत्था कमनीया इति। यदा एकस्मिन्नेव गृहे भुक्तं एकवारं पीतं तदाभीक्ष्ण्यवीप्सयोरभावात् द्विर्न स्यादिति। यदा गृहद्वये गीतं वारद्वयं भुक्तं, तदा गृहे गृहे इति भुक्तं भुक्तमितिच यावदर्थं शब्दप्रयोगात सिध्येत्। बहुत्वविषये आभीक्ष्ण्ये वीप्सायाञ्च द्विरुक्तिरेव भवति नतु पदोक्तिरिति नियमाय सूत्रं। अतएव जातेरेकत्वाज्जातिशब्दानां न द्विरुक्तिर्गौ व्रीहिरित्यादौ। ननु यदि बहव एव पदार्था द्वभ्यां पदाभ्यामभिधीयते, तदा एकद्विबहुत्वेष्वेकद्विबहुवचनानीत्यनेन बहुत्वाद्बहुवचनं प्राप्नोति कथं गृहे गृहे इत्यादावेकचनान्तमुदाहार्यं। नैतदस्ति। एकवचनान्तेन पदेन द्विरुक्तं नहि बहवोऽर्था अभिधीयन्ते तस्मिन् बहुत्वविष्णुभक्त्यन्तेत्वेन बहुवचनप्राप्तिरिति स्ववचो व्याहतमिदं कुचोद्यं परिहृतमिति। किन्त्विति। अपरं वक्ष्यते इत्यर्थः। प्रकर्षार्थतद्धितात् प्राक् पूर्वमेवाख्यातान्तस्य द्विरुक्तिर्भवेत्। ततः कृतद्विरुक्तेः प्रकर्षार्थस्तद्धितो भवेतत्। तत्प्रकारो यथा। अयं भजति अयं भजतीत्यनयोर्मध्येऽयमतिशयेन पुनः पुनर्भजति भजतितरामित्यत्र आख्यातात् तरां तमाञ्च वक्ष्यते। क्वचिदिति क्वचिद्वृत्तौ वर्त्तमाननिशेषे उक्तार्थानामप्रयोग इति न्यायेनोक्तार्थत्वात् द्विरुक्तिर्निवर्त्तते द्विरुक्तिनिवृत्तिर्भवतीत्यर्थः। यथा द्वौ पादौ करविशेषौ ददातीति वाक्ये द्विपदिकां ददातीति। प्राच्यकरनाम्नि द्विशब्दस्य पादशब्दस्य च तद्धितार्थे समासं कृत्वा इत्यनेनाकप्रत्ययः पादस्य पदादेशो लक्ष्मीत्वात्तस्मादाप् इति तद्धिते वक्ष्यते। संख्यादेराभीक्ष्ण्ये एव द्वौ द्वौ पादौ देहीत्यर्थे द्विशो देहीत्यत्र वारार्थे शस् वक्ष्यते। अत्रोदाहरणत्रयेषु क्रियाया युगपद्व्याप्तिरभिरिता सातु अक्शस्भ्यामुक्तार्था। सप्तेति। पर्णानि पत्राणि। सप्तपर्णो वृक्षविशेषः। कुलटा रूढ्या भिक्षुक्यसतीति पूर्वमुक्तं। अत्रोदाहरणद्वये या वीप्साभिहिता सा समासेनैवोकार्थेति पूर्वस्मिन्नत्रापि न द्विरुक्तिः। शिष्टाचारात् क्वचिद्वृत्तावुक्तार्थस्यापि प्रयोग इत्याह क्वदिति। एकमेकं प्रकारं देहीत्यर्थे एकैकशो देहीत्यत्र शस्प्रत्ययेन वीप्साया उक्तत्वेऽपि द्विरुक्तिः॥ ३५९॥

**३६०. परे वर्जने वा नतु समासे।**

परि परि माथुरेभ्यः परिमाथुरेभ्यः। नेह—परित्रिगर्त्तम्।

**३६१. उपर्यध्यधसां सामीप्ये।**

उपर्युपरि, अध्यधि, अधोऽधो गोवर्द्धनम्। सामीप्ये किम्— सर्वस्योपरि कृष्णः।

---

अमृता०—३६०. परे रिति। वर्जनार्थे द्योत्ये परिशब्दस्य द्विरुक्ति र्वास्यात्, किन्तु समासे सति सा न भवति। परि परि माथुरेभ्य इति माथुरान् वर्जयित्वेत्यर्थः। अपपरि युक्तात् पञ्चमी वर्जने इति पञ्चमी। परित्रिगर्त्तमिति—त्रयाणां गर्त्तानां समाहारः त्रिगर्त्तम्, तद् वर्जयित्वेति परि त्रिगर्त्तम्। अपपरि वहिरञ्चन्ताः पञ्चम्या इत्यनेनाव्ययीभावः समासः। तेनैव वर्जनार्थस्योक्तत्वान्न हि द्विरुक्ति.। अवर्जनार्थे तु—यमुनां परि वसतीत्यादौ कृष्ण प्रवचनीयै र्योग इति द्वितीया, नतु द्विरुक्तिः।

अमृता०—३६१. उपरीति। सामीप्ये द्योत्ये उपरि अधि अधस् शब्दानां नित्यं द्विरुक्ति र्भवति। समीपस्यभावः सामीप्यं, प्रत्यासत्तिरित्यर्थः। सा च देशकृता कालकृता च। तत्र देशकृतामुदाहरति—उपर्युपरीत्यादि। सर्वत्र गोवर्द्धनमित्यनेन सम्बन्धः, तत्र अभित आदिभिर्योग इति द्वितीया। गोवर्द्धनस्य समीपे कृष्णो वर्त्तत इतिशेषः। कालकृता च यथा—उपर्युपरि दुःखमापतति विषयिनामिति। सर्वस्योपरीत्यत्र ऊद्ध्र्वत्वं हि गम्यते नतु सामीप्यमिति न द्विरुक्तिः।

---

बाल०—परे। वर्जनार्थे वर्त्तमानस्य परेर्द्विरुक्तिर्वा स्यात्। समासे सति नतु स्यात्। उदाहरणद्वयं स्पष्टं। माथुरान् वर्जयित्वा इत्यर्थः। अपपरियुक्तात् पञ्चमीत्यनेनात्र पञ्चमी। नेहेति समासादिति शेषः। त्रयाणां गर्त्तानां समाहारः त्रिगर्त्तं। तद्वर्जयित्वा परिगर्त्तमित्यत्र अपपरिवहिरञ्चन्ताः पञ्चम्या इत्यनेन समासस्तेन वर्जनार्थोक्तत्वात् न द्विरुक्तिरिति। अवर्जनार्थेतु गङ्गां परिवसति यमुनां परिवसतीत्यत्र लक्षणवीप्सेत्थम्भूतेत्यनेन कृष्णप्रवचनीयैर्योगे द्वितीयेति ॥ ३६० ॥

बाल०—उप। सामीप्ये विवक्षितेऽर्थे वर्त्तमानानामुपर्यध्यधसां द्विरुक्तिर्भवति। प्रत्यासन्नं तच्च देशकृतं कालकृतं वा गृह्यते। उपर्युपर्यादित्रयाणां गोवर्द्धनेनान्वयः। अभित आदिभिर्योगे द्वितीयेत्यनेनात्र द्वितीया। गोवर्द्धनस्य सामीप्ये मानसगङ्गादयो वर्त्तन्त इत्यर्थः। अत्र देशकृतं सामीप्यमिति। उपर्युपरि दुःखमिति कालकृतं सामीप्यमूह्यं। सामीप्ये किं किमर्थं यर्हि न स्यात्। सर्वस्योपरि कृष्ण इति सर्वस्य मूर्द्ध्नि कृष्णो वर्त्तते इत्यर्थः ॥ ३६१ ॥

**३६२. वाक्यादेरामन्त्रितस्यासूया-सम्मति - कोप - कुत्सन - भर्त्सनेषु ।**

तत्रासूयायां—वैष्णव वैष्णव वृथा ध्यायसि । सम्मतौ—वैष्णव वैष्णव शोभतां खल्वपि । एवं कोपादौ ।

**३६३. एकस्य पीताम्बरवत्त्वञ्च ।**

---

**अमृता०**—३६२. वाक्यादेरिति । असूयादिषु गम्यमानेषु वाक्यस्यादिस्थितस्य सम्बोधन पदस्य द्विरुक्ति स्यात् । तत्रासूया—परोत्कर्षासहनी दृष्टिः, सम्मतिः—परगुणाविष्करणेन सम्माननम्, कुत्सनं निन्दा, भर्त्सनं—अपकार शब्दैर्भयोत्पादनम् । एते च प्रयोक्तृ धर्माः, नतु शब्दधर्माः । हे वैष्णव ! त्वं वृथा ध्यायसीति कोऽपि कं प्रति तद्गुणमसहमानो ब्रूते इत्यसूया गम्यते । हे वैष्णव ! त्वं खल्वपि शोभतामिति कश्चन कस्यापि गुणाविष्कारेण सम्मानयति तम् । एवं कोपादाविति,—तत्र कोपे—काशीराज काशीराज ! क्षणमाहवे तिष्ठ, मापसरेति । कुत्सने—दुःशासन दुःशासन ! क्वते द्रौपदी-केशापकर्षण शौटीर्यम् ? केशिकेशि । क्व गतन्ते पदाघातौद्धत्यमिति । भर्त्सने—रेरे वृषासुरा ? वृषासुर ! तिष्ठ तिष्ठ जाल्म ! हनिष्यामि त्वामचिरमिति । अन्तिमे आम्रेडितस्य संसार इत्यादिना महापुरुषत्वम् । असूयादि चतुर्ष्वेव प्लुत इष्यते मुनिना, किन्तु वार्त्तिकस्य विभाषावचनं दृष्ट्वा तत्प्लुतो नादृतो ग्रन्थकृता ।

**अमृता०**—३६३. एकस्येति । एक शब्दस्य द्विरुक्ति र्भवति, तयोश्च द्विरुक्त

---

**बाल०**—वाक्यादे । असूयासम्मतिकोपकुत्सनभर्त्सनेषु गम्यमानेषु वाक्यादेर्वाक्यादिस्थितस्यामन्त्रितपदस्य द्विरुक्तिर्भवति । यस्मिन् वाक्ये प्रयुज्यमाने असूयादिर्गम्यते तद्वाक्यादिस्थितस्य सम्बोधनस्येत्येर्थादिगम्यते । अत्रासूयायामिति परस्य गुणोत्कर्षासहनी दृष्टिरसूया तस्यां रूपं दर्श्यत इत्यर्थः । हे वैष्णव त्वं वृथा ध्यायसि स्मरसीत्यर्थः । अत्र कोऽपि कं प्रति गुणोत्कर्षमसहमानो वक्तीत्यसूया गम्यतेऽतोऽत्र वाक्यादिस्थस्य वैष्णवस्य द्विरुक्तिः । सम्मतावुदाह्रीयते इत्याह सम्मताविति । परगुणाविष्करणं सम्मति' तस्यां । शोभतां खल्वपीति हे वैष्णव खल्वपि भवान् शोभतां शोभमानो भवेति निर्गलितोऽर्थः । अत्र कोऽपि कस्य गुणाविर्भावं करोतीति सम्मतिरतोऽत्र सम्वोधन-पदस्य द्विर्वचनं । वैष्णव वैष्णवेत्यत्र वैष्णव वैष्णवशोभनं खल्वसीति पाठः क्वचित् पुस्तके दृश्यते सोऽपि साधुः प्रत्युत स्पष्टश्च । एवं कोपादिविति कोपादावेवमुह्यमिति । तद्यथा कोपः परोपद्रवासहनं क्रोध इत्यर्थः । काशीराज काशीराज क्षणमाहवे स्थिरो भव मापसर । काशीराजं प्रति द्वारकावासि श्रीकृष्णस्य क्रोधोक्तिरियमिति द्विरुक्तिः । कुत्सनं निन्दा । केशि केशि क्व गतन्ते पादघातशौटीर्यं । दुःशासन दुःशासन क्व ते द्रौपदी-केशवसनाकर्षणेन शौटीरमिति केचित् । भर्त्सनं कोपकुत्सनाभ्यां कदुत्तरमुत्पादन । रे रे वकासुरा (प्लुतस्वरः) वकसुर क्षणं तिष्ठ त्वां हनिष्यामीति आम्रेडितस्य संसारः भर्त्सने पर्यायेणेत्यनेनात्र महापुरुषः ॥ ३६२ ॥

ततः सुप्लोपः पुंवच्च, एकैकशः। "एकैकशो विनिघ्नन्ति विषया विष-सन्निभाः।" एकैकमक्षरं जयति। एकैकयाहुत्या जुहोति।

## ३६४. पीडायाञ्च तद्वत्।

शब्दयोः पीताम्बरवत्त्वं स्यात्। पीताम्बरवत्त्वे फलद्वयं वक्ति—सुब् लोपः पुंवच्चेति। स्वादिविभक्ति लोपः, लक्ष्मी श्चेत् पुंवच्चेति भावः। एकैकश इति—भक्ति पथे प्रवर्त्तमानानां जनानां विषसदृशा अपि विषया एकैकप्रकारा विनिघ्नन्ति नश्यन्ति, क्रमशः सर्व एव विषया नश्यन्तीत्यर्थः। धातूनामनेकार्थत्वादिह विनि पूर्वस्य हन धातोरकर्मकतया नाशार्थो मन्तव्यः। विषया इत्यस्य विशेषत्वेन एकैकश इति बहुवचनान्त स्तथा पीताम्बर वत्त्वाद् जसो महाहरः। एकैकमक्षरं जयतीत्यत्र सोर्हरः। वेदस्य भगवन्नाम्नो वा एकैक-मक्षरं सर्वोत्कर्षेण वर्त्तत इत्यर्थः। जपतीति वा पाटः, तत्र अमो महाहरः। एकैकया-हुत्येति—प्रथमं द्वित्वं, तत स्तृतीयाया महाहरः, पूर्वस्य पुंवद्भावश्च। प्रायः समानाधि-करणानामेव पीताम्बर इति परिभाषया पीताम्वरवत्त्वादेव वाच्यलिङ्ग लक्ष्मी स्तुल्याधि-करण लक्ष्म्यामित्यनेन पुरुषोत्तमवत्ता। किञ्च पीताम्बरवत्त्वादेव नामान्तरत्वयाप्त्या समुदायात् पुनः स्वादयः।

**अमृता०**—३६४. पीडायाञ्चेति। पीडा द्विविधा, मानसीशारीरिकी च। इहतु प्रयोक्तु र्मानसी पीडा लक्ष्यते। तस्यां गम्यमानायां तद् वोधकशब्दस्य द्विरुक्ति र्भवति, पीताम्बरवच्च। तेन सुब्लोपः पुंवच्च भवतः। गत गतेति—प्रियायाश्चिरविरहेण पीड्य-मानः कश्चिदेवं शोचति। अनेन च तस्या मरणं शङ्कत इतिभावः। एवञ्च नष्टनष्टेति।

**बाल०**—एक। एकशब्दस्य द्विरुक्तिः पीताम्बरत्वञ्च भवति। अत्र पीताम्बरत्व-स्वीकारेण प्रायः समानाधिकरणानामेव पीताम्बर इत्युक्तदिशा समानाधिकरणत्वं सूचितं। ततो हेतोः सुप्लोपः स्त्रीत्वञ्चेत् पुम्वच्च। सुप्पदेनात्र प्रत्याहारो गृहृते तेन स्वादिहरः। लक्ष्म्या पुरुषोत्तमवच्चेत्यर्थः। एक एकः प्रकार एकैकश इति। स्वमतपरिपोषाय परपद्य-मुत्थापयति एकैकश इति। भक्तिपथे प्रवर्त्तमानजनानां विषसन्निभा विषसदृशा विषया एकैकशः एकैकप्रकारा विनिघ्नन्ति नश्यन्तीत्यर्थः। अत्रैकशब्दस्य शस्प्रत्ययेनोक्तार्थस्यच क्वचिदुक्तार्थस्यापीत्यनेन वीप्सया द्विरुक्तिरिति एकैकश इति दर्शितं। हन हिंसागत्योरिति धातूनामनेकार्थत्वात् विनिपूर्वस्य हनोनाशार्थत्वेनाकर्मकत्वात् विनिघ्नन्तीत्यस्याकर्मकत्व-विवक्षया विषया इति कर्त्तृपदं तद्विशेषणस्य पुरुषोत्तमत्वे पुम्वत्त्वस्य फलमत्र नास्ति, तत्फलन्तु परत्रेति। एकैकमिति वेदस्यैकैकमक्षरं जयति सर्वोत्कर्षेण वर्त्ततां वेदाक्षरस्य तथैव सामर्थ्यात्। जयतीत्यत्र जपतीति पाठे, एकैकमक्षरमिति कर्मपदं वेदस्यैकाक्षर-जपस्यापि महाफलकत्वमित्येव जपतीति। एकैकयेति। प्रथमतो द्वित्वं ततः स्वादिहरः पूर्वस्य पुम्वच्च ततस्तृतीया एकैककया आहुत्या देवान् जुहोतीत्यर्थः। आहुत्या विशेषण-त्वेनात्र पुम्वत्। फलं स्पष्टं॥ ३६३॥

गतगता नष्टनष्टा ।

**३६५. श्यामरामवदुत्तरेषु ।**

प्रभुरयम् ।

**३६६. सादृश्ये गुणस्य क्रियायाश्च ।**

पटु पटु, पटुतो न्यूनगुण इत्यर्थः । एवं मन्दमन्दमभियाति मुकुन्दः ।

---

ननु श्यामरामवदुत्तरेषु इत्यनन्तराधिकारस्य बक्ष्यमाणत्वात् तेनैव उत्तरगोपीतिवत् सुप् लोप पुंवद्भावौ सिध्यत एव, कस्तर्हि पीताम्बरवत्त्वेन विशेष लाभ इति चेत् ? सत्यं, श्रूयताम्—श्याम रामवत्त्वे पुंवद्भावस्य निषेधो न भवति, "न ते निषेधाः श्याम रामे" इत्यादि विशेषवचनात् । ततस्तद्धित क प्रत्यये सतिनष्टिका नष्टिकेत्यादौ पुंवत्त्वं प्रसज्येत, तन्निराकपणार्थं पीताम्बरवत्त्वं परिभाषितमिति विवेकः । तदेतदग्रे व्यक्तं भावि ।

न च वक्तव्यम्—एक शब्दस्य सर्वादिषु पाठात्—सर्वादिः कृष्णनामाख्यो गौण संज्ञे विना भवेदित्यनेन कृष्णनामसंज्ञत्वस्य निषेधो भवतु, पीताम्बरवत्त्वेनैव गौणत्वादिति, इह किल पीताम्बरवत्त्वमतिदिश्यते, वस्तुत स्तस्य यावतीयकार्यं नोरीक्रियते । यथा हि—एकादि शब्दा इहान्यपदार्थबोधकाभावेन मैव भजन्ते गौणत्वम्, अन्यथा नष्टनष्टेत्यादौ गौणत्वे उत्तरपदस्यापि पुंवद्भावः प्रसज्येत । तेनास्य भवत्येव कृष्णनामकार्यम्,—एकैकस्मायदेहि, एकैकस्माद् गृहणेत्यादि ।

**अमृता०**—३६६. सादृश्य इति । सादृश्यमुपमानम्, तच्च साधर्म्ये किञ्चिन्न्यूनधर्मे च प्रयुज्यते, इह तूत्तरमेव विवक्षितम् । सादृश्ये उपमानात् कियन्न्यून धर्मत्वे द्योत्ये गुणस्य क्रियायाश्च द्विरुक्तिः स्यात्, श्यामरामवत्त्वञ्च । पटुरिवेत्यर्थे पटु पटु । स्वयमेवार्थमाचष्टे-

---

**बाल०**—पीडा । पीडा । गुणविशेषः सा चात्र प्रयोक्तृसम्बन्धा तस्मात् प्रयोक्तुः पीडायां गम्यमानायां तद्वत् पीडाबोधकस्य पदस्य द्विरुक्तिर्भवति । पीताम्बरत्वञ्चेति ततः सुप्लोपः पुम्वञ्च । गतगतेत्यनेन पीडा गम्यते तयाच मरणं लक्ष्यते । तेन गमनक्रियया पीड्यमानो मरणाभावेऽप्येवमाह । नष्टनष्टेत्यस्याप्येवमेवार्थः तस्मात् अदर्शनक्रियया पीड्यमानो मरणभावोऽप्येवमाह, किन्तु पीडाबोधकत्वेन पीडाया विशेषणत्वात् लक्ष्मीतेति । ननु यद्येवं पीडायां गम्यायां द्विः स्यात् तदा, हा तातेति क्रन्दितमाकर्ण्य विषण्णस्तस्यान्विष्यन् वेतसगूढं प्रभवं सः । शल्यप्रोतं वीक्ष्य सकुम्भं मुनिपुत्रं, तापादन्तःशल्य इवासीत् क्षितिपोऽपि । इत्यत्र पीडाबोधकस्य कथं न द्विरुक्तिरिति चेत्तदेवं वाच्यं हाशब्देनैव पीडाया उक्तत्वादिति ॥ ३६४ ॥

**बाल०**—श्याम । उत्तरेषु वक्ष्यमाणेषु द्विरुक्तिप्रयोगेषु श्यामरामवत् कार्यं भवति ॥ ३६५ ॥

**पटु पट्वी, पण्डितपण्डिता। श्यामरामवत्त्वान्निषेधविषयेऽपि पुम्वत्। कालककालिका। इदञ्च द्विर्वचनं गुणविशिष्ट द्रव्यवृत्ते र्गुणमात्र वृत्तेश्चेष्यते। श्यामश्यामोऽयम्, श्यामश्यामोऽस्य वर्णः। क्रियया यथा,— "भ्रमरै र्भीतभीतेन गोपीवृन्देन खेलितम्।"**

---

पटुतोन्यून गुण इत्यर्थ इति। तथैव काशिकायामुक्तम्—अपरिपूर्णगुणेन न्यूनगुणस्योपमाने सत्येवं प्रयुज्यत इति। श्यामरामवत्त्वात् स्वादेर्महाहरात् पश्चात् वृत्तौ स्वाद्युत्पत्तिः।

मन्दमन्दमिति मन्दमिवाभियातीत्यर्थः। पटुपट्वीत्यत्र श्यामरामवत्त्वात् पूर्वपदस्य पुंवच्च। एवं पण्डित पण्डितेति च। निषेध विषयेऽपि पुंवदिति—नसंज्ञा पूरण्यौ णकेत्यादिना पुंवत्त्वनिषेधे—अनूङो न ते निषेधाः श्यामरामे इति निषेधवारणात् तत् कार्यमिहापि भवतीति भावः। तेन कालककालिकेत्यत्र कालशब्दात् प्रकारार्थे स्वार्थे वा क प्रत्यय स्तद्धितः, लक्ष्म्यामाप् पूर्वारामस्येरामः कालिकेति, तस्य च द्विरुक्तौ श्यामरामवत्त्वे पुंवद्भावनिषेधवारण मर्थात् पुंवत्त्वमेव प्राप्तमिति सामान्यतो गुणस्येत्युक्त्वात्र तद्विशिनष्टि —इदञ्च द्विर्वचनमित्यादि। गुणमुक्त्वा यो गुणिनि वर्त्तते स गुणो गुणविशिष्टद्रव्यवृत्तिः, यस्तु गुणमात्रे वर्त्तते स गुणमात्रवृत्तिः। तथैवोदाहृतम्—श्यामश्यामोऽयमिति। तत्र श्यामपदेन श्यामगुणविशिष्टः पदार्थ उच्यते, अयमित्यस्य विशेषणत्वेन तत् स्पष्टमधिगम्यते। परत्र तु वर्णस्य विशेषणत्वाद् गुणमात्र-वृत्तित्वमुपलभ्यते। क्रियाया यथेति— क्रियायाः सादृश्ये उदाह्रियत इत्यर्थः। भ्रमरैः कर्त्तृभिः भीतभीतेन भीततुल्येन नतु वस्तुतो भीतेन, गोपीवृन्देन कर्त्रा, खेलितमिति भावे क्त प्रत्ययः। अतो गोपीवृन्देनेति अनुक्ते कर्त्तरि तृतीया। वसन्ते भीतभीतेन कोकिलेन वने रुतमिति भाषावृत्तौ धृतः कवि प्रयोगः।

---

**बाल०**—सादृ। गुणस्येत्यनेन गुणवाचको गुणयुक्तश्चोच्यते। सादृश्य वर्त्तमानस्य गुणस्त तस्मिन् वर्त्तमानाया क्रियायाश्च द्विरुक्तिः स्यात्। श्यामरामवच्च। पटुरिवेत्यर्थे पटुपटुरिति। अन्युनगुणस्तत्तुल्यगुण इत्यर्थः। इत्यनेन गुणविशिष्टः सूचितः। स्वादिमहाहर एवात्र श्यामवत्त्वस्य फलं। एवमुत्तरत्रापि। एवमिति। मन्दादन्यूनं यथा स्यात्तथा मुकुन्दो यातीत्यर्थः। केवलमान्द्यगुणस्यात्र द्विर्वचनं। पट्वीव पटुपट्वी। पट्व्या अन्यूनगुणा इत्यर्थः। श्यामरामवत्त्वात् अन्तरङ्गस्वादेर्महाहर इत्यनेन स्वादिमहाहरः। वाच्यलिङ्गलक्ष्मीत्यनेन पुम्वच्च। एवं पण्डिता इव पण्डितपण्डितेति। पण्डा वेदोज्ज्वला बुद्धिः सा अस्या जाता इति तारकादेरितः ततो लक्ष्म्यामाप्। श्यामेति। न संज्ञापुरण्यावित्यादिना पुम्वत्त्वनिषेधेऽपि अनूङो नेति निषेधो इति श्यामरामे निषेधखण्डनात् निषेधविषयेऽपि श्यामरामवत्त्वात् पुम्वदित्यर्थः। पालिकेव कालककालिकेति पूर्ववत्। इदञ्चेति गुणमुक्त्वा यो गुणिनि वर्त्तते स गुणविशिष्टद्रव्यवृत्तिस्तस्य। यो गुणमात्रे वर्त्तते स गुणमात्रवृत्तिस्तस्य चेदं द्विर्वचनमिष्यते। श्यामेत्यत्र गुणविशिष्टस्य द्विर्वचनं। श्याम इवायमित्यर्थः। श्यामेति। श्यामसदृशोऽस्य वर्ण इत्यर्थः। क्रियाया यथा रूपं दर्श्यते

## ३६७. अकृच्छ्रे प्रियसुखयो र्वा ।

प्रियप्रियेण सुखसुखेन वा भजति हरिम् । पक्षे प्रियेण सुखेन च । श्याम रामवत्त्वं निवृत्तम् ।

## ३६८. आनुपूर्व्ये च ।

मूले मूले स्थूलाः शुण्डाः । ज्येष्ठं ज्येष्ठं वैष्णवमानय ।

---

**अमृता०**—३६७. अकृच्छ्र इति । अकृच्छ्रमकष्टम्, तस्मिन् गम्ये च पदस्य द्विरुक्ति र्वा स्यात्, श्यामरामवच्च । प्रियप्रियेणेति—अकृच्छ्रेण हरिं भजतीत्यर्थः, विशेषलक्षणात् तृतीया । प्रियत्वं सुखत्वञ्च हरिभजनस्य चिह्नमिति व्यधिकरण क्रियाविशेषणमेतद्द्वयम् । श्यामरामवत्त्वेन पूर्वपदस्य तृतीयाया महाहरः । पक्षे इति द्विरुक्तेरभावपक्षे ।

**अमृता०**—३६८. आनुपूर्व्य इति । आनुपूर्व्यमनुक्रम स्तस्मिन् च द्योत्ये पदस्यद्विरुक्तिः स्यान्नित्यम् । शुण्डाः करा हस्तिनामित्यर्थः । श्यामरामवत्त्वनिवृत्तें नेह समासवत्त्वम्, अतएव नस्वादि हरः । एवमग्रे अग्रे सूक्ष्माः शुण्डा इति । ज्येष्ठमिति—प्रथमं सर्वं ज्येष्ठं, ततस्तत्कनीयांसं, पुनश्च तत् कनीयांसमर्थादितरेतरेभ्यो ज्येष्ठमित्येवमनुक्रमेणेत्यर्थः ।

---

इति शेषः । भ्रमरैरिति भीतभीतः तेन । अमीभिर्भ्रमरैर्दंश्यत इति मनसिकृत्य भ्रमरैः कर्त्तृभिर्भीतभीतेन भीततुल्येन समूहेन खेलितं क्रीडितमित्यर्थः । भीत इत्यत्र कर्मणि क्त इति भीतस्य क्रियात्वं । यद्यकर्मविहितक्तप्रत्ययेन गोपीवृन्द उक्तस्तथापि खेलितमिति भाव क्तप्रत्ययान्तस्यानुक्तः कर्त्ता इत्यनुक्तकर्त्तरि तृतीया । उक्तान्नाममात्रार्थे द्योत्ये प्रथमैव बाधकान्तरं न स्यादित्युक्तत्वात् ॥ ३६६ ॥

**बाल०**—अकृ । अकृच्छ्रमप्रयासः । अकृच्छ्रे प्रयासव्यतिरिक्ते वर्त्तमानयोर्गुणरूपयोः प्रियसुखयोर्द्विरुक्तिर्वा स्यात् श्यामरामवच्च । अकृच्छ्रेण हरिं भजतीत्यर्थे प्रियप्रियेणेति चत्वार्युदाहरणानि । विशेषलक्षणात् तृतीयेत्यनेन प्रियसुखाभ्यां तृतीया व्यधिकरणक्रियाविशेषणत्वात् प्रियः सुखश्चात्र हरिभजनस्य चिह्नं । तेनाकृच्छ्रेण यथा स्यात्तथा हरिं भजतीति पर्यवसितोऽर्थः । अकृच्छ्र इति किं । प्रियाः गोप्य इत्यत्र प्रियशब्दोऽभिलषितार्थं वक्ति नाकृच्छ्रगुणमिति । श्यामेति । अत्र श्यामरामवत्त्वनिर्वर्त्तनात् परत्र स्वादिहरः पुम्वच्च भवतीति सूचितं ॥ ३६७ ॥

**बाल०**—आनु । आनुपूर्व्योऽनुक्रमस्तस्मिन् वर्त्तमानस्य पदस्य द्विरुक्तिर्भवति । मुले मूले स्थूला शुण्डेति अनुक्रमेण पुष्टा शुण्डेत्यर्थः । एवमग्रेऽग्रे सूक्ष्मा शुण्डेत्यपि । ज्येष्ठं ज्येष्ठं वैष्णवमानये प्रथमं सर्वज्येष्ठं पश्चात्ततः कनीयांसमितरेभ्यो ज्येष्ठमित्यनुक्रमेण सर्वान् वैष्णवानानयेत्यर्थः । गृहे गृहे गायतीत्यत्र यथा सर्वेष्वेव गृहवान्यत्वमस्ति न तथा ज्येष्ठं ज्येष्ठं वैष्णवमानयेत्यत्र स सर्वकनीयसि ज्येष्ठत्वाभावात् । यतोऽपेक्षाकृतं ज्येष्ठमिति पूर्वसूत्रेणाप्राप्ते विधानं ॥ ३६८ ॥

## ३६६. आधिक्ये च ।

अहो भाग्यं भाग्यम् । "अहो भाग्यमहो भाग्यं नन्दगोपव्रजौकसाम्" इत्यपि । भाग्यस्याधिक्यमत्र द्विर्वचने प्रतीयते ।

## ३७०. चापले यावद् बोधम् ।

कृष्णः कृष्णः कृष्णः । पश्य पश्य पश्य ।

## ३७१. आचि बहुलम् ।

आच् तद्धितः । पटपटा भवति । बहुलं किम्—मन्त्राकरोति ।

---

**अमृता०**—३६६. आधिक्य इति । आधिक्यमतिशयितम्, तस्मिन् द्योत्ये च पदस्य द्विरुक्तिः स्यात् । अहो इत्याश्चर्ये, भाग्यंभाग्यमिति भाग्यस्यातिशयमित्यर्थः । अहो भाग्यमहो भाग्यमित्यादि श्रीभागवतीय पद्यार्द्धम्, तदुत्तरार्द्धञ्च—यन्मित्रं परमानन्दं पूर्णं ब्रह्म सनातनमित्युद्धवस्योक्तिः । द्विरुक्त्या हि भाग्याधिक्यं प्रतीयते ।

**अमृता०**—३७०. चापल इति । सम्भ्रमेण प्रवृत्ति श्चापलम्, तस्मिन् द्योत्ये यावत् कालपर्यन्तं बोधोऽवधानं जायते तावत् कालपर्यन्तं पदस्य द्विरुक्ति र्भवति । यावदियत्तायामित्यव्ययीभावः । कृष्णः कृष्णइत्याद्युक्तिरन्यमनस्कं कञ्चन प्रति तदवधारणाय, तेन वारद्वयकथनेनापि तस्यावधानानुदयात् वारत्रयं कथनम् । तत्रापि चेन्नावबोध स्तदा ततोऽत्यधिकोक्तिः प्रयुज्यत इत्यवगन्तव्यम् ।

**अमृता०**—३७१. आचीति । आच् प्रत्यये विषये आजन्तशब्दस्य बहुलं द्विरुक्तिः स्यात् । पटपटेति—पटत् पटत् भवतीत्यर्थे द्विर्वचने कृते—अनेकसर्वेश्वरोत्तरार्द्धादिव्यक्तानुकरणात् कृभ्वस्तियोगे आच्, नरस्य तलोपश्च इत्याच्प्रत्ययः, पूर्वार्द्धे तलोपश्च । संसारस्य हरश्चितीति संसारहरः । मद्रा करोतीति—मद्रा करोतीति—मद्रा भद्राभ्यां माङ्गलिक मुण्डन इति कृञ्योगे आच्, बहुलग्रहणान्नात्र द्विरुक्तिः । एतेन अव्यक्तानुकरणानामेव आचि द्विरुक्ति र्नित्यमिष्यते नान्येषामिति पर्यवसीयते । तथैव वार्त्तिकम्–नित्यमाम्रेडिते डाचीति वक्तव्यमिति ।

---

**बाल०**—आधि । आधिक्यमतिशयितं तस्मिन्नर्थे वर्त्तमानस्यतु पदस्य द्विरुक्ति र्भवति । अहो आश्चर्यं भाग्यभाग्यमिति भाग्यस्यातिशयत्वमित्यर्थः । अहो भाग्यमित्यस्य यन्मित्रं परमानन्दं पूर्णं ब्रह्म सनातनमिति परपादो द्रष्टव्य इति । अत्र द्विर्वचने भाग्यस्याधिक्यं प्रतीयते इत्यन्वयः ॥ ३६६ ॥

**बाल०**—चाप । यावद्बोधमिति बोधमनतिक्रम्य इत्यव्ययीभावसिद्धं । चापलं चाञ्चल्यं तस्मिन् गम्ये यावद्बोधं जायते, तावत् चापलबोधकस्य पदस्य द्विर्भवति । कृष्ण इत्यादित्रयस्य पश्येत्यादित्रयेण यथासंख्यमन्वयः । त्वरायां यावद्बोधमित्यन्ये । त्वरायां द्योत्यायां यावद्भिः सोऽर्थो वुध्यते, तावद्द्विरुक्तिर्भवतीति तत्सूत्रार्थः । उदाहरणं तुल्यं ॥ ३७० ॥

**३७२. पूर्वप्रथमयो रतिशये ।**

**पूर्वा पूर्वा तुलसी स्निग्धा । पूर्वतरा पूर्वतमेत्याद्यपि ।**

**३७३. यथास्वे यथायथं, द्वन्द्वं कलह-युग्मादौ ।**

---

अमृता०—३७२. पूर्वेति । अतिशयार्थे द्योत्ये पूर्वप्रथमशब्दयो र्नित्यं द्विरुक्तिः स्यात् । अतिशयस्निग्धा पूर्वा तुलसीत्यर्थः । तरतम प्रत्ययाभ्याञ्च अतिशयार्थे उच्यते, तर्हि किं तदपवादोऽयं विधिरिति मनस्याशङ्क्य वक्ति—पूर्वतरा पूर्वतमेत्याद्यपीति । एतदर्थे द्विरुक्तिर्भवति तौ प्रत्ययौ च भवतः, किन्तु ताभ्यामेव प्रत्ययाभ्यां तदर्थस्योक्तत्वान्नहि तत्र द्विरुक्ति रपेक्ष्यत इति भावः ।

अमृता०—३७३. यथास्व इति । स्वमनतिक्रम्य यथस्वम्, तस्मिन्नर्थे यथा शब्दस्य द्विरुक्त्या यथायथमिति निपात्यते । यथा शब्दस्य द्विरुक्ति ब्रह्मत्वञ्च निपातफलम् । स्वम् आत्मा, तेनात्र स्वभावो गृह्यते, आत्मा यत्नो धृति बुद्धिः स्वभावो ब्रह्म वर्ष्म चेत्यमरात् । ज्ञाताः सर्वे पदार्था यथयथमित्युदाहरणम् । यथा स्वभावं यथावदेव ज्ञाता इत्यर्थः । द्वन्द्वमिति—कलहे युग्मादौ चार्थे द्वि शब्दस्य द्विरुक्त्या द्वन्द्वमिति निपात्यते । अत्र पूर्वपदस्य अम् भावः, उत्तरपदस्य चारामान्तत्वं निपातफलम् । उदाहरणानि च यथा,—

---

बाल०—आचि । आचि प्रत्यये सति आच्प्रत्ययान्तपदस्य बहुलं यथा स्यात्तथा द्विरुक्तिर्भवति । आच् तद्धितो वक्ष्यते इति शेषः । पटत् पटत् भवतीत्यर्थे पटपटा भवति । कृभ्वस्तियोगे द्विरुक्तौ पटत्शब्दादच् नरस्य तलोपो वक्ष्यते संसारस्य हरश्चिति संसारहरः । अमन्त्रं मन्त्रं करोतीति मन्त्राकरोतीति ॥ ३७१ ॥

बाल०—पूर्वं । अतिशये वर्त्तमानयोः पूर्वप्रथमयोर्द्विरुक्तिः स्यात् । पूर्वेति । अतिशयस्निग्धा पूर्वा तुलसीत्यर्थः । पूर्वतरा तुलसी स्निग्धा पूर्वतमा तुलसी स्निग्धा इत्याद्यपि भवति । किन्त्वत्र तरतमप्रत्ययाभ्यामुक्तत्वात् ॥ ३७२ ॥

बाल०—यथा । स्वे स्वार्थे यथाशब्दस्य द्विरुक्त्या यथायथमिति साधु । द्वन्द्व । कलहयुग्मादौ वाच्ये द्वन्द्वं साधु । द्वन्द्वमिति सामान्यनिर्देशात् ब्रह्म । द्वौ द्वाविति द्वन्द्वं निपातनात् द्वौ द्वौ स्थाने द्वन्द्व इति । द्वन्द्वं कलहयुग्मयोरित्यमरः । ॐ तत्सत् ।

राधामुकुन्दचरणाब्जसुधासमुद्रे मग्नेन सम्प्रति मया महदाश्रयेण ।
श्रीजीवचन्द्रहृदयाहितसम्बलेन पूर्णीकृता भवति षष्ठसमासटीका ॥

इति श्रीलहरेकृष्णाचार्यविरचितायां वेदान्तभूषणेन श्रीमद्गोपीचरणदासनाम्ना परिशोधितायामवशिष्टकृताञ्च श्रीहरिनामामृताख्यवैष्णवव्याकरणटीकायां बालतोषणीनाम्न्यां षष्ठी समासप्रकरणव्याख्या समाप्ता ।

श्रीश्रीरामः । वृद्धपितामह-श्रीमद्वैकुण्ठचक्रवर्त्तिनः । पितामह-श्रीगोलोकशर्मणः पाठकस्य च । मत्पितृ ठक्कुर-गौरकिशोरचक्रवर्त्तिनः । श्रीगोपीचरणदासवेदान्तभूषणस्यच । भ्रातृ गोविन्दचरणदासवाचस्पतेर्मम । वात्स्यगोत्र सीमलान् गाञि श्रीकाह्न-सन्ततेः । शाण्डिल्यासितप्रवर-सामकाठकशाखिनः । सर्वाणि वस्तुजातानि पुस्तकादीनि

साधू । द्वौ द्वौ द्वन्द्वः ।

॥ इति श्रीहरिनामामृताख्ये वैष्णवव्याकरणे
समासादिप्रकरणं षष्ठम् ॥

---

भिक्षूणां भवति मिथो द्वन्द्वम्, अग्रे लाभार्थं कलहो भवतीत्यर्थः। राधाकृष्णपदद्वन्द्वं सततं चिन्तयेद् बुधः। पदयुगलमित्यर्थः। एवं द्वन्द्वमारब्धंसेनयोः, युद्ध इत्यर्थः।

॥ इति श्रीहरिनामामृतटीकायाममृतास्वादिन्यां
समासप्रकरण व्याख्यानं सम्पूर्णम् ॥

---

यान्युत। सनाब्दे शशियुग्माभ्यां सजुवाणाग्निसम्मिते। प्रथमे मासि वैशाखे दिवसे सोमनायके। यथानामगोत्रकेभ्यो ब्राह्मणेभ्यो ददान्यहं। वृद्धमातामह-श्रीमन्मणिरामाधिकारिकः। मातामह-मणिरामाधिकारिदेवशर्मकः। मातामहीच महिमप्रियेति प्रथिता तथा। माता श्यामप्रिया ज्ञेया बोधार्थं कथिता मया। मातुल श्रीगोराचान्दाधिकारी गोत्रकाश्यपः। चाटुतिगात्रिकः ख्यातो गोन्दाख्यग्रामके पुरा। निवासः पैत्रिकोऽस्माकं वीरभूमीकसञ्ज्ञितः। पूर्वं परिचयं सर्वं भवद्भ्यो विनिवेदितं॥ ३७३॥

